ॐ

* श्रीस्वामिनारायणग्रन्थमालायाः *

❀ पञ्चदशसरोजम् ❀

श्रीविश्वनाथपञ्चाननभट्टाचार्य्यप्रणीता—

# न्यायसिद्धान्तमुक्तावली

पण्डित 'श्रीकृष्णवल्लभाऽऽचार्य्य' विरचित-
—किरणावलीसहिता

❀ प्रथमं संस्करणम् ❀

मूल्यं १।।। पादोनरूप्यकद्वयम्.

सन १९३९ ] [ कार्तिकपूर्णिमा.

Shree Swaminarayan Granthamala's flower. No. 15

# THE NYAYA SIDDHANTA MUKTAWALEE.

OF

M. M. SHREE 'VISHWANATH' NYAYA-PANCHANAN.

WITH THE COMMENTARY

## *KIRNAWALEE*

BY

Pt. SHREE KRISHNAVALLABHACHARYA.
*Darshanik-Panchanan,-Shad-darshanacharya,-Navyanya-yacharya,-Sankhya-yoga-vedant-mimansa-tirth.*

EDITED BY

**Shree Narayancharan-Shastri.**
*Tarka-vedant-mimansa-sankhya-yoga-tirtha.*

**Shree Swetvaikunth Shastri.**
*Vedanta-tirtha-Sankhya-yoga-ratna.*

*First Edition.*

PUBLISHED BY

**SHREE KRISHNA VALLABHACHARYA,**
NAGESHWAR PATHASHALA, BENARES CITY.

1940.

Publisher and Commentator
**Pt. Shree Krishna Vallabhacharya Swaminarayan.**
SHREE NAGESHWAR PATHASHALA,
**BENARES CITY.**

---

न्यायसिद्धान्तमुक्तावली, किरणावली, १॥।) कमीशन काटकर १॥=)
सांख्यकारिका–श्रीस्वामिनारायणभाष्य,-गौडपादभाष्य,-सकिरणाव-
लिसांख्यतत्त्वकौमुदी १।) कमीशन काटकर १=)
योगसूत्रम्–श्रीस्वामिनारायणभाष्य,-परीक्षोपयोगिकिरणसहित—
भोजवृत्तिः १।) कमीशन काटकर १=)

---

Printed by :—
**B. K. Shastri,**
JYOTISH PRAKASH PRESS, BISHWESHWARGANJ,
BENARES CITY.

श्री 'विश्वनाथ' न्यायपञ्चाननभट्टाचार्य-प्रणीता-

# कारिकावली

श्रीमद्दार्शनिकपञ्चानन,-षड्दर्शनाचार्य्य,-नव्यन्यायाचार्य्य,-सांख्ययोगवेदान्तमीमांसातीर्थ-पण्डित-'श्रीकृष्णवल्लभाचार्य्य' विरचित—

## 'किरणावली' युक्त-

## -'न्यायसिद्धान्तमुक्तावली'-

॥ संवलिता ॥

सा च

तर्कवेदान्तमीमांसासांख्ययोगतीर्थ-पण्डितश्री 'नारायणचरण' शास्त्रि,—वेदान्ततीर्थ-सांख्ययोगरत्नपण्डित-श्री 'श्वेतवैकुण्ठशास्त्रिभ्यां संशोधिता ।

मुद्रकः—बी. के. शास्त्री—

ज्योतिषप्रकाश प्रेस, विश्वेश्वरगंज, बनारस सीटी ।

प्रथमं संस्करणम् ] सन् १९४० संवत् १९९६ [ कार्तिकपूर्णिमा

# समर्पणम्

काणादं, गौतमीयं, मतमुदयन-दिङ्नाग-मिश्रादिकानाम् , ।
गाङ्गेशं, सार्वभौमं मतमपि रघुनाथस्य, चान्यस्य सर्वम्- ॥
क्रोडं, गादाधरं वा, कठिनतरमथो, माथुरं, जागदीशम् , ।
इत्येवं न्यायशास्त्रं करवदरमिवाऽऽभाति **येषां** समग्रम् ॥१॥

ये वै सांख्ये, स्मृतौ च, श्रुतिशिरसि तथा, योगशास्त्रे च शब्दे, ।
मीमांसायां च, काव्ये, तदितरसुगताद्युक्तवादे दुरूहे ॥
शास्त्रार्थे, तर्कजन्याऽप्रतिहतगतयः सर्वतन्त्रस्वतन्त्राः ।
विद्वद्वृन्दाऽग्रगण्याऽप्रतिमबुधवरा देशिकेन्द्रा जयन्ति ॥२॥

येषां पाटवमद्वितीयमनघं चाऽध्यापने, सर्वथा ।
ग्रन्थानां ग्रथने चमत्कृतिकरं सामर्थ्यमाराजते ॥
**श्रीवामाचरणार्य्य**वर्य्यविदुषां विद्यागुरूणामियम् ।
पाण्यब्जे '**किरणावली**' सविनयं **तेषां** मया चाऽर्प्यते ॥३॥

*श्रीकृष्णवल्लभाचार्य्येण.*

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश'त्यभिहितचतुर्दशविद्यासु 'न्यायविस्तर'पदसंगृहीत-महर्षिगौतमप्रणीत-प्रमाणप्रमेयादिषोडशपदार्थप्रतिपादक-पञ्चाध्यायात्मक-न्यायदर्शनस्य प्रमाणप्रकरणात्मकमेकमंशमवलम्ब्य नव्यन्यायपरिष्कृतिप्रपञ्चप्रजापतिकल्पश्रीमद्**गंगेशोपाध्यायेन** प्रमाणचतुष्टयव्यवस्थापनपरो युक्तिप्रयुक्तिजालजटिलश्लोकद्वादशसाहस्र्यात्मकं '**तत्त्वचिन्तामणि**'महानिबन्धो निरमायि । **स च** कणादतर्कवागीशकृत-मणिव्याख्या,-रघुनाथतार्किकशिरोमणिकृत-दीधितिव्याख्या,-हरिदासन्यायालङ्कारकृत-तत्त्वचिन्तामणिप्रकाश,-प्राच्यवाचस्पतिमिश्रकृताऽनुमानखण्डटीका,-शंकरमिश्रकृत-चिन्तामणिमयूख,-वर्धमानोपाध्यायकृत-चिन्तामणिप्रकाश,-पक्षधरमिश्रकृत-तत्त्वचिन्तामण्यालोक,-रुचिदत्तमिश्रकृत-चिन्तामणिप्रकाश,-जगदीशतर्कालङ्कारकृत-तत्त्वचिन्तामणिमयूख,-जयरामन्यायपञ्चाननकृत-तत्त्वचिन्तामण्यालोकविवेक,-भवानन्दसिद्धान्तवागीशकृत-तत्त्वचिन्तामणिटीका,-हरिरामतर्कवागीशकृत-तत्त्वचिन्तामणिटीका,-रघुदेवन्यायालङ्कारकृत-तत्त्वचिन्तामणिगूढार्थदीपिका,-गदाधरभट्टाचार्यकृत-तत्त्वचिन्तामणिव्याख्यादिभिः समुपबृंहितोऽतिगाम्भीर्यमगमत् । **टीकासु** च रघुनाथतार्किकशिरोमणिकृत-चिन्तामणि**दीधित्या**ख्यटीकाऽपि रामरुद्रतर्कवागीशरचित-मणिदीधितिटीका,-गदाधरभट्टाचार्यरचित-दीधितिप्रकाशिका,-रघुदेवन्यायालङ्काररचित-दीधितिटीका,-रुद्रन्यायवाचस्पतिरचित-मणिदीधितिप्रकाशिका,-जयरामन्यायपञ्चाननरचित-दीधितिगूढार्थविद्योतन,-जगदीशतर्कालङ्काररचित-दीधितिप्रकाशिका,-रामभद्रसार्वभौमरचितदीधितिटीका,-मथुरानाथतर्कवागीशरचित-दीधितिरहस्य,-कृष्णदाससार्वभौमरचितदीधितिप्रसारिणी,-भवानन्दसिद्धान्तवागीशरचित-दीधितिप्रकाशिकाभिर्दुरूहतां भजते, **पक्षधर**मिश्रकृततत्त्वचिन्तामण्या**लोका**ख्यटीका च मथुरानाथकृत-तत्त्वचिन्तामण्यालोकरहस्य,-हरिदासन्यायालङ्कारकृत-मण्यालोकटिप्पणी,-मधुसूदनठक्कुरकृत-तत्त्वचिन्तामण्यालोककण्टकोद्धार,-महेशठक्कुरकृताऽऽलोकदर्पण,-देवनाथठक्कुरकृत-तत्त्वचिन्तामण्यालोकपरिशिष्ट,-कृष्णदाससार्वभौमकृताऽनुमानालोकप्रसारिणी,-गुणानन्दवागीशकृत-शब्दालोकविवेक,-भवानन्दकृत-प्रत्यक्षालोकसारमञ्जरी,-गदाधरभट्टाचार्य्यकृत-तत्त्वचिन्तामण्यालोकटीकादिभिर्विपूलतां गता संराजते, इत्येवं स महानिबन्ध इदानीं मिथिला-वङ्ग-द्रविडादिदेशीयैर्महापण्डितैः साक्षात्परम्परया वा व्याख्यातो गोलोकनाथकालीशंकरादिकृत-क्रोडपत्र,-श्रीमद्वामाचरणभट्टाचार्य्य-रचितविवृति,-श्रीशिवदत्तमिश्ररचितगंगानिर्झरणीसमुल्लसितश्लोकानां लक्षाणामष्टाविंशत्योपबृंहितो नव्यन्यायशास्त्रत्वेन व्यवहृतिं गमितोऽनेकभारतीयपाश्चात्यविद्वद्भिः । **एवं** न्यायसूत्राणां वात्स्यायनभाष्यस्य-उद्योतकररचित-वार्तिकम्, तदुपरि वाचस्पतिमिश्ररचित-न्यायतात्पर्यटीका, उदयनाचार्यरचिततात्पर्यपरिशुद्धिः, विश्वनाथरचित न्यायसूत्रवृत्तिश्च वर्तन्ते । **अथ** कणादमुनिरचित-वैशेषिकसूत्राणां प्रशस्तदेवरचितं प्रशस्तपादभाष्यं, तदुपरि च श्रीधराचार्यरचित-न्यायकन्दल्यु,-दयनाचार्यरचित-किरणावली.-व्योमशिवाचार्य(शिवादित्य)रचित-व्योमवती,-श्रीवत्साचार्यरचित-लीलावती,-

जगदीशभट्टाचार्यरचित–भाष्यसूक्ति,-शंकरमिश्ररचित–कणादरहस्य ,-पद्मनाभमिश्ररचित–सेतु,-मल्लिनाथसूरिरचित–भाष्यनिकर्षादयः सन्ति । **तत्रापि** उदयनाचार्यकृतकिरणावल्या वर्धमानोपाध्यायकृत-प्रकाश ,-जयदेवाख्यपक्षधरमिश्रकृत-द्रव्यकिरणावलीप्रकाश,-पद्मनाभमिश्रकृत-किरणावलीभास्करादिव्याख्याः समुल्लसन्ति, **तत्रापि** किरणावलीप्रकाशस्य भगीरथठक्कुरविरचित-किरणावलीप्रकाशप्रकाशिका,-रुचिदत्तविरचित-विवृति,-रघुनाथ-शिरोमणिविरचित-किरणावलीप्रकाशविवृति,–मथुरानाथविरचित गुणकिरणावलीप्रकाश–रहस्यादयः प्रख्यायन्ते, **तत्रापि** च किरणावलीप्रकाशविवृतेः रुद्रन्यायवाचस्पतिविरचित–किरणावलीप्रकाशविवृतिभावप्रकाशिका,-रामकृष्णविरचितटीका,-जयरामविरचितटीकाः संराजन्ते, **अथ** न्यायकन्दल्या अपि राजशेखरजैनाचार्यकृत–पञ्जिका,-पद्मनाभमिश्ररचित–कन्दलीसारौ विराजेते, **अथ** न्यायलीलावतीप्रकाशस्यापि रघुनाथशिरोमणिकृतदीधितिर्विद्यते, अस्याश्च जगदीशकृत–न्यायलीलावतीदीधितिव्याख्या,–मथुरानाथकृत–लीलावतीप्रकाशदीधितिरहस्ये स्तः, एवं स्वतन्त्रमपि मथुरानाथकृतं लीलावतीप्रकाशरहस्यं, जयदेवापरसंज्ञपक्षधरमिश्रकृत–लीलावतीविवेकश्च (लीलावतीप्रकाशटीका) भवतः । **अथ** वैशेषिकसूत्राणां रावणप्रणीतभाष्य,–भारद्वाजीयवृत्ति,–शंकरमिश्रकृतोपस्कार,–जयनारायणविरचितकणादसूत्रविवृति,–चन्द्रकान्तकृत–वैशेषिकभाष्य,–केनचिन्निर्मित–कणादसंग्रहाश्च–ग्रन्था विद्यन्ते । तदन्येऽपि रत्नकोशकारग्रन्थ,–दिङ्नागकृतानेकग्रन्थो–दयनाचार्यकृत–न्यायकुसुमाञ्जलि,-जगदीशकृत–शब्दशक्तिप्रकाशिका-तर्कामृत–पदार्थतत्त्वनिर्णय ,-रघुनाथशिरोमणिकृत–पदार्थतत्त्वनिरूपण–नञ्वादा–ऽऽख्यातवाद,–मथुरानाथरचित–सिद्धान्तरहस्य–बौद्धाधिकाररहस्य,–गदाधररचित–रत्नकोशवादरहस्या–ऽऽख्यातवाद–कारकवाद-नञ्वाद-मुक्तिवाद-विषयतावाद–शक्तिवाद–व्युत्पत्तिवाद-स्मृतिसंस्कारवाद,–रुचिदत्तरचित-न्यायकुसुमाञ्जलिप्रकाशमकरन्दादयो निबन्धा दृश्यन्ते । तदेवं मूल-व्याख्याना-ऽनुव्याख्यानादिभिर्व्यापकभावं भजमानस्य न्यायशास्त्रस्य परमगाम्भीर्यं पारयितुमशक्यता महाधियोऽपीति किमु वक्तव्यमल्पधियां कृते, तदेतेषां यथाबलं विविक्षूणां स्मृतिकल्पमप्यनल्पं बहुदर्शनसिद्धान्तसम्मिश्रितं प्रमाणप्रमेयविषयजालजटिलं दर्शनकल्पं न्यायवैशेषिकोभयसिद्धान्तात्मकं **न्यायसिद्धान्तमुक्तावल्या**ख्यमपि स्वरचित**कारिका**धारनिबन्धं महामहोपाध्याय**विश्वनाथ**पञ्चाननभट्टाचार्यो विद्यानिवासभट्टाचार्यपुत्रः १५५६शालिवाहनशके वङ्गदेशे रचितवान् , अयंच निबन्धः प्रसिद्ध-रामरुद्रीयसहित–दिनकरीय,–द्राविडनृसिंहशास्त्रिरचितप्राचीनप्रभा ,–पट्टाभिरामशास्त्रिरचित-मञ्जूषा,–सूर्यनारायणशुक्ल-रचित–मयूख,–पञ्चनदीयप्रभा,-छज्जूरामशास्त्रिकृत-मूलचन्द्रिका,-मुकुन्दशर्मसंकलिताऽभिनवप्रभा,–तदन्यटिप्पण्यादिभिः सनाथीकृतोऽपि मदीयविस्तृतकिरणावलीसमुल्लसितो विशिष्टमुपकारं जनयिष्यतीति ममेमं प्रयासं तत्तत्स्थलेषूपर्युपरि प्रतिभातदोषाभासाँस्तत्र तत्र परिष्कृतपंक्तावन्तःप्रविश्य पूर्वापरपदसार्थक्यानुसन्धानेन समाधाय मतिमान्द्यजनितस्खलनानि च सुसंस्कृत्य सफलयन्तु सात्त्विकसंविद्वरा इत्यभ्यर्थयते— **पं, श्रीकृष्णवल्लभाचार्य्यः ।**

# ❀ विषयानुक्रमणिका ❀

ॐ

* श्रीस्वामिनारायणपरमात्मने नमः *

# किरणावलीसमन्विता

# न्यायसिद्धान्तमुक्तावली

चूडामणीकृतविधुर्वलयीकृतवासुकिः । भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥

---

वेदा नो यान्ति पारं निरवधिचिदचिद्धर्मणो दिव्यगीर्भि,-
जन्म-स्थैर्यान्तलीला प्रभवति जगतां विक्षणाद्‌ यस्य रूपे ।
सर्वाऽऽविर्भावहेतुर्निवसति परमे धाम्नि मुक्तानुपक्त,-
रतर्काल्लक्ष्यीकृतोऽयं समवतु भगवान् 'स्वामिनारायणो'नः ॥१॥
सर्वतन्त्रस्वतन्त्रश्री - 'वामाचरण' - देशिकान् ।
दिगन्तयशसो नत्वा नैयायिकधुरन्धरान् ॥ २ ॥
'श्रीकृष्णवल्लभाऽऽचार्यः' स्वामिनारायणाऽऽश्रितः ।
'न्यायमुक्तावली'टीकां तनुते 'किरणावलीम्' ॥ ३ ॥

श्रीमद्विश्वनाथपञ्चाननभट्टाचार्यस्तावत्स्वविरचित—'नूतनजलधरे'त्याद्यष्टषष्ट्यधिकशत-(१६८) कारिकाणां विशदतत्त्वाववोधिकां 'मुक्तावल्या'ख्यव्याख्यां चिकीर्षुः प्रारिप्सितस्य मुक्ताव-ल्याख्यग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं कृतं प्रार्थनागर्भं स्वेष्टदेवनिर्देशात्मकं मंगलं 'शिष्या अपि ग्रन्थरचनादावेवं कुर्यु'रिति शिक्षार्थं ग्रन्थादौ निबध्नाति–चूडामणीति । स्वाऽ(शंकर)साधारण-कलाताण्डवविशिष्टस्याऽनवधिकचमत्कृतिकर-विधु–वासुकि–रूपाऽऽभूषणविशिष्टस्य च शंकरस्य स्मरणेन स्मृतिविषयीभूतः स द्रागेव प्रसन्नः सन् ग्रन्थसमाप्तौ विघ्ननाशात्मकं साहाय्यं विनिर्व-र्तयेदिति समुत्सुको विश्वनाथपञ्चाननभट्टाचार्य एतादृशं स्मरणानुरूपं पद्यं रचितवानिति । विशिष्टं-स्मरणं हि स्वविषयकज्ञानमुत्पाद्य स्मरणविषयीभूतविशेषणविशिष्टं प्रसन्नं करोति, अत्र च विश्वनाथ-पञ्चाननभट्टाचार्यसमवेतं स्मरणम्–'चूडामणीकृतविधुत्व-वलयीकृतवासुकित्व–लीलाताण्डवपण्डि-तत्वविशिष्टः शंकर' इत्याकारकम् , तदेव स्व–पदार्थः, तद्विषयकं ज्ञानं–'चूडामणीकृतविधुत्व–वलयी-कृतवासुकित्व–लीलाताण्डवपण्डितत्वविशिष्टः शंकर–इति स्मृतिमानयं विश्वनाथपञ्चाननभट्टाचार्य'-इत्याकारकं शंकरसमवेतम् , तदुत्पाद्य, पूर्वोक्तस्मरणविषयीभूतविशेषणानि–चूडामणीकृतविधुत्व–वलयीकृतवासुकित्व–लीलाताण्डवपण्डितत्वानि, तद्विशिष्टं शंकरं प्रसन्नं करोतीति, ननु शंकरस्येश्वर-तया नित्यज्ञानवत्त्वात् तज्ज्ञानस्योत्पादो न संभवतीति चेन्न, उत्पादकत्वमत्र प्रयोजकत्वं तच्च विषयितासम्बन्धेन स्वविशिष्टत्वरूपम्, तादृशवैशिष्ट्यमेव शंकरज्ञानगतप्रसाद इति, तथा च प्रार्थना-कर्तुः स्मरणमेव विषयीभूय शंकरज्ञानं प्रसन्नतात्मकमिति व्यवहारतां नयतीति बोध्यम् ॥

'चूडामणीकृतविधुः, वलयीकृतवासुकिः, लीलाताण्डवपण्डितः, भवः, भव्याय भवत्वि–

त्यन्वयः। न चूडामणिः–अचूडामणिः, अचूडामणिश्चूडामणिः कृत इति चूडामणीकृतः, चूडामणीकृतो विधुर्येन स इति चूडामणीकृतविधुः, यस्य ललाटे चूडामणिस्थानापन्नः संश्चन्द्रमा राजत–इति भावः। अत्र 'अचूडामणि'पदार्थस्य पूर्वकालावच्छिन्नचूडामणिसादृश्या( चूडासंयोगित्वा )–भाववतस्तादात्म्येन चूडामणिपदार्थे चूडासंयोगिन्यन्वयः, चूडासंयोगिनश्च स्वनिष्ठधर्मप्रयोजकत्वात्मकनिर्वाहकत्वसम्बन्धेन 'कृन्धात्वर्थे व्यापारेऽन्वयः, तस्य च स्वप्रयोज्यधर्मवत्त्वरूपकर्मत्वविशिष्टात्मकस्य निष्ठार्थस्याऽवच्छेदकीभूतकर्मतैकदेशे प्रयोजकत्वेऽन्वयः, तथा च 'पूर्वकालावच्छिन्नचूडासंयोगित्वाभाववदभिन्नो यश्चूडासंयोगी तन्निष्ठधर्म(चूडासंयोग)प्रयोजकव्यापारप्रयोज्यधर्मवानिति 'अचूडामणिश्चूडामणिः कृत'इति वाक्यजन्यबोधः, स च धर्मश्चूडासंयोगित्वम्। बहुव्रीहौ चोत्तरपदे लक्षणास्वीकारात् 'चूडामणिकृतविधु'रित्यत्र 'विधु'शब्दस्य पूर्वकालावच्छिन्नचूडासंयोगित्वाभाववदभिन्नचूडासंयोगिनिष्ठधर्मप्रयोजकव्यापारप्रयोज्यधर्मवद्विधौ लक्षणा, चूडामणिकृतपदं तात्पर्यग्राहकमिति बोध्यम्। वलयीकृतवासुकिः=न वलयः अवलयः, अवलयो वलयः कृत इति वलयीकृतः, वलयीकृतो वासुकिर्येन स इति वलयीकृतवासुकिः, यस्य बाहौ कटकस्थानापन्नः सन् 'वासुकि'संज्ञकः सर्पो वर्तत–इति भावः। पूर्वकालावच्छिन्नवलयसादृश्याभाववदभिन्नो यो वलयसदृशस्तन्निष्ठधर्मप्रयोजकव्यापारप्रयोज्यधर्मवान् वासुकिरिति बोधः। यत्तु–अचूडामणिश्चूडामणिः सम्पद्यत इति चूडामणीकृतः, अवलयो वलयः सम्पद्यत–इति वलयीकृतः,–इतिविग्रहः, तत्–तुच्छम्–संपूर्वकपद्यतेरसाधारणधर्मात्मकतादात्म्यवाचकत्वेन–'कृष्णः सम्पद्यत'–इत्यस्य 'कृष्णवृत्तितादात्म्याश्रय' इति बोधजनकत्वेनेव 'चूडामणिः सम्पद्यत'–इत्यस्य–'चूडामणिवृत्तितादात्म्याश्रय' इति, 'वलयः सम्पद्यत' इत्यस्य च 'वलयवृत्तितादात्म्याश्रय'–इति बोधजनकत्वेन, समासघटकीभूत'कृत'शब्दार्थस्य विग्रहवाक्यार्थप्रवेशाऽलाभेन समासस्याऽसाधुतापत्तेः, समासविग्रहयोस्तुल्यार्थकत्वस्यैव सिद्धान्तसिद्धत्वादिति ध्येयम्। विधोश्चूडामणीकृतत्वस्य वासुकेर्वलयीकृतत्वस्य च प्रयोजकं प्रदर्शयितुमाह–लीलेति। लीलया=स्वेच्छाप्रयुक्तशृंगारभावजन्यक्रिययोत्पन्नं यत्, ताण्डवं=नृत्यविशेषः, तस्मिन् पण्डितः तद्विषयकयावज्ज्ञानवान्, कुशलइत्यर्थः, पार्वत्याः सन्तोषसम्पादकमवश्यकर्तव्यं स्वेष्टं नर्तनं भूषणमन्तरेण न शोभते–इति लौकिकाचारेण भूषणवत्त्वस्य नर्तनोपयोगितया विधोः शिरोभूषणत्वं वासुकेश्च कर-कंकणत्वं प्रदर्शितमिति बोध्यम्। विशेष्यपदार्थमाह–भवइति। भवन्ति जगतां जन्मस्थितिभङ्गा अस्मादिति भवः, जगज्जन्मस्थितिलयानां निमित्तकारणं शंकराऽपराभिधानः परमात्मा–इत्यर्थः, स च भव्याय=कल्याणनिमित्ताय=प्रार्थयितुर्मे विश्वनाथपञ्चाननस्येष्टतमविघ्नध्वंसादिसम्पादनायेतियावत्, भवतु। 'भव्याय भवत्वि'त्यत्र संपादकत्वं चतुर्थ्यर्थः, असाधारणधर्मो भूधात्वर्थः, तत्र चतुर्थ्यर्थस्य संपादकत्वस्य स्वरूपेणाऽन्वयः,–लोडर्थस्तु प्रार्थना, तस्या विषयतया धात्वर्थेऽन्वयः, धात्वर्थस्य आख्यातार्थाश्रयत्वे, आश्रयत्वस्य भवपदार्थे, 'भव्य'–शब्देन विघ्नध्वंसः समाप्तिर्वा विवक्षिता, तथाच–विघ्नध्वंसादिसम्पादकीभूतो यः प्रार्थनाविषयीभूतोऽसाधारणधर्मस्तदाश्रयो भव इत्याकारकशाब्दबोधः।

अथ–'क्रियान्वयेन शान्ताकांक्षस्य विशेष्यवाचकपदस्य विशेषणान्तरेणाऽन्वयार्थं पुनरनुसन्धानं'–समाप्तपुनरात्तत्वं काव्यदोषः, 'चूडामणीकृतविधुर्वलयीकृतवासुकिर्भवो भव्याय भवत्वि'–त्यत्र 'भवतु'–क्रियान्वयेन शान्ताकांक्षस्य विशेष्यवाचक'भव'पदस्य 'लीलाताण्डवपण्डित' इति विशेषणान्तरेणाऽन्वयार्थं पुनः 'स भवः कीदृश' इत्यनुसन्धानादत्र स दोषः स्यात्, 'समाप्तम्–अन्वयबोधजननान्निराकांक्षमपि विशेष्यम्,–पुनर्विशेषणान्तराकांक्षया उक्तं यत्र,–तत्त्वम्'–इति साहि-

निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः ॥ २ ॥

त्यदर्पणव्याख्या । ननु–विद्यमानत्वे सतीतरव्यावर्तकत्वं हि विशेषणत्वम्, तच्च भवस्यैव, भवन्ति जन्मस्थितिलया अस्मादिति व्युत्पत्त्या जगज्जन्मादिजनकत्वार्थकस्य भवस्येतरव्यावर्तकत्वेन विवक्षणात्, 'लीलाताण्डवपण्डित' इत्यस्य च विशेष्यताङ्गीकारात् 'समाप्तपुनरात्तत्व'स्याऽसंभवादितिचेत् ! न, 'नीलोत्पलमित्यत्रोत्पलपदस्यापीतरव्यावर्तकत्वेन विवक्षायां विशेषणत्वात् 'विशेषणं विशेष्येण बहुल'-मिति कर्मधारयविधायकसूत्रघटकप्रथमान्तपदनिर्दिष्टत्वात् 'प्रथमानिर्दिष्टं समास उपसर्जन'मित्युपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्व'मिति पूर्वनिपाते 'उत्पलनील'मिति प्रयोगापत्तिः स्याद्, अतो 'जातितद्भिन्नप्रवृत्तिनिमित्तकशब्दानां जातिप्रवृत्तिनिमित्तकमेव विशेष्यवाचक'मिति नियमः, तथा चोत्पलस्योत्पलत्वजातिप्रवृत्तिनिमित्तकतया न विशेषणत्वमिति नोक्तापत्तिः, प्रकृते च भवपदस्य भवत्वजातिप्रवृत्तिनिमित्तकतया विशेष्यवाचकत्वम्, लीलाताण्डवपण्डितपदस्य च पाण्डित्यगुणप्रवृत्तिनिमित्तकतया विशेषणवाचकत्वम् । नच–भवत्वं न जातिरेकव्यक्तिवृत्तित्वादिति–वाच्यम् । कल्पभेदेन शंकरशरीरस्याऽनेकत्वात् । नच–भवति जगज्जन्माद्यस्मादिति व्युत्पत्त्या जगत्कारणत्वमेव 'भव'पदप्रवृत्तिनिमित्तं नतु जातिविशेष इति–वाच्यम् । योगाद्रूढेर्बलीयस्त्वाद्भवपदस्य जातिप्रवृत्तिनिमित्तकत्वस्य ध्रौव्यात्, तथा च समाप्तपुनरात्तत्वं तदवस्थमितिचेत् !, उच्यते–'उत्थाप्याकांक्षया ( अनियताकांक्षया ) विशेषणान्तरान्वयस्थले स दोषः संभवति, प्रकृते तु–उत्थिताकांक्षया ( नियताकांक्षया ) विशेषणान्तराऽन्वयस्थले,–विभोः किमिति चूडामणीकरणं किमर्थं वा वासुकेर्वलयीकरणमित्याकांक्षाया उत्थिततया विशेष्यवाचक'भव'पदस्य क्रियान्वयेन शान्ताकांक्षत्वविरहेण तादृशाकांक्षानिवृत्तये 'लीलाताण्डवपण्डित'–इत्यस्योपादानेन समाप्तपुनरात्तत्वस्याऽनवकाशादिति । भवति च क्रियाकारकपदानां परस्पराकांक्षा नियता, पुत्रादिपदानामपि प्रतियोग्याकांक्षा नियता, एवं प्रयोजनाकांक्षापि नियतैव, प्रकृते च 'किमि'ति'किमर्थ'मिति च प्रयोजनाकांक्षा वर्तते । यदि 'भवः कीदृश'इत्याकांक्षा स्यात् तदा एतादृश्यामनियताकांक्षायां स दोषः कल्पितः स्यात्, सा त्वत्र नास्तीति ध्येयम् । समाप्तपुनरात्तत्वाऽनुगमः 'वाक्यविशिष्टत्वम्, वैशिष्ट्यं–स्व( वाक्य )तादात्म्य–स्व( वाक्य )विशिष्टविशेषणवाचकपदघटितत्वोभयसंसर्गेण, विशेषणे वाक्यवैशिष्ट्यं–स्व( वाक्य )घटकविशेष्यवाचकपदावधिकपूर्वत्वाभाववत्त्व–स्व( वाक्य )घटकपदजनिताकांक्षाशामकार्थाऽबोधकत्वोभयसम्बन्धेन । यथा 'नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः । पतन्ति शशिनः पादा भासयन्तः क्षमातलमि'ति ( साहित्यदर्पणे ), तत्र श्लोकात्मकं वाक्यं स्वपदार्थः तत्र स्वतादात्म्यं वर्तते, अथ च स्व( वाक्य )-विशिष्टं विशेषणं 'भासयन्त'इति, तत्र विशेषणे 'स्व( वाक्य )घटकविशेष्यवाचक 'पादा'इति–पदावधिकपूर्वत्वाऽभाववत्त्वस्य स्व( वाक्य )घटक'नाशयन्त'पदजनित'कथं–नाशयन्त'इत्याकांक्षाशामकाऽर्थाबोधकत्वस्य च सत्त्वेन तादृशोभयसम्बन्धावच्छिन्नवाक्यविशिष्टविशेषणवाचक'भासयन्त'इति पदघटितत्वं वर्तते, एतादृशोभयसंसर्गेण वाक्यविशिष्टत्वं वाक्यत्वमेव समाप्तपुनरात्तत्वदोषः, अन्यत्रापि स्वयं तथोहनीयम् ॥

स्वरचितकारिकाणां स्वकर्तृकव्याख्याने 'राजीव'नामकं शिष्यं निमित्तं प्रदर्शयन्नेतदध्ययनकर्तॄणां शिष्याणां वाक्यश्रवणेच्छायाः प्रयोजको यो 'ग्रन्थकृद्वाक्यानि कारिकावल्यर्थज्ञानात्मकमदिष्टस्य साधनानी'तीष्टसाधनताग्रहः, तत्प्रयोजकाय स्वकारिकाव्याख्यायाः कर्तव्यत्वज्ञानाय प्रतिजानीते निजेति । तथा च '( अहं ) राजीवदयावशंवदः सन् निजनिर्मितकारिकावलीमतिसंक्षिप्त-

सद्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका ।
सत्सामान्यविशेषनित्यमिलिताभावप्रकर्षोज्ज्वला ॥
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली ।
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥ ३ ॥

चिरन्तनोक्तिभिः कौतुकान्ननु विशदीकरवाणी' त्यन्वयः । अहं=विश्वनाथपञ्चाननः, राजीवे 'राजीव'-नामके शिष्ये या शुश्रूषादिना जाता दया कृपा-राजीवदया, राजीवदयया वशंवदतीति राजीवदयावशंवदः, राजीवदयाधीनः सन्नित्यर्थः । अथवा राजीवस्य राजीवलोचनस्य परमात्मनो दया तया वशंवदतीति विग्रहः, 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्य' इति वचनात् लोचनपदस्य लोपो बोध्यः । निजनिर्मितकारिकावलीम्-निजेन स्वेन निर्मिता रचिता या कारिकावली ताम् । ननु लीलावती-किरणावल्यादिप्राचीननिबन्धैरेव कारिकावल्युक्तोऽर्थो बोद्धव्य इति किमनेन निबन्धेनेत्यत आह-**अतिसंक्षिप्तेति** । अतिसंक्षिप्तचिरन्तनोक्तिभिः—अति-अत्यन्तं संक्षेपः शब्दसंक्षेपो यासु ताः-अतिसंक्षिप्ताः, चिरं भवाः-चिरन्तनाः, चिरन्तनानां कणादगौतमप्रभृतीनां या उक्तयो वचांसि तदभिमतार्थप्रतिपादकाः शब्दाः-इति चिरन्तनोक्तयः, अतिसंक्षिप्ताश्च ताश्चिरन्तनोक्तयः, ताभिः । उक्तिभिरित्यभेदे तृतीया, तस्य विशदीकरणार्थव्याख्यायामन्वयः । अतिसंक्षिप्तेत्यनेन-स्वकृतव्याख्याया अल्पशब्दघटितत्वप्रदर्शनेन विस्तृतत्वाऽज्ञानाद् उपादेयता सूचिता । अर्थसंक्षेपेण ग्रन्थस्य सकलार्थाऽप्रतिपादकत्वे बालानां व्युत्पत्तिजनकता न स्याद् अतोऽर्थसंक्षेपं विहाय शब्दसंक्षेप उक्तः, अर्थस्तु बहुल इति । चिरन्तनोक्त्यभिन्नत्वप्रतिपादनेन कणादाद्यनभिमतार्थप्रतिपादकत्वप्रयुक्ता स्वोत्प्रेक्षामूलकताप्रयुक्ता वाऽनादरणीयता निरस्ता । कौतुकान्ननु='ननु'-इत्यवधारणे, कौतुकादेव अनायासादेवेत्यर्थः । विशदीकरवाणि=प्रकटीकरोमीत्यर्थः ।

ग्रन्थादौ श्रोतॄणां प्रवृत्तये अभिधेयप्रयोजनसम्बन्धाधिकार्यात्मकानुबन्धचतुष्टयं सूचयन्नतिसंक्षिप्तत्वादस्य ग्रन्थस्य सकलपदार्थाऽप्रतिपादकत्वेन कथं बालानां व्युत्पत्तिरिति शंकां सकलपदार्थप्रतिपादकत्वप्रदर्शनेन परिहरन् मुक्तावलीसमं स्वग्रन्थं परमात्मनि समर्पयँश्च स्वयशोऽनुवृत्तये ग्रन्थस्य स्वस्य च नाम निबध्नाति-**सद्रव्येति** । 'सद्रव्या' गुणगुम्फिता, ( सुकृतिनां ) सत्कर्मणां ज्ञापिका, सत्सामान्यविशेषनित्यमिलिता, अभावप्रकर्षोज्ज्वला, सद्युक्तिः, एषा, सिद्धान्तमुक्तावली, विश्वनाथकृतिना, विष्णोः, वक्षसि विन्यस्ता ( सती ) सुकृतिनां मनसः, मुदं चिरं वितनुतामित्यन्वयः । **मालापक्षे** सद्रव्या-द्रव्यैर्मरकतप्रवालरवर्णमण्यादिभिः सहिता, अथवा द्रव्येण धनेन सहिता क्रयणद्वारकसाध्यत्वसंसर्गेण विशिष्टा । गुणगुम्फिता-गुणेन सूत्रेण गुम्फिता-प्रोता । सुकृतिनाम्-पुण्यवतां सत्कर्मणाम्-सन्ति समीचीनानि मन्त्रपुरश्चरणभगवद्भजनादीनि यानि कर्माणि तेषां ज्ञापिकाऽनुमापिका । 'अनुमानं तु-'अयं सुकृतिजनः, मन्त्रपुरश्चरणादिमान्, मालावत्त्वादि'ति । सत्सामान्यविशेषनित्यमिलिता-समानस्य भावः सामान्यमिति व्युत्पत्त्या सादृश्यं सामान्यपदग्राह्यं स्यात् तद्वारणाय 'सदि'त्युक्तम्, तथाच 'सदि'त्यस्य 'न्यायशास्त्रे वर्तमानं जातिरूप' मित्यर्थः, यद्वा सत्—समीचीनं गजमुक्तात्वादिरूपं सामान्यमिति-सत्सामान्यम्, सत्सामान्यं च विशेषश्चेति सत्सामान्यविशेषौ, विशेषः-महत्त्वनिर्मलत्वादिरूपः, ताभ्यां नित्यमनवरतं मिलिता युक्ता । अभावप्रकर्षोज्ज्वला-अभावे तेजोऽभावे सति प्रकर्षेणोज्ज्वलाऽर्थप्रकाशिका, यद्वा भावानां घटादीनां प्रकर्षेणोज्ज्वला-स्वप्रभया प्रकाशिका, यद्वा भा कान्तिस्तस्या।वप्रं वलयं प्रभामण्डलमिति यावत्, तस्य

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—नूतनेति ।

कर्षः कर्षणं तेन उज्ज्वला–प्रकाशमानेति । सद्युक्तिः–सती समीचीना युक्तिः–योगः–रचनाविशेषो यस्यां सा । एतादृशी एषा सिद्धान्तमुक्तावली–सिद्धः समीचीनीकृतः अन्तो मेरुप्रदेशो यस्याः सा–सिद्धान्ता, मुक्तानामावली मुक्तावली, सिद्धान्ता चासौ मुक्तावली च सिद्धान्तमुक्तावली । विश्वनाथकृतिना=विश्वनाथश्चासौ कृती पण्डितस्तेन, विष्णोः–नारायणस्य वक्षसि–वक्षःस्थले विन्यस्ता विशेषतो भक्तिश्रद्धापुरःसरमर्पिता सती चिरं मनसो मुदं–सन्तोषं बहुकालं वितनुतां विस्तारयत्विति ॥ ग्रन्थपक्षे–द्रव्यैः–पृथिव्यादिनवद्रव्यैः सहिता प्रतिपादकत्वसंसर्गेण द्रव्यविशिष्टा । गुणैः रूपरसादिचतुर्विंशतिगुणैः गुम्फिता–प्रतिपादकत्वसंसर्गेण गुणविशिष्टा । सन्ति–न्यायशास्त्रे वर्तमानानि च तानि कर्माणि च सत्कर्माणि तेषामुत्क्षेपणादीनां पञ्चानां कर्मणां ज्ञापिका बोधिका । सत्सामान्यं जातिः, विशेषः–पञ्चमपदार्थः, नित्यः–नित्यसम्बन्धः समवायः, सत्सामान्यविशेषनित्यैः मिलिता–प्रतिपादकत्वसंसर्गेण सामान्यविशेषसमवायविशिष्टा । अथवा मिलितं मेलनं, भावे निष्ठाप्रत्ययात्, नित्यमिलितं नित्यसम्बन्धः समवायः, सामान्यं च विशेषश्च नित्यमिलितं चेति सामान्यविशेषनित्यमिलितानि, सन्ति तानि यस्यां सा सत्सामान्यविशेषनित्यमिलिता । अभावस्य प्रकर्षः प्रागभावादिभेदेन परस्परवैलक्षण्यं तेन उज्ज्वला तत्प्रतिपादिकेत्यर्थः । सत्यो युक्तयः साधकबाधकप्रमाणोपन्यासरूपा प्रतिपाद्यतया यस्यां सा । एषा बुद्धिस्था, वादिप्रतिवादिभ्यां निर्णिता अर्थाः सिद्धान्ताः,–त एव मुक्ताः तासामावली पङ्क्तिः सिद्धान्तमुक्तावल्याख्यो वाक्यसमूहात्मको ग्रन्थः । विश्वनाथकृतिना–विश्वनाथपञ्चाननभट्टाचार्येण । विष्णोः–नारायणस्य वक्षसि विन्यस्ता अर्पिता विन्यासोपलक्षितं यद् अवस्थितत्वप्रकारकमानसारोपात्मकं भावनापरपर्यायं ज्ञानं तद्विषयीकृता सती सुकृतिनां पण्डितानां मनसो मुदं चिरं वितनुताम् प्रयोजयत्वित्यर्थः ॥ अत्र मुक्तावलीसाम्योक्त्या निर्दोषत्वं सूचितम् । द्रव्यादिपदार्थ–प्रतिपादकत्वप्रदर्शनेन द्रव्यादयो विषया उक्ताः, पदार्थतत्त्वावधारणं प्रयोजनं सूचितम्, प्रतिपाद्यप्रतिपादकभावाख्यः सम्बन्धः सूचितः, पदार्थतत्त्वावधारणकामोऽधिकारीति सूचितम् । इत्येवमनुबन्धचतुष्टयं बोध्यम्–अनुबन्धत्वं च ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्वमिति ॥

मूले कृतस्य 'नूतने'त्यादिमंगलस्य तन्निबन्धनस्य च प्रयोजनमाह–**विघ्नविघातायेति** । प्रारब्धुमिष्टस्य 'कारिकावल्या'ख्यग्रन्थस्येति शेषः । विघ्नोऽत्र चरमवर्णध्वंसात्मिकायाः समाप्तेः प्रतिबन्धकोऽधर्मविशेषः–तस्य विघातः विशेषेण निःशेषेण ध्वंसः उत्पत्तिमदभावः तस्मै । 'वि'-समभिव्याहृत'घात'पदस्य विलक्षणध्वंसार्थकत्वात् प्रस्तुतग्रन्थसमाप्तिप्रतिबन्धकाऽशेषविघ्नध्वंसाय इति तदर्थः । केचित्तु–'घात'पदस्य–उत्पत्तिमदभावपरतया 'वि'पदमनर्थकमित्याशंक्य 'सकीचकैर्मारुतपूर्णरन्ध्रै'रिति रघुवंशे कविकालिदासीयपद्ये 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धता' इति कोशात् कीचकपदेनैव 'मारुतपूर्णरन्ध्रत्वविशिष्टवेणु'रूपार्थलाभसंभवेन 'मारुतपूर्णरन्ध्रै'रिति विशेषणवैयर्थ्यभिया 'विशिष्टवाचकानां पदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्व'मिति नियमः स्वीकार्यः, तथा च कीचकपदं वेणुमात्रपरमतो न 'मारुतपूर्णरन्ध्रै'रिति व्यर्थम्, तद्वदत्रापि 'घात'पदम् 'अभाव'मात्रपरम्, 'वि'पदम् 'उत्पत्तिमत्'-परम्, अतो न व्यर्थमित्युपसर्गाणां वाचकत्वमभिमत्य समादधति ॥ षष्ठीतत्पुरुषसमस्त'विघ्नविघाताये'त्यनेन मङ्गलस्य विघ्नध्वंस एव फलं न तु समाप्तिरिति नवीनमतं दर्शितं भवति । अथ च विघ्नस्य विघातो व्यापाररूपो यस्मिन्–समाप्तिरूपे कार्ये स विघ्नविघातः समाप्तिः, तस्मै विघ्नविघाताय समाप्तये–इत्यर्थः, विघ्नध्वंसद्वारकसमाप्तये-इति यावत्, अनेन–मङ्गलस्य विघ्नध्वंसद्वारकसमाप्तिफलकत्व-

वादिनां प्राचां मतं दर्शितं भवतीति। तथा च नवीनमते विघ्नविघातार्थं प्राचीनमते च समाप्त्यर्थं मङ्गलं कृतमिति बोध्यम्। मङ्गलं करणम्, विघ्नध्वंसो व्यापारः, समाप्तिः कार्यम्। तत्र नवीनमते–विघ्नध्वंसत्वावच्छिन्नं प्रति मङ्गलत्वावच्छिन्नं कारणं, विघ्नध्वंसत्वावच्छिन्नकार्यतानिरूपितकारणता मङ्गलत्वव्याप्ता, मङ्गलत्वावच्छिन्नकारणतानिरूपितकार्यता च विघ्नध्वंसत्वव्याप्ता भवतीति बोद्धव्यम्। प्राचीनमते–समाप्तित्वावच्छिन्नं प्रति मङ्गलत्वावच्छिन्नमसाधारणकारणम्, एवम्–समाप्तित्वावच्छिन्नं प्रति विघ्नध्वंसत्वावच्छिन्नं कारणम्, विघ्नध्वंसत्वावच्छिन्नं प्रति मङ्गलत्वावच्छिन्नं कारणमिति कार्यकारणभावाः, एवं मंगलत्वावच्छिन्नकरणतानिरूपितकार्यता समाप्तित्वव्याप्ता, समाप्तित्वावच्छिन्नकार्यतानिरूपितकारणता मङ्गलत्वव्याप्ता, एवं समाप्तित्वावच्छिन्नकार्यतानिरूपितकारणता विघ्नध्वंसत्वव्याप्ता विघ्नध्वंसत्वावच्छिन्नकारणतानिरूपितकार्यता च समाप्तित्वव्याप्ता भवतीत्येवं विशेषतस्तावदूह्यम्। करणत्वम्–असाधारणकारणत्वम्, असाधारणत्वं—कार्यत्वाऽतिरिक्तविशेषधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्, यथा समाप्तौ धर्मद्वयं कार्यत्वं समाप्तित्वं च, तत्र कार्यत्वातिरिक्तसमाप्तित्वरूपविशेषधर्मावच्छिन्न–समाप्तिनिष्ठकार्यतानिरूपितकारणता मंगलनिष्ठा तच्छालित्वम् मंगले। यद्वा व्यापारवत्त्वमेवाऽसाधारणत्वम्, व्यापारश्च द्वारम्, द्वारत्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वम्' यथा 'तत्'पदेन मंगलं ग्राह्यं, मंगलजन्यो विघ्नध्वंसः, पुनर्द्वितीय'तत्'पदेन मंगलं ग्राह्यं, मंगलजन्या या समाप्तिस्तस्या जनकोऽपि स एव विघ्नध्वंस इति द्वारत्वमुपपन्नम्, व्यापारवत्त्वञ्च मङ्गले साक्षात् स्वजनकत्वसम्बन्धेन बोध्यम्। फलाऽयोगव्यवच्छिन्नव्यापारवत् कारणं करणमिति फलितार्थः। विघ्नध्वंसो विशेषणतासम्बन्धेनात्मनि वर्तते, मंगलं तु 'नूतने'त्यादिरूपं नमस्कारात्मकं, नमस्कारः स्वापकर्षबोधानुकूलव्यापारः स्वावधिकोत्कर्षवत्तया ज्ञापनं वा, स च स्वानुकूलकृतिमत्त्वसम्बन्धेन आत्मनि वर्तते, **तथा च** विघ्नध्वंसमंगलयोः कार्यकारणभावाः—विशेषणतासम्बन्धेनाऽऽत्मवृत्तिविघ्नध्वंसं प्रति स्वानुकूलकृतिमत्त्वसम्बन्धेन नमस्कारात्मकं मंगलं कारणमिति–आत्मनिष्ठकार्यकारणभावः। विघ्नध्वंसः स्वोत्पत्त्यवच्छेदकतासम्बन्धेन शरीरे वर्तते, मंगलं स्वापकर्षबोधानुकूलव्यापारा(क्रिया)त्मकं स्वानुकूलकृत्यवच्छेदकतासम्बन्धेन आश्रयतया वा शरीरे वर्तते, तथा च–'स्वोत्पत्त्यवच्छेदकतासम्बन्धेन शरीरवृत्तिविघ्नध्वंसं प्रति स्वानुकूलकृत्यवच्छेदकतासम्बन्धेन आश्रयतया वा शरीरवृत्ति मंगलं कारणमिति–शरीरनिष्ठकार्यकारणभावः। एवं विघ्नध्वंसः स्वविशिष्टात्मसमवेतज्ञानजन्यत्वसम्बन्धेन ग्रन्थे वर्तते, मंगलं स्वविषयकज्ञानजन्यशब्दघटितत्वसम्बन्धेन ग्रन्थे वर्तते, तथा च स्वविशिष्टात्मसमवेतज्ञानजन्यत्वसम्बन्धेन ग्रन्थनिष्ठविघ्नध्वंसं प्रति स्वविषयकज्ञानजन्यशब्दघटितत्वसम्बन्धेन ग्रन्थनिष्ठं मंगलं कारणमिति ग्रन्थनिष्ठकार्यकारणभावः। **अथ च** समाप्तिमंगलयोः कार्यकारणभावाः–'स्व–प्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन आत्मवृत्तिसमाप्तिं प्रति स्वानुकूलकृतिमत्त्वसम्बन्धेन मंगलं कारणमिति आत्मनिष्ठकार्यकारणभावः। स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासम्बन्धेन शरीरवृत्तिसमाप्तिं प्रति स्वजन्यविघ्नध्वंसावच्छेदकतासम्बन्धेन शरीरनिष्ठमंगलं कारणम्, अथवा स्वप्रतियोगिचरमवर्णावच्छेदकतासम्बन्धेन शरीरवृत्तिसमाप्तिं प्रति स्वोत्पत्त्यवच्छेदकजातीयतासम्बन्धेन शरीरनिष्ठमंगलं कारणमिति शरीरनिष्ठकार्यकारणभावः। स्वप्रतियोगिचरमवर्णघटितत्वसम्बन्धेन ग्रन्थनिष्ठसमाप्तिं प्रति स्वविषयकज्ञानजन्यशब्दघटितत्वसम्बन्धेन ग्रन्थनिष्ठमंगलं कारणमिति ग्रन्थनिष्ठकार्यकारणभावः। **एवम्**–समाप्तिविघ्नध्वंसयोः कार्यकारणभावः;–स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन आत्मवृत्तिसमाप्तिं प्रति विशेषणतासम्बन्धेन

नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।
तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥

आत्मवृत्तिविघ्नध्वंसः कारणमिति आत्मनिष्ठकार्यकारणभावः । स्वजनकविघ्नध्वंसावच्छेदकता-सम्बन्धेन शरीरनिष्ठसमाप्तिं प्रति स्वोत्पत्त्यवच्छेदकतासम्बन्धेन शरीरनिष्ठविघ्नध्वंसः कारणमिति शरीरनिष्ठकार्यकारणभावः । स्वप्रतियोगिचरमवर्णघटितत्वसम्बन्धेन ग्रन्थनिष्ठसमाप्तिं प्रति स्वविशिष्टात्मसमवेतज्ञानजन्यत्वसम्बन्धेन ग्रन्थनिष्ठविघ्नध्वंसः कारणमिति ग्रन्थनिष्ठकार्यकारण-भावः, इत्येवं सर्वत्रोह्यम् ॥ **कृतं मंगलमिति** । 'नूतनजलधरे'त्यादि नमस्कारात्मकं मंगलं मनसा ज्ञानविषयोकृतमित्यर्थः ॥ **शिष्यशिक्षायै**–इति । मानसिकमंगलस्य स्वभिन्नव्यक्तिदु-र्बोधतया मंगलकर्तव्यत्वशिक्षा–'शिष्या अपि ग्रन्थरचने एवं मंगलं कुर्यु'रित्यात्मिका न संभवेदत-स्तादृशशिक्षाप्रयोजकं मानसिकमंगलानुकूलं वाक्यमारचितमिति भावः । मंगललक्षणन्तु–विघ्न-भिन्नत्वे सति विघ्नध्वंसप्रतिबन्धकाभावभिन्नत्वे सति प्रारिप्सित( ग्रन्थ )विघ्नध्वंसाऽसाधारण-कारणत्वमि'ति । विघ्नेऽतिव्याप्तिवारणाय विघ्नभिन्नत्वे सतीति । विघ्नध्वंसप्रतिबन्धकाऽभावेऽतिव्या-प्तिवारणाय–विघ्नध्वंसप्रतिबन्धकाभावभिन्नत्वे सतीति । कारीरीयागेऽतिव्याप्तिवारणाय–प्रारिप्सितेति । ईश्वरादिसाधारणकारणेऽतिव्याप्तिवारणाय–असाधारणेति । आशीर्वादनमस्कारवस्तुनिर्देशान्यतमत्वम्, समाप्तिप्रतिबन्धकीभूतदुरितविशेषध्वंसहेतुत्वं वा मंगलत्वमिति । **नूतनेतीति** । नूतनजलधररुचये गोपवधूटीदुकूलचौराय संसारमहीरुहस्य बीजाय तस्मै कृष्णाय नमः–इत्यन्वयः । नूतनश्चासौ जल-धरो मेघो नूतनजलधरः, नूतनजलधरस्य रुचिरिव रुचिर्यस्य स नूतनजलधररुचिस्तस्मै, मेघो यथा वृष्टिप्रदानेन जनसमूहस्य मोदं जनयति तथा श्रीकृष्णभगवानपि स्वभक्ताभिलाषपूर्त्या स्वभक्तानां मोदं जनयत्वित्यभिप्रायः । गाः पान्तीति गोपाः, गोपानां वध्वो गोपवध्वः, गोपवधूटीनां दुकूलानि गोपवधूटीदुकूलानि, चोरयति य इति चौरः, गोपवधूटीदुकूलानां चौरः, तस्मै, अथवा गा इन्द्रियाणि पान्तीति गोपा जीवात्मानस्तेषां वध्वो दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानि, ता एव दुकूलानि, मोक्षावस्थाऽऽच्छादकत्वात्, तेषां चौरः स्वसहितयावत्तत्त्वविषयकश्रवणमनननिदिध्यासनद्वारा नाशकः, तस्मै । अथवा गां पृथ्वीं पातीति गोपो युधिष्ठिरः, तस्य वधूटी द्रौपदी तस्याः दुकूलानि एकोनसहस्र(९९९)वस्त्राणि, तेभ्यः तदर्थमिति यावत्, चौरः–अदृश्यतया सभायां स्थितस्तस्मै । यथा श्रीकृष्णभगवान् गोपवधूटीदुकूलचौर्यं कृतवान् तथा मदीयमिथ्याज्ञानचौर्यमपि करोत्वित्यभि-प्रायः । संसारः–जन्मस्थितिलयशीलं जगत्, स एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणाय–जगज्जन्मादिकर्त्रे–इत्यर्थः । यो हि संसारस्योत्पादकः संरक्षकश्च तस्य मन्मनोरथपूरणे कियानायास इत्यभिप्रायः । केचित्तु–तच्छब्दः सामान्यतः सकलजनप्रसिद्धत्वसूचनायेति वदन्ति । प्रसिद्धाय **तस्मै**–'तत्पदस्य बुद्धिस्थप्रकारावच्छिन्ने शक्तत्वात् प्रकृते बुद्धिस्थप्रकारो यत् 'इष्टसिद्धिप्रदातृत्वम्' तद्विशिष्टायेत्यर्थः । कृष्णाय–कर्षति सदानन्दरूपत्वात्स्वाश्रितानां सकलदुःखान्युन्मूलयतीति कृष्णः 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । कृष्णस्तद्भावयोगाच्चे'त्यार्षं निरुक्तम्, 'एकान्तलीलारसतो-निर्वृतः कृष्ण उच्यत'इति सहस्रनामनिरुक्तिकाराः । तस्मैसदानन्दस्वरूपायवसुदेवतनुजन्मने–इत्यर्थः ॥

विघ्नविघातायै'त्यनेन दर्शितं नवीनमते मंगलस्य विघ्नध्वंसकारणत्वं प्राचीनमते च समाप्ति-कारणत्वं तदयुक्तं, व्यभिचारादिति,–नास्तिकः शंकते–**नन्वित्यादिना**–'मंगलं न विघ्नध्वंसं प्रति कारण'मित्यनेन नवीनमते, 'मंगलं न समाप्तिं प्रति–कारण'मित्यनेन च प्राचीनमते, मंगलस्य

**ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणं, विनाऽपि मङ्गलं नास्तिकादीनां ग्रन्थेषु निर्विघ्नपरिसमाप्तिदर्शनादिति चेद् ?, न, अविगीतशिष्टाचारविषयत्वेन मङ्ग-**

निष्फलत्वं दर्शितम्,-तथा च-'मंगलम्-अयुक्तम्,-निष्फलत्वाज्जलताडनादिवत्। अयुक्तत्वम्-बलवदनिष्टानुबन्धित्वं, भ्रममूलकेच्छाजन्यप्रवृत्तिविधेयत्वं वा। निष्फलत्वादिति-फलं द्विविधम्-मुख्यमानुषङ्गिकश्च, स्वविधेयकप्रवृत्तिप्रयोजकोत्कटेच्छाविषयीभूतं स्वस्य मुख्यं फलं, तादृशाऽनुत्कटेच्छाविषयीभूतं स्वस्यानुषङ्गिकं फलम्, उत्कटत्वाऽनुत्कटत्वे जातविशेषाविच्छानिष्ठौ, तथा च निष्फलत्वमत्र-स्वविधेयकप्रवृत्तिप्रयोजकोत्कटेच्छाविषयत्वावच्छिन्नजनकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वमिति हेतुः फलितः। नच निष्फलत्वमसिद्धमिति वाच्यम्। तदीययावत्फलविशेषशून्यत्वेन हेतुना तत्साधनात्, तथा च-'मगलं निष्फलम्, (स्वविधेयकप्रवृत्तिप्रयोजकोत्कटेच्छाविषयत्वावच्छिन्नजनकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्), फलविशेषशून्यत्वात्,=स्वविधेयकप्रवृत्तिप्रयोजकोत्कटेच्छाविषयत्वपरिच्छेयतत्तद्व्यक्तिजनकत्वाभावकूटवत्त्वात्। ननु ज्योतिष्टोमे स्वर्गफलके निष्फलत्वात्मकसाध्याभाववति पुत्रादिरूपफलविशेषशून्यत्वस्य सत्त्वात् 'साध्याभाववद्वृत्तिहेतु'रूपो व्यभिचार इति चेन्न, मंगलं निष्फलं यावत्फलविशेषशून्यत्वात्, तथाच यावद्विशेषाभावस्य सामान्याभावव्याप्यत्वान्नोक्तव्यभिचारः। नच यावत्फलविशेषशून्यत्वमसिद्धमिति शंकनीम्, 'मंगलं-यावत्फलविशेषशून्यम्,-स्वाधिकरणवृत्त्यभावप्रतियोगिकार्यकत्वे सति स्वाभाववद्वृत्तिकार्यकत्वादि-(अन्वयव्यतिरेकव्यभिचारशालित्वात्) त्यनेन तत्साधनात्। अत्रेदं बोध्यम्-'कारणसत्त्वे कार्यसत्त्व'-मन्वयसहचारः, 'कारणाभावे कार्याऽभावो'व्यतिरेकसहचारः, एवञ्चेत्-'कारणसत्त्वे कार्याऽभावोऽन्वयव्यभिचारः,-कारणसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्कार्यमिति तदर्थः। 'कारणाऽभावे कार्यसत्त्वं'व्यतिरेकव्यभिचारः,-कारणाभाववद्वृत्तिकार्यमिति तदर्थः। तत्र व्यतिरेकव्यभिचारं दर्शयति-**विनाऽपीति। नास्तिकादीनामिति।** नास्तिकत्वमत्र वेदप्रामाण्याऽनभ्युपगन्तृत्वम्, वेदः 'समाप्तिकामो मंगलमाचरे'दित्यादिरूपः। तथाच तादृशनास्तिकग्रन्थेषु मङ्गलाऽसत्त्वेऽपि कार्यस्य समाप्तेः सत्त्वाद्व्यतिरेकव्यभिचारः। आदिपदेन-आस्तिकानां ग्रन्थेऽपि व्यतिरेकव्यभिचारः प्रदर्शितो बोध्यः- वैशेषिकदर्शनस्य प्रशस्तपादभाष्यस्य किरणावल्यां टीकायां श्रीमदुदयनाचार्येण मंगलं न कृतं, दृश्यते च तस्याः समाप्तिः, अतस्तत्र मंगलरूपकारणाभावसत्त्वेऽपि समाप्त्यात्मककार्यसत्त्वेन व्यतिरेकव्यभिचारः। एवं-कादम्बर्या बाणभट्टेन मंगलं कृत्वाऽऽरम्भिताया अपि तन्मरणोत्तरं तत्पुत्रेण तत्समाप्तिः कृता, नतु बाणभट्टेन, अतस्तत्प्रणेतृपुरुषे मंगलसत्त्वेऽपि समाप्त्यभावसत्त्वादन्वयव्यभिचारः,-इत्यपि बोध्यम्। **निर्विघ्नपरिसमाप्तिदर्शनादितीति।** अनेन नास्तिकग्रन्थे प्रत्यक्षत एव समाप्तेर्विघ्नध्वंसस्य च सत्त्वमाविष्कृतम्, तथाच-'मंगलम्,-अयुक्तम्,-इष्टसाधनत्वाभावात्, चैत्यवन्दनादिवत्, न चात्र हेतोरसिद्धिः शंकनीया, हेतोः साधितत्वात्, तथाहि-नवीनमते-'मंगलं—विघ्नध्वंसात्मकेष्टसाधनत्वाभाववत्,— विघ्नध्वंसाऽव्यवहितप्राक्कालावच्छेद्यविघ्नध्वंससमानाधिकरणात्यन्ताभावप्रतियोगित्वात्। प्राचीनमते—'मंगलं,—समाप्तिरूपेष्टसाधनत्वाभाववत्, समाप्त्यव्यवहितप्राक्कालावच्छेद्यसमाप्त्यधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वात् 'यद् यदव्यवहितप्राक्कालावच्छेद्यतत्समानाधिकरणात्यन्ताभावप्रतियोगि, तत् तत्कारणत्वाऽभाववत्'-यथा 'घटं प्रति रासभः। विघ्नस्याभावो निर्विघ्नं अर्थाऽभावेऽव्ययीभावः, अभावश्चाऽत्र ध्वंसो विवक्षितः, निर्विघ्नं परिसमाप्तिः निर्विघ्नपरिसमाप्तिः, निर्विघ्नमित्यस्य विघ्नध्वंसादित्यर्थः, 'अव्ययादाप्सुपः'-इति पञ्चम्या लोपात्, उत्तरत्वं पञ्चम्यर्थः, तथा च

लस्य सफलत्वे सिद्धे, तत्र च फलजिज्ञासायां, सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्प-

विघ्नध्वंसपूर्वकसमाप्तिदर्शनादित्यर्थः। समाप्तिः—चरमवर्णध्वंसः॥ 'पूर्वदिने एव ग्रन्थ-स्समाप्त'—इति व्यवहाराच्चरमवर्णज्ञानं चरमवर्ण एव वा समाप्तिरित्यपरे॥ वर्णे चरमत्वं—स्वघटितग्रन्थघटकवर्णप्रागभावाऽसमानकालीनत्वम्, तथा च—मंगलप्रतियोगिकाऽभावसमानाधिकरणो यो विघ्नध्वंसविशिष्टनास्तिकादिसम्बन्धिग्रन्थघटकचरमवर्णध्वंसादिस्तद्दर्शनादित्यर्थः॥ नैयायिकः समाधत्ते—**नेति**। **अविगीतेति**। तथा चानुमानं—मंगलं सफलम् अविगीतशिष्टाचारविषयत्वात्। सफलत्वमत्र—बलवदनिष्टाननुबन्धित्वरूपं बोध्यम्। हेतौ—अविगीतत्वं बलवदनिष्टाननुबन्धित्वम्, शिष्टाचारविषयत्वं च इष्टसाधनत्वप्रकारकभ्रमशून्यसमवेतकृतिविधेयत्वम्। तथा च—'मंगलं—बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनतावत्,—बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वप्रकारकभ्रम-शून्यसमवेतकृतिविधेयत्वात्'। यत् अविगीतत्वे सति अभ्रान्तयत्पुरुषसमवेतकृतिविधेयं भवति तत् तत्पुरुषीयेष्टसाधनं भवति यथा दर्शादिः। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'इति श्रुत्या दर्शादेः स्वर्गसाधनत्वप्रतिपादनात् तादृशयागकर्तुरभ्रान्ततया तदनुष्ठितयागस्य तदीयस्वर्गसाधनत्वम् भवति यथा, तथा 'समाप्तिकामो मंगलमाचरे'दिति श्रुत्या मंगलस्येष्टसाधनत्वप्रतिपादनात् बहुज्ञगौतमादीनामभ्रान्तत्वेन स्वग्रन्थादौ कृतमंगलस्य (सफलत्वे) तदीयेष्टसाधनत्वे सिद्धे मंगलसामान्यस्येष्ट-साधनत्वं सिद्ध्यतीति 'सिद्धे'—इत्यन्तमूलस्याभिप्रायः॥ 'श्येनेनाऽभिचरन्यजेते'ति श्रुत्या 'श्येन'-यागस्य शत्रुनाशकत्वप्रतिपादनेन श्येनयागकर्तुः 'इष्टसाधनत्वप्रकारकभ्रमशून्य'त्वरूपस्य शिष्टत्वस्य सत्त्वेन तादृशपुरुषसमवेतकृतिविधेयत्वरूपहेतुमति श्येनयागे बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसा-धनत्वरूपसाध्याभावेन व्यभिचारः स्यात्, अतस्तद्वारणाय हेतोरविगीतत्वं विशेषणमुक्तम्, तथा च श्येनयागस्य नरकसाधनत्वाद्बलवदनिष्टानुबन्धित्वान्न व्यभिचारः। बलवदनिष्टाननुबन्धित्वे सति कृतिविधेयत्वरूपहेतुमति व्युत्क्रमेण कृतदर्शादौ निरुक्तसाध्याभावाद्व्यभिचारः, तद्वारणाय 'शिष्ट-समवेतत्व'मुक्तम्, तथा च व्युत्क्रमेण यागकर्तुरिष्टसाधनत्वांशे भ्रान्ततया तादृशशिष्टत्वाऽभावान्न व्यभिचारः। विषयत्वस्य फलेऽपि सत्त्वेन फले व्यभिचारवारणाय विषयत्वं विहाय विधेयत्वं हेतावुक्त-मिति। **केचित्तु**—मंगलं सफलं विषयत्वात्, कृष्यादिवत्। अत्र विषयतायाः केवलान्वयितया ज्ञान-विषये सुखे सत्त्वेन तत्र च सफलत्वाभावाद्व्यभिचारः, तद्वारणाय 'आचारविषयत्वादि'ति हेतुः प्रयोक्तव्यः। आचारविषयत्वं नाम कृतिविषयत्वम्, ज्ञानविषये सुखे कृतिविषयत्वविरहान्न व्यभिचारः। तथापि—'सुखोद्देशेन धर्मं करोती'ति प्रतीत्या उद्देश्यतया कृतिविषयत्वस्य सुखे सत्त्वेन व्यभिचार-वारणाय 'विधेयतया कृतिविषयत्वं' हेतुः प्रयोक्तव्यः। एवमपि—सफलत्वाभाववति चैत्यवन्दने विधेयतया नास्तिककृतिविषयत्वसत्त्वेन व्यभिचारः, तद्वारणाय 'विधेयतया शिष्टकृतिविषयत्वात्' इति हेतुः प्रयोक्तव्यः, शिष्टत्वं चात्र वेदप्रामाण्याभ्युपगन्तृत्वं, फलसाधनतांशे भ्रान्तिरहितत्वं वा, नास्ति-कानां तादृशशिष्टत्वाभावादेव तदीयचैत्यवन्दने शिष्टकृतिविषयत्वाभावान्न व्यभिचारः। तथापि—प्रवृत्त्युपयुक्तबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपं सफलत्वं श्येनयागे नास्ति, श्येनयागस्य बलवदनिष्टनरकसाधनत्वात्, शिष्टकृतिविषयत्वं च वर्तते अतो व्यभिचारः, तद्वारणाय—'अविगीत-शिष्टाचारविषयत्वादि'ति हेतुः प्रयोक्तव्यः, अविगीतत्वं बलवदनिष्टाऽननुबन्धित्वम्, तच्च श्येनयागे न वर्तत इति न व्यभिचारः। तथा च 'बलवदनिष्टाननुबन्धि—फलसाधनतांशभ्रान्तिशून्यपुरुषसमवेत—कृतिविधेयत्वादिति हेतुः फलितः, इति **सङ्गमयन्ति**। **सिद्धे**=अनुमिते सति। **तत्रेति**। अभ्रान्त-तत्पुरुषीयेष्टसाधनत्वानुमित्युद्देश्यभूततत्पुरुषानुष्ठितमंगले—इत्यर्थः। **फलजिज्ञासायामिति**।

**नाया अन्याय्यत्वाद् उपस्थितत्वाच्च समाप्तिरेव तत्फलं कल्प्यते। इत्थं च यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते। यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यम्। प्रचुरस्यैवाऽस्य बलवत्तर-**

'प्रारिप्सितं मे कर्म निर्विघ्नं परिसमाप्यता'मिति या तत्पुरुषीया कामना तद्विषयीभूतं यद्विशेषफलं (समाप्तिरूपं) तज्जिज्ञासायां तज्ज्ञातुमिच्छायामित्यर्थः। **संभवतीति**। दृष्टफलकत्वे संभवति सतीत्यर्थः। 'दृष्टाऽदृष्टफलयोः संभवितदृष्टफलस्य बलीयस्त्वमि'तिन्यायाद् दृष्टफलं कल्पनीयं, यत्र च दृष्टफलं नास्ति तत्राऽदृष्टफलकल्पनावकाशः,–यथा गंगाजलस्नानपानादेः–अदृष्टफलकल्पनावकाशः, प्रकृते च समाप्तिरूपदृष्टफले संभवति सति अदृष्टफलकल्पनाया अन्याय्यत्वात्–'दृष्टाऽदृष्टे'त्यादिन्यायविरोधादित्यर्थः। ननु तर्हि दृष्टं पुत्रादिकं मंगलफलं कल्प्यतामत आह–**उपस्थितत्वाच्चेति**। 'प्रारिप्सितं कर्म निर्विघ्नं परिसमाप्यता'मिति ग्रन्थादौ प्रवृत्तपुरुषस्य कामनयैव मंगलकरणात् तादृशकामनायां विषयतया निर्विघ्नपरिसमाप्तेरेवोपस्थितत्वात्, उपस्थितं परित्यज्याऽनुपस्थितकल्पने मानाभावाच्चे'त्यर्थः। **समाप्तिरेव तत्फलं कल्प्यते**–इति। मंगलस्य फलं समाप्तिरेवेत्यनुमीयते इत्यर्थः। तथाच 'मंगलं–सफलम्(बलवदनिष्टाऽननुबन्धित्वविशिष्टेष्टसाधनतावत्), अविगीतशिष्टाचारविषयत्वात्'–इत्यनुमाने 'तादृशेष्टसाधनत्वव्याप्याऽविगीतशिष्टाचारविषयतावत् मंगल'मिति–परामर्शात् इतर(पुत्राऽदृष्टादि)फलसाधनत्वबाधज्ञानसहकृतात्, व्यापकतावच्छेदकतादृशेष्टसाधनत्वत्वेन व्यापकतानवच्छेदकसमाप्तिसाधनत्वत्वेन वा धर्मेण समाप्तिसाधनत्वविधेयकाऽनुमितिर्भवति–'मंगलं–समाप्तिसाधनम्, समाप्त्यन्याऽफलकत्वे सति सफलत्वादिति, समाप्त्यन्याफलकत्वं च–समाप्तिभिन्नं समाप्तिजनकव्यापारभिन्नं समाप्तिजन्यभोगभिन्नं च यत्प्रवृत्त्युद्देश्यं तज्जनकत्वरूपं बोध्यम्, तेन मंगलस्य समाप्तिभिन्नं विघ्नध्वंसं प्रति भोगं प्रति स्वध्वंसं प्रति च जनकत्वेऽपि न हेत्वप्रसिद्धिः। समाप्तिसाधनं=समाप्तिफलकम्। मंगलस्य समाप्तिसाधनत्वे शिष्टाचारानुमितश्रुतिरपि प्रमाणम्, इदानीं पठ्यमानप्रचलितवेदे 'समाप्तिकामो मंगलमाचरे'दितिश्रुतेरदर्शनेऽपि शिष्टाचारेणाऽनुमिता भवति–'मंगलं–स्वबोधितकर्तव्यताकत्वसम्बन्धेन श्रुतिमत्,–शिष्टाचारविषयत्वा'दिति। तादृशानुमितश्रुतेः भाष्यकारप्रभृतिभिरुच्चरितानुपूर्वीविशेषवत्त्वनिर्णयात् मंगलकर्तव्यताबोधकत्वादिति बोध्यम्। पूर्वोक्तव्यतिरेकव्यभिचारमुद्धरति–**इत्थं चेति**। मंगलस्य समाप्तिफलकत्वेऽनुमिते चेत्यर्थः। यत्र=नास्तिकास्तिकग्रन्थेषु, मंगलं कृतं न दृश्यते, तत्रापि=नास्तिकास्तिकग्रन्थेष्वपि। तत्=मंगलम्। जन्मान्तरीयं=पूर्वजन्मनि कृतमिति। कल्प्यते–समाप्तिरूपकार्येण अनुमीयते–इत्यर्थः। तथाच—'अयम्,–मंगलाश्रयः,–समाप्तग्रन्थकर्तृत्वात्–आस्तिकवत्'—इत्यनुमानेन 'मंगलव्याप्यसमाप्तग्रन्थकर्तृत्ववानय'मितिपरामर्शात् एतज्जन्मीयमंगलबाधज्ञानसहितात् व्यापकतानवच्छेदक–जन्मान्तरीयमंगलत्वेन रूपेण मंगलं सिद्ध्यतीति बोध्यम्। अथवा ग्रन्थाद्बहिरेव मानसिकमंगलकरणेन समाप्तिर्जातेति न किरणावल्यादौ व्यतिरेकव्यभिचार इति। अन्वयव्यभिचारं परिहरति–**यत्र च सत्यपीति**। यत्र कादम्बर्यादिग्रन्थे मंगले कृते सत्यपि समाप्तिर्न दृश्यते तत्र=कादम्बर्यादावित्यर्थः॥ 'बलवत्तरं मंगलं बलवत्तरविघ्नध्वंसद्वारा समाप्तिं प्रति कारणं, समसंख्याकं च मंगलं समसंख्याकविघ्नध्वंसद्वारा समाप्तिं प्रति कारणमित्यभिप्रायेणाह–**बलवत्तर इति**। ननु विघ्ने बलवत्तरत्वं मंगलाऽनाश्यप्रारब्धत्वम्, तादृशमंगलाऽनाश्यप्रारब्धात्मकाधर्मस्य पूर्वमपि सत्त्वेन पूर्वरचितग्रन्थसमाप्त्यनुपपत्तिः, यदि–एतद्ग्रन्थसमाप्तिप्रतिबन्धकविघ्नस्यैव प्रारब्धरूपत्वं तदा कल्पनागौरवमत आह–**विघ्नप्राचुर्यं वेति**। तथा च

**विघ्ननिवारणे कारणत्वम्। विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः। नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलं, समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात्। न चैवं स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम्, इष्टापत्तेः। विघ्नशङ्कया तदाचरणात्, तथैव शिष्टाचारात्। न च तस्य निष्फलत्वे तद्बोधक-**

---

कादम्बर्यां बाणभट्टेन यावत्संख्याकं मंगलं कृतं तावत्संख्याकस्तस्य विघ्नध्वंसस्तु जात एव, अतो मंगलस्य समाप्तिकारणत्वे न काचित् क्षतिः, किन्तु तत्र विघ्नानां बाहुल्यात् मंगलस्य चाऽल्पत्वात्स-माप्तिर्न जाता, यद्यधिकं मंगलं कृतं भवेत् तदा समाप्तिरपि भवेदिति भावः। कृतेन मंगलेन पूर्वोत्पन्नवि-घ्नानां नाशेऽपि पश्चादुत्पन्नविघ्नानाम् अनाशान्न समाप्तिरित्यपि बोध्यम्। **प्रचुरस्यैवेति**। प्रचु-रस्यास्य मंगलस्यैवेत्यर्थः। **बलवत्तरेति**। बलवत्तरविघ्ननिवारणे प्रचुरविघ्ननिवारणे चेत्यर्थः। तथा च–'बलवत्तरविघ्नध्वंसं प्रति प्रचुरविघ्नध्वंसं प्रति च प्रचुरमंगलस्य कारणत्वमिति बोध्यम्। ननु मंगलस्य समाप्तिं प्रति कारणत्वात् मंगलेन कादम्बर्यादौ समाप्तिरेव परं जायतां, किं विघ्नध्वंसेन? इत्यत आह–**विघ्नध्वंसस्त्विति**। तुः–अवधारणे, यावद्विघ्ननाश एवेत्यर्थः, प्रकृतसमाप्तिप्रति-बन्धकविघ्नासमानकालीनविघ्नध्वंस एव व्यापार इति फलितार्थः। तथा च कादम्बर्यादौ तादृश-व्यापारं विना, स्वजन्यविघ्नध्वंसवत्त्वसम्बन्धेन मंगलं विना वा कथं समाप्तिरितिभावः। द्वारत्वं तज्जन्यत्वे सति तज्जन्यजनकत्वम्, विघ्नध्वंसे मंगलजन्यत्वस्य मंगलजन्या या समाप्तिस्तज्जनकत्वस्य च सत्त्वाद् द्वारत्वं बोध्यमिति। विघ्नध्वंसनिष्ठप्रत्यासत्त्या मंगलसमाप्त्योः कार्यकारणभावः–'स्व(समाप्ति)-निष्ठजन्यतानिरूपितदैशिकविशेषणतासम्बन्धावच्छिन्नजनकतासम्बन्धेन विघ्नध्वंसनिष्ठसमाप्तिं प्रति स्व( मंगल )निष्ठजनकतानिरूपितदैशिकविशेषणतासम्बन्धावच्छिन्नजन्यतासम्बन्धेन विघ्नध्वंसनिष्ठ-मंगलस्य कारणत्वमिति॥ विघ्नध्वंसस्य द्वारत्वमिच्छतां प्राचां मतेऽपि विघ्नध्वंसस्य मंगलकार्यत्वा-वश्यकतया 'विघ्नो मे निवर्ततामि'ति कामनया मंगलाचरणेन च मंगलस्य विघ्नध्वंस एव फलमिति वदतां चिन्तामणिकृतां गंगेशोपाध्यायानां मतमाह–**नव्यास्त्विति**। विघ्नध्वंस एवेत्येव-कारेण समाप्तेर्मंगलफलत्वव्यवच्छेदः। फलं–प्रवृत्त्युद्देश्यम्। ननु तर्हि समाप्तिराकस्मिकी स्यादत आह–**समाप्तिस्त्विति**। **बुद्धीति**। बुद्धिः–ज्ञानं, प्रतिभा–स्फूर्तिः, आदिना–प्रतिबन्ध-काभावो ग्राह्यः, इत्यादिकारणसमवायात् समाप्तिर्भवतीत्यर्थः। ननु यस्य विघ्न एव नास्ति तेन कृतस्य मंगलय निष्फलत्वमित्याशङ्क्याह–**न चैवमिति**। एवम्–मंगलस्य विघ्नध्वंस-मात्रफलकत्वे, स्वतःसिद्धविघ्नविरहवता–स्वकारणाभावप्रयुक्तविघ्नात्यन्ताभाववता पुरुषेणेत्यर्थः। कृत-स्याऽऽचरितस्य मंगलस्य निष्फलत्वापत्तिः–विघ्नध्वंसात्मकफलाऽनुपधायकत्वाऽऽपत्तिरित्यर्थः। निष्फलत्वमिष्टापत्तित्वेन स्वीकरोति–**इष्टापत्तेरिति**। यथा कारणान्तराऽऽलोकाद्यसमवधानकाले चक्षुषः चाक्षुषप्रत्यक्षानुपधायकत्वमिष्टम्, तथा प्रतियोगि( विघ्न )रूपं यद् ध्वंसस्य कारणान्तरं तदभावकाले मंगलस्य विघ्नध्वंसाऽनुपधायकत्वेऽपि तस्येष्टताया वक्तुं शक्यत्वादिति भावः। ननु फलसाधनतानिश्चयस्यैव प्रवृत्तिजनकतया निरुक्तस्थले मंगले विघ्नध्वंसरूपफलजनकत्वस्य संदिग्धतया कथं तत्र प्रवृत्तिरत आह–**विघ्नशंकयेति**। तदाचरणात्–मंगलाचरणात्। तथा च प्रवृत्तौ न फलसाधनतानिश्चयः कारणमपि तु फलसाधनताज्ञानमात्रम्, एवञ्च मंगले विघ्नध्वंसरूपफलसाधनतायाः सन्दिग्धत्वेऽपि न क्षतिः, संशयनिश्चयसाधारणफलसाधनता-ज्ञानस्य तदानीमपि सत्त्वात्। संशयनिश्चयसाधारणविघ्नप्रकारकज्ञानस्य प्रवर्तकत्वात् तत्र प्रवृत्तिः, तथाहि–विघ्नस्याऽनिष्टतया संशयनिश्चयसाधारणविघ्नप्रकारकज्ञाने सति विघ्ननिवारण-

**वेदाप्रामाण्यापत्तिरिति वाच्यम्, सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात्। अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम्।**

रूपे फले इच्छोदयेन विघ्नध्वंसोपाये मंगलेऽपीच्छासंभवात्, उपायेच्छां प्रति फलेच्छायाः कारणत्वात्, उपायेच्छया च उपाये मंगले प्रवृत्तिरिति-क्रमेण विघ्नप्रकारकसंशयनिश्चयसाधारणज्ञानस्य प्रवर्तकत्वम्। **तदाचरणात्**=तस्मिन् मंगले, आचरणात्-प्रवृत्तेरित्यर्थः। संशयनिश्चयसाधारणविघ्नज्ञानस्य मंगलाचरणप्रयोजकत्वे सम्मतिमाह-**तथैवेति**। संशयनिश्चयसाधारणविघ्नप्रकारकज्ञानेनैवेत्यर्थः। **शिष्टाचारात्**-शिष्टानाम् आस्तिकानाम्, आचारात्-विषयतासम्बन्धेन प्रवृत्तेरित्यर्थः। तथा च 'कूष्माण्डैर्जुहुयाद् यो पूत इव मन्येत' इति श्रुत्या अपूतत्वशंकया तन्निवर्तके कूश्माण्डहोमादौ यथा आस्तिकानां प्रवृत्तिस्तथा विघ्नशंकया विघ्ननिवारके मंगलेऽपि शिष्टानां प्रवृत्तिरावश्यकीति भावः। ननु निर्विघ्नपुरुषाऽऽचरितमंगलेऽन्वयव्यभिचाराद् विघ्नध्वंसं प्रति मंगलस्य कारणता बाधिता, तथा च बाधितार्थस्य बोधकत्वात् 'विघ्नध्वंसकामो मंगलमाचरे'दिति—वेदस्याऽप्रामाण्यमित्याशंकते—**न चेति**। तस्य--निर्विघ्नपुरुषानुष्ठितमंगलस्य, निष्फलत्वे-विघ्नध्वंसात्मकफलानुपधायकत्वे सति। **तद्बोधकेति**। विघ्नध्वंसमंगलयोः कार्यकारणभावबोधकस्य 'विघ्नध्वंसकामो मंगलमाचरे'दिति वेदस्य ( बाधितार्थस्य बोधकत्वात् ) विघ्नध्वंसफलकत्वाभाववति विघ्नध्वंसफलकत्वप्रतिपादकत्वात् तादृशाप्रमाजनकत्वेन अप्रमाणत्वाऽऽपत्तिरित्यर्थः॥ समाधत्ते-**सति विघ्ने**-इति। विघ्नात्मकस्य ध्वंसकारणान्तरस्य समवधाने सति, तन्नाशस्यैव-मंगलाद् विघ्ननाशोत्पत्तेरेव, वेदबोधितत्वात्-श्रुतिबोधितत्वादित्यर्थः। तथा च विघ्नध्वंसस्य प्रतियोगिविघ्नरूपं यत्कारणान्तरं तदभावेन विघ्नध्वंसरूपकार्याऽनुदयोपपत्तौ कारणत्वस्वरूपयोग्यताया अबाधितत्वेन न स्वरूपयोग्यतात्मककारणताबोधकवेदाप्रामाण्यमिति भावः॥ इत्येवम् 'विघ्नध्वंसकामो मंगलमाचरे'दित्यस्यां अनुमितिविषयश्रुतावप्रामाण्याऽभावे निर्णीते सति 'पापध्वंसकामः प्रायश्चित्तमाचरे'दितिप्रात्यक्षिकश्रुतावपि अप्रामाण्याभावमुपन्यस्यति-**अत एवेति**। नाशं प्रति प्रतियोगिनः कारणत्वेन प्रतियोग्यसमवधानकालेऽपि स्वरूपयोग्यतारूपकारणत्वमादाय मंगलस्य विघ्नध्वंसकारणत्वबोधकश्रुतेरप्रामाण्यनिरासादेवेत्यर्थः। **पापभ्रमेणेति**। 'कूष्माण्डैर्जुहुयाद् यो पूत इव मन्येत' इति श्रुतेः-अपूतत्वभ्रमस्य कूष्माण्डहोमरूपप्रायश्चित्तकरणप्रयोजकत्वप्रतिपादकत्वात् अपूतत्वभ्रमेण ( पापभ्रमेण ) अपूतत्वनिवृत्त्यर्थं कृतस्य-अनुष्ठितस्य कूष्माण्डहोमरूपस्य प्रायश्चित्तस्य निष्फलत्वेऽपि अपूतत्वात्मकप्रतियोग्यात्मककारणान्तराभावेन अपूतत्वध्वंसरूपफलोपधायकत्वाऽभावेऽपि न तद्बोधकवेदाऽप्रामाण्यम्-तस्य प्रायश्चित्तस्य पापनाशकत्वबोधको यः 'कूष्माण्डैर्जुहुयात् यो पूत इव मन्येत'इति वेदस्तस्य अप्रामाण्यं नेत्यर्थः। स्वरूपयोग्यतारूपकारणतामादायात्र प्रात्यक्षिकश्रुतौ प्रामाण्योपपादनवत् आनुमानिकश्रुतावपि तथैव प्रामाण्योपपादनमनुसन्धेयमिति भावः॥ ननु मंगलं न विघ्नध्वंसं प्रति कारणम्, गणेशस्तवपाठादिजन्यविघ्नध्वंसे 'कारणा(मंगला)भावे कार्यसत्ता'रूप व्यतिरेकव्यभिचारात्, न च गणेशोत्कर्षप्रकारकज्ञानस्य तादृशज्ञानजनकशब्दात्मकस्तोत्रस्य वा मंगलत्वादेव न व्यभिचारइति वाच्यम्, तादृशस्तोत्रानुकूलकण्ठाभिघातरूपस्य स्तोत्रपाठस्य मंगलत्वाभावात् तादृशस्तोत्रपाठजन्ये विघ्नध्वंसे व्यभिचारस्य वारयितुमशक्यत्वात्। न च पाठकतासम्बन्धेन गणेशस्तवात्मकं मंगलमेव विघ्ननाशकम्,-अतो न व्यभिचार इति वाच्यम्। 'सर्वे विघ्नाः शमं यान्ति गणेशस्तवपाठतः' इति वचनेन तत्पाठस्य विघ्ननाशकत्वात् तत्पाठजन्यविघ्नध्वंसे व्यभिचारात्, एवं प्रायश्चित्तजन्यविघ्न-

**मंगलं च विघ्नध्वंसविशेषे कारणं, विघ्नध्वंसविशेषे च विनायकस्तवपाठादिः। क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनं, प्रतिबन्धकसंसर्गाभावस्यैव कार्यजन-**

ध्वंसेऽपि व्यभिचारात् ,–विशेषतः कार्यकारणभावेन तं परिहरति–**मंगलं च विघ्नध्वंसविशेषे–इति।** विघ्नध्वंसविशेषे=स्व(मंगल)सामानाधिकरण्य–स्वाऽव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन मंगलविशिष्टविघ्नध्वंसत्वावच्छिन्ने, तथा च 'मंगलाऽव्यवहितोत्तरजायमानविघ्नध्वंसत्वावच्छिन्नं प्रति मंगलस्य कारणत्वान्न व्यभिचारः, इति भावः॥ **विघ्नध्वंसविशेषे च विनायकस्तव-पाठादिरिति।** विघ्नध्वंसविशेषे=स्व( विनायकस्तवपाठ )सामानाधिकरण्य–स्वाऽव्यवहितोत्तर-क्षणोत्पत्तिकत्वोभयसम्बन्धेन विनायकस्तवपाठविशिष्टविघ्नध्वंसत्वावच्छिन्ने। तथा च 'विनायकस्तव-पाठाव्यवहितोत्तरजायमानविघ्नध्वंसत्वावच्छिन्नं प्रति विनायकस्तवपाठस्य करणत्वान्न व्यभिचार इति भावः। **'पाठादि'**रित्यादिपदात् प्रायश्चित्तपरिग्रहः, स्व(प्रायश्चित्त)सामानाधिकरण्य–स्वाव्यव-हितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन प्रायश्चित्तविशिष्टविघ्नध्वंसत्वावच्छिन्नं प्रति प्रायश्चित्तस्य कारण-त्वमतो न व्यभिचार इति भावः। **अन्ये तु**–मंगलादिनाश्येषु विघ्नेषु विभिन्नं वैजात्यं स्वीकृत्य–स्वा(तादृशवैजात्या)श्रयप्रतियोगिकत्व–कालिकविशेषणत्वोभयसम्बन्धेन तादृशवैजात्यावच्छिन्नविघ्न-ध्वंसं प्रति मंगलस्य कारणत्वात्, एवमेव विनायकस्तवपाठस्य प्रायश्चित्तस्य च कारणत्वान्न व्यभि-चार इति संगमयन्ति॥ ननु यदि विघ्ननाश एव मंगलस्य फलं तदा समाप्तिकामस्य पुरुषस्य मंगले प्रवृत्तिर्न स्यात्, अतस्तादृशपुरुषस्य समाप्तिसाधनविघ्नध्वंससाधनत्वात् मंगले प्रवृत्तिर्वक्तव्या, सापि न संभवेत्, स्वतःसिद्धविघ्नात्यन्ताभाववतस्तादृशपुरुषस्य विघ्नध्वंसाऽनपेक्षणेन मंगलस्याऽप्यनपेक्ष णात्, तथा च कारणा( विघ्नध्वंसा )भावेऽपि समाप्तिसत्त्वेन व्यतिरेकव्यभिचारः; किञ्च विघ्नस्य समाप्तिप्रतिबन्धकतया समाप्तिजनकविघ्ननाशादिसम्पादकतया मंगलस्यापि समाप्तिजन-कत्वं वाच्यम्, एवञ्च मंगलाभावान्नास्तिकादीनां ग्रन्थस्य परिसमाप्तिरेव न स्यादत आह–**क्वचिच्चेति।** स्वतःसिद्धविघ्नात्यन्ताभाववति पुरुषे–इत्यर्थः। **विघ्नात्यन्ताभावइति।** अत्यन्ताभावेन सह ध्वंसप्रागभावयोर्विरोधात्, तादृशपुरुषे विघ्नध्वंसविघ्नप्रागभावयोरभावेऽपि विघ्नात्यन्ताभावस्य सत्त्वात् 'समाप्तित्वावच्छिन्नं प्रति विघ्नत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य कारणत्वमि'त्यस्य वक्तव्यत्वान्न कोऽपि दोष इति–भावः। अनेन–'मंगलस्य विघ्नध्वंसद्वारा समाप्तिसाधनत्वमिति प्राचीनमतेऽस्वरसः सूचितः, एतादृशस्थले स्व( मंगल )जन्यविघ्नध्वंसवत्त्वसम्बन्धेन मंगलरूप-कारणाभावेऽपि समाप्तिरूपकार्योदयेन व्यतिरेकव्यभिचारस्य ध्रौव्यात् समाप्तिं प्रति मंगलस्य हेतुत्वाऽ-संभवइति बोध्यम्। अत्र क्वचित् समाप्तिं प्रति विघ्नध्वंसस्य कारणत्वं क्वचिद्विघ्नात्यन्ताभावस्य कारणत्वमिति योऽननुगमस्तं परिहरन् ध्वंसात्यन्ताभावादेरेकोपादानेऽन्यस्यासंग्रहपरिहरणार्थमाह–**प्रतिबन्धकेति।** कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वम्, तादृशप्रतिबन्धकाभावः संसर्गाभावः, संसर्गाभावत्वेन संसर्गाभावस्य कारणत्वम्, तथाच–'सामान्यतः–कार्यत्वावच्छिन्नं प्रति प्रतिबन्धक-संसर्गाभावत्वावच्छिन्नस्य कारणत्व'मिति नियमात् 'समाप्तिरूपकार्यत्वावच्छिन्नं प्रति विघ्नात्मकप्रतिब-न्धकसंसर्गाभावत्वावच्छिन्नस्य हेतुत्वेन विघ्नसंसर्गाभावपदेन विघ्नध्वंसतत्प्रागभावतदत्यन्ताभावानां ग्रहणान्नाऽननुगमोऽसंग्रहश्चेति भावः। **वस्तुतस्तु**-यत्रात्मनि समवायेन विघ्नो वर्तते तत्र'संयोगेन विघ्नो नास्ती'ति–प्रतीतिसाक्षिकविघ्नाभावसत्त्वेन समाप्तिवारणाय'समवायसम्बन्धावच्छिन्नविघ्नत्वावच्छिन्न–प्रतियोगिताकाभावत्वेन कारणत्वं'वाच्यम्,तथाच 'संयोगेन घटाधिकरणे समवायेन घटो नास्ति समवायेन घटाधिकरणे संयोगेन घटो नास्ती'ति प्रतीत्योर्भेदोपपत्तयेऽत्यन्ताभावप्रतियोगितायां सम्बन्धावच्छिन्नत्व-

कत्वात्। इत्थं च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः, स्वतः-सिद्धविघ्नात्यन्ताभावो वाऽस्तीति न व्यभिचार इत्याहुः।

संसारेति। संसार एव महीरुहो वृक्षस्तस्य बीजाय, निमित्तकारणायेत्यर्थः।

---

स्याङ्गीकारवत्,–ध्वंसे प्रागभावे च तादृश्युक्तयसंभवेन ध्वंसप्रागभावीयप्रतियोगितायाः केनचित्संसर्गेण धर्मेण चाऽनवच्छिन्नतया एकरूपेणाऽनुगमाऽसंभवात्, तथा च विघ्नध्वंसाऽव्यवहितोत्तरजायमानसमाप्तिं प्रति विघ्नध्वंसस्य कारणत्वम्, विघ्नात्यन्ताभावाऽव्यवहितोत्तरजायमानसमाप्तिं प्रति विघ्नात्यन्ताभावस्य कारणत्वमिति पृथगेव कार्यकारणभावः, सोऽपि न रमणीयः, विघ्नध्वंसाधिकरणेऽपि समवायसम्बन्धावच्छिन्नविघ्नत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य वर्तमानत्वात्, ध्वंसात्यन्ताभावयोर्विरोधे मानाभावात्; ततश्च समाप्तिं प्रति विघ्नात्यन्ताभावत्वेनैव विघ्नात्यन्ताभावस्य कारणत्वं युक्तिसहम्, नतु विघ्नध्वंसत्वेनाऽपीति, तथा च **प्रतिबन्धकसंसर्गाभावस्ये-**त्यस्य 'येन रूपेण येन सम्बन्धेन च प्रतिबन्धकत्वं तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाऽत्यन्ताऽभावस्य तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकात्यन्ताभवत्वेन रूपेण हेतुत्वमि'त्यर्थः, तथा च समाप्तिं प्रति समवायेन विघ्नत्वेन च अधर्मरूपविघ्नस्य प्रतिबन्धकत्वात् समवायसम्बन्धावच्छिन्नविघ्नत्वावच्छिन्नप्रतियोगिताकाभावस्य तादृशात्यन्ताभावत्वेन रूपेण कार्यजनकत्वं सुवचमिति–ध्येयम्। प्रतिबन्धकसंसर्गाभावस्य (प्रतिबन्धकात्यन्ताभावस्य) समाप्तिकारणत्वेन 'यत्र मंगलं विनाऽपि समाप्तिस्तत्र विघ्नध्वंसाभाववति समाप्तेर्दर्शनात् दर्शितव्यतिरेकव्यभिचारं वारयति–**इत्थंचेति**। समाप्तिं प्रति प्रतिबन्धकात्यन्ताभावत्वेन प्रतिबन्धकात्यन्ताभावस्य कारणत्वे चेत्यर्थः। नास्तिकादीनाम्–नास्तिकानामास्तिकानां च ग्रन्थेषु। जन्मान्तरीयमंगलजन्यदुरितध्वंसः–प्राग्जन्मन्यनुष्ठितं यन्मंगलं तज्जन्यो दुरितानां विघ्नानां ध्वंसः,–ध्वंसाधिकरणेऽत्यन्ताभावस्यापि वर्तमानत्वात् तादृशमंगलप्रयोज्यविघ्नात्यन्ताभावसहितो वर्तत इदानीम्, तथा च अत्यन्ताभावरूपकारणसत्त्वेन समाप्तेर्जायमानत्वान्न व्यतिरेकव्यभिचारदोष इति भावः। नास्तिकादीनां विघ्नध्वंसकल्पने तज्जनकमंगलकल्पने च गौरवादाह–**स्वतःसिद्धेति**। स्वतःसिद्धः=विघ्नसामग्र्यत्यन्ताभावप्रयुक्तः यो विघ्नानामत्यन्ताभावः, तदात्मकस्य समाप्तिकारणस्य वा सत्त्वान्न व्यतिरेकव्यभिचार इति। **'आहु'**रित्यनेन विघ्नध्वंसकामनयैव मंगलाचरणे विवाद–इत्यस्वरसः सूचितः।

अनीश्वरवादिनां मतखण्डनाय नैयायिकमतेनेश्वरसाधकानुमानोपन्यासाय च 'संसारमहीरुहस्य बीजाये'तिपदं व्याख्यातुं प्रतीकमुपादत्ते–**संसारेतीति**। 'संसारे महीरुह' इति सप्तमीतत्पुरुषाश्रयणे संसारवृत्तिवृक्षस्य कारणत्वमीश्वरे लभ्यते, अथवा 'संसारस्य महीरुह'इति षष्ठीतत्पुरुषाश्रयणे संसारसम्बन्धिवृक्षस्य कारणत्वमीश्वरे लभ्यते, तच्चाऽयुक्तम्, अस्मदादिसाधारणत्वात्, अतः सप्तमीतत्पुरुषस्य षष्ठीतत्पुरुषस्य च भ्रान्तिं वारयितुं कर्मधारयमाह–**'संसार एवे'ति**। यथा बीजावयवैरङ्कुरजननाद्बीजावयवा एव वृक्षस्य समवायिकारणम्, तथा 'बीजाये'त्युक्तया ईश्वरावयवा एव जगत्कारणमिति वक्तव्यम्, तच्च नोपपद्यते,–ईश्वरस्य निरवयवद्रव्यत्वात्, अतो 'बीजाये'त्यस्यार्थमाह–**निमित्तकारणायेत्यर्थः**–इति। तथा च बीजत्वमत्र न समवायिकारणत्वम्, किन्तु यथायोगं कारणत्वमेव, ईश्वरे च कार्यमात्रं प्रति निमित्तकारणत्वस्य योग्यतया निरवयवस्याऽपीश्वरस्य जगतो निमित्तकारणत्वसूचनान्नोक्तापत्तिरिति भावः॥ नन्वीश्वरे प्रमाणाऽभावात् तत्र जगत्कारणत्वकल्पनं खपुष्पवदलीकम्, नहि तत्र बाह्यप्रत्यक्षं प्रमाणम्, अरूपिद्रव्यत्वात्, बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे च

**एतेन ईश्वरे प्रमाणमपि दर्शितं भवति, तथाहि—यथा घटादि कार्यं**

उद्भूतरूपस्य कारणत्वात्, ईश्वरे च रूपाऽभावात्। नापि मानसं प्रत्यक्षम्, स्वात्मभिन्नद्रव्यत्वात् ज्ञानादिभिन्नत्वाच्च, परात्मनः परेण मनसाऽग्राह्यत्वात्, स्वमनसा स्वप्रत्यक्षं प्रति परात्मव्यावृत्त-विजातीयमनःसंयोगस्यैव कारणत्वात्। नाऽप्यनुमानं प्रमाणम्, ईश्वरस्याऽप्रत्यक्षतया तस्य केनचिच्छिन्नेन सहचारदर्शनाभावेन व्याप्तिग्रहाऽसंभवात्। न वा उपमानं प्रमाणम्, ईश्वरतुल्यस्य कस्यचिदभावेन सादृश्यज्ञानाऽसंभवात्। नापि शब्दस्तत्र प्रमाणम्, 'द्यावाभूमी जनयन्नि'त्यादि-श्रुतीनामीश्वरोच्चरितत्वेन प्रामाण्याद् ईश्वरस्यैव सन्दिग्धत्वेन तदुक्ततया श्रुतीनां प्रामाण्येऽपि सन्देहात्, तथा च चतुर्विधप्रमाणाऽगोचरत्वाद् ईश्वरस्य वस्तुन एव असत्त्वात् कथं स जगत्कारणताभाग्? इत्यत आह—**एतेनेति**। जगत्कारणत्वप्रतिपादनेनेत्यर्थः। ईश्वरेऽनुमानरूपं प्रमाणं प्रदर्शितं भवति, तच्च नवविधमुदयनाचार्य्येण न्यायकुसुमांजलीपंचमस्तवकेऽभिहितम्—**'कार्याऽऽयोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः। वाक्यात् संख्याविशेषाच्च साध्यो विश्वविद्व्ययः'**। इति। तत्र कार्यत्वहेतुकप्राथमिकानुमानमाह—**तथाहीति**। 'घटादि' 'कार्यं'मिति पदद्वयम्, तत्र 'कार्य' पदं हेतुबोधकम्, तस्य तादात्म्येन व्याप्यतायां विवादात् 'कार्य'मित्यस्य—'कार्यत्वावच्छिन्न'मित्यर्थकत्वात् 'कार्यत्व'रूपहेतुर्लभ्यते, तथा च—यथा घटादिकं कार्यत्वाद्भवति कर्तृजन्यं तथा क्षित्यंकुरादिकमपि कार्यत्वाद्भवति कर्तृजन्य'मित्यर्थलाभात् 'क्षित्यङ्कुरादिकम्—सकर्तृकम्,—कार्यत्वात्,—घटवदि'त्यनुमानं फलितम्। क्षित्यंकुरादिकं—पक्षः, क्षितिः—स्थूला पृथ्वी, अंकुरः—द्व्यणुकम्, आदिना—तद्घटो मेघो वा ग्राह्यः। अत्र क्षितित्वमंकुरत्वं तद्घटत्वमेघत्वादि चेति न पक्षतावच्छेदकम्, किन्तु तत्त्रयसाधारणं स्वरूपसम्बन्धात्मकं कार्यत्वं पक्षतावच्छेदकम्, तदवच्छिन्नः पक्षः—क्षित्यंकुरादिकम्। प्रागभावप्रतियोगित्वात्मकं कार्यत्वं हेतुः। साध्यं सकर्तृकत्वं—कर्तृजन्यत्वम् कर्तृत्वं च—उपादान( समवायिकारण )गोचराऽपरोक्ष( प्रत्यक्ष )ज्ञान—चिकीर्षा( क्षित्यंकुरादिकं मत्कृत्या साध्यतामितीच्छा )कृति( प्रयत्न )मत्त्वरूपम्। घट—इति दृष्टान्तः। यथा घटे उपादानं—( समवायिकारणं )कपालद्वयम्, तद्गोचराऽपरोक्षं तद्विषयकप्रत्यक्षं यत् ज्ञानचिकीर्षाकृत्येतत्त्रयं तद्वान् कुलाल एव, स च कर्ता भवति, तथा क्षित्यंकुरादीनामुपादानकारणं परमाण्वादयः, तद्गोचराऽपरोक्ष—ज्ञान—चिकीर्षा-कृतिमानीश्वर एव भवितुमर्हतीति स सिद्ध इत्याशयः।

**ननु**—पक्षतावच्छेदकं कार्यत्वं स्वरूपसम्बन्धरूपं,प्रतियोगितायाश्च स्वरूपसम्बन्धात्मकत्वात्'प्रागभावप्रतियोगित्वा'त्मक'कार्यत्व'रूपो हेतुरपि स्वरूपसम्बन्धरूपः,तथा च पक्षतावच्छेदकहेत्वोरैक्यापत्तिः, ऐक्ये च सति प्रकृते पदार्थानुमानस्थले शाब्दबोधद्वारा पञ्चावयववाक्यानां यत् परार्थानुमितिप्रयोजकत्वं तन्नोपपद्येत, यतः—'क्षित्यंकुरादिकार्यं—कर्तृजन्यम्, कार्यत्वा'दित्यत्र 'क्षित्यंकुरादिकार्य'—पक्षक'कर्तृजन्यत्व'साध्यक'कार्यत्व'स्य हेतुत्वे उपनयात् पक्षधर्मतामात्रबोधवादिमते 'कार्यत्ववत्कार्य'मित्याकारकशाब्दबोधस्याऽव्युत्पन्नतया पञ्चावयववाक्याधीनशाब्दबोध एव न स्यात्, तथा चोपनयाऽनुत्थानप्रसङ्गः स्यादिति चेत्! न, घटस्य संयोगेन योऽभावस्तस्मात् समवायेन योऽभावस्तस्य भेदः प्रतियोगिताभेदादेव समर्थनीयः, तत्र प्रतियोगिनो घटस्यैक्यात् प्रतियोगितावच्छेदकस्य घटत्वस्य चैक्यात् तद्भेदप्रयुक्तभेदाऽसंभवात्, तत्राऽपि स्वरूपसम्बन्धात्मकप्रतियोगिताया घटस्वरूपत्वे घटस्यैक्यादुक्तयोः प्रतियोगितयोर्भेदो न स्यात्, अतो विषयताया इव प्रतियोगितायाः पदार्थान्तरत्वमङ्गीकरणीयम्, तथा च स्वरूपसम्बन्धविशेषकार्यत्वस्य पक्षतावच्छेदकस्य, प्रागभावप्रतियोगित्वात्मककार्यत्वरूपहेतोश्च विभिन्नपदार्थत्वान्न तयोरैक्यमिति नव्याः। **अथवा**—प्रतियो-

**कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि ।**

गितासम्बन्धेन प्रागभावस्य हेतुकरणेन न पक्षतावच्छेदकहेत्वोरैक्यम्, तथाच--'क्षित्यंकुरादिकं-कर्तृजन्यम्,–प्रतियोगितासंसर्गेण प्रागभाववत्त्वात्, घटवदि'–त्यनुमानं फलितम् । वस्तुतो प्रागभावप्रतियोगित्वरूपकार्यत्वस्य पक्षतावच्छेदकत्वं, सत्तावत्त्वे सति ध्वंसप्रतियोगित्वात्मकस्य च कार्यत्वस्य हेतुत्वमिति न कोऽपि दोषः ॥

**वस्तुतस्तु**–'क्षित्यंकुरादिक'मितिमूलस्य–क्षितित्वस्य अङ्कुरत्वस्य तद्घटत्वस्य मेघत्वादेर्वा पक्षतावच्छेदकत्वेतात्पर्यादनुमानत्रयलाभः–'क्षितिः–सकर्तृका–कार्यत्वात्'। 'अङ्कुरः (द्व्यणुकम्), सकर्तृकः,–कार्यत्वात्, 'तद्घटः(सर्गाद्यकालीनघटोमेघो वा),–सकर्तृकः,–कार्यत्वात्'। इति । अत्र 'क्षितिः–सकर्तृका,–कार्यत्वात्,–घटवदि'ति प्रथमप्रयोगे, क्षितिः–जन्या पृथिवी,–पक्षः। पक्षतावच्छेदकं तु न क्षितित्वं=पृथिवीत्वम्, क्षितित्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे दृष्टान्ते घटादावंशतः सिद्धसाधनापत्तेः, क्षितित्वावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे तु परमाणौ बाधापत्तेः, (पक्षे साध्याभावो बाधः) नवा जन्यक्षितित्वं पक्षतावच्छेदकं, तथा सति चार्वाकमते 'जन्य'पदव्यावृत्त्यसिद्धिः, प्रत्यक्षमात्रवादिनस्तस्य मते जन्येतरक्षितेरभावात्, जन्यत्वमात्रस्य पक्षतावच्छेदकत्वौचित्येन क्षितित्वस्य व्यर्थत्वात् । नवा जन्यत्वमपि पक्षतावच्छेदकम्, साध्यस्यापि जन्यत्वरूपत्वात् उद्देश्यतावच्छेदक–विधेययोरैक्य—प्रसंगात् । नवा कालिक–समवायोभयसम्बन्धेन क्षितित्वमेव पक्षतावच्छेदकं भवितुमर्हति, द्वयोः पक्षतावच्छेदकताघटकसम्बन्धत्वकल्पने गौरवात्,–इत्यस्वरसात्–पक्षान्तरमाह–अङ्कुरेति । यथा बीजादुत्पन्नस्य वृक्षप्रयोजकस्य प्राथमिकदर्शनविषयस्याऽङ्कुरत्वं तथा परमाणुभ्यामुत्पन्नस्य संसारतरुप्रयोजकस्य द्व्यणुकस्याङ्कुरसाम्यात् 'अङ्कुर'शब्देन द्व्यणुकं लक्ष्यते, तथाच–'द्व्यणुकम्,–सकर्तृकम्,–कार्यत्वात्, घटवत्'–इत्यनुमानं फलितम्, अवच्छेदावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् । सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे वा क्वाऽप्यङ्कुरे जीवीयकृतिसाध्यत्वाभावेन नांऽशतः सिद्धसाधनम्, नित्याऽङ्कुरस्याऽभावाच्च न बाधोऽपीति भावः ।

**ननु**–'अङ्कुरः–अकर्तृकः,–शरीराऽजन्यत्वात्,–आकाशवदि'त्यनुमानेन सत्प्रतिपक्षः, साध्याभावव्याप्यवान् पक्षः–सत्प्रतिपक्षः, प्रकृतसाध्यस्य 'सकर्तृकत्व'स्याऽभावोऽकर्तृकत्वं तद्व्याप्यं शरीराजन्यत्वं तद्वान् अङ्कुर इति । अतएव च 'कार्यत्व'हेतुर्व्यभिचारशंकाग्रस्तः, साध्याभाववद्वृत्तिहेतुर्व्यभिचारः, साध्यस्य–सकर्तृकत्वस्याऽभावोऽकर्तृकत्वं तद्वति–अङ्कुरे हेतोः–कार्यत्वस्य वर्तमानत्वादिति चेत् ?, न, तवानुमानस्याऽप्रयोजकत्वात्–व्यभिचारशंकानिवर्तकविचारशून्यत्वात्, तथाहि–तवानुमाने 'शरीराऽजन्यत्वं पक्षेऽङ्कुरे भवतु अकर्तृकत्वं मा भवत्वि'ति व्यभिचारशंकायां प्रयुक्तायां तन्निवर्तकतर्काऽभावात् तवानुमानं दुष्टम्, अस्माकन्तु–'कार्यत्वं यदि सकर्तृकत्वव्यभिचारि स्यात् तदा कृतिजन्यतावच्छेदकं न स्यादि'त्यनुकूलतर्कसत्त्वात् व्यभिचारशंकानिरासात् । **ननु**–अनुकूलतर्के किं मानमितिचेत् ! न, 'सामान्यतः कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एव मानम् । अत्र कार्यं प्रति कर्ता कारणम्, कर्तृत्वं कारणतावच्छेदकम्, कर्तृत्वं च कृतिमत्त्वम्, कृतिमत्त्वं–कृतिरेव, सा च नाना–इतिकारणतावच्छेदकगौरवम्, अतः 'कार्यं प्रति कृतिः कारण'मिति वक्तव्यम्, कृतित्वं च कारणतावच्छेदकम्, तच्चैकमेव नाना कृतिष्विति लाघवम्, तथा च 'कृतित्वेन कार्यत्वेन कार्यकारणभाव' इत्यायातम्, अतः 'कर्तृ'-पदं कृतिपरं बोध्यम् । **ननु**–सामान्यतः कृतित्वेन कार्यत्वेन कार्यकारणभावे किं मानमिति चेत् ? न, 'कुलालकृतिसत्त्वे घटः–कुलालकृत्यभावे घटाभाव'इति विशिष्याऽन्वयव्यतिरेकग्रहेण विशिष्य कुलालत्वेन घटत्वेन कार्यकारणभावग्रहात् 'यद्विशेषयोः कार्य-

कारणभावोऽसति बाधके तत्सामान्ययोरपी'ति न्यायस्य तत्र मानत्वात्, उक्तन्यायश्च लाघवमूलक एव, तथाहि–'कार्याभावस्य कारणाभावप्रयोज्यतानियमेन कार्यं प्रति सामान्यतः कृतित्वेन कारणत्वाऽस्वीकारे 'कार्याऽभावः किं प्रयोज्य ? इति प्रश्ने 'तत्तत्कृत्यभावकूटप्रयोज्य'इत्युत्तरदाने गौरवम्, अतः सामान्यतः कार्यकारणभावोऽङ्गीकरणीयः' तथा च–'कार्यसामान्याभावः किं प्रयोज्य' इति प्रश्ने 'कृतित्वावच्छिन्नाभावप्रयोज्य'इत्युत्तरकरणे लाघवम्, तच्च कृतित्वस्य कारणतावच्छेदकत्वमन्तरेण न संभवति, कारणतावच्छेदकधर्मावच्छिन्नाभावस्यैव कार्यतावच्छेदकधर्मावच्छिन्नाभावप्रयोजकत्वादिति॥ **ननु**–कार्याऽभावः कारणतावच्छेदकधर्मा(कृतित्वा)वच्छिन्नाऽभावप्रयोज्य इतिनियमो नाङ्गीकार्यः, किन्तु–कार्याभावः कृत्यनतिप्रसक्तधर्मावच्छिन्नाभावप्रयोज्य'इति नियमोऽङ्गीकार्यः, तथैव प्रतीत्यनुरोधेन स्वरूपसम्बन्धात्मकप्रयोजकत्वस्य लघ्वनतिप्रसक्तधर्मावच्छेदेन कल्पनात्, तथा च लाघवादेव कारणतानवच्छेदककृतित्वावच्छिन्नप्रतियोगिताकैकाऽभावस्य कार्याभावप्रयोजकत्वस्य 'कृतित्वेन कार्यत्वेन कार्यकारणभाव'मन्तरेणाऽपि सूपपादत्वात् 'कृतित्वेन कार्यत्वेन कार्यकारणभावे प्रमाणाभावात् नोक्तानुकूलतर्कः प्रामाणिक इत्यंकुरपक्षकानुमाने व्यभिचारशंकावारणाभावात् नांकुरकर्तृतयेश्वरासिद्धिरित्यस्वरसादाह–**आदीति**। आदिना–तद्घटो ग्राह्यः, तथा च–'सर्गाद्यकालीनो घटः–सकर्तृकः (कुलालकृतिजन्यः),–घटत्वा'दित्यनुमानं फलितम्, पक्षस्य सर्गाद्यकालीनघटस्य तद्घटत्वं (तद्व्यक्तित्वम्) पक्षतावच्छेदकम्। कुलालकृतिसत्त्वे घटसत्त्वं–कुलालकृत्यभावे च घटाभाव'इत्यन्वयव्यतिरेकग्रहेण विशिष्यैव कुलालकृतित्वेन घटत्वेन कार्यकारणभाव'स्वीकारात्, तत्राऽप्रयोजकत्वशंकाविरहात्, घटकरणसमर्थस्य कुलालत्वात् 'नमः कुलालेभ्यो नमः कर्मारेभ्य'-इति श्रुत्या कुलालत्वेनेश्वरस्येष्टत्वादीश्वरसिद्धिरिति भावः॥

**केचित्तु**–'अङ्कुर'पक्षकानुमाने पक्षतावच्छेदकं यदंकुरत्वं–द्व्यणुकत्वं, तच्च न जातिः, पृथिवीत्वाभाववति जलीयद्व्यणुकेऽङ्कुरत्वस्य सत्त्वात्, अंकुरत्वाभाववति च घटे पृथिवीत्वस्य सत्त्वात् द्वयोः परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोः एकत्र–पृथिवीद्व्यणुके समावेशेन संकरात्, अतो द्व्यणुकत्वं–नित्यसमवेतद्रव्यत्वरूपं वक्तव्यम्, तत्रापि विनिगमनाविरहात् नित्यसमवेतत्वविशिष्टद्रव्यत्वं द्रव्यत्वविशिष्टनित्यसमवेतत्वमिति विशेषणविशेष्यभावव्यत्यासेन पक्षतावच्छेदकगौरवं, तद्घटादेश्च स्थूलक्षित्यनतिरिक्तत्वमित्यस्वरसादाह–**आदीति**। आदिना–मेघपरिग्रहः। तथा च–'मेघः–सकर्तृकः–कार्यत्वा'दित्यनुमानं लब्धम्, मेघत्वजातेः समवायेन पक्षतावच्छेदकत्वान्नोक्तदोषः, मेघस्य कर्ता ईश्वरः सिद्ध्यतीति **संगमयन्ति**॥

अथ 'साध्यम्–सकर्तृकत्वम्,–तच्च–उपादानगोचराऽपरोक्षज्ञान–चिकीर्षा–कृतिमज्जन्यत्वरूपम्। उपादानज्ञानचिकीर्षाकृतीनामिव उपादानज्ञानचिकीर्षाकृतिमतोऽप्यन्वयव्यतिरेकाभ्यां हेतुत्वमित्यभिमानेनेदम्। तत्र उपादानगोचराऽपरोक्षज्ञानम्, उपादानगोचरचिकीर्षा, उपादानगोचरकृतिः, तद्वज्जन्यत्वम्, उपादानं–समवायिकारणम्, तद्गोचरं–तद्विषयकम्, अपरोक्षं–प्रत्यक्षं ज्ञानं,–'परमाणुः–द्व्यणुकसमवायिकारण'मित्याकारकं तद्वानीश्वरस्तज्जन्यत्वम्, एवं समवायिकारणविषयिणी चिकीर्षा–'मत्कृत्या परमाणुभ्यां द्व्यणुकं साध्यता'मितीच्छा, तद्वानीश्वरस्तज्जन्यत्वम्, एवं–समवायिकारणविषयिणी कृतिः प्रयत्नः तद्वानीश्वरस्तज्जन्यत्वमित्यर्थः। स्व(कर्तृ)निष्ठ–ज्ञानचिकीर्षा–कृतिविशेष्यतासम्बन्धेन यत्रपरमाणौ कर्ता तिष्ठति तत्र समवायेन द्व्यणुकं कार्यं वर्तते, तथा च 'समवायसम्बन्धेन द्व्यणुकं प्रति स्व(कर्तृ)निष्ठज्ञानचिकीर्षाकृतिविशेष्यतासम्बन्धेन कर्तुः कारणत्व'मिति कार्यकारणभावो बोध्यः॥ ननु–स्वोपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वस्य साध्य-

स्वेऽनन्तज्ञानचिकीर्षाकृतीनां जनकतावच्छेदकत्वे गौरवम्। स्वोपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृतिजन्यत्वस्य साध्यत्वे 'कार्यमात्रं' प्रति कृतेरेवाऽन्वयव्यतिरेकाभ्यां ( कृतिसत्त्वे कार्यसत्त्वं कृत्यभावे कार्याऽभाव'इत्याकारकाभ्यां )हेतुत्वसिद्धौ तज्जनकज्ञानचिकीर्षयोस्तत्राऽन्यथासिद्धत्वेन तत्त्रितयजन्यत्वरूपसाध्यस्य कार्यरूपपक्षे बाधः। यदि च 'अन्वयव्यतिरेकाभ्यां ज्ञानचिकीर्षयोरपि हेतुतासिद्धौ व्यापारीभूय कृतेः कार्यमात्रं प्रति कारणत्वम्, व्यापारेण च व्यापारिणोर्ज्ञानचिकीर्षयोर्नान्यथासिद्धत्वम्, तथा च न बाध इत्युच्यते ! तदापि दृष्टान्तपक्षसाधारणस्य स्वत्वस्यैकस्याऽभावेन स्वत्वघटित'स्वोपादानगोचरे'त्यादिसाध्यस्याऽननुगमः। उपादानगोचराऽपरोक्षज्ञानत्वादेर्गुरुधर्मत्वेन जनकतानवच्छेदकत्वाच्चेति चेत् ! न, समवायेन द्व्यणुकस्य परमाणौ सत्त्वात्, दैशिकविशेषणतासम्बन्धेन च द्व्यणुकध्वंसस्य परमाणौ कालान्तरे सत्त्वात्, तत्र च परमाणौ ज्ञानस्य विषयतासम्बन्धेन सत्त्वात्,-'समवाय-दैशिकविशेषणतान्यतरसम्बन्धेन कार्यं प्रति विशेष्यताख्यविषयतासम्बन्धेन ज्ञानत्वाद्यवच्छिन्नत्वस्य कारणत्व'मिति कार्यकारणभावबलात्-'विषयत्वसम्बन्धावच्छिन्नज्ञानत्वाद्य( चिकीर्षात्वकृतित्वा )वच्छिन्नजनकतानिरूपित-समवाय-दैशिकविशेषणतान्यतरसम्बन्धावच्छिन्नजन्यत्व'रूपं सकर्तृकत्वं साध्यं बोध्यम्। यदि चाऽन्यतरत्वेन संसर्गताया मानाभावात् तादृशकार्यकारणभावस्याऽप्रामाणिकत्वेन तथाविधसाध्यं न प्रसिध्यतीत्युच्यते, तदा कालनिष्ठप्रत्यासत्त्यैव कार्यमात्रं प्रति ज्ञानस्य चिकीर्षायाः कृतेश्च कारणत्वस्योपगन्तव्यतया 'कालिकसम्बन्धेन कार्यं प्रति विषयतासम्बन्धेन ज्ञानत्वाद्यवच्छिन्नस्य कारणत्व'मिति कार्यकारणभावाऽवगमात्- 'विषयत्वसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नजनकतानिरूपितकालिकसम्बन्धावच्छिन्नजन्यत्वम्, विषयत्वसम्बन्धावच्छिन्नचिकीर्षात्वावच्छिन्नजनकतानिरूपितकालिकसम्बन्धावच्छिन्नजन्यत्वम्, विषयत्वसम्बन्धावच्छिन्नकृतित्वावच्छिन्नजनकतानिरूपितकालिकसम्बन्धावच्छिन्नजन्यत्वम्' इति प्रत्येकं साध्यं फलितम्।

अथ 'कार्यत्वादिति-हेतुः। ननु-कार्यत्वं न स्वरूपसम्बन्धरूपं, पक्षवृत्तिकार्यत्वस्य हेतोः पक्षात्मकतयाऽनुगमकरूपाऽभावेन सपक्षाऽवर्तमानत्वेन असाधारणव्यभिचारापत्तेः (सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिर्हेतुरसाधारणः'इति तल्लक्षणात्)। अत एव प्रतियोगितायाः स्वरूपसम्बन्धात्मकत्वेन 'प्रागभावप्रतियोगित्व'रूपमपि कार्यत्वं न हेतुः, तथैवाऽसाधारण्यापत्तेरिति चेत् ? न, 'संयोगेन घटाभावात् समवायेन घटाभावस्य भेदः प्रतियोगिताभेदात्समर्थनीयः प्रतियोगि-प्रतियोगितावच्छेदकयोः प्रत्येकमेकव्यक्तित्वेन तादृशभेदाऽप्रयोजकत्वात्, स्वरूपसम्बन्धात्मकप्रतियोगितायाः प्रतियोगिघटव्यक्तेरैक्येन भेदो दुरुपपाद एवेति तयोर्भेदो न स्यादतो विषयत्वस्येव प्रतियोगित्वस्यापि पदार्थान्तरत्वमङ्गीकरणीयमिति न कोपि दोषः। प्रतियोगितासम्बन्धेन प्रागभावस्य वा हेतुत्वान्न दोष इति तु पूर्वमुक्तमेव॥ जन्यत्वस्यैव पक्षतावच्छेदकत्वात् जन्य( कार्य )मात्रं पक्षः, तथा च-'कार्यम्-विषयत्वसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नजनकतानिरूपितकालिकसम्बन्धावच्छिन्नजन्यतावत्,-प्रागभावप्रतियोगित्वात्'। 'कार्यम्-विषयत्वसम्बन्धावच्छिन्नचिकीर्षात्वावच्छिन्नजनकतानिरूपितकालिकसम्बन्धावच्छिन्नजन्यतावत्, प्रागभावप्रतियोगित्वात्। कार्यम्-विषयत्वसम्बन्धावच्छिन्नकृतित्वावच्छिन्नजनकतानिरूपितकालिकसम्बन्धावच्छिन्नजन्यतावत्-प्रागभावप्रतियोगित्वात्'-( प्रतियोगितासम्बन्धेन प्रागभाववत्त्वाद्वा )इत्यनुमानत्रयं फलितम्॥ अन्ये तु-'स्व(कार्य)वृत्तिमहाकालान्यत्व-कालिकविशेषणत्वोभयसम्बन्धेन सत्तावत्त्वरूपमेवाऽत्र कार्यत्वं सर्वानुगतं हेतुः। महाकालव्यावर्तनाय स्ववृत्तिमहाकालान्यत्वस्य सम्बन्धकोटौ निवेशः, स्ववृत्तित्वं

तद्वत्त्वं च दैशिकविशेषणतया बोध्यम्, परमाण्वादिवारणाय कालिकविशेषणतासम्बन्धनिवेशः। सत्तायाः सत्तात्वेन हेतुत्वम्, निरुक्तोभयसम्बन्धो हेतुतावच्छेदकः। तथा च–'कार्यम्–विषयत्वसम्बन्धावच्छिन्नज्ञानादिनिष्ठजनकतानिरूपितकालिकसम्बन्धावच्छिन्नजन्यतावत्, –स्ववृत्ति-महाकालान्यत्व—कालिकविशेषणत्वोभयसम्बन्धावच्छिन्नसत्तावत्त्वादि'ति फलितमनुमानमिति वदन्ति ॥

अत्र यथा–'वह्निव्याप्यधूमवानि'तिपरामर्शात् 'वह्नेर्महानसीयत्वे लाघव'मिति लाघवज्ञानसहकृताद्धि 'पर्वतो महानसीयवह्निमानि'त्यनुमितिः, तथा 'ज्ञानस्यैकत्वे नित्यत्वे च लाघवमि'ति 'चिकीर्षाया एकत्वे नित्यत्वे च लाघवमि'ति 'कृतेरेकत्वे नित्यत्वे च लाघवमि'ति लाघवज्ञानसहकृतात् 'ज्ञानादि(चिकीर्षाकृति)जन्यत्वव्याप्यकार्यत्ववानि'ति परामर्शात् 'कार्यम्–नित्यैकज्ञानादि-(चिकीर्षाकृति)जन्यमि'त्यनुमितिस्तत्र नित्यैकत्वसिद्धिरिति। **अथेश्वरज्ञानादौ** कीदृशमेकत्वमनुमित्या विषयीक्रियते ? न तावत्संख्यात्मकम्, गुणे गुणानङ्गीकारात्, न वा 'नित्यज्ञानवन्निष्ठभेदप्रतियोगितानवच्छेदकत्वरूपमेकत्वं तद्विषयः, ईदृशैकत्वस्य नित्यज्ञानानुमितेः पूर्वम् अनुपस्थितत्वेन तादृशानुमितौ तद्भानाऽसंभवात्। नापि द्वित्वाऽसमानाधिकरणत्वरूपमेकत्वं, सामानाधिकरण्य-[स्वा(एकत्वा)धिकरण(परमेश्वर)वृत्तित्व]सम्बन्धेन ज्ञानादावाश्रयगतमेकत्वं वाऽनुमितिविषयः, ईश्वरे ज्ञानद्वयाङ्गीकारेऽपि प्रत्येकमेतादृशैकत्वभानसंभवेन 'ईश्वरे सर्वविषयकमेकमेव ज्ञानमि'त्यभिमतार्थाऽसिद्धेः। **किन्तु**–स्वभिन्नज्ञानत्वव्यापकस्वाधिकरणाऽवृत्तित्वकत्वमेव ज्ञानगतमेकत्वम्, स्वभिन्नेच्छात्वव्यापकस्वाधिकरणाऽवृत्तित्वकत्वमेवेच्छागतमेकत्वम्, स्वभिन्नकृतित्वव्यापकस्वाधिकरणाऽवृत्तित्वकत्वमेव कृतिगतैकत्वं, निराबाधम्। अत्र एकव्यक्तिमात्रवृत्तिधर्मः(तद्व्यक्तित्वात्मकः–ज्ञानव्यक्तित्वेच्छाव्यक्तित्व, कृतिव्यक्तित्वरूपः)स्वत्वम्, नित्यज्ञानव्यक्तिः नित्येच्छाव्यक्तिः नित्यकृतिव्यक्तिश्च स्वपदार्थः, स्वभिन्नानि यानि ज्ञानानि अस्मदादीनां ज्ञानानि, तत्र वर्तते यत् ज्ञानत्वं, तस्य व्यापकं 'स्वाधिकरणाऽवृत्तित्वं' भवति,–स्वं नित्यज्ञानव्यक्तिः, तदधिकरणमीश्वरः तत्र वृत्तिर्नित्यज्ञानव्यक्तिः, अवृत्तीनि तु अस्मदादिज्ञानानि, तत्र अवृत्तित्वस्य सत्त्वात्; तथा च स्वभिन्नज्ञानत्वव्यापकं स्वाधिकरणाऽवृत्तित्वं यस्या नित्यज्ञानव्यक्तेः–तत्–स्वभिन्नज्ञानत्वव्यापकस्वाधिकरणावृत्तित्वकम्, तस्य धर्मः–तादृशवृत्तित्वकत्वम्, तदेव–एकत्वम्, एवं–चिकीर्षायां कृतौ च तदनुसन्धेयम्। 'एकमात्रवृत्तिधर्म एव स्वत्वमि'त्यत्र–एकमात्रवृत्तित्वं च–'स्वप्रतियोगिवृत्तित्व–स्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टान्यत्वम्'–भवति हि तादृशोभयसम्बन्धेन भेदविशिष्टो व्यक्तिद्वयवृत्तिधर्मः–घटत्वादिः, यथा घटत्वं नीलघटे वर्तते नीलघटभेदवति पीतघटेऽपि वर्तते, स्वं–नीलघटभेदः, तत्प्रतियोगी नीलघटस्तद्वृत्तित्वं घटत्वे, एवं स्वं–नीलघटभेदः, तत्सामानाधिकरण्यं (तदधिकरणं यो पीतघटस्तद्वृत्तित्वं) घटत्वे वर्तते, इत्येवमुभयसम्बन्धेन भेदविशिष्टो घटत्वादिस्तदन्यत्वं तद्व्यक्तित्वे(नित्यज्ञानव्यक्तित्वे)इति। एतादृशस्वत्वघटित(तज्ज्ञानगत)तद्व्यक्तित्वस्य सामान्यलक्षणया नित्यज्ञानानुमितेः पूर्वमपि सुग्रहत्वात् विशिष्टज्ञानात्मिकाया अनुमितेर्निराबाधात्॥ **अथवा**–स्वा(अस्मदादिज्ञाना)धिकरणवृत्ति–स्वभिन्नज्ञानकं यत् यत् स्वं (अस्मदादिज्ञानम्) तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वम् एकत्वमीश्वरज्ञानगतं तादृशानुमितौ विषयीक्रियते इति। एवं च तादृशज्ञानादिसिद्धौ 'तादृशक्षित्यंकुरादिजनकज्ञानचिकीर्षाकृतयः–द्रव्याश्रिताः,–गुणत्वात्,–रूपवदि'त्यनेन द्रव्याश्रितत्वे साधनीये 'ज्ञानादिकं–न पृथिव्यादिवृत्ति, चेतनगुणत्वात्, धर्मवत्' 'ज्ञानादिकं–न जीवात्मवृत्ति,–नित्यज्ञानादित्वात्–सर्वविषयकत्वाद्वे'त्यादिरीत्या द्रव्यान्त-

रस्य बाधात्–'नित्यज्ञानादिकं–जीवात्मसहितपृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितम् ;–जीवात्मसहितपृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात्' इत्यनुमानेन तदाश्रयतया ईश्वरसिद्धिरिति–तदभिप्रायः ॥ कार्यानुमानं चोपलक्षणम् २–आयोजनं–आयुज्यते संयुज्यतेऽनेनेति व्युत्पत्त्या आयोजनं कर्म, तथा च 'सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म,–चेतनप्रयत्नप्रयोज्यम् ,–कार्यारम्भकसंयोगजनककर्मत्वात् ,–अस्मदादिशरीरक्रियावत्' । ३–धृतिः–गुरुत्ववतां पतनाभावः, तथा च–'गुरुत्ववतां पतनाभावः,–पतनप्रतिबन्धकप्रयत्नप्रयोज्यः,–धृतित्वात्' । अथवा–'ब्रह्माण्डादिः, पतनप्रतिबन्धकीभूतप्रयत्नवत्संयुक्तम् ,—गुरुत्ववन्निष्ठपतनाभाववत्त्वात्, वियति विहङ्गमधृतकाष्ठवत्' । ४–धृत्यादेरित्यादिपदात्–नाशपरिग्रहः, तथा च–'ब्रह्माण्डनाशः,–प्रयत्नजन्यः,–नाशत्वात्' । अथवा–'ब्रह्माण्डादि, प्रयत्नवत्प्रयोज्यनाशप्रतियोगि,–विनाशित्वात्,–पाट्यमानपटवत्' । ५–पदात्–पद्यते ज्ञायतेऽनेनेति व्युत्पत्त्या पदं–व्यवहारः, तथा च 'पटादिसम्प्रदायव्यवहारः,–स्वतन्त्रपुरुषप्रयोज्यः,–व्यवहारत्वात् ,–आधुनिकलिप्यादिव्यवहारवत्' । अत्र सम्प्रदायः–निर्माणपरम्परा, व्यवहारः–उपदेशादिकम् , स्वतन्त्रत्वम्–अन्यव्यवहाराऽनधीनव्यवहारकर्तृत्वम् । ६–प्रत्ययतः–प्रामाण्यात्–प्रमात्वात्, तथा च–'सर्गाद्यकालीनवेदजन्यज्ञानम् ,–(कारणगुणजन्यम्) प्रमात्वघटितधर्मावच्छिन्नकार्यताप्रतियोगिकारणजन्यम् ,–प्रमात्वात् ,–प्रत्यक्षादिप्रमावत्' । अत्र प्रत्यक्षप्रमायां विशेषणवद्विशेष्यसन्निकर्षरूपगुणस्य, अनुमित्यात्मकप्रमायां 'साध्यवत्पक्षविशेष्यकसाध्यव्याप्यवैशिष्ट्यज्ञान'रूपगुणस्य, उपमित्यात्मकप्रमायां 'शवयनिष्ठसादृश्यज्ञान'रूपगुणस्य, शाब्दप्रमायां 'वक्तृयथार्थज्ञान'रूपगुणस्य,–हेतुतया कारणगुणत्वाऽननुगमेऽपि तेषां प्रमात्वघटितधर्मावच्छिन्नकार्यताप्रतियोगित्वेनानुगमान्न क्षतिः । ७ श्रुतेः–वेदात्, तथा च–'वेदः,–(पौरुषेयः) सजातीयोच्चारणाऽनपेक्षभ्रमादिशून्यपुरुषोच्चारणजन्यः,–वेदत्वात् ,–आयुर्वेदवत् , । वेदत्वं च–अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वम् , मन्त्रादिवारणाय सत्यन्तम् । ८–किञ्च–'वेदः,–पौरुषेयः,–वाक्यत्वात् ,–भारतवत्' । 'वेदवाक्यानि,–पौरुषेयाणि,–वाक्यत्वात् ,–अस्मदादिवाक्यवत्' । ९–संख्याविशेषात् ,–संख्याविशेषः–परमाणुगतद्वित्वम्, तथा च–'द्व्यणुकपरिमाणं,–संख्या( परमाणुगतद्वित्व)जन्यम् ,–परिमाणप्रचयाऽजन्यत्वे सति जन्यपरिमाणत्वात्, तुल्यपरिमाणककपालद्वयारब्धघटपरिमाणात् प्रकृष्टतादृशकपालत्रयारब्धघटपरिमाणवत्' । अत्र हेतौ परिमाणजन्यपरिमाणे प्रचयजन्यपरिमाणे च व्यभिचारवारणाय–सत्यन्तम्, नित्यपरमाणुपरिमाणे व्यभिचारवारणाय–जन्यत्वम्, घटादौ व्यभिचारवारणाय–परिमाणत्वमिति । दृष्टान्ते तुल्यत्वम्–अविलक्षणत्वम् , अयं भावः यत्र तुल्यपरिमाणानां पञ्चानां कपालानां द्वाभ्यामेको घटस्त्रिभिश्चाऽपरो घटो जातस्तत्र कपालद्वयारब्धघटपरिमाणात् कपालत्रयारब्धघटपरिमाणस्य वैलक्षण्यं प्रत्यक्षसिद्धम् , उभयत्र कपालपरिमाणस्य हेतुत्वे तादृशवैलक्षण्यं न निर्वहति परिमाणस्याऽविशेषात् , इति कार्यवैलक्षण्यप्रयोजककारणवैलक्षण्यनिर्वाहाय तादृशविलक्षणपरिमाणे त्रित्वसंख्याया एव हेतुत्वं न तु परिमाणस्येति बोध्यम् । 'अणुपरिमाणं च,–न परिमाणजनकम्, नित्यपरिमाणत्वात्,–अणुपरिमाणत्वाद्वा' । अत्र–परिमाणस्य स्वसजातीयोत्कृष्टपरिमाणजनकत्वनियमात् 'परमाणुपरिमाणसजातीयं द्व्यणुकपरिमाणं यदि परमाणुपरिमाणजन्यं स्यात् तदा परमाणुपरिमाणादुत्कृष्टं स्या'दिति (द्व्यणुकपरिमाणं यदि परिमाणजन्यं स्यात् तदा स्वोत्कृष्टत्व–साजात्योभयसम्बन्धेन परिमाणवत् स्यात्)इतितर्कस्य प्रयोजकत्वात् । एवं च–'द्व्यणुकपरिमाणजनिका परमाणुगतद्वित्वसंख्या,–अपेक्षाबुद्धिजन्या,–एकत्वाऽन्यसंख्यात्वात्' इत्येवमनुमानानि साक्षात्परंपरया चेश्वरसाधकानि बोध्यानीति ॥

**न च तत्कर्तृत्वमस्मदादीनां संभवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः। न च शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम्। अप्रयोजकत्वात्। मम तु**

अस्मदादीनां क्षित्यंकुरादिकर्तृत्वं निषेधति–न चेति। अस्मदादीनां–वयं मनुष्याः, आदिना देवाः, तेषाम्–परमेश्वरभिन्नात्मनामित्यर्थः। तत्कर्तृत्वम्–क्षित्यंकुरादिकर्तृत्वम्,–क्षित्यंकुराद्युपादानविषयकप्रत्यक्षज्ञानचिकीर्षाकृतिमत्त्वमित्यर्थः, न संभवति। इत्यतः–इत्यस्मात्–अस्मदादीनां क्षित्यंकुरादिकर्तृत्वबाधात्मकात् हेतोः। तत्कर्तृत्वेन–क्षित्यंकुरादिकर्तृत्वेन,–क्षित्यंकुराद्युपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृत्याश्रयत्वेनेत्यर्थः। ईश्वरस्य–परमात्मनः। सिद्धिः–परिशेषानुमितिः। 'नित्यज्ञानादिकम्,–जीवात्मपृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितम्,–जीवात्मपृथिव्याद्यष्टद्रव्याऽनाश्रितत्वे सति द्रव्याश्रितत्वात्'इत्यनुमितिः, भवतीति शब्दार्थः। इत्येवमायोजनत्वादिहेतुकस्थलेऽप्यन्या अनुमितय ऊह्याः। तथा च–ईश्वरः प्रमात्मकपरिशेषानुमितिविषयो भवतीति भावः।

नास्तिकः–'क्षित्यंकुरादिकं,–सकर्तृकं,–कार्यत्वात्,–घटवदि'त्यनुमाने सत्प्रतिपक्षहेत्वाभासं शंकते **न च शरीराऽजन्यत्वेनेति**। कर्त्रजन्यत्वसाधकेन–कर्त्रजन्यत्वरूपसाध्यस्य सिद्धिजनकतयाऽभिमतेन शरीराऽजन्यत्वेन हेतुना सत्प्रतिपक्षदोषः प्रयुक्तो भवति प्रकृते 'कार्यत्वा'दिति हेतावित्यर्थः। सत्प्रतिपक्षः–साध्याभावव्याप्यवान् पक्षः। 'विरुद्धकोटिद्वयसाधकपरामर्शकालीनहेतुः सत्प्रतिपक्षितः। 'क्षित्यंकुरादिकं–सकर्तृकम्,–कार्यत्वात्, घटवदि'ति प्रकृतानुमानम्। 'क्षित्यंकुरादिकम्–अकर्तृकम्,–शरीराऽजन्यत्वात्, आकाशवदि'ति नास्तिकानुमानम्। तत्र प्रकृतसाध्यं 'सकर्तृकत्वम्', साध्याऽभावः–अकर्तृकत्वम्, साध्याभावव्याप्यत्वेनाभिमतो हेतुः–शरीराजन्यत्वरूपः, तद्वान् पक्षः क्षित्यंकुरादिकम्। एवम्–नास्तिकस्य साध्यम्–अकर्तृकत्वम्, साध्याभावः अकर्तृकत्वाभावः–सकर्तृकत्वम्, साध्याभावव्याप्यो हेतुः कार्यत्वरूपः, तद्वान् पक्षः क्षित्यंकुरादिकम्। अत्र 'साध्याभावव्याप्यवान् पक्ष'–इति दोषज्ञानेन परस्परानुमितिप्रतिबन्धः फलम्। स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकत्वसम्बन्धेन तादृशदोषवत्त्वेन हेतोर्दुष्टत्वम्, तथाहि–'स्वं–सत्प्रतिपक्षो दोषः,–'साध्याभावव्याप्यवान् पक्ष'इत्याकारकस्तद्विषयकं ज्ञानमपि 'साध्याभावव्याप्यावान् पक्ष' इत्याकारकं तद्विषयप्रकृतहेतुतावच्छेदकत्वम् अकर्तृकत्वव्याप्ये शरीराजन्यत्वे सकर्तृकत्वव्याप्ये कार्यत्वे चेतिरीत्या हेतोर्दुष्टत्वम्, तत्र व्यभिचारशंकानिवर्तकतर्कशून्यत्वात् शरीराजन्यत्वहेतुर्वास्तविकदुष्टः, कार्यत्वहेतुस्तु तर्कबलेन सद्धेतुत्वान्न दुष्टः, किन्तु यावत्सत्प्रतिपक्षभ्रमस्तावत् अनुमितिप्रतिबन्ध इति। तथा च सत्प्रतिपक्षबलादनुमितेरैवाऽनुत्पत्त्या कार्यत्वहेतुकानुमानं नेश्वरसाधकमिति भावः॥ उत्तरयति–**अप्रयोजकत्वादिति**। व्यभिचारशंकानिवर्तकतर्कशून्यत्वादित्यर्थः, तथाहि–'क्षित्यंकुरादिकं,–अकर्तृकम्, शरीराऽजन्यत्वा'दिति नास्तिकानुमाने 'शरीराऽजन्यत्वमस्तु अकर्तृकत्वं मास्तु' इति व्यभिचारशंकायां तादृशशंकानिवर्तकः कश्चित्तर्को न संभवति, शरीराजन्यत्वकर्त्रजन्यत्वयोरत्यन्ताभावरूपत्वेन नित्ययोस्तयोर्व्याप्तिग्राहक–कार्यकारणभावस्याऽसंभवात्। तथा च 'शरीराजन्यत्वम् अकर्तृकत्वव्यभिचारी'ति व्यभिचारशंकासत्त्वे 'शरीराऽजन्यत्वस्य'हेतोः निर्बलत्वात्, 'कार्यत्व'हेतोरनुकूलतर्कबलेन सबलत्वात् 'क्षित्यंकुरादिकं सकर्तृकमि'त्यनुमितेर्निराबाधादिति भावः॥ केचित्तु–शरीराऽजन्यत्वहेतोः शरीररूपविशेषणस्याऽसिद्धिवारकस्यापि व्यभिचाराऽवारकत्वेन व्यर्थतया, तद्विशेषणाऽवच्छेदेन व्याप्तिग्रहाऽसंभवेन व्याप्यत्वाऽसिद्धिश्चेत्यपि द्रष्टव्यमित्यपि वदन्ति॥ कार्यत्वहेतावनुकूलतर्कं दर्शयति–**मम त्विति**। मम–नैयायिकस्य तु॥ **कर्तृत्वेनेति**। 'क्षित्यंकुरादिकं,–सकर्तृकम्, कार्यत्वादि'त्यत्र 'कार्यत्वं सकर्तृकत्वव्यभिचारि न वे'ति व्यभिचार-

शंकायां 'कार्यत्वावच्छिन्नं प्रति कृतित्वावच्छिन्नं कारणम्' इति कार्यकारणभावात् 'कार्यत्वं यदि सकर्तृकत्वव्यभिचारि स्यात् तदा कृतित्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकं न स्यात्'—यतः कृतित्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकं भवति अतो न व्यभिचारी'ति तर्कावतारात्। अत्रेयं प्रक्रियाऽनुसन्धेया—'कार्यम्—अनुमितिः, तदुपयोगि—व्याप्तिज्ञानम्। तद्विरोधिनी—व्यभिचार-शंका। शंकाविघटकः तर्कः। तर्कजनकः—कार्यकारणभावनिश्चयः। तन्निश्चयं प्रति प्रत्यक्षतोऽन्वय-व्यतिरेकनिश्चयौ प्रयोजकाविति। यथा—'पर्वतो,—वह्निमान्, धूमादि तिरथले 'पर्वतो वह्निमानि'-त्यनुमितिः। तत्र 'यत्र यत्र धूमस्तत्र तत्र वह्नि'रिति व्याप्तिज्ञानं कारणम्, तादृशव्याप्तिज्ञानस्य विघ-टिका यदि—'हेतुरस्तु साध्यं माऽस्तिव'ति (धूमो वह्निव्यभिचारी न वेति) शंका भवेत् तदा तन्ना-शाय 'धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्या' दित्यनुकूलतर्कः कर्तव्यः। तर्के प्रथम-दलम् आपादकं, द्वितीयं दलम् आपाद्यम्, आपाद्याभावेन आपादकाभावस्य सिद्धिर्भवति तदेव तर्कस्य फलम्, वह्निजन्यत्वाऽभावाऽभावेन-(वह्निजन्यत्वेन) वह्निव्यभिचारित्वाऽभावस्य (वह्नि-व्याप्तिनिश्चयस्य) सिद्धिर्भवति। अतो वह्निव्याप्तिज्ञाने तादृशशंकाविघटनद्वारा तर्क उपयोगीति। तर्के च 'धूमं प्रति वह्निः कारण'मिति—वह्निजन्यत्वनिश्चयः कारणम्। निश्चये च 'वह्निसत्त्वे धूम-सत्त्वं—वह्न्यभावे धूमाभाव'इत्यन्वयव्यतिरेकसहचारज्ञानं कारणम्। तथा चान्वयसहचारग्रहं विना कार्यकारणभावनिश्चयो न भवति, निश्चयं विना तर्को नोत्पद्येत, तर्कं विना शंका न नश्यति, शंकोच्छेदं विना व्याप्तिज्ञानं न सुस्थिरम्, तथा सत्यनुमितिर्न स्यात्, अतोऽन्वयव्यतिरेकाभ्यां कार्यकारणभावनिश्चयः कर्तव्य इति हृदयम्। तथा प्रकृते 'क्षित्यंकुरादिकं—सकर्तृकम्,—कार्यत्वात्,—घटवदित्यनुमानम्। 'क्षित्यंकुरादिकं- सकर्तृकमि'त्यनुमितिः। तत्र 'यत्र कार्यत्वं तत्र सकर्तृकत्व-मि'त्यन्वयव्याप्तिज्ञानं कारणम्। व्याप्तिः—साध्याभाववदवृत्तित्व'रूपा, साध्याभावः—सकर्तृकत्वाभावः अकर्तृकत्वरूपः, तद्वान् परमाणुः, तदवृत्तित्वं कार्यत्वस्येति। तादृशव्याप्तिनिश्चयविघटिका 'सकर्तृ-कत्वं माऽस्तु' 'कार्यत्वं चाऽस्तु' 'कार्यत्वं सकर्तृकत्वव्यभिचारि न वे'ति शंका भवेत्, तदा तन्ना-शाय 'कार्यत्वं यदि सकर्तृकत्वव्यभिचारि स्यात् तदा कृतित्वावच्छिन्नकारणतानिरूपितकार्यतावच्छे-दकं न स्यादि'ति तर्कः कर्तव्यः। तर्के आपाद्याभावेन आपादकाभावस्य सिद्धिः फलम् यथा 'कृति-त्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वाभावाभावेन कृतिजन्यतावच्छेदकत्वात्मकेन (आपा-द्याभावेन) सकर्तृकत्वव्यभिचारित्वाभावस्य (आपादकाभावस्य) सिद्धिर्भवति, अतः सकर्तृकत्व-व्याप्तिज्ञाने तादृशशंकाविघटनद्वारा तर्क उपयोगी, तर्के च 'कार्यत्वावच्छिन्नं प्रति कृतित्वावच्छिन्नं कारण'मिति कार्यकारणभावनिश्चयः कारणम्, निश्चये च प्रत्यक्षतः—'कुलालकृतिसत्त्वे घटकार्यं कुलालकृत्यभावे च घटात्मककार्याऽभाव'इत्यन्वयव्यतिरेकसहचारज्ञानं कारणम्। तादृशसहचारज्ञा-नात् कार्यकारणभावनिश्चयः, निश्चयात्तर्कः, तर्कात् शंकानाशः, शंकानाशाद् व्याप्तिनिश्चयः, निश्च-याच्च 'क्षित्यंकुरादिकं—सकर्तृकमि'त्यनुमितिर्भवति॥ यद्यपि—'कुलालकृतिसत्त्वे घटसत्त्वम्, कुला-लकृत्यभावे घटाभाव'इत्यन्वयव्यतिरेकाभ्यां घटत्वावच्छिन्नं प्रति कुलालकृतित्वेन कारणता सिद्धा न तु कार्यत्वावच्छिन्नं प्रति कृतित्वेनापि कारणता, तथापि 'यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपी'ति न्यायेन बाधज्ञानाऽभावे सति विशेषरूपेणाऽन्वयव्यतिरेकबलादेव सा-मान्यरूपेणापि कारणत्वाङ्गीकारे बाधकाऽभावात्। तादृशन्यायश्च लाघवमूलकः, तथाहि—कार्यत्वा-वच्छिन्नाऽभावे तत्तत्कृतित्वावच्छिन्नाभावकूटस्य प्रयोजकत्वाऽपेक्षया कृतित्वेन कारणत्वांगीकारे कार्यत्वावच्छिन्नाभावे कृतित्वावच्छिन्नाभावस्यैकस्य प्रयोजकत्वाङ्गीकारेण लाघवात्। अन्ये तु

कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एव अनुकूलस्तर्कः। "द्यावाभूमी जनयन्देव एको विश्वस्य कर्ता भुवनस्य गोप्ता" इत्यादय आगमा अप्यनुसन्धेयाः॥

**द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम्।**
**समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः॥ २॥**

सामान्यतः कार्यत्वेन कृतित्वेन कार्यकारणभावाऽभावेऽपि विशेषतः घटत्वावच्छिन्नं प्रति कुलालकृतित्वेन कारणताया क्लृप्ततया सर्गाद्यकालीनघटव्यक्तिं खण्डघटव्यक्तिं वा पक्षीकृत्य घटत्वहेतुना सकर्तृकत्वसाधने सर्गाद्यसमये कुलालाद्यभावात् तत्कुलालस्य च खण्डघटानुकूलप्रयत्नाभावात् तदाश्रयत्वेनेश्वरसिद्धिरिति **वदन्ति। दीधितिकारास्तु** समान्यतः कार्यत्वावच्छिन्नं प्रति कृतेः कारणत्वविरहेऽपि घटत्वावच्छिन्नं प्रति कृतेः कारणतया खण्डघटोत्पत्तेः प्राक् कृतेरावश्यकत्वेन कृत्याश्रयतयेश्वरसिद्धिरित्याहुः। **आचार्यमतानुयायिनस्तु** घटादि-कुलालादिचेष्टयोरपि अन्वयव्यतिरेकाभ्यां कार्यत्वावच्छिन्नं प्रति चेष्टात्वादिना कारणत्वात् अंकुराद्युत्पत्तेः पूर्वं चेष्टानुरोधेनेश्वरस्य नित्यशरीरं परमाणुरूपं स्वीकृत्य ईश्वरकृतिजन्यचेष्टाश्रयपरमाण्वात्मकशरीरैरेव तत्तत्कार्याणामुत्पत्तिः, शरीरलक्षणं च—'द्रव्यारम्भकाऽवयविभिन्नत्वे सति चेष्टाश्रयत्वम्' अस्मच्छरीरे ईश्वरस्य परमाण्वात्मके शरीरे च एतल्लक्षणसमन्वयः, परमाणुक्रियायां चेष्टात्वरूपवैजात्यांगीकारादिति **वदन्ति।** एवमीश्वरसिद्धौ तदुच्चरितत्वेन वेदस्य प्रामाण्यनिश्चयात् वेदोऽपीश्वरे प्रामाणमित्याह—**'द्यावाभूमीति।** द्यौः—स्वर्गलोकः, भूमिः—मर्त्यलोकः, 'द्यावाभूमी'ति छान्दसः प्रयोगः, स्वर्गं भूमिं च जनयन्—उत्पादयन्, देवः—परमात्मा एकः। विश्वस्य—जगतः, कर्ता—निमित्तकारणम्, भुवनस्य ब्रह्माण्डस्य, गोप्ता—रक्षणकर्ता। "विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः' (यजु० अ० १७। कं० १९) **इत्यादय**—इत्यादिना—'यः सर्वज्ञः स सर्वविद्यस्य ज्ञानमयं तपः' 'ईश्वरमुपासीत' 'सोऽकामयत' 'विज्ञानं ब्रह्म' 'आनन्दो ब्रह्मे'ति परिग्रहः। स्मृतयोऽपि 'अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते' 'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे। यस्मिँश्च प्रलयं यान्ति पुनरेव युगक्षये' इत्यनुसन्धेयाः॥

इदानीं संसारमहीरुहस्येत्यत्र 'संसार'पदेन जन्मस्थितिलयशीलपदार्थमात्रस्योपस्थितौ विशेष्यतया पदार्थत्वेन पदार्थमात्रस्योपस्थितत्वात् प्रसंगसंगत्या मूले पदार्थान्निरूपयति—**द्रव्यं गुण इति।** द्रव्यमिति द्रव्यत्वजात्यभिप्रायेणैकवचनम्, द्रव्यत्वावच्छिन्नमित्यर्थः। गुणः—गुणत्वावच्छिन्नमित्यर्थः। तथा कर्म,—संयोगापेक्षया कर्मणोऽतिरिक्तत्वं नास्तीतिभूषणकारमतं निराकर्तुं 'तथे'त्युक्तम्, यथा गुणः पृथक् पदार्थः तथा कर्माऽपि, कर्म—क्रिया, कर्मत्वावच्छिन्नमित्यर्थः। सामान्यं जातिः,—सामान्यत्वोपाध्यभिप्रायेण सामान्यत्वावच्छिन्नमित्यर्थः। सविशेषकम्,—विशेषेण—स्वतोव्यावर्तकत्वात्मकेन विशेषधर्मेण सहितमवच्छिन्नं सविशेषं सविशेषमेव सविशेषकमिति विग्रहेण स्वतोव्यावर्तकत्वात्मकं यद्व विशेषरूपं तद्विशिष्टो विशेषः,—विशेषत्वावच्छिन्नमित्यर्थः। समवायः—समवायसम्बन्धः। तथाऽभावः,—अभावोऽधिकरणात्मक एव न त्वतिरिक्तपदार्थ इति प्राभाकरमतं दूषयितुं पुनस्तथे'त्युक्तम्, तथा च यथा समवायः अतिरिक्तपदार्थस्तथा अभावोऽपि पदार्थान्तरम्, अभावत्वोपाध्यभिप्रायेणैकवचनम्—अभावत्वावच्छिन्नमित्यर्थः। पदार्थाः—'पदार्थ'इतिविपरिणामेन द्रव्यादिषु प्रत्येकमन्वयः, तेन यतो द्रव्यादिकं पदार्थः अतः पदार्थाः सप्त एवेत्यन्वयलाभः। यद्यप्यत्र विभागवाक्यादेव पदार्थविभाजकधर्माणां सप्तत्वं लभ्यते, तथापि सप्तत्वज्ञाने अप्रामाण्यज्ञानाऽनुत्पत्त्यर्थं 'सप्ते'तिपदं

**पदार्थान् विभजते–द्रव्यमिति । अत्र सप्तमस्याभावत्वकथनादेव षण्णां भावत्वं**

प्रयुक्तम्, तथाहि–'घटमानये'त्यत्रैकवचनेन घटस्यैकत्वबोधनेऽपि द्वितीयघटस्याऽऽनयननिषेधाऽलाभात् 'द्वितीय आनोयतान्न वे'ति संशयो भवति 'एकं घटमानये'त्यत्र तु संख्याबोधकशब्दस्येतरनिषेधबोधकतया द्वितीयघटस्य यथाऽऽनयननिषेधलाभस्तथा 'द्रव्यं गुण'इत्यादिश्लोकात्मकाद् विभागवाक्यात् विभाजकधर्मेषु द्रव्यत्वादिषु सप्तत्वलाभेऽपि अष्टत्वादिसंख्यानिषेधाऽलाभात् द्रव्यत्वादिषु अष्टत्वसंख्यासन्देहसम्भवात् उत्पन्नसप्तत्वज्ञानेऽप्रामाण्यसंशयसंभवेन तादृशाऽष्टत्वसंख्याव्यवच्छेदाय 'सप्त'ग्रहणं कृतमिति। वस्तुतस्तु सप्तग्रहणं 'पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमि'ति व्याप्तिरूपनिर्णयलाभार्थकं बोध्यम् । ननु–सप्तत्वस्य संख्यात्मकस्य द्रव्यत्वादिवृत्तित्वं न संभवति, गुणादौ गुणाऽनङ्गीकारादिति चेन्न । सप्तत्वस्याऽपेक्षाबुद्धिविशेषविषयरूपत्वात् संख्यात्मकत्वाऽनभ्युपगमात् । अपेक्षाबुद्धिश्च 'तत्तद्व्यक्तिमात्रनिष्ठेदन्त्वावच्छिन्नविशेष्यतानिरूपिताऽनेकैकत्वप्रकारताशालिनी बुद्धिः–अनेकानि एकत्वानि प्रकारा यत्र तादृशी बुद्धिरिति यावत्, यथा सप्तपदार्थेषु सप्तधर्मेषु वा 'अयमेकः' 'अयमेकः' 'अयमेक'इत्यादिरूपा सप्तावगाहिनी बुद्धिः, तादृशबुद्धिविषयतैव सप्तत्वमिति। **कीर्तिताः**–कणादप्रभृतिभिः सप्त एव पदार्थाः कथिताः, एतेभ्योऽन्ये पदार्थाः न सन्तीति हृदयम् । 'पदार्थाः'-इत्यनेन 'पदस्य अर्थाः पदार्थाः'इति व्युत्पत्त्या 'अभिधेयत्वं' पदार्थसामान्यलक्षणं लभ्यते । अर्थः–अभिधेयः, अभिधेयत्वं–शब्दशक्यत्वम्, अभिधा–ईश्वरेच्छा शक्तिः, 'इदं पदममुमर्थं बोधयतु'इत्यत्र शक्तिनिरूपितपदनिष्ठविशेष्यतायाः परम्परया निरूपिता या विषयित्वसम्बन्धावच्छिन्ना प्रकारता तदाश्रयत्वं पदार्थत्वमित्यर्थः। 'अस्मात्पदादयमर्थो बोद्धव्य'इति वा, तथा च 'पदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावत्त्वं पदार्थत्वमित्यपि–**केचित्**। अभिधा न ईश्वरेच्छा किन्तु वृत्त्यन्तरमित्यन्ये । मुक्तावल्यां **पदार्थान् विभजते**–इति । स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मप्रकारकज्ञानाऽनुकूलो व्यापारो विभजतेरर्थः । स्वं–विभजतिः, तत्समभिव्याहृतं 'पदार्थ'पदम्, तदर्थतावच्छेदक–व्याप्यमिथो विरुद्धा यावद्धर्मा द्रव्यत्वादयस्तत्प्रकारकज्ञानं 'द्रव्यं' 'गुणः' 'कर्मे'त्याद्याकारकं, तदनुकूलव्यापारो हि 'द्रव्यगुणकर्मे'त्यादिशब्दप्रयोगरूप इति समन्वयो बोध्यः । तथा च–सर्वानुगतपदार्थत्वावच्छिन्नद्रव्यादिधर्मिकद्रव्यत्वाद्यवान्तरधर्मप्रकारकप्रतिपादनानुकूलवर्तमानकालीनकृतिमानेकत्वाश्रयो मूलकार इति बोधः । ननु–'पदार्थो द्विविधः–भावोऽभावश्च, द्रव्यादयः षट् भावाः, सप्तमस्त्वभाव'इत्येवमत्र कुतो न निरूपितमित्यत आह–**अत्र सप्तमस्येति**। सप्तमस्य–'अयं सप्तम'–इति बुद्धिविषयस्य अभावस्य । अभावत्वकथनादेव,–अत्र केचित्—'समवायावच्छिन्नसत्तासम्बन्धित्व–स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नसत्तासम्बन्धित्व–स्वसमवायि( संसर्गत्वाख्य )विशेषणतासम्बन्धावच्छिन्नसत्तासम्बन्धित्वै–तदन्यतमत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाऽभाववत्त्वरूपाऽभावत्वप्रकारकबोधजनका'ऽभाव'शब्दप्रयोगादित्यर्थः, समवायेन सत्ता द्रव्यगुणकर्मसु वर्तते, अतः समवायावच्छिन्नसत्तासम्बन्धित्वं स्वरूपसम्बन्धेन द्रव्यगुणकर्मसु वर्तते । स्वसमवायिसमवेतत्वसम्बन्धेन सत्ता जातौ विशेषे च वर्तते, स्वं–सत्ता, तत्समवायि–द्रव्यगुणकर्मेतित्रयम् तत्र समेवता जातिः, एवं स्वं–सत्ता, तत्समवायि–परमाण्वादि, तत्र समवेता विशेषाः अतः स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नसत्तासम्बन्धित्वं स्वरूपसम्बन्धेन सामान्ये विशेषे च वर्तते । स्वसमवायि( संसर्गत्वाख्य )विशेषणतासम्बन्धेन सत्ता समवायसम्बन्धे वर्तते, स्वं–सत्ता, तत्समवायि द्रव्यगुणकर्मैतत्त्रयम्, तत्र स्वरूपेण समवायसंसर्गो वर्तते, अतः स्वसमवायि-( संसर्गत्वाख्य)विशेषणतासम्बन्धावच्छिन्नसत्तासम्बन्धित्वं स्वरूपसम्बन्धेन समवाये वर्तते । त्रीणि

**प्राप्तं, तेन भावत्वेन पृथगुपन्यासो न कृतः। एते च पदार्था वैशेषिकनये**

यानि तादृशसम्बन्धित्वानि भावपदार्थे वर्तमानानि, तदन्यतमत्वावच्छिन्नस्य स्वरूपसम्बन्धेनाऽभावः सप्तमेऽभावाख्ये पदार्थे वर्तते, अतः तादृशान्यतमत्वावच्छिन्नाऽभाववत्त्वमेव—अभावत्वं, तादृशाऽभावत्वप्रकारकबोधजनकः श्लोकस्थः शब्दः 'अभावः' इति, तस्य प्रयोगादित्यर्थ इति वदन्ति। **वस्तुतस्तु** प्रतियोगिज्ञानसापेक्षज्ञानविषयत्वावच्छिन्नबोधकस्य 'अभाव'इति शब्दस्य प्रयोगादित्यर्थः, तेन नात्माश्रयदोषः। **षण्णाम्**—द्रव्य-गुण-कर्म-सामान्य-विशेषसमवायानाम्। **भावत्वं**—स्वरूपसम्बन्धेन—समवायावच्छिन्नसत्तासम्बन्धित्व—स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नसत्तासम्बन्धित्व—स्वसमवायि(संसर्गत्वाख्य)विशेषणतासम्बन्धावच्छिन्नसत्तासम्बन्धित्वै—तदन्यतमवत्त्वरूपम् भावत्वमित्यर्थः। भावपदार्थेषु त्रीणि तादृशसम्बन्धित्वानि स्वरूपसम्बन्धेन वर्तन्ते, अतः स्वरूपसम्बन्धेन तदन्यतमवत्त्वं भावत्वं युक्तमिति। **प्राप्तम्**—वाचकपदं विनापि प्राप्तम्—अनुमानात्प्राप्तम्, अनुमानं च 'द्रव्यादयः—भावाः,—अभावत्वव्यधिकरणधर्मवत्त्वादि'त्येवं रूपं बोध्यम्। तेन—अनुमानसिद्धत्वेन। पृथगुपन्यासः—भावत्वेनाऽपि पृथगुपन्यासः 'द्रव्यादयः षट् भावाः'इत्याकारकशब्दस्मारकरेखान्यासः, न कृत इति॥ सप्तपदार्थानामङ्गीकारे प्राचीनानां मध्यतो वैशेषिकदर्शनकारककणादमुनेः सम्मतिं दर्शयति—**एते चेति**। एते च='द्रव्यं गुणस्तथा कर्मे'तिकारिकया दर्शिताः। पदार्थाः—द्रव्य-गुण-कर्म-सामान्य-विशेष समवाया-ऽभावाऽऽख्याः सप्त पदार्थाः। **वैशेषिकनये,**—षोडशपदार्थानां सप्तस्वन्तर्भावेण सप्तविशेषपदार्थप्रतिपादककाणादसूत्रं तद्भाष्यमन्यं चैतदर्थप्रतिपादकमभिधीयते विदन्ति वा वैशेषिकाः, क्रतूक्थादी'त्यादिपदग्राह्यत्वाट्ठक्, वैशेषिकाणां नयः=युक्तियुक्तं शास्त्रं, तस्मिन्,—कणादसूत्रे, तस्य प्रशस्तपादभाष्ये च। प्रसिद्धाः—प्रकर्षेण सिद्धा प्रमितिविषयाः सन्तीति। तत्र 'धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसमि'(अ—१, आ—१, सूत्र ४) तिवैशेषिकदर्शने षड्भावाऽभिधायकं कणादकृतसूत्रम्। 'क्रियागुणव्यपदेशाऽभावात् प्रागसत्'(अ—९, आ—१, सूत्रं १)इति प्रागभावाभिधायकं सूत्रम्, 'सदसत्'(अ—९, आ—१, सूत्रं २)इति प्रध्वंसाभावाभिधायकं सूत्रम्, 'सच्चाऽसत्'(अ—९, आ—१, सूत्र ४)इति—अन्योन्याभावसाधकं सूत्रम् 'यच्चान्यदसदतस्तदसत्' (अ—९, आ—१, सूत्रं ५)इति—अत्यन्ताभावसाधकं च कणादस्य सूत्रं बोध्यमिति। अथ न्यायदर्शनकारस्य गोतममुनेः सप्तपदार्थाङ्गीकारेऽविरोधं दर्शयति—**नैयायिकानामप्यविरुद्धा** इति। नैयायिकानाम्—न्यायो युक्तिः,—प्रमाणैरर्थपरीक्षणमितियावत्, तत्प्रतिपादकोऽप्युपचारान्न्यायस्तमधीयन्ते विदन्ति वेत्यर्थे ठक् 'क्रतूक्थादी'त्यादिपदग्राह्यत्वात् 'नय्य्ये'त्यैच्। नैयायिकास्तेषाम्—गौतमप्रभृतीनामित्यर्थः। अविरुद्धाः—'प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त सिद्धान्ता-ऽवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः'(अ—१, आ—१, सूत्रं१) इति न्यायदर्शने गौतमसूत्रोक्तषोडश्या विभक्तपदार्थानामेव परस्परवैयधिकरण्यापन्नान् द्रव्यत्वगुणत्वादिसप्तधर्मानादाय कणादेन विभागः कृतः, तत्र सप्तसु षोडशानामन्तर्भावात् द्रव्यत्वादिसप्तधर्माणां प्रमाणत्वादिषोडशधर्माणां च परस्परविरुद्धत्वाऽभावात् वैशेषिकाभिमतसप्तपदार्थाः नैयायिकानां न विरुद्धा इति भावः। **गौतमेन** स्वसूत्रेष्वपि सप्तपदार्थाः कचित्कचित् संकीर्तिताः—तथाहि—'द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः'(अ—३, आ—१, सूत्र ३७)'न कर्माऽनित्यत्वात्'(अ—२, आ—२, सूत्र २३) 'समानप्रसवात्मिका जातिः' (अ—२, आ—२, सूत्र ६९)'अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः'(अ—३, आ—१, सू ३८)'न, अभावप्रामाण्यं प्रमेयाऽसिद्धेः,(अ—२, आ—२, सूत्र—७)।

**प्रसिद्धाः, नैयायिकानामप्यविरुद्धाः। प्रतिपादितं चैवमेव भाष्ये। अत एवोपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वमाशङ्कितम्। ननु कथमेत एव पदार्थाः, शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात्? तथाहि-मण्यादिसमवहितेन वह्निना दाहो न जन्यते, तच्छून्येन तु जन्यते।**

---

अविरोधे प्रशस्तपादभाष्यस्य सम्मतिमाह-**प्रतिपादितमिति**। एवमेव—अविरोधार्थानुगुणमेव। भाष्ये-प्रशस्तपादभाष्ये। प्रतिपादितम्-'द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः षोडशपदार्थानामत्रैवान्तर्भूतत्वा'दिति प्रतिपादितमित्यर्थः। कथमन्तर्भावः? इति चेदित्थम्-प्रमाणस्येन्द्रियादेः द्रव्ये, व्याप्तिज्ञानादेर्गुणे, प्रमेयस्यात्मशरीरेन्द्रियस्वरूपस्य द्रव्ये, अर्थस्य गन्धरसरूपस्पर्शशब्दरूपस्य गुणे, बुद्धेर्गुणे, मनसो द्रव्ये, प्रवृत्तेर्गुणे, दोषाणां रागद्वेषमोहानां क्रमशः-इच्छा-द्वेष-मिथ्याज्ञानात्मकानां गुणे, प्रेत्यभावः-प्रेत्य-मृत्वा भावः-जननम्, चरमप्राणशरीरसंयोगध्वंसः-मरणम्, आद्यशरीरप्राणसंयोगः-जननम्, मरणस्य ध्वंसे, जननस्य संयोगे, फलस्य-सुखदुःखसंवेदनात्मकभोगस्य ज्ञाने, दुःखस्य गुणे, आत्यन्तिकदुःखध्वंसो मोक्षः, दुःखानि-शरीरं षडिन्द्रियाणि षड्बुद्धयः सुखं दुःखं चेति-एकविंशतिः, तादृशमोक्षस्य ध्वंसे, संशयस्य ज्ञाने, साध्यतया प्रवृत्तिहेत्विच्छाविषयरूपप्रयोजनस्य यथायथं द्रव्यादिषु, दृष्टान्तस्य यथायथं द्रव्यादिषु, प्रमाणिकतयाऽभ्युपगतार्थरूपसिद्धान्तस्य यथायथं द्रव्यादिषु, शब्दस्वरूपप्रतिज्ञाद्यवयवानां गुणे, तर्कस्य आहार्यज्ञानात्मकस्य गुणे, निर्णयस्य ज्ञाने, तत्त्वबुभुत्सोः कथात्मकवादस्य गुणे, विजिगीषुकथारूपजल्पस्य गुणे, स्वपक्षस्थापनाहीनकथारूपवितण्डाया गुणे, अनुमिति-तत्कारणान्यतरप्रतिबन्धकयथार्थज्ञानविषयाणां हेत्वाभासानां यथायथं द्रव्यादिषु, अभिप्रायान्तरेण प्रयुक्तशब्दस्याऽर्थान्तरं परिकल्प्य दूषणाभिधानात्मकच्छलस्य गुणे, असदुत्तररूपजातेर्गुणे, पराजयहेतुनिग्रहस्थानानां यथायथं द्रव्यादिष्वन्तर्भाव'इति। इदानीं भाष्यकारादिमतानुसारिन्यायप्रवर्तकानां 'चिन्तामणि'काराणां गंगेशोपाध्यायानां सम्मतिं-दर्शयति-**अत एवेति**। द्रव्यत्वाद्यभावत्वान्तमिथोविरुद्धधर्माणां पदार्थविभाजकत्वाङ्गीकारादेवेत्यर्थः। उपमानचिन्तामणौ-'चिन्तामणि'ग्रन्थस्य उपमानखण्डे। सप्तपदार्थभिन्नतया-द्रव्यत्वादिसप्तान्यतमप्रतियोगिताकभेदवत्तया। शक्तिसादृश्यादीनाम्-शक्तित्वसादृश्यत्वादीनाम्। आदिपदेन-स्वत्वत्वस्य ग्रहणम्। अतिरिक्तपदार्थत्वम्-अतिरिक्तपदार्थविभाजकधर्मत्वम्। **आशंकितमिति**। द्रव्यत्वादिरूप-पदार्थविभाजकसप्तधर्मेभ्यो भिन्नाः शक्तित्व-सादृश्यत्व-स्वत्वत्वरूपा धर्माः पदार्थतावच्छेदकाः सन्ति न वा?, यदि सन्ति तदा तेषां धर्माणामाश्रयतया शक्तिसादृश्यस्वत्वानां पदार्थान्तरत्वं स्यादिति शंकाभिप्रायः। तथा च शक्तित्वादीनां प्रमाणत्वादिपदार्थविभाजकधर्मेभ्यो भिन्नपदार्थविभाजकधर्मत्वशंकामकृत्वा द्रव्यत्वादिपदार्थविभाजकधर्मेभ्यो भिन्नपदार्थविभाजकधर्मत्वशंकया ज्ञायते यत् चिन्तामणिकाराणां द्रव्यत्वादीनामेव पदार्थविभाजकधर्मत्वमनुमतमिति ग्रन्थाशयः॥ ननु शक्तिसादृश्ययोः कया युक्त्याऽतिरिक्तपदार्थत्वशंकेतिजिज्ञासायां तन्निवृत्त्यर्थं प्राभाकरमते शक्तेरतिरिक्तपदार्थत्वम् आलंकारिकमते च सादृश्यस्यातिरिक्तपदार्थत्वं स्वयं शंकते-**ननु कथमेत** इति। नन्विति शंकायाम्। कथं-केन प्रकारेण। एते एव-द्रव्यत्वगुणत्वकर्मत्वसामान्यत्वविशेषत्वसमवायत्वाऽभावत्वाख्या एव। पदार्थाः-पदार्थविभाजकधर्माः॥ तत्र हेतुमाह-**शक्तिसादृश्यादीनामपीति**। शक्तित्वसादृश्यत्वस्वत्वत्वानामपीत्यर्थः। अतिरिक्तपदार्थत्वात्-द्रव्यत्वादिसप्तातिरिक्तत्वे सति पदार्थविभाजकधर्मत्वात्॥ तत्र शक्तौ प्रमाणाभावे शक्तित्वस्य पदार्थविभाजकत्वं न संभवेदतः शक्तिं साधयति-**तथाहीत्यादिना**। मण्यादिसमवहितेन वह्निना-चन्द्रकान्तमणि-मन्त्रौषध्यादिविशिष्टेन वह्निना। वह्नौ मण्यादि-

**तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते, उत्तेजकेन मण्याद्यपसारणेन**

वैशिष्ट्यं तु दाहप्रतिबन्धकतावच्छेदकसम्बन्धेन सामानाधिकरण्य-समानकालीनत्वोभयसम्बन्धेन बोध्यम्। सामीप्यादिसम्बन्धेन चन्द्रकान्तमणेः दाहप्रतिबन्धकत्वात् सामीप्यादिसंसर्गेणाऽपि चन्द्रकान्तविशिष्टवह्निनेत्यर्थ इत्यपि कश्चित्। दाहध्वंसार्थं वह्निमुद्दिश्य मन्त्रप्रयोगः क्रियते, अतः उद्देश्यत्वसंसर्गेण मन्त्रस्य दाहप्रतिबन्धकत्वात् वह्नौ मन्त्रवैशिष्ट्यम् उद्देश्यत्वसंसर्गेण बोध्यम्। पृथिव्याद्यात्मकौषधिविशेषस्य तु वह्नौ संयोगेन दाहप्रतिबन्धकत्वात् वह्नौ तादृशौषधिवैशिष्ट्यं संयोगेन यद्वा-सामानाधिकरण्यसमानकालीनत्वोभयसम्बन्धेन बोध्यम् ॥ दाहः-रूपान्तरोत्पत्तिः पूर्वरूपनाशो वा॥ **न जन्यत** इति। तथा च 'वह्निसत्त्वेऽपि दाहाऽजननात्' अन्वयव्यभिचारात् वह्नेर्न वह्नित्वेन दाहकारणत्वमतो वह्नित्वं न दाहकारणतावच्छेदमिति। ननु वह्नेरकारणत्वादेव न दाह इत्यत आह-**तच्छून्येन तु जन्यत** इति। तच्छून्येन-मणिमन्त्रौषध्यादिवैशिष्ट्यशून्येन तु वह्निना दाह उत्पद्यते-इत्यर्थः। तथा च वह्नेः कारणत्वात् वह्नित्वस्य च कारणतावच्छेदकत्वात् तत्र वह्नौ कारणतावच्छेदकः कश्चिद्धर्मोऽभ्युपगन्तव्यः स च शक्तिरूप एव, 'शक्तिसत्त्वे दाहसत्त्वं शक्त्यभावे दाहाभाव' इत्यन्वयव्यतिरेकसत्त्वादिति भावः॥ ननु वह्नौ यदि दाहानुकूला शक्तिस्तदा चन्द्रकान्तादिसत्त्वे कुतो न दाहः ?, तथा च शक्तिमत्त्वेन वह्नेः कारणत्वेऽप्यन्वयव्यभिचारः, इत्यत आह-**तत्र मण्यादिनेति**। तत्र='मण्यादिसमवधाने सती'त्यादिना स्वेन पूर्वमुक्तयुक्त्या शक्तिमत्त्वेन वह्नेर्दाहकारणत्वसिद्धौ। मण्यादिना-चन्द्रकान्तमणि मन्त्रौषधिभ्यः। वह्नौ दाहानुकूला शक्तिर्नाश्यते-वह्निनिष्ठदाहजनकतावच्छेदकशक्तिनाशः क्रियते। अत्र 'कार्यानुकूल( कारणतावच्छेदक )धर्म( शक्ति )-विघटकत्वमेव प्रतिबन्धकत्वम्, तच्च चन्द्रकान्तादौ वर्तत इति। तथा च मण्यादिसमवधानसमये शक्तेर्नाशेन कारणतावच्छेदक( शक्ति )विशिष्टकारणाऽभावात् ( विशेषणाऽभावप्रयुक्तविशेष्याऽभावात् ) न दाह अतो नोक्तान्वयव्यभिचार इति भावः॥ ननु चन्द्रकान्तमणेः शक्तिप्रतिबन्धकत्वे-उत्तेजकसूर्यकान्ते सति वह्निनिष्ठशक्तेरनाशेन अन्वयव्यमिचारः इत्यत आह-**उत्तेजकेनेति**। वह्नौ दाहानुकूला शक्तिः जन्यते इत्यन्वयः, चन्द्रकान्तात्मकप्रतिबन्धकसत्त्वेऽपि उत्तेजकसूर्यकान्तबलात् दाहानुकूला शक्तिरुत्पद्यतेऽतः उत्तेजकाभावविशिष्टचन्द्रकान्तस्य प्रतिबन्धकत्वं वक्तव्यम्, तथा च उत्तेजकाभावविशिष्टचन्द्रकान्तस्य उत्तेजककालेऽसत्त्वात् प्रतिबन्धकाभावेन दाहानुकूलशक्तेरनाशः, अतो नान्वयव्यभिचार इति भावः। ननु उत्तेजकाभावविशिष्टचन्द्रकान्तस्य प्रतिबन्धकत्वे विनिगमकाऽभावेन विशेषणविशेष्यभावव्यत्यासात् चन्द्रकान्तविशिष्टोत्तेजकाभावस्यापि प्रतिबन्धकत्वकल्पने नाश्यनाशकभावद्वयापत्तिः, अतश्चन्द्रकान्तमणौ दाहानुकूलशक्तिनाशकतावच्छेदिकां काञ्चित् शक्तिं मत्वा तादृशशक्तिमत्त्वावच्छिन्नचन्द्रकान्तस्य दाहानुकूलशक्तिप्रतिबन्धकत्वं वक्तव्यम्, तथा च उत्तेजकसमवधानकाले चन्द्रकान्तीयशक्तेर्नाशात् तादृशशक्तिमत्त्वावच्छिन्नचन्द्रकान्तस्य प्रतिबन्धकस्याऽभावात्, शक्तिमच्चन्द्रकान्ताभावेनैव वह्नौ दाहानुकूलशक्त्युत्पत्तिसंभवे उत्तेजकस्य शक्त्युत्पादके मानाभाव इत्यस्वरसादाह-**मण्याद्यपसारणेन चेति**। चन्द्रकान्तमण्याद्यभावेन वेत्यर्थः। वह्नौ दाहानुकूला शक्तिर्जन्यत इत्यन्वयः। तथा च 'नाशकतावच्छेदकशक्तिमच्चन्द्रकान्ताभावेन वा वह्नौ दाहानुकूला शक्तिरुत्पद्यत इति भावः॥ ननु शक्तिसिद्धावपि तस्या अतिरिक्तपदार्थविभाजकधर्मवत्त्वे किं मानम्? इत्यत आह-**इति कल्प्यत** इति। कल्प्यते-अतिरिक्तपदार्थविभाजकधर्मवत्त्वं परिशेषेण अनुमीयत इत्यर्थः। तथाहि-'शक्तिः,-द्रव्यत्वगुणत्वकर्मत्वान्यतमशून्या, गुणवृत्तित्वात्, गुणत्ववत्। 'शक्तिः,-सामान्यत्व-विशेषत्व-समवायत्वाऽभावत्वाऽन्यतमशून्या, प्रागभावप्रतियोगित्वे

**च जन्यत इति कल्प्यते । एवं सादृश्यमप्यतिरिक्तः पदार्थः, तद्धि न षट्सु भावेष्वन्तर्भवति, सामान्येऽपि सत्त्वात्, यथा गोत्वं नित्यं तथाऽश्वत्वमपीति सादृश्यप्रतीतेः, नाप्यभावे, सत्त्वेन प्रतीयमानत्वादिति चेत् ? न, मण्याद्यभाव-**

सति ध्वंसप्रतियोगित्वात्, घटवत्' इत्यनुमानद्वयेन द्रव्यत्वादिपदार्थविभाजकसप्तान्यतमशून्यत्व-सिद्धौ 'शक्तिः,-द्रव्यत्वादिसप्तान्यतमभिन्नपदार्थविभाजकधर्मावच्छिन्ना,-द्रव्यत्वादिसप्तान्यतमशून्यत्वे सति पदार्थत्वात्, यत्र साध्यं नास्ति तत्र हेतुर्नास्ति यथा द्रव्यम्' इति व्यतिरेकिणापि अनुमानेन शक्तेर्द्रव्यत्वादिसप्तान्यतमभिन्नपदार्थविभाजकधर्मवत्त्वे सिद्धे स धर्मः शक्तित्वरूप इति। तादृशशक्तित्वावच्छिन्ना शक्तिस्त्रिधा-सहजा शक्तिः, आधेयशक्तिः, पदशक्तिश्च, सहजा शक्तिः वह्न्यादिनिष्ठा । आधेयशक्तिः प्रोक्षणादिजन्या व्रीह्यादिनिष्ठा, भस्मादिजन्या कांस्यपात्रादिनिष्ठा शुद्ध्यात्मिकाप्याधेयशक्तिः । पदशक्तिश्च तत्तदर्थनिरूपिता तत्तत्पदनिष्ठा । ताः सर्वा अपि पदार्थान्तरमिति प्राभाकराभिप्रायः ॥

एवं शक्तेरतिरिक्तपदार्थत्वं प्रसाध्य सर्वमतसिद्धस्य सादृश्यस्यातिरिक्तपदार्थत्वमात्रं साधयति-**एवमित्यादिना** । एवम्-शक्तेरतिरिक्तपदार्थत्वमिव । सादृश्यमप्यतिरिक्तः पदार्थः=द्रव्यत्वादिसप्तान्यतमधर्मभिन्नपदार्थविभाजकधर्मवत् सादृश्यमपि भवतीत्यर्थः । तथा चानुमानम्-'सादृश्यम्-द्रव्यत्वादिसप्तपदार्थविभाजकधर्मभिन्नपदार्थविभाजकधर्मवत् ,-द्रव्यत्वादिषडन्यतमशून्यत्वे सति अभावत्वशून्यत्वात्' । अत्र हेतौ सत्यन्ताऽसिद्धिं वारयति-**तद्धीति** । तत्-सादृश्यं, हि-यतः, तथा च-यस्मात् सादृश्यं षड्भावाऽनन्तर्भूतम् अभावाऽनन्तर्भूतं च, तस्मात् सादृश्यमतिरिक्तः पदार्थ इत्यर्थलाभः । अनुमानं तु-'सादृश्यं-षड्भावाऽनन्तर्भूतम् ,-सामान्ये(जाती)तरवृत्तित्वे सति सामान्य( जाति )वृत्तित्वात् ,-गगनाभाववदिति । सादृश्यस्य षड्भावाऽनात्मकत्वाद् 'द्रव्यत्वादिषडन्यतमशून्यत्वा'त्मकसत्यन्तं नाऽसिद्धं तत्रेति हृदयम् । अत्र-येषु यत्साधर्म्यं तेषु तत्-सादृश्यमेकमेवे'त्यालंकारिकाणां सिद्धान्तस्तदनुसारेण हेतुर्दर्शितः-**'सामान्येऽपि सत्त्वादि'ति** । न चोक्तानुमाने साध्याभाववति प्रमेयत्वे हेतोः सत्त्वाद्व्यभिचार इति वाच्यम् । प्रमेयत्वस्य प्रमाविषयत्वस्वरूपस्य विषयभेदेन भिन्नत्वाद् एकस्मिन् प्रमेयत्वे 'सामान्येतरवृत्तित्वसामान्यवृत्तित्वोभयवत्त्वात्मकहेतोरभावात् ॥ सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वा'दिति हेतोः पक्षात्मकसादृश्ये सत्त्वे प्रतीतिं प्रमाणयति-**यथा गोत्वमिति** । अश्वत्वमपीत्यपिना आकाशादिपरिग्रहः, तथा च-'यथा गोत्वं तथा अश्वत्वं नित्यं आकाशादिकमपि च नित्यमि'ति सादृश्यप्रतीत्या गोत्वनिरूपितसादृश्यस्य अश्वत्वे आकाशादौ च सिद्धतया तत्र सादृश्ये 'सामान्येतर(गगनादि) वृत्तित्वे सति सामान्य( जाति )वृत्तित्व'रूपहेतोरक्षतत्वादिति ॥ 'द्रव्यत्वादिषडन्यतमशून्यत्वे सति अभावत्वशून्यत्वादि'ति हेतौ विशेष्याऽसिद्धिं वारयति-**नाऽप्यभाव** इति । सादृश्यस्य अभावेऽपि नान्तर्भाव इत्यर्थः, पदार्थविभाजकं यद् अभावत्वं तच्छून्यमिति यावत् ॥ अभावाऽनन्तर्भावे प्रत्यक्षप्रतीतिं प्रमाणयति-**सत्त्वेनेति** । भावत्वेनेत्यर्थः । प्रतीयमानत्वात्=प्रमीयमाणत्वादित्यर्थः । तथा चानुमानम्-'सादृश्यम्,—अभावाऽनन्तर्भूतम्,—भावत्वप्रकारकप्रमाविषयत्वात्,—द्रव्यवदिति । केचित्तु सत्त्वेन प्रतीयमानत्वादित्यस्य-नञुल्लिखितप्रतीत्यविषयत्वादित्यर्थः,-'प्रतियोगित्वसम्बन्धावच्छिन्नाभावाऽवृत्तिप्रकारतानिरूपितप्रमाऽनिरूपितविशेष्यताशून्यत्वादिति यावदिति वदन्ति ॥

'शक्तिसादृश्यादीना'मित्यत्रादिपदेन स्वत्वस्यापि पदार्थान्तरत्वमनुसन्धेयम्-तथाहि-प्राचीनाः 'चैत्रस्येदं धन'मित्यादौ धनगतं चैत्रनिरूपितं स्वत्वं प्रतीयते, तत्-पदार्थान्तरम्, यतः 'स्वत्वसु-

**विशिष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वं कल्प्यते । अनेनैव सामञ्जस्येऽनन्तशक्तितत्प्रागभावध्वंसकल्पनाऽनौचित्यात् ।**

त्पन्नं विनष्टं–तव स्वत्वं मम स्वत्व'मित्यादिप्रतीतिसिद्धं षष्ठीविभक्तिवाच्यं, तच्च वृत्तिनियामकस्वरूपसम्बन्धेन स्वर्णादिनिष्ठम् , निरूपकताख्यस्वरूपसम्बन्धेन स्वामिनिष्ठम् । 'स्वत्वं–न द्रव्यगुणकर्मान्यतमरूपम् , गुणादिवृत्तित्वात्' । स्वत्वं–न सामान्याद्यन्यतमरूपम् ,–नित्यत्वप्रसंगात् , 'स्वत्वं–नाऽभावरूपम् ,–भावत्वेन प्रतीयमानत्वादि'ति प्राहुः ॥

शक्तेरतिरिक्तपदार्थतां खण्डयति–न, **मण्याद्यभावेति** । अतिरिक्तशक्तिकल्पनां पूर्वोक्तनाश्यनाशकभावकल्पनां चाऽपेक्ष्य लाघवाद्दाहत्वावच्छिन्नं प्रति चन्द्रकान्ताद्यभावविशिष्टवह्नित्वेन चन्द्रकान्ताद्यभावविशिष्टवह्नेः कारणत्वस्वीकारेणैव मण्यादिसत्तासमये दाहापत्तिवारणे शक्तिर्नांगीकर्तव्येति भावः । मण्याद्यभावेत्यत्रादिपदप्रयोगात् मन्त्राभावविशिष्टवह्नेः ओषधाऽभावविशिष्टवह्नेश्च दाहं प्रति कारणत्वमपि कल्पनीयम् । दाहादिकमित्यत्रादिपदेन वह्नेः संग्रहः, मणिसत्त्वे वह्नेरप्यनुत्पत्तेः, तथा च मणिरूपप्रतिबन्धकसद्भावान्न दाहवह्नी इति हृदयम् । ननु दाहं प्रति मण्याद्यभावविशिष्टवह्नित्वेन वह्निविशिष्टमण्याद्यभावत्वेन वा कारणत्वे विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुतरद्वयकार्यकारणभावापत्त्या वह्नेः शक्तिमत्तयैव कारणता उचितेत्यत आह–**स्वातन्त्र्येण मण्यभावादेरेव** वेति । मण्यभावादेरित्यादिना मन्त्राभावस्य ओषध्यभावस्य वह्नेश्च परिग्रहः । तथा च–'दाहत्वावच्छिन्नं प्रति चन्द्रकान्ताभावस्य, मन्त्राभावस्य ओषध्यभावस्य वह्नेश्च पृथक् पृथक् कारणत्व'मिति स्वीकारात् , तादृशकारणकूटसत्त्वे दाहसम्भवेन नोक्तविशेषणविशेष्यभावव्यत्यासप्रयुक्तकार्यकारणभावद्वयापत्तिरिति । एतन्मते प्रतिबन्धकत्वं–कारणीभूताभावप्रतियोगित्वरूपं बोध्यम् , दाहस्य कारणीभूतोऽभावः चन्द्रकान्ताद्यभावस्तत्प्रतियोगित्वस्य चन्द्रकान्तादौ सत्त्वात् , न तु 'कार्यानुकूलधर्मविघटकत्व'रूपं प्रतिबन्धकत्वम् , बाधज्ञानस्याऽनुमितिप्रतिबन्धकत्वाभावापत्तेः , तथाहि—यत्र परामर्शनाशानन्तरं लौकिकप्रत्यक्षात्मको बाधनिश्चयस्तत्र बाधनिश्चयोत्पत्तिद्वितीयक्षणे परामर्शनिष्ठशक्तिनाशो वक्तव्यः, तथा च बाधोत्पत्तितृतीयक्षणे बाधेनाऽनुमितिप्रतिबन्धो वाच्यः, स च न संभवति, तत्पूर्वं परामर्शाऽभावादेवाऽनुमित्यनुत्पादसंभवात् । एवं—बाधद्वितीयक्षणेऽनुमित्यापत्तेश्च, तत्पूर्वं शक्तिविशिष्टपरामर्शसत्त्वादिति ध्येयम् ॥ ननु तथापि वह्नेर्मण्यभावादीनां च कारणत्वाऽपेक्षया एकस्य वह्नेः शक्तिमत्त्वेन कारणत्वमुचितमित्यत आह—**अनेनैवेति** । दाहादिकं प्रति मण्यभावादेः कारणत्वेनैवेत्यर्थः । सामञ्जस्ये=मण्यादिसमवधानसमये दाहाद्यापत्तिवारणे सतीत्यर्थः ॥ **अनन्तशक्तीति** । अनन्तशक्तयः—असंख्याः शक्तयः, वह्नौ दाहानुकूलाः शक्तयः, मणिमन्त्रौषधादिषु शक्तिनाशकतावच्छेदिकाः शक्तयः, तासां प्रागभावाः,—ध्वंसाश्च कल्पनीयाः,—इत्येतन्महद्गौरवमित्यर्थः । एवम्—शक्तिं प्रति मण्यभावादीनां, शक्तिनाशं प्रति शक्तेर्मण्यादीनां च कारणत्वकल्पनागौरवमपि बोध्यम् ॥ केचित्तु–अनुमानमेव शक्तौ प्रमाणं वदन्ति,—तथाहि—'वह्निः—दाहाऽनुकूलाऽद्विष्ठाऽतीन्द्रियधर्मसमवायी, दाहजनकत्वात् ,—अदृष्टवदात्मवदिति, तन्न । दाहजनकताया जन्यमात्रजनककालादिसाधारणतया काले तत्र साध्याभावेन व्यभिचारात् । दाहत्वावच्छिन्नजनकताया दृष्टान्तेऽसत्त्वात् , नैयायिकमते च दाहत्वावच्छिन्नं प्रति स्वातन्त्र्येण मण्यभावस्य हेतुतया तत्र दाहानुकूलाऽद्विष्ठातीन्द्रियधर्मसमवायित्वात्मकसाध्याभावेन व्यभिचाराच्च ॥

ननु स्वातन्त्र्येण दाहं प्रति चन्द्रकान्तमण्यभावस्य कारणत्वे चन्द्रकान्तमणेश्च प्रतिबन्धकत्वे चन्द्रकान्तमण्यात्मकप्रतिबन्धकसत्त्वे दाहो न भाव्यः, उत्तेजकसमवधानकाले तु प्रतिबन्धकसत्त्वेऽपि

**न चोत्तेजके सति प्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यम्, उत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वात्।**

दाहो भवति, तथा च—चन्द्रकान्ताभावात्मककारणाऽसत्त्वेऽपि दाहरूपकार्यसत्त्वात् व्यतिरेकव्यभिचारः, अतश्चन्द्रकान्तमणिर्न प्रतिबन्धकः, न वा मण्यभावः कारणम्, किन्तु चन्द्रकान्तनिष्ठा शक्तिः दाहप्रतिबन्धिका मन्तव्या, सा च उत्तेजकसमवधानकाले उत्तेजकनिष्ठशक्त्या नश्यति दाहश्चोत्पद्यते, अतो नोक्तो व्यभिचारः, फलमुखगौरवस्याऽदोषत्वात् शक्तेः पदार्थान्तरत्वं मन्तव्यमित्यभिप्रायेण शंकते—**न चोत्तेजके सतीति।** उत्तेजके सति=सूर्यकान्तमणिसमवधाने सति। प्रतिबन्धकसद्भावेऽपि=चन्द्रकान्तमण्यात्मको यो दाहप्रतिबन्धकस्तस्य समवधाने सत्यपि। कथं दाहः ?=केन कारणेन दाह उत्पद्यते ? चन्द्रकान्तमण्यभावात्मकं कारणं तु तत्र नास्ति, अतश्चन्द्रकान्तनिष्ठशक्तेर्विनाशिका उत्तेजकनिष्ठा शक्तिः दाहकारणमिति मन्तव्यमिति भावः॥ उत्तरयति-**उत्तेजकाभावविशिष्टेति।** दाहं प्रति न केवलं चन्द्रकान्तमणिः प्रतिबन्धकः,किन्तु उत्तेजकाभावविशिष्टचन्द्रकान्तमणिः प्रतिबन्धकः, तदभावश्च कारणम्, तथा च यत्र सूर्यकान्तचन्द्रकान्तौ वर्तेते, भवति च तत्र दाहः, तादृशस्थले सूर्यकान्तस्य सत्त्वात् सूर्यकान्तात्मकोत्तेजकाभावो न वर्तते किन्तु देशान्तरे वर्तते, अतः सूर्यकान्तात्मकोत्तेजकाभावविशिष्टः कश्चिद्देशान्तरीयश्चन्द्रकान्तः प्रतिबन्धकत्वेनाऽभिमतो भवन्ति,स चाऽत्र नास्ति,किन्तु उत्तेजकाभावविशिष्टतादृशदेशान्तरीयचन्द्रकान्ताभावस्य कारणस्याऽत्र सत्त्वाद्‌ दाहः स्यादेव,अतो नोक्तो व्यभिचारः,अत्रत्यश्चन्द्रकान्तस्तु दाहकारणतायामेव न प्रविष्टः, अतो न प्रतिबन्धकः किन्त्वन्यथासिद्ध इति भावः। प्रतिबन्धकत्वं चात्र–'कारणीभूताऽभावप्रतियोगित्व'रूपम्, उत्तेजकत्वं च 'प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वरूपम्। दाहस्य कारणीभूतोऽभावः–उत्तेजकाभावविशिष्टमणेरभावः,–तत्प्रतियोगित्वम् उत्तेजकाभावविशिष्टमणौ, स च प्रतिबन्धकः,–तादृशप्रतिबन्धकतावच्छेदकीभूतोऽभावः–उत्तेजकाभावः, तत्प्रतियोगित्वम् उत्तेजके इति। **अत्रेदं बोध्यम्**–विशिष्टाभावस्त्रिधा भवति–विशेषणाभावप्रयुक्तः, विशेष्याभावप्रयुक्तः, विशेषणविशेष्योभयाभावप्रयुक्तश्च। यथा—यत्र केवलं पुरुषः, तत्रापि भवति प्रत्ययो–'दण्डी पुरुषो नास्ती'ति, अयं 'दण्डविशिष्टपुरुषाभावः' विशेषणाभावप्रयुक्तः, यत्र तु दण्डोऽस्ति न तु पुरुषः, तत्रापि 'दण्डी पुरुषो नास्ती'ति भवति प्रत्ययः, स च विशेष्याभावप्रयुक्तः, विशेषणस्य दण्डस्य सत्त्वेऽपि विशेष्यस्य पुरुषस्याऽसत्त्वात्। यत्र च न दण्डो नापि पुरुषः, तत्र 'दण्डी पुरुषो नास्ती'ति प्रत्ययो विशेषणविशेष्योभयाभावप्रयुक्तो बोध्यः। प्रकृते तु–उत्तेजक–प्रतिबन्धक–वह्नीनां समवधानस्थले उत्तेजकाभावरूपविशेषणाऽसत्त्वेन विशेषणाभावप्रयुक्तो विशिष्टाभावो वर्ततेऽतो दाहो भवति। तत्र च वह्निरेव वर्तते तत्र स्थले उत्तेजकाभावरूपविशेषणस्य सत्त्वेऽपि मणिरूपविशेष्यस्याऽसत्त्वेन विशेष्याभावप्रयुक्तो विशिष्टाभावो वर्ततेऽतो दाहो भवति। यत्र उत्तेजको वह्निश्च तादृशस्थले उत्तेजकाभावरूपविशेषणस्य मणिरूपविशेष्यस्य चाऽभावादुभयाभावप्रयुक्तो विशिष्टाभावो वर्ततेऽतो दाहो भवति। यत्र च प्रतिबन्धकवह्नी, तत्रोत्तेजकाभावविशिष्टमणेरेव सत्त्वान्न दाह इति। 'उत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वादि'त्यस्य उत्तेजकाभावविशिष्टप्रतिबन्धकाभावस्य हेतुत्वादि'त्यर्थो बोध्यः, यत्र वस्त्रादिप्रदेशे वह्निः प्रतिबन्धकमन्त्रश्च, तत्र दाहो न भवति, किन्तु मन्त्रान्तरे प्रयुक्ते यदि दाह उत्पद्यते तदा मन्त्रान्तरस्यैवोत्तेजकत्वम्, तथा च 'अभावीयविशेषणतासम्बन्धेन रूपध्वंसात्मकदाहं प्रति मन्त्रान्तरात्मकोत्तेजकस्योद्देश्यतासम्बन्धेन देशान्तरे योऽभावस्तस्य सामानाधिकरण्यरूपं यद्वैशिष्ट्यं तद-

**सादृश्यमपि न पदार्थान्तरं, किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्।**

वच्छिन्नस्य देशान्तरीयमन्त्रस्योद्देश्यतासम्बन्धावच्छिन्नप्रतियोगिताकाऽभावः स्वरूपसम्बन्धेन कारण-मिति। एवं यत्र वस्त्रादिप्रदेशे वह्निः प्रतिबन्धिकौषधिश्च, तत्र दाहो न भवति, किन्तु ओषध्यन्तरे प्रयुक्ते यदि दाह उत्पद्यते तदा ओषध्यन्तरस्यैवोत्तेजकत्वम्, अत्र ओषध्यन्तरात्मकोत्तेजकस्य सत्त्वेऽपि किञ्चिदवच्छेदेन संयोगेन तदभावसत्त्वात् दाहाऽनुपपत्तिः स्यादत उत्तेजकद्रव्यस्य दैशिकविशेषण-तासम्बन्धोऽभ्युपेतव्यः, दैशिकविशेषणतया तु न द्रव्यस्याऽव्याप्यवृत्तित्वमिति न दाहाऽनुपपत्तिरिति, तथा च 'अभावीयविशेषणतासम्बन्धेन रूपादिध्वंसात्मकदाहं प्रति ओषध्यन्तरात्मकोत्तेजकस्य दैशिकविशेषणतासम्बन्धेन देशान्तरे योऽभावस्तस्य सामानाधिकरण्यरूपं यद्वैशिष्ट्यं तदवच्छिन्नस्य देशान्तरीयौषधिविशेषस्य दैशिकविशेषणतासम्बन्धावच्छिन्नप्रतियोगिताकाऽभावः स्वरूपसम्बन्धेन कारणमिति। एवं यत्र वस्त्रादिदेशे वह्निश्चन्द्रकान्तश्च, तत्र दाहो न भवति, किन्तु सति सूर्यकान्ते दाह उत्पद्यते, अतः सूर्यकान्त एवोत्तेजकः, तथा च 'अभावीयविशेषणतासम्बन्धेन रूपादिध्वंसात्मक-दाहं प्रति उत्तेजकस्य दैशिकविशेषणतासम्बन्धेन देशान्तरे योऽभावस्तस्य सामानाधिकरण्यरूपं यद्वैशिष्ट्यं तदवच्छिन्नस्य देशान्तरीयचन्द्रकान्तस्य दैशिकविशेषणतासम्बन्धावच्छिन्नप्रतियोगिता-काभावः स्वरूपसम्बन्धेन कारणमिति।

नव्यास्तु—भावत्वाऽभावत्वयोर्विरोधाद् भावाभावसाधारणविशेषणतासंसर्गे मानाभावात् संयो-गस्याऽव्याप्यवृत्तित्वेऽपि तन्निरूपिताधिकरणतायाः स्वरूपसम्बन्धरूपाया व्याप्यवृत्तितया तादृशाधि-करणत्वस्यैवोत्तेजकतावच्छेदकसम्बन्धत्वं प्रतिबन्धकतावच्छेदकसम्बन्धत्वं च स्वीकुर्वन्ति, तथा च 'उत्तेजकीभूता या मणिव्यक्तयो याश्चौषधिव्यक्तयः तावदन्यतमत्वावच्छिन्नोद्देश्यत्वसम्बन्धावच्छिन्न-प्रतियोगिताकाभावस्य,—उत्तेजकीभूता या मन्त्रव्यक्तयः तावदन्यतमत्वावच्छिन्नोद्देश्यत्वसम्बन्धाव-च्छिन्नप्रतियोगिताकाभावस्य, च—निरुक्ताधिकरणत्वाऽभावीयदैशिकविशेषणत्वोभयघटितसामानाधि-करण्यरूपं यद्वैशिष्ट्यं तद्विशिष्टा याः प्रतिबन्धकीभूतमणिव्यक्तय ओषधिव्यक्तयश्च तावदन्यतमत्वाव-च्छिन्ननिरुक्ताधिकरणत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य, निरुक्तोत्तेजकाभावत्रयस्य च,— उद्देश्यत्वदैशिकविशेषणत्वोभयसम्बन्धघटितसामानाधिकरण्यरूपं यद्वैशिष्ट्यं तद्विशिष्टा याः प्रतिबन्ध-कीभूतमन्त्रव्यक्तयस्तावदन्यतमत्वावच्छिन्नोद्देश्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य च अभा-वीयदैशिकविशेषणतासम्बन्धेन हेतुत्वमि'ति बोध्यम्।

यदाशंकितं 'सादृश्यमप्यतिरिक्तः पदार्थ' इति, तदपि निराकरोति—**सादृश्यमपीति**। न पदार्था-न्तरम्=न द्रव्यत्वादिसप्तपदार्थविभाजकधर्मभिन्नपदार्थविभाजकधर्मवत्, सादृश्यं स्वतन्त्रःपदार्थो नास्तीति यावत्॥ ननु तर्हि किंस्वरूपं सादृश्यम्? इत्यत आह—**किन्तु तद्भिन्नत्वे सतीति**। भेद-वैशिष्ट्यं धर्मेषु सामानाधिकरण्यसम्बन्धेन बोध्यम्। 'तद्भिन्नत्वे सती'त्यनुपादाने, तद्गतभूयोधर्मवत्त्वस्य 'चन्द्रसदृशं मुख'मित्यादौ स्व(चन्द्र)गतभूयोधर्मवत्त्वस्य स्वस्मिन्नेव (चन्द्रे) सत्त्वात् सादृश्यनिरूपके चन्द्रादौसादृश्यस्य गतत्वाच्चन्द्रे चन्द्रसदृशत्वापत्तिः स्यात्, तद्वारणाय 'तद्भिन्नत्वेसती'ति। 'अनुयोगि-तासम्बन्धेन तद्गतभूयोधर्मवत्त्व'मित्येवं वा सादृश्यस्वरूपं वक्तव्यम्, 'तद्भिन्नत्वे सती'त्यनुपादेयमेव अस्मिन्पक्षे चन्द्रगतभूयोधर्माणामनुयोगितासम्बन्धेन मुखे एव सत्त्वान्नोक्तदोषः। घटभिन्नत्वेन सिंह-काकयोरपि सादृश्यापत्तिवारणाय-**भूयांस** इति॥ ननु 'गगनं गगनाकारं सागरः सागरोपमः। राम-रावणयोर्युद्धं रामरावणयोरिवे'त्यादावव्याप्तिर्मूलोक्तसादृश्यलक्षणस्येति चेन्न। युगभेदप्रयुक्ततत्तद्युग-विशिष्टगगनादिभेदविवक्षया तत्रोपमालंकाराङ्गीकारात्, विशिष्टयोर्भेदाऽनङ्गीकारे तु 'तद्गतधर्मवत्त्व'-

**यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति ॥ २ ॥**

**क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।**

**द्रव्याणि,**

**द्रव्याणि विभजते—क्षित्यबित्यादि । क्षितिः पृथिवी, आपो जलानि, तेजो वह्निः, मरु·**

मात्रं सादृश्यं वक्तव्यम्, प्रतिपाद्यमानस्यार्थस्याऽन्वयाऽभावाच्च तत्र 'अनन्वयाऽलंकारो बोध्यः ॥ सादृश्यघटकधर्मश्च क्वचिज्जातिरूपः यथा 'घटसदृशः पट'इत्यादौ पृथिवीत्वात्मकः, क्वचिच्च उपाधिरूपः यथा 'गोत्वं नित्यं तथाऽश्वत्वमपी'त्यादौ नित्यत्वात्मकोपाधिरूप इति ॥ 'चन्द्रसदृशं मुख'मित्यादौ लक्षणसत्त्वं दर्शयति—**यथेति** । 'चन्द्रसदृशं मुखमित्यादौ चन्द्रगताऽऽह्लादकत्व—जातीयाऽऽह्लाद· कत्वं मुखेऽनुयोगिनि चन्द्रप्रतियोगिकं सादृश्यं बोध्यम्, सामानाधिकरण्यसम्बन्धेन चन्द्रभेदविशिष्टा ये चन्द्रगताह्लादकत्वजातीया आह्लादकत्वादयो ( मुखगता ) धर्मास्त एव मुखे चन्द्रसादृश्य· मिति । यद्यपि आह्लादयोः चन्द्रमुखदर्शनजन्ययोः सुखयोर्भिन्नत्वेन आह्लादकत्व( आह्लादजनकत्व ) स्यापि मुखे चन्द्रे च विभिन्नत्वं तथापि स्वाश्रयोपधायकत्वसम्बन्धेन एकवैजात्यविशिष्टत्वमेव मुखच· न्द्रसाधारणो धर्मो बोध्यः । स्वम्—आह्लादकत्वद्वयगतं वैजात्यं, तदाश्रयम् आह्लादकत्वम्, तदुपधाय· कत्वं चन्द्रादाविति । आदिना वर्तुलत्वतैजस्त्वादिपरिग्रहः । सादृश्यमिति शेषः ॥ एवं स्वत्वमपि न पदार्थान्तरम् । आदानप्रतिदानपरिवर्त्तनादिक्रियात्मको यः स्वाभिलाषानुकूलो विनियोगस्तद्योग्य· त्वमेव स्वत्वं धर्मविशेष इति । तादृशक्रियायोग्यताप्रयोजकन्तु दानप्रयुक्तप्राप्तिविषयत्वं बोध्यम् । वस्तुतस्तु यथेष्टविनियोगविषयकज्ञानविषयता एव स्वत्वम्, सा चाऽधिकरणात्मिका न त्वतिरिक्ता । एवं प्रतियोगिता—प्रतियोगिरूपा, आधेयता आधेयात्मिका, कार्यता कार्यात्मिका, अधिकरणता अधि· करणात्मिका, अनुयोगिता अनुयोगिरूपा, विषयता विषयात्मिका, विषयिता विषयिरूपा, प्रकारता प्रकारात्मिका, विशेष्यता विशेष्यस्वरूपा, इत्येवं तत्तदन्तर्भावो बोध्यः । **नव्यास्तु**—सादृश्यम· तिरिक्तमेव, न चाऽतिरिक्तत्वे पदार्थविभागव्याघात इति वाच्यम्, तस्य साक्षात्परम्परया वा तत्त्व· ज्ञानोपयोगिपदार्थमात्रनिरूपणपरत्वात् । एवमधिकरणत्वमपि, तस्य संयोगादिरूपत्वे बदरकुण्ड· संयोगस्य द्विष्ठत्वेन कुण्डे बदरमितिवत् बदरे कुण्डमित्यपि प्रयोगः स्यात् । एवं प्रतियोगित्वम· प्यतिरिक्तपदार्थः । प्रतियोगितायाः प्रतियोगिस्वरूपत्वे भूतलादेरपि घटादिप्रतियोगितापत्तिः, घटः प्रतियोगितावानित्याधारताप्रतीत्यनुपपत्तिश्च । एवं विषयत्वादिकमप्यतिरिक्तपदार्थ इति **वदन्ति** ॥२॥

मूले **क्षित्येति** । क्षितिः, आपः, तेजः, मरुत्, व्योम, कालः, दिक्, देही, मनः, द्रव्याणी· त्यर्थः ॥ मुक्तावल्यां—**द्रव्याणि विभाजते** इति । तथा च 'सर्वानुगतद्रव्यत्वव्याप्यपृथिवीत्वा· द्यवान्तरधर्मप्रकारकज्ञानानुकूलव्यपारानुकूलवर्तमानकालीनकृतिमानेकत्वाश्रयो मूलकार इति बोधः ॥ **क्षितिरिति** । नित्याऽनित्यभेदेन घटपटादिभेदेन च पृथिव्या बहुत्वेऽपि पृथिवीत्वजात्यभिप्रायेणैकव· चनप्रयोगः । एवमन्यत्रापि यथायोगमूहनीयम् । अत्र क्षयार्थक'क्षि'धातोः 'स्त्रियां क्तिन्' इति सूत्र· विहित'क्तिन्'प्रत्ययान्त'क्षिति'शब्दस्य क्षयवाचकत्वात् 'क्षिति'शब्दस्य प्रकृतोपयुक्तमर्थमाह **क्षितिः पृथिवीति** । क्षीयन्ते जना अस्यामिति बाहुलकादधिकरणे 'क्तिन्' । अप्'शब्दस्य 'अप्तृन्नि'त्यादिपा· णिनिसूत्रे शब्दपरत्वादाह—**आपो जलानीति** । 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डज'मिति कोशात्प्रतापस्यापि 'तेजः'शब्दवाच्यत्वात् प्रकृते तेजःपदार्थमाह—**तेजो—वह्निरिति** । वह्न्यादि· रित्यर्थः । देवविशेषस्यापि 'मरु'च्छब्दवाच्यतया प्रकृतोपयोगिनमर्थमाह—**मरुद्—वायुरिति** ।

**मरुद् वायुः, व्योम आकाशः, कालः समयः, दिग् आशा, देही आत्मा, मनः, एतानि नव द्रव्याणीत्यर्थः। ननु द्रव्यत्वजातौ किं मानम् ? नहि तत्र प्रत्यक्षं प्रमाणं, घृतजतुप्रभृतिपु द्रव्यत्वाग्रहादिति चेद् ?**

'व्योम'शब्दस्य 'परमे व्योमन्नि'तिश्रुतौ परमात्मनि प्रयोगादाह-**व्योम-आकाश** इति। 'काल'-शब्दस्य अन्तकादिबोधकत्वादाह-**कालः-समय** इति। 'दिश्'-अतिसर्जने-इति धातुना निष्पन्न'दिक्'-शब्दस्य दानार्थकत्वात् प्रकृतोपयोगिनमर्थमाह-**दिग-आशेति**। देहविशिष्टार्थ-वाचकाद् 'देही'तिशब्दाद् देहावयवानामुपस्थितेः-ईश्वरस्य च देहाऽभावाद् 'देहि'पदेन संग्रहो न स्यात्, अत आह-**देही-आत्मेति**। तथा च स्ववृत्तिचेष्टानुकूलप्रयत्नवत्त्वसम्बन्धेन देहविशिष्ट एव प्रकृते 'देहि'शब्दार्थः, न तु समवायेन तद्विशिष्ट इति न देहावयवोपस्थितिः, न वेश्वरस्याऽसंग्रहः, यथा भूताऽभिभवस्थले मनुष्यादिशरीरवृत्तिचेष्टानुकूलप्रयत्नवत्त्वं भूतात्मनि वर्तते तथा भगवच्छ्री'स्वामिनारायण-राम-कृष्णादिशरीरवृत्तिविलक्षणव्यापारात्मकचेष्टानुकूलप्रयत्नवत्त्वस्य परमात्मनि सत्त्वात् तादृशसम्बन्धेन देहविशिष्टत्वं देहित्वं परमात्मनि सुघटमिति। **वृद्धाः**-भूतावेशन्यायेनेश्वरस्य शरीरमिच्छन्ति, **अन्ये** तु-संसार्यदृष्टवशादीश्वरस्य शरीरं मन्यन्ते, **केचित्तु**-ईश्वरोऽशरीर एवेति-विवादाद् 'देहि'शब्दार्थो न देहविशिष्टः, अपि तु-आत्मत्वजात्यवच्छिन्नः,-इत्यभिप्रेत्याह-**आत्मेति**। 'मनः'शब्देऽन्यार्थपरत्वशंकाया अभावात् तत्पर्यायप्रदर्शनं न कृतमिति॥ मीमांसकास्तमसो न्यायशास्त्राभिमतनवद्रव्यभिन्नद्रव्यत्वं मन्यन्ते, तन्मतं निराकर्तुं संख्याबोधकपदपूरणेनाह-**एतानि नव द्रव्याणीति**। नवत्वस्याऽपेक्षाबुद्धिविशेषविषयतात्मकस्य पृथिवीत्वादावन्वयो बोध्यः, तथा च 'द्रव्यत्वं पृथिवीत्वादिनवोपाध्यन्यतमव्याप्य'मिति लभ्यते। यद्यप्यत्र विभागवाक्यादेव द्रव्यविभाजकधर्माणां नवत्वं लभ्यते, तथापि नवत्वज्ञानेऽप्रामाण्यज्ञानाऽनुत्पत्त्यर्थं 'नवे'तिपदं प्रयुक्तम्-तथाहि-संख्यावाचकपदाभावे 'क्षित्यप्तेज'इत्यादिविभागवाक्याद्विभाजकधर्मेषु क्षितित्वादिषु नवत्वलाभेऽपि दशत्वादिसंख्यानिषेधाऽलाभात् क्षितित्वादिषु दशत्वसंख्यासन्देहसंभवाद् उत्पन्ननवत्वज्ञानेऽप्रामाण्यसंशयसंभवेन 'द्रव्यत्वस्य द्रव्यविभाजकक्षितित्वादिमनस्त्वान्तान्यतमव्याप्यत्व'निश्चयो न स्यात्, निश्चयाऽभावे च सति गुणादिषु क्षितित्वाद्यन्यतमरूपव्यापकाभावेन द्रव्यत्वरूपव्याप्याभावसाधनाऽनुपपत्तिः स्यात्, अतस्तादृशदशत्वसंख्याव्यवच्छेदाय 'नव'ग्रहणं कृतमिति बोध्यम्। द्रव्याणीत्यस्य 'द्रव्य'मितिवचनविपरिणामेन क्षित्यादिष्वन्वयः, तथा च यतः क्षित्यादिकं द्रव्यम् अतो नव द्रव्याणीत्यन्वयलाभः॥ 'द्रव्याणी'त्यस्य यदि 'गुणवन्ती'त्यर्थस्तदा गुणानां शक्यतावच्छेदकत्वे 'गौरवम्, 'उत्पन्नं सद् द्रव्यं क्षणं निर्गुणं निष्क्रियं च तिष्ठती'ति नियमेनोत्पन्नघटादौ द्रव्यशब्दप्रयोगानुपपत्तिश्च, अतो 'द्रव्याणी'त्यस्य द्रव्यत्वजातिविशिष्टानीत्यर्थो वाच्यः, तत्र द्रव्यत्वात्मकस्य धर्मस्य जातिस्वरूपत्वं न संभवति, प्रमाणाऽभावादित्याशंकते-**ननु द्रव्यत्वजाताविति**। द्रव्यत्वस्य जातित्वे-इत्यर्थः। 'किं'शब्दो जिज्ञासार्थकः। मानम्=प्रमाणम्॥ ननु यथा 'अयं घटः' 'अयं घटः'-इति समानाकारप्रतीत्या घटत्वजातिः प्रत्यक्षा, तथा 'इदं द्रव्यम्' 'इदं द्रव्य'मिति समानाकारप्रतीत्या द्रव्यत्वजातिरपि प्रत्यक्षप्रमाणसिद्धेत्यत आह-**नहि तत्रेति**। तत्र=द्रव्यत्वजातौ। 'इदं द्रव्य'-मित्यादिसमानाकारकप्रतीत्यात्मकं दर्शितं यत् प्रत्यक्षं प्रमाणं तन्नास्तीत्यर्थः। द्रव्यत्वस्य जातित्वग्रहे प्रत्यक्षप्रमाणाऽभावस्य स्थलं दर्शयति-**घृतेति**। घृतलाक्षेक्षुरसादौ पण्डितानाम् 'इदं द्रव्य'मिति प्रतीतिसद्भावेऽपि हिरण्यादिष्वेव द्रव्यशब्दोल्लिखितप्रतीतिमतां पामराणां शास्त्रीयज्ञानाऽभावेन

**न, कार्यसमवायिकारणताऽवच्छेदकतया, संयोगस्य, विभागस्य, वा समवायिका-**

घृतादिपृथिव्यादौ 'इदं द्रव्य'मिति प्रतीतिविरहान्नवद्रव्येषु द्रव्यत्वरूपजातिसाधकानुगतप्रतीतेरभावान्नोक्तप्रतीत्या द्रव्यत्वजातिसिद्धिर्भवतीति भावः। द्रव्यत्वाऽग्रहात्='द्रव्यत्वप्रकारको द्रव्यविशेष्यको यो-'द्रव्य'मिति निश्चयस्तदभावात्॥ शंकां निषिध्योत्तरयति-**न, कार्यसमवायीति।** कार्यसमवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धेरित्यन्वयः। कार्यम्=पृथिवीजलतेजःपवनानां द्व्यणुकादयोऽनित्यगुणाः कर्माणि च। एते सर्वे समवायसम्बन्धेन द्रव्येषूत्पद्यन्ते, द्रव्यं च तान् प्रति तादात्म्यसम्बन्धेन कारणं भवति, समवायसम्बन्धेन कार्यं प्रति तादात्म्यसम्बन्धेन यत् कारणं भवति तदेव समवायिकारणमित्युच्यते, तथा च गुणे गुणोत्पत्तिवारणाय समवायेन द्व्यणुकप्रभृतिकार्यं प्रति तादात्म्येन द्रव्यस्य कारणत्वं ( समवायिकारणत्वम् ) इति कार्यकारणभावस्यावश्यकतया तद्बलात् 'समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्ना द्रव्यनिष्ठा कारणता लभ्यते', ततश्च यत्र यत्र कारणतात्वं तत्र तत्र किञ्चिद्धर्मावच्छिन्नत्व'मिति कपालादिनिष्ठकारणतादौ सहचारदर्शनेन 'किञ्चिद्धर्मावच्छिन्नत्वाऽभाववदवृत्तिकारणतात्व'मिति व्याप्तिज्ञानं जायते, ततः 'कारणतात्ववती कारणते'ति पक्षधर्मताज्ञानं जायते, ततः 'किञ्चिद्धर्मावच्छिन्नत्वव्याप्य-कारणतात्ववती कारणते'ति परामर्शज्ञानम्, ततः-"समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नद्रव्यनिष्ठकारणता,-किञ्चिद्धर्मावच्छिन्ना, -कारणतात्वात्'-या या कारणता सा सा किञ्चिद्धर्मावच्छिन्ना, घटत्वावच्छिन्नकार्यतानिरूपितकपालनिष्ठकारणतावदि"त्यनुमानेन निरवच्छिन्नकारणताया असंभवाद् द्रव्यनिष्ठकारणतायां किञ्चिद्धर्मावच्छिन्नत्वसिद्धौ यद्धर्मावच्छिन्ना द्रव्यनिष्ठा कारणता स एव किञ्चिद्धर्मो द्रव्यत्वजातिरूप इति। अत्र किञ्चिद्धर्मावच्छिन्नत्वं स्वरूपसम्बन्धेन साध्यम्, कारणतात्वं च स्वरूपसम्बन्धेन हेतुः, कार्यसमवायिकारणता-पक्षः, तत्र कार्यतावच्छेदकं कार्यत्वं न प्रागभावप्रतियोगित्वरूपम्, प्रागभावप्रतियोगित्वस्य ध्वंससाधारणत्वादननुगतत्वाच्च, किन्तु-'स्व( सत्ता )वृत्तिमहाकालभेदवत्त्व-कालिकविशेषणत्व-समवायैतत्त्रितयसम्बन्धेन सत्त्वरूपकार्यत्वमेव कार्यतावच्छेदकम्, तथा च-निरुक्तत्रितयसम्बन्धावच्छिन्नसत्तानिष्ठाऽवच्छेदकतानिरूपितसमवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिरिति मूलपंक्तेरर्थः। अत्र-महाकालवारणाय 'स्ववृत्तिमहाकालभेदवत्त्वस्य' कार्यतावच्छेदकसम्बन्धकोटौ निवेशः, स्ववृत्तिभेदवत्त्वं दैशिकविशेषणतया बोध्यम्, आकाशादिवारणाय कालिकसम्बन्धनिवेशः, ध्वंसवारणाय समवायसम्बन्धनिवेशः। केचित्तु-सत्त्वविशिष्टकार्यत्वमेव कार्यतावच्छेदकमिति वदन्ति॥ ननु समवायेन नीलं प्रति स्वाश्रयसमवेतद्रव्यत्वसम्बन्धेन नीलस्य कारणतास्वीकारेण गुणे गुणोत्पत्तिवारणसंभवात् समवायेन कार्यं प्रति तादात्म्येन द्रव्यस्य कारणत्वे मानाभावः, किञ्च-स्ववृत्तिमहाकालभेदवत्त्व-कालिकविशेषणत्व-समवायैतत्त्रयाणां कार्यतावच्छेदकताघटकसम्बन्धकल्पनाया गौरवात् तेन सम्बन्धेन तस्य कार्यतावच्छेदकत्वाऽसंभवेन नोक्तरीत्या द्रव्यत्वजातिसिद्धिः स्याद् अतः प्रकारान्तरेण द्रव्यत्वजातिसिद्धिमाह-**संयोगस्येति।** संयोगस्य समवायिकारणतावच्छेदकतया वा द्रव्यत्वजातिसिद्धेरित्यन्वयः। चतुर्विंशतिगुणविभाजकधर्माणां मध्ये केषांचित् पृथिव्यादिमनोऽन्तसकलवृत्तितावच्छेदकत्वाऽसंभवात् केषांचिन्नित्यगुणवृत्तित्वाच्च संयोगत्वविशिष्टस्य कार्यत्वमभिहितम्। कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वनियमेन संयोगत्वावच्छिन्नं प्रति द्रव्यत्वेन कारणत्वमावश्यकम्। तथा चानुमानाकारः-'समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नसंयोगनिष्ठकार्यतानिरूपिता या तादात्म्य-

रणताऽवच्छेदकतया, द्रव्यत्वजातिसिद्धेरिति ।

सम्बन्धावच्छिन्ना द्रव्यनिष्ठा कारणता सा,—किञ्चिद्धर्मावच्छिन्ना,—कारणतात्वात्, घटगतकार्यतानिरूपितकपालनिष्ठकारणतावदि'ति । अत्र यः किञ्चिद्धर्मः स एव द्रव्यत्वजातिरूप इति ॥ ननु विभुद्वयस्य नित्यसंयोगाङ्गीकर्तृमते संयोगत्वस्य समवायसम्बन्धेन कार्यतावच्छेदकत्वं न संभवति, नित्यसंयोगेऽपि संयोगत्वस्य सत्त्वात्, कालिकसमवायोभयसम्बन्धेन तस्य कार्यतावच्छेदकत्वे कालिकसमवाययोः कार्यतावच्छेदकताघटकसम्बन्धत्वकल्पने गौरवमित्यस्वरसादाह—**विभागस्येति** । विभागस्य वा समवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धेरित्यन्वयः । नित्यसंयोगाङ्गीकर्तृमतेऽपि नित्यविभागस्याश्रयताया असंभवेन नित्यविभागाऽसंभवात् । तथा चानुमानप्रकारः—'समवायसम्बन्धावच्छिन्नविभागत्वावच्छिन्नविभागनिष्ठकार्यतानिरूपिता या तादात्म्यसम्बन्धावच्छिन्ना द्रव्यनिष्ठा कारणता सा,- किञ्चिद्धर्मावच्छिन्ना,—कारणतात्वादिति' । अत्र यः किञ्चिद्धर्मः स द्रव्यत्वमिति । तस्य च 'व्यक्तेरभेदा'दिवक्ष्यमाणबाधकविरहात् जातिलक्षणसत्त्वाच्च जातित्वमित्यैदम्पर्यम् । **इदमुपलक्षणम्**—द्वित्वादिसमवायिकारणतावच्छेदकतयाऽपि द्रव्यत्वजातिसिद्धिर्बोध्या,—अनुमानाकारस्तु—'समवायसम्बन्धावच्छिन्नद्वित्वत्वावच्छिन्नद्वित्वनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्ना या द्रव्यनिष्ठा कारणता सा,—किञ्चिद्धर्मावच्छिन्ना,—कारणतात्वादिति' । **एवं**— घटादिद्रव्यवति कपाले द्रव्यान्तराऽनुत्पत्त्या समवायेन घटादिद्रव्यस्यैव द्रव्यान्तरोत्पादप्रतिबन्धकत्वं वक्तव्यमिति प्रतिबन्धकतावच्छेदकतया द्रव्यत्वजातिसिद्धिर्बोध्या, प्रतिबध्यतावच्छेदकं तु स्ववृत्तिमहाकालभेदवत्त्वकालिकविशेषणत्व-समवायैतत्त्रितयसम्बन्धावच्छिन्नद्रव्यत्वमेव, तथा चानुमानाकारः—'निरुक्तत्रितयसम्बन्धावच्छिन्नद्रव्यत्वनिष्ठावच्छेदकतानिरूपितसमवायसम्बन्धावच्छिन्नप्रतिबध्यतानिरूपिता या समवायसम्बन्धावच्छिन्ना द्रव्यनिष्ठा प्रतिबन्धकता सा,—किञ्चिद्धर्मावच्छिन्ना—प्रतिबन्धकतात्वादिति' ॥ आकाशसमवेताऽसमवेतत्वे सति आकाशसमवेतजातिर्द्रव्यत्वम्, सत्तावारणाय—'सत्य'न्तम्, अभावादिवारणाय—विशेष्यदलम्, पृथिवीत्वादिवारणाय—'आकाशे'ति, परमाण्वाकाशसंयोगवारणाय—जातिपदम् । गुणवत्त्वव्यापकसत्ताभिन्नजातिर्वा द्रव्यत्वम्, पृथिवीत्वादिवारणाय—'व्यापकत्व'निवेशः । 'समवायसम्बन्धेन तादृशद्रव्यत्वजातिमत्त्वं' द्रव्यसामान्यलक्षणम् । ननु द्रव्यत्वजातिमत्त्वस्य लक्षणत्वे लक्षणलक्ष्यतावच्छेदकयोरभिन्नत्वे सति 'परार्थानुमितिं प्रति शाब्दबोधद्वारा पञ्चावयववाक्यस्य यत् प्रयोजकत्वं' तन्नोपपद्येत, यतो द्रव्यं,—स्वेतरभिन्नं,—द्रव्यत्वा'दित्याकारकद्रव्यपक्षकेतरभेदानुमापकद्रव्यत्वस्य लक्षणत्वे उपनयात् पक्षधर्मतामात्रबोधवादिमते 'द्रव्यत्ववद्द्रव्य'मित्याकारकशाब्दबोधस्याऽव्युत्पन्नतया पञ्चावयववाक्याधीनशाब्दबोध एव न स्यात्, तथा च उपनयाऽनुत्थानप्रसंगेन अनुमितिविलोपः स्यादिति चेत्? तर्हि 'समवायेन 'गुणवत्त्व'मेव द्रव्यसामान्यलक्षणं वक्तव्यम्, गुणवत्त्वस्य कालिकेन गुणादावतिव्याप्तिवारणाय—समवायेनेत्युक्तम् । ननु तथापि 'उत्पन्नं सद् द्रव्यं क्षणं निर्गुणं निष्क्रियं च तिष्ठती'ति नियमादुत्पत्तिकालीने घटादौ समवायेन गुणाऽसत्त्वादव्याप्तिरिति चेन्न । समवायेन गुणवद्वृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षणान्न दोषः । 'समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतावच्छेदकजातिमत्त्वं'वा द्रव्यसामान्यलक्षणम् । गुणत्वकर्मत्वभिन्नत्वे सति सत्तासाक्षाद्व्याप्या या जातिस्तद्वत्त्वं' 'क्रियावद्वृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं वा तल्लक्षणम् । अव्याप्त्यतिव्याप्त्यसंभवैतद्दोषत्रयरहितो धर्मो लक्षणम् । **अव्याप्तिः**=लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्, यथा गोर्लक्षणं 'कपिलरूपवत्त्व'मित्यत्र लक्ष्यतावच्छेदकगोत्वसमानाधिकरणो यः 'कपिलरूपवत्त्वं नास्ती'त्यभावस्तत्प्रतियोगित्वं कपिलरूपवत्त्वे वर्तमानमिति

**ननु दशमं द्रव्यं तमः कुतो नोक्तम् ?, तद्धि प्रत्यक्षेण गृह्यते। तस्य च रूपवत्त्वात् कर्मवत्त्वाच्च द्रव्यत्वम्। तद्धि गन्धशून्यत्वान्न पृथिवी, नीलरूपवत्त्वाच्च न**

'कपिलरूपवत्त्व'मव्याप्तम्। **अतिव्याप्तिः**=लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्, यथा गोर्लक्षणं 'शृङ्गित्व'मित्यत्र लक्ष्यतावच्छेदकगोत्वसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकगोत्वावच्छिन्नप्रतियोगिताको 'गौर्ने'त्याकारकभेदो महिषादिवृत्तिस्तत्सामानाधिकरण्यं शृङ्गित्वे वर्तमानमिति 'शृङ्गित्व'मतिव्याप्तम्। **असंभवः**-लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम्, यथा गोर्लक्षणम्-'एकशफवत्त्व'मित्यत्र लक्ष्यतावच्छेदकगोत्वव्यापकीभूतो य 'एकशफवत्त्वाभाव'स्तत्प्रतियोगित्वमेकशफवत्त्वे-इत्येकशफवत्त्वम् असंभवदोषग्रस्तम्। एते दोषा असाधारणत्वस्य विघटकाः। अतिव्याप्तेः लक्ष्यतावच्छेदकव्याप्यत्वस्य, इतरयोश्च-लक्ष्यतावच्छेदकव्यापकत्वस्य विघटकत्वात्। एतेषां दूषकताबीजं तु-'गौः-इतरभिन्ना,-शृङ्गित्वा'दितीतरभेदाऽनुमापकेऽतिव्याप्तिमति साधने 'साध्याभाववद्वृत्तित्वा'त्मकव्यभिचारः,अव्याप्तिमति असंभववति च तादृशे साधने भागाऽसिद्धि-स्वरूपाऽसिद्धो। लक्षणस्य लक्षणं-'दूषणत्रयरहितधर्मत्वम्', तदेवाऽसाधारणधर्मत्वमिति। असाधारणत्वं च-'लक्ष्यतावच्छेदकसमनियतत्वम्,समनियतत्वं च-स्व(लक्षण) समानाधिकरणभेदप्रतियोगितावच्छेदको यो धर्मः(लक्ष्यतावच्छेदकरूपः)तत्समानाधिकरणभेदप्रतियोगितानवच्छेदकत्वम्, यथा 'सास्नावत्त्व'समानाधिकरण-घटादिभेदप्रतियोगितानवच्छेदकगोत्वसमानाधिकरणकपिलगोभेदप्रतियोगितानवच्छेदकत्वं सास्नावत्त्वे वर्तते,-इति तस्याऽसाधारणधर्मत्वमुपपन्नम्। कपिलरूपवत्त्वस्य तु तादृशलक्ष्यतावच्छेदकगोत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वान्न गोत्वसमनियतत्वम्, एवं गोत्वस्य महिषे यः शृङ्गित्वसमानाधिकरणगोभेदस्तत्प्रतियोगितावच्छेदकत्वाद् अश्वे च य एकशफवत्त्वसमानाधिकरणगोभेदस्तत्प्रतियोगितावच्छेदकत्वान्न गोत्वसमनियतत्वं शृङ्गित्वे एकशफवत्त्वे चेति तयोर्न लक्षणत्वम्। ननु 'लक्ष्यतावच्छेदकसमनियतधर्मत्वमिति' लक्षणलक्षणस्य लक्ष्यतावच्छेदकगोत्वसमनियते सास्नादिमत्त्वे इव गवादीतरभेदे गोत्वे च वर्तमानत्वादतिव्याप्तिरिति चेन्न। 'लक्ष्यतावच्छेदकभिन्नत्वे सति व्यावृत्ति(गवादीतरभेद)भिन्नत्वे सति लक्ष्यतावच्छेदकसमनियतत्वे सति धर्मत्व'मित्येवं लक्षणलक्षणं वक्तव्यमिति।

ननु क्रियावत्त्वं गुणवत्त्वं च यदि द्रव्यलक्षणम्, तस्य तमसि सत्त्वेन दशमद्रव्यस्य तमसो विद्यमानत्वे 'नव द्रव्याणी'ति कथनमयुक्तमित्यभिप्रायेण मीमांसकः शंकते-**नन्विति**। दशमं द्रव्यम्=पृथिवीत्वादिनवोपाध्यन्यतमशून्यद्रव्यम्। **तमः कुतो नोक्तम्**=कस्य बाधकस्य सत्त्वात् तमसो द्रव्यत्वं नाऽभिहितमित्यर्थः॥ ननु तमसः सत्त्वे एव किं मानम् ? सत्त्वे वा कथं द्रव्यत्वम् ? द्रव्यत्वे वा कुतः पृथिवीत्वादिशून्यत्वम् ? इत्याशंकात्रयं क्रमेण वारयति-**तद्धीत्यादिना**। तद्धि=तमो हि। हिः हेतौ। प्रत्यक्षेण=प्रत्यक्षप्रमाणरूपचक्षुरिन्द्रियेण। गृह्यते=अबाधितज्ञानविषयं क्रियते। तथा च तमो यतश्चक्षुषा गृह्यतेऽतस्तमसः(सत्त्वं)पदार्थत्वमिति भावः। ननु तमसः सिद्धावपि तस्य द्रव्यत्वे किं मानमित्याशंकायां तमसि द्रव्यत्वसाधकाऽनुमानप्रमाणमाह-**तस्येति**। तमस इत्यर्थः। चकारो द्रव्यत्वमित्यनेनाऽन्वेति॥ **रूपवत्त्वादिति**। तथा चानुमानम्-'तमः-द्रव्यम्, समवायेन रूप(नील)वत्त्वात्,-नीलघटवदि'ति। ननु तमसि रूपे मानाभावः, 'नीलं तम' इति प्रत्यक्षप्रतीतेर्भ्रान्तित्वादतो हेत्वन्तरमाह-**कर्मवत्त्वादिति**। कर्मवत्त्वं समवायेन विवक्षितम्, तेन जन्यमात्रस्य कालिकसम्बन्धेन कर्मवत्त्वेऽपि न व्यभिचारः, न च स्वरूपाऽसिद्धिः, 'तमश्चलति' 'चलतिच्छाये'ति प्रतीत्या कर्मवत्त्वसिद्धेः,तथा चानुमानम्-'तमः-द्रव्यम्,-समवायेन कर्मवत्त्वात्, अस्मदादिशरीरव

जलादिकम् । तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणमिति चेद् ? न, आवश्यकतेजो-

दिति । इदमुपलक्षणम्–'तमः।खलु चलं नीलं पराऽपरविभागवत् । प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हती'ति 'लीलावती'स्थश्लोकोक्तानि परत्वाद्याश्रयत्वादीनि हेत्वन्तराण्यपि ग्राह्याणि, तथाचानुमानम्–'तमः–द्रव्यम्,–समवायेन परत्ववत्त्वात्' । 'तमः–द्रव्यम्,–समवायेन अपरत्ववत्त्वात्' । 'तमः–द्रव्यम्,–समवायेन विभागवत्त्वात्' । 'तमः–द्रव्यम्,–समवायेन संयोगवत्त्वात् । 'तमः,–अतिरिक्तद्रव्यम्,–प्रसिद्धनवद्रव्यवैधर्म्यात् । इत्थं च–'तमः–पृथिवीत्वादिमनस्त्वान्ताऽन्यतमभिन्नद्रव्यविभाजकधर्मवत्,–एतादृशान्यतमशून्यत्वे'सति द्रव्यत्वा'दिति परिशेषानुमानं फलितम् । अत्र हेतौ 'सत्य'न्ताऽसिद्धीर्निरस्यति–तच्च गन्धशून्यत्वादिति । 'तमः–पृथिव्यनन्तर्भूतम्,–समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नप्रतियोगिताकाभावाधिकरणत्वात्,–सुवर्णवदि'ति । प्राचीनग्रन्थेषु जलादिभेदसाधने नानाहेतून्यासः,–यथा–'तमः–जलानन्तर्भूतम्,–शीतस्पर्शाऽभावात्,–घटवत्' । तमः–तेजोऽनन्तर्भूतम्,–उष्णस्पर्शाऽभावात्,–घटवत्' । 'तमः–वाय्वनन्तर्भूतम्, सदागतिमत्त्वाऽभावात्,–घटवत्' 'तमः–वाय्वनन्तर्भूतम्,–स्पर्शाऽभावात्,–आकाशवत्' । 'तमः–आकाशादिप्रत्येकपञ्चाऽनन्तर्भूतम्,–समवायेन रूपवत्त्वात्,–घटवत् । 'तमः–न गुणाद्यन्तर्भूतम्,–गुणवत्त्वादिति । इतितत्तद्धेतुना जलत्वाऽभावादेः प्रातिस्विकरूपेण साधनमनुचितम्, एकेनैव 'नीलरूपवत्त्वादि'तिहेतुना जलत्वादिमनस्त्वान्तान्यतमशून्यत्वसाधनसंभवादित्यभिप्रायेणाह–नीलरूपवत्त्वाच्चेति । समवायेन नीलरूपाधिकरणत्वादित्यर्थः । न।जलादिकम्=जलतेजोवाय्वाकाशकालदिगात्ममनोऽनन्तर्भूतमित्यर्थः । तथा चानुमानम्–'तमः–जलाद्यनन्तर्भूतम्,–समवायेन नीलरूपाऽधिकरणत्वात्,–नीलघटवदि'ति । न नु 'तमः–न रूपिद्रव्यम्,–आलोकाऽसहकृतचक्षुर्ग्राह्यत्वात्,–आलोकाऽभाववत्'–इत्यनुमानेन रूपिद्रव्यभिन्नत्वसिद्धौ 'नीलरूपवत्त्वेन तमसि कथं जलत्वादिमनस्त्वान्तान्यतमशून्यत्वसिद्धिरित्याशंकां 'रूपिद्रव्यभिन्नत्व'–साधकहेतोरालोकादौ व्यभिचारप्रदर्शनेन परिहरति—तत्प्रत्यक्षे चेति । तमःप्रत्यक्षे चेत्यर्थः । आलोकनिरपेक्षम्=आलोकसंयोगाऽसहकृतं, चक्षुः = चक्षुःसंयोगादिघटितसामान्यसामग्री । कारणम्=उत्पादप्रयोजकमित्यर्थः । तथा च द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषप्रत्यक्षत्वावच्छिन्नं प्रति । आलोकसंयोगस्य न कारणत्वम्, आलोकादौ व्यभिचारात्, किन्तु—आलोकतमःप्रभृतिभिन्न द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषप्रत्यक्षे एवेति,—'आलोकाऽसहकृतचक्षुर्ग्राह्यत्व'रूपहेतोः 'रूपिद्रव्यभिन्नत्वा'त्मकसाध्याभाववति आलोके सत्त्वाद् व्यभिचारित्वेन तेन हेतुना तमसो 'रूपिद्रव्यभिन्नत्व'साधनं न सम्भवति, तथा च तमसो रूपिद्रव्यत्वात् 'तमः—न जलाद्यन्तर्भूतम्,—नीलरूपवत्त्वा'दित्यनुमानं निराबाधमिति भावः । नैयायिकस्तमसः सप्तमपदार्थेऽभावे ऽन्तर्भावं कुर्वन् मीमांसकमतं खण्डयति—न, आवश्यकतेजोभावेनेति । प्रकृष्टमहदुद्भूताऽनभिभूतरूपवत्तेजस्त्वावच्छिन्नाऽभावेनेत्यर्थः । तेजस्त्र्यणुकसत्त्वेऽपि तमःप्रतीतेरनुभवसिद्धत्वात् महत्त्वे प्रकृष्टत्वविशेषणं, चक्षुरादितेजस्सत्त्वेऽपि तमःप्रतीतेः उद्भूतत्वनिवेशः, हिरण्यादितेजःसत्त्वेऽपि तमःप्रतीतेः अनभिभूतत्वनिवेशः, एतादृशविशेषणविशिष्टतेजःसामान्याभावस्य 'तमः'शब्दार्थतया तमसो न द्रव्यत्वमिति भावः । तमसोऽभाव एव तेजः किं न स्यादित्याशंकां वारयितुं तेजसि 'आवश्यकत्वं' विशेषणम्, उष्णस्पर्शभास्वररूपबुद्धेरन्यथाऽनुपपत्तेस्तेजसो भावरूपत्वमावश्यकमिति लभ्यते । उपपत्तौ='इदंतम'इति प्रत्यक्षनिर्वाहे । द्रव्यान्तरकल्पनायाः=कॢप्तद्रव्यातिरिक्तद्रव्यस्य कालसम्बन्धितायाः । अन्याय्यत्वात्=अप्रामाणिकत्वात् । तथा च 'मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणादि'ति नियमेन 'इदं

ऽभावेनैवोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात्। रूपवत्ताप्रतीतिस्तु भ्रमरूपा, कर्मवत्ताप्रतीतिरप्यालोकापसरणौपाधिकी भ्रान्तिरेव। तमसोऽतिरिक्तद्रव्यत्वेऽन-

तम'इति प्रत्यक्षमेव तमसि प्रमाणं वक्तव्यम्, प्रौढप्रकाशकतेजःसामान्याभावस्य तादृशप्रत्यक्ष विषयत्वे बाधकाऽभावाद् भवदुक्तहेतूनां तमसो द्रव्यान्तरसाधकत्वं न न्याय्यमिति भावः। ननु तेजोऽभावश्चेत् तमः, कथं तत्र 'नीलं तम' इति रूपवत्ताप्रतीतिः ?, अभावस्य नीरूपत्वादित्याशंकायामाह–**रूपवत्तेति**। तुः—अवधारणे। 'नीलं तम'इतिप्रत्यक्षप्रतीतिः भ्रमरूपैवेत्यर्थः। यथा 'नीलं नभः'इत्यत्र नीलत्वाऽभाववति नभसि नीलत्वप्रकारकं ज्ञानं भ्रमः, तथा 'नीलं तमः'इत्यत्र नीलत्वाऽभाववति अभावे नीलत्वप्रकारकं ज्ञानं भ्रम एव, बाधकाभावादिति भावः। ननु रूपवत्ताप्रतीतेर्भ्रान्तित्वेऽपि 'तमश्चलती'ति प्रतीतेः प्रमात्वात् 'कर्मवत्त्व'हेतुना द्रव्यत्वं सेत्स्यतीत्यत आह–**कर्मवत्ताप्रतीतिरपीति**। 'अपि'शब्दः–उक्तप्रतीतिसमुच्चायकः। 'तमश्चलती'ति चलनक्रियावत्ताप्रत्यक्षप्रतीतिरपीत्यर्थः। **आलोकेति**। आलोकसमवेताऽपसरणात्मकक्रियाविषयिणीत्यर्थः। भ्रान्तिरेव=आलोकक्रियाऽभाववति तमसि आलोकक्रियावत्त्वज्ञानस्य भ्रमत्वमित्यर्थः। औपाधिकी=उप-समीपवर्तिनि पदार्थे आधीयते—स्वधर्मानिति उपाधिः तदधीनेत्यर्थः। "चरति" (४।४।८) इति सूत्रेण तृतीयासमर्थादुपाधिशब्दात् 'ठक्' प्रत्ययः, उपाधिना चरति प्राप्नोतीति 'औपाधिकः' स्त्रियां "टिड्ढाणञ्" (४।१।१५) इति सूत्रेण ङीपि कृते "औपाधिकी"तिरूपम्। स्फटिके जपाकुसुमसम्बन्धाद् यथा लौहित्यप्रत्ययः, तथा प्रतियोग्यात्मकाऽऽलोकसम्बन्धात् तमसि आलोकसमवेतक्रियाविषयिणी तादृशप्रतीतिरौपाधिकीति। ननु 'इदं रजत'मिति भ्रमानन्तरं 'नेदं रजत'मिति बाधनिश्चयादेव पूर्वतनप्रतीतेर्भ्रमत्वं कल्प्यते, नतूत्तरकाले बाधनिश्चयाऽभावे, तद्वत् 'तमः–नीलं चलती'तिप्रतीत्युत्तरकाले 'तमः–न नीलं न चलती'त्याकारकबाधनिश्चयस्य कदाप्यनुत्पादात् कथं 'तमो नीलं चलती'ति प्रतीतेर्भ्रान्तित्वम् ? किञ्च–समवायसम्बन्धस्य सिद्धिकाले–'रूपवान् घट'—इति विशिष्टबुद्धिः,–विशेषणविशेष्यसम्बन्धविषया,–विशिष्टबुद्धित्वा'दित्यनुमितौ स्वरूपसम्बन्धानां संसर्गतया विषयत्वसम्भवेऽपि तानपहाय अनुमितिविषयतया अतिरिक्तसमवायो यथाऽङ्गीकृतः, तथा 'इदं तमः'–इति प्रत्यक्षप्रतीतावपि प्रौढप्रकाशकतेजःसामान्याभावस्य विषयत्वसम्भवेऽपि तमपहाय तादृशप्रत्यक्षप्रतीतिविषयतया तमसोऽतिरिक्तद्रव्यत्वं स्वीक्रियेत, तत्स्वीकारे 'तमो नीलम्' 'तमश्चलती'तिप्रतीत्योर्भ्रमत्वाऽकल्पनलाघवस्याऽपि सम्भवादित्यत आह—**तमस** इति। अतिरिक्तद्रव्यत्वे=दशमद्रव्यत्वस्वीकारे। अनन्ताऽवयवादीत्यादिना–उत्पत्तिध्वंसपरिग्रहः। **तथा** च–तमो यदि द्रव्यं स्यात् तर्हि अक्लृप्ताऽनन्तावयवसमवेतं स्यात्'–'यतः अक्लृप्ताऽनन्ताऽवयवसमवेतं न भवति अतो न द्रव्यमिति तर्केण द्रव्यत्वज्ञानप्रतिबन्धसम्भवात् क्रियादिहेतुनाऽपि तमसो न द्रव्यत्वसिद्धिः। किञ्च–'गुणवान् घट'इति विशिष्टबुद्धिः,–विशेषणविशेष्यसम्बन्धविषये'त्यनुमितावनन्तस्वरूपाणां संसर्गतया विषयत्वकल्पने गौरवात् एकस्समवायोऽनुमितिविषयतयाऽङ्गीकृतः। 'इदं तम'—इति प्रत्यक्षे त्वेकस्य प्रौढप्रकाशकतेजःसामान्याभावस्य विषयत्वस्वीकारे लाघवात्,–अतिरिक्तद्रव्यस्य विषयत्वस्वीकारे एव अनन्तावयवकल्पनारूपगौरवात् त्वदुक्तदृष्टान्तवैषम्येण प्रौढप्रकाशकतेजस्सामान्याभावस्य प्रत्यक्षप्रतीतिविषयत्वमावश्यकम्, एवं च लाघवात् क्लृप्तप्रौढप्रकाशकतेजस्सामान्याभावस्य प्रत्यक्षविषयत्वे सिद्धे 'तमो नीलं' 'तमश्चलती'तिप्रतीत्योर्भ्रमत्वकल्पनागौरवस्य फलमुखत्वेनाऽदोषत्वादित्यैदम्पर्यम्। ननु तमस्तेजोऽभावाऽनतिरिक्तत्वेऽपि, सुवर्णं तु द्रव्यान्तरं स्यात्, तथाहि–'सुवर्णं–द्रव्यम्, पीतरूपवत्त्वात्'। 'सुवर्णं–न पृथिव्यन्तर्भूतम्,–अनुच्छिद्यमानजन्यद्रव·

न्तावयवादिकल्पनागौरवं च स्यात्। सुवर्णस्य यथा तेजस्यन्तर्भावस्तथाऽग्रे वक्ष्यते।

अथ गुणा रूपं रसो गन्धस्ततः परम् ॥ ३ ॥
स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम्।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम्।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥

गुणान् विभजते – अथ गुणा इति । एते गुणाश्चतुर्विंशतिसंख्याकाः

---

त्वाधिकरणत्वात्–'। 'सुवर्णं,–न जलाद्यन्तर्भूतम्,–पीतरूपवत्त्वात्'। ततः–'सुवर्णं,—क्लृप्तद्रव्यविभाजकान्यतमभिन्नद्रव्यविभाजकधर्मवत्,–तादृशद्रव्यविभाजकाऽन्यतमशून्यत्वे सति द्रव्यत्वादि'ति परिशेषानुमानेन दशमद्रव्यत्वं सिद्ध्यतीत्यत आह–सुवर्णस्येति। यथा=येन प्रकारेण,—अनुमानेनेतियावत्। तेजस्यन्तर्भावः=तैजआत्मकत्वम्,–तेजस्त्वावच्छिन्नत्वमिति यावत्। तथाऽग्रे वक्ष्यते=तेजोनिरूपणाऽवसरे निरूपयिष्यते, तद्यथा—'सुवर्णम्,–तैजसम्,–असति प्रतिबन्धकेऽत्यन्ताऽनलसंयोगे सत्यप्यनुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वात्'–यत्र साध्यं नास्ति तत्र हेतुर्नास्ति,—यथा पृथिवीति=न च—'सुवर्णं–पार्थिवम्,—जन्यद्रवत्व-पीतिम-गुरुत्वाश्रयत्वात्,–पीतघृतवदित्यनुमानेन सुवर्णस्य पार्थिवत्वमिति वाच्यम्। अत्यन्ताऽनलसंयोगे सति घृतादिपृथिव्यां द्रवत्वनाशदर्शनेन, सुवर्णस्य अत्यन्तानलसंयोगे सति च अनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पार्थिवत्वानुपपत्तेः। तत्र पीतद्रव्य(पृथिवी)द्रवत्वनाशप्रतिबन्धकं तु द्रवद्द्रव्यान्तरम् 'अत्यन्तानलसंयोगी पीतिमगुरुत्वाश्रयः, द्रवत्वनाशविजातीयरूपप्रतिबन्धकद्रवद्द्रव्यान्तरसंयुक्तः,–अत्यन्तानलसंयोगे सत्यप्यनुच्छिद्यमानद्रवत्वपीतिमाऽधिकरणत्वे सति गुरुत्वात्,–जलमध्यस्थपीतघृतादिवदि'त्यनुमानेन कल्प्यते। तस्य च उष्णस्पर्शभास्वररूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धादनुपलब्धिस्तस्मात्सुवर्णं तैजसमिति।

मूले तृतीयकारिकायां–अथ गुणा इति। गुणत्वजात्यवच्छिन्ना इत्यर्थः। ते च–रूपम्। रसः गन्धः। स्पर्शः। सङ्ख्या। परिमितिः=परिमाणम्। पृथक्त्वम्। संयोगः। विभागः। परत्वम्। अपरत्वकम्=अपरत्वम्। बुद्धिः। सुखम्। दुःखम्। इच्छा। द्वेषः। यत्नः=प्रयत्नः। गुरुत्वकम्=गुरुत्वम्। द्रवत्वम्। स्नेहश्च। संस्कारश्च। अदृष्टम्=धर्मश्च, अधर्मश्च। शब्दः। इति चतुर्विंशतिगुणाः। एव चेत्येवकारः–अयोगव्यवच्छेदार्थकः। 'गुणत्वं रूपादिचतुर्विंशत्यन्यतमत्वव्याप्य'मितिव्याप्तिर्बोध्या। चतुर्विंशतीति सम्यक् ख्यातिः अपेक्षाबुद्धिविशेषविषयत्वरूपा, गुणे गुणाऽनङ्गीकारात्। मुक्तावल्यां–गुणान् विभजते–इति। 'सर्वानुगतगुणत्वव्याप्यरूपत्वाद्यवान्तरधर्मप्रकारकज्ञानाऽनुकूलव्यापारानुकूलवर्तमानकालीनकृतिमानेकत्वाश्रयो मूलकार'इति बोधः। एते=कारिकोक्ताः। गुणाः='गुण' पदवाच्याः। चतुर्विंशतिसंख्याकाः=रूपत्वादिशब्दत्वान्तगुणविभाजकचतुर्विंशतिधर्मान्यतमधर्मवन्त इति सम्यक्ख्याताः। यद्यपि विभागवाक्यादेव गुणविभाजकधर्माणां चतुर्विंशतित्वं लभ्यते, तथापि विभागवाक्यात् पञ्चविंशतित्वादिनिषेधाऽलाभेन तादृशधर्मेषु पञ्चविंशतित्वसंशयसम्भवेन उत्पन्नचतुर्विंशतित्वज्ञानेऽप्रामाण्यसंशयसम्भवात् तन्निरासाय 'चतुर्विंशति'पदं प्रयुक्तम्। ननु लघुत्वमृदुत्व-कठिनत्वादीनामतिरिक्तगुणानां सत्त्वात् पृथक्त्वस्यान्योन्याभावात्मकत्वाच्च रूपत्वादिचतुर्विंशतिधर्माणामेव कथं विभाजकत्वम्? इत्याशङ्कानिवृत्त्यर्थं चतुर्विंशतिगुणस्वीकारे सूत्रकारकणाद

**कणादेन कण्ठतश्चशब्देन च दर्शिताः। तत्र गुणत्वजातिसिद्धिरग्रे वक्ष्यते ॥ ३-५ ॥**

सम्मतिमाह—**कणादेनेति**। कण्ठतः="रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वाऽपरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः' ( वै० १।१।६ ) इति विभागसूत्रे सप्तदश कण्ठेनोक्ताः॥ **'च'शब्देनेति**। सूत्रस्थ'च'शब्देन— गुरुत्व–द्रवत्व–स्नेह–संस्कार–धर्माऽधर्म–शब्दाः समुच्चिताः। ते च सर्वे मिलित्वा चतुर्विंशतिगुणा इह व्यवहृताः। तथा च सूत्रक्रमेण चतुर्विंशतिधा विभागकरणान्नोक्तदोषः, तत्र लघुत्वस्य गुरुत्वाऽभावरूपत्वात् मृदुत्वकठिनत्वयोरवयवसंयोगविशेषरूपत्वान्नाऽधिकगुणाः, एवं 'घटः पटो ने'त्यन्योन्याभावसाधकप्रतीतितो 'घटः पटात्पृथगि'ति प्रतीतेर्विलक्षणत्वात् पृथक्त्वं गुणान्तरमिति न न्यूनगुणाः। ननु चतुर्विंशतौ किं नाम गुणत्वं ?, न च जातिविशेषः, तत्र प्रमाणाऽभावात्, इत्यत आह—**तत्रेति**। चतुर्विंशतिगुणेष्वित्यर्थः। गुणत्वजातेः सिद्धिस्तु **अग्रे**=गुणनिरूपणाऽवसरे ८६ कारिकाया व्याख्याने अनुमानेन वक्ष्यते, तद्यथा—"द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा,—किञ्चिद्धर्मावच्छिन्ना,—कारणतात्वाद्,—दण्डनिष्ठघटकारणतावदि'त्यनुमानाच्चतुर्विंशतिगुणसाधारणगुणत्वजातिसिद्धिरिति। तत्र रूपत्वादेः सत्ताया वा न्यूनाऽतिरिक्तदेशवृत्तित्वान्नाऽवच्छेदकत्वम्, अतश्चतुर्विंशत्यनुगतं किञ्चिदवच्छेदकं वाच्यं तदेव गुणत्वमिति, तस्य च 'व्यक्तेरभेदा'दिजातिबाधकविरहात् जातित्वमिति बोध्यम् ॥ अत्रानुमाने—द्रव्यसामान्यभेदकर्मसामान्यभेदोभयविशिष्ट—सामान्यवन्निष्ठकारणतात्वेन पक्षत्वं बोध्यम्, ननु रूपादिशब्दान्तगुणसाधारणकारणताया अप्रसिद्धत्वात् कथं निरुक्तरूपेण पक्षत्वम् ? इति चेदत्र **प्राञ्चः**—रूपादिषु सर्वेष्वेककारणताया अप्रसिद्धत्वेऽपि प्रत्येकं प्रसिद्धा याः कारणतास्तासां निरुक्तरूपेण तावदन्यतमत्वेन वा पक्षत्वसंभवान्नोक्तदोष इत्याहुः। अन्ये तु वाच्यतासम्बन्धेन व्यवहारं प्रत्यन्वयव्यतिरेकाभ्यां व्यवहर्तव्यस्य हेतुतया वाच्यतासम्बन्धावच्छिन्ना या 'गुण'इत्याकारकशब्दनिष्ठा कार्यता तन्निरूपिततादात्म्यसम्बन्धावच्छिन्नकारणताया एव रूपादिशब्दान्तवृत्तेः प्रसिद्धत्वान्न पक्षाऽप्रसिद्धिः। **अपरे** तु—स्वानुकूलकृतिमत्त्वसम्बन्धेन व्यवहारं प्रति समवायसम्बन्धेन व्यवहर्तव्यज्ञानस्य हेतुतया 'गुण'इत्याकारकशब्दनिष्ठा या तादृशसम्बन्धावच्छिन्नकार्यता तन्निरूपितसमवायसम्बन्धावच्छिन्नज्ञाननिष्ठकारणतानिरूपितविषयत्वसम्बन्धावच्छिन्नाऽवच्छेदकताया एव रूपादिशब्दान्तवृत्तेः प्रसिद्धत्वात् तादृशावच्छेदकताया एव पक्षत्वसंभवात् प्रतिज्ञाघटक'कारणता'पदस्य कारणतावच्छेदकसाधारणप्रयोजकत्वपरतया तादृशावच्छेदकताया एव कारणत्वशब्दार्थत्वान्न पक्षाऽप्रसिद्धिरित्याहुः॥ **आचार्यास्तु**। ज्ञायमानलिंगस्यानुमितिकरणतया 'द्रव्यम्—इतरभिन्नं—गुणादि'त्यत्र द्रव्यत्वावच्छेदेनेतरभेदविधेयकानुमितौ रूपादिशब्दान्तगुणानां लिंगविधया कारणत्वात् तस्याः प्रसिद्धत्वेन तस्या एव पक्षत्वसंभव इत्याहुः॥ **वस्तुतस्तु**—गुणत्वविशिष्टवैशिष्ट्यावगाहि'गुणवानि'तिबुद्धित्वावच्छिन्नं प्रति गुणत्वप्रकारकनिश्चयत्वेन हेतुतायाः सकलनैयायिकाभिमततया तादृशकारणता एव पक्षः, तस्या द्रव्यकर्मभिन्नसामान्यवन्निष्ठकारणतारूपत्वात्, तादृशकारणतायां विषयत्वसम्बन्धावच्छिन्नावच्छेदकतया सिद्धगुणत्वस्य 'व्यक्त्यैक्यादि'रूपबाधकाऽभावात् जातिरूपत्वं, तस्य विनिगमनाविरहादन्यथानुपपत्तेश्च सकलगुणवृत्तित्वं सिद्ध्यतीति बोध्यम्।

असमवेताऽसमवेत—नित्यसमवेतसत्तासाक्षाद्व्याप्यजातिः—गुणत्वम्, असमवेताः परमाणवस्तत्राऽसमवेतत्वकथनेन द्रव्यत्वसत्त्योर्वारणम्, नित्यसमवेतत्वकथनेन कर्मत्वस्य वारणम्, सत्तासाक्षाद्व्याप्यत्वकथनेन रूपत्वरसत्वादिवारणम् ॥ "कर्माऽन्यत्वे सति द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं गुणसामान्यलक्षणम्। कर्मण्यतिव्याप्तिवारणाय-कर्मान्यत्वे सतीति। सत्ताभा

उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा ।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च ॥ ६ ॥
भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च ।
तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥

कर्माणि विभजते-उत्क्षेपणमिति । कर्मत्वजातिस्तु प्रत्यक्षसिद्धा । एवमुत्क्षेप-

---

दाय द्रव्येऽतिव्याप्तिवारणाय-सत्ताभिन्नेति । द्रव्यत्वमादाय पुनः द्रव्येऽतिव्याप्तिवारणाय-द्रव्यत्व-व्यापकतावच्छेदकेति 'जाति'विशेषणम् ॥ 'द्रव्यकर्मभिन्ने समवायेन वर्तमाना या जातिस्तद्वत्त्वं' वा गुणलक्षणम् । कालिकेन तादृशगुणत्ववति ध्वंसादावतिव्याप्तिवारणाय-समवायेनेति । सत्ताजातिमादाय द्रव्ये कर्मणि चाऽतिव्याप्तिवारणाय-द्रव्यकर्मभिन्ने-इति ॥ एतयोर्लक्षणयोर्भेदघटिततया गौरवम्, अतो लघुलक्षणम्-'समवायेन गुणत्वजातिमत्त्वम्' बोध्यम् । न 'चैवं' लक्षणलक्ष्यतावच्छेदकयोरैक्यापत्तिरिति वाच्यम् । स्वार्थानुमाने तदैक्यस्याऽकिञ्चित्करत्वात् । यद्यपि परार्थानुमानस्थले लक्षणलक्ष्यतावच्छेदकयोरैक्ये सति शाब्दबोधद्वारा पञ्चावयववाक्यस्य यत् परार्थानुमितिप्रयोजकत्वं तन्नोपपद्येत, यतः-'गुणः-स्वेतरभिन्नः,-गुणत्वादि'त्याकारक-गुण-पक्षकेतरभेदानुमापकगुणत्वस्य लक्षणत्वे उपनयात् पक्षधर्मतामात्रबोधवादिमते 'गुणत्ववान् गुण'-इत्याकारकशाब्दबोधस्याऽव्युत्पन्नतया पञ्चावयववाक्याधीनशाब्दबोध एव न स्यात्, तथा च उपनयाऽनुत्थानापत्तिः स्यात् । तथापि उपनयात् पक्षधर्मतामात्रभानवादिमते नैतल्लक्षणम्, अपि तु उपनयात् 'साध्यव्याप्यहेतोः पक्षे'बोधवादिमते एवैतल्लक्षणम्, 'दण्डवान् रक्तदण्डवानि'त्याकारकबोधस्य सर्वानुभवसिद्धतया 'इतरभेदव्यापकगुणत्ववान् गुण' इति बोधस्य संभवादिति ध्येयम् ॥

मूले-**उत्क्षेपणमिति** । ऊर्ध्वदेशसंयोगाऽनुकूलो व्यापारः-उत्क्षेपणम् । व्यापारः=क्रिया । अधोदेशसंयोगानुकूलो व्यापारः-अपक्षेपणम् । शरीरसन्निकृष्टदेशसंयोगानुकूलो व्यापारः-आकुञ्चनम् । शरीरविप्रकृष्टदेशसंयोगानुकूलो व्यापारः-प्रसारणम् । उत्तरदेशसंयोगानुकूलो व्यापारः-गमनम् । कर्माणि=कर्मत्वजातिविशिष्टानि । एतानि=निरुक्तोत्क्षेपणादीनि । **पञ्चेति** । 'कर्मत्वं उत्क्षेपणादिपञ्चान्यतमत्वव्याप्य'मिति व्याप्तिरूपनिर्णयलाभार्थं 'पञ्च'पदप्रयोगः । यद्यपि विभागवाक्यादेव कर्मविभाजकधर्मेषु पञ्चत्वरूपा संख्या लब्धा भवति, तथापि संख्यावाचकपदाऽभावे उत्क्षेपणादिगमनान्तान्यतमभिन्नेषु कर्मत्वनिषेधाऽप्रतिपादनात् कर्मत्वस्य कर्मविभाजकोत्क्षेपणत्वादिगमनत्वान्तान्यतमव्याप्यत्वनिश्चयो न भवति, एतन्निश्चयश्च संख्याबोधकपदपूरणेनैव भवतीति भावः । पञ्चत्वम् अपेक्षाबुद्धिविषयतारूपम् बोध्यम् ॥ **भ्रमणमिति** । भ्रमणम्-प्रसिद्धमश्वादेश्चक्राकारधावनम् । रेचनम्-पक्षिणो गगनात्पृथिव्यामवतरणम् । स्यन्दनम्-जलस्य गतिः । ऊर्ध्वज्वलनम्-वह्नेर्गतिः । तिर्यग्गमनम्-पवनादेर्गतिः । तदेतानि कर्माणि तु **'गमनादेव लभ्यते**=गमनेऽन्तर्भवन्तीत्यर्थः । गमनत्वम्-उत्क्षेपणादिभिन्नत्वे सति उत्तरसंयोगानुकूलक्रियात्व'मिति ॥ मुक्तावल्यां-**कर्माणि विभजते**-इति । सर्वानुगतकर्मत्वव्याप्योत्क्षेपणत्वाद्यवान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलवर्तमानकालीनकृतिमानेकत्वाश्रयो मूलकार'इति बोधः ॥ **कर्मत्वजातिस्त्विति** । 'नित्याऽवृत्तिसत्तासाक्षाद्व्याप्यजातिः-कर्मत्वम् । 'नित्याऽवृत्तित्व'कथनेन द्रव्यत्व-गुणत्व-सत्तानां वारणम् । 'सत्तासाक्षाद्व्याप्यत्व'कथनेन-उत्क्षेपणत्वादीनां वारणम् । 'जाति'कथनेन-जन्यगुण-कर्मान्यतरत्ववारणम् ॥ **प्रत्यक्षसिद्धेति** । 'चलती'तिप्रत्यक्षप्रतीतिसिद्धा ॥ **एवमुत्क्षेपणत्वादि-**

णत्वादिकमपि ॥ ६ ॥ ननु भ्रमणादिकमपि पृथक्कर्म पञ्चकर्माधिकतया कुतो नोक्तमत आह–भ्रमणमित्यादि ॥ ७ ॥

सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥

---

**कमपीति** । प्रत्यक्षसिद्धमिति शेषः । 'उत्क्षिपती'तिप्रत्यक्षप्रतीतिसिद्धा उत्क्षेपणत्वजातिः । 'अपक्षिपती'तिप्रत्यक्षप्रतीतिसिद्धा–अपक्षेपणत्वजातिः । 'आकुंचती'तिप्रत्यक्षप्रतीतिसिद्धा आकुञ्चनत्वजातिः । 'प्रसारयती'ति प्रत्यक्षप्रतीतिसिद्धा प्रसारणत्वजातिः । 'गच्छती'ति प्रत्यक्षप्रतीतिसिद्धा गमनत्वजातिरिति ॥ **ननु भ्रमणादिकमपीति** । भ्रमणं रेचनं स्यन्दनमूर्ध्वज्वलनं तिर्यग्गमनमपीत्यर्थः । पृथक्=उत्क्षेपणादिभिन्नम् । इदं च हेतुगर्भविशेषणम्, **'अपि'**शब्देन चोत्क्षेपणत्वादिकर्मविभाजकपञ्चान्यतमावच्छिन्नं गृह्यते । तथा च–यथा कर्म उत्क्षेपणत्वादिपञ्चविभाजकधर्मान्यतमावच्छिन्नं तादृशधर्मैर्विभाजितं तथा 'यस्माद् भ्रमणादिकमुत्क्षेपणादिभिन्नं कर्म तस्मात् कर्म अधिकतया उत्क्षेपणत्वादिभिन्नभ्रमणत्वादिपञ्चविभाजकरूपैरपि कुतो न विभाजितमिति फलितोऽर्थः ॥ **अधिकतयेति** । उत्क्षेपणत्वादिपञ्चविभाजकधर्मान्यतमभिन्नभ्रमणत्वादिपञ्चान्यतमवत्तयेत्यर्थः । **कुतो नोक्तमिति** । कस्य बाधकस्य सत्वान्न विभाजितमित्यर्थः ॥ उत्तरन्तु–भ्रमण–रेचनादिस्थले 'गच्छती'त्यनुगतप्रत्ययेन गमनत्वसिद्धया भ्रमणत्वादितिर्यग्गमनत्वान्तपञ्चधर्माणां गमनत्ववैयधिकरण्याऽभावेन विभाजकत्वाऽसंभवादिति ॥ ननु एवम्–'ऊर्ध्वं गच्छति' 'अधो गच्छती'त्यनुगतप्रत्ययेनोत्क्षेपणत्वादीनामपि गमनत्वसिद्धयोत्क्षेपणत्वादिगमनत्वान्तपञ्चधर्माणां परस्परवैयधिकरण्याऽभावेन विभाजकत्वाऽसंभवात् पञ्चधा विभागोऽप्यनुपपन्न इति चेन्न । स्वतन्त्रेच्छेन मुनिना उत्क्षेपणत्वादिगमनत्वान्तपञ्चधर्मैर्विभजनात् तस्य मुनेर्नियोगपर्यनुयोगानर्हत्वात् । नियोगः प्रश्नः, पर्यनुयोगः–निन्दा । **वस्तुतस्तु** । 'गतित्वं' प्रकृते–'उत्क्षेपणादिभिन्नत्वे सति उत्तरदेशसंयोगानुकूलक्रियात्व'मेव विभाजकतावच्छेदकत्वेन अभिमतम्, तेन द्रव्यत्वपृथिवीत्वाभ्यामिव गतित्वोत्क्षेपणत्वाभ्यामपि विभागस्याऽनर्हत्वेऽपि न क्षतिः, निरुक्तगमनत्वस्य उत्क्षेपणत्वादिव्यधिकरणधर्मत्वात् ॥ नन्वेवं पृथिवीत्व–पृथिव्यन्यद्रव्यत्वादिना विभागापत्तिरिति चेत् ! एतदभिप्रायेणैव नियोगपर्यनुयोगानर्हत्वस्योक्तत्वात् ॥ कर्मणो **लक्षणन्तु**–संयोगभिन्नत्वे सति संयोगाऽसमवायिकारणत्वम्' । विभिन्ने परमाणुद्वयेऽदृष्टवशात् क्रिया जायते, तया द्व्यणुकस्य द्रव्यस्य कारणीभूतः परमाणुद्वयसंयोगो भवति, तस्याऽसमवायिकारणं सा क्रियैवेति समन्वयः । शरीरवृक्षावयवद्वियसंयोगस्याऽसमवायिकारणं करवृक्षसंयोगस्तत्राऽतिव्याप्तिवारणाय–संयोगभिन्नत्वे सतीति । रूपादावतिव्याप्तिवारणाय–संयोगेति । घटादावतिव्याप्तिवारणाय–संयोगाऽसमवायिकारणमिति । असमवायि'–पदमपि समवायिकारणघटादावतिव्याप्तिवारणाय बोध्यम् ॥ 'द्रव्यत्वगुणत्वभिन्नत्वे सति सत्तासाक्षाद्व्याप्यजातिमत्त्वम'पि कर्मणो लक्षणं ज्ञातव्यम् । द्रव्यगुणवारणाय–सत्यन्तम् । उत्क्षेपणत्वमादाय अपक्षेपणादावव्याप्तिवारणाय–सत्तासाक्षाद्व्याप्येति ॥ निरुक्तलक्षणयोर्भेदघटितत्वेन गौरवात 'समवायेन कर्मत्वजातिमत्त्व'मिति लघुलक्षणमनुसन्धेयम् । कालिकेन घटादौ कर्मत्वजातेः सत्त्वादतिव्याप्तिवारणाय–समवायेनेति । अत्र लक्षणलक्ष्यतावच्छेदकयोरैक्यापत्तिः पूर्ववद्वारणीयेति ।

**मूले–सामान्यं द्विविधमिति** । सामान्यम्=जातिः । द्विविधम्=द्विप्रकारकम्, द्वे सामान्ये–इति यावत् । तेन 'सामान्यत्वं परसामान्यत्वाऽपरसामान्यत्वान्यतरव्याप्य'मिति व्याप्तिला-

**परभिन्ना च या जातिः सैवापरतयोच्यते ।**
**द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥**
**व्यापकत्वात्पराऽपि स्याद्व्याप्यत्वादपराऽपि च ।**

---

भः । द्वित्वम्—अपेक्षाबुद्धिविषयत्वरूपम् । प्रथमक्षणे 'अयमेकः' 'अयमेकः'—इत्यपेक्षाबुद्धिः, द्वितीयक्षणे 'इमौ द्वा'विति प्रतीतिविषयद्वित्वोत्पत्तिः, तृतीयक्षणे द्वित्वस्य निर्विकल्पकं ज्ञानम् । चतुर्थक्षणे द्वित्वस्य सविकल्पकं प्रत्यक्षम्,—अपेक्षाबुद्धिनाशश्च, पञ्चमक्षणे द्वित्वनाश इति । अपेक्षाबुद्धिः द्वित्वस्य सविकल्पकप्रत्यक्षोपसम्पत्तये क्षणत्रयं तिष्ठति, अन्यानि ज्ञानानि तु क्षणद्वयमेवेति ॥ **परमिति** । परसामान्यमित्यर्थः । परत्वम्—अधिकदेशवृत्तित्वम् । यदपेक्षया यस्य सामान्यस्याऽधिकदेशवृत्तित्वं तत् सामान्यं परमित्यर्थः ॥ **अपरमेव चेति** । अपरसामान्यमित्यर्थः । अपरत्वम्—न्यूनदेशवृत्तित्वम् । यदपेक्षया यस्य सामान्यस्याऽल्पदेशवृत्तित्वं तत् सामान्यम् अपरमित्यर्थः ॥ **द्रव्यादित्रिकेति** । द्रव्यगुणकर्मसु त्रिपु वर्तमाना या सत्ता जातिः सा परजातिरुच्यते—इत्यर्थः । सत्ताया द्रव्यत्वाऽपेक्षयाऽधिकदेशवृत्तित्वेन परसामान्यत्वमुक्तम् ॥ **परभिन्नेति** । परा जातिः सत्ता, तद्भिन्ना या या जातयस्ताः सर्वा अपि अपरा इत्युच्यन्ते, इत्यर्थः । द्रव्यत्वगुणत्वकर्मत्वादयः सत्ताभिन्नजातित्वात् सत्तापेक्षया अपरजातयो बोध्याः । एवं—द्रव्यत्वाऽपेक्षया पृथिवीत्वजलत्वादिजातयोऽपरा बोध्याः । पृथिवीत्वाऽपेक्षया च घटत्वपटत्वादिजातयोऽपरा बोध्याः । एवं—गुणत्वाऽपेक्षया रूपत्वरसत्वादिजातयोऽपराः, रूपत्वाद्यपेक्षया च शुक्लत्वादिजातयोऽपरा बोध्याः । एवं—कर्मत्वाऽपेक्षया उत्क्षेपणत्वादयोऽपरा जातयो बोध्या इति ॥ **केचित्तु**—सैवेत्येवकारो भिन्नक्रमः, अपरतयैवेत्यर्थः । तथा च या जातिः यत्किंचिदपेक्षयापि परा न भवति सा घटत्वादिरूपा केवलाऽपरेत्यर्थः'—इति व्याख्यान्ति । **द्रव्यत्वादिकजातिस्त्विति** । सत्ताभिन्ना अथ च घटत्वशुक्लत्वाद्यन्तिमजातिभिन्ना या द्रव्यत्व–गुणत्व-कर्मत्वजातयः, पृथिवीत्वादयो रूपत्वादयश्च जातयः, ताः पराऽपरा बोध्याः । यथा पृथिवीत्वापेक्षया द्रव्यत्वादेः परत्वम्, सत्तापेक्षया चाऽपरत्वम् । एवं—घटत्वापेक्षया पृथिवीत्वस्य परत्वम्, द्रव्यत्वापेक्षया चाऽपरत्वम् । एवं—रूपत्वाद्यपेक्षया गुणत्वं परम्, अपरं च सत्तापेक्षया । शुक्लत्वापेक्षया रूपत्वं परम्, अपरं च गुणत्वापेक्षयेति ॥ एवम्—उत्क्षेपणत्वाऽपेक्षया कर्मत्वं परम्,—अपरं च सत्तापेक्षयेति ॥ अयं पराऽपरव्यवहारः—उपाधावपि योजनीयः, यथा—प्रमेयत्वाऽपेक्षयाऽभावत्वम् अपरं, परं च प्रागभावत्वाद्यपेक्षया । यथाच—पदार्थत्वापेक्षया भावत्वम् अपरम्, परं च सामान्यत्वविशेषत्वाद्यपेक्षयेति ॥ **व्यापकत्वात्परापि स्यादिति**। यदपेक्षया यस्य व्यापकत्वं तदपेक्षया तस्य परत्वमित्यर्थः, यथा—घटत्वाद्यपेक्षया पृथिवीत्वस्य व्यापकत्वात् परत्वम्, पृथिवीत्वाद्यपेक्षया द्रव्यत्वस्य व्यापकत्वात् परत्वम्, द्रव्यत्वापेक्षया सत्ताया व्यापकत्वात्परत्वमिति ॥ व्यापकत्वम्—स्वभिन्नत्वे सति स्वाधिकरणवृत्तिर्यो व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकोऽत्यन्ताभावस्तदप्रतियोगित्वम् । स्वं—व्याप्या जातिः । यथा घटत्वस्य व्यापकं पृथिवीत्वम्, पृथिवीत्वे घटत्वभिन्नत्वे सति घटत्वाधिकरणे वर्तमानो य उभयवृत्तिधर्मानवच्छिन्नप्रतियोगिताकः पटत्वात्यन्ताभावस्तदप्रतियोगित्वं वर्तत इति पृथिवीत्वं घटत्वस्य व्यापकम् । 'स्वभिन्नत्वे सती'त्यनुपादाने घटत्वाधिकरणे वर्तमानो यो व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकः पटत्वाद्यभावस्तदप्रतियोगित्वस्य घटत्वे सत्त्वाद् घटत्वे घटत्वव्यापकत्वात् स्वस्य स्वापेक्षया परत्वमापद्येत, तच्चात्राऽनभिप्रेतमिति ॥ व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताक' इत्यनुपादाने—घटत्वाधिकरणे वर्तमानो यः पृथिवीत्वजलत्वोभयत्वावच्छिन्नप्रतियोगिताकोऽभावस्तत्प्रति-

सामान्यं निरूपयति–सामान्यमिति। तल्लक्षणं तु नित्यत्वे सत्यनेकसमवेतत्वम्। अनेकसमवेतत्वं संयोगादीनामप्यस्त्यत उक्तं–नित्यत्वे सतीति|नित्यत्वे सति समवे-

योगित्वस्य घटत्वभिन्ने पृथिवीत्वे सत्त्वाद् घटत्वाऽपेक्षया पृथिवीत्वस्य व्यापकत्वाऽनुपपत्त्या परत्वं नोपपद्येतेति। 'अत्यन्त'पदानुपादाने घटत्वाधिकरणे घटे द्रव्ये पृथिवीत्वजातेरन्योन्याभावसत्त्वात् तत्प्रतियोगित्वं पृथिवीत्वे भवेदिति पृथिवीत्वस्य परत्वं न स्यादिति॥ व्याप्यत्वादपराऽपि चेति। यदपेक्षया यस्य व्याप्यत्वं तदपेक्षया तस्याऽपरत्वमित्यर्थः। सत्तापेक्षया द्रव्यत्वस्य व्याप्यत्वाद् अपरत्वमिति। व्याप्यत्वमत्र 'स्वाधिकरणे वर्तमानो यो व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकोऽभावस्तत्प्रतियोगित्वम्। स्वं–व्यापकजातिः। सत्ताधिकरणे कर्मणि च वर्तमानो व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताको द्रव्यत्वाऽभावस्तत्प्रतियोगित्वस्य द्रव्यत्वे सत्त्वात् सत्तापेक्षया व्याप्यत्वाद् अपरत्वमिति॥ 'व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताक'इत्यनुपादाने सत्ताधिकरणे गुणे सत्ताद्रव्यत्वोभयत्वावच्छिन्नाभावमादाय तत्प्रतियोगित्वस्य सत्तायां सत्त्वात् सत्तायाः सत्तापेक्षया व्याप्यत्वप्रसक्त्या अपरत्वमप्यापद्येत, तच्चात्राऽनभिप्रेतमिति॥ मुक्तावल्यां–**सामान्यं निरूपयतीति**। सामान्यत्वात्मकैकोपाध्यभिप्रायेणैकवचनम्। उपाधिर्द्विविधः–सखण्डः, अखण्डश्च, सखण्डोपाधिस्तद्व्यक्तित्वादिरूपोऽनित्यघटादिगतः कल्पितधर्मविशेषः। अखण्डोपाधिस्तु–'समवेतभिन्ननित्यधर्मात्मको गगनत्वादिः। उपाधित्वम्–समवेतभिन्नधर्मत्वमिति॥ लक्षणस्वरूपप्रामाण्यादिप्रकारकज्ञानानुकूलव्यापारो निरूपयतेरर्थः। तथा च 'सामान्यनिष्ठविषयतानिरूपकं यल्लक्षणस्वरूपप्रामाण्यादिप्रकारकं ज्ञानं तदनुकूलव्यापारानुकूलकृतिमान् ग्रन्थकार'इति बोधः॥ विशेषधर्मप्रकारकज्ञानानुकूलव्यापारात्मकविभागस्य 'सामान्यं द्विविध'मित्यस्य लक्षणात्मकविशेषधर्मज्ञानं विनाऽनुपपन्नत्वात् सामान्यस्य लक्षणं दर्शयति–**तल्लक्षणन्त्वित्यादिना**। सामान्यस्य लक्षणन्त्वित्यर्थः। लक्षणस्य प्रयोजनं तु इतरभेदस्य व्यवहारस्य वा सिद्धिः, यथा 'सामान्यम्,–इतरेभ्यो (द्रव्यादिभ्यो) भिद्यते,–नित्यत्वे सति अनेकसमवेतत्वात्' 'सामान्यम्,–सामान्यमितिव्यवहारविषयतावत्,–नित्यत्वे सति अनेकसमवेतत्वात्' यत्र साध्यं नास्ति तत्र हेतुर्नास्ति यथा द्रव्यमिति। एवं लक्षणान्तरेष्वप्यूह्यम्॥ **नित्यत्वे सतीति**। नित्यत्वं ध्वंसाऽप्रतियोगित्वे सति प्रागभावाऽप्रतियोगित्वम्। **अपरे** तु नित्यत्वं न ध्वंसाऽप्रतियोगित्वरूपम्, ध्वंसत्वस्योत्पत्तिविशिष्टाऽभावत्वरूपस्य क्षणभेदेन भिन्नस्य एकरूपाऽभावेन तद्घटितध्वंसप्रतियोगित्वस्याऽप्यननुगततया तदवच्छिन्नप्रतियोगिताकाभावरूपानुगतनित्यत्वाभावात्, न वा ध्वंसप्रतियोगित्वव्यक्त्योः यावत्यस्तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वरूपं नित्यत्वम्, कूटनिवेशे गौरवात्; किन्तु द्रव्यगुणान्यतरत्वावच्छिन्नप्रतियोगिताकैकभेदवत्त्वरूपं परिभाषिकं नित्यत्वं 'सामान्य'स्य लक्षणघटकं वक्तव्यम्, कर्म-विशेष–समवायाऽभावानाम् अनेकसमवेतत्वविरहात्तत्र लक्षणाऽगमनादिति **वदन्ति**॥ **अनेकसमवेतत्वमिति**। अनेकेषु पदार्थेषु समवायसम्बन्धेन वृत्तित्वम्। तथा च 'नित्यत्वसमानाधिकरणाऽनेकनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तिताश्रयत्वं' सामान्यत्वमित्यर्थः। अत्र अनेकत्वम्–एकभिन्नत्वम्, तच्च स्वसमानाधिकरण–यत्किञ्चिदेकत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपम्, समभिव्याहृतपदार्थसम्बन्धिनिष्ठयत्किञ्चिदेकत्वावच्छिन्नप्रतियोगिताकभेदवद्बोधकताया अनेकपदस्याङ्गीकारात्, तथा च 'स्व–समानाधिकरणयत्किञ्चिदेकत्वावच्छिन्नप्रतियोगिताकभेदवत्समवेतत्वं पर्यवसन्नम्, स्वं–लक्ष्यत्वेनाऽभिमतं घटत्वादि, एकत्वं च–तद्व्यक्तित्वादि, तस्य च न तत्तद्व्यक्तित्वत्वेन अनेकपदार्थशरीरे प्रवेशः, अननुगतत्वात्, किन्तु स्वसमानाधिकरणाऽव्यासज्यवृत्तिधर्मत्वेन, एवं च–'स्वाधिकरणवृत्तियत्किञ्चिदव्यासज्यवृत्तिधर्माव-

**तत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तमनेकेति । नित्यत्वे सत्यनेकवृत्तित्वम-**

च्छिन्नप्रतियोगिताकभेदवत्समवेतत्वमितिफलितम्, भवति च-घटत्वाधिकरणेषु घटेषु वर्तमानो यस्य कस्यचिद् अव्यासज्यवृत्तिधर्मावच्छिन्नस्य गगनादिव्यक्तिविशेषस्य भेदः तद्वद्घटेषु समवायेन वर्तमानत्वं घटत्वस्येति । व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशवृत्तिधर्मप्रतियोगिताकभेदस्याऽनभ्युपगमेन घटत्वाधिकरणेषु घटेषु तद्घटव्यक्तिभेदस्तु न गृह्यत एवेति ॥ अथवा एकत्वावच्छिन्नप्रतियोगिताका यावन्तो भेदाः यथासंभवं तावदाश्रयसमवेतत्वमित्यर्थः । अथवा-स्वप्रतियोगिवृत्तित्व-स्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टत्वम्-अनेकसमवेतत्वम्, यथा घटे घटभेदवति घटान्तरे च घटत्वं वर्तते, स्वं-घटभेदः तत्प्रतियोगिघटवृत्तित्वं घटत्वे, पुनः स्वं-घटभेदः तदनुयोगिघटान्तरवृत्तित्वं घटत्वे, इत्युभयसम्बन्धेन घटभेदविशिष्टत्वमेव घटत्वे अनेकसमवेतत्वम् ॥ अथवा-स्व(घट)वृत्तित्व-स्वभिन्न( घटान्तर )वृत्तित्वोभयसम्बन्धेन यत्किञ्चिद्( घट )विशिष्टत्वम् घटत्वेऽनेकसमवेतत्वम् । अथवा-स्व ( तद्व्यक्तित्व )सामानाधिकरण्य-स्वाभाव( तद्व्यक्तित्वाभाव )सामानाधिकरण्योभयसम्बन्धेन किञ्चिद्( तद्व्यक्तित्व )विशिष्टत्वम्-अनेकसमवेतत्वम् । सर्वत्र वृत्तित्वं समवायेन बोध्यमिति ॥ एतादृशमनेकसमवेतत्वं सर्वासु जातिषु भवतीति ॥ जातिलक्षणस्य पदकृत्यं दर्शयति-**अनेकसमवेतत्वं संयोगादीनामपीति ।** संयोगस्य विभागस्य च समवायेन द्विष्ठत्वात् तत्र 'अनेकसमवेतत्व'-मात्रलक्षणस्यातिव्याप्तिस्तद्वारणाय-नित्यत्वे सतीत्युपात्तम्, संयोगविभागयोस्त्वनित्यत्वान्नातिव्याप्तिरिति भावः ॥ न च 'नित्यत्वे सत्यनेकसमवेतत्व'स्य आत्माकाशयोर्नित्यसंयोगेऽतिव्याप्तिरिति वाच्यम् । नित्यसंयोगे प्रमाणाऽभावात् । न च-'आत्मा-गगनसमवेतसंयोगनिष्ठसमवायसम्बन्धावच्छिन्नाधेयतानिरूपकतावान्,-द्रव्यत्वात्,-घटवदि'त्यनुमानेन आकाशात्मनोस्संयोगसिद्धौ तयोर्नाशाऽसंभवाद् विभागाद्ऽभावाच्च तत्संयोगस्य नाशकाऽभावेन नित्यत्वमपि सिद्ध्यतीति-वाच्यम् । 'हेतुरस्तु साध्यं मास्त्वि'तिव्यभिचारशंकानिवर्तकतर्कशून्यत्वात् , उत्पन्नविनष्टघटे व्यभिचाराच्च, 'आत्मा-आकाशसमवेतसंयोगनिष्ठसमवायसम्बन्धावच्छिन्नाधेयतानिरूपकत्वाभाववान्,-क्रियाऽनधिकरणत्वात्,-रूपवदि'ति सत्प्रतिपक्षसत्त्वाच्च, न चेदम् अप्रयोजकम्, संयोगं प्रति साक्षात्परम्परया वा क्रियाया हेतुत्वेन कार्यकारणभावरूपानुकूलतर्कसत्त्वात् । ईदृशानुमानेनाकाशात्मनोस्संयोगाऽभावसिद्धौ कुतस्संयोगस्य नित्यत्वमितिध्येयम् ॥ **गगनपरिमाणादीनामप्यस्तीति ।** गगनस्य परिमाणं परममहत्परिमाणम्, आदिना दिक्कालात्मपरिमाणान्यपि ग्राह्याणि, तथा च गगनकालदिगात्मनां परममहत्परिमाणानां 'नित्यत्वाद् गगनादिषु समवायेन वृत्तित्वाच्च' अतिव्याप्तिस्तत्र, तद्वारणाय-अनेकेति । कालादयस्त्वेकैकव्यक्तयस्तत्परिमाणानामेकव्यक्तिसमवेतत्वान्नाऽतिव्याप्तिरिति भावः । **नित्यत्वे सत्यनेकवृत्तित्वमिति ।** घटात्यन्ताभावस्य 'नित्यत्वाद् अनेकेषु पटमठदण्डादिषु स्वरूपसम्बन्धेन वृत्तित्वाच्च' तत्राऽतिव्याप्तिस्तद्वारणाय-समवायेन वृत्तित्वार्थकं 'समवेत'पदमुपात्तम्, अभावस्तु समवायेन कुत्रापि न वर्तत इति नातिव्याप्तिरत्रेति ॥ **वृत्तित्वसामान्यं विहायेति ।** येन केनाऽपि सम्बन्धेन वृत्तित्वम् अनिवेश्येत्यर्थः ॥ **समवेतत्वमुक्तमिति ।** समवायसम्बन्धेन वृत्तित्वमुक्तमित्यर्थः ॥ नन्विदं लक्षणम् आकाशत्वरूपजातावव्याप्तम्, आकाशत्वस्याऽनेकसमवेतत्वाऽभावात्,-इत्याशंकायां तस्याऽलक्ष्यत्वप्रतिपादनेन परिहरति-**एकव्यक्तीति ।** मात्रपदस्य समभिव्याहृतपदार्थसंसर्गित्वाभावव्याप्यभेदप्रतियोगित्वबोधकत्वं व्युत्पत्तिसिद्धम् , तथा च-स्वनिष्ठवृत्तितानिरूपकत्वाभावव्याप्यभेदप्रतियोग्येकव्यक्तिवृत्तिर्यो धर्मः स न जातिरित्यर्थः, स्वं-गगनत्वम् , तन्निष्ठवृत्तिताया निरूपकं गगनम् , गगनगतं निरूपकत्वम् , निरूपकत्वाभावो गगनभिन्ने

स्यन्ताभावेऽप्यस्त्यतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्तम्। एकव्यक्तिमात्रवृत्तिस्तु न जातिः। तथा चोक्तम्—"व्यक्तेरभेदस्तुल्यत्वं संकरोऽथा-

सर्वत्र, निरूपकत्वाभावस्य व्याप्यो भेदो गगनभेदः, भेदप्रतियोगिगगनात्मकैकव्यक्तिनिरूपितवृत्तिताश्रयो धर्मो गगनत्वम्, स न जातिरिति। अनेकव्यक्त्यसमवेतधर्मो न जातिरिति तु यथाश्रुतार्थः। आकाशत्वस्याऽनेकसमवेतत्वाऽसिद्धेः अनेकसमवेतत्वघटितजातित्वं न संभवतीति भावः ॥ ननु—आकाशत्वस्य अनेकसमवेतत्वविरहेऽपि 'निःसामान्यत्वे सति विशेषान्यत्वे च सति समवेतत्व' रूपजातिलक्षणाऽक्रान्तत्वात् जातित्वं संभवेदि'ति चेन्न। अनेकव्यक्तिविशेष्यकैकाकारप्रत्ययस्यैव जातिसाधकत्वात्, एकाकारप्रत्ययमात्रस्य जातिसाधकत्वे तु परमाणुनिष्ठतद्व्यक्तित्वानामपि जातित्वापत्तेः, आकाशस्यैकव्यक्तित्वेन अनेकव्यक्तिविशेष्यकैकाकारप्रत्ययाऽप्रसिद्ध्या आकाशत्वस्य जातित्वाऽसंभवात्, अत्राऽर्थे प्राचां सम्मतिमाह—**तथा चोक्तमिति**। द्रव्यकिरणावल्यामुदयनाचार्यैरिति शेषः ॥ **व्यक्तेरभेद** इति। व्यक्तेः—स्वाश्रयस्य अभेदः—भेदाभावः, स्वाश्रयव्यक्तेरैक्यमिति समुदितार्थः। स्वाश्रयनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वाभाववत्त्वं स्वस्य जातित्वे बाधकमिति यावत्, स्वम्—आकाशत्वं तदाश्रयः—आकाशः, आकाशनिष्ठो यः एकत्वावच्छिन्नगगनप्रतियोगिताकभेदवद्घटादिनिरूपिताया घटत्वादिनिष्ठवृत्तिताया अभाववत्त्वं गगनत्वे वर्तते तदेव गगनत्वे जातित्वबाधकमिति। तादृशाऽभाववत्त्वज्ञानं च अनेकवृत्तित्वघटितजातित्वज्ञाने ग्राह्याभावावगाहितया ( ग्राह्यस्य-अनेकवृत्तित्ववत्तानिश्चयविषयीभूतस्य अनेकवृत्तित्वस्य योऽभावः—एकवृत्तित्वं तदवगाहितया ) प्रतिबन्धकमित्यवधेयम्। 'स्वसमानाधिकरणान्योन्याभावीयव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगित्वसमानाधिकरणं यद्यत्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वरूपं वा स्वाश्रयैकव्यक्तिकत्वम्। स्वं घटत्वं तत्समानाधिकरणः—तदधिकरणे घटे वर्तते यो घटान्तरान्योन्याभावः, तदीया व्यासज्यवृत्तिधर्मानवच्छिन्ना या घटान्तरनिष्ठा प्रतियोगिता, तत्समानाधिकरणं यद्यत् स्वं घटत्वादिकम् ( अनेकसमवेतधर्मः ) तत्तद्घटत्वादिव्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वं गगनत्वे जातित्वबाधकमिति समन्वयः ॥ **व्यक्तेस्तुल्यत्वमिति**। तुल्यव्यक्तिवृत्तित्वम्, अन्यूनानतिरिक्तव्यक्तिकत्वम्, स्वभिन्नजात्याश्रयव्यक्तिनिष्ठसंख्याऽन्यूनाऽनतिरिक्तसंख्याकव्यक्तिकत्वमिति यावत्, स्वं—कलशत्वं तद्भिन्नघटत्वजात्याश्रयव्यक्तयो घटाः, तन्निष्ठसंख्याऽन्यूनाऽनतिरिक्तसंख्याकव्यक्तयः कलशाः सन्ति आश्रयतया यस्य कलशत्वस्य, तत्कत्वं कलशत्वे जातित्वबाधकम्। अथवा—'स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्वभिन्नजातिसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वं तत्, स्वं—कलशत्वं, तत्समानाधिकरणपटान्योन्याभावप्रतियोगितानवच्छेदकं यद्यत् स्वं कलशत्वं तद्भिन्नघटत्वजातिसमानाधिकरणपटान्योन्याभावप्रतियोगितावच्छेदकत्वं कलशत्वे जातित्वबाधकमिति। अथवा—स्वाभाववदवृत्तित्व—स्वाधिकरणवृत्त्यत्यन्ताभावाऽप्रतियोगित्व—स्वभिन्नत्वैतत्त्रितयसम्बन्धेन जातिविशिष्टत्वरूपं स्व( कलशत्व )भिन्नजाति(घटत्व)समनियतत्वमेव 'व्यक्तेस्तुल्यत्वं बोध्यम्। स्वं घटत्वम्। कम्बुग्रीवादिमत्त्वेन सह घटत्वस्य तुल्यव्यक्तिकत्ववारणाय स्वभिन्नधर्मस्य जातित्वेन निवेशः। एवं च—'कम्बुग्रीवादिमत्त्वं, न जातिः,—स्वभिन्नजातिसमनियतत्वात्,—द्रव्यत्वसमनियतपृथिव्यादिमनोऽन्तान्यतमत्ववदि'त्यनुमानात् कम्बुग्रीवादिमत्त्वस्य जातित्वाभावः सिद्ध्यति। तथा च कम्बुग्रीवादिमत्त्वे जातित्वग्रहं प्रति निरुक्तजातित्वाभावग्रहः प्रतिबन्धकः जातित्वाभावग्रहे च लिङ्गज्ञानविधया 'स्वभिन्नजातिसमनियतत्वात्मक'तुल्यव्यक्तिकत्वज्ञानस्य हेतुतया जातित्वज्ञानप्रतिबन्धकजातित्वाभावज्ञानजनकत्वेन गौणप्रतिबन्धकत्वम् 'जातित्वाभावा'त्मकसाध्यव्याप्यवत्तानि-

श्रयत्वेन च मुख्यप्रतिबन्धकत्वम्। स्वभिन्नजातिसमनियतत्वस्य जातित्वाभावव्याप्यत्वे तु लाघवमेवानुकूलतर्को यथा–घटत्वसमनियतजात्यन्तरसत्त्वे घटकलशकुम्भादिनानाशब्दानां द्वे शक्यतावच्छेदके स्याताम्, दण्डादिजन्यतावच्छेदके च द्वे स्यातां विनिगमनाविरहादिति। अत्र च कम्बुग्रीवादिमत्त्वे धर्मितावच्छेदकं तु–घटत्वभिन्नत्वविशिष्टघटत्वसमनियतधर्मत्वं बोध्यमिति। **सङ्कर इति।** परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्र समावेशः, अत्र–'परस्परात्यन्ताभावसमानाधिकरणयो'रित्यनेन–स्वाभाववद्वृत्तिस्वभिन्नधर्माभाववद्वृत्तित्वं स्वस्य लभ्यते, 'एकत्र समावेश'–इत्यनेन च सामानाधिकरण्यं लभ्यते, तथा च–'स्वाभाववद्वृत्ति–स्वसमानाधिकरण–धर्माऽभाववद्वृत्तित्वं स्वनिष्ठसंकर इति फलितम्। एतादृशसाङ्कर्यं भूतत्वमूर्तत्वयोर्जातित्वबाधकमिति प्राचीनमतम्। यथा पृथिव्यप्तेजोवाय्वाकाशानि पञ्चभूतानि, पृथिव्यप्तेजोवायुमनांसि पञ्च मूर्तानि, तत्र भूतत्वं–बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्, बहिरिन्द्रियाणि–घ्राणरसननेत्रत्वक्श्रोत्राणि पञ्च, तैर्ग्राह्याः क्रमशो विशेषगुणाः गन्धरसरूपस्पर्शशब्दाः पञ्च, तद्वत्त्वं क्रमशः पृथिव्यप्तेजोवाय्वाकाशेषु, अतस्तानि भूतानि। मूर्तत्वम्–अपकृष्टपरिमाणवत्त्वम्, क्रियावत्त्वं वा, अपकृष्टपरिमाणं पृथिव्यप्तेजोवायूनां परमाणुषु मनसि चेति तानि मूर्तानि। तथा च भूतत्वं विहाय मनसि वर्त्तमानस्य मूर्तत्वस्य, मूर्तत्वं विहाय गगने वर्तमानस्य भूतत्वस्य च पृथिव्यादिचतुष्टये सत्त्वात् संकरः, स्वं–मूर्तत्वं, तदभाववानाकाशस्तत्र वृत्ति भूतत्वम्, पुनः स्वं–मूर्तत्वं, तत्समानाधिकरणधर्मः पृथिव्यादौ भूतत्वम्, तदभाववन्मनोनिरूपितवृत्तित्वं मूर्तत्वे जातित्वबाधकं, तथैव–स्वं–भूतत्वं, तदभाववन्मनस्तत्र वृत्ति मूर्तत्वम्, पुनः स्वं–भूतत्वं, तत्समानाधिकरणधर्मः पृथिव्यादौ मूर्तत्वम्, तदभाववदाकाशनिरूपितवृत्तित्वं भूतत्वे जातित्वबाधकमिति। 'सर्वाधारताप्रयोजकसम्बन्धभिन्नसमानाधिकरणसम्बन्धावच्छिन्ना वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्ना च या प्रतियोगिता तन्निरूपकाभावनिष्ठदैशिकविशेषणतासम्बन्धावच्छिन्नाधेयतानिरूपकाऽधिकरणनिरूपितसर्वाधारताप्रयोजकसम्बन्धभिन्नसम्बन्धावच्छिन्नवृत्तिताश्रयः तादृशसम्बन्धभिन्नसम्बन्धावच्छिन्नस्वनिष्ठाधेयतानिरूपकाऽधिकरणनिरूपितनिरुक्तसम्बन्धावच्छिन्नवृत्तिताश्रयश्च यो धर्मः तन्निष्ठतादृशसम्बन्धभिन्नसमानाधिकरणसम्बन्धावच्छिन्ना वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्ना च या प्रतियोगिता तन्निरूपकाभावनिष्ठदैशिकविशेषणतासम्बन्धावच्छिन्नाधेयतानिरूपकाऽधिकरणनिरूपिततादृशसम्बन्धावच्छिन्नवृत्तित्वं' स्वनिष्ठसाङ्कर्यमिति फलितार्थः। **अथवा**–स्वसामानाधिकरण्य–स्वाभावसामानाधिकरण्य–स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वैतत्त्रितयसम्बन्धेन जातिविशिष्टत्वं–संकरः, एतादृशसंकरस्य क्वचिदन्यतरस्य प्रबलप्रमाणेन जातित्वे निर्णीते इतरस्यैव जातित्वबाधकत्वम्, यथा–गन्धसमवायिकारणतावच्छेदकतया प्रत्यक्षप्रमाणेन च पृथिवीत्वस्य जातित्वे निर्णीते तेन सह संकरादिन्द्रियत्वं न जातिरिति। स्वं पृथिवीत्वं तत्समानाधिकरणत्वं घ्राणे इन्द्रियत्वस्य, पुनः स्वं पृथिवीत्वं, तदभावसामानाधिकरण्यं रसनायामिन्द्रियत्वस्य, पुनः स्वं–पृथिवीत्वं, तदधिकरणघटवृत्त्यत्यन्ताभावप्रतियोगित्वमिन्द्रियत्वस्य, इत्येतत्त्रितयसम्बन्धेन पृथिवीत्वविशिष्टत्वमिन्द्रियत्वे जातित्वबाधकम्। एवं च–'इन्द्रियत्वं,–न जातिः,–उक्तसम्बन्धत्रयेण जातिविशिष्टत्वा'दित्यनुमानाद् इन्द्रियत्वस्य जातित्वाभावः सिद्धयति, तथा च इन्द्रियत्वे जातित्वग्रहं प्रति जातित्वाभावग्रहः प्रतिबन्धकः, जातित्वाभावग्रहे च लिंगज्ञानविधया 'जातिविशिष्टत्वा'त्मकसंकरस्य हेतुतया जातित्वज्ञानप्रतिबन्धकजातित्वाभावज्ञानजनकत्वेन गौणप्रतिबन्धकत्वम् 'जातित्वाभावा'त्मकसाध्यव्याप्यवत्तानिश्चयत्वेन च मुख्यप्रतिबन्धकत्वम्, 'जातिविशिष्टत्वा'त्मकसंकरस्य 'जातित्वाभावव्याप्यत्वे तु ब्रह्मक्षत्रादीनामेकतरबीजेनाऽपरक्षेत्रे उत्पादितस्य शरीरस्य ब्रह्मत्वक्षत्रियत्वाद्यात्मक-

**ऽनवस्थितिः। रूपहानिरसम्बन्धो जाति-बाधकसंग्रहः"** ॥

जातिद्वयनिरासनपरस्मृतिपुराणान्येव प्रमाणम्। ननु सांकर्यस्य जातित्वाऽबाधकत्वे का हानिरिति चेत् 'स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्योभयसम्बन्धेन यज्जातिविशिष्टजातित्वं यत्र, तत्र तज्जातिव्यापकत्वमि'तिनियमभङ्ग एव, यथा घटे घटत्वसमानाधिकरणं पृथिवीत्वं, पटे च घटत्वाभाव-समानाधिकरणं पृथिवीत्वम्, तादृशोभयसम्बन्धेन घटत्वविशिष्टा पथिवीत्वजातिः तत् पथिवीत्वं घटत्वव्यापकम्, संकरधर्मयोर्जातित्वे व्याप्यव्यापकभावो न स्यादिति भावः। उक्तानि त्रीणि जातित्वबाधकानि, अथ जातिबाधकानि उच्यन्ते,-इति व्यवस्थादर्शनाय-'अथ'शब्दः प्रयुक्तः। **अनवस्थितिरिति**। अनवस्था-अप्रामाणिककल्पनासमाप्त्यभावः, यथा सकलजातिषु एकं जातित्वम्, तज्जातित्व-तदाश्रयजातिषु च पुनर्वैजात्यम्, एवमग्रेऽपीत्यनवस्था बोध्या, अतो जातित्वं न जातिरिति॥ वस्तुतस्तु-'जात्यनाश्रयवृत्तिपदार्थविभाजकधर्मशून्यत्व'रूपा अनवस्था बोध्या, यथा घटसमुदायस्य 'अयं घटोऽयं घटोऽयं घट'इत्याकारकानुगतप्रतीतिविशेष्यत्वेन घटत्वजातिमत्त्वं तथा घटत्वपटत्वादिजातिसमुदायस्यापि 'इदं सामान्यमिदं सामान्य'मित्यनुगतप्रतीतिविशेष्यत्वेन जातेरपि जातिमत्त्वप्रसंगः, एवं—सिद्धजातौ तदाश्रयजातिषु च 'इदं सामान्यमिदं सामान्य'मित्यनुगतप्रतीतिविशेष्यत्वेन सिद्धजातिघटितक्लृप्तजातिसमुदायेऽपि जात्यन्तरस्वीकारापत्तिः, इत्येवमनन्तजातिस्वीकारेऽनुमानं प्रमाणं दर्शितं भवति-'घटत्वादिजातिसमुदायः,-जातिमान्,-अनुगतप्रतीतिविशेष्यत्वात्-घटसमुदायवदि'ति। तथा च जातेर्जातिमत्त्वे 'जात्यनाश्रयासु जातिषु वृत्तिर्यः पदार्थविभाजकः सामान्यत्वोपाधिरूपो धर्मस्तच्छून्यत्वं जातावनवस्था पर्यवसन्ना, तज्ज्ञानस्य तर्कविधया जातिमत्त्वग्रहप्रतिबन्धकत्वम्, तथाहि-'जातिर्यदि जातिमती स्यात् तर्हि जात्यनाश्रयवृत्तिपदार्थविभाजकधर्मवती न स्यादि'तितर्केण 'जातिर्जातिमती'ति ज्ञानं प्रतिबध्यत इति। **अत्रेदं बोध्यम्**। 'अनुगतप्रतीतिमात्रं' न 'अनुगतधर्मसाधकम्', किन्तु 'बाधकाभावविशिष्टानुगतप्रतीतिविशेष्यत्वस्यै'व जातिसाधकत्वम्, एवं च घटत्वादिजातिनिष्ठैकाकारानुगतप्रतीतिविशेष्यत्वस्य घटत्वांशे 'अनन्तजातिसाधकत्वा'त्मकबाधकसत्त्वेन 'बाधकाभावविशिष्टैकाकारानुगतप्रतीति-विशेष्यत्व' रूपफलितहेतोरभावात् न तत्राऽनन्तजातिसिद्धिः। एतादृशहेतुबलाच्च 'स्वनिष्ठैकाकारप्रतीतिविशेष्यत्वज्ञानज्ञाप्यस्वनिष्ठानन्तजातिकत्व'रूपाऽप्यनवस्था पर्यवस्यति, तस्या गौरवदोषे पर्यवसानम्, तस्याः-'घटत्वं,-जातिः,-बाधकाभावविशिष्टैकाकारानुगतप्रतीतिविशेष्यत्वा'दित्याकारकजाति-विधेयकानुमितिकारण-विशिष्टलिङ्ग-ज्ञान-प्रतिबन्धकज्ञानविषयतया जातिबाधकत्वमनुसन्धेयमिति। **रूपहानिरिति**। रूपस्य=विशेषाणां स्वरूपस्य,-परमाणुगतपरस्परव्यावर्तकत्व'हानिद्वारा हानिः-असिद्धिः, विशेषपदार्थोऽसिद्धिरित्यर्थः। तथाहि-'अयं परमाणुः,-परमाण्वन्तरभिन्नः,-विशेषात्'-इत्येवं परमाणूनां परस्परभेदसाधकतया 'विशेष'पदार्थः स्वीक्रियते, स च तद्व्यक्तित्वेनैव हेतुर्भवति, तद्व्यक्तित्वं च तादात्म्येन तद्व्यक्तिरेव। यदि तत्र विशेषत्वजातिः स्वीक्रियेत, तदा 'सामान्याश्रयाणां सामान्यरूपेणैव भेदसाधकत्व'नियमाद् विशेषत्वावच्छिन्नतया विशेषस्य हेतुता भवेत्, तथा च सति परमाण्वन्तरेऽपि विशेषत्वावच्छिन्नविशेषस्य हेतोः सत्त्वात् 'परमाण्वन्तरभेदा'त्मकसाध्यस्य चाऽभावात् हेतोर्व्यभिचारित्वापत्त्या विशेषस्य 'परमाणूनां परस्परव्यावर्तकत्वं' न भवेत्, यदि चोक्तनियममनङ्गीकृत्य तद्व्यक्तित्वेन विशेषस्य हेतुत्वस्वीकारे न व्यभिचारित्वापत्तिरित्युच्यते, तदा तु परमाणुगतैकत्वादीनां तत्तद्व्यक्तित्वेनैव परमाण्वन्तरभेदसाधकत्वसंभवेन विशेषपदार्थस्य वैयर्थ्य-प्रसंगः स्यादेव। तथा च विशेषपदार्थाङ्गीकारहानिं प्रति द्वारं यः 'परमाणूनां परस्परव्यावर्तकत्वा-

**द्रव्यादीति । परत्वमधिकदेशवृत्तित्वम् । अपरत्वमल्पदेशवृत्तित्वम् ।**

**सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वं, तदपेक्षया चान्यासां जातीनामपरत्वम् ॥८॥**

---

भावः' तज्ज्ञानस्य 'विशेषो जातिमानि'तिज्ञानं प्रति तर्कविधया प्रतिबन्धकत्वम्, तर्कश्च–'यदि विशेषो जातिमान् स्यात् तर्हि परमाणुषु परस्परव्यावर्तको न स्यादि'ति । एवं–विशेषाऽसिद्धेस्तु–बाधकतर्कज्ञानविषयत्वात् जातिबाधकत्वम्,–तथाहि–'अयं परमाणुः,–परमाण्वन्तरभिन्नः'–इत्यनुमितिः,–सामान्याऽनाश्रयकिञ्चिल्लिङ्गज्ञानजन्या,–सामान्याश्रयलिङ्गकत्वाभाववत्त्वे सति अनुमितित्वात्,–धूमप्रागभावलिङ्गकवह्न्यनुमितिवदि'त्यनुमानात् सामान्याऽनाश्रयकिञ्चिल्लिङ्गज्ञानजन्यत्वे सिद्धे 'विशेषो यदि सामान्यवान् स्यात् तदा अनुमितिविषयो न( असिद्धः )स्यात्'–इति तर्कस्य मणिमन्त्रादिन्यायेन जातिप्रकारक'विशेषः सामान्यवानि'तिज्ञानं प्रति स्वतन्त्रप्रतिबन्धकत्वेन अनुमितिविषयत्वाभावरूपाया विशेषाऽसिद्धेः तादृशप्रतिबन्धकतर्कज्ञानविषयतारूपं जातिप्रतिबन्धकत्वमक्षतमिति ध्येयम् । **अथवा**–रूपस्य 'सामान्यरहितत्वे सति सामान्यभिन्नत्वे सति समवेतत्व'मिति यद्विशेषाणां लक्षणं तस्य हानिः स्यात्, विशेषाणां सामान्यवत्त्वांगीकारे 'सामान्यरहितत्व'घटिततादृशलक्षणं व्याहन्येतेति । **असम्बन्ध** इति । प्रतियोगिताऽनुयोगिताऽन्यतरसम्बन्धेन समवायाऽभावः, समवायप्रतियोगित्व-समवायानुयोगित्वैतदन्यतरत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वमिति यावत्, अयं च समवायाऽभावयोर्जातिमत्त्वे समवायत्वाऽभावत्वयोर्जातित्वे चबाधकः, बाधकत्वं चाऽस्य तदभावव्याप्यवत्ताज्ञानमुद्रया, तथाहि–'अभावः,–जातित्वजातिमत्त्वान्यतराभाववान्,–समवायप्रतियोगित्व-समवायानुयोगित्वान्यतराभाववत्त्वात्,–समवायवत्, व्यतिरेके वा घटवत्'–इत्यत्र–'समवायप्रतियोगित्व–समवायानुयोगित्वान्यतराभाववानभाव'–इतिपरामर्शज्ञानस्य=जातित्वजातिमत्त्वान्यतरप्रकारकं यत् 'अभावः जातित्वजातिमत्त्वान्यतरवा'निति ज्ञानं तत्प्रतिबन्धकस्य–'अभावो जातित्वजातिमत्त्वान्यतराभाववानित्यनुमित्यात्मकज्ञानस्य जनकत्वात् विरोधिज्ञानसामग्रीत्वात् तदभावव्याप्यवत्तानिश्चयत्वाच्च प्रतिबन्धकत्वमव्याहतमिति ॥ व्यक्त्यभेदादित्रयं जातित्वबाधकम्, अनवस्थितिरूपहानी तु जातिबाधिके, असम्बन्धस्तूभयबाधक इति ॥ **जातिबाधकसंग्रह** इति । जातिबाधकानां=जाति–जातित्वान्यतरप्रकारकज्ञानप्रतिबन्धकज्ञानविषयाणां, संग्रहः=संक्षेपेण कथनमित्यर्थः । **'परं 'चापरमेव' चे**'ति पद्यस्थं परत्वमपरत्वं च व्याख्याति–**परत्वेति**। अधिकदेशवृत्तित्वम्–अधिकेषु अधिकरणेषु वृत्तित्वमित्यर्थः । अल्पदेशवृत्तित्वम्–अल्पेषु न्यूनेषु अधिकरणेषु वृत्तित्वमित्यर्थः ॥ **सकलजात्यपेक्षया अधिकदेशवृत्तित्वादिति** । अत्र 'स्वभिन्नसकलजातिघटकप्रत्येकावच्छिन्नप्रतियोगिताकान्योन्याभाववन्निरूपितवृत्तिताकूटवत्त्वं' स्वभिन्नसकलजात्यपेक्षयाऽधिकदेशवृत्तित्वं बोध्यम् । स्वं–सत्ता, तद्भिन्नद्रव्यत्वरूपत्वघटत्वकर्मत्वादिघटकप्रत्येकजात्यवच्छिन्नपदार्थानामन्योन्याभाववन्तो येये जात्यवच्छिन्नपदार्थास्तन्निरूपिता वृत्तिताः सत्तायामेवेति सर्वत्र समन्वयः॥ **तदपेक्षयाऽन्यासां जातीनामपरत्वमिति** । 'सत्तासमानाधिकरणभेदप्रतियोगितानिरूपितसमवायसम्बन्धावच्छिन्नव्यासज्यवृत्तिधर्मानवच्छिन्नाऽवच्छेदकमेव'–सत्ताभिन्नसकलजातिनिष्ठं व्याप्यत्वं बोध्यमिति । सत्तासमानाधिकरणः=सत्ताधिकरणे गुणे वर्तमानो 'द्रव्यत्ववान्ने'ति भेदः, सत्ताधिकरणे द्रव्ये वर्तमानः 'गुणत्ववान्ने'ति भेदः,–तद्वदनेके भेदाः, तत्प्रतियोगिता द्रव्यत्ववन्निष्ठा, तन्निरूपितसमवायसम्बन्धावच्छिन्नं व्यासज्यवृत्तिधर्मानवच्छिन्नं च अवच्छेदकं द्रव्यत्वमिति, तत् सत्ताया व्याप्यम्, एवं व्याप्यजातिषु सर्वत्राऽनुसन्धेयम् ॥ सत्ताधिकरणे गगनादौ कालिकेन सत्तावच्छेद-

**पृथिवीत्वाद्यपेक्षया व्यापकत्वादधिकदेशवृत्तित्वाद्द्रव्यत्वादेः परत्वं सत्ताऽपेक्षया व्याप्यत्वाद् अल्पदेशवृत्तित्वाच्च द्रव्यत्वस्यापरत्वम् । तथा च धर्मद्वयसमावेशाद् उभयमविरुद्धम् ॥**

**अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥**

---

मादाय सत्ताघटत्वोभयवद्भेदमादाय सत्तायां सत्ताव्याप्यत्वापत्तिवारणाय समवायसम्बन्धावच्छिन्नत्वं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं चाऽवच्छेदकतायां निवेशितम् ॥ अथवा–'सत्ताभिन्नत्वे सति सत्तावदन्यनिष्ठाधिकरणत्वानिरूपकसमवायसम्बन्धावच्छिन्नाऽऽधेयतावत्त्व'रूपं सकलजातिनिष्ठं सत्तानिरूपितव्याप्यत्वं बोध्यमिति ॥ 'द्रव्यत्वादिकजातिस्तु पराऽपरतयोच्यते' इति पद्यस्य भावं दर्शयति–**पृथिवीत्वाद्यपेक्षयेति । व्यापकत्वादिति ।** पृथिवीत्वसमानाधिकरणाऽभावाप्रतियोगित्वादित्यर्थः॥ **व्याप्यत्वादपरत्वमिति ।** सत्तासमानाधिकरणात्यन्ताभावप्रतियोगित्वादपरत्वमित्यर्थः । **धर्मद्वयसमावेशादिति**=परत्वस्याऽपरत्वस्य च द्रव्यत्वे समावेशादित्यर्थः । **उभयमविरुद्धमिति ।** आपेक्षिकपरत्वापरत्वोभयधर्मयोरेकाधिकरणतायां न विरोध इति भावः । अयं परापरव्यवहारो वैशेषिकनयेबोध्यः॥ ननु सत्तायामेव प्रमाणाभावात् तस्यास्सकलजात्यपेक्षया परत्वोपपादनमसङ्गतमिति चेन्न । 'ध्वंसकारणतावच्छेदकतयैव सत्ताजातिसिद्धिर्बोध्या,–प्रागभाववृत्तिप्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्येन सत्त्वावच्छिन्नस्य कारणत्व'मिति नियमात् तादृशकारणतावच्छेदकतया सत्ताया जातित्वसिद्धिः, प्रागभावे व्यभिचारवारणाय भिन्नान्तं प्रतियोगिताविशेषणम्, तथा च–'प्रागभाववृत्तिप्रतियोगिताभिन्नप्रतियोगित्वसम्बन्धावच्छिन्नध्वंसत्वावच्छिन्न–ध्वंसनिष्ठकार्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्ना या सन्निष्ठा कारणता सा,–किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्'–इत्यनुमानेन ध्वंसकारणतावच्छेदकतया सत्ताजातिः सिद्ध्यतीति भावः । अथवा–'समवायेन सत्त्वावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन कारणतया तज्जन्यतावच्छेदकतया सत्ताजातिः सिद्ध्यति, अनुमानं तु–'तादात्म्यसम्बन्धावच्छिन्नद्रव्यत्वावच्छिन्नद्रव्यनिष्ठकारणतानिरूपिता समवायसम्बन्धावच्छिन्नकार्यता, किञ्चिद्धर्मावच्छिन्ना, कार्यतात्वादि'ति, अत्र किञ्चिद्धर्म एव सत्ताजातिरिति । वस्तुतस्तु–'द्रव्यं सत्' 'गुणः सन्' 'कर्म सत्'–इत्यनुगतप्रतीत्या, किं वा 'द्रव्यं जातिमत्' 'गुणः जातिमान्' 'कर्म जातिमदि'त्यनुगतप्रतीत्या सत्ताजातिसिद्धिर्बोध्या । न चोक्तप्रतीतौ द्रव्यत्वादिजातिरेव विषय इति वाच्यम् । अनेकपदार्थगोचरैकाकारप्रतीतीनामसति बाधके एकधर्मविषयकत्वैकधर्मावच्छिन्नविषयकत्वान्यतरवत्त्वनियमात् सत्ताजातिसिद्धेर्निष्प्रत्यूहत्वात् । द्रव्यादित्रिकस्य समवायेन सत्तावत्त्वात् त्रिषु सत्पदप्रयोगस्य मुख्यत्वम्, सामान्यादित्रिकस्य तु एकार्थसमवायेन सत्तावत्त्वात् तत्र सत्पदप्रयोगस्य गौणत्वमित्यनुसन्धेयम् ॥

**मूले अन्त्यो** नित्येति । विशेषः=विशेषत्वोपाध्यवच्छिन्नपदार्थः । 'अन्त्यो नित्यद्रव्यवृत्ति'रिति परिकीर्तितः। अन्त्यत्वमत्र–स्वतोव्यावृत्तत्वम्, तच्च–'स्वप्रयोज्य–स्वनिष्ठ स्वसजातीयप्रतियोगिकभेदकत्वम्, स्वसाजात्यं च–पदार्थविभाजकोपाधिरूपेण बोध्यम्, स्वं विशेषः, तेन प्रयोज्यो यो विशेषनिष्ठो विशेषान्तरप्रतियोगिको भेदो यस्य विशेषस्य तत्कत्वमित्यर्थः, अनुमानं तु 'विशेषः–विशेषान्तरभिन्नः,–स्वस्मादि'त्येवंरूपम् ॥ **नित्यद्रव्यवृत्तिरिति ।** नित्येषु द्रव्येषु पृथिवीजलतेजःपवनानां परमाणुषु आकाशकालदिगात्ममनःसु च वर्तमाना इत्यर्थः । द्रव्ये नित्यत्वमत्र ध्वंसाऽप्रतियोगित्वमात्रं प्रागभावाऽप्रतियोगित्वमात्रं वा बोध्यम् । विशेषा असंख्याः सन्ति ॥ मुक्तावल्यां–विशेषं

**विशेषं निरूपयति—अन्त्य इति। अन्तेऽवसाने वर्तत इत्यन्त्यः, यदपेक्षया विशेषो नास्तीत्यर्थः। घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः, परमाणूनां परस्परभेदको विशेष एव,—**

**निरूपयतीति।** विशेषनिष्ठविषयतानिरूपकं यल्लक्षणस्वरूपप्रामाण्यादिप्रकारकं ज्ञानं तदनुकूलव्यापारानुकूलकृतिमान् ग्रन्थकार इति बोधः॥ मूलस्थस्य 'अन्त्य'शब्दस्य 'स्वतोव्यावर्तकत्वा' त्मकलक्षणपरत्वं प्रतिपादयितुं व्युत्पत्तिमाह—**अन्तेऽवसाने**—इति। निरवयवद्रव्ये-इत्यर्थः॥ **वर्तते**—इति। सजातीयपरमाणूनां परस्परभेदसाधनार्थमङ्गीक्रियते इत्यर्थः॥ ननु अन्तत्वस्य ससम्बन्धिकत्वात् तत्सम्बन्ध्याकांक्षायां तत्सम्बन्धिनी अवयवधारा वक्तव्या, सा च परस्परावयवाऽवयवविभागापन्नबहुपदार्थसमुदायरूपा, तस्या अन्तत्वं च तादृशसमुदायनिष्ठं निरवयवपदार्थघटितत्वनिरूपकत्वम्, ततश्च 'अन्त'पदस्य निरवयवद्रव्यपरत्वमायातम्, 'वर्तते'इत्यनेन च वृत्तित्वं लब्धम्, एवं च सति निरवयवद्रव्यवृत्तित्वार्थका'ऽन्त्य'शब्दस्य 'नित्यद्रव्यवृत्ति'रित्यनेन पुनरुक्तिर्दुर्वारा,—इत्यत 'अन्त्य'शब्दस्य भावार्थमाह—**यदपेक्षया विशेषो नास्तीत्यर्थ इति।** यस्य विशेषस्याऽपेक्षया अन्यो व्यावर्तको नास्तीत्यर्थ इत्यर्थः। एवं च 'अन्त'शब्दस्य—तादृशसमुदायनिष्ठविशेषान्तराऽविशेष्यीभूतविशेषघटितत्वनिरूपकत्वमित्यर्थः। परस्परावयवावयवविभागापन्नबहुपदार्थसमुदायनिष्ठं यद् विशेषान्तराऽविशेष्यीभूतविशेषघटितत्वं 'तन्निरूपकत्वमिति फलितार्थः। तथा च 'अन्त्य'—इत्यस्य 'अवयवाऽवयवधारायां चरमतया प्रविष्टो यो विशेषान्तररहितो विशेषः स इह 'विशेष'—शब्देन परिभाषित' इत्यत्र तात्पर्यात् न 'नित्यद्रव्यवृत्ति'रित्यनेन पुनरुक्ततेति॥ व्यावर्तकधारां तदन्त्यत्वं च विशेषाणामुपपादयति— **घटादीनामित्यादिना। तत्तदवयवभेदात्परस्परं भेद** इति। सिद्ध्यतीति शेषः। केषाञ्चित् चक्षुरादिना, केषांचिन्मनसा अवयवभेदप्रयुक्तो भेदो ज्ञातुं शक्यते। यत्र न प्रत्यक्षप्रवृत्तिः, प्रत्यक्षप्रवृत्तौ वा युक्तिभिः स्थिरीचिकीर्षवोऽनुमानेन भेदं बुभुत्सन्ते, तद्यथा—'अयं घटः—तद्घटभिन्नः,—एतदीयकपालभेदात्'। अत्र हेतुः—स्वप्रतियोगिसमवेतत्वसम्बन्धेन बोध्यः, अग्रेऽपि तथा बोध्यम्। एवम्—'एतत्कपालम्,—तत्कपालभिन्नम्,—तत्कपालिकाभेदात्। 'एतत्कपालिका—तत्कपालिकाभिन्ना,—पिण्डभेदात्'। 'अयं पिण्डः—तत्पिण्डभिन्नः—चतुरणुकभेदात्'। 'अयं चतुरणुकः—तच्चतुरणुकभिन्नः,—त्र्यणुकभेदात्'। 'अयं त्र्यणुकः—तत्त्र्यणुकभिन्नः,—द्व्यणुकभेदात्'। 'इदं द्व्यणुकं—तद्द्व्यणुकभिन्नम्,—परमाणुभेदादिति। **परमाणूनामिति।** अनुमानन्तु—'अयं परमाणुः—तत्परमाणुभिन्नः,—विशेषादि'ति। परमाणूनामित्युपलक्षणं, तेन—आकाशेश्वरादीनामपि परस्परं भेदको विशेष इत्यपि बोध्यम्। नन्वीश्वराकाशयोर्नित्यज्ञानशब्दाभ्यां व्यावृत्तेः सम्भवान्न तत्र विशेषोऽङ्गीकर्तव्य इतिचेन्न, नित्यज्ञानस्य न ज्ञानत्वेन भेदानुमापकत्वम्, व्यभिचारात्, न नित्यत्वविशिष्टज्ञानत्वेन तद्व्यक्तित्वेन वा, सामान्याश्रयस्य सामान्यरूपेण भेदानुमापकत्वनियमात्, तयोरुपाधिरूपत्वेनाऽव्यावर्तकत्वाच्च, तस्मादव्यावर्तकतयेश्वरे विशेषांगीकार आवश्यकः। एवम्—आकाशस्य शब्दात्मकलिंगेन व्यावृत्तिसंभवेऽपि कत्वादीनां शब्दकारणतावच्छेदकत्वे गौरवात् लाघवाच्छब्दकारणतावच्छेदकतया विशेषस्वीकार इति बोध्यम्। **परस्परभेदक** इति। परस्परभेदानुमितिजनकज्ञानविषय इत्यर्थः। एतेनाऽनुमानं सूचितं—तथाहि—'परमाणूनां भेदः—किञ्चिल्लिङ्गज्ञानज्ञाप्यः,—भेदत्वात्,—कपालभेदज्ञाप्यघटभेदवदिति। अथवा—परमाणुषु परस्परभेदानुमितिः—यत्किञ्चिल्लिङ्गप्रमाजन्या,—भ्रमाऽजन्याऽनुमितित्वाद्,—वह्न्यायनुमितिवदिति। अत्र 'किञ्चित्पदेन विशेषः सिद्ध्यतीति। **वस्तुतस्तु**—'परमाणूनां भेदः—किञ्चित्प्रयोज्यः,—भेदत्वात्,—कपालभेदप्रयोज्यघटभेदवदि'

**–स तु स्वत एव व्यावृत्तः, तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः ॥ ९ ॥ १० ॥**

त्यनुमानेन किञ्चित्पदेन विशेषभेद एव सिद्ध्यति । परमाणुगतविशेषाणां भेदसिद्ध्या च विशेषस्यापि सिद्धिरित्यनुसन्धेयम् ॥ ननु विशेषाः परस्परभिन्नत्वेनाऽज्ञाताः कथं परस्परं परमाणूनां भेदका भविष्यन्तीत्यत आह–**स त्विति** । विशेषस्त्वित्यर्थः । स्वत एव व्यावृत्तः=स्वप्रयोज्यभेदवानेव, न तु तद्गतविशेषान्तरभेदप्रयुक्तभेदवानिति भावः । अनुमानं यथा–'विशेषाः–स्वसजातीयेतरभिन्नाः,–स्वस्मादि'ति, एतदनुमितौ स्वेतरभेदसाधने स्वमेव तादात्म्येन लिङ्गं, नान्यदिति॥ **तेनेति** । स्वतोव्यावृत्तत्वेनेत्यर्थः । तत्र=विशेषेषु । विशेषान्तरापेक्षा नास्ति=व्यावर्तकान्तरापेक्षा नास्तीति । अत्र **'स्वत एव व्यावृत्त'**इत्यत्र 'स्वत'इत्यस्याऽऽवृत्तिः, तथा च 'स्वतः'=स्वात्मकलिङ्गात्, 'स्वतः'=स्वीयात्=स्वसजातीयादिति यावत्; 'स्वात्मकलिङ्गा'दित्यत्र पञ्चम्या ज्ञानज्ञाप्यत्वमर्थः, स्वसजातीयादित्यत्र च पंचम्याः प्रतियोगित्वमर्थः,तदुभयमपि 'वृतु'धात्वर्थे भेदेऽन्वेति। तथा च 'स्वात्मकलिङ्गज्ञानजन्यज्ञान(अनुमिति)विषय-स्वसजातीयप्रतियोगिताकभेदाश्रयो विशेष'–इत्यर्थो लब्धः । एतदभिप्रायेणैव केचित्–'स्वलिङ्गक स्वविशेष्यक-स्वसजातीयभेदानुमितिविषयत्व'रूपं स्वतोव्यावृत्तत्वं वदन्तीति, तन्न, 'घटो घटान्तराद्भिन्नः, तादात्म्येन घटादि'त्यनुमितिविषयत्वस्य घटेऽपि सत्त्वेनाऽव्याप्त्यापत्तेः ॥ 'स्वत एवे'त्यत्रैवकारेण च 'स्वभिन्नलिङ्गज्ञानजन्यानुमितिविषयस्वसजातीयप्रतियोगिकभेदशून्य'–इत्यर्थलाभः । व्यावृत्तत्वञ्चात्र–'भेदनिष्ठविधेयतानिरूपितोद्देश्यता'रूपम् , अव्यावृत्तत्वञ्च–भेदनिष्ठविधेयतानिरूपितोद्देश्यताशून्यत्वम् । साजात्यन्तु पदार्थविभाजकोपाधिरूपेण बोध्यम् । तथा च–'स्वभिन्नत्वोपलक्षितलिङ्गविशेष्यकं--व्याप्तिप्रकारकं यज्ज्ञानं तादृशज्ञानत्वावच्छिन्नकारणतानिरूपितानुमितिनिष्ठकार्यतावच्छेदिका या स्वसजातीयप्रतियोगिकभेदनिष्ठा विधेयता तादृशविधेयतानिरूपितोद्देश्यताश्रयीभूतं यद्यत् स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्व'मिति समुदितार्थः । स्वं–स्वेतरलिङ्गजन्यस्वसजातीयभेदानुमितिविशेष्यत्वेनाऽभिमतः पक्षपदार्थः,यथा 'द्रव्यम्–इतरभिन्नं, गुणवत्त्वा'दित्यत्र स्वं–द्रव्यम्, स्वभिन्नत्वोपलक्षितं लिङ्गं–गुणवत्त्वादिति, तादृशलिङ्गविशेष्यकं व्याप्तिप्रकारकञ्च ज्ञानम्–'इतरभेदव्याप्यगुणवत्त्ववद्द्रव्य'मिति परामर्शः, तादृशपरामर्शत्वावच्छिन्नकारणतानिरूपिता या 'द्रव्यम्–इतरभिन्न'मित्यनुमितिनिष्ठा कार्यता, तदवच्छेदिका या द्रव्य–सजातीयगुणादिप्रतियोगिकभेदात्मकसाध्यनिष्ठा विधेयता, तन्निरूपितोद्देश्यताश्रयीभूतं यद्यत् स्वं–द्रव्यम्, ( पक्षभिन्नलिङ्गजन्यानुमितिविशेष्याः सर्वेऽपि स्वपदग्राह्याः ) तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वं 'विशेषः–इतरभिन्नः–विशेषा'दित्यनुमितिविशेष्ये विशेषपदार्थे इति ॥ 'स्वभिन्नत्व–सामानाधिकरण्यसम्बन्धानवच्छिन्नव्याप्यत्व-पक्षधर्मत्वैतत्त्रितयोपलक्षितं यल्लिङ्गम् , तद्विशेष्यकं यद्व्याप्तिप्रकारकं ज्ञानं, तादृशज्ञानत्वावच्छिन्नकारणतानिरूपिता याऽनुमितिनिष्ठा कार्यता, तदवच्छेदिका या स्वसजातीयभेदनिष्ठा विधेयता, तन्निरूपितोद्देश्यताश्रयीभूतं यद्यत् स्वं ( पक्षत्वेनाभिमतम् ) तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्व'मिति यावत् ॥ 'जलपरमाणुवृत्तिविशेषाः,–तेजःपरमाणुवृत्तिविशेषाद्भिन्नाः,–सामानाधिकरण्यसम्बन्धेन शीतस्पर्शवत्त्वादि'त्यत्र शीतस्पर्शात्मकतादृशलिङ्गविशेष्यकनिरुक्तज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकस्वसजातीयभेदनिष्ठविधेयतानिरूपितोद्देश्यत्वस्य स्वपदार्थे विशेषे सत्त्वेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्व'रूपलक्षणाऽभावादसंभवः स्यात् तद्वारणाय व्याप्यतायां सामानाधिकरण्यसम्बन्धानवच्छिन्नत्वनिवेशः। 'अयं विशेषः तद्विशेषाद्भिन्नः–वाच्यत्वात् , पटत्वाच्चे'ति–अव्याप्त्याऽपक्षधर्मतावल्लिङ्गविशेष्यकनिरुक्तज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयानुमिति निरूपितनिरुक्तोद्देश्यत्वस्य स्वस्मिन् विशेषे सत्त्वेन तद्व्यक्ति–

घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्तितः ॥११॥

**समवायं दर्शयति—घटादीनामिति। अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः**

---

त्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वाभावादसंभवः स्यात् तद्वारणाय—व्याप्यत्वपक्षधर्मत्वेत्युपात्तम्। 'अयं विशेषः—विशेषान्तराद्भिन्नः—विशेषादित्यत्र स्वात्मकलिङ्गज्ञानजन्यानुमितिनिरूपितोद्देश्यत्वस्य स्वस्मिन् विशेषे सत्त्वेन तद्व्यक्तिभेदकूटवत्त्वाभावादसभवः स्यात् तद्वारणाय स्वभिन्नत्वं निवेशितम्। 'अयं विशेषः – तद्विशेषाद्भिन्नः,–तादात्म्येनैतद्विशेषात्, 'पटः—विशेषान्तराद्भिन्नः,–गन्धादि'त्यत्र समूहालम्बनात्मकात् 'तद्विशेषभेदव्याप्यैतद्विशेषवान् विशेषः'—विशेषान्तरभेदव्याप्यगन्धवाँश्च पट'—इत्याकारकात्परामर्शाज्जन्याया 'अयं विशेषः—तद्विशेषाद्भिन्नः' 'पटो विशेषान्तराद्भिन्नश्चे'तिसमूहालम्बनात्मिकाया अनुमितेर्गन्धात्मकलिंगविशेष्यकपरामर्शजन्यतया तादृशानुमितिनिरूपितविशेषान्तरप्रतियोगिकभेदनिष्ठविधेयतानिरूपितोद्देश्यत्वस्य स्वस्मिन् विशेषेऽपि सत्त्वेन तच्छून्यत्वाऽभावादसंभवः स्यात्—तद्वारणाय–विधेयतायामनुमितिनिरूपितत्वं—स्वभिन्नत्वाद्युपलक्षितलिङ्गविशेष्यकव्याप्तिप्रकारकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वरूपमभिहितम्, उक्तसमूहालम्बनात्मकानुमितेरुभयलिङ्गकपरामर्शजन्यत्वात् तन्निरूपितविधेयतायां न स्वभिन्नत्वोपलक्षितगन्धात्मक-लिङ्गविशेष्यकव्याप्तिप्रकारकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वमिति किंतु केवलायां 'पटः-विशेषान्तरभिन्नः,–गन्धा'दित्येतत्स्थलीयानुमितिनिरूपितविधेयतायामेव, तन्निरूपितोद्देश्यताश्रयीभूतपटव्यक्तिभेदवत्त्वाद् 'विशेष'लक्षणसमन्वय इति ॥ विशेषाणां लक्षणन्तु—'सामान्यरहितत्वे सति सामान्यभिन्नत्वे सति समवेतत्वम्'—द्रव्यगुणकर्मवारणाय—सामान्यरहितत्वे सतीति। सामान्यवारणाय सामान्यभिन्नत्वे सतीति। समवायाऽभाववारणाय—समवेतत्वमिति। अत्र सामान्यरहितत्वम्—'अधिकरणतात्रयनिरूपितसमवायसम्बन्धावच्छिन्नाऽऽधेयत्वावच्छिन्नप्रतियोगिताकाभाववत्त्व'रूपं बोध्यम्। सामान्यभिन्नत्वञ्च—'अधिकरणतात्रयनिरूपितसमवायसम्बन्धावच्छिन्नाऽऽधेयत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्व'रूपं बोध्यम्। समवेतत्वञ्च—अधिकरणतानिरूपितसमवायसम्बन्धावच्छिन्नाधेयतावत्त्वरूपं बोध्यम्। अधिकरणतात्रयं—द्रव्यगुणकर्मनिष्ठमधिकरणतात्रयम्। अधिकरणता च– केवलद्रव्यनिष्ठाधिकरणता। तथा च—अधिकरणतात्रयनिरूपितसमवायसम्बन्धावच्छिन्नाऽऽधेयत्वावच्छिन्नप्रतियोगिताकाऽऽभाववत्त्वे सति अधिकरणतात्रयनिरूपितसमवायसम्बन्धावच्छिन्नाऽऽधेयत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वे च सति अधिकरणतानिरूपितसमवायसम्बन्धावच्छिन्नाधेयतावत्त्वं' विशेषत्वमिति फलितार्थः ॥ 'स्वतोव्यावृत्तत्वं' वा तल्लक्षणम्, तच्च पूर्वं परिष्कृतम् ॥

मूले—'**घटादीनां कपालादाविति**। घटस्य अवयविनः 'कपाले समवायिकारणात्मकेऽवयवे यः सम्बन्धः स समवायः, आदिना पटादिपृथिव्याः स्वसमवायिकारणेऽवयवे तन्त्वादौ यः सम्बन्धः, जलतेजोवायूनामवयविनाञ्च स्वस्वावयवेषु यः सम्बन्धः स समवायो बोध्य इत्यर्थः। द्रव्येषु=पृथिवीजलादिनवसु द्रव्येषु च स्वस्वगुणानां स्वस्वकर्मणाञ्च यः सम्बन्धः स समवायः। तेषु=द्रव्यगुणकर्मसु च जातेः=सत्ताद्रव्यत्वादिजातीनाञ्च यः सम्बन्धः, स समवाय इत्यर्थः॥ मुक्तावल्यां—**समवायं दर्शयति—घटादीनामितीति**। अत्र घटादिपदमवयविमात्रपरम्, कपालादिपदञ्चाऽवयवमात्रपरम्, षष्ठ्याः प्रतियोगित्वमर्थः, सप्तम्या अनुयोगित्वमर्थः, तथा च—अवयविप्रतियोगिकोऽवयवानु-

**क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवायः। समवायत्वं नित्यसम्बन्धत्वम्। तत्र प्रमाणं तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया**

योगिको यः सम्बन्धः स समवाय इत्यर्थः फलितः। एतदभिप्रायेणाह-**अवयवावयविनोरिति**। जातिव्यक्त्योः-सम्बन्धः=जातिप्रतियोगिको व्यक्त्यनुयोगिकः सम्बन्धः, व्यक्तिः-द्रव्यगुणकर्मान्यतमादिरूपा। गुणगुणिनोः सम्बन्धः=गुणप्रतियोगिको गुण्यनुयोगिकः, सम्बन्धः, गुणि=द्रव्यम्। क्रिया-क्रियावतोःसम्बन्धः=क्रियाप्रतियोगिकः क्रियावदनुयोगिकः सम्बन्धः। क्रियावत्—द्रव्यम्॥ जातेश्चेत्यत्र 'च'शब्देन सूचितमर्थमाह—**नित्यद्रव्यविशेषयोरिति**। नित्यद्रव्येषु=नित्यत्वं प्रागभावाऽप्रतियोगित्वमात्रम्, तद्विशिष्टद्रव्याणि-पृथिव्यप्तेजोवायूनां परमाणव आकाशकालदिगात्ममनांसि च, तेषु विशेषपदार्थानां यः सम्बन्धः (नित्यद्रव्यानुयोगिको विशेषप्रतियोगिको यः सम्बन्धः)स समवायः॥ ननु मूलस्थ'समवाय'-पदेन समुपस्थितस्य समवायत्वात्मकसमवायलक्षणस्यैकव्यक्तिवृत्तित्वेन जातित्वाभावात् किं नाम समवायत्वम्? इत्याकांक्षायामाह-**नित्यसम्बन्धत्वमिति**। 'नित्यत्वे सति सम्बन्धत्वं' समवायलक्षणमित्यर्थः। नित्यत्वानुपादाने संयोगेऽतिव्याप्तिः। सम्बन्धत्वानुपादाने आकाशादावतिव्याप्तिः। अत्र सम्बन्धत्वं-'विशिष्टप्रतीतिनियामकत्वं', यथा घटभूतलयोर्घटवद्भूतल'मिति-विशिष्टबुद्धिनियामकत्वं संयोगे तथा 'गुणवान् घट'इतिप्रतीतिनियामकत्वं समवाये-इति। तत्र गुणे प्रकारताऽऽख्या विषयता, घटे विशेष्यताऽऽख्या विषयता, समवाये च संसर्गताऽऽख्या विषयता बोध्या। एवञ्च विशिष्टप्रतीतिनियामकत्वमत्र- विशिष्टबुद्धिनिरूपितप्रकारत्वाख्यविशेष्यत्वाख्यविषयताभिन्नविषयतावत्त्व'रूपं बोध्यम्। ननु 'घटघटत्वे'इति निर्विकल्पकज्ञानीयचतुर्थीविषयतामादाय नित्ये घटत्वेऽतिव्याप्तिः, एवं पटाभावो पटाभाववानि'तिविशिष्टज्ञानीयप्रकारताविशेष्यताभिन्नविषयतावत्त्वस्य पटाभावात्मकस्वरूपसम्बन्धे सत्त्वान्नित्यत्वस्य च तत्राऽवर्तमानत्वादतिव्याप्तिरिति चेन्न, प्रकारतात्वविशेष्यतात्ववत् संसर्गतात्वस्याऽप्यतिरिक्ततया नित्यत्वे सति विशिष्टबुद्धिनिरूपितप्रकारत्वविशेष्यत्वान्यतरवद्भिन्नवृत्तिसंसर्गताश्रयत्वस्यैव लक्षणार्थत्वात्॥ अन्ये तु-'नित्यज्ञानव्यक्तिनिरूपितप्रकारत्वविशेष्यत्वान्यतरभिन्नविषयतावत्त्व-नित्यज्ञानव्यक्तिनिरूपितप्रकारत्वविशेष्यत्वान्यतरभिन्नविषयतानिरूपकप्रकारत्वविशेष्यत्वान्यतरवद्भिन्नत्व-नित्यत्वैतत्त्रितयवत्त्वमेव समवायलक्षणमिति परिष्कुर्वन्ति॥ यद्यपि समवायः प्रत्यक्षसिद्ध एव, 'नीलो घट'इत्यादौ तस्य संसर्गतया भानात् तथापि विप्रतिपन्नं प्रति प्रथमतस्स्वरूपसम्बन्धाद्यतिरिक्तो 'नीलो घट' इत्यादिप्रतीतिविषय इति प्रतिपादयितुमशक्यतया तदर्थमनुमानमाह-**तत्र प्रमाणन्तु**-'**गुणेत्यादि**। तत्र=समवाये, प्रमाणम्-अनुमानम्। गुणक्रियादिविशिष्टबुद्धिः=गुणविशिष्टबुद्धिः, क्रियाविशिष्टबुद्धिः, आदिपदेन च जातिविशिष्टबुद्धिः पक्षः। विशेषणविशेष्यसम्बन्धविषयकत्वं स्वरूपसम्बन्धेन साध्यम्, विशिष्टबुद्धित्वादिति हेतुः। तथा चानुमानाकारः-'गुणवान् घट'-इत्याकारकविशिष्टबुद्धिः,-विशेषणविशेष्यसम्बन्धविषया,-विशिष्टबुद्धित्वात्-'दण्डी पुरुष' इति विशिष्टबुद्धिवत्'। यथा 'दण्डवान् पुरुष' इति विशिष्टबुद्धिः,-तत्र विशेषणं-दण्डः, विशेष्यं पुरुषः, तयोः सम्बन्धस्तु संयोगः, तद्विषयिणी भवति, तथा 'गुणवान् घट'इत्यत्र विशेषणं गुणो विशेष्यो घटः, तयोर्यः सम्बन्धः स समवाय एवेति तद्विषयकत्वं तादृशविशिष्टबुद्धावक्षतम्, तत्र संयोगस्वरूपादीनाम्बाधात्तादृशविशिष्टबुद्धिविषयस्य समवायस्यातिरिक्तसम्बन्धतया सिद्धिरिति॥ एवं 'क्रियावान् घट'-इत्याकारकविशिष्टबुद्धिः-विशेषणविशेष्यसम्बन्धविषया,-विशिष्टबुद्धित्वात्,-'गतिमान् पुरुष' इतिविशिष्टबुद्धिवत्, 'जातिमान् घट' इत्याकारकविशिष्टबुद्धिः,-

**विशिष्टबुद्धित्वाद् दण्डी पुरुष इति विशिष्टबुद्धिवद् इत्यनुमानम्। अनेन संयोगादिबाधात्समवायसिद्धिः। न च स्वरूपसम्बन्धेन सिद्धसाधनम् अर्थान्तरं वा ?,**

---

विशेषणविशेष्यसम्बन्धविषया,-विशिष्टबुद्धित्वात्,-'पुरुषत्ववान् पुरुष'इतिविशिष्टबुद्धिवदि'त्यनुमानेऽप्यूह्यं ॥ वस्तुतस्त्वत्र-गुणक्रियाजात्यन्यतमप्रकारकबुद्धित्वं पक्षतावच्छेदकं, नातः-एकैकप्रकारकबुद्धित्वस्य पक्षतावच्छेदकत्वेऽपरस्य पक्षतावच्छेदककोटिप्रवेशाऽनुपपत्तिः,—तथा च—गुणवान् घटः' 'क्रियावान् घटः' 'जातिमान् घटः'—इत्याद्यन्यतमविशिष्टबुद्धिः पक्षः। 'विशेषणविशेष्यसम्बन्धविषये'ति च—'विशेषणञ्च विशेष्यञ्च सम्बन्धश्च,—ते विषया यस्याः सेति विग्रह'-बलात्—विशेषणतानिरूपकत्व—विशेष्यतानिरूपकत्व—संसर्गतानिरूपकत्वात्मकं प्रत्येकं साध्यं लभ्यते, 'विशिष्टबुद्धित्वा'त्मकहेतोस्तादृशत्रयाणामपि व्याप्यत्वात्। अत्र प्रकृते 'संसर्गतानिरूपकत्व'-मात्रं साध्यमौपयोगिकं, तावतैव समवायसिद्धिसंभवादिति तु ज्यायः॥ **विशिष्टबुद्धित्वादिति।** यत्किञ्चित्पदार्थनिष्ठविशेषणतानिरूपितबुद्धित्वादित्यर्थः । अत्र-यत्किञ्चित्पदार्थनिष्ठविशेषणतानिरूपकत्वमात्रस्यैव सद्धेतुत्वसंभवाद्धेतौ बुद्धित्वं न निवेशनीयम्, व्यर्थत्वात्। न च यत्किञ्चित्पदार्थनिष्ठविशेषणतानिरूपकत्वम् इच्छानिष्ठमादाय स्वरूपाऽसिद्धिप्रसंगेन बुद्धिनिष्ठनिरुक्तनिरूपकत्वस्यैव हेतुत्वमिति ज्ञापनार्थं विशिष्टबुद्धित्वादित्युक्तमिति वाच्यम्। बुद्धिनिष्ठनिरुक्तनिरूपकत्वस्यापि तत्तद्व्यक्तित्वेन हेतुत्वेऽप्यननुगमेन भागाऽसिद्धिप्रसंगात् निरूपकतात्वेन निरूपकताया हेतुत्वस्यावश्यकतया तस्या इच्छादिसाधारण्येऽपि तत्र 'संसर्गतानिरूपकत्वा'त्मकसाध्यस्यापि सत्त्वाद् व्यभिचारित्वाऽप्रसक्त्या पूर्वोक्तप्रयोजनविरहाद्धेतौ बुद्धित्वदानं व्यर्थमेवेति । किन्त्वेतादृशहेतोः पक्षसत्त्वबोधनाय तदभिहितमिति ध्येयम् ॥ **अनेनेति।** उक्तानुमानेनेत्यर्थः ॥ **संयोगादिबाधादिति।** 'द्रव्ययोरेव संयोग'इति नियमाद् गुणद्रव्ययोः क्रियाद्रव्ययोर्जातिद्रव्ययोः सम्बन्धे संयोगत्वबाधात्, एवम् आदिपदेन तादात्म्यस्य दैशिकस्वरूपस्य च गुणद्रव्ययोः संसर्गत्वबाधोऽपि बोध्यः, गुणद्रव्ययोरैक्याभावेन तादात्म्यस्य बाधितत्वात्, अभावस्यैव च दैशिकविशेषणतासम्बन्धांगीकारात् प्रकृते तदसंभवाच्च ॥ समवायनानात्ववादिनां नव्यानां मते निरुक्तानुमानेन न समवायसिद्धिः संभवति, अतिरिक्तानन्तसमवायानां सम्बन्धत्वकल्पनामपेक्ष्य क्लृप्ताऽनन्तस्वरूपाणामेव सम्बन्धत्वौचित्यादित्यतस्तन्मते तु-'समवायेन पटत्वावच्छिन्नं प्रति तादात्म्येन तन्तुत्वेन हेतुत्वात् कार्यतावच्छेदकसम्बन्धविधया समवायसिद्धिः,-अनुमानं यथा-'तादात्म्यसम्बन्धावच्छिन्नतन्तुनिष्ठकारणतानिरूपितपटत्वावच्छिन्नकार्यता,-किंचित्सम्बन्धावच्छिन्ना,-कार्यतात्वादि'ति। अत्र यः कश्चित्सम्बन्धः स समवायः॥ वस्तुतस्तु-प्रतियोगितासम्बन्धेन आश्रयनाशाऽजन्यरूपनाशं प्रति स्वानुयोगिसमवेतत्वसम्बन्धेन विलक्षणतेजःसंयोगस्य हेतुत्वं भवति, तत्र समवायानङ्गीकारे स्वानुयोगिसम्बद्धत्वसम्बन्धेन हेतुत्वं वक्तव्यम्, तत्र स्वानुयोगिघटादिना रूपस्य न स्वरूपसम्बन्धः, तस्य तदानीं नाशात्, अत एव च न कालिकः, विद्यमानस्यैव कालिकसम्बन्धस्वीकारात्, संयोगस्य बाधितत्वाच्च, तादृशसंयोगनिष्ठकारणतावच्छेदकसम्बन्धघटकतया समवायसिद्धिरनुसन्धेयेति ॥ स्वरूपसम्बन्धवादिनो **मीमांसकाः**-"अयुतसिद्धयोर्गुणद्रव्ययोः स्वरूपसम्बन्धस्तु प्रत्यक्षसिद्ध एव, तस्य च 'गुणक्रियादिविशिष्टबुद्धि'-पक्षकानुमाने साध्यघटितसम्बन्धतया धर्तुं शक्यत्वात् सिद्धस्य तस्य साधने सति सिद्धसाधनं दोषः, समवायसाधनाय प्रवृत्तनैयायिकमते च स्वरूपसम्बन्धस्य प्रकृताऽनुपयोगित्वेन-अर्थान्तरं दोषः-इति-शंकन्ते, तन्निरस्यति- **न च स्वरूपसम्बन्धेन सिद्धसाधनम् अर्थान्तरं वेति।** मीमांसकमतसिद्धस्वरूपसम्बन्धस्य साधनेन यत् सिद्धसाधनं न्यायमते चाऽर्थान्तरं

**अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवाल्लाघवादेकसमवायसिद्धिः। न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः, तत्र रूपसमवायसत्त्वेऽपि रूपाभावात्।**

---

वा दोषः स चात्र नाऽऽशंकनीय इत्यर्थः ॥ दोषाऽप्रसक्तौ हेतुमाह–**अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवादिति।** 'गुणवान् घटः' 'क्रियावान् घटः'–'जातिमान् घटः'–इत्यादिप्रतीतिषु घटस्वरूपमेव संसर्गः क्रियास्वरूपमेव संसर्गः, जातिस्वरूपमेव संसर्गः। तत्र तत्र तत्प्रतीतिनिरूपिता च संसर्गता भिन्ना भिन्ना कल्पनीयेति तत्तत्प्रतीतिष्वनन्तस्वरूपाणां नानासंसर्गत्वकल्पने गौरवमित्यर्थः। गौरवाच्च स्वरूपसम्बन्धा न स्वीक्रियन्ते एव, अतो न सिद्धसाधनार्थान्तरे ॥ **लाघवादेकसमवायसिद्धिरिति।** लाघवज्ञानसहकृतादितरबाधादिसहकृतान्निरुक्तानुमानाद् एकोऽतिरिक्तः समवायः सिद्ध्यतीत्यर्थः। यथा–'क्षित्यादिकार्यं सकर्तृकमि'त्यत्र 'कृतिजन्यत्वव्याप्यकार्यत्ववानि'तिपरामर्शादपि 'कृतेरेकत्वे लाघवमि'तिलाघवज्ञानसहकृतात् 'क्षित्यङ्कुरादिकमेककृतिजन्य' मित्यनुमितिवत् 'सम्बन्धस्यैकत्वे लाघव'मितिलाघवज्ञानसहकृताद् 'विशेषणविशेष्यसम्बन्धविषयकत्वव्याप्यविशिष्टबुद्धित्ववती गुणक्रियादिविशिष्टबुद्धि'रिति परामर्शादपि विशेषणविशेष्ययोरेकसम्बन्धविषयिण्यनुमितिरिति भावः ॥ अथ–विपरीतमेव गौरवम्,–तथाहि 'नीलो घटः' इति प्रतीतौ घटस्वरूपमेव संसर्गः, घटस्वरूपं च कॢप्तमेव न तु कल्पनीयम्, तत्प्रतीतिनिरूपिता च या संसर्गता समवाये स्वीक्रियते सैव मया घटस्वरूपेऽङ्गीक्रियत इति समानम्, एवं तत्तत्प्रतीतिनिरूपितास्तत्तत्पदार्थप्रतियोगिकसमवाये स्वीकृता एव संसर्गताः मया तत्तत्स्वरूपेषुस्वीक्रियन्त इत्यपि समानम्, एवम्–विषयभेदेन विषयतानां भिन्नतया तत्तत्स्वरूपेषु तत्तत्प्रतीतिनिरूपितानां संसर्गतानां यथा भेदाऽऽपत्तिः, तथा विषयैक्येऽपि निरूपकविषयिताभेदेन विषयताभेदस्याऽऽवश्यकतया समवायनिष्ठानामपि संसर्गतानां घटपटादिविशेष्यताभेदेन भेदापत्तिरपि समाना, तत्रैकस्मिन् समवाये बहुविषयताकल्पनापेक्षया बहुस्वरूपेष्वेकविषयताकल्पनस्य गौरवाऽभावात् ( समानत्वात् ) तथा च–अतिरिक्तसमवायकल्पनाप्रयुक्तं गौरवं परमतिरिच्यते, अतः समवायो न प्रामाणिक इति चेत्! उच्यते–अस्ति तावद् 'अयं घटोऽयं घट'इति ज्ञानात् 'इमे घटा'इति ज्ञानस्य वैलक्षण्यम्, तच्च समूहालम्बने विशेष्यताभेदेन प्रकारतानां भेदः, नतु 'इमे घटा'इति ज्ञाने, इति स्वीकारेणैव निर्वहति, ततश्च तस्मिन् ज्ञाने नानाविशेष्यता निरूपिता एकैव प्रकारता तन्निरूपिका च संसर्गता समवायस्वीकर्तृभिरेकैव स्वीकार्या, स्वरूपसम्बन्धवादिभिस्तु तत्तद्व्यक्तिस्वरूपात्मकविषयभेदाद्भिन्ना एव संसर्गताः स्वीक्रियेरन्,–इति व्यक्तमिदं गौरवम्, एवं–नीलपीतादिविशिष्टेष्वनन्तेषु भूतलादिस्वरूपेषु नीलादिप्रतियोगिकत्वकल्पनापेक्षया एकस्मिन् समवाये तत्कल्पनायां लाघवमित्यवधेयम् ॥ ननु–समवायस्यैकत्वे 'सम्बन्धसत्त्वे सम्बन्धिसत्त्व' मितिनियमाद् यत्र यत्र समवायस्तत्र तेन समवायेन तत्समवायस्य सम्बन्धिनो रूपादेः सत्त्वमावश्यकम्, तथा च यथा वायौ स्पर्शस्य समवायो वर्ततेऽतस्तेन समवायेन स्पर्शोऽपि वर्तते, तथैव तस्य समवायस्य च सम्बन्धि यत् पृथिव्यादिगतं रूपं तस्यापि सत्त्वं वायावापद्येतेत्येवं निषेधमुखेनाऽऽशंकते–**न च समवायस्यैकत्वे**–'इति। स्पर्शसमवायरूपसमवाययोरेकत्वे–इत्यर्थः ॥ **वायौ रूपवत्ताबुद्धिप्रसंगः**–इति। अभ्रान्तस्यापि पुरुषस्य 'वायू रूपवानि'तिबुद्धेः प्रमात्वप्रसङ्ग इत्यर्थः। तादृशप्रसङ्गो न भवतीति निषेधार्थः ॥ तत्र हेतुमाह–**तत्र रूपसमवायसत्त्वेऽपि रूपाभावा दिति।** तत्र=वायौ, रूपस्य यः समवायसम्बन्धस्तस्य सत्त्वेऽपि, रूपस्य समवायेन अभावान्न 'वायू रूपवानि'तिप्रतीतेः प्रमात्वमित्यर्थः। **रूपाभावादित्यस्य** रूपप्रतियोगिकत्वविशिष्टसमवायाऽभावा-

**न चैवमभावस्यापि वैशिष्ट्यं सम्बन्धान्तरं सिध्येदिति वाच्यम्, तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गाद्, घटाभावस्य तत्र सत्त्वात्, तस्य च नित्यत्वात्। अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्याद्,—**

---

दित्यर्थः, तथा च 'रूपप्रतियोगिकत्वविशिष्टसमवायः पृथिवीजलतेजस्सु वर्तते तस्य वायावभावात्, सम्बन्धाभावात् तत्सम्बन्धिनो रूपस्य न वायावापत्तिरिति भावः॥ ननु 'विशिष्टं शुद्धान्नातिरिच्यत' इति नियमाद् रूपप्रतियोगिकत्वविशिष्टसमवायो न समवायाऽतिरिक्तः, तथा च वायौ रूपवत्ताबुद्धेः प्रमात्वापत्तिस्तदवस्थेति चेत् न, **रूपाभावादित्यस्य** रूपप्रतियोगिकत्वविशिष्टसमवायनिष्ठनिरूपकताकानुयोगिताया अभावादित्यर्थः, तथा च वायौ न रूपवत्ताबुद्धेः प्रमात्वप्रसङ्ग इति॥ **वस्तुतस्तु**—स्फटिके लौहित्याश्रयसंयोगवत् कृष्णपाषाणादावपि लौहित्याश्रयसंयोगसत्त्वेऽपि 'लोहितः पाषाण' इति प्रतीत्यभावात् पाषाणनिष्ठलौहित्याश्रयसंयोगस्य यथा लौहित्यसम्बन्धत्वाऽभावस्तथा 'वायू रूपवानि'त्यनुभवाभावेन वायौ समवायस्य रूपसम्बन्धत्वं नाङ्गीक्रियत एवेति नोक्तापत्तिरिति **ध्येयम्**॥ तुल्ययुक्तया मीमांसकाभिमतवैशिष्ट्या'ऽऽख्यसम्बन्धान्तरस्य सिद्धिमाशंक्य निषेधति—**न चैवमभावस्यापीति**। एवम्='घटाभाववद्भूतल'मित्याकारकविशिष्टबुद्धिः—विशेषणविशेष्यसम्बन्धविषया,—विशिष्टबुद्धित्वा'दि—त्यनुमानादित्यर्थः॥ **वैशिष्ट्यं सम्बन्धान्तरमिति**। भूतलादौ वैशिष्ट्यमतिरिक्तपदार्थरूपं सिद्ध्येदित्यर्थः॥ अभावाधिकरणयोरतिरिक्तपदार्थात्मकवैशिष्ट्यं नित्यमनित्यं वेति विकल्प्याऽऽद्ये दूषणमाह—**तस्य नित्यत्वे**—इति तस्य=वैशिष्ट्याख्यसम्बन्धस्य। नित्यत्वे=ध्वंसप्रागभावान्यतराऽप्रतियोगित्वात्मके नित्यत्वे पक्षेऽङ्गीक्रियमाणे सतीत्यर्थः॥ **भूतले घटानयनाऽनन्तरमपीति**। पूर्वं यत्र भूतले घटो न वर्तते तादृशे भूतले घटस्याऽऽनयने सति घटसत्त्वदशायामपीत्यर्थः॥ **घटाभावबुद्धिप्रसंगादिति**। 'घटाभाववद्भूतल'मिति—प्रतीतिप्रसंगः स्यात्, यतो घटाभावभूतलयोर्यो वैशिष्ट्याख्यसम्बन्धस्तस्य नित्यत्वाद्घटानयने सत्यपि नाशाऽसंभवात् 'सम्बन्धसत्त्वे च सम्बन्धिसत्त्व'नियमबलाद् भूतले घटाभावात्मकस्य सम्बन्धिनः प्रतीतिरापद्येतेति भावः॥ ननु वैशिष्ट्यस्य तत्र सत्त्वेऽपि घटानयनकाले घटाभावस्याऽसत्त्वाद्घटाभावाभावस्य घटात्मकस्य सत्त्वाद्घटाभाववत्ताबुद्धिंप्रति घटाभावाभाववत्ताबुद्धेः प्रतिबन्धकत्वाद्घटाभावाभावात्मकस्य घटस्य सत्त्वदशायां न स्याद्घटाभाववद्भूतल'मिति बुद्धिरित्यत आह—**घटाभावस्य तत्र सत्त्वादिति**। तत्र=घटानयनदशायांघटाभावाभावात्मकघटवत्यपि भूतले, घटाभावस्य=घटात्यन्ताभावस्य, सत्त्वात्=सत्त्वे बाधकाभावात्॥ ननु विरोधिघटाभावाऽभावसत्त्वे कथं घटाभावो वर्तेत ? इत्यतस्तत्र हेतुमाह—**तस्य च नित्यत्वादिति**। तस्य=घटात्यन्ताभावस्य, नित्यत्वात्=ध्वंसप्रागभावाऽन्यतराऽप्रतियोगित्वात्। तथा च घटानयने कृतेऽपि घटाभावस्य नाशाभावेन घटाभावाभावात्मकघटवति भूतले घटाभाववत्ताप्रतीत्यापत्तेर्दुर्वारत्वम्, 'घटाभावे नित्यत्वबलात् सत्त्वप्रसक्त्या 'तद्वत्ताबुद्धिं प्रति तदभाववत्ताबुद्धिः प्रतिबन्धिके'तिनियमप्रयुक्तं यद् असत्त्वं तद्बाधितमिति भावः॥ ननु घटात्यन्ताभावोऽनित्य एवांगीकार्यः, घटानयनकाले घटात्यन्ताभावस्य नाशान्न स्या'द्घटवत्ताबुद्धि'प्रसंग—इति विपक्षेऽपि दूषणमाह—**अन्यथेति**। यदि घटात्यन्ताभावो नित्यो न स्यात् तदेत्यर्थः। देशान्तरेऽपि=घटशून्यदेशेऽपि। तत्प्रतीतिः='घटाभाववद्भूतल'मिति प्रतीतिः॥ **न स्यादिति**। घटत्वावच्छिन्नात्यन्ताभावस्यैकत्वादेवाऽनित्यत्वपक्षे एकस्थले घटानयने सति घटाभावस्य नाशे सर्वत्र भूतले घटाभावो नष्ट,—इत्यतो घटाऽनधिकरणेऽपि भूतले घटाभावप्रतीतिर्न स्यात्, प्रत्युत तत्र घटाभावस्य नाशाद्घटेन भाव्यम्, तथा च सर्वमपि

**वैशिष्ट्यस्य च तत्र सत्त्वात्। मम तु घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः। वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तत्रैव गौरवम्। इत्थं च तत्तत्कालीनं तत्तद्भूतलादिकं तत्तदभावानां सम्बन्धः॥ ११॥**

---

भूतलं 'घटवद्घटवद्घटवदि'ति प्रतीतिविषयतामापद्येतेति भावः॥ **वैशिष्ट्यस्येति**। घटाभावस्य नित्यत्वेन तत्सम्बन्धस्य वैशिष्ट्याख्यस्य च नित्यत्वाभ्युपगमेन **तत्र**=भूतले वैशिष्ट्य-घटाभावयोः सम्बन्धसम्बन्धिनोर्घटानयनदशायामपि **सत्त्वाद्**=विद्यमानत्वाद्घटाभाववत्ताबुद्धिरापद्येतेति भावः। यद्यपि-घटवति न घटाभावबुद्धिः, घटवत्ताज्ञानस्य प्रतिबन्धकस्य तत्र सत्त्वात्, तथापि घटवत्ताज्ञानविरहदशायां जायमानाया घटाभावबुद्धेः प्रमात्वप्रसंग-'इत्येवमापत्तिरनुसन्धेया॥ ननु नैयायिकस्यापि यत्र पाकेन रक्तो घटो जातस्तत्र पूर्वकालीनश्यामरूपस्यापि समवायो नित्यसम्बन्धो वर्ततेऽतस्तत्रापि श्यामरूपवत्ताबुद्धिप्रसंगस्तुल्य इत्यतस्तत्समाधानमाह-**मम त्विति**। मम=नैयायिकस्य तु। घटे=आमघटे,=पाकरक्ततादशायां=पाकेन-विलक्षणतेजःसंयोगेन जायमानरक्तरूपवत्ताकाले, श्यामरूपस्य=आमसामयिककृष्णरूपस्य, नष्टत्वात्=ध्वस्तत्वात्, न तद्वत्ताबुद्धिः=न'श्यामोघट' इतिलौकिकप्रत्यक्षम्। तत्र समवायात्मकसम्बन्धसत्त्वेऽपि श्यामरूपात्मकाऽनित्यविषयस्याऽभावान्न श्यामवत्ताप्रतीत्याप्रत्तिरिति भावः। वस्तुतस्तु-श्यामप्रतियोगिकत्वविशिष्टसमवायानुयोगिकत्वस्य रक्तघटेऽभावान्न श्यामवत्ताबुद्धिरिति तु तत्त्वम्। वैशिष्ट्यस्थले तु वैशिष्ट्याख्यसम्बन्धस्य घटात्यन्ताभावात्मकसम्बन्धिनश्चनित्यत्वात् तद्वत्ताबुद्धिप्रसंगो दुष्परिहर इति तात्पर्यम्॥ वैशिष्ट्यस्याऽनित्यत्वपक्षमनूद्य दूषयति-**वैशिष्ट्यस्येति**। वैशिष्ट्याख्यसम्बन्धस्येत्यर्थः। अनित्यत्वे=ध्वंसप्रागभावाऽन्यतरप्रतियोगित्वांगीकारपक्षे तु,-उत्पत्तिविनाशप्रयुक्तं यदसंख्यवैशिष्ट्य कल्पनं तत् **तव**=अभावाधिकरणयोरतिरिक्तवैशिष्ट्यांगीकर्तृमीमांसकस्यैव। **गौरवमिति**। स्वरूपसम्बन्धेन सह वैशिष्ट्याऽऽनन्त्यप्रयुक्तगौरवस्य तुल्यत्वेऽप्यतिरिक्तवैशिष्ट्याख्यपदार्थकल्पनागौरवस्याऽऽधिक्यमित्यनुसन्धेयम्॥ ननु यद्यभावस्य सम्बन्धान्तरं न स्वीक्रियते, तर्हि तस्य कः सम्बन्धः! स्वरूपसम्बन्ध इति चेत्!, तथा सति घटशून्यतादशायामिव घटवत्तादशायामपि भूतले घटाभावलौकिकचाक्षुषाऽऽपत्तिर्नैयायिकमतेऽपि स्यात्, तत्र घटाधिकरणे भूतले घटाभावात्मकविषयस्य अधिकरणात्मकस्वरूपसम्बन्धस्य चक्षुःसंयुक्तानुयोगिकभूतलस्वरूपात्मकविशेषणतायाश्च सत्त्वादित्यत आह-**इत्थं चेति**। अभावानां स्वरूपसम्बन्धातिरिक्तसम्बन्धाऽनङ्गीकारे चेत्यर्थः। तत्तत्कालीनम्=यस्मिन् काले यत्र भूतलादौ घटो नास्ति तत्र घटाभाववद्भूतलमिति यत् प्रमात्वेनाऽभिमतं ज्ञानं तत्कालीनम्। तत्तद्भूतलादिकम्=यत्र भूतले घटाभावबुद्धिस्तद्भूतलादिकम्। तत्तदभावानाम्=यस्य यस्याऽभावस्य बुद्धिस्तस्य तस्याऽभावस्य। सम्बन्धः=अधिकरणात्मक एव स्वरूपसम्बन्धः। तथा च 'स्वावच्छिन्नत्वविशिष्टघटाभाववैशिष्ट्यावगाहिप्रमाधिकरणकालविशेषविशिष्टभूतलादिस्वरूपं सम्बन्ध-इति फलितार्थः। स्वपदं परिच्छेयकालविशेषपरम्। 'यदा यदा घटसमवधानं भूतले नास्ति तत्तत्कालावच्छिन्नत्वविशिष्टघटाभाववैशिष्ट्यविषयकं तद्भूतलविशेष्यकं प्रमात्मकं ज्ञानमन्ततः परमेश्वरस्य प्रसिद्ध्यतीति तदधिकरणत्वपरिच्छिततत्तत्कालविशेषविशिष्टभूतलस्वरूपस्य सम्बन्धतानिर्वाहः। एवञ्च-घटाभावभूतलयोर्न स्वरूपमात्रं सम्बन्धः, नापि वैशिष्ट्यं, किन्तु क्षणादिविशिष्टस्वरूप एव, तथा च घटवति न घटाभावबुद्धिप्रसंग इति॥

**मूले-अभावस्तु द्विधेति**। अभावः='नञ्'पदजन्यप्रतीतिविषयः, अथवा प्रतियोगिज्ञानसापेक्षज्ञानविषय इत्यर्थः। स तु द्विधा=द्विप्रकारकः, द्वित्वम्-अपेक्षाबुद्धिजन्यविषयतैव। अनेन-

अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥१२॥
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ।

अभावं विभजते—अभावस्त्विति । अभावत्वं द्रव्यादिषट्काऽन्योन्याभाववत्त्वम् ।

'अभावत्वं संसर्गाभावादिद्वयान्यतरत्वव्याप्य'मिति व्याप्तिलाभोऽपि बोध्यः । प्रतियोग्यनधिकरणे देशादावभावः कश्चित् प्रत्यक्षसिद्धः ॥ प्रकारमाह–संसर्गेति । संसर्गश्च अन्योन्यं च, तयोरभावः स चासौ भेदस्तस्मात्, पञ्चम्यास्तसिल्, संसर्गाभावान्योन्याभावभेदादित्यर्थः । संसर्गः=सम्बन्धः । स च संसर्गाभावस्त्रिधा भवति–प्रागभावः, ध्वंसात्मकोऽभावः, अत्यन्ताभावश्चेति । एवं त्रैविध्यम् आपन्नः=प्राप्तः सन्, संसर्गाभाव इष्यते–एतदभावत्रयं 'संसर्गाभाव'शब्देन उच्यत–इत्यर्थः । मुक्तावल्याम्–अभावं विभजते–इति । अभावत्वोपाध्यभिप्रायेणैकवचनम् । अभावत्वम्–अखण्डोपाधिः अनुयोगिताविशेषो'वा । 'अभावत्वाऽवान्तरधर्मावच्छिन्नधर्मिप्रतिपादनानुकूलकृतिमान् ग्रन्थकार'–इति बोधः ॥ 'अभावस्तु द्विधे'तिमूलस्था'ऽभाव'पदेन सूचितम् अभावत्वात्मकं लक्षणं निर्वक्ति 'अभावत्वं—द्रव्यादिषट्कान्योन्याभाववत्त्व'मिति । अत्र द्रव्यादीनां षट्काः स्वार्थकप्रत्ययेन षड्रूपा येऽन्योन्याभावास्तद्वत्त्वमर्थः, द्रव्यत्वाद्यवच्छिन्नप्रतियोगिताकभेदषट्कवत्त्वमिति यावद् । द्रव्यादिनिष्ठषट्त्वावच्छिन्नप्रतियोगिताकान्योन्याभाववत्त्वमिति तु नाऽर्थः, प्रत्येकस्मिन्नपि तादृशान्योन्याभावसत्त्वेन अतिव्याप्त्यापत्तेः । एतस्याऽभावलक्षणस्याऽन्योन्याभावात्मकाऽभावापेक्षितत्वादात्माश्रयो दोषः' 'स्वस्य स्वापेक्षाया' आत्माश्रयत्वात् । एवम्–अग्रेऽन्योन्याभावलक्षणं–'तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्व'-मिति वक्तव्यं, 'तत्राऽभावस्य' प्रविष्टत्वादन्योन्याश्रयो दोषः । अतो 'नञर्थबोधक–पदजन्यप्रतीतिविषयत्व'मितिलक्षणं वक्तव्यम् । यदि च 'प्रागभावस्य 'घटोऽत्र भविष्यती'ति प्रतीतिसिद्धस्य 'नञ्'-पदजन्यप्रतीतिविषयत्वाऽभावादव्याप्तिरित्युच्यते ? तदा–'प्रतियोगिज्ञानसापेक्षज्ञानविषयत्व'मित्येव लक्षणं बोध्यमिति ॥ नव्यास्तु–अभावत्वस्याऽखण्डोपाधित्वे प्रमाणाऽभावाद् 'भावभिन्नत्व'मेवाऽभावत्वं वक्तव्यम्, भावभिन्नत्वञ्च–'समवायेन–सत्तासम्बन्धित्व–समवायघटितसामानाधिकरण्येन सत्तासम्बन्धित्वै–तदन्यतरत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वंरूपं बोध्यमिति वदन्ति ॥ मूलस्थ-'संसर्गान्योन्याभावभेदत'–इत्यस्यार्थमाह–संसर्गाभावान्योन्याभावभेदादित्यर्थः–इति । अत्र 'संसर्ग'शब्दस्तादात्म्यातिरिक्तसम्बन्धपरः, 'अन्योन्य'शब्दस्तादात्म्यसम्बन्धपरः, संसर्गेण अभावः, अन्योन्येन चाऽभाव–इतिसमासः, अवच्छिन्नप्रतियोगिताकत्वं तृतीयार्थः, तथा च तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावः, तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावश्चेत्यर्थः । ध्वंसप्रागभावयोः किञ्चित्संसर्गानवच्छिन्नप्रतियोगिताकत्वेऽपि प्राचीनैस्तादात्म्यभिन्न–पूर्वकालत्वोत्तरकालत्वात्मकसंसर्गावच्छिन्नप्रतियोगिताकत्वांगीकारात् । अथवा–'संसर्ग'शब्दस्तादात्म्यानवच्छिन्नप्रतियोगितात्मकसंसर्गपरः, 'अन्योन्य'शब्दस्तु तादात्म्यावच्छिन्नप्रतियोगितात्मकसम्बन्धपरः, संसर्गस्य अभावः, अन्योन्यस्य च अभावः, षष्ठ्यर्थो निरूपकत्वं, तथा च–'तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगितानिरूपकाभावः तादात्म्यसम्बन्धावच्छिन्नप्रतियोगितानिरूपकाऽभावश्चेति फलितार्थः, तयोर्भेदस्तस्मादित्यर्थः । अन्योन्याभावस्यैकविधत्वादिति । अन्योन्याभावस्य=

**संसर्गेति । संसर्गाभावान्योन्याभावभेदादित्यर्थः । अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात्संसर्गाभावं विभजते-प्रागभाव इति । संसर्गाभावत्वम् अन्योन्याभावभिन्नाभावत्वम् । अन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभाव-**

भेदस्य, एकविधत्वात्=अन्योन्याभावत्वव्याप्य-तद्व्यक्तित्वान्यतरत्वाद्यतिरिक्ताऽवान्तरविभाजकधर्मानवच्छिन्नत्वात्, तद्विभागाऽभावात्=तस्य=अन्योन्याभावस्य विभागाऽसंभवात्, संसर्गाभावं विभजते=संसर्गाभावत्वव्याप्यमिथोविरुद्धाऽवान्तरप्रागभावत्वादिधर्मावच्छिन्नधर्मिप्रतिपादनं करोतीत्यर्थः ॥ संसर्गाभावत्वं निर्वक्ति-**संसर्गाभावत्वमन्योन्याभावभिन्नाभावत्वमिति** । संसर्गाभावस्य 'अन्योन्याभावभिन्नत्वे सति अभावत्व'मिति लक्षणम् । अन्योन्याभावेऽतिव्याप्तिवारणाय-अन्योन्याभावभिन्नत्वे सतीति । घटादावतिव्याप्तिवारणाय-अभावत्वमिति ॥ 'अन्योन्याभावभिन्नत्वे सती'त्यत्र भेदीयप्रतियोगितावच्छेदकम् अन्योन्याभावत्वं न तादात्म्यसम्बन्धावच्छिन्नप्रतियोगितानिरूपितानुयोगितारूपम्, तस्याऽन्योन्याभावव्यक्तिभेदेन भिन्नत्वादेकैकान्योन्याभावत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वस्य पराऽन्योन्याभावेऽतिव्याप्त्यापत्तेः; किन्तु सकलाऽन्योन्याभावसाधारणाऽखण्डोपाधिरूपमन्योन्याभावत्वं भेदीयप्रतियोगितावच्छेदकं ग्राह्यम्, तथा च-'सकलान्योन्याभावसाधारणाऽखण्डोपाध्यात्मकाऽन्योन्याभावत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वे सत्यभावत्वस्य'-न तत्राऽतिव्याप्तिरिति । **अथवा**-'यावत्योऽन्योन्याभावव्यक्तयस्तावदन्यतमत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वे सत्यभावत्व'मिति लक्षणकरणान्नोक्तदोषः । **अथवा**-'स्वावच्छेदकावच्छिन्नवृत्तिकत्व-स्वनिरूपकत्वोभयसम्बन्धेन यत् प्रतियोगिताविशिष्टत्वं स्वाश्रयाधिकरणकालाऽवृत्तित्वसम्बन्धेन च यत् प्रतियोगिताविशिष्टत्वं-तदन्यतरवत्त्वमेव पारिभाषिकमन्योन्याभावभिन्नत्वमत्र ग्राह्यम्, समन्वयो यथा-स्वं—घटाद्यत्यन्ताभावीया घटादिनिष्ठा प्रतियोगिता, तदवच्छेदकं घटत्वम्, तदवच्छिन्ने घटे वृत्तिर्यस्य घटात्यन्ताभावस्य,-तत्कत्वं,-घटात्यन्ताभावे, पुनः स्वं-सैव प्रतियोगिता, तन्निरूपकत्वमपि घटाद्यत्यन्ताभावे,-इत्युभयसम्बन्धेन प्रतियोगिताविशिष्टत्वं घटाद्यत्यन्ताभावे; एवं-स्वं=घटादिप्रागभावीया घटादिध्वंसीया वा घटादिनिष्ठा प्रतियोगिता, तदाश्रयो घटादिः, तदधिकरणे कालेऽवृत्तित्वं प्रागभावस्य ध्वंसस्य वा,-इति तादृशसम्बन्धेन प्रतियोगिताविशिष्टत्वं प्रागभावे ध्वंसे वा,-इत्येवमुभयं यत् प्रतियोगिताविशिष्टत्वं तदन्यतरवत्त्वम्-अत्यन्ताभावे प्रागभावे ध्वंसे चेति। एतत्क्रियानाशोत्तरकालोत्पन्नघटे एतत्क्रियाऽभावप्रतियोगिताऽऽश्रयैतत्क्रियाऽधिकरणकालाऽवृत्तित्वस्य सत्त्वात् स्वाश्रयाधिकरणकालाऽवृत्तित्वसम्बन्धेन प्रतियोगिताविशिष्टत्वस्य घटेऽतिव्याप्तिः, तद्वारणाय 'अभावत्वमि'तिविशेष्यदलं बोध्यम् । **अथवा**-'वाच्यत्वसम्बन्धावच्छिन्नाऽन्योन्याभाव'शब्दनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकभेदवत्त्वे सति अभावत्वमि'त्यपि लक्षणं बोध्यम् ॥ अन्योन्याभावस्याऽन्योन्याभावत्वात्मकं लक्षणं निर्वक्ति-**तादात्म्येति** । तस्य(पदार्थस्य)आत्मा स्वरूपं-तदात्मा, तदात्मनो भावस्तादात्म्यम्=अभेद इत्यर्थः, तादृशतादात्म्यसम्बन्धावच्छिन्ना प्रतियोगिता यस्य सः, एतादृशोऽभाव इत्यर्थः । तादात्म्यसम्बन्धेन घटः स्वस्मिन्नेव वर्तते' न तु कपाले भूतलेऽन्यत्र वा । तथा च-तादात्म्यसम्बन्धेन घटादेरभाव एवाऽन्योन्याभावः, स च प्रतियोगितावच्छेदकीभूतघटत्वादिमद्घटादिकं विहायाऽन्यत्र वर्तत इति ॥ प्राचीनमते पूर्वकालवृत्तित्वाद्यात्मकसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावत्वस्य प्रागभावध्वंसयोः सत्त्वात् तत्राऽतिव्याप्तिवारणाय-तादात्म्येति । अत्यन्ताभाववारणाय-तादात्म्यत्वं सम्बन्धांशे निवेशितम् । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताश्रयत्वात्मकस्य तादृशप्रतियोगिताकत्वस्य घटादावपि सत्त्वात् तत्रातिव्याप्तिवारणाय 'अभावत्व-

**त्वम्। विनाश्यभावत्वं प्रागभावत्वम्। जन्याभावत्वं ध्वंसत्वम्—**

मिति तादृश्यप्रतियोगितानिरूपितानुयोगितावत्त्वमित्यर्थलाभार्थमुपात्तम् ॥ **वस्तुतस्त्वत्र**–तादात्म्यं नाऽभेदः, अभेदस्य भेदप्रतियोगिताकाभावरूपस्य भेदत्वावच्छिन्नप्रतियोगिताकाभावरूपस्य वाऽतिव्याप्त्यसंभवान्यतरदोषग्रस्तत्वात्। किन्तु–तादात्म्यम् एकमात्रवृत्तिधर्म एव, धर्मे एकमात्रवृत्तित्वञ्च–'स्वप्रतियोगिवृत्तित्व–स्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यद्यत् स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वं, तादृशो धर्मस्तत्तद्व्यक्तित्वादिकमेवेति तदेव तादात्म्यम्, तादृशतादात्म्यसम्बन्धावच्छिन्नप्रतियोगितानिरूपितानुयोगितावत्त्वमे'वाऽन्योन्याभावत्वं बोध्यम्। **अथवा**–वाच्यतान्धेन 'अन्योन्याभाव'शब्दवत्त्वस्य लक्ष्यतावच्छेदकत्वे 'यावन्तोऽन्योन्याभावव्यक्तयस्तावदन्यतमत्वं'–लक्षणं बोध्यमिति ॥ प्रागभावलक्षणमाह–**विनाश्यभावत्वमिति**। विनाशित्वे सति अभावत्वमित्यर्थः। अत्यन्ताभावादावतिव्याप्तिवारणाय–विनाशीति। विनाशित्वं–ध्वंसप्रतियोगित्वम्। घटादावतिव्याप्तिवारणाय-अभावत्वमिति। अत्र यदि प्रागभावनिष्ठतत्तद्व्यक्तित्वानां लक्ष्यतावच्छेदकत्वं तदा नाशव्यक्तिभेदेन भिन्न—नाशप्रतियोगित्वघटितमेव 'ध्वंसप्रतियोगित्वे सति अभावत्व'–मितिलक्षणम्। यदि च वाच्यतासम्बन्धेन 'प्रागभाव'शब्दवत्त्वं लक्ष्यतावच्छेदकं तदा 'यावन्तः प्रागभावव्यक्तयस्तावदन्यतमत्व'मिति लक्षणमनुसन्धेयम्। अयं प्रागभावः प्रतियोगिनो घटादेः समवायिकारणे कपालादौ वर्तते, स च प्रतियोग्यात्मकं कार्यमुत्पाद्य नश्यति, अतो घटात्मकप्रतियोगिनो जनकोऽपि भवति, अत एव च भविष्यत्कालीनसत्ताकघटप्रतियोगिताको 'घटो भविष्यतो'ति प्रतीतिसिद्धः, 'भविष्यतो'तिशब्दप्रयोगात्मकव्यवहारजनकः सम्बन्धानवच्छिन्नप्रतियोगिताकश्च भवतीति ॥ **केचित्तु**–उत्पन्नेऽपि घटे तदीयकारणानां कपालसंयोगदण्डादीनां सद्भावेन पुनर्घटोत्पादभिया तत्स्वीकारात्, ततश्च घटोत्पत्तिं प्रति प्रागभावस्यापि कारणतया तस्यैव तदानीमसत्त्वेन न-पुनर्घटोत्पाद इति, 'अयं घटः–,स्वोत्पत्तिक्षणाऽवृत्तिकारणजन्यः,–स्वोत्पत्तिद्वितीयक्षणानुत्पन्नत्वादि' त्यनुमानेन प्रागभावसिद्धिरिति **वदन्ति**। तन्न। 'समवायेन जन्यद्रव्यं प्रति समवायसम्बन्धावच्छिन्नप्रतियोगिताक–द्रव्याभावस्य,कारणत्वाभ्युपगमेन घटात्मकप्रतिबन्धकसत्त्वादेव तदभावात्मककारणविरहान्न घटान्तरोपत्तिरिति प्रागभावस्य कारणत्वांगीकारे मानाभावात्। **वस्तुतस्तु**–फलेषु मधुरादिरसस्यानुभविकत्वात् तदारम्भकपरमाणुष्वपि रस उन्नेयः, हिरकादिषु च मधुरादेरननुभवात्तदारम्भकपरमाणुष्वपि रसाभाव उन्नेयः, उभयविधपरमाणुषु तेजःसंयोगस्याऽविशिष्टत्वेऽप्येकत्र मधुराद्युत्पत्तिरन्यत्र तदभाव इत्येतत् प्रागभावस्य कारणतामन्तरेण न संभवतीति–प्रागभावसिद्धिर्बोध्या। प्रध्वंसाभावस्य लक्षणमाह–**जन्याभावत्वमिति**। जन्यत्वे सति अभावत्वमित्यर्थः। अत्यन्ताभावादावतिव्याप्तिवारणाय जन्यत्वे सतीति। घटादावतिव्याप्तिवारणाय अभावत्वमिति। जन्यत्वमत्र न प्रागभावप्रतियोगित्वरूपं ग्राह्यम्, विनाश्यभावत्वात्मकप्रागभावत्वशरीरे ध्वंसत्वस्य घटकतया अन्योन्याश्रयात्। किन्तु–प्रागभावत्वशब्दपरिभाषितविलक्षणानुयोगितानिरूपितप्रतियोगित्वरूपम्, तथा च जन्याभावत्वं नाम–'प्रागभावत्वशब्दपरिभाषितविलक्षणानुयोगितानिरूपितप्रतियोगित्वे सत्यभावत्वम्' 'विनाश्यभावत्वञ्च–'ध्वंसत्वशब्दपरिभाषित–विलक्षणानुयोगितानिरूपित प्रतियोगित्वे सत्यभावत्व'मिति निर्वचनात् तयोर्न परस्परघटकता। अत्रेदं **बोध्यम्** ध्वंसत्वं प्रागभावत्वञ्च द्विविधं-एकं भावाभावसाधारणं, द्वितीयं च तद्व्यावृत्तं, तत्र प्रथमम् अनुयोगिताविशेषरूपम्, अखण्डोपाधिरूपम् वा, 'घटो ध्वस्तः, घटप्रागभावो ध्वस्तः, 'घटो भविष्यति, 'घटध्वंसो भविष्यति, इति प्रतीतिसाक्षिकं न निरुक्तिमपेक्षते। अस्मिंश्च प्रागभावत्वध्वंसत्वयोरखण्डोपाधित्वपक्षे ध्वंसत्वं

**–नित्यसंसर्गाभावत्वम् अत्यन्ताभावत्वम् ।**

नाम 'प्रागभावत्वावच्छिन्ननिरूपितप्रतियोगिताश्रयत्वे सति अभावत्वम् प्रागभावत्वं च–ध्वंसत्वावच्छिन्ननिरूपितप्रतियोगिताश्रयत्वे सति अभावत्वमि'ति, अत्र लक्षणघटकीभूते प्रागभावत्वध्वंसत्वे अखण्डोपाधिरूपे, अतो न तयोः परस्परं घटकता, न वा तद्घटितलक्षणयोः परस्परघटकतेति । द्वितीयन्तु निरुक्तिमपेक्षतेऽतो विश्वनाथो निर्वक्ति-'विनाश्यभावत्वं' 'जन्याभाववत्वमि'ति, तत्र विनाश्यभावत्वं-ध्वंसत्वशब्दपरिभाषितविलक्षणानुयोगितानिरूपितप्रतियोगित्वे सति अभावत्वम् । जन्याभावत्वं च प्रागभावत्वशब्दपरिभाषितविलक्षणानुयोगितानिरूपितप्रतियोगित्वे सति अभावत्वमिति, तयोर्न परस्परघटकतेति ॥ अयं प्रध्वंसाभावो घटाद्यात्मकप्रतियोगिजन्यः, प्रतियोगिनो घटादेः समवायिकारणे कपालादौ वर्तमानो, ध्वस्त' इति शब्दप्रयोगात्मकव्यवहारजनकः ,सम्बन्धानवच्छिन्नप्रतियोगिताकश्च । यद्यपि ध्वंसप्रागभावयोः समवायिकारणाऽप्रसिद्धेर्ध्वंसप्रागभावस्य प्रागभावध्वंसस्य च प्रतियोगिसमवायिकारणवृत्तित्वमप्रसिद्धम्, तथापि भावप्रतियोगिकप्रागभावध्वंसाभावयोस्तथात्वाऽभिप्रायेणेदं बोध्यमिति । वस्तुतस्तु–भावाऽभावोभयसाधारणप्रतियोगिकप्रागभावध्वंसयोः प्रतियोग्यतिरिक्ते देशे काले च वर्तमानत्वमिति नवीनमतं समीचीनम् ॥ अत्यन्ताभावस्य लक्षणमाह–**नित्यसंसर्गेति** । नित्यत्वे सति संसर्गाभावत्वमिति लक्षणम् । अत्र नित्यत्वं प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वम् । संसर्गाभावत्वं च अन्योन्याभावभिन्नाभावत्वम् । तथा च प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वे सति अन्योन्याभावभिन्नत्वे सति अभावत्वम्–अत्यन्ताभावत्वमिति लक्षणार्थः पर्यवसन्नः । ध्वंसेऽतिव्याप्तिवारणाय–प्रथमम्,–प्रागभावेऽतिव्याप्तिवारणाय–द्वितीयं,–अन्योन्याभावेऽतिव्याप्तिवारणाय तृतीयं,–परमाण्वादावतिव्याप्तिवारणाय च चतुर्थं–दलं बोध्यमिति ॥ अत्रेदं **बोध्यम्**–अत्यन्ताभावत्वं द्विविधम्,–भावाभावसाधारणं तद्व्यावृत्तं च, प्रथमन्तु 'नास्ती'त्यादिप्रतीतिसिद्धम् अनुयोगिताविशेषरूपम् अखण्डोपाधिरूपं वा न निरुक्तिमपेक्षते । द्वितीयन्तु निरुक्तिमपेक्षते इति तदेव निरुक्तं नित्यसंसर्गाभावत्वमिति । केचित्तु 'नित्ये संसर्गाभावत्व'मिति सप्तमीतत्पुरुषाश्रयणात् 'नित्यवृत्तिसंसर्गाभावत्व'मिति लभ्यते, तच्च–'स्वावच्छेदकावच्छिन्ननिष्ठाधिकरणतानिरूपकत्व–स्वनिरूपकत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टत्व'मेवानुगतं लक्षणं वदन्ति । स्वं–घटाद्यत्यन्ताभावीया घटनिष्ठा प्रतियोगिता, तदवच्छेदकं घटत्वं, तदवच्छिन्नघटनिष्ठा या प्रतियोगिताया अधिकरणता तन्निरूपकत्वस्य स्व(प्रतियोगिता)निरूपकत्वस्य च घटात्यन्ताभावे सत्त्वात् तादृशोभयसम्बन्धेन घटनिष्ठप्रतियोगिताविशिष्टत्वमत्यन्ताभावे इति समन्वयः । घटध्वंसप्रागभावयोः स्वनिरूपकत्वसम्बन्धेन घटनिष्ठप्रतियोगिताविशिष्टत्वादतिव्याप्तिवारणाय संसर्गकोटौ–स्वावच्छेदकावच्छिन्नाधिकरणतानिरूपकत्व'निवेशः, एवञ्च घटध्वंसप्रागभावयोर्धर्मावच्छिन्नप्रतियोगिताकत्वे 'मानाभावेन स्वावच्छेदकाऽप्रसिद्ध्या नाऽतिव्याप्तिः । पटवृत्ति–घटान्योन्याभावे पटात्यन्ताभावीयपटनिष्ठप्रतियोगितावच्छेदकपटत्वावच्छिन्नपटनिष्ठाधिकरणतानिरूपकत्वस्य सत्त्वेन तत्सम्बन्धेन पटनिष्ठप्रतियोगिताविशिष्टत्वाद् घटान्योन्याभावेऽतिव्याप्तिवारणाय- संसर्गकोटौ स्वनिरूपकत्वं निवेशितम् ॥ **अथवा**–स्वा(प्रतियोगिता)वच्छेदकावच्छिन्नतादात्म्यानवच्छिन्नप्रतियोगितानिरूपकत्वसम्बन्धेन प्रतियोगिताविशिष्टत्वमेवाऽत्यन्ताभावलक्षणमिति ॥ **अथेदमनुसन्धेयम्**–प्रतियोगितावच्छेदकधर्मसंसर्गनानात्वम् अत्यन्ताभावबहुत्वप्रयोजकं प्रतियोगितावच्छेदकधर्मनानात्वम् अन्योन्याभावनानात्वप्रयोजकम् । यथा विशेष्यस्याभावो दण्डात्मकविशेषणविशिष्टविशेष्याभावादतिरिक्तः, केवलाद्विशिष्टस्याऽनतिरिक्तत्वे तु केवलदेव

**यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्र घटकालस्य सम्बन्धाघटकत्वादत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः ।—**

दत्तवति 'दण्डविशिष्टदेवदत्तो नास्ती'तिसर्वानुभवसिद्धप्रतीतिविलोपापत्तेः । एवं भूतले घटसत्त्वेऽपि 'घटपटौ न स्त'–इति प्रतीत्या घटपटोभयत्वावच्छिन्नाभावः केवलघटाभावादतिरिक्तः, उभयाभावस्य केवलाऽभावाऽनतिरिक्तत्वे तु केवलघटवति 'घटपटोभयं नास्ती'ति प्रतीतिर्न स्यात्। एवं संयोगेन घटवति भूतले समवायेन घटाभावः संयोगावच्छिन्नघटाभावाद्भिन्नः । संयोगावच्छिन्नप्रतियोगिताकाभावस्य समवायावच्छिन्नप्रतियोगिताकाभावस्य चैक्ये संयोगेन घटवति समवायेन घटो नास्तीति प्रत्ययो न स्यात् । एवं तत्तद्घटत्वधर्मद्वयावच्छिन्नप्रतियोगिताकाऽभावाद्घटत्वमात्रावच्छिन्नप्रतियोगिताकाऽभावो भिन्नः, नीलघटाभाववति तद्भिन्नघटस्य संभवात्, अन्यथा यत्किंचिद्घटवति 'घटो नास्ती'तिप्रत्ययापत्तिः, घटान्तरवति तद्घटाभावप्रत्ययानुपपत्तिश्च स्यात्। एवं–केवलघटान्योन्याभावाद्रक्तत्वादिविशेषणविशिष्टान्योन्याभावो भिन्नः, घटपटोभयभेदश्च भिन्नः, अन्यथा केवलघटे विशिष्टघटभेदप्रतीत्यनुपपत्तिः स्यात्। एवं–घटत्वात्मकव्यधिकरणधर्मावच्छिन्नप्रतियोगिताको 'घटत्वेन पटाभावः' केवलाऽभावादतिरिक्तः, स च केवलान्वयी। अभावाभावस्तु भाव एव नातिरिक्तः, अनवस्थाप्रसंगात् । "ध्वंसस्य प्रागभावः प्रागभावस्य ध्वंसश्च प्रतियोग्येवेति **प्राचीनाः**" । "**नव्यास्तु**–अभावाभावस्त्वतिरिक्त एव, तृतीयाभावस्य प्रथमाभावरूपत्वान्नानवस्था, एवं–घटप्रागभावदशायामपि 'उत्पत्स्यमानघटो ध्वस्तो भविष्यती'तिप्रतीत्या घटध्वंसस्य प्रागभावसत्ताया अवगमाद्घटध्वंसप्रागभावो घटातिरिक्तः, घटप्रागभावस्य ध्वंसोऽपि घटातिरिक्त इति मन्यन्ते"॥

ननु यद्यत्यन्ताभावो नित्यस्तदा यत्र भूतले घटोऽपनीतः पुनरानीतश्च तत्र भूतले घटापनयनाऽऽनयनयोर्मध्यसामयिकस्यात्यन्ताभावस्य नित्यस्य सत्त्वाद्घटाऽऽनयनोत्तरकालेऽपि घटवत्ताज्ञानविरहदशायां घटात्यन्ताभावबुद्धेः प्रमात्वाऽऽपत्तिः 'इत्थं च तत्तत्कालीनं तत्तद्भूतलादिकं तत्तदभावानां सम्बन्ध' इति ग्रन्थेन वारिताऽपि तामेव प्रसंगात् पुनः स्मारयति–**यत्र तु भूतलादाविति** । **यत्र**=यस्मिन्, **भूतलादौ**=भूतल–गृहभूमिका–नौकादिस्थलविशेषेषु, **घटादिकं**=संयोगेन वर्तमानं घटपटादिद्रव्यम्, **अपसारितम्**=अपनीतम्, **पुनरानीतञ्च**=किंचित्कालाऽनन्तरं तत्रैव भूतलादौ पुनरानय्य स्थापितञ्च, **तत्र**=तस्मिन् भूतलादौ, **अत्यन्ताभावस्य**=घटाऽपनयनाऽऽनयनयोर्मध्यसामयिकस्याऽत्यन्ताभावस्य,**नित्यत्वेऽपि**=नित्यत्वात् तत्र भूतलादौ घटकालेऽपि 'सत्वेऽपि, **घटकाले**=यस्मिन् काले यत्र भूतलादौ 'घटो वर्तते 'तादृशकालावच्छिन्नत्वविशिष्टभूतले, **न घटात्यन्ताभावबुद्धिः**=तत्र घटवत्ताज्ञानदशायां जायमानघटाभाववद्भूतलविशेष्यकघटाभावप्रकारक'घटाभाववद्भूतलमि'तिबुद्धेर्न प्रमात्वापत्तिः । कस्मात् ? **घटकालस्य सम्बन्धाऽघटकत्वात्** । घटात्यन्ताभावस्य यः **सम्बन्धः** 'यस्मिन् काले यत्र भूतलादौ–घटो नास्तीति–प्रमा 'तत्कालविशिष्टतद्भूतकात्मक': स्वरूपसम्बन्धः, तत्र सम्बन्धे **घटकालस्य**,=यस्मिन् काले यत्र भूतले घटो वर्तते तत्कालस्य, **अघटकत्वात्**=अप्रवेशात् । तथा च–घटात्यन्ताभावस्य यस्तत्कालविशिष्टभूतलात्मकस्वरूपसम्बन्धस्तत्र घटवद्भूतलसमये घटकालस्याऽप्रवेशाद् घटात्यन्ताभावकालविशिष्टभूतलात्मकस्वरूपसम्बन्धस्याऽसत्त्वात् तत्सम्बन्धिनोर्घटाभावभूतलयोः प्रतीतेर्न प्रमात्वापत्तिरिति भावः ॥ **केचन**–नैयायिकैकदेशिनो नित्यप्रतियोगिकाऽभावोऽत्यन्ताऽभावो,–नित्याऽन्यप्रतियोगिकाऽभावः सामयिकाऽभावः=उत्पादविनाशशाल्यभावः, प्रागभावध्वंसौ चेति संसर्गाभावस्य चातुर्विध्यं स्वीकृत्य निरुक्तस्थले सामयिकाऽभावमभिमत्य घटकाले घटसामयि-

**तत्रोत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित्। अत्र ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राचां मतम्। श्यामघटे रक्तो नास्ति रक्तघटे श्यामो-**

काऽभावस्यैव नष्टत्वान्न घटात्यन्ताभावबुद्ध्यापत्तिरिति **मन्यते** तन्मतं दर्शयति—**तत्रोत्पादेति**। **तत्र**=तादृशे घटवति भूतले, **उत्पादविनाशशाली**=उत्पत्तिप्रतियोगी ध्वंसप्रतियोगी च, **अभावोऽयं**=संसर्गाऽभावस्याऽवान्तरभेद इत्यर्थः। अत्र **केचिदित्यनेन** कालविशेषविशिष्टाधिकरणस्य संसर्गत्वस्वीकारेणैव घटवति घटाभावप्रतीत्यापत्तिवारणे चतुर्थाऽभावस्वीकारोऽप्रामाणिक इति **सूचितम्**॥ ननु मास्तु घटाधिकरणे भूतले घटात्यन्ताभावबुद्धेः प्रमात्वम्, घटप्रागभावाधिकरणे घटध्वंसाधिकरणे वा 'घटो नास्ती'तिप्रतीतेर्घटात्यन्ताभावबुद्धेस्तु प्रमात्वं स्यात्? इत्याशंकायां तत्समाधानाय-प्राचां मतं दर्शयति-**अत्रेत्यादिना**। अत्र=यत्र घटप्रागभावाधिकरणे- 'घटो नास्ती'तिप्रतीतिरपि भवत्येतादृशस्थले। ध्वंसप्रागभावयोरधिकरणे=घटादिध्वंसस्याऽधिकरणे घटादिप्रागभावस्याधिकरणे च कपालाद्यात्मके। नात्यन्ताभावः=न घटाद्यत्यन्ताभावो वर्तते, घटादिप्रागभावध्वंसाभ्यां सह घटाद्यत्यन्ताभावस्य विरोधात्, तथा च-घटादिध्वंसप्रागभाववति कपालादौ यदि घटात्यन्ताभाववत्ताबुद्धिर्भवेत्? तर्हि तस्या न प्रमात्वं किन्तु भ्रमत्वमेव, तथा च घटध्वंसाधिकरणे घटप्रागभावाऽधिकरणे च 'घटो नास्ती'ति प्रतीतिर्भवति, सा प्रतीतिरत्यन्ताभावमेव विषयीकरोतीति न नियमः, किन्तु प्रागभावध्वंसाधिकरणादन्यत्राऽत्यन्ताभावं विषयीकरोति, प्रागभावध्वंसाधिकरणे तु सा प्रागभावं ध्वंसं वा यथायोगं विषयीकरोतीति **प्राचां मतम्**, अत्रेदं बोध्यम्-प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया सहाऽत्यन्ताभावस्य विरोधः, तेन घटप्रागभावस्याधिकरणे कपाले यदा कदाचिदपि घटाधिकरणतायाः सत्त्वाद्घटात्यन्ताभावो न वर्तत इति। नन्वेवं संयोगेन यदाकदाचिद्घटवति भूतले घटशून्यकाले घटात्यन्ताभाववत्ताबुद्धिर्न स्यादिति चेत्! न, तत्र प्रतियोगितावच्छेदकसम्बन्धेन सह प्रतियोग्यत्यन्ताभावस्य विरोधस्वीकारात् घटसंयोगशून्यतादशायां तादृशघटात्यन्ताभावस्य तत्र वृत्तौ बाधकाऽभावेन तत्र घटात्यन्ताभावप्रतीत्यनुपपत्तिः, एवं-सम्बन्धान्तरेणाऽभावस्थलेऽपि बोध्यम्, तथा च-केषाञ्चिदभावानां तादृशाधिकरणतया साकं केषाञ्चिच्च प्रतियोगितावच्छेदकसम्बन्धेन साकं विरोधं परिकल्प्य प्रतीतिरुपपादनीया। ध्वंसप्रागभावयोस्तु प्रतियोगिना सहैव विरोधः स्वीकार्यः, घटप्रागभावाधिकरणे कपाले घटात्मकप्रतियोगिनोऽसत्त्वात् तदानीं यदि 'घटो नास्ती'ति प्रतीतिर्भवति चेत्! तस्याः प्रागभावविषयकत्वमिति॥ एनमेवाऽर्थं प्रकाशयति-**श्यामघटे**-इत्यादिना। यः श्यामकपालजन्य श्यामघटः पाकेऽनिक्षिप्तस्तत्र श्यामघटे पाकोत्तरभाविरक्तरूपस्य प्रागभावो वर्तते तदानीं श्यामघटे 'रक्तो नास्ती'ति प्रतीतिः रक्तप्रागभावमवगाहते न तु रक्तात्यन्ताभावम्, कुतः! रक्तात्यन्ताभावस्य रक्ताऽधिकरणतया सह विरोधाच्छ्यामघटे यदाकदाचित् समवायेन रक्तस्याऽधिकरणतायाः सत्त्वेन श्यामतादशायामपि घटे रक्तसमवायात्मकविरोधिनो रक्तत्वावच्छिन्नाधिकरणत्वात्मकविरोधिनश्च सत्त्वात्। एवं पाकोत्तरं **रक्तघटे 'श्यामो नास्ती'**ति प्रतीतिः श्याम—ध्वंसमवगाहते न तु श्यामात्यन्ताभावम्, कुतः? श्यामात्यन्ताभावस्य श्यामाधिकरणतया सह विरोधाद् रक्तघटे यदाकदाचित् श्यामाधिकरणतायाः सत्त्वेन रक्ततादशायामपि घटे श्यामसमवायात्मकविरोधिनः श्यामत्वावच्छिन्ननिरूपिताधिकरणत्वात्मकविरोधिनश्च सत्त्वात्। व्याप्यवृत्तिपदार्थानामेकदैकस्मिन्नवृत्तित्वेऽपि तदधिकरणत्वस्वीकारे बाधकाऽभावादिति भावः। **अक्षरार्थस्तु**-'श्यामघटे=कृष्णे आमघटे, रक्तोनास्ति=उत्पत्स्यमानं रक्तं रूपं नास्ति, रक्तघटे=पाकोत्तरजायमानरक्तरूपविशिष्टे घटे, श्यामो-

नास्तीति धीश्च प्रागभावं ध्वंसं चावगाहते न तु तदत्यन्ताभावं तयोर्विरोधात्। नव्यास्तु तत्र विरोधे मानाभावाद् ध्वंसादिकालावच्छेदेनाप्यत्यन्ता

नास्ति—नष्टं यच्छ्यामरूपं तन्नास्ति, इति धीश्च=इत्याकारिका या चक्षुस्संयुक्तघटविशेषणतात्मकसन्निकर्षप्रयोज्यप्रत्यक्षप्रतीतिः, प्रागभावं=रक्तरूपप्रागभावम्, ध्वंसश्च=श्यामरूपध्वंसश्च, अवगाहते=विषयीकरोति, न तु तदत्यन्ताभावम्=न तु रक्तस्याऽत्यन्ताभावं न च श्यामस्यात्यन्ताभावम्, अवगाहते—इत्यनेनाऽन्वयः। तयोर्विरोधात्=ध्वंसप्रागभावयोरत्यन्ताभावेन सह विरोधात्-ध्वंसप्रागभावप्रतियोग्यधिकरणतायाः प्रतियोग्यत्यन्ताभावेन सह विरोधादिति यावत्॥

अथ पूर्वं घटे रक्तस्ततश्श्यामस्ततो रक्तस्ततश्श्यामस्ततो रक्तस्तत्र घटे द्वितीयश्यामतादशायां द्वितीयरक्तस्य ध्वंसो वर्तते, अन्तिमरक्तस्य प्रागभावो वर्तते, रक्तान्तरस्य चाऽत्यन्ताभावो वर्तते, अतस्तत्र श्यामतादशायां घटे 'रक्तो नास्ती'तिप्रतीतिः सर्वमतसिद्धा, प्राचीनमते सा नोपपद्येत, यदाकदाचिद्वर्तमानाया रक्तात्मकप्रतियोग्यधिकरणताया रक्तात्यन्ताभावविरोधिन्यास्तत्र सत्त्वात्। न चेयं प्रतीतिः रक्तिमध्वंसप्रागभावावगाहिनी, पूर्वाऽपररक्तिमध्वंसप्रागभाववति संप्रति रक्तेऽपि तथाप्रतीतिप्रसंगात्, मम तु 'रक्तं रूपं नास्ती'तिप्रतीतिरत्यन्ताभावमवगाहते न तु ध्वंसं न वा प्रागभावं, तयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वविरहात्। अतस्तादृशप्रतीत्युपपत्त्यर्थं ध्वंसप्रागभावप्रतियोग्यधिकरणतायाः प्रतियोग्यत्यन्ताभावेन सह विरोधो न मन्तव्यः, तथा च—यदाकदाचिद् रक्ताधिकरणतायास्तत्र श्यामघटे सत्त्वेपि 'रक्तो नास्ती'तिप्रतीत्युपपत्तिरिति नव्यमतमाह—नव्यास्त्विति। तत्र=ध्वंसप्रागभावयोः,=ध्वंसप्रागभावप्रतियोग्यधिकरणताया इति यावत्। विरोधे=प्रतियोग्यत्यन्ताभावेन सह विरोधे। मानाऽभावात=बाधकप्रमाणाऽभावात्। ध्वंसादिकालावच्छेदेनापि=यस्मिन् काले यत्र श्यामघटादौ रक्तादिध्वंसो वर्तते रक्तादिप्रागभावो वा वर्तते तादृशकालावच्छेदेन=तादृशकालावच्छिन्नत्वविशिष्टेऽपि घटे अत्यन्ताऽभावः = रक्तात्यन्ताभावो वर्तत—इत्यर्थः॥ अत्रेदं बोध्यम्—अत्यन्ताभावस्य प्रतियोगिना सह विरोधः, तत्र वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाऽत्यन्ताभावस्य केवलप्रतियोगिना सह विरोधः, घटवत्तादशायां भूतले 'घटो नास्ती'ति प्रत्ययाऽभावात्। अत एवाऽन्तरा श्यामदशायां रक्तरूपात्मकप्रतियोग्यसत्त्वेन तत्र जायमानाया 'रक्तो नास्ती'तिप्रतीतेः रक्तात्यन्ताभावविषयकत्वे बाधकाऽभावाद् ध्वंसप्रागभावाभ्यामत्यन्ताभावस्य विरोधः सुदूरपराहतः। एवं—वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाऽभावस्य तु प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यधिकरणतया सह विरोधो, वाच्यः, अत एव सत्तावति द्रव्ये 'द्रव्यान्यत्वविशिष्टसत्ता नास्ती'तिप्रतीत्युपपत्तिः, विशिष्टसत्तायाः शुद्धसत्ताऽनतिरिक्तत्वेन प्रतियोगिनो द्रव्ये सत्त्वेपि विशिष्टसत्ताधिकरणतातः सत्ताधिकरणताया भिन्नत्वादुक्तविशिष्टसत्ताधिकरणताया द्रव्येऽसत्वात, एवं—घटवत्यपि भूतले 'घटपटोभयं नास्ती'तिप्रतीत्युपपत्तिः घटाधिकरणताया घटपटोभयाधिकरणतातो भिन्नत्वाद् भूतले घटपटोभयाधिकरणताया असत्त्वादिति। 'आहु'रित्यनेन नव्यमते अस्वरसः सूचितः, तद्वीजन्तु—घटेऽन्तराश्यामदशायामुभयमतसिद्धरक्तप्रागभावध्वंसविषयकत्वाऽङ्गीकारेणैव 'रक्तो नास्ती'तिप्रतीत्युपपत्तौ तत्र रक्तात्यन्ताभावविषयकत्वकल्पने गौरवम्। न च—तत्र प्रागभावध्वंसोभयविषयकत्वकल्पनाऽपेक्षया एकात्यन्ताभावविषयकत्वकल्पनं लाघवमिति—वाच्यम्। अतिरिक्तसामान्याभावाऽनङ्गीकर्तॄणां नवीनानां मते रक्तत्वावच्छिन्नप्रतियोगिताकाऽभावत्वेन तत्तद्रक्तव्यक्तित्वावच्छिन्नप्रतियोगिताकाऽभावकूटस्यैव 'रक्तो नास्ती'तिप्रतीतिविषयत्वात् तदपेक्षया रक्तप्रागभावध्वंसयोस्तादृशप्रतीतिविषयताकल्पनायां लाघवादिति॥

**भावो वर्तत इति प्राहुः। नन्वस्तु अभावानामधिकरणात्मकत्वं लाघवादिति चेद् ? न, अनन्ताधिकरणात्मकत्वकल्पनाऽपेक्षयाऽतिरिक्तकल्पनाया लघीयस्त्वात्। एवं च आधाराधेयभावोऽप्युपपद्यते। एवं च तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमप्यु**

प्राभाकरमीमांसकः—अभावस्य भावरूपाधिकरणात्मकत्वेन पदार्थान्तरत्वे मानाऽभाव इत्यभिप्रायेण शंकते—**नन्वस्त्विति**। अभावानाम्=भूतलाद्यधिकरणे वर्तमानानां घटपटादिपदार्थात्यन्ताभावान्योन्याभावानां कपालाद्यात्मकाधिकरणे वर्तमानानाञ्च घटादिप्रागभावध्वंसानाम्। अधिकरणात्मकत्वम्=स्वरूपसम्बन्धेनाऽधिकरणं यद्भूतलं कपालादि च तदात्मकत्वं=तदनतिरिक्तत्वम्, पराभिमतपदार्थत्वव्याप्य—द्रव्यत्व—गुणत्व—कर्मत्व—सामान्यत्व—विशेषत्व—समवायत्वैतदन्यतमवत्त्वमिति यावत्। तत्र हेतुमाह—**लाघवादिति**। अतिरिक्तपदार्थत्वकल्पनापेक्षया समवायान्तक्लृप्तपदार्थान्यतमाऽन्तर्गतत्वकल्पनं लाघवमिति। तन्निषेधयति—**नेति**। **अनन्ताधिकरणात्मकत्वकल्पनाऽपेक्षयेति**। घटाभावादेरनन्तानि यानि भूतलजलगुणकर्माद्यधिकरणानि तदात्मकत्वस्य कल्पनाऽपेक्षयेत्यर्थः। अभावस्याऽधिकरणात्मकत्वे गौरवं प्रदर्शयितुम्—अनन्तेत्युक्तम्। अतिरिक्तकल्पनायाः=भावाऽतिरिक्तत्वकल्पनायाः। **लघीयस्त्वादिति**। भूतले घटोनास्ति'पर्वतेघटो नास्ती' त्यादिप्रतीतिषु घटत्वावच्छिन्नप्रतियोगितानिरूपिताऽनुयोगिताया एकैकस्या अनन्ताधिकरणेषु सम्बन्धकल्पनाऽपेक्षया एकैकस्मिन्नभावे तत्तत्सम्बन्धकल्पने लाघवमिति भावः। ननु अनन्ताऽधिकरणेषु घटत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितात्मकसम्बन्धकल्पनायास्त्वभावस्याऽनन्ताऽधिकरणसम्बन्धकल्पनातुल्यतयाऽतिरिक्ताऽभावकल्पनागौरवं परमतिरिच्यते तव, किञ्च—धर्मकल्पनाऽपेक्षया धर्मिकल्पनाया लघीयस्त्वमित्यतोऽभावस्याऽधिकरणात्मकत्वमेवोचितमित्यत आह—**एवञ्चाऽऽधाराऽऽधेयभावोऽप्युपपद्यत**इति। एवञ्च=अभावस्याऽतिरिक्तपदार्थतास्वीकारे च। आधाराऽऽधेयभावोऽपि='भूतले घटो नास्ती'तिप्रतीतिसिद्ध आधाराधेयभावः;=आधारस्य—भूतलात्मकाऽधिकरणस्य, आधेयस्य=घटाभावात्मकाऽऽधेयस्य, भावो=धर्मः—सम्बन्ध इति यावत्, आधारतात्मक आधेयतात्मकश्च यः सम्बन्धः सोऽपि, उपपद्यते='भूतलं घटाभाववदि'ति प्रमीतिविषयो भवति, तत्र भूतले घटाभावस्य आधारताख्यस्वरूपसम्बन्धः, भूतलस्य च घटाभावे आधेयताख्यस्वरूपसम्बन्धः, भूतलघटाभावयोर्भिन्नत्वे तावुपपद्यते, द्वयोरैक्ये तु किं कस्याऽऽधारं ? किं कस्याऽऽधेयं ? स्यादिति भावः। 'अपि'शब्देन पूर्वोक्तयुक्तावस्या युक्तेरुपोद्बलकत्वं सूचितम्॥ ननु 'घटाभावः पटाभावभेदवानि'त्यत्राऽभावाधिकरणकाऽभावप्रतियोगिकाऽभावस्याऽधिकरणात्मकत्वेऽपि 'आधारतावच्छेदकाऽऽधेयताऽवच्छेदकयोर्भेद आधाराऽऽधेयभावनियामक'इतिनियमाद्घटाभावत्वात्मकाऽऽधारतावच्छेदकस्य पटाभावभेदत्वात्मकाऽऽधेयतावच्छेदकस्य च भेदाद्यथाऽऽधाराऽऽधेयभावः स्वीक्रियते तथा सर्वत्र 'घटाभाववद्भूतल'मित्यादौ भूतलत्वघटाभावत्वादीनां भेदस्याऽऽधाराऽऽधेयभावनियामकत्वमस्त्वित्यत आह—**एवं च तत्तच्छब्देति**। एवं च=अभावस्याऽतिरिक्तपदार्थतास्वीकारे च। तत्तच्छब्दगन्धरसाद्यभावानाम्=अन्यत्र वर्तमानानां तत्तच्छब्दाभावानां तत्तद्गन्धाभावानां तत्तद्रसाभावानां तत्तत्क्रियाद्यभावानां तत्तत्पदार्थाऽभावानामिति यावत्। प्रत्यक्षत्वमप्युपपद्यते='श्रोत्रेण शब्दाभावं जानामी'ति प्रत्यक्षप्रतीतिसिद्धं शब्दाभावस्य प्रत्यक्षविषयत्वम्, 'घ्राणेन गन्धाभावं जानामी'तीप्रत्यक्षप्रतीतिसिद्धं गन्धाभावस्य प्रत्यक्षविषयत्वम्, 'रसनया रसाभावं जानामी'तिप्रत्यक्षप्रतीतिसिद्धं रसाभावस्य प्रत्यक्षविषयत्वम्, 'चक्षुषा त्वचा वा क्रियाभावं जानामी'ति प्रत्यक्षप्रतीतिसिद्धं क्रियाभावस्य प्रत्यक्षविषयत्वम् उपपद्यते इत्यर्थः। अत्राऽयं नियमः—'येनेन्द्रियेण या व्यक्तिर्गृह्यते तेनैवेन्द्रियेण तद्गता जातिस्तदभावश्च गृह्यत' इति।

**पपद्यते। अन्यथा तत्तदधिकरणानां तत्तदिन्द्रियाग्राह्यत्वात् प्रत्यक्षत्वं नस्यात्। एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमभावस्येति प्रत्युक्तमप्रत्यक्षत्वापत्तेः॥ १२॥**

**सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥**

यथा चक्षुषा रूपं गृह्यते तेनैव चक्षुषा रूपे रूपत्वस्य वाय्वादौ रूपाऽभावस्य च ग्रहणं क्रियते, तथा सर्वत्र बोध्यम्, इदं च अभावस्याऽधिकरणातिरिक्तपदार्थतास्वीकारे उपपद्यते इति॥ अभावस्याऽधिकरणात्मकत्वस्वीकारे तु–तत्तद्रूपाद्यभावप्रत्यक्षानुपपत्तिं दर्शयति–**अन्यथेति**। अभावस्याऽधिकरणात्मकत्वे–इत्यर्थः। तत्तदधिकरणानां=तत्तच्छब्दाभावाधिकरणानां तत्तद्गन्धाभावाधिकरणानां तत्तद्रसाभावाऽधिकरणानां तत्तद्रूपाऽभावाधिकरणानां वाय्वादीनाम्। तत्तदिन्द्रियाऽग्राह्यत्वात्=तत्तच्छब्दाभावप्रतियोगिशब्दग्राहकश्रोत्रेन्द्रियाऽग्राह्यत्वात्, तत्तद्गन्धाभावप्रतियोगिगन्धग्राहकघ्राणेन्द्रियाऽग्राह्यत्वात्, तत्तद्रसाभावप्रतियोगिरसग्राहकरसनेन्द्रियाऽग्राह्यत्वात्। प्रत्यक्षत्वम्='श्रोत्रेण शब्दाभावं जानामी'त्यादिप्रतीतिसिद्धं प्रत्यक्षविषयत्वम्, एवमन्यदपि पूर्वोक्तम्। न स्यात्=नोपपद्येतेति। यथा वायौ रूपाऽभावो यदि वाय्वात्मकस्तदा वायोश्चक्षुषाऽग्रहणाद् वाय्वात्मकरूपाऽभावोऽपि प्रत्यक्षो न स्यात्, वायुवृत्तिरूपाऽभावस्य वाय्वतिरिक्तत्वे तु 'वायौ रूपं नास्ती'तिप्रतीत्या चक्षुषा रूपाऽभावप्रत्यक्षं स्याद्, इत्येवं शब्दगन्धरसाभावानामपि बोध्यमिति भावः॥ अभावस्य ज्ञानात्मकत्वमिति बौद्धमतं, मीमांसकैकदेशिनश्च कालात्मकत्वमिति मतं, तदपि खण्डितं भवतीति दर्शयति–**एतेनेति**। पूर्वोक्तयुक्तित्रयेण, अथवा उक्तदोषद्वयेन वक्ष्यमाणाऽप्रत्यक्षत्वापत्त्यात्मकदोषेण चेत्यर्थः॥ **ज्ञानविशेषेति**। 'भूतले घटो नास्ती'त्याकारकं ज्ञानमित्यर्थः, तथा च–यस्मिन् काले भूतले घटाभावो वर्तते तत्कालोत्पन्नं 'भूतले घटो नास्ती'ति ज्ञानमेव 'भूतलं घटाभाववदि'तिप्रतीतिविषयं, तच्च ज्ञानं घटत्वावच्छिन्नप्रतियोगितानिरूपिताऽनुयोगिताप्रकारेण तादृशप्रतीतौ भासते,–इति बौद्धमतमितिभावः॥ **कालविशेषेति**। 'भूतले घटो नास्ती'तिज्ञानाधिकरणतत्तत्काल इत्यर्थः, तथा च–यस्मिन् काले भूतले घटो न वर्तते तत्कालोत्पन्न'भूतलं घटाभाववदि'तिज्ञानाधिकरणकाल एव भूतलं घटाभाववदि'तिप्रतीतिविषयः, स च कालो घटत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगिताप्रकारेण तादृशप्रतीतौ भासते–इति मीमांसकैकदेशिनो मतम्। **आदिना**–अनुयोगिप्रतियोगिवृत्तिधर्मगुणाद्यात्मकोऽभाव इति वेदान्त्येकदेशिमतं तत्तत्क्षणात्मक इति बौद्धैकदेशिमतं च ग्राह्यम्। **प्रत्युक्तमिति**। खण्डितमित्यर्थः। 'भूतलं घटाभाववदि'त्यत्र घटत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगिताया अतिरिक्ताऽभावपदार्थे कल्पनाऽपेक्षया असंख्यासु ज्ञानव्यक्तिष्वसंख्यासु कालव्यक्तिषु च कल्पने गौरवात्, आधाराऽऽधेयभावाऽनुपपत्तेः, **अप्रत्यक्षत्वापत्तेः**=प्रत्यक्षविषयत्वशून्यत्वाऽऽपत्तेरित्यर्थः। 'चक्षुषा घटाभावं पश्यामीति सार्वजनीनाऽनुभवसिद्धायाः प्रत्यक्षविषयताया दूरपह्नवतया तत्रेष्टापत्तेरनवकाशादिति भावः। अदृश्यानुयोगिप्रतियोगिधर्मगुणानां क्षणानां चाऽप्रत्यक्षतया तदात्मकाऽभावानामप्रत्यक्षत्वापत्तेश्चेति बोध्यम्॥

अथ परस्परधर्मतापन्नानां सप्तपदार्थानामेव परस्परभेदकत्वं ज्ञापयितुं सामान्यतः पदार्थनिरूपणाऽनन्तरं पदार्थानां साधर्म्यं वैधर्म्यञ्च वक्तुमुपक्रमते मूले–**सप्तानामपीत्यादिना**। सप्तविभाजकधर्माऽन्यतमविशिष्टानां=द्रव्य-गुण–कर्म-सामान्य–विशेष–समवाया-ऽभावानामिति यावत्। तादृशान्यतमस्य लक्ष्यतावच्छेदकत्वसम्पत्तये 'अपि'शब्दप्रयोगः, तदप्रयोगे निरुक्तान्यतमाश्रय–यत्किञ्चिद्वृत्तिधर्मस्य लक्ष्यतावच्छेदकत्वभ्रमे सति तादृशधर्मशून्येऽतिव्याप्तिशंका स्यात्, निरुक्तसर्वसमुच्चाय-

इदानीं पदार्थानां साधर्म्यवैधर्म्ये वक्तुमुपक्रमते--सप्तानामिति। समानो धर्मो येषां ते सधर्माणः तेषां भावः साधर्म्यं समानो धर्म इति फलितार्थः। एवं विरुद्धो धर्मो येषां ते विधर्माणः तेषां भावो वैधर्म्यं, विरुद्धो धर्म इति फलितार्थः। ज्ञेयत्वं ज्ञानविषयता सा च सर्वत्रैवास्ति, ईश्वरज्ञानविषयतायाः केवलान्वयित्वात्। एवम

---

काऽ'पि' शब्दप्रयोगे तु सर्वेषामपि लक्ष्यतावच्छेदकवत्त्वप्राप्त्या तावन्मात्रवृत्तिधर्मस्य लक्ष्यतावच्छेदकत्वप्राप्त्या च साधर्म्यात्मकलक्षणस्यातिव्याप्तिशंकाऽनुदयादितिभावः। साधर्म्यम्=समानधर्मः। ज्ञेयत्वादिकम्=ज्ञेयत्वम् आदि यस्य तत्, ज्ञेयत्वं वाच्यत्वम् प्रमेयत्वम् अभिधेयत्वञ्चेत्यर्थः॥ पदार्थनिरूपणमन्तरेण पदार्थानां साधर्म्यवैधर्म्यनिरूपणं न संभवतीति बोधनायाह मुक्तावल्याम्-**इदानीमिति**। पदार्थनिरूपणाऽनन्तरमित्यर्थः। पदार्थाऽनिरूपणे तत्तत्पदार्थघटितत्वेन तत्तत्पदार्थवृत्तित्वेन च साधर्म्याणां ज्ञानाऽसंभवादिति भावः। पदार्थानाम्=यथायोगं सप्तपदार्थानाम्। साधर्म्यवैधर्म्ये=साधर्म्यञ्च वैधर्म्यञ्चेतिद्वन्द्वः। अत्र यद्यपि यदेव साधर्म्यं तदेव वैधर्म्यमिति तयोर्भेदाऽभावाद् द्वन्द्वोऽनुपपन्नस्तथापि तद्वृत्तिधर्मस्तस्य साधर्म्यं तदवृत्तिधर्मस्तु तस्य वैधर्म्यमिति रीत्या तयोर्भेदसंभवेन द्वन्द्वसंगतिर्बोध्येति। **वक्तुमिति**=ज्ञानजनकशब्दप्रयोगेच्छावानित्यर्थः। 'उपक्रमते' इत्यस्य-सामान्यधर्मप्रकारकज्ञानजनकशब्दानुकूलकृतिमान् इत्यर्थः, तथा च सामान्यधर्मप्रकारकज्ञानाऽभावे विशेषधर्मप्रकारकजिज्ञासाऽनुदयाद् विशिष्य साधर्म्यवैधर्म्यनिरूपणस्याऽसङ्गत्यापत्त्या प्रथमतः सामान्यधर्मनिरूपणस्याऽऽवश्यकत्वमिति पदार्थानां 'ज्ञेयत्वादि'रूपः सामान्यधर्मो दर्शितो बोध्यः, एतन्मते '**द्रव्यादयः पञ्च भावा**' इत्याद्यारभ्यैव साधर्म्यनिरूपणं वैधर्म्यनिरूपणञ्च बोध्यम्, '**सप्तानामपि साधर्म्य**'मित्यत्र 'साधर्म्य'शब्दस्तु सामान्यधर्मपर इतिभावः॥ **वस्तुतस्तु**-'सप्तानामपी'(१३का.)त्यारभ्य 'यदुक्तं यस्ये'(२९का.)त्यन्तेन साधर्म्यवैधर्म्यवचनं नैकप्रयत्नप्रयोज्यं किन्तु क्रमिकप्रयत्नप्रयोज्यम्, अतो यथा बहून् पटानुत्पिपादयिषति प्रथमपटं कुर्वंति 'पटानुत्पादयितुमुपक्रमते'इति प्रयोगस्तथात्राऽपि 'साधर्म्यवैधर्म्ये वक्ती'त्यनुक्त्वा 'वक्तुमुपक्रमत'इति प्रयोगात् 'साधर्म्यवैधर्म्ये वक्तुमुपक्रमते'-इत्यस्य साधर्म्यवैधर्म्यवचनप्रयोजकप्रथमयत्नवानित्यर्थो बोध्यः, अत एव च **साधर्म्यं ज्ञेयत्वादिक**'मिति यथाश्रुतमूलस्य साधर्म्यपरत्वसंगतिरपि भवतीति ध्येयम्। समानो धर्मः सधर्मस्तस्य भावः साधर्म्यम्, एवं वैधर्म्यमित्यत्रापि भ्रमवारणाय बहुव्रीहिमाह-**समानो धर्मो येषामिति**। ज्ञेयत्वपदार्थमाह-**ज्ञानविषयतेति**। अस्मदादिज्ञानानां सर्वे पदार्था विषया न भवन्ति, परमात्मनो ज्ञानस्य तु सर्वे पदार्था विषयाः, तेन परमात्मज्ञानविषयताऽऽख्यो धर्मः स्वरूपसम्बन्धेन सर्वेषु पदार्थेषु वर्त्तते, अतः परमात्मज्ञानविषयता एव सप्तानां साधर्म्यमिति। ज्ञानविषयता नाम ज्ञाननिरूपितविषयता,-निरूपितत्वसम्बन्धेन ज्ञानविशिष्टा विषयतेत्यर्थः, तथा च विषयत्वमात्रमेव साधर्म्यमुचितम्, 'ज्ञानीयत्व'निवेशनन्तुअशास्त्रविदामपि प्रतिपत्तिसौकर्यार्थमुपात्तम्, तथाहि-अशास्त्रविदो हि-ज्ञायतेऽयं प्रमीयतेऽयम् अभिधीयतेऽयम् इष्यतेऽयं द्विष्यतेऽयमित्येव प्रतिपद्यन्ते न तु 'विषयोऽय'मिति प्रतियोग्युपरागेणैव सुप्रतिपादा विषयता लक्षणीभवितुमर्हतीति, एवं च सति निरूपकतावच्छेदकभेदाद् विषयतानां भिन्नत्वात् 'ज्ञानविषयत्वं' 'प्रमाविषयत्वम्' 'अभिधाविषयत्वं' 'शाब्दबोधविषयत्वम्' 'अनुमितिविषयत्व'मित्यादिलक्षणानि भवन्ति, एवं-विषयभेदेनापि विषयता भिन्ना भवन्ति, तथापि विषयतानुगमकेन विषयतात्वेन रूपेण विषयतायाः सप्तपदार्थलक्षणत्वं युज्यत इति। ये च विषयताऽनुगमकं विषयतात्वमेकं नांगीकुर्वन्ति तन्मते तु विषयतात्वं न साधर्म्यप्रविष्टम्, किन्तु निरूपितत्वसम्बन्धेन ज्ञानीयत्वमेक

भिधेयत्वप्रमेयत्वादिकं बोध्यम् ॥ १३ ॥

साधर्म्यं वक्तव्यम्, एवमतिरिक्तविषयतात्वाऽङ्गीकर्तॄणामपि ज्ञानीयत्वं साधर्म्यम् अविरुद्धम्। तच्च ज्ञानीयत्वं किम् ? इत्याकांक्षायां, विषयतैव सा, इति प्रदर्शनार्थं ज्ञानविषयतेत्युक्तम्, तथा च विषयतानुगमकतावच्छेदकीभूतज्ञानत्वादीनां भेदात् नानासाधर्म्यं ज्ञानीयवत्त्वं प्रमीयवत्त्वं अभिधीयवत्त्व-मित्यादि। अथवा-विषयतासम्बन्धेन ज्ञानप्रमाऽभिधेत्यादि साधर्म्यं, तथा च विषयतासम्बन्धेन ज्ञानादेः केवलान्वयित्वलाभार्थमेव **ईश्वरज्ञानविषयतायाः केवलान्वयित्वादि**'त्यभिधानम्। केवलान्वयित्वम् अत्यन्ताऽभावाऽप्रतियोगित्वम्। ननु अत्यन्ताभावाऽप्रतियोगित्वरूपं केवलान्वयित्वम् आकाशाभावे संयोगाऽभावे चाऽव्याप्तम्, तथाहि-अवृत्तिपदार्थस्य गगनस्याऽभावः सर्वत्राऽस्ति,अतः केवलान्वयी, संयोगस्याऽव्याप्यवृत्तिपदार्थस्याऽभावः सर्वत्राऽस्तीति सोऽपि केवलान्वयीति सिद्धान्तः, किन्तु गगनाभावस्य गगनात्मक-गगनाभावाऽभावप्रतियोगित्वेन, संयोगाभावस्य संयोगात्मक-संयोगाभावाऽभावप्रतियोगित्वेन अत्यन्ताऽभावाऽप्रतियोगित्वं गगनाभावे संयोगाभावे चाऽव्याप्तमिति चेत्! न, तद्वारणाय अत्यन्ताभावः स्वविरोधित्वेन वृत्तिमत्त्वेन विशेषितः, स्वविरोधि-वृत्तिमदत्यन्ता-भावाऽप्रतियोगित्वस्यैव तदर्थत्वात्। गगनात्मक-गगनाभावाऽभावो न वृत्तिमान्, एवं संयोगात्मक-संयोगाभावाऽभावो न संयोगाभावविरोधी, अतस्तौ नाऽत्यन्ताभावपदग्राह्यौ, किन्तु 'घटः'स्व-पदार्थः तस्य विरोधी वृत्तिमाँश्च घटाभावः, तस्य प्रतियोगी घटः( स च न केवलान्वयी )अप्रतियोगी च गगनाभावः संयोगाभावश्च केवलान्वयीति। ननु तथापि ईश्वरज्ञानविषयताया द्वित्वादिना' घटत्वेश्वरज्ञानविषयत्वोभयं नास्ती'त्यभावमादाय तत्प्रतियोगित्वात् केवलान्वयित्वं न स्यादिति चेत्! न, स्वविरोधिवृत्तिमदत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वमेव केवलान्वयित्वमिति तदर्थत्वात्, तादृशो धर्मो ज्ञानविषयतात्वरूपः, एवञ्च घटादिनिष्ठविषयताव्यक्तेरपि ज्ञानविषयतात्वमादाय केवलान्वयित्वमक्षतमिति भावः। 'ज्ञेयत्वादिकमि'त्यत्रादिपदार्थं दर्शयति-**एवमभिधेयत्वेति**। अभिधेयत्वम्=अभिधाविषयत्वम्, अभिधा च=संकेतः,-ईश्वरेच्छा, शक्तिरिति,-यावत्, सा च निरूपकतासम्बन्धेन पदे वर्तते, विषयतया च अर्थे वर्तते, अतः-अभिधाविषयत्वं शब्दशक्यत्वमित्यायातम्, तदेव सप्तानां साधर्म्यम्। प्रमेयत्वम्=प्रमा ईश्वरस्य नित्यप्रत्यक्षात्मकं ज्ञानम्, तद्विषयत्वम्। प्रमेयत्वादिकमित्यादिना-अधिकरणत्वपरिग्रहः। अन्ये तु स्वाश्रयविषयतासम्बन्धेन प्रमात्वमेव साधर्म्यम्, प्रमात्वं च सद्विषयकत्वम्, विषयितासम्बन्धेन सद्विशिष्टत्वमिति यावत्, सत्त्वं च वस्तुत्वमिति। इत्थं च-वस्तुत्वमेव साधर्म्यमुचितमिति ॥

अथ द्रव्यादीनां षण्णां साधर्म्यन्तु भावत्वं बोध्यम्, तच्च 'समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्त्व'रूपं बोध्यम्। वर्तते च सत्ता द्रव्यगुणकर्मसु समवायसम्बन्धेन, सामान्य-विशेष-समवायेषु च एकार्थसमवायेन, एकार्थसमवायो नाम-एकस्मिन्नर्थे-पदार्थे उभयोः समवायः, यथा पटे पटत्वं समवायेन वर्तते तथा सत्ताऽपि समवायेन वर्तते, अतः पटत्वसामान्ये एकार्थसमवायसंसर्गेण सत्तावत्त्वरूपं भावत्वमुपपन्नम्, एवं विशेषपदार्थः समवायेन परमाणुषु वर्तते तत्र सत्ताऽपि समवायेन वर्तते इति विशेषपदार्थे एकार्थसमवायसंसर्गेण सत्तावत्त्वरूपं भावत्वमुपपन्नम्। एवं यद्यपि समवायस्तु तन्त्वादौ स्वरूपसम्बन्धेन तिष्ठतीत्येकार्थसमवायेन सत्तावत्त्वं समवायस्य न भवति तथापि समवायस्य स्वरूपाख्यः सम्बन्धो लाघवात् समवायात्मक एवाङ्गीक्रियते न तु प्रतियोग्यनुयोग्युभयरूपः, तथा च तन्तुषु समवायेन समवायो वर्तते इत्यायातम्,तत्र च तन्तुषुसमवायेन सत्तापि वर्तत इत्येवमेकार्थ-समवायेन सत्तावत्त्वं भावत्वं समवाये बोध्यमिति ॥

**द्रव्यादयः पञ्च भावा अनेके समवायिनः ।**
**सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥ १४ ॥**

**द्रव्यादय इति । द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वं च । यद्यप्यनेकत्वमभावेऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यम् । तथा चानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितोऽर्थः । तेन प्रत्येकं**

---

द्रव्यादिपञ्चानां साधर्म्यमाह-मूले-**द्रव्यादय** इति । द्रव्यम् आदिर्येषान्ते द्रव्यादयः' द्रव्याऽभिन्नप्रथमपठितघटितसमुदायघटका इत्यर्थः । ते कियन्तो ग्राह्याः ? इत्यत आह-**पञ्च** इति । द्रव्य-गुण-कर्म-सामान्य-विशेषा इत्यर्थः । पञ्चत्वमिह लक्ष्यतावच्छेदकम्, तच्च द्रव्यगुणकर्मसामान्यविशेषान्यतमत्वरूपं बोध्यम् ॥ **भावा अनेके** इति । अनेकत्वे सति भावत्ववन्त इत्यर्थः ॥ **समवायिन** इति । समवाय एषामस्तीति समवायिनः, मत्वर्थीय इन्प्रत्ययः ॥ **त्रयस्त्वाद्या** इति । आद्याः=आद्यश्चाद्यश्चाद्यश्चेति विग्रहः,तत्र प्रथममाद्यपदं स्वघटितविभागवाक्यघटकविधेयबोधकपदाऽनुत्तरविधेयबोधकपदप्रतिपाद्यत्वविशिष्टपरं, द्वितीयमाद्यपदं स्वघटितविभागवाक्यघटकपदोत्तरपदानुत्तरं यत्स्वघटितविभागवाक्यघटकपदोत्तरपदं तत्प्रतिपाद्यत्वविशिष्टपरं, तृतीयमाद्यपदं-स्वघटितविभागवाक्यघटकपदोत्तरपदोत्तरपदानुत्तरं यत्स्वघटितविभागवाक्यघटकपदोत्तरपदोत्तरपदं तत्प्रतिपाद्यत्वविशिष्टपरम्, ततः सरूपैकशेषः,पदार्थतावच्छेदकभेदस्थले स्वरूपैकशेषस्य नैयायिकैरभ्युपगमादिति॥द्रव्यगुणकर्माणीत्यर्थः॥ **सत्तावन्त** इति। समवायेन सत्ताजातिमन्तीत्यर्थः॥**गुणादिरिति** । गुणकर्मसामान्यविशेषसमवायाऽभावा इत्यर्थः ॥ **निर्गुणक्रिय** इति । गुणश्च क्रिया च गुणक्रिये, निर्गते गुणक्रिये यस्मात् स निर्गुणक्रियः,-गुणक्रियानधिकरणा इत्यर्थः ॥ **मुक्तावल्यां-द्रव्यगुणकर्मसामान्यविशेषाणा**मिति । द्रव्याणि च गुणाश्च कर्माणि च सामान्यानि च विशेषाश्च तेषाम्, साधर्म्यं=समानधर्मः, अनेकत्वं समवायित्वं चेति । **अनेकत्वमत्र** न बहुत्वसंख्यारूपं, गुणे गुणाऽनङ्गीकाराद् गुणादावव्याप्त्यापत्तेः । किन्तु 'इमेऽनेके'-इतिबुद्धिविषयतारूपम् ॥ नन्वभावस्य चतुर्विधत्वाद् 'अनेकेति'बुद्धिविषयतायास्तत्र सत्त्वादतिव्याप्तिरिति दर्शयति-**यद्यप्यनेकत्वमभावेऽप्यस्तीति** । तां वारयति-**तथाप्यनेकत्वे सति भावत्वमिति** । 'इमेऽनेके'-इत्याकारकबुद्धिविषयतावत्त्वे सति समवायैकार्थसमवायाऽन्यतरसम्बन्धावच्छिन्नसत्तावत्त्वमित्यर्थः । तथा च-अभावे भावत्वविरहान्नातिव्याप्तिः । समवाये च भावत्वसत्त्वेऽपि अनेकत्वाऽभावान्नातिव्याप्तिरिति ॥ प्राचीनमते समवाय एक एव ॥ समवायनानात्ववादिनां नव्यानां मते तु, षण्णां पदार्थानां साधर्म्यमिदमनुसन्धेयम् ॥ ननु प्रत्येकं घटादावेकैकत्वं न तु निरुक्तमनेकत्वम्, एवम् आकाशस्याऽप्येकव्यक्तित्वात् तत्राऽनेकत्वं नास्तीत्यव्याप्तिस्तत्रेत्यतः परिष्कृतं साधर्म्यमाह-**तथा चाऽनेकभाववृत्तीत्यादि** । 'अनेके'तिबुद्धिविषया ये भावा घटपटपृथिवीजलादिद्रव्यव्यक्तयः, रूपरसादिगुणव्यक्तयः, उत्क्षेपणादिकर्मव्यक्तयः, घटत्वपटत्वादिजातिव्यक्तयः, परमाणुगता विशेषव्यक्तयश्च, तेषु वृत्तिः-वर्तमानो यः पदार्थविभाजकोपाधिः=पदार्थानां द्रव्यगुणादीनां विभाजकः,=पदार्थत्वस्य साक्षाद्व्याप्यो, य उपाधिर्द्रव्यत्वरूपः, गुणत्वरूपः, कर्मत्वरूपः, सामान्यत्वरूपः, विशेषत्वत्वरूपश्च, तत्तदुपाधिमत्त्वं क्रमशः प्रत्येकं घटादिषु, रूपादिषु, उत्क्षेपणादिषु, घटत्वादिजातिषु, विशेषेषु च वर्तते इति ॥ अत्र-'अनेके'त्यनुक्तौ भाववृत्तिसमवायत्वात्मकपदार्थविभाजकोपाधिमादाय समवायेऽतिव्याप्तिः । 'भावे'त्यनुक्तावनेकवृत्त्यभावत्वात्मकपदार्थविभाजकोपाधिमादायाऽभावेऽतिव्याप्तिः । 'पदार्थविभाजके'त्यनुक्तावनेकभाववृत्तिभावत्वमादाय समवायेऽतिव्याप्तिः । 'उपाधी'त्यनु-

**घटादावाकाशादौ च नाव्याप्तिः। समवायित्वं च समवायसंबन्धेन संबन्धित्वं, न तु समवायवत्त्वं, सामान्यादावभावात्। (तथाच समवेतवृत्तिपदार्थविभाजकोपा-**

त्त्वा 'जाती'त्युपादाने सामान्यत्वविशेषत्वयोर्जातित्वाऽभावात् सामान्ये विशेषे चाऽव्याप्तिः। उपाधिमत्त्वं वृत्तित्वं च समवाय-स्वरूपाऽन्यतरसम्बन्धेन बोध्यम्, तेन कालिकेन तादृशोपाधिमत्त्वस्य ध्वंसे नातिव्याप्तिः। ननु 'इमेऽनेके'इति बुद्धिविषयतानां विषयभेदेन भिन्नत्वाद् एकत्वं नानुगतमिति चेत्! तादृशबुद्धिविषयतात्वेन धर्मेण तदनुगतत्वात्। अथवा-अनेकत्वमत्र-स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टत्वम्, तच्च भावत्वविशेषणम्। यथा नवद्रव्येष्वनेकत्वं वर्तते तत्र जलात्मकद्रव्ये पृथिव्यात्मकद्रव्यस्य भेदमादाय तादृशो भेदः स्व-पदार्थः। तादृशभेदप्रतियोगिपृथिव्यात्मकद्रव्यवृत्तित्वं भावत्वे, एवं तादृशभेदानुयोगिजलात्मकद्रव्यवृत्तित्वं भावत्वे, इति तादृशोभयसम्बन्धेन भेदविशिष्टत्वं भावत्वे वर्तत इति। वस्तुतस्तु-अनेकभाववृत्तित्वम्-भावनिष्ठाधिकरणताद्वयनिरूपितवृत्तित्वम्, स्ववृत्तित्व-स्वान्यवृत्तत्वोभयसम्बन्धेन भावविशिष्टत्वं वा बोध्यम्। वृत्तित्वं सर्वत्र सर्वाधारताप्रयोजक(कालिक)सम्बन्धभिन्नसम्बन्धेन बोध्यम्। तेन ध्वंसे नातिव्याप्तिः॥ तादृशोपाधिघटितलक्षणस्य फलं दर्शयति **तेनेति**। अनेकभावेत्याद्यर्थकरणेनेत्यर्थः॥ समवायित्वं व्याख्याति-**समवायित्वं चेति**। **समवायसम्बन्धेन सम्बन्धित्वम्**=समवायप्रतियोगित्व-समवायानुयोगित्वान्यतरवत्त्वमित्यर्थः। तथाहि द्रव्यगुणकर्मसु समवायेन सत्ताजातिर्वर्तते ऽतो द्रव्यगुणकर्माणि समवायानुयोगीनि भवन्ति, सत्ताजातिस्तु समवायप्रतियोगिनी भवति, विशेषपदार्थः समवायेन नित्यद्रव्ये वर्तते ऽतो विशेषपदार्थोऽपि समवायप्रतियोगी भवति। तथा च सत्ताप्रतियोगिकसमवायानुयोगितावत्त्वं द्रव्यगुणकर्मसु, एवं-द्रव्यगुणकर्मानुयोगिकसमवायप्रतियोगितावत्त्वं सत्तादिसामान्ये, एवं नित्यद्रव्यानुयोगिकसमवायप्रतियोगितावत्त्वं विशेषपदार्थे-इति कृत्वा लक्षणसमन्वयः॥ **न तु समवायवत्त्वमिति**। न तु समवायाधिकरणत्वं=न समवायाऽनुयोगितावत्त्वमात्रमिति। अस्याऽव्याप्तिं दर्शयति-**सामान्यादावभावादिति**। सामान्ये=जातौ,आदिना विशेषपदार्थे च, समवायानुयोगितावत्त्वस्याऽभावात् तत्राऽव्याप्तिः स्यादित्यर्थः॥ ननु षष्ठ्यर्थे इनिप्रत्ययेन सम्बन्धित्वमित्यस्य सम्बन्धप्रतियोगित्वमर्थस्तदा परमाण्वादिनित्यद्रव्येष्वव्याप्तिरत आह-**तथा च समवेतेति**। समवेता ये घटादयस्तत्र वृत्तिः पदार्थविभाजकोपाधिर्द्रव्यत्वात्मकस्तद्वत्त्वस्य परमाण्वादौ सत्त्वान्नाऽव्याप्तिरिति भावः॥ **वस्तुतः**-सम्बन्धित्वमित्यस्य समवायसम्बन्धानुयोगिताप्रतियोगितान्यतरवत्त्वार्थकत्वेनैव नित्यद्रव्येऽव्याप्त्यनवकाशात् 'समवेते'त्यादिपरिष्करणमनुचितमेव, तथापि तत्राऽन्यतरत्वस्य 'तद्भिन्नत्वे सति तद्भिन्नं यत्तद्भिन्नत्व'रूपस्य, प्रतियोगित्वस्य 'वस्तुनोऽभावाभावात्मकत्व'स्य च प्रवेशे गौरवापेक्षया लाघवमभिप्रेत्य'समवेतवृत्ती'त्यादिपरिष्कृतमिति बोध्यम्। प्राचीनमुद्रिताऽनेकपुस्तकेषु 'समवेते'त्यादिपाठो नास्त्येवेत्यवगन्तव्यम्॥

अथ-'तन्तुसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं'-द्रव्यगुणकर्मसामान्यानां साधर्म्यं बोध्यम्। तन्तुषु समवेताः-पटात्मकद्रव्यं, रूपादिगुणाः, कम्पनादिक्रियाः, पृथिवीत्वसत्तादिजातयः, तेषु वृत्तिर्वर्तमाना ये पदार्थविभाजकाः-पदार्थत्वसाक्षाद्व्याप्या द्रव्यत्व-गुणत्व-कर्मत्व-सामान्यत्वाख्या उपाधयस्तद्वत्त्वं द्रव्य-गुण-कर्मसामान्येष्वित्यर्थः। एवम्-'समवेतसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्व'मपि चतुर्णां साधर्म्यं बोध्यम्। समवेता द्व्यणुकसमवेतास्त्रसरेण्वादयस्तत्र समवेताः स्थूलपृथिवीजलादयः,-रूपादिगुणाः, गमनादिक्रियाः, द्रव्यत्वादिजातयश्च, तत्र वर्तमाना द्रव्यत्वगुणत्वकर्मत्वसामान्यत्वाख्या उपाधयस्तद्वत्त्व द्रव्यगुणकर्मसामान्यानामित्यर्थः॥

**धिमत्त्वमिति फलितोऽर्थः । तेन नित्यद्रव्येषु नाव्याप्तिः )। सत्तावन्त इति। द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः । गुणादिरिति। यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं क्रियाशून्यत्वं च गगनादावतिव्याप्तं तथापि गुणवदवृत्तिधर्मवत्त्वं**

---

'सत्तावन्तस्त्रयस्त्वाद्या'–इतिमूलस्य भावार्थमाह–**द्रव्यगुणकर्मणामिति**। द्रव्याणां गुणानां कर्मणाञ्च समवायसम्बन्धावच्छिन्नसत्तानिष्ठाऽऽधेयतानिरूपिताऽधिकरणतावत्त्वं साधर्म्यमित्यर्थः। कालिकेन सत्ताया ध्वंसेऽपि सत्त्वाद्ध्वंसेऽतिव्याप्तिवारणाय–समवायसम्बन्धावच्छिन्नत्वमुक्तम्।

**अथ**–द्रव्यगुणयोः साधर्म्यं नित्याऽनित्यभाववृत्तिपदार्थविभाजकोपाधिमत्त्वम्। कानिचिद्द्रव्याणि परमाण्वाकाशादीनि नित्यानि, कानिचिच्च घटादीन्यनित्यानि, तादृशोभयविधभावो द्रव्यपदार्थः, तत्र वृत्तिर्यः पदार्थविभाजकोपाधिर्द्रव्यत्वरूपः, समवायेन तद्वत्त्वम्, एवं–केचन गुणा जलीयपरमाणुप्रभृतिगता रूपरसादयो नित्याः, केचन तु घटादिगता रूपरसादयोऽनित्याः, तादृशोभयविधभावो गुणपदार्थः, तत्र वृत्तिर्यः पदार्थविभाजकोपाधिर्गुणत्वरूपः, समवायेन तद्वत्त्वमित्यर्थः। अनित्यभावकर्मवृत्तिपदार्थविभाजकोपाधिकर्मत्ववत्त्वस्य कर्मणि सत्त्वात् तद्वारणाय–नित्येति। नित्यभावसामान्यादिवृत्तिपदार्थविभाजकोपाधिसामान्यत्वादिकमादाय सामान्यादावतिव्याप्तिवारणाय–अनित्येति। अभावत्वमादायाऽभावेऽतिव्याप्तिवारणाय–भावेति। रूपत्वादिकमादाय तद्वदन्ये द्रव्ये गुणे चाऽव्याप्तिवारणाय–पदार्थविभाजकोपाधीति॥ **अथवा**–'नित्यसमवेतपदार्थविभाजकोपाधिमत्त्वं द्रव्यगुणयोः साधर्म्यम्, नित्यानि परमाण्वाकाशादिद्रव्याणि, नित्याश्च–जलादिपरमाणुगता रूपादिगुणाः, तत्र समवेतः=समवायेन वर्तमानो यः पदार्थविभाजकोपाधिर्द्रव्यत्वरूपो गुणत्वरूपश्च तद्वत्त्वमित्यर्थः। नित्यवृत्तिपदार्थविभाजकोपाधिमत्त्वस्य सामान्यादावतिव्याप्तेस्तद्वारणाय–समवेतेति॥

द्रव्यमात्रस्य तु साधर्म्यं '**क्षित्यादीनां नवानां तु**'त्यादिना मूलकृतैव वक्ष्यते।

'**गुणादिर्निर्गुणक्रिय**'–इतिमूलस्थ'निर्गुणक्रिय'पदस्य गुणक्रियात्यन्ताभाववत्त्वमर्थः, तेन गुणक्रिययोरन्योन्याभावमादाय द्रव्ये नाऽतिव्याप्तिः। ननु गुणकर्मसामान्यविशेषसमवायाऽभावानां यद् गुणक्रियात्यन्ताभाववत्त्वं साधर्म्यं तद् आद्यक्षणावच्छिन्ने घटात्मकद्रव्येऽतिव्याप्तम्, 'उत्पन्नं सद्द्रव्यं क्षणं निर्गुणं निष्क्रियं च तिष्ठती'तिनियमात् उत्पत्तिक्षणावच्छिन्ने घटे गुणक्रियाशून्यत्वसत्त्वादित्याशंकते–**यद्यपि गुणेति**। गुणक्रियाशून्यत्वं=गुणात्यन्ताभाववत्त्वं क्रियाऽत्यन्ताभाववत्त्वं च आद्यक्षणे=उत्पत्तिक्षणावच्छिन्ने। घटादौ=घटपटादौ जन्ये पदार्थे। अतिव्याप्तम्=अलक्ष्ये तत्र घटे गतमित्यर्थः। अथ क्रियाशून्यत्वं=समवायेन क्रियात्यन्ताभाववत्त्वम्। गगनादौ=गगने काले दिश्यात्मनि च। अतिव्याप्तम्=अलक्ष्ये तत्र गगनादौ गतमित्यर्थः। उत्तरयति–**तथापीति**। गुणशून्यत्वस्यार्थमाह–**गुणवदवृत्तिधर्मवत्त्वमिति**=गुणाः समवायेन सन्ति अस्येति गुणवत=द्रव्यमित्यर्थः, तत्र द्रव्ये अवृत्तियों धर्मो गुणत्वरूपः, कर्मत्वरूपः, सामान्यत्वरूपः, विशेषत्वरूपः, समवायत्वरूपः, अभावत्वरूपश्च, तद्वत्त्वं क्रमशो गुणस्य कर्मणः सामान्यस्य विशेषस्य समवायस्याऽभावस्य चेति समन्वयः। जात्युपाध्युभयविधधर्मसंग्रहार्थं 'धर्म' पदं बोध्यम्। गुणवदवृत्तिधर्मवत्त्वमित्यत्र गुणवत्त्वं समवायेन बोध्यं, तेन गुणादौ कालिकेन गुणवत्त्वमादाय नाऽव्याप्तिः। अवृत्तित्वं धर्मवत्त्वं च समवायस्वरूपान्यतरसम्बन्धेन बोध्यं, तथा च समवायेन गुणत्वं कर्मत्वं स्वरूपेण च सामान्यत्वं विशेषत्वं समवायत्वम् अभावत्वं चादाय समन्वयः कार्यः। अथवा अवृत्तित्वं धर्मवत्त्वं च स्वरूपसम्बन्धेनैव बोध्यं, नातः सम्बन्धभेदनिबन्धनो दोषः,–एतत्पक्षे गुणवद( द्रव्याऽ )वृत्तिधर्मम्–गुणे गुणत्वप्रकारकप्रमाविशेष्यत्वं, कर्मणि कर्मत्वप्रकारकप्रमाविशेष्यत्वं, सामान्ये सामान्यत्वप्रकारकप्राम-

**कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं तदर्थः। नहि घटत्वादिकं द्रव्यत्वं वा गुणवदवृत्ति कर्मवदवृत्ति वा, किं तु गुणत्वादिकं तथा, आकाशत्वादिकं तु न पदार्थविभाजकोपाधिः। १४॥**

विशेष्यत्वं, विशेषे विशेषत्वप्रकारकप्रमाविशेष्यत्वं, समवाये समवायत्वप्रकारकप्रमाविशेष्यत्वं, अभावे अभावत्वप्रकारकप्रमाविशेष्यत्वं चादाय लक्षणसमन्वयः कार्यः। 'कर्मशून्यत्वस्या'ऽर्थमाह—**कर्मवदवृत्तीति**। समवायेन कर्माणि सन्ति अस्येति कर्मवत्=द्रव्यम्, तत्र द्रव्ये। अवृत्तिर्यः पदार्थविभाजकोपाधिः—गुणत्वरूपः, कर्मत्वरूपः, सामान्यत्वरूपः, विशेषत्वरूपः, समवायत्वरूपः, अभावत्वरूपश्च, तद्वत्त्वं क्रमशो गुणस्य कर्मणः सामान्यस्य विशेषस्य समवायस्याऽभावस्य चेति समन्वयः। अत्रापि कर्मवत्त्वस्य समवायेन ग्रहणाद् गुणादौ कालिकेन कर्मवत्त्वमादाय नाऽव्याप्तिः। अवृत्तित्वम् उपाधिमत्त्वं च समवाय-स्वरूपाऽन्यतरसम्बन्धेन बोध्यम्, तथा च समवायेन गुणत्वं कर्मत्वं स्वरूपेण च सामान्यत्वं विशेषत्वं समवायत्वम् अभावत्वं चादाय समन्वयः। अथवा कर्मवत्त्वम् अवृत्तित्वं च समवायेन बोध्यम्, उपाधिमत्ता च सर्वाधारताप्रयोजकसम्बन्ध(कालिक)भिन्नसम्बन्धेन बोध्या, तादृशः सम्बन्धो गुणत्वकर्मत्वयोः समवायः, सामान्यत्वादीनां तु स्वरूपः, तमादाय समन्वयात्। तेन समवायेनोपाधिमत्त्वविवक्षणे या सामान्यादावव्याप्त्यापत्तिः, स्वरूपसम्बन्धेन चोपाधिमत्ताविवक्षणे गुणकर्मणोर्याऽव्याप्त्यापत्तिः, सम्बन्धसामान्येन चोपाधिमत्ताविवक्षणे या महाकालेऽतिव्याप्त्यापत्तिः,—इतिदूषणत्रयस्य नावकाश इति। अत्र 'कर्मवदवृत्ति'पदानुपादाने पदार्थविभाजकद्रव्यत्वोपाधिमादाय द्रव्येऽतिव्याप्त्यापत्तिः स्यात्, तदुपादाने तु द्रव्यत्वं न कर्मवदवृत्तीति। 'पदार्थविभाजके' त्यनुपादाने कर्मवत्पृथिवीजलतेजःपवनमनःसु अवृत्तिगगनत्वादिकमुपाधिमादाय गगनादावतिव्याप्तिः स्यात्तद्वारणाय तन्निवेशः, गगनत्वं न पदार्थविभाजकोपाधिः, किन्तु द्रव्यविभाजकोपाधिरिति। 'उपाधि'पदानुपादाने कर्मवद्द्रव्याऽवृत्तिपदार्थविभाजकगुणत्वकर्मत्वजातिमादाय सामान्यादौ तदभावादव्याप्तिः स्यात्। अतः उपाधिपदं जात्युपाध्युभयसंग्रहार्थमुपात्तमिति बोध्यम्। 'गुणवदवृत्ति'—'कर्मवदवृत्ती'—त्यस्य सार्थक्यमाह—**नहि घटत्वादिकमिति**। आद्यक्षणे निर्गुणे निष्क्रिये च द्रव्ये घटपटादौ वर्तमानं घटत्वपटत्वप्रभृतीत्यर्थः। द्रव्यत्वादिकम्=द्रव्यत्वं सत्ता पृथिवीत्वजलत्वप्रभृति। गुणवदवृत्ति,=गुणवत्=द्रव्यं तत्राऽवृत्ति, किन्तु वृत्त्येव। कर्मवदवृत्ति=कर्मवत्=द्रव्यं, तत्राऽवृत्ति, किन्तु वृत्ति एव। किन्तु गुणत्वादिकम्=गुणत्व–कर्मत्व–सामान्यत्व–विशेषत्व–समवायत्वाऽभावत्वानि एव। तथा=द्रव्येऽवृत्तीनीत्यर्थः॥ 'पदार्थविभाजक'पदस्य कृत्यमाह—**आकाशत्वादिकं त्विति**। आकाशत्वं कालत्वं दिक्त्वम् आत्मत्वं चेत्यर्थः। पृथिवीजलतेजः—पवनमनस्स्वेव क्रिया भवति, आकाशकालदिगात्मसु च न भवति, अतः कर्मवत्पृथिवीजलतेजःपवनमनस्सु आकाशत्वकालत्वदिक्त्वात्मत्वानामवृत्तित्वेऽपि पदार्थविभाजकोपाधित्वाऽभावान्न तानादायाकाशादावतिव्याप्तिरिति भावः। **न पदार्थविभाजकोपाधिः**=न पदार्थत्वसाक्षाद्व्याप्योपाधिः, किन्तु द्रव्यत्वसाक्षाद्व्याप्योपाधिरित्यर्थः। एवं 'निर्विशेषत्व'मपि गुणादीनां साधर्म्यं बोध्यम्। घटादावतिव्याप्तिवारणाय विशेषवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं वक्तव्यमित्यपि बोध्यम्॥

**अथ**—कर्मसामान्यविशेषसमवायाऽभावानां 'नित्याऽनित्यभावाऽवृत्तिपदार्थविभाजकोपाधिमत्त्वं' साधर्म्यं बोध्यम्। केषाञ्चिद् द्रव्याणां परमाण्वाकाशादीनां नित्यत्वात्, केषाञ्चिद् द्रव्याणां घटादीनामनित्यत्वात् नित्याऽनित्योभयविधभावपदार्थो द्रव्यम्, एवं केषांचिद्गुणानां नित्यत्वात् केषांचिच्चाऽनित्यत्वात् नित्याऽनित्योभयविधभावपदार्थो गुणः, तत्र द्रव्ये गुणे चाऽवृत्तिर्यः पदार्थ-

**सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ।**
**पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥**

**सामान्येति । सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः । पारिमाण्डल्येति । पारिमाण्डल्यमणुपरिमाणं, कारणत्वं तद्भिन्नानां साधर्म्यमित्यर्थः । अणुपरिमाणं तु न**

---

विभाजकोपाधिः–कर्मत्वरूपः, सामान्यत्वरूपः, विशेषत्वरूपः, समवायत्वरूपः, अभावत्वरूपश्च, क्रमशस्तद्वत्त्वं कर्मणः सामान्यस्य विशेषस्य समवायस्याऽभावस्य चेति समन्वयः ॥ १४ ॥

सामान्यविशेषसमवायाऽभावानां साधर्म्यं वक्ति मूले–**सामान्यपरिहीनास्त्विति**। सर्वे जात्यादयः=जातिरादिर्येषान्ते जात्यादयः=जातिः विशेषः समवायोऽभावश्चेति सर्वे, सामान्येन=जात्या, परिहीनाः रहिताः, सामान्य-विशेष-समवायाऽभावेषु चतुर्षु जातिः समवायेन न वर्ततेऽतः सामान्याऽनधिकरणत्वं तेषां साधर्म्यमित्यर्थः । **पारिमाण्डल्येति** । पारिमाण्डल्यम्=अणुपरिमाणम्, तच्च परमाणुपरिमाणम् । अणुपरिमाणभिन्नानां द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावानां सप्तपदार्थानां, कारणत्वं=समवायिकारणत्वाऽसमवायिकारणत्वनिमित्तकारणत्वैतदन्यतमवत्त्वं साधर्म्यमुदाहृतमित्यर्थः । मुक्तावल्यां प्रतीकं–**सामान्येतीति** । 'सामान्यपरिहीना'–इत्यस्य–परी'त्युपसर्गसमभिव्याहृत'हीन'पदस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकाभाववदर्थकतया सामान्यत्वावच्छिन्नप्रतियोगिताकाऽत्यन्ताऽभाववत्त्व'मिति साधर्म्यं फलितम्'। ननु सामान्यत्वस्य सामान्यभेदेन भिन्नतावादिमते एकसामान्याभाववति सामान्यान्तरावच्छिन्ने द्रव्यादावतिव्याप्तिरिति चेन्न, 'यावन्ति सामान्यानि तावदन्यतमत्वावच्छिन्नप्रतियोगिताकाऽभाववत्त्वमिति तदर्थत्वात् । ननु तथापि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकतादृशसामान्याभाववत्त्वस्य नित्यद्रव्येऽतिव्याप्तिः, संयोगस्वरूपान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकतादृशसामान्याभाववत्त्वस्य च केवलान्वयित्वेन सर्वत्र द्रव्येऽतिव्याप्तिरित्याशङ्कायां नियतसम्बन्धबोधनाय 'सामान्यपरिहीना'–इत्यस्यार्थमाह–**सामान्याऽनधिकरणत्वमिति** । यत्सम्बन्धावच्छिन्ना जातिनिष्ठाऽऽधेयतानिरूपिताऽधिकरणता सकलद्रव्यगुणकर्मसु वर्तते तत्सम्बन्धावच्छिन्नजातिनिष्ठप्रतियोगिताकात्यन्ताऽभाववत्त्वमित्यर्थः, वर्तन्ते च जातयः समवायेन द्रव्यादिषु, अतः समवायसम्बन्धावच्छिन्नप्रतियोगिताकसामान्यात्यन्ताभाववत्त्वं साधर्म्यं बोध्यम् । अन्ये तु–समवायसम्बन्धावच्छिन्नाऽधिकरणताशून्यत्वम्, अनुयोगितासम्बन्धेन समवायाऽभाववत्त्वं' वा साधर्म्यमिहाऽभिप्रेतमिति वदन्ति । अपरे तु–कालिकसम्बन्धाऽनवच्छिन्ना या सामान्यनिष्ठाधेयतानिरूपिताऽधिकरणता तच्छून्यत्वं साधर्म्यमिहाऽभिप्रेतमित्यतो न कोऽपि दोष इति वदन्ति ।

**अथ**–तन्तुसमवेताऽवृत्तिपदार्थविभाजकोपाधिमत्त्वं विशेषसमवायाऽभावानां साधर्म्यं बोध्यम् । तन्तुषु समवेताः पटात्मकद्रव्यं रूपादिगुणाः कम्पनादिक्रियास्तन्तुत्वद्रव्यत्वादिजातयश्च तत्राऽवृत्तिर्यः पदार्थत्वस्य साक्षाद्व्याप्य उपाधिर्विशेषत्वरूपः समवायत्वरूपोऽभावत्वरूपश्च, तद्वत्त्वं क्रमशो विशेषसमवायाऽभावेष्विति समन्वयः । अथ–'समवेताऽवृत्तिपदार्थविभाजकोपाधिमत्त्वं' समवायाऽभावयोः साधर्म्यं, समवेताः=द्रव्यगुणकर्मसामान्यविशेषाः तत्राऽवृत्तिर्यः पदार्थत्वस्य साक्षाद्व्याप्य उपाधिः समवायत्वरूपोऽभावत्वरूपश्च, क्रमशस्तद्वत्त्वं समवायस्याऽभावस्य चेति समन्वयः । **अथ**–अभावस्य साधर्म्यं भावभिन्नत्वमि'ति **बोध्यम्** ।

अप्रसिद्धत्वात् 'पारिमाण्डल्य'पदार्थं निर्वक्ति–**पारिमाण्डल्यम्–अणुपरिमाणमिति** ।

**कस्यापि कारणम्। तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत्। तच्च न संभवति, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमात् महदारब्धस्य महत्तर-**

परितो मण्डलं वर्तुलः परिमण्डलं तस्य भावः पारिमाण्डल्यम्=परमाणुपरिमाणमित्यर्थः। तद्भिन्ना-नाम्=परमाणुपरिमाणभिन्नानां द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावानां,-कारणत्वं साधर्म्य-मित्यर्थं इत्यर्थः। **अणुपरिमाणन्त्विति**। कस्यापि=कस्याऽपि किञ्चिद्धर्मावच्छिन्नकार्यस्य कार्य-त्वावच्छिन्नस्य च, कारणम् अणुपरिमाणं न भवत्येव, अतोऽणुपरिमाणे कारणत्वाख्यो धर्मो न वर्त्तते, अणुपरिमाणस्याऽतीन्द्रियत्वात् स्वप्रत्यक्षं प्रति कारणताविरहात्, महत्त्वभिन्नत्वाच्च स्वाश्रयादिप्रत्यक्षे कारणताविरहात्, नित्यत्वाच्च स्वध्वंसं प्रति कारणताविरहादिति भावः। **अन्ये तु**-पारिमाण्डल्यम् अणुपरिमाणं, तच्च परमाणुद्व्यणुकसाधारणं, तादृश-परमाणुद्व्यणुकसाधारणाणुपरिमाणभिन्नसप्त-पदार्थेषु कारणत्वाख्यः समानधर्मो बोध्यः, तदेव तेषां साधर्म्यम्, परमाणुद्व्यणुकसाधारणं यद्‌ **अणुपरिमाणं** तत्तु न **कस्यापि**=कस्यचिदपि भावकार्यस्य,-कारणमिति, भावकार्यं प्रति कार-णत्वनिषेधेन द्व्यणुकगताऽनित्याऽणुपरिमाणस्य स्वध्वंसं प्रति कारणत्वेऽपि न ग्रन्थाऽसङ्गतिरिति-**व्याख्यान्ति**। ननु तथापि परमाणुपरिमाणं द्व्यणुकपरिमाणे कारणम् अस्तु, इत्यत आह-**तद्धीति**। परमाणुपरिमाणं हीत्यर्थः। परमाणुपरिमाणं यदि स्वाश्रयारब्धद्रव्यपरिमाणाऽरम्भकं भवेत्, तदा कारणत्ववत् स्यादिति समुदितवाक्यार्थः। स्वं=परमाणुपरिमाणम्, तदाश्रयः=परमाणुः, तदारब्धं=परमाणुजन्यम्, द्रव्यं=द्व्यणुकम्, तस्य परिमाणम्=अणुपरिमाणम्, तस्य आरम्भ-कम्=उत्पादकं=कारणं, भवेत्=यदि कदाचित् सम्भाव्येतेत्यर्थः। एवं-स्वं द्व्यणुकपरिमाणं तदाश्रयद्रव्यं द्व्यणुकम्, तदारब्धद्रव्यं त्रसरेणुः, तस्य परिमाणं अपकृष्टमहत्परिमाणम्, तस्य आरम्भकं-कारणं, यदि सम्भाव्येतेत्यपि घटनीयम्। **तच्चेति**। चः- अवधारणे, स्वाश्रयारब्धद्रव्यपरिमाणाऽऽरम्भकीभवनमेवेत्यर्थः। **न संभवतीति**। न भवतीत्यर्थः। कुतो न संभवति? इत्यत आह-**परिमाणस्येति**। परिमाणाऽसमवायिकारणपरिमाणमात्रस्येत्यर्थः॥ **स्वसमानजातीयेति**। स्वं-पटपरिमाणाऽसमवायिकारणं परिमाणं तन्तुपरिमाणं, तत्समानजातीयं तथा स्वोत्कृष्टं यत् पटपरिमाणं तन्निरूपिताऽसमवायिकारणतात्मकजनकतावत्त्वादित्यर्थः। साजात्य-मत्र-परिमाणविभाजकाऽ'णुत्वत्व-महत्त्वत्वादिरूपेण। उत्कर्षश्च तर-तमत्वादिनेति। तथा च यद्य-णुपरिमाणं द्व्यणुकपरिमाणं जनयिष्यति तदोत्कृष्टमेव जनयिष्यति, उत्कृष्टञ्च-अणोरणुतरमेव, अण्वपे-क्षया अपकृष्टमिति यावत्, द्व्यणुकपरिमाणं तु अणुपरिमाणाऽपेक्षया उत्कृष्टभावम्, न त्वपकृष्टभा-वम्, अतो नाणुतरम्, अत एव तस्य परमाणुपरिमाणं न कारणम्। एवम्-द्व्यणुकपरिमाणं त्र्य-णुकपरिमाणं प्रति कारणं तदा भवेद्‌ यदि त्र्यणुकपरिमाणं द्व्यणुकपरिमाणादुत्कृष्टमपि भवेत्, तत्समानजातीयमपि च स्यात्। परन्तु त्र्यणुकपरिमाणं द्व्यणुकपरिमाणाऽपेक्षयोत्कृष्टं तु वर्तते किन्तु तत्समानजातीयं नास्ति, प्रत्युत तद्विजातीयं त्र्यणुके महत्त्वत्वजातीयम् अपकृष्टमहत् परिमाणमस्ति, अतोऽणुपरिमाणं न कारणमित्याशयः। अनुमानन्तु-'अणुपरिमाणम्,-परिमाणनिष्ठकार्यतानिरूपि-ताऽसमवायिकारणत्वाऽभाववत्,-स्वसमानजातीय-स्वोत्कृष्टपरिमाणाऽसमवायिकारणं यद्यत् स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वविशिष्टपरिमाणत्वात्,-विभुपरिमाणवत्। तूलसमवेत-महत्परिमाणाऽसमवायिकारणं यस्तूलावयवानां प्रचयाख्यसंयोगस्तत्र व्यभिचारवारणाय हेतौ 'परिमाणत्वादि'ति-विशेष्यदलमुपात्तम्। ननु परिमाणस्ये'त्यादिग्रन्थेन-'यत्र परिमाणत्वं तत्र स्वस-मानजातीय-स्वोत्कृष्टपरिमाणजनकत्वमि'ति नियमो लभ्यते, तत्र अन्त्यावयविघटादिपरिमाणे व्यभि-

**त्त्ववदणुजन्यस्याणुतरत्वप्रसङ्गात् । एवं परममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च बोध्याः । इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वम् । ज्ञायमानं सामान्यं न प्रत्यासत्तिः । ज्ञायमानं लिङ्गं नानुमितिकरणमित्यभिप्रायेणोक्तम् । आत्ममान-**

---

चारः, अणुपरिमाणस्य अणुतरपरिमाणजनकत्वाऽऽपत्तिश्चेति चेत् ? न, 'परिमाणाऽसमवायिकारणत्वविशिष्ट-परिमाणत्ववत्त्वस्य व्याप्यत्वेन अभिप्रेतत्वात् , एतादृशव्याप्य-व्यापकभावज्ञानस्य तर्कोत्थापकतया अणुपरिमाणे द्व्यणुकपरिमाणकारणताज्ञानविघटकत्वमित्याशयेनाह-**महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रसंगादिति** । 'महदारब्धस्य महत्तरत्वव'दिति यथा तन्तुपरिमाणाऽसमवायिकारणकपटपरिमाणं तन्तुपरिमाणवृत्तिमहत्त्वत्वात्मकसाजात्यावच्छिन्नं तन्तुपरिमाणावधिकोत्कर्षाश्रयश्च भवति,-तथा त्र्यणुकपरिमाणं यदि द्व्यणुकस्थाणुपरिमाणाऽसमवायिकारणकं भवेत् तदा द्व्यणुकपरिमाणवृत्ति यत् अणुत्वत्वात्मकं साजात्यं तद्वत् अथ च द्व्यणुकपरिमाणाऽवधिकोत्कर्षवत् स्यात् , एवं-द्व्यणुकपरिमाणं परमाणुस्थाणुपरिमाणाऽसमवायिकारणकं भवेत् तदा परमाणुपरिमाणवृत्त्यणुत्वत्वात्मकसाजात्यवत् परमाणुपरिमाणाऽवधिकोत्कर्षवच्च स्यादित्याशयः । सामान्यतर्कस्तु-अणुपरिमाणं यदि परिमाणाऽसमवायिकारणताविशिष्टपरिमाणत्ववत् स्यात् तर्हि स्वसमानजातीयस्वोत्कृष्टपरिमाणजनकं स्यादिति । अणुपरिमाणे च 'स्वसमानजातीयस्वोत्कृष्टपरिमाणजनकत्वा'त्मकापाद्याभावेन 'परिमाणाऽसमवायिकारणताविशिष्टपरिमाणत्वा'त्मकापादकाभावस्य सिद्धयाऽणुपरिमाणे द्व्यणुकपरिमाणकारणताज्ञानविघटनमिति भावः । ननु तर्हि द्व्यणुकादिपरिमाणस्य किं जनकम् ? इति चेत् !, द्व्यणुकपरिमाणस्य परमाणुगतद्वित्वसंख्या, त्रसरेणुपरिमाणस्य च द्व्यणुक-गत-त्रित्व-संख्या,-असमवायिकारणमिति, व्यक्तीभविष्यतीदं गुणनिरूपणे । परममहत्परिमाणाऽतीन्द्रियसामान्य-विशेषेषु कारणत्वस्याऽवर्तमानत्वाद् अणुपरिमाणेन सह परममहत्त्वादीनामगणनात्मिकां मूलस्य न्यूनतां परिहरति-**एवमिति** । '**बोध्या**'-इत्यनेनाऽन्वयः । न कारणानीति बोध्या इत्यर्थः । तथा च-अणुपरिमाण-परममहत्परिमाणा-ऽतीन्द्रियसामान्य-विशेष-भिन्नपदार्थानां कारणत्वं साधर्म्यम् . यथा परमाणुपरिमाणं न कस्यापि कारणं तथा कालदिङ्निष्ठं परममहत्परिमाणं, परमाण्वादिनिष्ठा परमाणुत्वाद्यात्मिकाऽतीन्द्रिया जातिः,-स्वतोव्यावृत्तो विशेषपदार्थश्चैते,-न कस्यापि कारणानीति भावः । ननु 'विषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन विषयस्य कारणत्व'मिति नियमानुरोधेन योगजसन्निकर्षेण योगिप्रत्यक्षे विषयस्य कारणतामते-योगजसन्निकर्षेण पारिमाण्डल्यप्रत्यक्षे पारिमाण्डल्यस्य, परममहत्वप्रत्यक्षे परममहत्त्वस्य, अतीन्द्रिय-परमाणुत्व-गुरुत्वत्वादि-जातिप्रत्यक्षे परमाणुत्व-गुरुत्वत्वादीनाम् , विशेषपदार्थप्रत्यक्षे विशेषाणां च,-विषयविधया कारणत्वात् पारिमाण्डल्यादीनाम् अकारणत्वकथनम् अयुक्तमित्यत आह-**इमदपीति** । चतुर्णाम् अकारणत्वमित्यर्थः । 'अपि'शब्दः-'एवकारार्थः । '**इत्यभिप्रायेणोक्त**'मित्यनेन अन्वयः । इत्यभिप्रायेणैवोक्तमिति तदर्थः । योगिप्रत्यक्षे=अलौकिकयोगजसन्निकर्षजन्यपारिमाण्डल्यादीनां प्रत्यक्षे, विषयस्य=पारिमाण्डल्यादेः, न कारणत्वम्=तादात्म्येन विषयविधया न कारणत्वमित्यर्थः । तथा च-यदि योगिप्रत्यक्षे विषयस्य कारणत्वमङ्गीक्रियेत तदा अतीतविषयस्येदानीमसत्त्वात् तादृशाऽतीतादिविषयकप्रत्यक्षाऽनुपपत्तिर्योगिनां स्यादतो न कारणत्वम्, अत एव च नोक्तग्रन्थोऽयुक्तइति **भावः** । नन्वेवमपि-ज्ञायमानसामान्यस्य अलौकिकप्रत्यक्षप्रयोजकप्रत्यासत्ति-( सन्निकर्ष )त्वमते परमाणुत्वेन सकलपरमाणुगोचरमानसबोधेऽतीन्द्रियस्यापि परमाणुत्वसामान्यस्य परमाणुत्वसामान्यलक्षणप्रत्यासत्त्या कारणत्वात्; समानानां भावः सामान्यमिति व्युत्पत्त्यनुरोधेन

**सप्रत्यक्षे आत्मपरममहत्त्वस्य कारणत्वान्महत्परिमाणं कालादेर्बोध्यम् ।**

च 'सामान्य'पदेन पारिमाण्डल्यस्यापि ग्रहणात् 'परमाणुः-अणुपरिमाणवानि'ति ज्ञानोत्तरं 'सर्वे परमाणवोऽणुपरिमाणवन्त'इत्याकारकमलौकिकं-परमाणुपरिमाणविषयकं प्रत्यक्षं सामान्यलक्षणाप्रत्यासत्त्या जायते तत्राऽलौकिकसम्बन्धरूपेण परमाणुपरिमाणस्य कारणत्वात्; एवम्-'सर्वगत आत्मा परममहत्परमाणवानि'ति प्रत्यक्षोत्तरं 'सर्वे सर्वगताः कालादयः परममहत्परिमाणवन्त'-इत्यलौकिकमानसबोधः सामान्यलक्षणाप्रत्यासत्त्या जायते तत्राऽलौकिकसम्बन्धरूपेण परममहत्परिमाणस्य कारणत्वात्; एवं 'नित्यद्रव्यं विशेषवदि'ति-ज्ञानोत्तरं 'सर्वाणि नित्यद्रव्याणि विशेषवन्ती'त्यलौकिकं विशेषविषयकं प्रत्यक्षं सामान्यलक्षणया जायते, तत्र अलौकिकसम्बन्धरूपेण विशेषपदार्थस्य कारणत्वात्, पारिमाण्डल्यादीनाम् अकारणत्वकथनमयुक्तमित्यत आह-**ज्ञायमानं सामान्यमिति।** वर्तमानकालीनं यज्ज्ञानं तादृशज्ञानविषयीभूतं सामान्यं 'ज्ञायमानं सामान्य'मुच्यते, तत्र प्रत्यासत्तिः=न अलौकिकसन्निकर्षः, यतो ज्ञायमानसामान्यस्य प्रत्यासत्तित्वं यद्यङ्गीक्रियते तदा अतीतघटाद्यात्मकसामान्यज्ञानाधीनाऽलौकिकप्रत्यक्षानुपपत्तिः स्यात्, अतः सामान्यस्य यज्ज्ञानं तन्मात्रं सामान्यलक्षणाप्रत्यासत्तिरिति तदर्थः, तथा-चोक्तस्थले परमाणुत्वादीनां सामान्यलक्षणात्मकत्वविरहात् परमाणुत्वादीनां ज्ञानस्यैव सामान्यलक्षणात्मकत्वात् परमाणुत्वादीनां ज्ञानस्यैव सन्निकर्षविधया कारणत्वेन परमाणुत्वा-ऽणुत्वपरिमाणादीनामकारणत्वात् नोक्तग्रन्थोऽयुक्त इति भावः॥ **ननु तथापि**-'परमाणुः-द्रव्यम्,-पारिमाण्डल्यादि'त्यनुमितौ पारिमाण्डल्यस्य कारणत्वात्,-एवम्-'परमाणुत्वं,-न जातिः,-स्ववृत्तित्वसम्बन्धेन एकव्यक्ति परमाणुत्ववत्त्वा'दित्याद्यनुमितौ अतीन्द्रियसामान्यस्य परमाणुत्वस्य कारणत्वात्, एवम्-कालः,-विभुः-( सर्वमूर्तसंयोगी ), परममहत्परिमाणवत्त्वादि'त्यनुमितौ परममहत्परिमाणस्य कारणत्वात्,-एवम्-'परमाणुः,-इतरभिन्नः,-विशेषा'दित्यनुमितौ विशेषपदार्थस्य कारणत्वात् पारिमाण्डल्यादीनामकारणत्वकथनमयुक्तमित्यत आह-**ज्ञायमानं लिङ्गमिति।** वर्तमानकालीनं यज् ज्ञानं तद्विषयीभूतं यल्लिङ्गं हेतुस्तत् नाऽनुमितौ कारणमित्यर्थः। **'इत्यभिप्रायेणोक्त'**मित्यनेनाऽन्वयः। लिङ्गस्यानुमितिकरणत्वं यद्यङ्गीक्रियेत तदा अतीतादिलिङ्गेन अनुमित्यनुपपत्तिः स्यात्, अतो ज्ञायमानं लिङ्गं नानुमितिकरणं, किन्तु लिङ्गस्य ज्ञानमेवाऽनुमितिकरणम्, तथा च-पारिमाण्डल्यादीनामनुमितावकरणत्वात् पारिमाण्डल्यादीनां ज्ञानस्यैवाऽनुमितौ करणत्वात् पारिमाण्डल्यादीनामकारणत्वकथनं नाऽयुक्तमिति भावः॥ **ननु**-द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति समवायेन परममहत्त्वस्य कारणत्व'मिति नियमात् 'सुख्यह'मित्याकारके आत्मनो मानसप्रत्यक्ष आत्मनिष्ठपरममहत्परिमाणस्य कारणत्वात्,-परममहत्परिमाणस्याऽकारणताकथनमयुक्तमित्याशंकायामाह-**आत्ममानसे**ति। आत्मनो मनोजन्ये प्रत्यक्षे आत्मगतपरममहत्परिमाणस्य समवायेन कारणत्वात्, आत्मनिष्ठपरममहत्परिमाणं विहाय **कालादेः**=कालस्य दिशश्च परममहत्परिमाणम् अकारणमिति बोध्यमित्यर्थः। अत्र-**'महत्त्वं षड्विधे हेतु'**रित्यादिना विश्वनाथेन महत्परिमाणस्य षड्विधप्रत्यक्षे कारणत्वकथनात् शब्दप्रत्यक्षे सामानाधिकरण्यसम्बन्धेन आकाशगतपरममहत्परिमाणस्य हेतुत्वाद् आकाशादे'रित्यनुक्त्वा **'कालादे'**रित्युक्तमिति बोध्यम्॥ अत्र **केचन**-'द्रव्यसमवेतप्रत्यक्षे, द्रव्यसमवेत-समवेत-प्रत्यक्षे च न महत्त्वस्य स्वातन्त्र्येण कारणता, तथा सति परमाणुघटितसन्निकर्षेण पृथिवीत्वनीलत्वादिप्रत्यक्षापत्तेः,तत्रापि सामानाधिकरण्यादिना घटमहत्त्वस्य सत्त्वात्, अतोद्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वाद्यवच्छिन्नं प्रति महत्त्वविशिष्टचक्षुस्संयोगवत्समवायादेः कारणत्वमिति रीत्या तत्तद-

तस्यापि न कारणत्वमित्याचार्याणामाशय इत्यन्ये। तन्न, ज्ञानातिरिक्तं प्रत्येवाकारणताया आचार्यैरुक्तत्वात् ॥ १५ ॥

**अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता ।**
**कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम् ॥ १६ ॥**

न्द्रियसन्निकर्षघटकतयैव महत्त्वस्य कारणत्वं वक्तव्यं तावतैव परमाणुरूपादेरपि प्रत्यक्षवारणसंभवात् न तत्र महत्त्वं पृथक् कारणं प्रयोजनाऽभावात्, न वा श्रोत्रसमवाये श्रोत्रसमवेतसमवाये वा महत्त्वं घटनीयं प्रयोजनाऽभावात्, तथा च आकाशस्य परममहत्परिमाणमपि न कारणमिति व्याख्यान्ति ॥ तत्तु चिन्त्यम् ॥ **अथ वर्धमानो**पाध्यायमतानुसारिणः-जीवात्ममहत्त्वस्यापि न कारणत्वं, तस्य मानसप्रत्यक्षाऽविषयत्वात्, नहि कश्चित् 'अहं महानि'ति मनसा साक्षात्करोति, "कारणत्वमन्यत्र पारिमाण्डल्यादिभ्य"-इति प्रशस्तपादभाष्यस्थाऽऽदिपदेन परममहत्त्वत्वेन, परममहत्त्वं संगृह्णद्भि**रुदयनाचार्यै**रेव तादृशानुभवो नास्तीत्युक्तप्रायत्वात्, यदि स्वात्ममहत्त्वस्य ते मानसप्रत्यक्षविषयतामभिप्रेयुः, तर्हि तस्य विषयविधया कारणताया दुर्वारतया 'आदि'पदेन आकाशादिमहत्त्वत्वेनैव संगृह्णीयुः, न च तथा संजगृहुः, अतो ज्ञापयन्त्याचार्याः आत्ममहत्त्वस्याऽतीन्द्रियत्वमित्याचक्षते-तन्मतमनुवदति-**तस्यापि नेति** आत्ममहत्परिमाणस्यापि न कारणत्वमित्यर्थः आचार्याणाम्=कारणत्वमन्यत्र पारिमाण्डल्यादिभ्य' इति प्रशस्तपादभाष्यस्य किरणावलीकर्तृणामुदयनाचार्याणाम्, आशयः=अभिप्रायः, इत्यन्ये वर्धमानोपाध्यायानुयायिनो व्याख्यान्ति। **तन्नेति**। वर्धमानोपाध्यायमतव्याख्यानं न युक्तमित्यर्थः। **ज्ञानातिरिक्तमिति**। 'कारणत्वं च ज्ञातृधर्मेतरकार्यापेक्षये'ति भाष्यम्। ज्ञातृधर्माः-ज्ञानादयः तदतिरिक्तकार्यनिरूपितकारणत्वं पारिमाण्डल्यादिभिन्नानां साधर्म्यमित्यर्थः। तथा च पूर्वापरभाष्यपर्यालोचनया ज्ञानं प्रति आत्मवृत्ति परममहत्परिमाणं कारणमित्याचार्याणामाशयो लभ्यत इति भावः ॥

कारिकायां 'कारणत्वमुदाहृत'मित्युक्तम्, तत्र किं नाम-कारणत्वम्? इत्यपेक्षायां कारणत्वं लक्षयति-मूले-**अन्यथासिद्धिशून्यस्येति**। अन्यथासिद्ध्या वक्ष्यमाणरूपया शून्यस्य-रहितस्य, निष्ठत्वं षष्ठ्यर्थः तथा च-'अन्यथासिद्धिशून्यनिष्ठा, या नियता=निश्चिता=अवश्यंभाविनी, पूर्ववर्तिता=कार्योत्पत्त्यव्यवहिते पूर्वस्मिन् क्षणे कार्याधिकरणवृत्तिता,-तदेव कारणत्वम् भवेदिति तदर्थः। 'अन्यथासिद्धिशून्यत्वे सति नियतत्वे सति पूर्ववर्त्तित्वं' कारणत्वमित्येतल्लक्षणं घटादिकारणे कपालदण्डादौ वर्तते। नियतत्वे सति पूर्ववर्तिनो दण्डत्वादेर्घटकारणत्वापत्तिवारणाय-अन्यथासिद्धिशून्यत्वे सतीति। तथा च दण्डत्वस्य अन्यथासिद्धत्वान्नातिव्याप्तिः। पूर्ववर्तिनो भावः पूर्ववर्तिता, सा च कदाचिद् घटार्थं मृद्वहनाय संप्रयुक्तेऽनियते घटत्वावच्छिन्ननिरूपिता'ऽन्यत्रकॢप्ते'त्याद्यन्यथासिद्धिशून्ये तद्रासभे, तत्राऽतिव्याप्तिवारणाय-**नियतेति**। तथा च तद्रासभस्य घटत्वावच्छिन्नं प्रति नियतत्वाऽभावात् तत्र नातिव्याप्तिः। घटस्य घटत्वावच्छिन्ननिरूपिता'ऽन्यत्रकॢप्ते'त्याद्यन्यथासिद्धिशून्यतया घटत्वावच्छिन्ननिरूपितव्यापकत्वात्मकनियततया च घटत्वेन स्वस्य स्वकारणत्वापत्तिवारणाय-**पूर्ववृत्तितेति**। अत्र-अन्यथासिद्धिशून्यत्वं नाम-यत्र यत्राऽन्यथासिद्धिव्यवहारस्तत्तद्व्यक्तिभेदकूटवत्त्वम्। नियतत्वम्=व्यापकत्वम्-कार्यव्यापकत्वमित्यर्थः,-कार्यतावच्छेदकावच्छिन्ना यावत्यो व्यक्तयस्तत्तद्व्यक्त्यधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वमिति यावत्। पूर्ववर्त्तित्वं च=कार्याऽव्यवहितप्राक्क्षणावच्छिन्नत्वम्। तथा च-'कार्यतावच्छेदकावच्छिन्ना यावत्यो व्यक्तयः प्रत्येकं तत्तद्व्य-

समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥ १७ ॥

ननु कारणत्वं किम् ? अत आह—अन्यथासिद्धीति । तस्य कारणत्वस्य ।१६।१७॥

यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत् ।
तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् ॥ १८ ॥

---

वहितप्राक्क्षणावच्छेदेन तत्तद्व्यक्त्यधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकीभूतो यो धर्मस्तद्वत्त्वम्-नियतपूर्ववृत्तित्वमिति फलितम् । घटत्वावच्छिन्ना यावत्यो घटव्यक्तयः प्रत्येकं तत्तद्घटाऽव्यवहितप्राक्क्षणे तद्घटव्यक्त्यधिकरण-चक्रादिवृत्तियों तुर्याद्यभावस्तत्प्रतियोगितानवच्छेदकदण्डत्वादिमत्त्वं दण्डादौ नियतपूर्ववर्तित्वमिति । वस्तुतस्तु—स्वाऽव्यवहितप्राक्कालावच्छिन्नत्व-स्वाऽधिकरणनिरूपितत्वोभयसम्बन्धेन कार्यतावच्छेदकाश्रयविशिष्टा या आधेयता तदाश्रयीभूताऽभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वम्'—नियतपूर्ववर्तित्वम्, एवं—कार्यतावच्छेदकघटत्वाश्रयघटात्मककार्यम् । तदव्यवहितपूर्वक्षणावच्छिन्नत्वं चक्रनिष्ठो यस्तुरीवेमाद्यभावस्तद्वृत्त्याधेयतायाम्, एवं घटाधिकरणचक्रनिरूपितत्वमपि चक्रवृत्तिर्यस्तुरीवेमाद्यभावस्तद्वृत्त्याधेयतायाम्,—इत्युभयसम्बन्धेन कार्यतावच्छेदकघटत्वाश्रय घटविशिष्टा या आधेयता तुरीवेमाद्यभावनिष्ठा, तदाश्रयीभूतो यस्तुरीवेमाद्यभावस्तत्प्रतियोगिताऽनवच्छेदकदण्डत्वधर्मवत्त्वं दण्डे इति समन्वयः । अथवा—विशेषतस्तु "संयोगसम्बन्धावच्छिन्नोत्पत्त्यवच्छेदकत्वसम्बन्धेन घटत्वावच्छिन्नाऽधिकरणे घटाऽव्यवहितप्राक्कालावच्छेदेन दैशिकविशेषणतासम्बन्धेन वर्तमानो योऽभावस्तादृशाभावीयकारणतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वे सति अन्यथासिद्ध्यनिरूपको यो धर्मस्तद्धर्मवत्त्वं दण्डनिष्ठं घटकारणत्व'मिति फलितार्थः । अनयैव दिशा समवायेन घटं प्रति तादात्म्येन कपालस्य,—समवायेन कपालसंयोगस्य,—च कारणत्वमनुसन्धेयम् । कार्यान्तरेऽपीयमेव रीतिरित्यपि केचित् । तस्येति—तस्य=कारणत्वस्य, त्रैविध्यं=तिस्रो विधा अस्येति त्रिविधं तस्य भावस्त्रैविध्यं, परिकीर्तितम्=उक्तम् ॥ १६ ॥ त्रैविध्यं दर्शयति—**समवायिकारणत्वमिति** । एकं—समवायिकारणत्वम् । द्वितीयम्—असमवायिहेतुत्वम्=असमवायिकारणत्वम् । तृतीयं—निमित्तहेतुत्वम्=निमित्तकारणत्वम् । इत्येवं न्यायनयज्ञैः=न्यायो युक्तिः—प्रमाणैरर्थपरीक्षणमिति यावत्, तस्य नयः—शास्त्रम्, तज्ज्ञैः=नैयायिकैरित्यर्थः । उक्तम्—कथितमिति । मुक्तावल्यां—**ननु कारणत्वं किमिति** । किंस्वरूपं कारणलक्षणमित्यर्थः ॥ १६ ॥ कारिकायास्तृतीयपादस्थ'तस्ये'ति पदस्यार्थं दर्शयति—**तस्य—कारणत्वस्येति** ॥ १७ ॥

तत्राद्यस्य लक्षणमाह मूले—**यत्समवेतमिति** । यस्मिन्-तन्त्वादौ, समवेतं=समवायसम्बन्धेन वर्तमानं सत्, कार्यं—पटादिकम्, भवति=उत्पद्यते,तत्=तन्त्वादिकं तु, समवायिजनकं=समवायिकारणम्, ज्ञेयम् । 'यस्मिन् समवेत'मिति व्युत्पत्त्या यन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाश्रयः कार्यं तत् समवायिकारणमित्यर्थलाभात्, 'कार्यनिष्ठसमवायसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वं समवायिकारणत्वमित्यर्थः फलितः । 'समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायिकारणत्व'मिति यावत् । भवति च यथा पटं प्रति तन्तुस्तथा घटं प्रति कपालः, यथा वा पटरूपादिकं प्रति पटः, घटरूपादिकं प्रति च घटः । समवायसम्बन्धेन कार्यवत्त्वं समवायिकारणत्वमिति तु संक्षिप्तार्थः । असमवायिकारणस्य लक्षणमाह—मूले—**तत्रेति** । तत्र=समवायिकारणे तन्त्वादौ, आसन्नं=सन्निहितं=वर्तमानम्=समवायसम्बन्धेन स्वसमवायिसमवेतत्व-

**तत्रेति। समवायिकारणे आसन्नं प्रत्यासन्नं कारणं द्वितीयमसमवायिकारणमित्यर्थः। अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात्। एवं**

---

सम्बन्धेन वा वृत्तितावदिति यावत्। एतादृशं यत् जनकं=कारणम्, तत् द्वितीयम्=असमवायिकारणमित्यर्थः। निमित्तकारणस्य लक्षणं दर्शयति—**आभ्यामिति**। समवायिकारणाऽसमवायिकारणाभ्यामित्यर्थः। परं=भिन्नम्, यत् कारणम्, तत् तृतीयं=निमित्तकारणं स्यादिति॥ **'तत्रासन्न'**मिति कारिकाया अर्थमाह—मुक्तावल्यां— **तत्रेति। समवायिकारणे** इति। पटस्य समवायिकारणे तन्त्वात्मके, प्रत्यासन्नं=समवायसम्बन्धेन वर्तमानं—तन्तुसंयोगः—पटस्य असमवायिकारणम्, जन्यद्रव्यमात्रंप्रति—अवयवसंयोगोऽसमवायिकारणमिति नियमात्। यथा वा—पटरूपस्य समवायिकारणे पटे प्रत्यासन्नं=स्व(तन्तुरूप)समवायि—(तन्तु)समवेत(पट)त्वसम्बन्धेन वर्तमानं-तन्तुरूपं पटरूपस्य असमवायिकारणमिति समन्वयः। तथा च द्विविधम्—असमवायिकारणम्—'समवायसम्बन्धावच्छिन्नकार्यतानिरूपित-समवायसम्बन्धावच्छिन्नकारणतावत्त्वम्, 'समवायसम्बन्धावच्छिन्नकार्यतानिरूपितस्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नकारणतावत्त्वं'चेति। 'समवायसम्बन्धावच्छिन्नकार्यतानिरूपित-समवाय—स्वसमवायिसमवेतत्वाऽन्यतरसम्बन्धावच्छिन्नकारणतावत्त्वमि'त्यनुगतलक्षणम्। यत्र तन्तौ समवायेन पटो वर्तते तत्र तन्तौ समवायेन तन्तुसंयोगो वर्तते. अतः समवायेन तन्तुनिष्ठं पटं प्रति समवायेन तन्तुनिष्ठस्तन्तुसंयोगोऽसमवायिकारणम्। एवं यत्र पटे समवायेन पटरूपं वर्तते तत्र पटे स्वसमवायिसमवेतत्वसम्बन्धेन तन्तुरूपं वर्तते, अतः समवायेन पटनिष्ठं पटरूपं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन पटनिष्ठं तन्तुरूपम् असमवायिकारणमिति सर्वत्रोह्यम्। असमवायिकारण लक्षणे—समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धनिवेशेन समवायिकारणेऽतिव्याप्तिवारणम्, प्रत्येकेऽसमवायिकारणेऽव्याप्तिवारणं च बोध्यम्॥ यद्धि न भवति असमवायिकारणं तत्राऽप्येतल्लक्षणस्य (समवायसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वस्य) गमनात् तत्राऽतिव्याप्तिमत्तया निरुक्तमसमवायिकारणलक्षणमाक्षिपति—**अत्र यद्यपीति**। 'यद्यपी'त्याक्षेपे। अत्र—एतस्मिन्=एतादृशे असमवायिकारणलक्षणे सतीति यावत्। **तुरीतन्तुसंयोगानामिति**। यथा पटं प्रति तन्तुः समवायिकारणम्, तन्तुसंयोगः—असमवायिकारणम्, तुरीतन्तुसंयोगस्तु तुरीवेमादिवत् निमित्तकारणम्, तुरी नाम—वस्त्रवयनसाधनं वितस्तिपरिमाणं काष्ठविशेषः, यस्याः प्रान्ते तन्तुं बध्वा येन तन्तुना प्रावरणानुकूल—समप्रान्तग्रन्थ्याश्रयत्वेन लम्बमानास्तन्तवो वेयन्ते, तादृशस्तुरीतन्तुसंयोगः पटस्य समवायिकारणे तन्तौ समवायसम्बन्धेन वर्ततेऽतः पटवयनसमाप्तिं यावदपेक्षते, न तूत्तरकाले, अत एव स निमित्तकारणं भवति नतु असमवायिकारणम्, 'असमवायिकारणनाशे कार्यद्रव्यस्य नाश'—इति नियमात्, यथा तन्तूनां परस्परसंयोगनाशे कार्यद्रव्यस्य वस्त्रस्य नाशो भवति कपालद्वयसंयोगस्य नाशे वा घटस्य नाशो भवति, तथा तुरीतन्तुसंयोगनाशे पटस्य नाशो न भवति न वा दण्डनाशे घटस्य नाशो भवति अतस्तुरीतन्तुसंयोगो न पटस्याऽसमवायिकारणं किन्तु निमित्तकारणं घटं प्रति दण्ड इव तादृशे तुरीतन्तुसंयोगेऽसमवायिकारणलक्षणस्य गमनात् पटं प्रत्यसमवायिकारणत्वापत्तिः स्यादिति भावः। तस्या वारणमग्रे 'तथापी'त्याद्युत्तरग्रन्थेन विशेषलक्षणकरणेन करिष्यते-इत्यनुसन्धेयम्। द्रव्यनाशाऽसमवायिकारणनाशयोः कार्यकारणभावस्तु—'प्रतियोगितासम्बन्धेन द्रव्यनिष्ठं द्रव्यनाशं प्रति स्वप्रतियोगिसमवायिसमवेतत्व—स्वप्रतियोगिजन्यत्व—कालिकविशेषणतैतत्त्रितयसम्बन्धेन नाशत्वेन हेतुत्वम्। स्वम्—असमवायिकारणनाशः। यथा प्रतियोगितासम्बन्धेन घटनाशो घटे वर्तते तं

**वेगादीनामभिघाताद्यसमवायिकारणत्वं स्यात्। एवं ज्ञानादीनामपीच्छाद्यसमवायिकारणत्वं स्यात्। तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयम्।**

प्रति स्वस्य कपालद्वयसंयोगाभावस्य प्रतियोगिनः कपालद्वयसंयोगस्य समवायिकारणे कपाले समवेतत्वं घटे, कपालद्वयसंयोगाभावप्रतियोगि-कपालद्वय-जन्यत्वं घटे, कालिकविशेषणत्वेनापि कपालद्वयसंयोगाभावो घटे,—इत्येवं त्रितयसम्बन्धेन कपालद्वयसंयोगनाशस्य नाशत्वेन कारणत्वमिति। दण्डसंयोगनाशाद् घटनाशापत्तिवारणाय—समवेतत्वदलम्। कपालपवनसंयोगनाशाद् घटनाशापत्तिवारणाय—जन्यत्वान्तदलम्। भाविकपालद्वयसंयोगनाशमादाय घटनाशापत्तिवारणाय—कालिकविशेषणत्वदलम्। **वस्तुतस्तु**—'प्रतियोगितासम्बन्धेन द्रव्यनाशं प्रति—क्रियाध्वंसाऽनाश्याऽपेक्षाबुद्धयजन्यस्वप्रतियोगिसमवायिद्वयसमवेतत्व—कालिकविशेषणत्वोभयसम्बन्धेन नाशत्वेन हेतुत्वं वक्तव्यम्। कपालद्वयनिष्ठद्वित्वनाशाद् घटनाशापत्तिवारणाय—स्वप्रतियोगिनि 'अपेक्षाबुद्धयजन्यत्वं' निवेशितम्। कपालद्वयविभागनाशेन घटोत्पत्तिक्षणे घटनाशापत्तिवारणाय—'क्रियाध्वंसाऽनाश्यत्वं' स्वप्रतियोगिनि निवेशितम्। **वेगादीनामिति।** यथा भूतले वेगवत्पाषाणस्य संयोगे सति शब्द उत्पद्यतेऽतस्तादृशशब्दजनकसंयोगः—'अभिघात'—इत्युच्यते, कार्यस्य अभिघातस्य( शब्दजनकसंयोगस्य )समवायिकारणं पाषाणः तत्र पाषाणे वर्त्तमाना क्रिया असमवायिकारणं भवति, तत्रैव पाषाणे समवायसम्बन्धेन अभिघातनिमित्तकारणात्मक—वेगाख्यगुणोऽपि वर्ततेऽतः—'समवायसम्बन्धावच्छिन्नाऽभिघातनिष्ठकार्यतानिरूपित—समवायसम्बन्धावच्छिन्नकारणतावत्त्वस्य क्रियायामिव वेगेऽपि सत्त्वादतिव्याप्तिः, अभिघातं प्रति निमित्तकारणस्यापि वेगस्याऽसमवायिकारणत्वापत्तिरिति भावः। अस्या अपि वारणं 'तथापी'त्याद्युत्तरग्रन्थेन दर्शयिष्यते—इत्यनुसन्धेयम्। **वेगादीनामित्या**दिना स्पर्शपरिग्रहः। **अभिघातादीत्या**दिना तेजस्संयोगात्मकपाकपरिग्रहः। तथा च कन्दमूलादौ करपादाद्यवयवादौ वा वह्नेः स्पर्शे सति वह्निसंयोगात्मकः पाको भवति, तत्र कार्यस्य वह्निसंयोगात्मकपाकस्य समवायिकारणं वह्निस्तत्र वह्नौ वर्तमाना क्रिया समवायिकारणं भवति, तत्रैव च वह्नौ समवायसम्बन्धेन वह्निसंयोग—निमित्तकारणात्मक—वह्निस्पर्शोऽपि वर्ततेऽतः—'समवायसम्बन्धावच्छिन्न—वह्निसंयोगात्मक—पाकनिष्ठकार्यतानिरूपित—समवायसम्बन्धावच्छिन्नकारणतावत्त्वस्य क्रियायामिव वह्निस्पर्शेऽपि सत्त्वाद् अतिव्याप्तिः, वह्निसंयोगात्मकपाकं प्रति निमित्तकारणस्यापि वह्निस्पर्शस्य असमवायिकारणत्वापत्तिरिति भावः। **एवं ज्ञानादीनामपीति।** इच्छायाः समवायिकारणम्—आत्मा, असमवायिकारणम्—आत्ममनस्संयोगः, निमित्तकारणं ज्ञानादि, तत्र 'यद्विषयकं ज्ञान भवति तेन ज्ञानेन तद्विषयिणी इच्छा उत्पद्यते, अतः—कार्यस्य इच्छायाः समवायिकारणे आत्मनि समवायसम्बन्धेन इच्छानिमित्तकारणात्मक—ज्ञानमपि वर्ततेऽतः—'समवायसम्बन्धावच्छिन्नेच्छानिष्ठकार्यतानिरूपित—समवायसम्बन्धावच्छिन्नकारणतावत्त्वस्य आत्ममनस्संयोगे इव ज्ञानेऽपि सत्त्वाद् अतिव्याप्तिः, इच्छां प्रति निमित्तकारणस्यापि ज्ञानस्य असमवायिकारणत्वापत्तिरिति भावः। **ज्ञानादीत्यादिना**—इच्छापरिग्रहः। **इच्छादीत्यादिना** प्रवृत्तिपरिग्रहः। यद्विषयिणी इच्छा भवति तद्विषयिणी प्रवृत्तिर्जायते' तथा च प्रवृत्तिं प्रति निमित्तकारणस्यापि इच्छाया असमवायिकारणत्वापत्तिः स्यात्, प्रवृत्तिसमवायिकारणे आत्मनि समवायेन निमित्तकारणस्य इच्छाया सत्त्वादिति भावः। पटत्वाद्यात्मककार्यतावच्छेदकभेदेन विशिष्यैवाऽसमवायिकारणलक्षणं वक्तव्यमित्यभिप्रायेण समाधत्ते—**तथापीति।** पटाऽसमवायिकारणलक्षणे=पटस्य असमवायिकारणलक्षणे। 'तुरीतन्तुसंयोगभिन्नत्वे सती'त्युपादेयम्—तथा च 'तुरीतन्तुसंयोगभिन्नत्वे सति पटस्य समवायिकारणे तन्तौ

**तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव। एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति तत्तत्कार्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयम्। आत्मविशेषगुणानां तु कुत्राप्यसमवायिकारणत्वं नास्ति तेन तद्भिन्नत्वं सामा-**

---

समवायेन वर्तमानत्वे सति यत् पटकारणं' तत् पटस्याऽसमवायिकारण'मिति लक्षणं पर्यवसन्नम्। ननु तथापि हस्ततन्तुसंयोगादावतिव्याप्तिरिति चेन्न। 'तुरीतन्तुसंयोग भिन्नत्व'मित्यस्य 'तन्तुभिन्नसमवेतत्वावच्छिन्नप्रतियोगिताकभेदवत्त्व'मित्यर्थः। वस्तुतस्तु–स्वावच्छिन्नप्रतियोगिताकभेदवत्समवेतत्वसम्बन्धेन तन्तुत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वात्मकमेव तुरीतन्तुसंयोगभिन्नत्वं बोध्यम्। स्वं–तन्तुत्वम्, तदवच्छिन्नप्रतियोगिताको भेदः–'तन्तुर्न'–इत्याकारक, तादृशभेदवती तुरी, तत्समवेतस्तुरीतन्तुसंयोगो हस्ततन्तुसंयोगादिः, तादृशसमवेतत्वसम्बन्धेन तन्तुत्वं तादृशसंयोगे वर्तते, तादृशसम्बन्धेन तन्तुत्वावच्छिन्नप्रतियोगिताको भेदः–तन्तुत्ववत्तादृशतुरीतन्तुसंयोगनिष्ठप्रतियोगिताको भेदः–तन्तुत्ववत्तादृशहस्ततन्तुसंयोगनिष्ठप्रतियोगिताकभेदः, तद्वत्त्वं तन्तुद्वयसंयोगे इति। तथा च–'स्वावच्छिन्नप्रतियोगिताकभेदवत्समवेतत्वसम्बन्धावच्छिन्नतन्तुत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वे सति समवायसम्बन्धावच्छिन्नपटनिष्ठकार्यतानिरूपित-समवायसम्बन्धावच्छिन्नकारणतावत्त्वम्' पटस्य असमवायिकारणत्वम्'–इति फलितं लक्षणम्॥ तुरीतन्तुसंयोगभिन्नत्वम् असमवायिकारणसामान्यलक्षणे न देयमित्याह–**तुरीतन्तुसंयोगस्त्विति**। यथा वृक्षहस्तसंयोगाद् वृक्षशरीरसंयोगो भवति तत्र वृक्षशरीरसंयोगे वृक्षहस्तसंयोगाऽसमवायिकारणम्, तद्वत्–तुरीतन्तुसंयोगात् तुरीपटसंयोगो भवति, अतः तुरीपटसंयोगं प्रति तुरीतन्तुसंयोगोऽसमवायिकरणम् भवति। तुरीपटसंयोगः पटे समवायसम्बन्धेन वर्तते तत्रैव पटे स्व (तुरीतन्तुसंयोग) समवायि (तन्तु) समवेत (पट)त्वसम्बन्धेन तुरीतन्तुसंयोगोऽपि वर्तते, तत्र 'समवायसम्बन्धावच्छिन्न–तुरीपटसंयोगनिष्ठकार्यतानिरूपितस्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नकारणतावत्त्वस्य तुरीतन्तुसंयोगे सत्त्वाल्लक्षणसमवयः। तथा च असमवायिकारणसामान्यलक्षणे यं कञ्चित्प्रति असमवायिकारणस्य निवेशाऽसंभवः, तत्राऽव्याप्त्यापत्तेरिति भावः॥ एवम्–वेगभिन्नत्वमपि असमवायिकारणसामान्यलक्षणे न देयम्, वेगस्य वेगस्पन्दं प्रति असमवायिकारणत्वात्, किन्तु विशेषलक्षणे अभिघाताऽसमवायिकारणात्मके एव वेगभिन्नत्वंदेयमित्याह–**एवं वेगादिकमपीति। वेगस्पन्देति**। पाषाणादौ वेगजन्या या क्रिया सा एव स्पन्दपदवाच्या, तस्याः क्रियायाः समवायिकारणे पाषाणे समवायसम्बन्धेन वेगोऽपि वर्ततेऽतः 'समवायसम्बन्धावच्छिन्नक्रिया(स्पन्द)निष्ठकार्यतानिरूपित समवायसम्बन्धावच्छिन्नकारणतावत्त्वस्य वेगे सत्त्वात् वेगोऽसमवायिकारणं भवति, तस्माद् वेगभिन्नत्वम् असमवायिकारणसामान्यलक्षणे न देयमेव, वेगेऽव्याप्त्यापत्तेरिति भावः॥ ननु तर्हि अभिघातं प्रति वेगस्याऽसमवायिकारणत्वापत्तेर्वारणं कथं कार्यम्? इत्यत आह–**तत्तत्कार्याऽसमवायीति**। तस्य तस्य कार्यस्य असमवायिकारणलक्षणे, यत्र यत्राऽतिव्याप्तिस्तत्तद्भिन्नत्वनिवेशेनैव सा वारणीयेत्यर्थः। तथा च–वेगभिन्नत्वे सति अभिघातस्य समवायिकारणे समवायेन वर्तमानं कारणम्–अभिघातस्याऽसमवायिकारणमिति लक्षणं कार्यम्। 'वेगभिन्नत्वे सति समवायसम्बन्धावच्छिन्नाऽभिघातनिष्ठकार्यतानिरूपित–समवायसम्बन्धावच्छिन्नकारणतावत्त्वमित्यर्थः। तस्य च क्रियायां सत्त्वाल्लक्षणसमन्वयः। वेगे च नाऽतिव्याप्तिरिति॥ एवं–'स्पर्शभिन्नत्वे सति समवायसम्बन्धावच्छिन्न-पाकनिष्ठ-कार्यतानिरूपित-समवायसम्बन्धावच्छिन्नकारणतावत्त्वस्य' क्रियायां सत्त्वाल्लक्षणसमन्वयः। स्पर्शे च नाऽतिव्याप्तिरिति॥ **आत्मविशेष-**

न्यलक्षणे देयमेव । तत्व

अत्र समवायिकारणे प्रत्यासन्नं द्विविधं कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च । आद्यं यथा-घटादिकं प्रति कपालसंयोगादिकमसमवायिकारणम् । तत्र कार्येण घटेन सह कारणस्य कपालसंयोगस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति । द्वितीयं यथा-घटरूपम् प्रति कपालरूपमसमवायिकारणम् । तत्र स्वगतरूपादिकं प्रति समवायिकारणं घटः, तेन सह कपालरूपस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति । तथा च क्वचित्समवायसम्बन्धेन क्वचित्स्वसमवायिसमवेत्वसम्बन्धेनेति फलितोऽर्थः ।

---

गुणानामिति । आत्मनो ये विशेषगुणा ज्ञानेच्छादयस्ते तु कुत्राऽपि पदार्थेऽसमवायिकारणानि न भवन्ति, अतोऽसमवायिकारणस्य सामान्यलक्षणे तद्भिन्नत्वम्=आत्मविशेषगुणभिन्नत्वं देयमिति । तथा च-'आत्मविशेषगुणभिन्नत्वे सति समवायसम्बन्धावच्छिन्नकार्यतानिरूपित-समवाय-स्वसमवायिसमवेतत्वाऽन्यतरसम्बन्धावच्छिन्नकारणतावत्त्वम्-असमवायिकारणत्वमिति सामान्यलक्षणं पर्यवसन्नं बोध्यम् । अत्र आत्मविशेषगुणज्ञानत्वाद्यवच्छिन्नभेदत्वनिवेशे गौरवात् लाघवात् 'स्वाभाववद्वृत्तित्वसम्बन्धेन आत्मत्वविशिष्टत्वे सतीति'निवेशनीयम् । स्वं-आत्मत्वम् । भवति च आत्ममनस्संयोग आत्मत्वाभाववन्मनोवृत्तितया आत्मत्वविशिष्टः, अथ च समवायसम्बन्धावच्छिन्नज्ञानादिनिष्ठकार्यतानिरूपित-समवायसम्बन्धावच्छिन्नकारणताश्रयश्चेति तत्र लक्षणसमन्वयः । ज्ञानादौ तु स्वाभाववद्वृत्तित्वसम्बन्धेन आत्मत्वविशिष्टत्वाऽभावान्नातिव्याप्तिः ॥ 'तत्राऽऽसन्नं जनकमि'ति कारिकोक्तं यदु-आसन्नत्वं=प्रत्यासन्नत्वं, तद् द्विविधसम्बन्धेन भवतीति दर्शयति-अत्र समवायिकारणे इति । अत्र-एतस्मिन्प्रकरणे । समवायिकारणे प्रत्यासन्नम्=समवायिकारणेऽसमवायिकारणत्वेनाऽभिमतस्य वृत्तित्वं, द्विविधम्=द्वयोः सम्बन्धयोरन्यतरेण सम्बन्धेन भवति । कार्यैकार्थप्रत्यासत्त्या=कार्येण घटेन सह, एकस्मिन् अर्थे=एकाधिकरणे समवायिकारणात्मके कपाले, या प्रत्यासत्तिः=सम्बन्धः,=समवायाख्यः, तयेत्यर्थः, समवायसम्बन्धेनेति यावत् । कारणैकार्थप्रत्यासत्त्या=कारणेन=घटरूपस्य समवायिकारणेन घटेन सह,-एकस्मिन्नर्थे=एकस्मिन्नधिकरणे समवायिकारणाख्ये कपाले,-या प्रत्यासत्तिः=सम्बन्धः=समवायाख्यः, तयेत्यर्थः, स्वसमवायिसमवेतत्वसम्बन्धेनेति यावत् ॥ तत्राद्यमुदाहरति-आद्यं यथा घटादिकमिति । घटस्य कपालद्वयसंयोगोऽसमवायिकारणं भवति, तत्र कार्येण=समवायेनोत्पन्नघटात्मककार्येण सह, कारणस्य=असमवायिकारणत्वेनाऽभिमतस्य, कपालसंयोगस्य=कपालद्वयसंयोगस्य, एकस्मिन् कपाले= ये द्वे घटाधिकरणे कपाले तयोरेव कपालयोः, प्रत्यासत्तिः=समवायसम्बन्धः, अस्ति । द्वितीयमुदाहरति-द्वितीयं यथा घटरूपमिति । घटसमवेतं रूपं प्रति कपालसमवेतं रूपम् असमवायिकारणं भवति, तत्र स्वगतरूपादिकं प्रति=घटसमवेतरूपं प्रति, समवायिकारणं घटः, तेन समवायिकारणेन घटेन सह, कपालरूपस्य=कपालसमवेतरूपस्य । एकस्मिन् कपाले=यत्र कपाले घटः समवेतस्तस्मिन्नेव कपाले । प्रत्यासत्तिः=समवायाख्यसम्बन्धः । अस्ति । तथा चेति । द्विविधप्रत्यासत्तिविवक्षणे चेत्यर्थः ॥ 'कार्यैकार्थप्रत्यासत्त्ये'त्यस्य तात्पर्यार्थमाह-क्वचित् समवायसम्बन्धेनेति । क्वचित्=घटाद्यवयविपदार्थं प्रति कपालाद्यवयवसंयोगस्य कारणतास्थले ॥ 'कारणैकार्थप्रत्यासत्त्ये'त्यस्य तात्पर्यार्थमाह-क्वचित् स्वसमवायिसमवेतत्वसम्बन्धेनेति । क्वचित्=घटरूपादिकं प्रति कपालरूपादेः कारणतास्थले ॥ फलितोऽर्थ इति । द्विविधप्रत्यासत्त्योरिति शेषः । तथा च-क्वचित् 'समवायसम्बन्धावच्छिन्नकार्यतानिरूपित समवायसम्बन्धावच्छिन्नकारणतावत्त्वमिति लक्षणम्, क्वचिच्च-'समवाय-

इत्थं च कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्यवसन्नम्। आभ्यां=समवायिकारणासमवायिकारणाभ्यां, परं=भिन्नं, कारणं तृतीयं=निमित्तकारणमित्यर्थः ॥१८॥

येन सह पूर्वभावः, कारणमादाय वा यस्य।
अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ॥ १९ ॥

---

सम्बन्धावच्छिन्नकार्यतानिरूपितस्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नकारणतावत्त्वमिति च, फलितार्थ इत्यर्थः ॥ नन्वेवं कारणतावच्छेदकसम्बन्धभेदेनाऽसमवायिकारणत्वानां भेदेऽननुगतं लक्षणमत आह—**इत्थं चेति**। कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या=कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या वेत्यर्थः, समवाय—स्वसमवायिसमवेतत्वाऽन्यतरसम्बन्धेनेति यावत्। ज्ञानादिभिन्नम्=आत्मत्वाभाववद्वृत्ति। तथा च—'समवायसम्बन्धावच्छिन्नकार्यतानिरूपित—समवाय—स्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्नकारणतावत्त्वे सति आत्मत्वाऽभाववद्वृत्तित्व'मिति सामान्यलक्षणं पर्यवसन्नम् ॥ **'आभ्यां परं तृतीय'**मिति निमित्तकारणं व्याख्याति—**'समवायिकारणाऽसमवायिकारणाभ्यामिति**। समवायिकारणत्वाऽसमवायिकारणत्वाभ्यामित्यर्थः ॥ **भिन्नं कारणमिति**। भिन्नत्वे सति कारणत्वमित्यर्थः ॥ **निमित्तकारणमित्यर्थ** इति। निमित्तकारणत्वमित्यर्थ इत्यर्थः। तेन तुरीपटसंयोगं प्रति तुरीतन्तुसंयोगस्याऽसमवायिकारणत्वेऽपि न तस्य पटं प्रति निमित्तकारणत्वक्षतिरिति हृदयम् ॥ १८ ॥

कारणलक्षणे 'अन्यथासिद्धिशून्यत्व'मुक्तम्। तत्र 'अन्यथासिद्धिः का? कतिविधा चे?'त्याकांक्षायामन्यथासिद्धेः स्वरूपलक्षणान्याह—मूले—**येन सहेति**। अत्रेदं बोध्यम्—घटात्मककार्यं प्रति—दण्डत्वं, दण्डरूपम्, गगनम्, कुलालपिता, रासभश्चेति,—पञ्च अन्यथासिद्धाः भवन्ति, अन्यथासिद्धयोऽपि पञ्च, तासां पञ्चानामप्यन्यथासिद्धीनां साधारणं स्वरूपलक्षणम्—'पूर्ववर्तिताऽवच्छेदकयद्रूपावच्छेदेन प्रामाणिकानां न कारणत्वव्यवहारस्तद्रूपत्वमिति'। घटं प्रति दण्डत्वादयः पञ्च पूर्ववर्तिनो भवन्ति, अतः पूर्ववर्तितावच्छेदकं यद्रूपं दण्डत्वगतं तद्व्यक्तित्वं,—तदवच्छेदेन, तथा दण्डरूपत्वावच्छेदेन, गगनत्वावच्छेदेन, कुलालपितृत्वावच्छेदेन, रासभत्वावच्छेदेन च, प्रामाणिकानां कारणताव्यवहारो न भवति, तद्रूपम्—दण्डत्वगत—तद्व्यक्तित्वम्, दण्डरूपत्वम्, गगनत्वम्, कुलालपितृत्वम्, रासभत्वं च,-तदवच्छिन्नत्वं दण्डत्वगत—तद्व्यक्तित्वावच्छिन्नत्वं दण्डत्वे, दण्डरूपत्वावच्छिन्नत्वं दण्डरूपे, गगनत्वावच्छिन्नत्वं गगने, कुलालपितृत्वावच्छिन्नत्वं कुलालपितरि, रासभत्वावच्छिन्नत्वं रासभे,-इति सर्वत्राऽन्यथासिद्धिस्वरूपलक्षणसमन्वयः। तासां पञ्चान्यथासिद्धीनां प्रत्येकं विशेषलक्षणानि तु कारिकाभिरुच्यन्ते। तत्र **'येन सह पूर्वभाव'** इति प्रथमं लक्षणम्। येन सह=दण्डत्वात्मकधर्मेण सह (यस्य—दण्डात्मककारणस्य, यद्—घटात्मककार्यं प्रति) पूर्वभावः=पूर्ववृत्तिता कारणतेति यावत्, ज्ञायते, तद्धर्मत्वं=दण्डत्वगततद्व्यक्तित्वम्, अन्यथासिद्धिः प्रथमा तद्धर्मे दण्डत्वे वर्ततेऽतो दण्डत्वमन्यथासिद्धमित्यर्थः। 'कारणतावच्छेदकधर्मत्वं' प्रथमान्यथासिद्धत्वमिति फलितार्थः। **'कारणमादाय वा यस्ये'**ति द्वितीयान्यथासिद्धिलक्षणम्। यस्य=दण्डरूपस्य, कारणमादाय=कारणं दण्डमादायैव (कार्येण घटेन सह अन्वयव्यतिरेकौ—'दण्डरूपसत्त्वे घटसत्त्वं—दण्डरूपाभावे घटाभाव' इत्याकारकौ गृह्येते, न तु स्वातन्त्र्येण केवलेन रूपेण सह 'रूपसत्त्वे घटसत्त्वं रूपाभावे घटाभाव' इति। रूपस्य पाषाणादावपि सत्त्वात्

जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते ।
अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः ॥ २० ॥

एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥

तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः ।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥ २२ ॥

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानामत आह–येनेति । यत्कार्यं प्रति

---

तत्र च घटाभावात् ) तत्त्वं दण्डरूपत्वं द्वितीयान्यथासिद्धिरिति । सा च दण्डरूपे वर्ततेऽतो दण्डरूपमन्यथासिद्धम्। 'स्वतन्त्राऽन्वयव्यतिरेकशून्यकारणगुणत्वम्' द्वितीयाऽन्यथासिद्धिरिरि फलितार्थः। **अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम्'**–इति तृतीयान्यथासिद्धिलक्षणम् । अन्यं प्रति=शब्दात्मककार्यं प्रति, गगनस्य पूर्वभावे ज्ञाते=पूर्ववृत्तित्वे ज्ञाते सत्येव, यत्=यद् घटात्मककार्यं प्रति, यस्य गगनस्य पूर्वभावविज्ञानम्=पूर्ववृत्तित्वं यदि ज्ञायते, तर्हि तत्त्वं=गगनत्वम् अन्यथासिद्धिस्तृतीया, सा च गगने वर्ततेऽतो गगनमन्यथासिद्धमिति ॥ 'अन्यकारणकत्वेन गृहीतकारणकत्वम्' तृतीयान्यथासिद्धिरिति फलितार्थः॥ **'जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते'**इति चतुर्थान्यथासिद्धिलक्षणम् । यस्य=कुलालपितुः, जनकं प्रति=घटजनककुलालं प्रति, पूर्ववृत्तिताम्=पूर्वभावम्, कारणताम्, अपरिज्ञाय=अज्ञात्वा, पूर्वभावो न गृह्यते, तत्त्वं कुलालपितृत्वम् अन्यथासिद्धिश्चतुर्थी । सा च कुलालस्य पितरि वर्ततेऽतः कुलालपिताऽन्यथासिद्धः ॥ द्वारभिन्नं यत् कारणं तत्कारणत्वं' चतुर्थान्यथासिद्धिरिति फलितार्थः॥ **अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविन'**–इति पञ्चमान्यथासिद्धिलक्षणम् । नियतावश्यकपूर्वभाविनः=नियतं=कार्यस्य व्यापकं, यद् आवश्यकं=लघुधर्मावच्छिन्नम्, पूर्वभावि=कारणं दण्डादि । तस्य दण्डादेः, अतिरिक्तम्=भिन्नं भेदवत्, यत्=रासभादिकं भवेत्, तत्त्वं रासभत्वम् अन्यथासिद्धिः पञ्चमी । सा रासभे वर्ततेऽतो रासभोऽन्यथासिद्धः ॥ 'यद्रूपावच्छिन्नत्वं नियतावश्यकपूर्वभाविभिन्नत्वं तद्रूपवत्त्व'मित्यन्यथासिद्धिः पञ्चमीति फलितार्थः॥ अन्यथासिद्धीनां क्रमश उदाहरणानि दर्शयति–**एते पञ्चेति** । एते=वक्ष्यमाणा दण्डत्वादयः, पञ्च=पञ्चसंख्याकाः, अन्यथासिद्धाः=अन्यथासिद्धीनां प्रत्येकलक्षणलक्ष्याः, भवन्तीति । तत्रादिमम्=प्रथमान्यथासिद्धिलक्ष्यम्, दण्डत्वादिकम्=दण्डत्व कपालत्वादिकं बोध्यमिति । द्वितीयं=द्वितीयान्यथासिद्धिलक्ष्यम्, घटादौ=घटादिकं प्रति, दण्डरूपादि=दण्डस्य रूपं रस इत्यादिकं कपालस्य रूपं रसइत्यादिकञ्च, दर्शितं बोध्यमिति । तृतीयन्तु=तृतीयाऽन्यथासिद्धिलक्ष्यन्तु, व्योम=गगनम्, भवेदिति बोध्यम् । अपरः=चतुर्थान्यथासिद्धिलक्ष्यस्तु, कुलालजनकः=कुलालस्य पिता, इति बोध्यम् । पञ्चमः=पञ्चमान्यथासिद्धिलक्ष्यस्तु, रासभादिः=गर्दभशकटादिः, स्यादिति बोध्यम् । एतेषु=दण्डत्वादिषु पञ्चसु अन्यथासिद्धेषु मध्ये,=एतासु पञ्चस्वन्यथासिद्धिषु मध्ये–इति यावत् । असौ=पञ्चमान्यथासिद्धः=पञ्चमान्यथासिद्धिरिति यावत् । आवश्यकः=आवश्यकतया सामान्यलक्षणं बोध्यम्, दण्डत्वादिषु सर्वत्र समन्वयादिति भावः ॥

**मुक्तावल्यां**–प्रसङ्गसंगतिमभिप्रेत्याह–**इदानीमिति** । कारणत्वनिरूपणानन्तरमित्यर्थः ।

**कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धमित्यर्थः। यथा घटं प्रति दण्डत्वमिति। द्वितीयमन्यथासिद्धमाह–कारणमिति। यस्य स्वात-**

---

अन्यथासिद्धत्वम्=अन्यथासिद्धिः, कियतां=कतिविधानां पदार्थानाम्. किं कार्यं प्रति ज्ञातव्यमिति शिष्यजिज्ञासायाम्, आह=पञ्चविधेत्याहेत्यर्थः॥ येन सह पूर्वभाव' इति मूलस्यार्थमाह–**यत्कार्यं प्रतीति**। घटादिकार्यं प्रति, कारणस्य दण्डादेः पूर्ववृत्तिता, येन=दण्डत्वादिना, रूपेण=धर्मेण, गृह्यते=ज्ञायते, तत्कार्यं घटं प्रति, तद्रूपं=दण्डत्वम्, अन्यथासिद्धमित्यर्थः॥ 'यत्कार्यं प्रती'त्यस्य यद्धर्मावच्छिन्नं प्रतीत्यर्थः। 'कारणस्ये'ति स्वरूपकीर्तनम्। 'पूर्ववृत्तिता येन रूपेणे'त्यस्य–'यद्धर्मावच्छिन्ना पूर्ववृत्तिता,–पूर्ववृत्तितावच्छेदको यो धर्म इति यावत्। तथा च 'तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तितावच्छेदकत्वं तद्धर्मावच्छिन्ननिरूपिताऽन्यथासिद्धत्वमिति फलितार्थः। घटत्वावच्छिन्ननिरूपितनियतपूर्ववृत्तितावच्छेदकत्वं दण्डत्वगतं तद्व्यक्तित्वं घटत्वावच्छिन्ननिरूपिताऽन्यथासिद्धत्वमिति॥ ननु कपालसंयोगस्य घटं प्रति कारणत्वात् कपालसंयोगस्य च समवेतत्वसम्बन्धेन कपालविशिष्टत्वाद्घटत्वावच्छिन्ननिरूपितनियतपूर्ववृत्तितावच्छेदकत्वस्य कपालत्वस्य घटत्वावच्छिन्ननिरूपिताऽन्यथासिद्धत्वं स्यात् तेन कपालमन्यथासिद्धं स्यादिति चेन्न। साक्षात्सम्बन्धघटितान्वयव्यतिरेकशून्यत्वेनापि विशेषणीयत्वात्। कपालस्य च तादात्म्येनैवाऽन्वयव्यतिरेकग्रहात् 'तादात्म्येन कपालसत्त्वे समवायेन घटसत्त्वं तादात्म्येन कपालभिन्ने समवायेन घटाभाव'इति साक्षात्सम्बन्धेनाऽन्वयव्यतिरेकशून्यत्वाभावेन कपालस्य घटं प्रति अन्यथासिद्धत्वापत्त्यभावात्। तथा च तद्धर्मावच्छिन्ननियतपूर्ववृत्तितावच्छेदकत्वे सति तद्धर्मावच्छिन्ननिरूपित-साक्षात्सम्बन्धघटिताऽन्वयव्यतिरेकशून्यत्वं-तद्धर्मावच्छिन्ननिरूपिताऽन्यथासिद्धत्वमिति फलितार्थः। **अन्ये** तु–तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकत्वे सति तद्धर्मावच्छिन्नंप्रति स्वतन्त्राऽन्वयव्यतिरेकशून्यत्वं तद्धर्मावच्छिन्नं प्रत्यन्यथासिद्धत्वम्, घटत्वावच्छिन्ननिरूपितनियतपूर्ववृत्तित्वप्रकारको यो 'घटपूर्ववृत्तितावान्दण्ड'इति ग्रहस्तद्विशेष्यतावच्छेदकत्वे(दण्डत्वे)सति घटत्वावच्छिन्नं प्रति स्वतन्त्रान्वयव्यतिरेकशून्यत्वं(दण्डत्वे) इतिघटत्वावच्छिन्नं प्रति दण्डत्वमन्यथासिद्धमिति। द्वितीयाऽन्यथासिद्धदण्डरूपादिवारणाय–सत्यन्तम्। दण्डरूपस्य तादृशग्रहविशेष्यत्वेन तद्विशेष्यतावच्छेदकत्वाऽभावात्। 'कपालसंयोगो घटपूर्ववृत्ति'रिति ग्रहे कपालसंयोगनिष्ठविशेष्यतावच्छेदककपालस्य वारणाय–विशेष्यम्। 'अनुगमस्तु'–'स्वविशिष्टं स्वावच्छिन्नं प्रत्यन्यथासिद्धम्, वैशिष्ट्यं च स्वावच्छिन्ननिरूपितनियतपूर्ववृत्तित्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकत्व स्वावच्छिन्ननिरूपितस्वतन्त्रान्वयव्यतिरेकशून्यत्वोभयसम्बन्धेन। स्वं=कार्यतावच्छेदकीभूतो धर्मो घटत्वादिः। **'कारणमादाय वा यस्ये'**ति द्वितीयामन्यथासिद्धिं व्याख्याति–**यस्य स्वातन्त्र्येणे**ति। यस्य=दण्डरूपस्य, स्वातन्त्र्येण=कारणाऽघटितधर्मेण रूपत्वेन, अन्वयव्यतिरेकौ='रूपसत्त्वे घटसत्त्वं—रूपाभावे घटाभाव'इत्याकारकौ, न स्तः घटकारणभिन्ने पाषाणादावपि रूपसत्त्वात् तत्र च घटाभावात् व्यभिचारात्, किन्तु कारणमादायैव=दण्डात्मककारणघटितधर्मेण दण्डरूपत्वेनैव, अन्वयव्यतिरेकौ='दण्डरूपसत्त्वे घटसत्त्वं—दण्डरूपाभावे घटाभाव' इत्याकारकौ, गृह्येते=ज्ञायेते, अतस्तत्=दण्डरूपम्, अन्यथासिद्धम्=द्वितीयान्यथासिद्धिमदित्यर्थः। "तद्धर्मावच्छिन्ननिरूपित साक्षात्सम्बन्धावच्छिन्नान्वयव्यतिरेकशालिघटितधर्मावच्छिन्नतत्कार्यनिरूपितनियतपूर्ववृत्तिताश्रयत्वं तत्कार्यनिरूपिताऽन्यथासिद्धत्वमिति" फलितार्थः। घटत्वावच्छिन्ननिरूपितसाक्षात्संयोगसम्बन्धावच्छिन्नौ यौ 'संयोगेन चक्रे दण्डसत्त्वे घटसत्त्वं दण्डाभावे घटाभाव'इत्यन्वयव्यतिरेकौ, तच्छालिदण्डघटितधर्मो दण्डरूपत्वात्मकस्तदवच्छिन्ना या घटात्मककार्यनिरूपिता नियत-

न्त्र्येणान्वयव्यतिरेकौ न स्तः, किं तु कारणमादायैवान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम्, यथा दण्डरूपम्। तृतीयमाह–अन्यं प्रतीति । अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम्।

पूर्ववृत्तिता दण्डरूपनिष्ठा तदाश्रयत्वं दण्डरूपत्वं द्वितीयान्यथासिद्धिरिति समन्वयः। ननु घटत्वावच्छिन्ननिरूपितसाक्षात्समवायसम्बन्धावच्छिन्नौ यौ 'समवायेन कपाले कपालसंयोगसत्त्वे घटसत्त्वं कपालसंयोगाभावे घटाभाव'इत्यन्वयव्यतिरेकौ, तच्छालिकपालघटितकपालसंयोगत्वावच्छिन्ना कपालावच्छिन्ना च या घटात्मककार्यनिरूपिता नियतपूर्ववृत्तिता कपालसंयोगनिष्ठा तदाश्रयत्वस्य कपालसंयोगे इव कपालेऽपि सत्त्वात् कपालेऽतिव्याप्तिः, तद्वारणाय–'स्वतन्त्रान्वयव्यतिरेकशून्यत्वे सती'ति निवेशनीयम्, कपालस्य च स्वतन्त्रान्वयव्यतिरेकशून्यत्वाऽभावान्नातिव्याप्तिः। दण्डत्वनिष्ठा घटपूर्ववृत्तिता न दण्डघटितदण्डत्वत्वावच्छिन्ना, अपि तु तद्व्यक्तित्वावच्छिन्नेति न प्रथमान्यथासिद्धे दण्डत्वेऽतिव्याप्तिः। अन्ये तु–'स्वातन्त्र्येण यत्कार्यनिरूपिताऽन्वयव्यतिरेकशून्यत्वे सति तत्कार्यकारणावच्छिन्नस्वनिष्ठ-तत्कार्यनिरूपितनियतपूर्ववृत्तित्वग्रहविशेष्यताश्रयस्तत्कार्यं प्रत्यन्यथासिद्ध इति। रूपस्य घटादिनिरूपितान्वयव्यतिरेकशून्यत्वात् घटकारणदण्डावच्छिन्नरूपनिष्ठा या घटनिरूपितनियतपूर्ववृत्तित्वग्रहीयविशेष्यता तदाश्रयत्वं दण्डरूपत्वमिति दण्डरूपमन्यथासिद्धम्। 'अनुगमस्तु–स्वविशिष्टं स्वं प्रत्यन्यथासिद्धम्"- वैशिष्ट्यं च–स्वनिरूपितस्वतन्त्रान्वयव्यतिरेकशून्यत्व–स्वविशिष्टविशेष्यताश्रयत्वोभयसम्बन्धेन । विशेष्यतायां स्ववैशिष्ट्यं–स्वकारणावच्छिन्नत्वस्वनिरूपितनियतपूर्ववृत्तित्वनिष्ठप्रकारतानिरूपितत्वोभयसम्बन्धेन। स्वं=कार्यमिति ॥ 'अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम्' इति तृतीयामन्यथासिद्धिं व्याख्याति–**अन्यं प्रति पूर्ववृत्तित्वमिति**। अन्यं प्रति=प्रकृतघटादिकार्यभिन्नं शब्दं प्रति, पूर्ववृत्तित्वं=पूर्वभावम्, गृहीत्वैव=ज्ञात्वैव, यस्य=गगनस्य यत्कार्यं प्रति=घटादिकार्यं प्रति, पूर्ववृत्तित्वं गृह्यते, तस्य=गगनस्य, तत्कार्यं घटादिकं प्रति, अन्यथासिद्धत्वमित्यर्थः। 'अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैवे'त्येवकारघटितवाक्यात् 'अन्यपूर्ववृत्तित्वज्ञान-प्रकृतकार्यपूर्ववृत्तित्वज्ञानयोरन्वयव्यतिरेकलाभेन अन्यपूर्ववृत्तित्वज्ञाने प्रकृतपूर्ववृत्तित्वज्ञानकारणता लब्धा, सा च विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वाद् अन्यपूर्ववृत्तित्वस्य प्रकृतकार्यपूर्ववृत्तितावच्छेदकतामन्तरेण न सम्भवति, अवच्छेदकता च–'आकाशत्वं नाम शब्दसमवायिकारणत्वम्, तच्च–समवायावच्छिन्नशब्दं प्रति अन्यथासिद्धिशून्यत्वे सति तादात्म्यावच्छिन्ननियतत्वे सति पूर्ववृत्तित्वात्मकम्, तथा च 'शब्दसमवायिकारणं घटपूर्ववृत्तितावदि'ति ज्ञाने शब्दसमवायिकारणतात्मकनिरुक्तपूर्ववृत्तितानिष्ठा सिद्ध्यति, अतः–"तद्धर्मान्यधर्मावच्छिन्नतद्धर्मावच्छिन्नाननुगुणनिरूपितपूर्ववृत्तित्वघटितधर्मावच्छिन्न-तद्धर्मावच्छिन्ननिरूपितपूर्ववृत्तिताश्रयत्वं तद्धर्मावच्छिन्ननिरूपिताऽन्यथासिद्धत्वमि'ति 'अन्यं प्रती'त्यादितृतीयान्यथासिद्धेः फलितार्थः। घटत्वात्मकतद्धर्मान्यो यः शब्दत्वधर्मस्तदवच्छिन्नः अथ च घटत्वात्मकतद्धर्मावच्छिन्नं प्रति अननुगुणः=अजनकश्च यः शब्दस्तन्निरूपितपूर्ववृत्तिताघटितः शब्दसमवायिकारणत्वधर्मः तदवच्छिन्ना या घटत्वावच्छिन्ननिरूपिता पूर्ववृत्तिता गगननिष्ठा तदाश्रयत्वं घटत्वावच्छिन्ननिरूपिताऽन्यथासिद्धत्वमिति। अत्र तद्धर्मावच्छिन्नाऽननुगुणत्वा'ऽनिवेशे 'घटत्वान्यकुलालत्वधर्मावच्छिन्ननिरूपितपूर्ववृत्तित्वघटितधर्मः 'कुलालपूर्ववृत्तिस्तत्पिता घटपूर्ववृत्ति'रिति ज्ञाने कुलालपूर्ववृत्ति तत्पितृत्वधर्मस्तदवच्छिन्ना या घटत्वावच्छिन्ननिरूपितपूर्ववृत्तिता तत्पितृनिष्ठा तदाश्रयत्वं कुलालस्य पितरि, इति चतुर्थान्यथासिद्धिलक्षणलक्ष्ये कुलालस्य पितरि अतिव्याप्तिः स्यात्, तद्धर्मावच्छिन्नाननुगुणत्वनिवेशे तु कुलालस्य

यथा घटादिकं प्रत्याकाशस्य । तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात् । आकाशत्वं हि शब्दसमवायिकारणत्वम् । एवं च तस्य शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम् । ननु शब्दाश्रयत्वेन तस्य कारणत्वे काऽन्यथासिद्धिरिति चेत् ? पञ्चमीति गृहाण । नन्वाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेदकमिति चेत् ? कवत्त्वादिकं विशेषपदार्थो वेति । चतुर्थमन्यथासिद्धमाह-जनकं प्रतीति । यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य

---

घटत्वावच्छिन्नानुगुण(कारण)त्वान्नातिव्याप्तिरिति । अपरे तु-'किञ्चिन्निरूपितनियतपूर्ववृत्तित्वग्रहाधीनप्रकृतकार्यनिरूपितपूर्ववृत्तित्वग्रहविशेष्यत्व'मिति तृतीयचतुर्थलक्षणयोः संक्षिप्तार्थं इति वदन्ति । तृतीयान्यथासिद्धेरुदाहरणं दर्शयति-**यथा घटादिकं प्रतीति** । तस्य-आकाशस्य हि, घटादिकं प्रति कारणता आकाशत्वेन धर्मेण स्यात् कारणतायाः किञ्चिद्धर्मावच्छिन्नत्वनियमात् , आकाशत्वस्यैकव्यक्तिवृत्तित्वेन जातित्वाभावाद् आकाशत्वं किञ्चिनिर्वाच्यम् ,-तच्च 'शब्दसमवायिकारणत्वम्, एतन्निरुक्त्या, तस्य=आकाशस्य, शब्दं प्रति जनकत्वं=कारणत्वम् , गृहीत्वैव = ज्ञात्वैव, घटं प्रति जनकत्वं ग्राह्यं भवति, अत आकाशम् अन्यथासिद्धम् 'ननु-आकाशत्वस्य 'शब्दसमवायिकारणत्व'-निरुक्तिस्वीकारे एव प्रथमं शब्दं प्रति पूर्ववृत्तित्वग्रहो भवत्याकाशस्य, 'यदि तु-'आकाशत्वं-शब्दाश्रयत्व'मिति निरुक्तिस्तदा शब्दं प्रति कारणताग्रहाऽभावाद् 'अन्यं प्रति पूर्ववृत्तित्वग्रहाऽभावादेव तृतीयाऽन्यथासिद्धिलक्षणं तत्र न गच्छेत्, तदा आकाशे का अन्यथासिद्धिः ? इत्याशङ्कते-**ननु शब्दाश्रयत्वेन तस्य कारणत्वे** इति । शब्दाश्रयत्वेन = शब्दाश्रयत्वात्मकधर्मावच्छिन्नतया, तस्य=आकाशस्य, कारणत्वे = कारणताग्रहे इत्यर्थः । आकाशनिष्ठकारणतायाः समवायेन शब्दावच्छिन्नतया गृह्यमाणे 'आकाशत्वं-शब्दाश्रयत्व'मिति निरुक्त्या कारणत्वग्रहाऽसम्भवात् पूर्व अन्यं=शब्दं प्रति समवायिकारणतात्मकपूर्ववृत्तित्वग्रहाऽभावात् तृतीयान्यथासिद्धेरव्याप्तिराकाशे, अतः का ?=कियती, अन्यथासिद्धिस्तत्रेति भावः । उत्तरयति-**पञ्चमीति-गृहाणेति** । अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्नमन्यथासिद्धमि'ति पञ्चमी सर्वसाधारणी अन्यथासिद्धिरिति गृहाण=जानीहि । आकाशस्य पञ्चम्यन्यथासिद्धिलक्ष्यत्वं बोध्यमिति भावः । कारणताप्रसङ्गेन शब्दं प्रत्याकाशनिष्ठकारणताया अवच्छेदकनिर्णयाय शङ्कते-**नन्वाकाशस्येति** । अत्रेयमभिसन्धिः-आकाशनिष्ठायाः शब्दसमवायिकारणताया अवच्छेदकं यदि आकाशत्वं, तदा आकाशत्वं नाम शब्दसमवायिकारणत्वमित्युक्तम् , तथा च शब्दसमवायिकारणताया अवच्छेदकमपि आकाशत्वात्मक-शब्दसमवायिकारणत्वमिति स्वस्य स्वावच्छेदकत्वापत्तिः, अतः **आकाशस्य शब्दं प्रति जनकत्वे**=समवायिकारणत्वे समवायिकारणताया **अवच्छेदकं** आकाशत्वातिरिक्तं किमपि वक्तव्यम् , तच्च किम् ? इत्याशङ्कार्थः । उत्तरयति-**कवत्त्वादिकमिति** । कः = ककारो विद्यते समवायेन अस्मिन्निति 'कवत्',-तद्भावः कवत्त्वम्, आदिना 'खवत्त्वा'दिपरिग्रहः, कवत्त्वादिकमेव-अवच्छेदकं जानीहीति भावः । ननु कवत्त्वं क एव, खवत्त्वं ख एवेति,-बहूनां वर्णानां विनिगमकाऽभावेन कारणतावच्छेदकत्वे गौरवमित्यत आह-**विशेषपदार्थो वेति**। आकाशे नित्यैकविभौ एक एव विशेषपदार्थो वर्तते, स च समवायेन अवच्छेदकः, एतदर्थमेवाकाशे विशेषपदार्थः स्वीक्रियते इति बोध्यम् । 'जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते'-इति चतुर्थान्यथासिद्धिं व्याख्याति-**यत्कार्यजनकं प्रतीति** । यस्य = कुलालपितुः, यत्कार्यजनकं प्रति= घटात्मककार्यस्य कारणं कुलालं प्रति, पूर्ववृत्तितां=पूर्वभावम् , गृहीत्वैव = ज्ञात्वैव, यत्कार्यं प्रति =

**यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा कुलालपितुर्घटं प्रति । तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वे एवान्यथासिद्धिः । कुलालत्वेन जनकत्वे त्विष्टापत्तिः, कुलालमात्रस्य घटं प्रति जनकत्वात् । पञ्चममन्यथासिद्धमाह—अतिरिक्तमिति । अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धमित्यर्थः । अत एव प्रत्यक्षे महत्त्वं कारणम् अनेकद्रव्यत्वमन्यथासिद्धम् ।**

---

घटात्मककार्यं प्रति, पूर्ववृत्तित्वं = पूर्वभावः, गृह्यते, तस्य = कुलालपितुः, तत्कार्यं = घटं प्रति, अन्यथासिद्धत्वमित्यर्थः । अत्रापि—"तद्धर्मान्यधर्मावच्छिन्नतद्धर्मावच्छिन्नानुगुणनिरूपितपूर्ववृत्तित्वघटितधर्मावच्छिन्नतद्धर्मावच्छिन्ननिरूपितपूर्ववृत्तिताश्रयत्वं तद्धर्मावच्छिन्ननिरूपितान्यथासिद्धत्व"मिति 'यत्कार्यजनकं प्रती'त्यादिचतुर्थान्यथासिद्धेः फलितार्थः । घटत्वात्मकतद्धर्मान्यो यः कुलालत्वधर्मस्तदवच्छिन्नः अथ च घटत्वात्मकतद्धर्मावच्छिन्नं प्रति अनुगुणो जनको यः कुलालस्तन्निरूपितपूर्ववृत्तिताघटितः कुलालपूर्ववृत्ति—तत्पितृत्वधर्मः, तदवच्छिन्ना या घटत्वावच्छिन्ननिरूपिता पूर्ववृत्तिता कुलालपितृनिष्ठा, तदाश्रयत्वं घटत्वावच्छिन्ननिरूपिताऽन्यथासिद्धत्वमिति समन्वयः । तृतीयलक्षणे 'तद्धर्मावच्छिन्नाऽननुगुणत्व'निवेशात् , अत्र च लक्षणे 'तद्धर्मावच्छिन्नानुगुणत्व'निवेशात् तयोर्भेदः ! उदाहरति—**यथा कुलालपितुर्घटं प्रती**ति । कुलालपितृत्वेन रूपेण कुलालपितुः घटं प्रत्यन्यथासिद्धत्वमित्यर्थः । तस्य=कुलालपितुः कुलालपितृत्वेन धर्मेण घटात्मककार्यं प्रति, जनकत्वे=कारणताग्रहे, अन्यथासिद्धिश्चतुर्थी । कुलालत्वेन रूपेण = धर्मेण तु कुलालपितुः, जनकत्वे = घटं प्रति कारणत्वग्रहेत्विष्टापत्तिः । तत्र हेतुमाह—**कुलालमात्रस्ये**ति । कुलालत्वावच्छिन्नस्येत्यर्थः, घटजनकत्वं कुलालत्वम् , कुलालपित्रा यदि घट उत्पादितस्तर्हि तं प्रति तस्य कुलालत्वाद् घटजनकत्वमिष्टमेव यश्च घटस्तत्पुत्रेणोत्पादितस्तं प्रति तस्य कुलालत्वाऽभावाद् अन्यथासिद्धत्वमिति भावः ॥ "अतिरिक्तमथाऽपि यद्भवेन्नियताऽऽवश्यकपूर्वभाविन'इति पञ्चमान्यथासिद्धिं व्याख्याति—**अवश्यक्लृप्ते**ति । 'अवश्यक्लृप्तनियतपूर्ववर्तिदण्डादिभ्यो घटात्मककार्यसंभवे सति, तद्भिन्नं=दण्डादिभिन्नं रासभशकटादिकमन्यथासिद्धमिति । 'अवश्यक्लृप्ते'त्यस्य—लघुधर्मावच्छिन्नेत्यर्थः । नियतपूर्ववृत्ती'त्यस्य प्रकृतकार्यनिरूपितनियतपूर्ववृत्तीत्यर्थः । तथा च 'प्रकृतकार्यनिरूपितलघुधर्मावच्छिन्ननियतपूर्ववृत्तित्वविच्छिन्नत्वं प्रकृतकार्यनिरूपिताऽन्यथासिद्धत्वमिति लक्षणार्थः फलितः । लघुत्वं—शरीरकृतम् , उपस्थितिकृतम् , सम्बन्धकृतञ्च , तत्र शरीरकृतं दर्शयति—**अत एव प्रत्यक्षे महत्त्वमिति** । 'अत एवे'त्यस्य 'तर्कसंग्रहदीपिका'प्रभृतिग्रन्थान्तरेषु यद् 'अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतमन्यथासिद्ध'मिति लक्षणं तत् परित्यज्य 'अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धमिति लक्षणकरणादेवेत्यर्थः । 'अन्यत्र क्लृप्ते'त्यादिलक्षणस्वीकारे तु अनेकद्रव्यत्वादन्यत्र महत्त्वस्य प्रत्यक्षं प्रति क्लृप्तनियतपूर्ववृत्तित्वाऽभावेन तस्य महत्त्वेन अन्यथासिद्धत्वं न स्यात्, भवति च तस्यैव द्रव्यस्य प्रत्यक्षं, यत्र अनेकद्रव्यत्वं महत्त्वं च, यथा घटस्य **प्रत्यक्षे महत्त्वं**=महत्परिमाणं, **कारणं**=समवायेन कारणम् ॥ **अनेकद्रव्यत्वमि**ति । अत्राऽनेकद्रव्यत्वं न अनेकद्रव्यसमवेतत्वरूपम् परमाणुद्वयात्मकाऽनेकद्रव्यसमवेतद्व्यणुकस्य प्रत्यक्षापत्तेः । नाऽप्यणुभिन्नद्रव्यत्वं, अणुद्रव्यभेदविशिष्टद्रव्यत्वं द्रव्यत्वविशिष्टाणुद्रव्यभिन्नत्वं वेति विनिगमनाविरहात् कार्यकारणभावद्वयापत्तेः' द्रव्यत्वाणुत्वाभेदयोरेकसम्बन्धेन वृत्तित्वाऽप्रसिद्ध्या उभयत्वावच्छिन्नस्य स्वरूपाऽसंभवाच्च । किन्तु—महत्त्वद्रव्यत्वोभयत्वावच्छिन्नात्मकम् । तथा च त्रसरेणु-चतुरणुक-कङ्कर-पिण्ड-कपाल-घटादिनिष्ठं विषयतासम्बन्धेन प्रत्यक्षं प्रति महत्त्वद्रव्यत्वोभयत्वात्मकगुरुधर्मावच्छिन्नस्य समवायेन

**तत्र हि महत्त्वमवश्यकॢप्तं तेनानेकद्रव्यत्वमन्यथासिद्धम्। नच वैपरीत्ये किं विनिगमकमिति वाच्यम्, महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात्॥ १९॥ २०॥**
**रासभादिरिति। यद्यपि यत्किंचिद्घटव्यक्तिं प्रति रासभस्य नियतपूर्ववर्तित्वमस्ति, तथापि घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि संभवे रासभोऽन्यथासिद्ध इति भावः। एतेष्विति। एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्ध आवश्यकः, तेनैव परेषां चरितार्थत्वात्। तथाहि–दण्डादिभिरवश्यकॢप्तनिय-**

---

कारणत्वापेक्षया लघुधर्ममहत्त्वत्वावच्छिन्नस्यैव समवायेन कारणत्वं बोध्यम्। महत्त्वद्रव्यत्वोभयत्वात्मकमनेकद्रव्यत्वत्वं तु गुरुधर्मस्तदवच्छिन्नमनेकद्रव्यत्वमन्यथासिद्धमिति। **तत्र हि**=तादृशघटादिप्रत्यक्षस्थले हि, महत्त्वम् **अवश्यकॢप्तम्**–महत्त्व-द्रव्यत्वोभयत्वाऽपेक्षया महत्त्वत्वं शरीरकृतं लघु भवति। तेन=लघुधर्मावच्छिन्नत्वेन महत्त्वं कारणम्, अनेकद्रव्यत्वम् महत्त्वद्रव्यत्वोभयत्वात्मकगुरुधर्मावच्छिन्नतयाऽन्यथासिद्धमित्यर्थः। **अन्ये** तु–अनेकद्रव्यत्वं नाम–सावयवाऽवयवकद्रव्यत्वमिति वदन्ति। **अपरे** तु–अनेकद्रव्यत्वं नाम-अणुपरिमाणवद्द्रव्यभिन्नद्रव्यत्वोमिति वदन्ति॥ शङ्कते–**न च वैपरीत्येति**। 'न च' 'वाच्य'मिति परेणान्वयः। महत्त्वम् अन्यथासिद्धमस्तु अनेकद्रव्यत्वं च कारणमस्तु'–इत्येवं वैपरीत्ये इत्यर्थः। किं विनिगमकम्?=किं नियामकम्?=महत्त्वमेव कारणं न त्वनेकद्रव्यत्वमित्यत्र का नियामिका युक्तिरिति भावः॥ उत्तरयति–**महत्त्वत्वजातेरिति**। अनेकद्रव्यत्वत्वात्मकगुरुधर्मस्य कारणतावच्छेदकत्वाऽपेक्षया महत्त्वत्वात्मकलघुधर्मस्य महत्परिमाणनिष्ठस्य कारणतावच्छेदकत्वे शरीरकृतलाघवात् तादृशलाघवमेव गमकमिति भावः॥ **उपस्थितिकृतं** लाघवं–'गन्धं प्रति रूपप्रागभावाऽपेक्षया गन्धप्रागभावे कारणतास्वीकारे,। तत्र पाकजस्थले घटादावुत्पत्स्यमान-गन्धरूपयोः प्रागभावौ गन्धरूपयोः परस्परं पूर्ववर्तिनावेव, तत्र गन्धं प्रति कारणताग्रहे गन्धप्रागभावस्य गन्धात्मक–प्रतियोगिज्ञानस्य सत्त्वेन प्रतियोगितासम्बन्धेन प्रथमोपस्थितत्वाद् गन्धप्रागभावस्य कारणत्वम्, रूपप्रागभावस्य त्वन्यथासिद्धत्वम्॥ **सम्बन्धकृतं लाघवं तु**–घटं प्रति दण्डत्व दण्डरूपाद्यपेक्षया दण्डे, तत्र दण्डत्वस्य दण्डरूपस्य वा कारणत्वे समवायेन यत्र कपाले घटस्तत्र कपाले दण्डत्वादीनां वृत्तित्वे स्वाश्रय–दण्डजन्य(चक्र)भ्रमिजन्यभ्रमिवत्त्वसम्बन्धाऽपेक्षया स्वजन्यभ्रमिजन्यभ्रमिवत्त्वसम्बन्धस्य लाघवात् 'स्व'–पदार्थग्राह्यो दण्ड एव घटं प्रति कारणम्, न तु गुरुसम्बन्धघटक'स्व'पदग्राह्यदण्डत्वादिकमिति। तथा च पञ्चमलक्षणोक्तो लघुधर्मः क्वचिन्महत्त्वत्वरूपः, क्वचिद् उपस्थित्यात्मकः, क्वचित् सम्बन्धात्मक इति हृदयम्। 'पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ'–इति मूलस्य भावार्थमाह–**यद्यपि यत्किञ्चिद्घटव्यक्तिं प्रति रासभस्येति**। यद्रासभद्वारा मृत्तिकामाहृत्य घटः कृतस्तद्घटं प्रति तद्रासभस्येत्यर्थः। **नियतपूर्ववृत्तित्वं**=कारणत्वं वर्तते तथापि घटजातीयं प्रति=घटत्वावच्छिन्नं प्रति, सिद्धकारणभावैः=कॢप्तकारणताकैः दण्डचक्रकुलालादिभिरेव, तद्व्यक्तेरपि=रासभकारणको यो घटस्तद्घटव्यक्तेरपि, संभवे=रासभं विनाऽप्युत्पत्तेः शक्यसंभवे, घटजातीयं प्रति रासभोऽन्यथासिद्धइत्यर्थः। एतेषु पञ्चसु=दण्डत्व-दण्डरूप-गगन-कुलालपितृ-रासभेषु-अन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्धः=रासभः आवश्यकः=मुख्यः, पञ्चाऽन्यथासिद्धिषु मध्ये पञ्चमी अन्यथासिद्धिमुख्येति फलितार्थः। **तेनैव** पञ्चमान्यथासिद्धिलक्षणेनैव, परेषां=दण्डत्वादिचतुर्णां लक्ष्याणाम्। चरितार्थत्वात्=संग्रहात्। तदेव दर्शयति–**तथाहीति**। दण्डादिभिः=दण्ड-चक्र-कुलाल-कपालादिभिरेव, अवश्यकॢप्तनियतपूर्ववर्तिभिरेव=लघुधर्मावच्छिन्नकारणताकैरेव, कार्यसम्भवे=घटात्मक-

तत्पूर्ववर्तिभिरेव कार्यसंभवे दण्डत्वादिकमन्यथासिद्धम्। न च वैपरीत्ये किं विनिगमकमिति वाच्यम्, दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः सम्बन्धत्वकल्पने गौरवात्। एवमन्येषामप्यनेनैव चरितार्थत्वं संभवतीति बोध्यम्॥ २१॥ २२॥

समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम्।
गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम्॥२३॥

---

कार्यसंभवे, दण्डत्वादिकं=दण्डत्व दण्डरूप-गगन कुलालपितृ रासभादिकम् अन्यथासिद्धमिति। शंकते—न चेति। 'वाच्य'मिति परेणान्वयः। वैपरीत्ये='दण्डोऽन्यथासिद्धोऽस्तु दण्डत्वं दण्डरूपं च कारणमस्तु' एवं—'कपालमन्यथासिद्धमस्तु गगनं च घटकारणमस्तु' एवं—कुलालोऽन्यथासिद्धोऽस्तु कुलालपिता तु घटकारणमस्तु' एवम्—अवश्यक्लृप्तचक्रादयोऽन्यथासिद्धा भवन्तु रासभश्च कारणमस्तु'—इत्येवं वैपरीत्ये इत्यर्थः। किं विनिगमकम्=तादृशवैपरीत्ये दण्डादेरन्यथासिद्धत्वबाधिका दण्डत्वादेः कारणताबाधिका वा का युक्तिर्भवतो विद्यते इत्यर्थः। उत्तरयति—दण्डत्वस्य कारणत्वे इति। दण्डत्वादीनां कारणत्वे गौरवमेव बाधकम्, दण्डादीनां कारणत्वे तु लाघवमेव प्रयोजकमिति भावः। तदेवाह—दण्डघटितपरम्परायाः सम्बधकत्वकल्पने गौरवादिति। तथाहि—दण्डघटितपरम्परायाः = स्वा(दण्डत्व-दण्डरूपान्यतरा)श्रय(दण्ड)जन्यभ्रमि(चक्रभ्रमि)जन्यभ्रमिवत्तासम्बन्धापेक्षया स्व(दण्ड)जन्यभ्रमिजन्यभ्रमिवत्तासम्बन्धस्य लाघवात् सम्बन्धगतशरीरकृतलाघवस्यैव दण्डे कारणतानियामकत्वम्। एवम्—समवायेन घटाधिकरणे कपाले कपालस्य तादात्म्येन द्रागेवोपस्थितत्वात् आकाशस्य चाऽवृत्तिपदार्थस्य केनाऽपि सम्बन्धेन वृत्तितयाऽनुपस्थितत्वात् कपालनिष्ठकारणताग्रहे उपस्थितिकृतं लाघवं प्रयोजकम्। एवं—'कुलालत्वं नाम घटजनकत्वमि'ति व्युत्पत्त्या कुलालस्य प्रथमोपस्थितत्वात्, किञ्च—घटाधिकरणे चक्रादौ कुलालस्य स्वधृतदण्डजन्यभ्रमणवत्त्वादिसम्बन्धेन वृत्तित्वापेक्षया कुलालपितुः स्वजन्यकुलालधृतदण्डजन्यभ्रमणवत्त्वादिसम्बन्धेन वृत्तित्वे सम्बन्धकृतगौरवात् कुलाले कारणताग्रहः कुलालपिता त्वन्यथासिद्ध इति। एवं घटजातीयं प्रति कारणताग्रहे' चक्रादीनां सर्वत्र प्रथमोपस्थितत्वात् सम्बन्धकृतलाघवाच्च कारणत्वं रासभस्य त्वन्यथासिद्धत्वमिति। एवम्—प्रत्यक्षं प्रति अनेकद्रव्यवत्त्वात्मकगुरुशरीरधर्मापेक्षया महत्त्वत्वात्मकलघुशरीरधर्मस्य कारणतावच्छेदकत्वे लाघवमित्यादिकमूह्यमिति भावः। एवमन्येषामपीति। एवं=यथा पञ्चमान्यथासिद्धिलक्षणेन रासभस्य संग्रहः तथा, अन्येषामपि=दण्डत्व-दण्डरूप गगन-कुलालपितृणामपि, अनेनैव=पञ्चमान्यथासिद्धिलक्षणेनैव, चरितार्थत्वं=संग्रहः संभवतीत्यर्थः। ननु तर्हि पञ्चमान्यथासिद्ध्यात्मकमेकमेव लक्षणं कार्यं किं तदन्यलक्षणैरिति चेन्न। शिष्यबुद्धिवैशद्याय तत्प्रयासात्। अन्ये तु—अन्यथासिद्धिस्त्रिविधा—'येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तेन तदन्यथासिद्धम्, यथा तन्तुना तन्तुरूपं तन्तुत्वं च पटं प्रति। 'अन्यं प्रति पूर्ववृत्तित्वे ज्ञाते एव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम्, यथा शब्दं प्रति पूर्ववृत्तित्वे ज्ञाते एव पटं प्रत्याकाशस्य। 'अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतमन्यथासिद्धम्, यथा पाकजस्थले रूपप्रागभावस्य, घटं प्रति रासभस्येति। नव्यास्तु—'लघुनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नम् अन्यथासिद्धमि'त्येकमेव लक्षणम्, अनेनैव निर्वाहे त्रिधा पञ्चधेति प्रपञ्चः शिष्यबुद्धिवैशद्यायेति मन्यन्ते॥२१॥२२॥

मूले—समवायिकारणत्वं द्रव्यस्यैवेति। द्रव्ये पृथिव्यादिनवान्यतमे एव समवायिकारणता

**समवायीति । स्पष्टम् । गुणकर्मेति । असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं न तु गुणकर्मणोः साधर्म्यमित्यत्र तात्पर्यम् । अथवा असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं तदर्थः, तेन ज्ञानादीनामसमवायिकारणत्वविरहेऽपि न क्षतिः ॥२३॥**

**अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।**
**क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता ॥२४॥**

---

स्वरूपसम्बन्धेन वर्तते न तु द्रव्यभिन्ने इति भावः । **अत्रेदं बोध्यम्**–'क्षित्यादीनां नवानां तु' (२४) इत्यग्रिमकारिकया क्षित्यादिनवद्रव्याणां 'द्रव्यत्वं–गुणयोगिता'चेति साधर्म्यं वक्ष्यति । अत्र च 'समवायिकारणत्व'मिति साधर्म्यमुच्येत, तदा 'एकस्य यत्र बहूनि लक्षणानि वाच्यतयाऽभिप्रेतानि तत्र तानि सर्वाण्येकत्रैवोच्यन्ते न त्वन्यत्रे'ति–ग्रन्थीयनियमात् तत्प्रयुक्तसन्दर्भविरोधापत्तिः स्यात्, अतः पूर्वं त्रिविधत्वेन दर्शितायाः कारणताया विषयव्यवस्थापनपर एव 'समवायिकारणत्वं द्रव्यस्यैवे'त्यादिश्लोको बोध्य इति, तथा च–द्रव्ये समवायिकारणता वर्तते, गुणकर्मणोः–असमवायिकारणता वर्तते, एतादृशे नियमे कृते निमित्तकारणताया आश्रयनियमाऽदर्शनाद् अर्थतो लभ्यते यत्–निमित्तकारणता सर्वत्र पदार्थेषु वर्तते, इति व्यवस्था बोध्येति ॥ **अन्येतु**–साधर्म्यपरोऽयं श्लोकः, क्षित्यादिनवद्रव्याणां समवायिकारणत्वं=समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं साधर्म्यमित्यर्थः । न च महाप्रलये जन्यभावमात्राऽनधिकरणे नित्ये परमाण्वादौ कार्याभावात समवायिकारणत्वमव्याप्तमिति वाच्यम् , खण्डकालीन–समवायिकारत्ववद्वृत्ति–द्रव्यविभाजकोपाधिमत्त्वस्य विवक्षणात्॥ **गुणकर्ममात्रवृत्ति ज्ञेयमथाऽप्यसमवायिहेतुत्वमिति** । असमवायिकारणत्वं गुणेषु कर्मसु चैव वर्तते न त्वन्यत्रेति व्यवस्थेति भावः ॥ **अन्ये** तु–गुणकर्मणोः असमवायिकारणत्वं साधर्म्यमिति **वदन्ति** । तथा च–समवायसम्बन्धावच्छिन्नकार्यतानिरूपित–समवाय–स्वसमवायिसमवेतत्वान्यतर–सम्बन्धावच्छिन्नकारणताश्रयत्वं गुणकर्मणोः साधर्म्यमिति फलितार्थः ॥ अस्य साधर्म्यस्य पारिमाण्डल्यादावात्मविशेषगुणादौ चाऽव्याप्तिमाशंक्य वैधर्म्यपरतया मूलं व्याकरोति **मुक्तावल्यां–गुणकर्मभिन्नानां वैधर्म्यमिति ।** गुणकर्मभिन्नानां=द्रव्य सामान्य- विशेष-समवायाऽऽभावानां वैधर्म्यमित्यर्थः॥ ननु सम्भवतोऽर्थस्य परित्यागाऽनौचित्याद् असमवायिकारणत्वं गुणकर्मणोः साधर्म्यमित्यत्र तात्पर्यमस्त्वित्यत आह–**न तु गुणकर्मणोःसाधर्म्यमित्यत्र तात्पर्यमिति** । किन्तु गुणकर्मभिन्नानां वैधर्म्ये तात्पर्यमिति भावः ॥ ननु संभवति साधर्म्यपरत्वे वैधर्म्यपरत्ववर्णनमनुचितं प्रकरणविरुद्धं चेत्यत आह–**अथवेति** । असमवायिकारणे=रूपादौ संयोगादौ च, अवयवक्रियादौ च,–वर्तमाना सत्ताभिन्ना च या जातिः–गुणत्वकर्मत्वरूपा तद्वत्त्वं सर्वत्रगुणे क्रियायां चेति समन्वयः । सत्ताभिन्नद्रव्यत्वजातिमति द्रव्येऽतिव्याप्तिवारणाय-असमवायिकारणवृत्तीति । सत्ताजातिमादाय द्रव्येऽतिव्याप्तिवारणाय–सत्ताभिन्नेति । द्रव्यगुणान्यतरत्वधर्ममादाय–द्रव्येऽतिव्याप्तिवारणाय–जातीति । असमवायिकारणे गुणादौ कालिकेन वृत्तिमद्द्रव्यत्वमादाय द्रव्येऽतिव्याप्तिवारणाय,–एवम्–असमवायिकारणे गुणादौ समवायेन वर्तमानाया गुणत्वादिजातेः कालिकेन अधिकरणं द्रव्यमादाय द्रव्येऽतिव्याप्तिवारणाय–च वृत्तित्वं जातिमत्त्वं च समवायेन बोध्यमिति । तथा च 'जाति'पदं वृत्तिमत्त्वयोः समवायेन लाभायैव, अतोऽन्यतरत्वस्याऽतथात्वेऽपि न जातिपदवैयर्थ्यमिति भावः ॥ २३ ॥

नित्यद्रव्यभिन्नानां सप्तपदार्थानां साधर्म्यमाह- **मूले–अन्यत्रेति** । इह=सप्तपदार्थमध्ये । **अन्ये**

**अन्यत्रेति । नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः। आश्रितत्वं तु समवायादिसम्बन्धेन वृत्तिमत्त्वम्, विशेषणतया नित्यानामपि कालादौ**

तु इह=न्यायसिद्धान्तेऽइत्यर्थः, तेन वेदान्तिनां नित्यज्ञानस्याप्यनाश्रितत्वांगीकारेऽपि न तत्रातिव्याप्तिरापादनीयेति बोधितम् ॥ नित्यद्रव्येभ्यः=पृथ्वीजलतेजःपवनानां परमाणुभ्य आकाशकालदिगात्ममनोभ्यश्च । अन्यत्र=अनित्यद्रव्येषु द्व्यणुकादिपृथ्वीजलतेजःपवनेषु गुणकर्मसामान्यविशेषसमवायाऽभावेषु च । आश्रितत्वं=कालिकसम्बन्धभिन्नसम्बन्धेन वृत्तित्वं साधर्म्यं बोध्यमित्यर्थः । नित्यद्रव्याणां तु कालिकसम्बन्धातिरिक्तसम्बन्धेन अवृत्तित्वं साधर्म्यं बोध्यम् । एवं पदार्थसाधर्म्यमुक्त्वेदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते-**क्षित्यादीनामिति** । क्षितिजलतेजःपवनगगनकालदिगात्ममनसां नवद्रव्याणां साधर्म्यन्तु द्रव्यत्वं=समवायेन द्रव्यत्वजातिमत्त्वम , गुणयोगिता=समवायेन गुणवत्त्वं चेत्यर्थः । **मुक्तावल्यां-नित्यद्रव्याणीति** । ध्वंसाऽप्रतियोगिद्रव्याणीत्यर्थः। परमाण्वाकाशादीनि=पृथ्वीजलतेजःपवनानां परमाणवः, आकाशकालदिगात्ममनांसि च विहाय=परित्यज्य । तथा च-'परमाण्वाकाशादीनि विहाये'त्यनेन अनित्यद्रव्यत्वं लक्ष्यतावच्छेदकं लभ्यते, तच्च-'अपकर्षानाश्रयत्वविशिष्टपरिमाणत्वावच्छिन्नसमवायावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वरूपम्, अपकर्षाश्रयं परिमाणं द्व्यणुकत्रसरेण्वादीनां, अपकर्षानाश्रयं परिमाणं परमाणुपरिमाणं गगनादिपरिमाणं चेति । अतो न अननुगमः । **आश्रितत्वं साधर्म्यमित्यर्थ** इति । कालिकसम्बन्धेन नित्यद्रव्याणामपि कालादौ वृत्तित्वात् 'नित्यद्रव्याणि विहायेति' कथनमयुक्तं स्यात् अत आह-**समवायादिसम्बन्धेनेति** । सर्वाधारताप्रयोजकसम्बन्धभिन्नसम्बन्धेन वृत्तित्वमित्यर्थः । सर्वाधारताप्रयोजकसम्बन्धः कालिकविशेषणताख्यः,-कालिकेन नित्यानां कालादौ वृत्तित्वात्, एवं सर्वाधारताप्रयोजकसम्बन्धः-दिग्विशेषणताख्योऽपि, नित्यानापि दिग्विशेषणतया महादिशि वर्तमानत्वात् तथा च सर्वाधारताप्रयोजकसम्बन्धभिन्नसम्बन्धेन वृत्तित्व'मि यस्य 'कालिकविशेषणतासम्बन्धावच्छिन्नत्व-दिग्विशेषणतासम्बन्धावच्छिन्नत्वैतदन्यतरत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टवृत्तित्व'मिति फलितार्थः । **केचित्तु**-अनित्यद्रव्याणि समवायेन संयोगेन वा द्रव्येषु वर्तन्ते, गुणकर्मसामान्यविशेषा अपि समवायेन वर्तन्ते, समवायोऽपि समवायात्मकस्वरूपसम्बन्धेन वर्तते, अभावोऽपि स्वरूपसम्बन्धेन वर्तते, तथा च समवायेन वृत्तित्वनिवेशेनैव द्रव्याणां निर्वाहसंभवे संयोगेन निवेशोऽनतिप्रयोजनकः, अतः-'समवायसम्बन्धावच्छिन्नवृत्तित्व-स्वरूपसम्बन्धावच्छिन्नवृत्तित्वैतदन्यतरवत्त्वमे'व साधर्म्यं बोध्यम् । तादात्म्यस्य वृत्तित्वाऽनियामकत्वात् तस्याऽप्रवेशादिति **वदन्ति** । वस्तुतस्त्विदं बोध्यम्-नानासमवायवादिमते एकसमवायवादिमते च समवायस्तु वृत्तिनियामक एव । पतनप्रतिबन्धकसंयोगो वृत्तिनियामकः, जन्यगुरुत्वस्य प्रकृष्टगुरुत्वस्य वा पतनकारणतया तदभावादेव परमाणोः पतनाऽसंभवेन परमाणुसंयोगस्य प्रतिबन्धकत्वे मानाऽभावात परमाणुसंयोगस्य वृत्त्यनियामकत्वम् गगनादौ च गुरुत्वाऽभावेनैव पतनाऽनुपपत्त्या गगनादिसंयोगस्य पतनप्रतिबन्धकत्वाभावाद् वृत्त्यनियामकत्वम्, अनित्यद्रव्याणां संयोगस्यैव वृत्तिनियामकत्वम् । 'यत्र समवायेन घटस्तत्र तादात्म्येन कपालमिति कार्यकारणभावानुरोधेन कार्यकारणभावस्थलीयतादात्म्यस्यापि वृत्तिनियामकत्वम् । दैशिकस्वरूपसम्बन्धेन महादिशि परमाण्वादीनां वर्तमानत्वाद् दैशिकस्वरूपोऽपि वृत्तिनियामकः । कालिकेन महाकाले परमाण्वादीनांवर्तमानत्वात् कालिकोऽपि वृत्तिनियामकः। तदन्ये कल्पिताः प्रतियोगितादयः स्वाश्रयजन्यत्वादयश्च परम्परासम्बन्धा वृत्त्यनियामकाः। अत्र च प्रकृते 'नित्यद्रव्याणि विहाय-समवायादिसम्बन्धेन वृत्तित्वं साधर्म्य'मिति कथनात्-नित्यद्रव्याणां

वृत्तेः। इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते-क्षित्यादीनामिति स्पष्टम्॥२४॥

क्षितिर्जलं तथा तेजः पवनो मन एव च।
परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥

क्षितिरिति। पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्तत्ववत्त्वं क्रियावत्त्वं वेगव-

---

वृत्तितानियामकदैशिककालिकसम्बन्धौ परित्यज्य तदन्यसम्बन्धेन समवायेन, वृत्तिनियामकसंयोगेन कार्यकारणभावस्थलीयतादात्म्येन, महादिग्वृत्तितानियामकस्वरूपभिन्नस्वरूपेण, वृत्तितामभिप्रेत्य ग्रन्थसंगमनमिति। **विशेषणतया**=कालिकस्वरूपसम्बन्धेन दैशिकस्वरूपसम्बन्धेन च। **नित्यानामपि**=परमाणूनामपि। **कालादौ**=महाकाले महादिशि च। **वृत्तेः**=वृत्तितावत्त्वादित्यर्थः। 'क्षित्यादीनां नवानां त्वि'ति मूलस्थाऽवधारणार्थक 'तु'शब्देन सूचितमर्थं प्रकटयति-**इदानीमिति**। तथा च द्रव्यातिरिक्तसाधारणसाधर्म्यप्रकरणव्यवच्छेदसूचनाय 'तु'शब्दः, पदार्थसाधर्म्यनिरूपणानन्तरमिति भावः। **द्रव्यस्यैव**=पृथिव्यादिद्रव्याणि विशेषेणोपादायैव। **वक्तुमारभते** इति। प्रथमतो द्रव्यसामान्यलक्षणस्यैवाऽभ्यर्हिततया 'विशिष्य साधर्म्यमाहे'त्यनुक्त्वा 'वक्तुमारभते'-इत्युक्तम्-तथा च द्रव्यत्वं गुणयोगिते'ति प्रत्येकं सामान्यलक्षणं दर्शितं बोध्यमिति। समवायेन द्रव्यत्वजातिमत्त्वं, समवायेन गुणवत्त्वं वा द्रव्यलक्षणमिति तदर्थः। **वस्तुतस्तु**=साधर्म्यमेवेदम्, तत्प्रकरणे लक्षणप्रदर्शनस्याऽनतिप्रयोजनकत्वात्, लक्षणस्यैव वा समानधर्मत्वात्। ननु समवायेन गुणवत्त्वस्य उत्पत्तिकालीनद्रव्येऽव्याप्तिरिति चेन्न, गुणवद्वृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वमि'ति तदर्थत्वात्। एतदभिप्रायेणैव '**स्पष्टमि**त्युक्तम्॥ २४॥

मूले-**क्षितिर्जलमिति**। पृथिवी-जल-तेजः-पवन-मनांसि,-अमी पञ्च, परत्वाश्रयाः, अपरत्वाश्रयाः, मूर्तत्वाश्रयाः, क्रियाश्रयाः, वेगाश्रयाश्चेत्यर्थः। मुक्तावल्यां-**परत्वाऽपरत्ववत्त्वमिति**। परत्वं द्विविधं=कालिकं दैशिकं चेति, कालिकपरत्वं=ज्येष्ठत्वम्। दैशिकपरत्वं=दूरत्वम्। कालिकपरत्वम्-अनित्यपृथ्वीजलतेजःपवनानां साधर्म्यम्। दैशिकपरत्वं तु-नित्यानित्यसाधारणपृथिवीजलतेजःपवनानां मनसश्च साधर्म्यमिति विवेकः। समवायसम्बन्धेन परत्ववत्त्वं बोध्यम्, तेन कालिकसम्बन्धेन परत्ववत्त्वमादाय काले नातिव्याप्तिः, न वा नित्ये परमाण्वादावव्याप्तिः। अपरत्वमपि द्विविधं-कालिकं दैशिकं च, कालिकाऽपरत्वम्=कनिष्ठत्वम्, दैशिकाऽपरत्वम्=अन्तिकत्वम्, कालिकाऽपरत्वम्-अनित्यपृथ्वीजलतेजःपवनानां साधर्म्यम्। दैशिकाऽपरत्वं तु नित्याऽनित्योभयविधपृथिवीजलतेजःपवनानां मनसश्च साधर्म्यमिति विवेकः। अपरत्ववत्त्वमपि समवायसम्बन्धेन बोध्यम्, तेन कालिकसम्बन्धेन अपरत्ववत्त्वमादाय काले नातिव्याप्तिर्न च परमाण्वादावव्याप्तिः। **मूर्तत्वमिति**=समवायेन अपकृष्टपरिमाणवत्त्वमिति तदर्थः। ननु द्व्यणुकाद्यनित्यपृथिवीजलतेजःपवनानामेवाऽपकृष्टपरिमाणं, परमाणुमनसां तु उत्कृष्टाऽणुपरिमाणम्, तथा च परमाणुषु मनसि च अपकृष्टपरिमाणवत्त्वमव्याप्तमिति चेत् न, अपकृष्टपरिमाणवत्त्वमित्यस्य- अविभुपरिमाणवत्त्व'मित्यर्थः' गगनकालदिगात्मानो विभुपदार्थास्तेषां परिमाणं परममहत् परमदीर्घं च, तद्भिन्नं परिमाणं-मध्यमहत्, मध्यदीर्घं, अपकृष्टाणु, उत्कृष्टाणु, अपकृष्टह्रस्वं, उत्कृष्टह्रस्वं च, तत्र मध्यमहद् घटादौ, मध्यदीर्घं दण्डादौ, अपकृष्टाणु द्व्यणुके, उत्कृष्टाणु-परमाणुमनसोः, अपकृष्टह्रस्वं-द्व्यणुके, उत्कृष्टह्रस्वं परमाणुमनसोरिति बोध्यम्॥ **क्रियावत्त्वमिति**। समवायसम्बन्धेन क्रियावत्त्वं साधर्म्यमित्यर्थः॥ **वेगवत्त्वमिति**। वेगःक्रियाजन्यः संस्कारविशेषः, समवायेन वेगवत्त्वं नित्यानित्यसाधारण-

त्वं च साधर्म्यम् । नच यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यं, परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्यविवक्षितत्वात् । मूर्तत्वमपकृष्ट-परिमाणवत्त्वम् । तच्च तेषामेव, गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात् । पूर्ववत् कर्मवत्त्वं कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं, वेगवत्त्वं वेगवद्वृत्ति-द्रव्यत्वव्याप्यजातिमत्त्वं च बोध्यम् ॥ २५ ॥

कालखात्मदिशां सर्वगतत्वं परमं महत् ।

---

पृथ्वी-जल-तेजःपवनानां मनसश्च साधर्म्यमित्यर्थः ॥ समवायेन परत्ववत्त्वस्य अपरत्ववत्त्वस्य च अव्याप्तिमाशंकते–**न चेति**। वाच्यमितिपरेणाऽन्वयः। **यत्र घटादौ परत्वमपरत्वमिति**। दिक्कृतयोः परत्वाऽपरत्वयोर्हेतुः–'इदमस्मात्सन्निकृष्ट'मित्यपेक्षाबुद्धिः यत्र घटे नोत्पन्ना तत्र परत्वाऽनुत्पादाद् अव्याप्तिः, एवं कालकृतयोः परत्वापरत्वयोर्हेतुः,–'अयमस्मादल्पतरकालसम्बद्ध' इत्यपेक्षाबुद्धिर्यत्र घटे नोत्पन्ना तत्राऽपरत्वानुत्पादात् अव्याप्तिरिति भावः ॥ तां वारयति–**परत्वादीति**। परत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं, आदिना–अपरत्वसमानाधिकरण–द्रव्यत्वव्याप्यजातिमत्त्वं ग्राह्यम् । अन्यघटजलप्रदीपपवनादिनिष्ठं यत्परत्वमपरत्वं वा तत्समाना-धिकरणा द्रव्यत्वव्याप्या च या जातिः–पृथिवीत्वं,–जलत्वं,–तेजस्त्वं–वायुत्वं च, तद्वत्त्वस्य सर्वत्र पृथिव्यादौ सत्त्वाल्लक्षणसमन्वयः। आत्मत्वमादाय आत्मन्यतिव्याप्तिवारणाय–समानाधिकरणान्तम् । तत्रैवात्मनि सत्तामादायाऽतिव्याप्तिवारणाय–द्रव्यत्वव्याप्येति । द्रव्यत्वन्यूनवृत्तीति तदर्थः । पृथ्वीगगनसंयोगमादाय गगनेऽतिव्याप्तिवारणाय जातीति । समवायेन जातिमत्त्वस्य विवक्षणान्न कालिकेन कालादावतिव्याप्तिः ॥ अन्ये तु–जातित्वमत्र नित्यत्वमात्रम्, इतरांशवैयर्थ्यात्, समवायेन नित्यत्ववत्त्वविवक्षणाच्च नाऽन्यतमत्वादिकमादाय गगनादावतिव्याप्तिरिति व्याख्यान्ति ॥ मूर्तत्वं निर्वक्ति–**अपकृष्टपरिमाणवत्त्वमिति** । अविभुपरिमाणवत्त्वमित्यर्थः । तच्च='च'स्त्वर्थे, अपकृष्टपरिमाणवत्त्वं तु । तेषामेव=पृथिव्यप्तेजोवायुमनसामेव । गगनादिपरिमाणस्य=गगनकालदि-गात्मनां परिमाणस्य महत्त्वस्य कुतोऽपि अपकृष्टत्वाऽभावात्=कस्यचिदपि परिमाणस्याऽपेक्षयाऽ-पकृष्टत्वं नास्ति, तदपेक्षया उत्कृष्टस्याऽप्रसिद्धत्वादिति भावः। ननु यत्र द्व्यणुकादावुत्पत्तिकाले परिमाणं नोत्पन्नं तत्राऽव्याप्तिरिति चेत् ! न, 'अविभुपरिमाणवद्वृत्तिद्रव्यत्वन्यूनवृत्तिजातिमत्त्वस्य विवक्षणात् । न्यूनवृत्तित्वमत्र–द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपं बोध्यमिति । कर्मवत्त्वमपि यत्र पाषाणादौ क्रिया नास्ति तत्राऽव्याप्तं, तद्वारणायाह-**पूर्ववदिति**। परत्वादिस-मानाधिकरणेत्यादिलक्षणवदित्यर्थः। **कर्मसमानाधीति** । कर्म=घटादिनिष्ठा क्रिया, तत्समा-नाधिकरणा या द्रव्यत्वव्याप्यया जातिः पृथिवीत्वरूपा जलत्वरूपा तेजस्त्वरूपा वायुत्वरूपा च, समवायेन तद्वत्त्वस्य क्रियाशून्ये पाषाणादावपि सत्त्वाल्लक्षणसमन्वयः । आत्मत्वमादायात्मन्य-तिव्याप्तिवारणाय–कर्मसमानाधिकरणेति । समवायेन कर्मणोऽधिकरणे समवायेन वर्तमानेति तदर्थः। सत्तामादाय–गगनादावतिव्याप्तिवारणाय–द्रव्यत्वव्याप्येति । द्रव्यत्वन्यूनवृत्तीत्यर्थः ॥ पूर्ववत् वेगवत्त्वमपि वेगशून्ये पाषाणादावव्याप्तम्, अतस्तदर्थमाह–**वेगवद्वृत्तीति** । वेगवति चक्रादौ वर्तमाना या द्रव्यत्वव्याप्या जातिः पृथिवीत्वाद्यात्मिका तद्वत्त्वमित्यर्थः। 'समवायसम्बन्धावच्छिन्न-वेगनिष्ठाधेयतानिरूपिताऽधिकरतानिरूपितसमवायसम्बन्धावच्छिन्नवृत्तितावत्त्वे सति द्रव्यत्वस-मानाधिकरणभेदप्रतियोगितावच्छेदिका या जातिस्तद्वत्त्वमिति फलितार्थः ॥२५॥

मूले-**कालखात्मेति**। कालः–समयः, खम्–आकाशम्, आत्मा–जीवात्मा परमात्मा च, दिशः–

**क्षित्यादि पञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥२६॥**

**कालेति। कालाकाशात्मदिशां सर्वगतत्वं = सर्वमूर्तद्रव्यसंयोगित्वं, परममहत्त्वं च साधर्म्यम्। परममहत्त्वत्वं जातिविशेषः, अपकर्षानाश्रयपरिमाणत्वं वा। क्षित्यादीति। पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वं साधर्म्यम्। तच्च बहिरिन्द्रियग्राह्यविशेषगुणव-**

---

त्त्वम्, एतेषां साधर्म्यं सर्वगतत्वं = गमिः संयोगार्थः, सर्वमूर्तपदार्थप्रतियोगिकसंयोगानुयोगित्व-मित्यर्थः। समवायेन परममहत्परिमाणवत्त्वं च। **क्षित्यादिपञ्च भूतानीति**। पृथिवी-जल-तेजः-पवन गगनानि पञ्च द्रव्याणि, भूतानि=भूतत्ववन्ति, तेषां भूतत्वं साधर्म्यमित्यर्थः। **चत्वारीति**। पृथिवी-जल-तेजः-पवनाः, एतानि चत्वारि द्रव्याणि, स्पर्शवन्ति=समवायेन स्पर्शवत्त्वं तेषां साधर्म्यमि-त्यर्थः। **मुक्तावल्यां**–सर्वगतत्वं निर्वक्ति **सर्वमूर्तद्रव्यसंयोगित्वमिति**। सर्वाणि यानि मूर्तानि अविभुवृत्तिपरिमाणवन्ति द्रव्याणि पृथिव्यप्तेजोवायुमनांसि प्रत्येकं तत्प्रतियोगिका ये संयोगाः तदनुयोगित्वमित्यर्थः। नन्वत्र 'सर्वमूर्तद्रव्ये'ति 'द्रव्य' पदं कथमिति चेत्! अत्र **केचित्**–'उत्पन्न-विनष्टद्रव्याङ्गीकर्तृमते तस्यापि सर्वमूर्तान्तःपातित्वात् तत्संयोगित्वस्य गगनादावसंभवाद् 'द्रव्य'-पदम्, तदर्थश्च–संयोगित्वम्। ततश्च–सर्वाणि यानि संयोगिमूर्तानि तत्संयोगित्वं साधर्म्य-मिति॥ **अन्ये तु**–'सर्वमूर्तद्रव्यसंयोगित्व' मित्यस्य–'मूर्तान्यत्व–संयोगाश्रयत्वोभयवत्त्व'मित्यर्थः। अत्र भेदप्रतियोगितावच्छेदकमूर्तत्वं जातिविशेषः इति केचित्। विश्वनाथस्तु–अपकृष्टपरिमा-णवत्त्वमिति॥ **परममहत्त्वं** च=समवायेन परममहत्परिमाणवत्त्वम्॥ अनुगतं लक्षणतावच्छेदकं निर्वक्ति **परममहत्त्वत्वं जातिविशेष** इति। घटादौ 'इदं महत्परिमाणमि'तिप्रत्यक्षप्रतीतिविषय-परममहत्त्वत्व(परममहत् कालादि, परममहत्त्वं परिमाणं, परममहत्त्वत्वं तद्धर्मस्तादृश)जातेः गगनादिपरिमाणसाधारण्ये बाधकाऽभावादिति भावः॥ ननु परममहत्त्वत्वस्य कारणताद्यनव-च्छेदकत्वेन जातित्वसाधकप्रमाणविरहात् कथं जातित्वम्? इत्यरुचेराह–अपकर्षानाश्रय**परि-माणत्वं वेति**। अपकर्षो जातिविशेषः, मूर्तावृत्तित्वं वा, तदनाश्रयं महत्परिमाणं तत्त्वमित्यर्थः॥ भूतत्वं निर्वक्ति **तच्चेति**। भूतत्वं चेत्यर्थः। **बहिरिन्द्रियेति**। बहिरिन्द्रियाणि श्रोत्र–त्वक्-चक्षु-रसना-घ्राणाख्यानि पञ्च, क्रमशस्तद्ग्राह्या विशेषगुणाः शब्द स्पर्श-रूप-रस-गन्धाख्याः पञ्च, क्रमशस्तद्वत्त्वम् आकाशा–ऽनिला–ऽनल–सलिला–ऽवनिष्विति लक्षणसमन्वयः। 'बहिष्ट्वम् =मनो-भिन्नत्वम्। आत्मन्यतिव्याप्तिवारणाय–'बहिः'पदम्। बहिरिन्द्रियग्राह्यजातीयसंयोगादिमति काला-दावतिव्याप्तिवारणाय–विशेषेति। 'रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः। बुद्ध्यादि-भावनान्ताश्च शब्दो वैशेषिका गुणाः' द्रव्यत्वमादातिव्याप्तिवारणाय–गुणेति। गुणवत्त्वं समवायेन बोध्यम्॥ ननु 'ज्ञातो घट'इति चाक्षुषप्रत्यक्षविषयताश्रयज्ञानवत्त्व(ज्ञानलक्षणासन्निकर्ष)मादा-याऽऽत्मन्यतिव्याप्तिः परमाणावव्याप्तिश्च, तथाहि ग्राह्यत्वं यदि ज्ञानविषयतामात्रम्, तदा–बहिरिन्द्रियजन्यज्ञानविषय-विशेषगुणवत्त्वमित्यर्थो लब्धः। तथा च सति–'अयं घट'इति प्रत्यक्ष-ज्ञानोत्तरं भवति हि 'मया ज्ञातो घट' इत्याकारकं ज्ञानमपि, तत्राद्यं व्यवसायज्ञानम्' द्वितीयमनुव्यवसायज्ञानमित्युच्यते, आद्यं व्यवसायज्ञानम् अनुव्यवसाये विशेषणभावं प्राप्तं भवति, आद्यस्य द्वितीयेन विषयीक्रियमाणत्वात्, तत्र आद्यम् 'अयं घट' इति ज्ञानं यथा चक्षुःसंयोगसन्नि-कर्षजन्यतया चक्षुःसंयोगात्मकलौकिकसन्निकर्षप्रयोज्यविषयतावद् भवति,–तथा चक्षुःसंयुक्तमनः-संयुक्तात्मसमवेतस्य _ अनुव्यवसायात्मकज्ञानस्य'ज्ञातो घट'इत्याकारकस्यापि वक्ष्यमाणाऽलौकिक-

**त्त्वम्। अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यम्। तेन ज्ञातो घट इत्यादिप्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात्तद्वत्यात्मनि नातिव्याप्तिः। न वा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः, तस्यापि स्वरूपयोग्यत्वात्। महत्त्वलक्षणकारणान्तरासन्निधानाच्च न प्रत्यक्षम्। अथवा आत्मावृत्तिविशेषगुणवत्त्वं तत्त्वम्। चत्वारीति। पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वम्॥ २६॥**

---

ज्ञानलक्षणाख्यसन्निकर्षात्मकतया', एतादृशाऽलौकिकसन्निकर्षात्मकाऽनुव्यवसायज्ञानस्य विषयताश्रयमपि तद् भवति, अतः—चक्षुरिन्द्रियप्रयोज्यानुव्यवसायात्मकाऽलौकिकसन्निकर्षात्मकज्ञानविषयघटज्ञानात्मकविशेषगुणवत्त्वस्यात्मनि अतिव्याप्तिरिति, तद्वारणाय—ग्राह्यत्वं निर्वक्ति—**लौकिकेति**। लौकिकसन्निकर्षमात्रप्रयोज्यं यद् बहिरिन्द्रियजन्यप्रत्यक्षविषयत्वं तत्स्वरूपयोग्यत्वम्—तादृशविषयतावच्छेदकधर्मवत्त्वम्,—इत्यर्थः। तथा च लौकिकसन्निकर्षमात्रप्रयोज्या या बहिरिन्द्रियजन्यप्रत्यक्षीयविषयता तादृशविषयतावच्छेदकधर्मवद्विशेषगुणनिरूपितसमवायावच्छिन्नाधिकरणतावत्त्वम् भूतत्वमिति फलितम्। यथा—चक्षुःसंयुक्तसमवायमात्रप्रयोज्या या चक्षुर्जन्यप्रत्यक्षविषयता घटसमवेतरूपनिष्ठा, तदवच्छेदकरूपत्वधर्मवद्विशेषगुणः रूपं, समवायेन तदधिकरणो घटो भूतपदार्थः इत्येवं समन्वयः। 'अयं घट'—इति ज्ञानात्मकगुणस्तु न लौकिकसन्निकर्षमात्रप्रयोज्यविषयताश्रयः, अलौकिकसन्निकर्षप्रयोज्यविषयताश्रयोऽपि भवतीति तादृशगुणस्याऽग्रहणादेवात्मनि नातिव्याप्तिः। लौकिकत्वनिवेशस्य फलमाह—**तेनेति। ज्ञातो घट इति**। 'ज्ञातो घट' इत्यनुव्यवसायज्ञाने प्रत्यक्षात्मके प्रकारीभूतस्य 'अयं घट' इति ज्ञानस्य, उपनीतभानविषयत्वात्=उपनीतः=ज्ञानलक्षणासन्निकर्षाश्रयो घटः, तस्य यद्भानम् अनुव्यवसायात्मकं ज्ञानम्, तद्विषयत्वात्—अलौकिकसन्निकर्षप्रयोज्या या प्रत्यक्षविषयता तदाश्रयगुणत्वात्, तद्वति=तादृशज्ञानगुणवति, आत्मनि नातिव्याप्तिः=भूतत्वलक्षणस्य नातिव्याप्तिरिति समुदितार्थः। स्वरूपयोग्यता-निवेशस्य फलमाह—**न वेति**। लौकिकप्रत्यक्षस्य अविषयो यो रूपादिगुणस्तद्वति परमाणौ या—'लौकिकसन्निकर्षप्रयोज्य—चक्षुर्जन्य-प्रत्यक्ष-विषयविशेषगुणवत्त्वस्य' असत्त्वादव्याप्तिः, सा न भवति॥ तत्र हेतुमाह—**तस्यापि स्वरूपयोग्यत्वादिति**। तस्यापि=परमाणुरूपस्यापि, स्वरूपयोग्यत्वात्=प्रत्यक्षविषयतावच्छेदकं यत् त्रसरेणुरूपादिगतं रूपत्वं धर्मस्तद्वत्त्वात्, तथा च घटरूपे चक्षुःसंयुक्तसमवायसन्निकर्षप्रयोज्यं चाक्षुपप्रत्यक्षविषयतावच्छेदकरूपत्वधर्ममादाय तदवच्छिन्नविशेषगुणरूपवत्त्वस्य परमाणावपि सत्त्वान्नाव्याप्तिरिति भावः। ननु परमाणुरूपादेर्योग्यत्वे कुतो न तस्य प्रत्यक्षम्? अत आह—**महत्त्वेति**। 'चक्षुःसंयुक्तसमवेतसन्निकर्षजन्य—रूपादिप्रत्यक्षत्वावच्छिन्नं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन महत्परिमाणस्य कारणत्व'मितिनियमात्, परमाणुरूपे च स्वाश्रयसमवेतत्वसम्बन्धेन महत्त्वलक्षणं=महत्त्वपरिमाणात्मकं यत् कारणान्तरं तस्य असन्निधानात्=अवर्तमानत्वात् न परमाणुरूपस्य प्रत्यक्षमिति भावः॥ लाघवाल्लक्षणान्तरमाह—**अथवाऽऽत्मेति**। आत्मनि समवायेन अवर्तमाना ये विशेषगुणाः शब्द-स्पर्श-रूप-रस-गन्ध-सांसिद्धिकद्रवत्व-स्नेहाः समवायेन तद्वत्त्वं यथायोगं पृथिवी-जल-तेजः-पवनाकाशेषु इति लक्षणसमन्वयः। तत्त्वम्=भूतत्वम्॥ अत्र दैशिकपरत्वापरत्वमादाय मनस्यतिव्याप्तिवारणाय—विशेषेति। **वस्तुतस्तु**—शब्दस्पर्शान्यतरवत्त्वमेव भूतत्वमिति-बोध्यम्। **स्पर्शवत्त्वमिति**। समवायेन स्पर्शवत्त्वमित्यर्थः। उत्पत्तिकालीने स्पर्शानधिकरणे द्रव्येऽव्याप्तिवारणाय—'स्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं' वक्तव्यमिति॥ **अन्ये तु** मृदु-कठिनादिनानाजातीयस्पर्शवद्व-

**द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् ।**
**अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ २७ ॥**

**द्रव्यारम्भ इति । पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वं साधर्म्यम् । न च द्रव्यानारम्भके घटादावव्याप्तिः, द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ आकाशशरीरिणामिति । आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वं साधर्म्यमित्यर्थः । आकाशस्य विशेषगुणः शब्दः, स चाव्याप्यवृत्तिर्यदा किंचिदवच्छेदेन शब्द उत्पद्यते तदाऽन्यावच्छेदेन तदभावस्यापि सत्त्वात् । क्षणि-**

---

यवारब्धेऽप्यवयविनि द्रव्यस्पार्शनानुरोधाच्चित्रस्पर्शोऽङ्गीकार्य इति नाऽव्याप्तिः, उत्पन्नविनष्टद्रव्याऽनङ्गीकारात्, मुक्तावल्यां जातिघटितलक्षणं न कृतमिति वदन्ति ॥ २६ ॥

मूले-**द्रव्यारम्भश्चतुर्ष्विति** । चतुर्षु=पृथिव्यप्तेजोवायुषु । **द्रव्यारम्भः**=यद्यपि 'आरम्भ'-पदेन समवायिकारणता लभ्यते, तथापि समवायिकारणस्य न लक्षणघटकता गौरवात् प्रयोजनाऽभावाच्च, अत 'आरम्भ'पदं समवायेन द्रव्यवत्तालाभायेति बोध्यम् ॥ आकाशात्मनां साधर्म्यमाह-**अथेति** । आकाश-शरीरिणाम्=आकाश-जीवात्मनाम् । अव्याप्यवृत्तिविशेषगुणः-अव्याप्य वर्तते इत्यव्याप्यवृत्तिः एतादृशो यो विशेषगुणः शब्दबुद्ध्यादिः साधर्म्यम् इष्यते । क्षणिकविशेषगुणः=क्षणे भवः स्थितः क्षणिकः एतादृशो विशेषगुणः=शब्दो बुद्ध्यादिश्च साधर्म्यमिष्यते इत्यर्थः ॥ **मुक्तावल्यां द्रव्यारम्भकत्वमिति** । द्रव्यसमवायिकारणत्वम्, समवायेन द्रव्यवत्त्वमिति यावत् ॥ **शंकते-न चेति** । द्रव्यानारम्भके=समवायेन द्रव्यवद्भिन्ने अन्त्यावयविघटादौ द्रव्यारम्भकत्वाऽभावात् अव्याप्तिः न शंकनीयेत्यर्थः ॥ उत्तरयति-**द्रव्यसमवायीति** । द्रव्यस्य=अवयविद्रव्यस्य पृथिव्या जलस्य तेजसो वायोश्च, समवायिकारणं=योऽवयवः परमाणु कपालादिरूपः, तत्र वर्तमाना या द्रव्यत्वस्य साक्षाद्व्याप्या पृथिवीत्व-जलत्व-तेजस्त्व-वायुत्वान्यतमा जातिस्तद्वत्त्वं सर्वत्र घटादावपीति समन्वयः । 'द्रव्यसमवायिकारणवृत्ती'-त्यस्य 'समवायेन द्रव्यवृत्ती'त्यर्थो बोध्यः । सत्तादिकमादाय गगनेऽतिव्याप्तिवारणाय-द्रव्यत्वव्याप्येति । वृत्तित्वं जातिमत्त्वं च समवायेन बोध्यम् । द्रव्यत्वव्याप्यत्वं च द्रव्यत्वन्यूनवृत्तित्वरूपं बोध्यम् । **वस्तुतस्तु**-'समवायेन द्रव्यवद्वृत्ति मनोव्यत्तत्यवृत्ति-जातिमत्त्वं साधर्म्यमित्यत्र तात्पर्यमिति बोध्यम् ॥ **आकाशात्मनामव्याप्येति** । आकाशजीवात्मनाम् अव्याप्यवृत्तिः क्षणिकश्च यो विशेषगुणस्तद्वत्त्वं साधर्म्यमित्यर्थः ॥ लक्ष्ये लक्षणं योजयितुं शब्द-ज्ञानादीनामव्याप्यवृत्तित्वं क्षणिकत्वं चोपपादयति-**आकाशस्येत्यादिना** ॥ **विशेषगुण** इति । विशेषगुणत्वं कालदिङ्मनोवृत्तितानवच्छेदकजातिमद्गुणत्वमिति बोध्यम्, समवायेन कालदिङ्मनोवृत्तिताऽनवच्छेदिका जातिः प्रकृते 'शब्दत्व ज्ञानत्वाद्यात्मिका तद्वत्त्वस्य शब्दे ज्ञानादौ च सत्त्वाल्लक्षणसमन्वयः॥'स च=शब्दश्च ॥ **अव्याप्यवृत्तिरिति** । दैशिकाऽव्याप्यवृत्तिरित्यर्थः । तेन रूपादीनां कालिकाऽव्याप्यवृत्तित्वेऽपि न क्षतिः । अव्याप्यवृत्तित्वमत्र-'किंचिदवच्छेदेन स्वावच्छेदकसम्बन्धेन स्वाधिकरणे अन्यावच्छेदेन वर्तमानो यः स्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावस्तत्प्रतियोगित्वम्' । भेर्यवच्छेदेन समवायेन शब्दाधिकरणे आकाशे शून्यदेशावच्छेदेन स्वरूपसम्बन्धेन वर्तमानो यः समवायावच्छिन्नप्रतियोगिताकः शब्दाऽभावस्तत्प्रतियोगित्वस्य शब्दे सत्त्वात् शब्दोऽव्याप्यवृत्तिरिति ॥ तदेव दर्शयति-**यदा किञ्चिदवच्छेदेनेति** । भेर्यवच्छेदेन यस्मिन् क्षणे शब्द उत्पद्यते तदा=तस्मिन्नेव क्षणे अन्यावच्छेदेन=शून्यदेशावच्छेदेन तदभावस्य=

**कत्वं च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्। योग्यविभुविशेषगुणानां स्वोत्तरवर्तिविशेषगुणनाश्यत्वात्प्रथमशब्दस्य द्वितीयशब्देन नाशः। एवं ज्ञानादीनामपि,- ज्ञानादिकं हि यदाऽऽत्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते तदा घटाद्यवच्छेदेन**

---

शब्दाभावस्यापि सत्त्वादित्यर्थः॥ क्षणिकत्वं निर्वक्ति–**तृतीयक्षणेति**। प्रथमक्षणे शब्दोत्पत्तिः, द्वितीयक्षणे शब्दस्थितिः, तृतीयक्षणे शब्दस्य नाशो भवति। तथाविधतृतीयक्षणे यो ध्वंसस्तत्प्रतियोगित्वमेव क्षणिकत्वमित्यर्थः। घटादिव्यावृत्तये–तृतीयक्षणवृत्तीति ॥ ननु 'तृतीयक्षणे एव शब्दस्य ध्वंसो, न चतुर्थक्षणादौ' इत्यत्र किं नियामकम्? इत्याकांक्षायां नियतनाश्यनाशकभावं दर्शयति–**योग्यविभुविशेषगुणानामिति**। योग्याः=श्रावणप्रत्यक्षविषया मानसप्रत्यक्षविषयाश्च ये, विभूनां=आकाशात्मनाम्, विशेषगुणाः=शब्दज्ञानादयस्तेषाम् ॥ **स्वोत्तरवर्तीति**। स्वं= द्वितीयक्षणावच्छिन्नस्थितिकाः शब्दज्ञानादिविशेषगुणाः, तेषाम्, उत्तरक्षणे=तृतीयक्षणे=नाशक्षणे इति यावत्, वर्तिनो=वर्तमाना स्थिता इति यावत्, स्वस्थितिक्षणे स्वस्मादेवोत्पद्य स्वध्वंसक्षणे स्थितिमन्त इति भावः। एतादृशा ये विशेषगुणाः शब्दान्तरज्ञानान्तरादयश्च तैः, नाश्यत्वात्, प्रथमशब्दस्य=पूर्वशब्दस्य, द्वितीयशब्देन=स्वोत्पन्नोत्तरशब्देन वृश्चिकप्रसूतिन्यायेन नाशः। 'स्वोत्तरवर्ती'त्यस्य–स्वाऽव्यवहितोत्तरवृत्तीत्यर्थः, अव्यवहितोत्तरत्वं–स्वोत्तरविशेषगुणाऽनुत्तरत्वे सति स्वोत्तरत्वम्, स्वोत्तरत्वं च–स्ववृत्तिप्रागभावप्रतियोगित्वमिति ध्येयम्॥ अत्र च–'यत्र प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशस्तत्र स्वसामानाधिकरण्य–स्वाऽव्यवहितपूर्ववर्तित्वोभयसम्बन्धेन योग्यविभुविशेषगुण इति सामानाधिकरण्येन नाशकत्वं बोध्यम्। कार्यतावच्छेदके योग्यत्वोपादानेन प्रायश्चित्तादिजन्याऽदृष्टनाशे नाऽन्वयव्यभिचारः। योग्यत्वं च–लौकिकसाक्षात्कारविषयनिर्विकल्पकान्यतरत्वम् अतीन्द्रियजातिशून्यत्वं वा। रूपादिनाशे व्यतिरेकव्यभिचारवारणाय–विभ्विति। संयोगादिनाशे व्यतिरेकव्यभिचारवारणाय–विशेषेति। कारणतावच्छेदके योग्यत्वविशेषत्वयोरुपादानान्न द्वितीयक्षणोत्पन्नाऽदृष्टसंयोगादिना तृतीयक्षणे अपेक्षाबुद्धिनाशः। सामानाधिकरण्यसम्बन्धनिवेशान्न शब्दादिना व्यधिकरणानां ज्ञानेच्छादीनां नाशः। स्वाऽव्यवहितपूर्ववृत्तित्वनिवेशाच्च न ज्ञानादीनामुत्पत्तिकाले इच्छादिना नाशः। स्वाव्यवहितपूर्वत्वं च–स्वप्रागभावाधिकरणकालप्रागभावानधिकरणत्वे सति स्वप्रागभावाधिकरणत्वम्। अत्र चाऽपेक्षाबुद्धिद्वितीयक्षणोत्पन्नपुरुषान्तरीयज्ञानादिना तृतीयक्षणे तन्नाशवारणाय–स्वसामानाधिकरण्यप्रवेशः। अपेक्षाबुद्धिद्वितीयक्षणे च तत्पुरुषस्य न योग्यविशेषगुणोत्पाद इति सिद्धान्तः॥ **अन्ये** तु–'प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशं प्रति स्वाव्यवहितपूर्ववृत्तित्वसम्बन्धेन गुणत्वेन कारणत्वम्, कार्यतावच्छेदकं तु–यावन्तो योग्यविभुविशेषगुणध्वंसास्तावदन्यतमत्वम्। एवं–प्रतियोगितासम्बन्धेन अपेक्षाबुद्धिनाशं प्रति स्वप्रागभावाऽधिकरणक्षणप्रागभावाऽनधिकरणक्षणवृत्तित्व–स्वसमानकालीनत्वोभयसम्बन्धेन गुणत्वेन कारणत्वमिति समानाधिकरणगुणसाधारण्येन नाश्यनाशकभाव इति **वदन्ति**। **एवं ज्ञानादीनामपीति**। बुद्धि–सुख–दुःखे–च्छा–द्वेष–प्रयत्नानामित्यर्थः। धर्माधर्मभावनानां तु चिरस्थायित्वाऽभ्युपगमात्। अव्याप्यवृत्तित्वं क्षणिकत्वं चाऽस्तीति शेषः। अव्याप्यवृत्तित्वमुपपादयति–**ज्ञानादिकं हीति**। यदा=यस्मिन् क्षणे। आत्मनि=जीवात्मनि। शरीरघटयोरवच्छेद्याऽधिकरणसम्बन्धसत्त्वप्रतिपादनाय–आत्मनि विभावित्युक्तम्। विभुत्वं=सर्वमूर्तद्रव्यसंयोगित्वम्। **शरीराद्यवच्छेदेन उत्पद्यते इति**। अवच्छेदकतासम्बन्धेन शरीरस्य ज्ञानकारणत्वात्, जनकतासम्बन्धेनेन्द्रियाणां कारणत्वाच्च शरीरावच्छेदेनेन्द्रियावच्छेदेन चेति भावः॥ तदा=

तदभावोऽस्त्येव । एवं ज्ञानादिकमपि क्षणद्वयावस्थायि । इत्थं चाव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं चार्थः । पृथिव्यादौ रूपादिर्विशेषगुणोऽस्तीत्यतोऽव्याप्यवृत्तीत्युक्तम् । पृथिव्यादावव्याप्यवृत्तिः संयोगादिरस्तीत्यतो विशेषगुणेत्युक्तम् । न च रूपादीनामपि कदाचित्तृतीयक्षणे नाशसंभवात्क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति वाच्यम् , चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वस्य तदर्थत्वात् । अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति, क्षणचतुष्टयं तु न किमपि जन्यज्ञानादिकं तिष्ठति । रूपत्वादिकं तु क्षणचतुष्टयस्थायिन्यपि रूपादौ वर्तत इति तद्व्युदासः ।

---

तस्मिन्नेव क्षणे । घटाद्यवच्छेदेनेति । अवच्छेदकतासम्बन्धेन घटपटादेर्ज्ञानाऽकारणत्वादिति भावः ॥ तदभावः=ज्ञानेच्छाद्यभावः। क्षणिकत्वं दर्शयति-एवमिति । शब्दवदित्यर्थः। क्षणद्वयावस्थायि=स्वोत्पत्तिद्वितीयक्षणस्थितिकम्। ननु-अव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वमित्यत्र अव्याप्यवृत्तित्व-क्षणिकत्वयोरन्यतरं व्यर्थम्, अव्यावर्तकत्वात्, इत्याशंकायां साधर्म्यद्वयाऽभिप्रायेण तदर्थमाह-इत्थं चेति । शब्दादीनामव्याप्यवृत्तित्व-क्षणिकत्वसिद्धौ चेत्यर्थः । अर्थ इति । तथा च तादृशवाक्यस्य साधर्म्यद्वयपरत्वात् नान्यतरविशेषणवैयर्थ्यमिति भावः । पदकृत्यमाह-पृथिव्यादाविति । अव्याप्यवृत्तीत्युक्तमिति । दैशिकाऽव्याप्यवृत्तित्वमुक्तमिति तदर्थः । तेन रूपादीनां कालिकाऽव्याप्यवृत्तित्वेऽपि न अतिव्याप्तिः। विशेषगुणेत्युक्तमिति । विशेषगुणाश्च-'बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः । अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः'इति(९०)कारिकया वक्ष्यमाणा बोध्याः । रूपादीनां क्षणिकत्वमाशंक्य पृथिव्यामतिव्याप्तिं शंकते- न चेति । वाच्यमिति परेणान्वयः ॥ कदाचिदिति । घटोत्पत्तितृतीयक्षणे कारणवशाद् घटनाशस्थले इत्यर्थः । तत्र घटे घटद्वितीयक्षणे उत्पन्नस्य घटध्वंसक्षणे स्थितस्य रूपस्य घटध्वंसाव्यवहितोत्तरक्षणे ध्वंसात् तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वस्य सत्त्वात् तादृशक्षणिकविशेषगुणरूपादिमति पृथिव्यामतिव्याप्तिरिति भावः । तद्वारयति-चतुःक्षणवृत्तीति । चतुःक्षणादिवृत्तीनि यानि जन्यानि रूपादीनि तत्र अवृत्तिर्या जातिः शब्दत्वज्ञानत्वादिः तद्वान् विशेषगुणः शब्दज्ञानादिस्तद्वत्त्वस्य गगने आत्मनि च सत्त्वाल्लक्षणसमन्वयः। शब्दत्वादेः जन्यवृत्तित्वाद् असम्भवः स्यादतो जन्ये चतुःक्षणवृत्तित्वं निवेशितम् । अवृत्तित्वघटकवृत्तित्वं समवायेन बोध्यम्, तेन जन्यमात्रे कालिकेन ज्ञानत्वस्य वृत्तित्वेऽपि नाऽसंभवः । तदर्थत्वादिति । क्षणिकविशेषगुणवत्पदार्थत्वादित्यर्थः । ननु-असंभववारणाय त्रिक्षणवृत्तित्वमेव निवेश्यतां, चतुष्ट्वापेक्षया त्रित्वस्य प्रथमोपस्थितत्वेन लाघवात्, अत आह-अपेक्षाबुद्धिरिति । अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति चतुर्थक्षणे च तस्या ध्वंसो भवति,-तथाहि-१ प्रथमं-'अयमेकः अयमेकः इत्येवं रूपाऽपेक्षाबुद्धिः। २ ततो द्वित्वोत्पत्तिः । ३ ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पात्मकम् । ४ ततो द्वित्वत्वविशिष्टद्वित्वप्रत्यक्षम् अपेक्षाबुद्धिनाशश्च । ५ ततो द्वित्वनाश इति । चतुर्थक्षणे द्वित्वप्रत्यक्षोपपादनाय द्वित्वकारणस्याऽपेक्षाबुद्धेस्तृतीयक्षणे स्थायित्वमभ्युपगम्यते, तृतीयक्षणे तस्या नाशे तु कारणनाशेन चतुर्थक्षणे द्वित्वस्यापि नाशात् प्रत्यक्षं न स्यादिति । तथा च-त्रिक्षणवृत्तिजन्याऽवृत्तिजातिमद्गुणवत्त्वोक्तौ त्रिक्षणवृत्तिजन्याऽपेक्षाबुद्धिस्तत्राऽवर्तमाना या शब्दत्वजातिस्तद्वद्विशेषगुणवत्त्वस्य गगने समन्वयेऽपि ज्ञानत्वस्य त्रिक्षणवृत्तिजन्याऽवृत्तित्वाऽभावात् ज्ञानत्वस्याऽसंग्रहात् आत्मन्यव्याप्तिः स्यादितिभावः । ननु त्रिक्षणस्थाय्यपेक्षाबुद्धिवत् चतुःक्षणस्थाय्यपि किमपि ज्ञानं भविष्यतीत्याशंकामपनुदति-क्षणचतुष्टयं तु न किमपीति । जन्यज्ञानादिकं=जन्य-ज्ञानेच्छाद्वेष सुखदुःखप्रयत्नेत्यर्थः । चतुःक्षणवृत्तिजन्याऽवृत्तीत्यस्य फलमाह-रूपत्वादिकं त्विति । तद्व्युदासः=रूपत्वजातिपरिहारः, तथा च-रूपत्वजा-

**ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वाज्ज्ञानत्वस्य तद्वृत्तित्वाज्जन्येत्युक्तम्। यद्याकाशजीवात्मनोः साधर्म्यं तदा जन्येति न देयम्, द्वेषत्वादिकमादाय लक्षणसमन्वयात्, परममहत्त्वस्य तादृशगुणत्वात् चतुर्थक्षणे द्वित्वादीनामपि नाशाभ्युपगमाद्द्वित्वादीनामपि तथात्वात्तद्वारणाय विशेषेति। त्रिक्षणवृत्तित्वं वा वक्तव्यम्। द्वेषत्वादिकमादायात्मनि लक्षणसमन्वयः ॥ २७ ॥**

---

तिमद्विशेषगुणवति घटादौ याऽतिव्याप्तिः सा निरस्तेति भावः। 'चतुःक्षणवृत्तिजन्याऽवृत्तिजातिमद्विशेषगुणवत्त्वम्'आकाशजीवेश्वराणां साधर्म्यं भवतीति तत्र 'जन्य'पदानुपादाने ईश्वरेऽव्याप्तिः, तथाहि–चतुःक्षणवृत्तीनि यानि घटादीनि घटरूपादीनि नित्यज्ञानादीनि च तत्र अवर्तमाना या जातिः शब्दत्वद्वेषत्वात्मिका तद्वद्विशेषगुणशब्दद्वेषादिमत्त्वमाकाशजीवात्मनोः, ज्ञानत्वस्य तु–चतुःक्षणवृत्तिनित्यज्ञानाऽवृत्तित्वाऽभावात् तदसंग्रहाद् ईश्वरेऽव्याप्तिः, तद्वारणाय–'जन्ये'त्युपात्तम्,–तदेवाह–**ईश्वरज्ञानस्येति**। ईश्वरसमवेतज्ञानस्येत्यर्थः। चतुःक्षणवृत्तित्वात्=नित्यत्वेन सर्वदा स्थायित्वात्। ज्ञानत्वस्य तद्वृत्तित्वात्=ईश्वरज्ञानवृत्तित्वात् ॥ आकाशजीवेश्वराणां साधर्म्यपक्षे तु–'**आकाशशरीरिणा**'मिति **मूलोक्त**-'शरीरि'पदार्थः–स्ववृत्तिचेष्टानुकूलकृतिमत्त्वसम्बन्धेन शरीरविशिष्ट इति। **वृद्धा** भूतावेशन्यायेनेश्वरस्य शरीरमिच्छन्ति। संसार्यदृष्टवशाच्छरीरमित्यन्ये। '**शरीरिणा**'मित्यत्र मूले 'शरीरि'पदस्य यथाश्रुतार्थकत्वाभिप्रायेणाह–**यद्याकाशजीवात्मनो**रिति। 'जन्ये'ति न देयमिति। तथा च–चतुःक्षणवृत्त्यवृत्तिजातिमद्विशेषगुणवत्त्वमेव साधर्म्यम्। चतुःक्षणवृत्तिनित्यज्ञान–घट–तद्रूपादिषु अवृत्तिर्या शब्दत्व-द्वेषत्व–सुखत्व–दुःखत्वात्मिका जातिः तद्वद्विशेषगुणवत्त्वस्य आकाशजीवात्मनोः साधर्म्यमिति लक्षणसमन्वयादिति भावः। विशेष'पदस्य कृत्यमाह–**परममहत्त्वस्येति**। चतुःक्षणवृत्तिजन्याऽवृत्तिपरममहत्त्वत्वजातिमत्परममहत्परिमाणवत्त्वस्य गगनादौ सत्त्वात् अतिव्याप्तिः, तद्वारणाय–**विशेषेति**। परममहत्परिमाणस्य सामान्यगुणत्वात् तदसंग्रहान्नातिव्याप्तिरिति। **तादृशगुणत्वादिति**–चतुःक्षणवृत्तिजन्याऽवृत्तिजातिमद्गुणत्वादित्यर्थः। ननु परममहत्त्वत्वं न जातिः, किंतु–अपकर्षानाश्रयपरिमाणत्वं तत्, तथा च कथं तदादायाऽतिव्याप्तिरतः कृत्यान्तरमाह–**चतुर्थक्षणे द्वित्वादीनामिति**। यद्वा–'जन्य'पदानुपादाने परममहत्त्वत्वस्य चतुःक्षणवृत्तिवृत्तित्वान्न परममहत्त्वमादाय कालादावतिव्याप्तिरतः कृत्यान्तरमाह–**चतुर्थक्षणे-इति**। द्वित्वोत्पत्तितश्चतुर्थक्षणे इत्यर्थः। द्वित्वादीनाम्=द्वित्वत्रित्वादिसंख्यानाम्। नाशाभ्युपगमात्=अपेक्षाबुद्ध्यात्मककारणनाशप्रयुक्ततन्नाशस्वीकारात्। द्वित्वादीनामपि तथात्वात्=चतुःक्षणवृत्तिजन्याऽवृत्तिद्वित्वत्वादिजातिमद्गुणत्वात् तादृशगुणमादाय घटादावतिव्याप्तिवारणाय–विशेषे'ति। द्वित्वस्य विशेषगुणत्वाभावादतिव्याप्तिर्न भवतीति भावः। प्रथमोपस्थितत्वात्मकलाघवमभिसन्धायाह–**त्रिक्षणेति**। त्रिक्षणवृत्ति–जन्याऽवृत्ति–जातिमद्विशेषगुणवत्त्वम्'–आकाशजीवेश्वराणां साधर्म्यमित्यर्थः। त्रिक्षणवृत्तयोऽनित्याश्च ये घट-रूपाऽपेक्षाबुद्ध्यादयस्तत्राऽवर्तमाना या शब्दत्वेच्छात्व-यत्नत्वजातयस्तद्वद्विशेषगुणवत्त्वमाकाशजीवेश्वराणामिति लक्षणसमन्वयो बोध्यः। यदि तु 'त्रिक्षणे'त्यादिकम् आकाशजीवात्मनोः साधर्म्यम्, तदा 'जन्य'पदं विशेष'पदं च न देयम्, व्यर्थत्वात्। 'त्रिक्षणवृत्त्यवृत्तिजातिमद्गुणवत्त्वस्यैव'साधर्म्यात्। त्रिक्षणवृत्तीनि घट–रूपा–ऽपेक्षाज्ञान–नित्येच्छापरममहत्परिमाण-द्वित्वादीनि तत्रावृत्ति–शब्दत्वद्वेषत्वादिजातिमच्छब्ददेषवत्त्वस्य आकाशजीवात्मनोः सत्त्वाल्लक्षणसमन्वयात् ॥ २७ ॥

रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः ।
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥

पृथिव्यप्तेजसां रूपवत्त्वं द्रवत्ववत्त्वं प्रत्यक्षविषयत्वं च साधर्म्यमित्यर्थः। न च चक्षुरादीनां भर्जनकपालस्थवन्हेरूष्मणश्च रूपवत्त्वे किं मानमिति वाच्यम्, तत्रापि तेजस्त्वादिना रूपानुमानात्। एवं वाय्वानीतपृथिवीजलतेजोभागानामपि पृथिवीत्वादिना रूपानुमानं बोध्यम्। न च घटादौ द्रुतसुवर्णादिभिन्ने तेजसि च द्रवत्ववत्त्वमव्याप्तमिति वाच्यम्, द्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। घृतजतुप्रभृतिषु पृथिवीषु, जलेषु, द्रुतसुवर्णादौ तेजसि, च द्रवत्वसत्त्वात्तत्र च पृथिवीत्वादिसत्त्वात्तदादाय सर्वत्र लक्षणसमन्वयः। न च प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तमतिव्याप्तं च रूपादाविति वाच्यम्, चाक्षुषलौकिकप्रत्यक्षविषयवृत्ति-

---

मूले रूपद्रवत्वेति। प्रथमाः=पृथिव्यप्तेजांसि, त्रयः। रूपद्रवत्वप्रत्यक्षयोगिनः=रूपं च द्रवत्वञ्च प्रत्यक्षयोगः=प्रत्यक्षविषयत्वञ्चेति द्वन्द्वान्मत्वर्थीयात्-रूपवन्तः द्रवत्ववन्तः प्रत्यक्षविषयतावन्तश्चेत्यर्थः। गुरुणी द्वे रसवतीति। द्वे=पृथिवीजले। गुरुणी=समवायेन गुरुत्ववती। रसवती च समवायेनेति,-साधर्म्यम्। द्वयोर्नैमित्तिको द्रवः इति। द्वयोः=पृथिवीतेजसोः। नैमित्तिको द्रवः= समवायेन नैमित्तिकद्रवत्ववत्त्वं साधर्म्यमित्यर्थः। मुक्तावल्यां-रूपवत्त्वमिति। समवायेन रूपवत्त्वं, समवायेन द्रवत्ववत्त्वं, स्वरूपसम्बन्धेन प्रत्यक्षविषयत्वं चेत्यर्थ इत्यर्थः। शंकते-न चेति। वाच्यमित्यनेनाऽन्वयः। 'चक्षुरादीना'-मित्यादिना घ्राणस्य रसनायाश्च ग्रहणम्। तथा च चक्षुर्घ्राणरसनासु भर्जनकपालस्थवह्नौ ऊष्मणि च रूपस्याऽग्रहणात् तत्र समवायेन रूपवत्त्वमव्याप्तमित्याशंकितुरभिप्रायः॥ उत्तरयति-तत्रापीति। चक्षुर्घ्राणरासन-भर्जनकपालस्थवह्न्यूष्मास्वित्यर्थः। तेजस्त्वादिना=तेजस्त्व-जलत्व-पृथिवीत्वेभ्यः॥ रूपानुमानादिति। तथाहि—'चक्षुः-रूपवत् तेजस्त्वात्-प्रदीपवत्'। 'घ्राणं-रूपवत्,-पृथिवीत्वात्-घटवत्'। 'रसनम्-रूपवत्,-जलत्वात्-करकावत्'। 'भर्जनकपालस्थवह्निः-रूपवान् तेजस्त्वात्-विद्युद्वत्'। 'ऊष्मन्-रूपवत्-तेजस्त्वात्-प्रभावत्'। अत्र सर्वत्र साध्यहेतूनां समवायसम्बन्धो बोध्यः॥ ननु वायुना आ समन्तात् नीयमाना ये पृथिव्या जलस्य तेजसश्च भागाः परमाणुद्व्यणुकास्तेषामप्यप्रत्यक्षात् तत्र रूपवत्त्वे किं मानमित्याकांक्षायामाह-एवं···पृथिवीत्वादिना रूपानुमानमिति। तथाहि पृथिवीपरमाणवः-रूपवन्तः पृथिवीत्वात्-घटवत्। 'जलपरमाणवः—रूपवन्तः—जलत्वात्, कासारवत्। तेजःपरमाणवः-रूपवन्तः,-तेजस्त्वात्-प्रदीपवदिति॥ भागानाम्=नित्यावयवानाम् समवायेन द्रवत्ववत्त्वस्याऽव्याप्तिमाशंकते-न च घटादाविति। घटपटादिपृथिव्यां द्रवत्वाऽभावात्, द्रवितसुवर्णरजतादिभिन्ने सुवर्णरजतादौ च तेजसि करकादौ च द्रवत्ववत्त्वमव्याप्तमिति भावः। उत्तरयति-द्रवत्ववद्वृत्तीति। द्रवत्ववन्तो ये घृततैलमधुप्रभृतिपार्थिवपदार्थाः द्रवितसुवर्णरजतादयः तैजसपदार्था नद्यादिजलपदार्थाश्च तत्र समवायेन वर्तमाना या द्रव्यत्वव्याप्या=द्रव्यत्वन्यूनवृत्तिः पृथिवीत्वजातिस्तेजस्त्वजातिः जलत्वजातिश्च समवायेन तद्वत्त्वं सर्वत्र पृथिव्यां सर्वत्र तेजसि सर्वत्र जले चेति समन्वयः॥ तदेव दर्शयति-घृतजतुप्रभृतिष्वित्यादिना। जतुः-लाक्षा। तदादाय=द्रवत्वमादाय पृथिवीत्वादिचादाय। सर्वत्र-अद्रवितपृथिवीजलतेजस्सु॥ शंकते-न च प्रत्यक्षविषयत्वमिति। चाक्षुषप्रत्यक्षविषयत्वस्य परमाणुद्व्यणुकेषु अव्याप्तिः,रूपे रूपत्वे क्रियादौ चातिव्याप्तिरिति शंकार्थः॥उत्तरयति-चाक्षुषलौकिके-

द्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। आत्मन्यतिव्याप्तिवारणाय–चाक्षुषेति। गुरुणी इति। गुरुत्ववत्त्वं रसवत्त्वं च पृथिवीजलयोरित्यर्थः। न च घ्राणेन्द्रियादीनां वाय्वानीतपार्थिवादिभागानां च रसादिमत्त्वे किं मानमिति वाच्यम्, तत्रापि पृथिवीत्वादिना तदनुमानात्। द्वयोरिति। पृथिवीतेजसोरित्यर्थः। न च नैमित्तिकद्रवत्ववत्त्वं घटादौ वन्ह्यादौ चाव्याप्तमिति वाच्यम्, नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्॥ २८॥

**आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः।**
**यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत्॥२९॥**

---

ति। चाक्षुषं=चक्षुरिन्द्रियजन्यं यत्, लौकिकम्=लौकिकचक्षुःसंयोगादिसन्निकर्षजन्यं च यत्, प्रत्यक्षं ज्ञानम्, तद्विषयो यो घट-जल-प्रदीपाद्यवयवी, तत्र समवायेन वृत्तिर्या द्रव्यत्वसाक्षाद्व्याप्या पृथिवीत्व-जलत्व-तेजस्त्वान्यतमा जातिस्तद्वत्त्वस्य विवक्षितत्वात् सर्वत्र परमाण्वादौ समन्वय इति। रूपादौ द्रव्यत्वव्याप्यजातेरभावान्नातिव्याप्तिः॥ 'घटो वायुमानि'ति–वाय्वंशे उपनीतभानात्मकघटविशेष्यकचाक्षुषविषयवायुवृत्तिद्रव्यत्वव्याप्यवायुत्वजातिमति वायावतिव्याप्तिवारणाय–लौकिकेति। लौकिकसन्निकर्षप्रयोज्येति तदर्थः। द्रव्यत्वव्याप्यत्वं–च–द्रव्यत्वसमानाधिकरणाऽभावप्रतियोगित्वे सति द्रव्यत्वसमानाधिकरणत्वम्। सत्तावारणाय विशेषणदलम्। गुणत्वादिवारणाय विशेष्यदलम्॥ आत्मन्यतिव्याप्तीति। 'चाक्षुषे'त्यनुपादाने मनःसंयोगेन मानसलौकिकप्रत्यक्षविषयात्मवृत्तिद्रव्यत्वव्याप्यात्मत्वजातिमादायात्मन्यतिव्याप्तिरिति, 'चाक्षुषे'त्युपादाने तु आत्मनो लौकिकसन्निकर्षेण चाक्षुषप्रत्यक्षविषयत्वाभावान्नातिव्याप्तिरिति भावः॥ गुरुत्ववत्त्वमिति। समवायेन गुरुत्ववत्त्वं समवायेन रसवत्त्वं चेत्यर्थः॥ शंकते–न च घ्राणेन्द्रियादीनामिति। घ्राणरसनानामित्यर्थः। वाय्वानीतपृथिव्यादिभागानाम्=वायुना नीयमानानां पृथिवीजलपरमाणुद्व्यणुकानां च। रसादिमत्त्वे=रसवत्त्वे गुरुत्ववत्त्वे च, किं मानम्=किं प्रमाणमित्यर्थः। गुरुत्वं–रक्तिकमापकतोलकत्वादिभेदेन नानाविधं बोध्यम्॥ उत्तरयति–तत्रापि पृथिवीत्वादिनेति। घ्राणे रसनायां परमाण्वादौ च पृथिवीत्वेन जलत्वेन च रसवत्त्वस्य गुरुत्ववत्त्वस्य चानुमानात्, तथाहि–घ्राणं-रसवत्–पृथिवीत्वात्,–शर्करावत्, 'घ्राणं–गुरुत्ववत्–पृथिवीत्वात्,–घटवत्। रसनं-रसवत्-जलत्वात्–कूपोदकवत्, 'रसनं-गुरुत्ववत्–जलत्वात्–करकावत्। एवम्–पार्थिवपरमाण्वादयः,–रसवन्तः–गुरुत्ववन्तश्च, पृथिवीत्वात्, शर्करादिवत्। 'जलपरमाण्वादयः–रसवन्तः, गुरुत्ववन्तश्च,–जलत्वात्–नारिकेलजलवत्॥ अत्र समवायेन पतनवत्त्वमपि पृथिवीजलयोः साधर्म्यं बोध्यम्॥ पृथिवीतेजसोर्नैमित्तिकद्रवत्वस्य अव्याप्तिमाशंकते–न च नैमित्तिकमिति। घटादौ वह्न्यादौ च नैमित्तिकद्रवत्वाऽभावादव्याप्तिरित्यर्थः॥ उत्तरयति–नैमित्तिकद्रवत्वसमानेति। घृतादौ द्रुतसुवर्णादौ च नैमित्तिकद्रवत्वसमानाधिकरणा या द्रव्यत्वव्याप्या पृथिवीत्वरूपा तेजस्त्वरूपा च जातिः तद्वत्त्वस्य घटादौ वह्न्यादौ च सत्त्वाल्लक्षणसमन्वयः॥ जलेऽतिव्याप्तिवारणाय–नैमित्तिकेति। द्रव्यत्वमादाय वाय्वादावतिव्याप्तिवारणाय–द्रव्यत्वव्याप्येति। द्रव्यत्वसाक्षाद्व्याप्यत्वमिति तदर्थः। साक्षात्त्वं चात्र–द्रव्यत्वव्याप्याऽव्याप्यत्वे सति द्रव्यत्वव्याप्यत्वम्। पृथिवीजलान्यतरत्वमादाय जलेऽतिव्याप्तिवारणाय–जातिपदम्॥ २८॥

मूले–**आत्मानो भूतवर्गाश्चेति**। जीवात्मानः, परमात्मा पृथिवीजलतेजोवायुगगनानि

पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वमित्यर्थः। यदुक्तमिति। ज्ञेयत्वादिकं विहायेति बोध्यम्। तत्तु न कस्यापि वैधर्म्यं, केवलान्वयित्वात्॥ २९॥

**स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः।**
**स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः॥ ३०॥**
**स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम्।**
**रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश॥ ३१॥**

चेत्यर्थः। विशेषगुणयोगिनः=समवायेन विशेषगुणवन्त इत्यर्थः॥ यदुक्तमिति। यस्य=येषां येषाम्। यद् यत् साधर्म्यमुक्तम्। तत् इतरस्य=इतरेषां वैधर्म्यं बोध्यमित्यर्थः॥ **मुक्तावल्यां–विशेषगुणवत्त्वमित्यर्थ** इति। तथाहि–पृथिव्यां रूपरसगन्धस्पर्शाः, जले रूपरसस्पर्शाः, तेजसि रूपस्पर्शौ, वायौ स्पर्शः, आकाशे शब्दः, जीवात्मनि–बुद्धि–सुख–दुःखेच्छा–द्वेष प्रयत्न धर्माऽधर्मभावनाः, ईश्वरे–ज्ञानेच्छाप्रयत्नाः–इति, समवायेन तद्वत्त्वं साधर्म्यमित्यर्थः। ननु सप्तानामपि साधर्म्यं ज्ञेयत्वं तत् कस्य वैधर्म्यमित्याशंकायामाह–**ज्ञेयत्वादिकमिति**। ज्ञेयत्वं वाच्यत्वं प्रमेयत्वमभिधेयत्वं पदार्थत्वं चेत्यादि विहायेत्यर्थः॥ पदार्थसामान्यलक्षणानि विहायेति यावत्॥ पदार्थसामान्यलक्षणानां विरुद्धधर्मत्वाभावमुपपादयति–**तत्तु नेति**॥ **केवलान्वयित्वादिति**। प्रमेयत्वादिकं तु केवलान्वयित्वात्=स्वविरोधि–वृत्तिमदत्यन्ताभावाऽप्रतियोगित्वात् न कस्यापि वैधर्म्यमिति भावः। **अथेदमनुसन्धेयम्**–साधर्म्यत्वं स्वनिरूपकतावच्छेदकावच्छिन्नविशेष्यक–तदितरयावत्प्रतियोगिकभेदविधेयकानुमितावुपयुज्यते, वैधर्म्यत्वं स्वनिरूपकतावच्छेदकावच्छिन्नभेदविधेयक–तदितरयावद्विशेष्यकानुमितावुपयुज्यते। तद्धर्मविशिष्टनिरूपितसाधर्म्यत्वं नाम–'तद्धर्मव्यापकत्वे सति तद्धर्मव्याप्यत्वम्, तद्धर्मसमानाधिकरणाऽभावाऽप्रतियोगित्वं तद्धर्मव्यापकत्वम्, तद्धर्माभाववदवृत्तित्वं तद्धर्मव्याप्यत्वम्। तद्धर्मावच्छिन्ननिरूपितवैधर्म्यत्वं नाम तद्धर्मावच्छिन्नभेदव्यापकत्वे सति तद्धर्मव्यापकभेदप्रतियोगितावच्छेदकत्वम्। साधर्म्यत्वस्य वैधर्म्यत्वस्य च घटका अव्याप्त्यतिव्याप्त्यसंभवदोषाः। अव्याप्त्यसंभवौ साधर्म्यत्ववैधर्म्यत्वघटकयोः प्रथमदलयोः विघटकौ। अतिव्याप्तिस्तु तद्घटकयोर्द्वितीयदलयोर्विघटिका। साधर्म्यत्वविघटिका अव्याप्तिर्नाम–'तद्धर्मविशिष्टे क्वचिदवर्तनम्। वैधर्म्यत्वविघटिका अव्याप्तिर्नाम–तद्धर्मावच्छिन्नेतरस्मिन् क्वचिदवर्तनम्। असंभवस्तु साधर्म्यविघटकः–तद्धर्मावच्छिन्ने क्वचिदप्यवर्तनम्, वैधर्म्यत्वविघटकस्तु तद्धर्मावच्छिन्नेतरस्मिन् क्वचिदप्यवर्तनम्। अतिव्याप्तिस्तु साधर्म्यत्वविघटिका–तद्धर्मावच्छिन्नेतरवृत्तित्वम्; वैधर्म्यत्वविघटिका तु तद्धर्मविशिष्टनिरूपितवृत्तित्वम्। अव्याप्तिः–भागासिद्धिं सम्पादयति। अतिव्याप्तिः–व्यभिचारं सम्पादयति। असम्भवः–स्वरूपासिद्धिं सम्पादयति। यदि साधर्म्यत्वस्येव वैधर्म्यत्वस्यापि स्वनिरूपकतावच्छेदकावच्छिन्नविशेष्यिकायामितरभेदानुमितावुपयोगस्तदा यो हेतुः साधर्म्यत्वेनाऽभिमतः तदभावो वैधर्म्यत्वेन हेतुः तद्वदन्योन्याभावो वेति॥२९॥ "वायोर्नवैकादश तेजसो गुणा,–जलक्षितिप्राणभृतां चतुर्दश। दिक्कालयोः पञ्च, षडेव चाऽम्बरे, महेश्वरेऽष्टौ, मनसस्तथैव चे"ति प्राचीनश्लोकाऽनुसारेण वाय्वादिगुणव्यवस्थामाह–**मूले–स्पर्शादयोऽष्टाविति**। स्पर्श–संख्या––परिमाण–पृथक्त्व–संयोग–विभाग–परत्वा–ऽपरत्वानि, वेगात्मकसंस्कारश्चेति–नव मरुतो वायोर्गुणाः, तत्र–स्पर्शो विशेषगुणः, अन्ये सामान्यगुणाः॥ **स्पर्शाद्यष्टाविति**। स्पर्श–संख्या–परिमाण–पृथक्त्व–संयोग–विभाग–परत्वा–ऽपरत्वानि, रूपं वेगाख्यसंस्कारो नैमित्तिकद्रवत्वं चेति एकादश तेजसो गुणाः, तत्र स्पर्श–रूपे

स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश, ।
बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥३२॥
धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश; ।
संख्यादिपञ्चकं कालदिशोः, शब्दश्च ते च खे, ॥३३॥
संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे, ।
परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे, ॥३४॥

ते च खे=आकाशे ॥ ३०,...३४ ॥

---

विशेषगुणौ, अन्ये सामान्यगुणाः ॥३०। **स्पर्शादयोऽष्टाविति।** स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वाऽपरत्वानि, वेगाख्यसंस्कारः सांसिद्धिकद्रवत्वं गुरुत्वं रूपं रसः स्नेहश्चैते चतुर्दश वारिणि=जले वर्तन्ते, तत्र स्पर्श-सांसिद्धिकद्रवत्व-रूप रस-स्नेहा विशेषगुणाः, अन्ये सामान्यगुणाः ॥ ३१ ॥ **स्नेहहीनेति।** **एते**ऽव्यवहितपूर्वोक्ताः। स्नेहहीनाः–स्नेहभिन्नाः। गन्धयुताः–गन्ध सहिताः। तथा च–स्पर्श–संख्या–परिमाण–पृथक्त्व-संयोग-विभाग-परत्वा-परत्व-वेग-नैमित्तिक-द्रवत्व-गुरुत्व-रूप-रस-गन्धाः–पृथिव्या गुणा इत्यर्थः ॥ तत्र–स्पर्श-रूप-रस-गन्धा विशेषगुणाः, अन्ये सामान्यगुणा इति ॥ **बुद्ध्यादिषट्कमिति।** बुद्धि-सुख-दुःखे-च्छा-द्वेष-प्रयत्नाः। **संख्यादिपञ्चकमिति।** संख्या-परिमाण-पृथक्त्व-संयोग-विभागाः। भावनाख्यसंस्कारः धर्मः अधर्मश्चैते चतुर्दशगुणाः आत्मनः=जीवात्मनः स्युः, तत्र–बुद्धि-सुख-दुःखेच्छाद्वेष-प्रयत्न-भावना-धर्माऽधर्माः विशेषगुणाः, अन्ये सामान्यगुणाः ॥ **संख्यादिपञ्चकं कालदिशोरिति।** संख्यापरिमाणपृथक्त्व-संयोगविभागाः पञ्च काले दिशि च वर्तन्ते, एते सामान्यगुणाः, काले दिशि च विशेषगुणाः न सन्तीति ॥ **शब्दश्च ते च खे–इति।** ते च=संख्या–परिमाण-पृथक्त्व-संयोग-विभागाः, शब्दश्चेति षट्, खे=आकाशे, वर्तन्ते, तत्र शब्दो विशेषगुणः, अन्ये सामान्यगुणाः ॥ ३२ ॥ ३३ ॥ **संख्यादयः पञ्च–इति।** संख्या-परिमाण-पृथक्त्व–संयोग विभागाः, बुद्धिः इच्छा प्रयत्नश्चेति अष्टौ गुणा **ईश्वरे** वर्तन्ते, तत्र बुद्धीच्छाप्रयत्ना विशेषगुणाः, अन्ये सामान्यगुणाः ॥ **परापरत्वे–इति।** परत्वम् अपरत्वम्, संख्या-परिमाण पृथक्त्व-संयोग-विभागाः वेगश्चेति अष्टौ गुणा मानसे=मनसि वर्तन्ते, एते सामान्यगुणाः, मनसि विशेषगुणा न सन्ति ॥ रूप-रस-गन्ध-स्पर्श-बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माऽधर्म–भावनाख्यसंस्कार-शब्द-स्नेह-सांसिद्धिकद्रवत्वानि विशेषगुणाः ॥ संख्या-परिमाण-पृथक्त्व-संयोग-विभाग–परत्वा–ऽपरत्व–गुरुत्व–नैमित्तिकद्रवत्व-वेग-स्थितिस्थापकसंस्काराः सामान्यगुणाः-इत्यपि बोध्यम् ॥ मुक्तावल्यां 'ते च खे'-इत्यत्र 'खे'पदार्थमाह-**आकाशे**इति ॥३०॥३४॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य्य-नव्यन्यायाचार्य्य-सांख्ययोगवेदान्तमीमांसा-तीर्थ-पण्डित–'श्रीकृष्णवल्लभाचार्य'स्वामिनारायणविरचितायां न्यायसिद्धान्तमुक्तावल्याः किरणावल्यां प्रत्यक्षखण्डे पदार्थ-तत्साधर्म्यवैधर्म्यपरिच्छेदः ॥

---

**तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता ।**
**षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५ ॥**

साधर्म्यवैधर्म्ये निरूप्य संप्रति प्रत्येकं पृथिव्यादिकं निरूपयति–तत्रेति । गन्धहेतुरिति । गन्धसमवायिकारणमित्यर्थः। यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितं, तथापि

---

पदार्थानां साधर्म्यवैधर्म्ये निरूपिते, सम्प्रति प्रत्येकं पृथिव्यादिकं निरूपयन्नादौ पृथिवीं लक्षयति **मूले–'तत्र क्षितिरिति ।** तत्र=द्रव्याणां मध्ये, क्षितिः=पृथिवी, गन्धहेतुः=गन्धसमवायिकारणम्, नानारूपवती=शुक्लनीलपीतरक्तहरितकपीशचित्ररूपवती, मता, तत्र=पृथिव्याम्, षड्विधस्तु रसः= मधुराऽम्ललवणकटुकषायतिक्तभेदेन षड्विधो रसः समवायेन वर्तते, गन्धस्तु द्विविधः=सुगन्धदुर्गन्धभेदेन द्विविधो गन्धः समवायेन वर्तते इत्यर्थः । **मुक्तावल्यां–साधर्म्यवैधर्म्ये**–इति । द्रव्यादीनां पदार्थानां द्रव्याणां च साधर्म्यवैधर्म्ये निरूप्येत्यर्थः । प्रत्येकं=द्रव्यविभाजक-पृथिवीत्वाद्येकैकधर्मावच्छिन्नमित्यर्थः । पृथिव्यादिकम्=पृथिवीजलादिनवद्रव्याणि । निरूपयति=तद्विषयकज्ञानाऽनुकूलव्यापारवान् ग्रन्थकारः ॥ गन्धहेतुत्वं यदि गन्धनिमित्तकारणत्वम्, तदा कालादावतिव्याप्तिः, तद्वारणायाऽऽह–**गन्धसमवायीति ।** समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नगन्धनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतावत्त्वमित्यर्थः । तथा च कालस्य कालिकेन गन्धहेतुत्वात् दिशाया दैशिकविशेषणतया गन्धहेतुत्वात् समवायेन गन्धहेतुत्वाऽभावान्नातिव्याप्तिरिति ॥ ननु सुरभ्यसुरभिकपालाऽऽरब्धो घटो निर्गन्ध एव, नहि तत्र सुरभिरुत्पद्यते, समवायेन सुरभिगन्धं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन सुरभिगन्धातिरिक्तगन्धस्य ( असुरभिगन्धस्य ) प्रतिबन्धकत्वात्, असुरभिगन्धोऽपि नोत्पद्यते, समवायेनाऽसुरभिगन्धं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन असुरभिगन्धातिरिक्तगन्धस्य( सुरभिगन्धस्य )प्रतिबन्धकत्वात्, न च तत्र चित्रगन्धस्वीकाराऽऽवश्यकता, घ्राणस्य गन्धाश्रयग्रहणे सामर्थ्यशून्यतया गन्धस्याऽप्रयोजकतया च क्षत्यभावात्, 'इदं गन्धवदि'ति प्रतीतेस्तु कपालगन्धेनैव निर्वाहात्, तथा च निर्गन्धे घटेऽव्याप्तिः, तत्र गन्धाऽभावेन गन्धसमवायिकारणताया अप्यभावादिति चेन्न । समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नगन्धनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतावच्छेदकधर्मवत्त्वमिति तदर्थत्वात् । गन्धसमवायिकारणतावच्छेदकं यत्पृथिवीत्वं तद्वत्त्वस्य तत्र घटे सत्त्वेन लक्षणसमन्वयात् । ननु तादृशकारणतावच्छेदकपृथिवीत्वस्य कालिकेनाऽनित्यजलादौ सत्त्वादतिव्याप्तिरिति चेन्न । तादृशकारणतावच्छेदकधर्मनिष्ठाऽऽधेयतानिरूपितसमवायसम्बन्धावच्छिन्नाऽधिकरणतावत्त्वस्य विवक्षितत्वात् । ननु तथापि तादृशाधिकरणतावत्त्वं स्ववृत्तित्वसम्बन्धेन तादृशाऽधिकरणतात्वेऽतिव्याप्तं कालिकेन च कालादावतिव्याप्तमिति चेन्न । दैशिकस्वरूपसम्बन्धेन तादृशाधिकरणतावत्त्वस्य विवक्षितत्वात् । तथा च–'समवायसम्बन्धावच्छिन्नगन्धनिष्ठकार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्नकारणतावच्छेदकधर्मनिष्ठाधेयतानिरूपितसमवाय–सम्बन्धावच्छिन्नाऽधिकरणतानिष्ठप्रकारतानिरूपितमहादिग्वृत्तिताऽनवच्छेदकदैशिकस्वरूपसम्बन्धनिष्ठसंसर्गतानिरूपितविशेष्यतावत्त्वमिति फलितार्थः । वस्तुतस्तु तादृशे घटादावव्याप्यवृत्तिगन्धः स्वीकार्य एव, व्याप्यवृत्त्यव्याप्यवृत्तिजातीययोर्विरोधे मानाऽभावात्, निरुक्तप्रतिबध्यप्रतिबन्धकभावकल्पने गौरवात्, तथा च न तत्राऽव्याप्तिः, किन्तु उत्पत्तिकालावच्छिन्ने घटे उत्पन्नविनष्टे घटे वाऽव्याप्तिः, तद्वारणाय 'गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्व' विवक्षणीयम्, गन्धवन्तो ये कपालादयस्तद्वृत्तिर्या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वं समवायेन तद्वत्त्वस्य उत्पत्तिकालावच्छिन्नघटादौ सत्त्वा

**पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम्, तथा हि–पृथिवीत्वं हि**

लक्षणसमन्वयः। जलत्वमादाय जलादावतिव्याप्तिस्तद्वारणाय–गन्धवद्वृत्तीति। गन्धवत्त्वं वृत्तित्वं च समवायेन बोध्यम्, तेन कालिकेन गन्धवज्जलादिकमादाय समवायेन गन्धवत्पृथिव्यां कालिकेन वृत्ति जलत्वादिकमादाय च जलादौ नाऽतिव्याप्तिः। द्रव्यत्वमादाय जलादावतिव्याप्तिस्तद्वारणाय–द्रव्यत्वव्याप्येति। द्रव्यत्वव्याप्यत्वं न द्रव्यत्वाऽभाववदवृत्तित्वम्, द्रव्यत्वस्याऽपि द्रव्यत्वाऽभाववदवृत्तितया द्रव्यत्वमादाय जलादावतिव्याप्त्यापत्तेः, किन्तु द्रव्यत्वसमानाधिकरणात्यन्ताऽभावप्रतियोगितावच्छेदकधर्मवत्त्वम्, तच्च पृथिवीत्वे वर्तते इति। ननु तथापि तादृशद्रव्यत्वव्याप्यत्वस्य घटत्वादिष्वपि सत्त्वात् घटाद्यन्यतमपृथिव्यामव्याप्तिर्दुर्वारेति चेन्न। द्रव्यत्वव्याप्यपदेन द्रव्यत्वसाक्षाद्व्याप्यत्वस्य विवक्षितत्वात्, द्रव्यत्वसाक्षाद्व्याप्यत्वं च–द्रव्यत्वव्याप्यत्वे सति द्रव्यत्वव्याप्याऽव्याप्यत्वम्, तच्च पृथिवीत्वे एव। पृथिवीजलान्यतरत्वमादाय जलेऽतिव्याप्तिवारणाय–'जाति'पदम्। जातिमत्त्वमपि समवायेन बोध्यम्, तेन कालिकेन जातिमत्त्वमादाय जलादौ नातिव्याप्तिः। व्याप्यत्वघटकमधिकरणत्वं समवायेन बोध्यम्, अत्यन्ताभावश्च समवायसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। तथा च–'समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नगन्धनिष्ठाधेयतानिरूपिताऽधिकरणतानिरूपितसमवायसम्बन्धावच्छिन्नाधेयतावती या समवायसम्बन्धावच्छिन्नद्रव्यत्वनिष्ठाधेयतानिरूपिताऽधिकरणतावन्निष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावीयप्रतियोगितावच्छेदकधर्मावच्छिन्नत्वविशिष्ट-समवायसम्बन्धावच्छिन्नद्रव्यत्वनिष्ठाऽऽधेयतानिरूपिताधिकरणतावन्निष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावीयप्रतियोगितावच्छेदकधर्मवत्समानाधिकरणात्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवती या जातिस्तन्निष्ठाधेयतानिरूपितसमवायावच्छिन्नाऽधिकरणताश्रयत्वमिति'पर्यवसन्नम्। वैशिष्ट्यं स्वरूपसम्बन्धघटितसामानाधिकरण्येन बोध्यम्॥ अपरेतु–गन्धं प्रति प्रतिबन्धकाऽभावविधया गन्धाऽभावस्य हेतुतया गन्धहेतुत्वं गन्धाऽभावेतिव्याप्तमत आह–**गन्धसमवायिकारणमिति** वदन्ति॥ ननु 'गन्धवत्त्वं पृथिवीत्व'मितिलघुलक्षणेनाऽपि निर्वाहे सति 'गन्धसमवायिकारण'मितिगुरुलक्षणं कथं क्रियते'–इत्याशंकते–**यद्यपीति**। गन्धवत्त्वमात्रम्=समवायिकारणत्वाऽघटितमेव, समवायेन गन्धाऽऽश्रयत्वमेव, पृथिव्या लक्षणं लाघवाद् उचितमित्यर्थः। लाघवमत्र शरीरकृतं बोध्यम्॥ समाधत्ते–**तथापीति**॥ प्रयोजनं दर्शयति–**पृथिवीत्वजातौ प्रमाणोपन्यासायेति**। पृथिवीत्वजातावनुमानप्रमाणस्य प्रदर्शनायेत्यर्थः। यद्यपि घटादौ पृथिवीत्वस्य प्रत्यक्षतया सिद्धिरिति न प्रमाणान्तराऽपेक्षा तत्र, तथापि परमाण्वादिषु पृथिवीत्वस्य प्रत्यक्षेण न सिद्धिरिति तत्रापि पृथिवीत्वसिद्ध्यर्थमनुमानप्रमाणोपन्यासो बोध्य इति भावः॥ **कारणत्वमुपन्यस्तमिति**। 'गन्धसमवायिकारणमि'तिपदेन गन्धसमवायिकारणता पक्षीभूता प्रदर्शितेत्यर्थः॥ तत्प्रदर्शने सति 'या या कारणता सा किञ्चिद्धर्मावच्छिन्ना'–यथा घटकारणता दण्डत्वावच्छिन्ना–इति व्याप्तिस्मरणं द्रागेव जायते, तेनाऽनुमानेन पृथिवीत्वं सिद्ध्यतीति स्पष्टयति–**तथाहि पृथिवीत्वमिति**। गन्धसमवायिकारणं पृथिवी, गन्धसमवायिकारणस्य भावः–गन्धसमवायिकारणता पृथिवीनिष्ठा, ताम् अवच्छिनत्ति व्याप्नोतीति गन्धसमवायिकारणतावच्छेदकस्तस्य भावस्तया पृथित्वं सिद्ध्यतीत्यर्थः। अनुमानाकारः–'समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नगन्धनिष्ठकार्यतानिरूपित–तादात्म्यसम्बन्धावच्छिन्नपृथिवीनिष्ठसमवायिकारणता,–किञ्चिद्धर्मावच्छिन्ना,–कारणतात्वात्,–घटनिष्ठकार्यतानिरूपितकपालनिष्ठकारणतावत्' यथा कपालनिष्ठा घटसमवायिकारणता कपालत्वात्मकधर्मावच्छिन्ना तथा पृथिवीनिष्ठा गन्धसमवायिकारणताऽपि पृथिवीत्वधर्मावच्छिन्नेति॥ ननु

**गन्धसमवायिकारणतावच्छेदकतया सिद्धयति, अन्यथा गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः। न च पाषाणादौ गन्धाभावाद्गन्धवत्त्वमव्याप्तमिति वाच्यं, तत्रापि गन्धसत्त्वात्। अनुपलब्धिस्त्वनुत्कटत्वेनाप्युपपद्यते, कथमन्यथा तद्भस्मनि गन्ध उपल-**

---

समवायेन गन्धं प्रति तादात्म्येन पृथिवी कारण'मितिकार्यकारणभाव एवाऽप्रामाणिकस्तथा च तदवलम्ब्य पृथिवीत्वसाधकं दर्शितानुमानमप्ययुक्तमित्याशंकायामाह-**अन्यथेति**। गन्धत्वावच्छिन्नं प्रति पृथिवीत्वेन समवायिकारणत्वाऽनङ्गीकारे इत्यर्थः॥ **गन्धत्वावच्छिन्नस्य**=गन्धमात्रस्य कार्यस्य॥ **आकस्मिकत्वापत्तेरिति**। कस्माच्चिदपि नियतकारणात् न जायते यत् तद् आकस्मिकम्, तथा च ध्वंसस्येव समवायिकारणं विनाऽपि यस्मात्कस्माच्चिदनियताज्जलादितो गन्धस्य जन्यत्वापत्तेरित्यर्थः। अव्यवस्थापत्तेरिति यावत्॥ तस्माद् यद्गन्धस्य कारणं सा पृथिवी न निरवच्छिन्ना किन्तु केनचिद्धर्मेणाऽवच्छिन्नैवेति यो धर्मस्तस्या अवच्छेदकः स एव पृथिवीत्वमिति भावः॥ **इदमुपलक्षणम्**-असति बाधके शक्यतावच्छेदकत्वस्यापि जातित्वसाधकत्वात् पृथिवीपदशक्यतावच्छेदकतयाऽपि पृथिवीत्वस्य जातित्वं सिद्धयति,-प्रयोगश्च-'पृथिवीत्वं,-जातिः,-पृथिवीपदशक्यतावच्छेदकत्वादि'ति॥ ननु गन्धवत्त्वस्य पृथिवीलक्षणत्वे पाषाणादौ गन्धाऽभावेन मूलोक्तगन्धवत्त्वमात्रलक्षणस्याऽव्याप्तिरित्याशंक्य निराकरोति-**न च पाषाणादाविति**। पाषाणे काचे च गन्धस्य अभावात्=प्रत्यक्षविरहात् पाषाणे गन्धवत्त्वव्यवहाराऽनुपपत्तेः पाषाणस्य पृथिव्यतिरिक्तद्रव्यत्वकल्पनापत्तिरिति अव्याप्तिदातुरभिप्रायः॥ प्रयोगस्तु-'पाषाणः,-न पृथिवी, गन्धाऽभाववत्त्वात् (गन्धवदवृत्तिजातिमत्त्वादिति यावत्)॥ 'न च···वाच्यमि'ति परेणाऽन्वयः॥ पाषाणस्य गन्धाऽभाववत्त्वे किञ्चिदपि प्रमाणं नास्तीत्यतो गन्धाभाववत्त्वात्मको हेतुः स्वरूपाऽसिद्ध इति दर्शयितुं पाषाणे गन्धं साधयति-**तत्राऽपीति**। पाषाणादावपीत्यर्थः। गन्धसत्त्वात्=पृथिवीत्वेन गन्धानुमानात्-'पाषाणादिः,-गन्धवान्, पृथिवीत्वादि'ति॥ ननु यदि पाषाणे गन्धोऽभविष्यत् तर्हि अघ्रास्यत अतोऽनुपलब्ध्या गन्धाऽभावो निर्णीयते इत्यत आह-**अनुपलब्धिस्त्विति**। अनुपलब्धिः=अप्रत्यक्षम्। गन्धस्य पाषाणेऽप्रत्यक्षं तु अनुत्कटत्वेन=अनुद्भूतत्वेनापि उपपद्यते=भवति। उत्कट एव गन्धः प्रत्यक्षो भवति अनुत्कटस्तु विद्यमानोऽपि न प्रत्यक्षो भवतीति भावः॥ **नवीनाः अन्नंभट्टश्च**-उद्भूतत्वं-नाम प्रत्यक्षताप्रयोजिका जातिः प्रत्यक्षविषयरूपरसगन्धादौ सर्वत्र वर्तते। न च-शुक्लत्वाऽभाववति घटस्य कृष्णे रूपे उद्भूतत्वम् उद्भूतत्वाऽभाववति अनुद्भूतशुक्ले शुक्लत्वम्, तयोर्द्वयोः समावेश उद्भूतशुक्ले,-इति सांकर्याद् उद्भूतत्वं न जातिरिति वाच्यम्। गुणसांकर्यं न बाधकमिति नवीनाऽभिप्रायात्। तादृशोद्भूतत्वाऽभावोऽनुद्भूतत्वम्, तस्य पाषाणगन्धे सत्त्वान्न प्रत्यक्षमिति। **अन्ये** तु-अनुद्भूतत्वं नाम-प्रत्यक्षाऽभावप्रयोजको धर्मविशेषः-उपाधिरूपः, तदभावः सप्तमपदार्थरूप एव प्रत्यक्षताप्रयोजकमुद्भूतत्वमिति मन्यन्ते। **वस्तुतस्तु**-उद्भूतत्वस्य प्रत्यक्षतादिप्रयोजकधर्माद्यात्मकस्याऽतिरिक्ततया कल्पनमनुचितम्, षड्विधसन्निकर्षाणां प्रत्यक्षत्वप्रयोजकत्वस्य सर्वसम्मतत्वात्, तथा च 'यद्यत्र प्रत्यक्षताप्रयोजकसन्निकर्षवत्ता स्यात् तर्ह्युपलभ्येते'त्यापादनविषयतात्मिका योग्यतैव उद्भूतत्वम्, तादृशयोग्यताऽभावश्च अनुद्भूतत्वमित्यवधेयम्॥ अभावनिर्णये च न केवलाऽनुपलब्धिर्हेतुः, किन्तु योग्यताविशिष्टाऽनुपलब्धिर्हेतुः, योग्यतावैशिष्ट्यं-स्वा(योग्यता)श्रयविषयकप्रत्यक्षनिष्ठप्रतियोगिताकत्वसम्बन्धेन उपलब्ध्यभावे बोध्यम्, तथा चाऽनुद्भूतगन्धे निरुक्तयोग्यताया अभावाद् योग्यताविशिष्टाऽनुपलब्धेरप्यभावात् न पाषाणादौ गन्धाऽभावनिश्चयो भवितुमर्हतीत्य-

भ्यते? भस्मनो हि पाषाणध्वंसजन्यत्वात्पाषाणोपादानोपादेयत्वं सिद्धयति। यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः, दृष्टं चैतत्खण्डपटे महापटध्वंस-

नुसन्धेयम् ॥ ननु 'पाषाणः,-गन्धवान्,-पृथिवीत्वादि'त्यत्र पाषाणे पृथिवीत्वमेवाऽसिद्धमिति नितरां तदधीनं गन्धवत्त्वमप्यसिद्धमित्याशंकावारणाय पाषाणे पृथिवीत्वसाधनाय च भूमिकामारचयति-**कथमन्यथेति**। अन्यथा=पाषाणादौ पृथिवीत्वाऽनङ्गीकारे । तद्भस्मनि=पाषाणभस्मनि । कथम्=केन परम्परासम्बन्धादिना । गन्ध उपलभ्यते=घ्राणजप्रत्यक्षनिरूपितलौकिकविषयतावान् गन्धो भवति ?। यदि पाषाणो न पृथिवी तदा पाषाणभस्माऽपि न पृथिवीति तत्र प्रत्यक्षतया सिद्धो गन्धः कस्य पाषाणभस्मातिरिक्तस्य पृथिव्यात्मकद्रव्यस्य संसर्गादुपलभ्यते ? यतो न भस्मातिरिक्तं तत्र पार्थिवद्रव्यमस्ति, तस्मात् पाषाणभस्मनि पृथिवीत्वमङ्गीकरणीयं, ततो भस्मारम्भकाऽवयवेष्वपि पृथिवीत्वं सिद्धयति, भस्मारम्भकाऽवयवानां योऽवयवी पाषाणस्तस्यापि पृथिवीत्वसिद्धौ पृथिवीत्वेन हेतुना गन्धसिद्धिर्भवतीति भावः ॥ एतदेव विशदयति-**भस्मनो हीति**। भस्म हि पाषाणप्रतियोगिताको यो ध्वंसः स्वप्रतियोगिसमवायित्वादिसम्बन्धेन आश्रयतासम्बन्धेन वा पाषाणाऽवयवेषु परमाण्वात्मकेषु वर्तमानो निमित्तकारणीभूतस्तेन तत्रैवाऽवयवेषु समवायेन जन्यं भवति, इत्यस्माद्धेतोरित्यर्थः । कार्यकारणभावस्तु-'समवायसम्बन्धेन भस्म प्रति आश्रयतासम्बन्धेन पाषाणध्वंसः कारणमिति ॥ **पाषाणोपादानोपादेयत्वम्**=पाषाणस्य उपादानं समवायिकारणं यत् पाषाणारम्भकं पार्थिवावयवात्मकं द्रव्यम्, तस्योपादेयत्वं-कार्यत्वं भस्मनः सिद्धयतीत्यर्थः। अनुमानेन सिद्धयतीति यावत्। **अनुमानन्तु**-'पाषाणभस्म, पाषाणोपादानोपादेयम्'-पाषाणध्वंसजन्यत्वात्,-महापटध्वंसजन्यखण्डपटवदि'ति ॥ अत्रार्थे व्याप्तिं दर्शयति-**यद् द्रव्यमिति**। यद्द्रव्यम्=भस्मादिद्रव्यम्, यद्द्रव्यध्वंसजन्यम्=पाषाणादिद्रव्यध्वंसजन्यम् तद्=भस्मादिद्रव्यम्, तदुपादानोपादेयम्=पाषाणादिद्रव्यस्य यदुपादानं पार्थिवपरमाण्वादि तस्योपादेयं कार्यम् भवतीत्यर्थः ॥ अत्र व्याप्तौ प्रथम'द्रव्य'पदानुपादाने घटध्वंसप्रत्यक्षं प्रति विषयतया घटध्वंसस्य कारणत्वाद् 'यत्'पदेन घटध्वंसविषयकं प्रत्यक्षज्ञानमादाय तस्य घटात्मकद्रव्यध्वंसजन्यत्वात्मकहेतुमत्त्वेऽपि तादृशप्रत्यक्षस्य घटोपादानोपादेयत्वाऽभावात् साध्याभाववत्तया व्यभिचारस्तद्वारणाय प्रथमं 'द्रव्य'पदमिति । ननु ध्वंसत्वेन ध्वंसजन्यत्वं विवक्षणीयं न तु विषयत्वेन, तथा च न व्यभिचार इति चेत्। तर्हि घटध्वंसजन्ये रूपध्वंसे व्यभिचारवारणाय प्रथमं द्रव्यपदं बोध्यम्। द्वितीय'द्रव्य'पदानुपादाने दण्डस्वरूपो यो दण्डप्रागभावध्वंसस्तज्जन्ये घटे तादृशध्वंसोपादानस्यैवाऽप्रसिद्धत्वेन तदुपादानोपादेयत्वात्मकहेतोरसत्त्वाद् व्यभिचारस्तद्वारणाय-द्वितीयं द्रव्यपदम्। यदि नवीनमते दण्डप्रागभावध्वंसो न दण्डस्वरूपस्तदा न व्यभिचार इत्युच्यते, तदा-झटिति प्रारब्धक्षयार्थं सौभरिप्रभृतीनां मिथ्याज्ञानजन्याऽनादिवासनाध्वंसजन्ये युगपत् सहस्रकायव्यूहे तादृशवासनोपादानाऽनुपादेये व्यभिचारवारणाय-द्वितीयं द्रव्यपदं बोध्यम् ॥ प्रतिबन्धकचन्द्रकान्तादिद्रव्यस्यात्यन्ताऽभावजन्ये वन्ह्यादिद्रव्ये व्यभिचारवारणाय-ध्वंसपदम्। सालग्रामशिलाध्वंसजन्ये नारकीयशरीरे व्यभिचारवारणाय अदृष्टाद्वारकत्वेन ध्वंसजन्यत्वं विशेषणीयम् ॥ **वस्तुतस्तु**-'यत्प्रतियोगिकध्वंसनिष्ठाऽभावीयदैशिकविशेषणतासम्बन्धावच्छिन्नजनकतानिरूपित-समवायसम्बन्धावच्छिन्नजन्यताऽऽश्रयं यत् तत् तदुपादानोपादेयमि'ति द्रव्यादित्रिकसाधारणयत्तद्भ्यामनुगतव्याप्तिरेवाऽत्र बोध्या। तेन द्रव्यपदद्वयनिवेशनस्य ध्वंसत्वावच्छिन्नजनकतानिवेशनस्य अदृष्टाऽद्वारकत्वनिवेशनस्य प्रयोजनाऽभाव इति बोध्यम् ॥ तथा च 'पाषाणः,-पृथिवी,-गन्धवद्द्रव्योपादानोपादेयत्वादि'त्यनुमानेन

**जन्ये । इत्थं च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यस्य पाषाणस्यापि पृथिवीत्वम् । तथा च तस्यापि गन्धवत्त्वे बाधकाभावः । नानारूपेति । शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्तते न तु जलादौ, तत्र शुक्लस्यैव सत्त्वात् । पृथिव्यां तु एकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसंभवात् । नच यत्र नानारूपं नोत्पन्नं तत्राव्याप्तिरिति वाच्यं, रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य, रूपनाशवद्वृत्ति-**

---

पृथिवीत्वं सिद्धमिति व्याप्तिप्रदर्शने आशयः ॥ उक्तां व्याप्तिं दृष्टान्तेऽतिदिशति-**दृष्टञ्चैतदिति ।** एतत्=व्याप्तिः, महापटप्रतियोगिकध्वंसजन्ये खण्डपटे महापटस्योपादानानि यानि तन्त्वात्मकद्रव्याणि तदुपादेये तत्र खण्डपटे, दृष्टम्=दृष्टा,-प्रत्यक्षतो गृहीता ॥ तथा च पाषाणध्वंसजन्यं पाषाणभस्मापि पाषाणीयसमवायिकारणजन्यमेव भवतीति पाषाणपरमाणूनामपि पृथिवीत्वं सिद्ध्यतीति दर्शयति-**इत्थं** चेति । उक्तव्याप्त्या पाषाणस्य भस्मारम्भकपरमाण्वभिन्नपरमाण्वारब्धत्वसिद्धौ चेत्यर्थः ॥ **पाषाणपरमाणोः पृथिवीत्वादिति ।** 'पाषाणः,-पृथिवी,-पृथिवीजन्यत्वे सति द्रव्यत्वादि'त्यनुमाने विशेषणाऽसिद्धिपरिहाराय-'पाषाणपरमाणुः,-पृथिवी,-भस्मात्मकपृथिवीसमवायिकारणत्वा'दित्यनुमानं बोध्यमिति भावः ॥ **तज्जन्येति ।** भस्मात्मकपृथिवीसमवायिकारणजन्यस्य पाषाणस्य=द्व्यणुकाद्यात्मकपाषाणस्यापि **पृथिवीत्वं** सिद्ध्यतीति शेषः । **तथा च**=पृथिवीत्वसिद्धौ च । तस्याऽपि=पाषाणस्याऽपि, गन्धवत्त्वे=समवायेन गन्धाधिकरणत्वे, बाधकाऽभावः=बाधकस्य 'पाषाणो,-न पृथिवी,-गन्धाऽभाववत्त्वा'दित्याद्यनुमानस्य, अभावः=पक्षवृत्तित्वादिशून्यतया निर्बलत्वमिति भावः ॥ **नानारूपवती सते'**ति मूलोक्तं लक्षणान्तरं व्याख्याति-**शुक्लनीलादिभेदेनेति ।** शुक्लनीलपीतरक्तहरितकपीशचित्रभेदेनेत्यर्थः । नानाजातीयं शुक्लत्वनीलत्वपीतत्वरक्तत्वहरितत्वकपीशत्वचित्रत्वात्मकविरुद्धजातीयकं रूपं **पृथिव्यामेव**=पृथिवीत्वावच्छिन्ने एव समवायेन वर्तते, न तु जलादौ,=न जले न वा तेजसि वर्तते, तत्र=जले तेजसि वा, शुक्लस्यैव=शुक्लत्वजातीयस्यैव, सत्त्वात्=समवायेन वर्तमानत्वात्, तथा च-'समवायेन नानाजातीयरूपवत्त्वं पृथिव्या लक्षणमुपपन्नं जले तेजसि च वा नातिव्याप्तिरिति भावः ॥ विभिन्नेषु जलेष्वपि नानाशुक्लरूपाणां सत्त्वात् नानाजातीयमित्युक्तम् ॥ पृथिव्या नानाजातीयरूपवत्त्वे युक्तिं दर्शयति-**पृथिव्यां त्विति ।** एकस्मिन्नपि धर्मिणि=कालभेदेन भिन्नेऽपि व्यक्तित्वेन त्वभिन्नेऽत एव एकत्वविशिष्टे पृथिवीत्वावच्छिन्नेऽधिकरणे घटादावित्यर्थः । पाकवशेन=विजातीयतेजःसंयोगात्मको यो विभिन्नः पाकस्तदधीनतया, नानाजातीयानि यानि शुक्लनीलादिरूपाणि तेषां कालक्रमभेदेन सम्भवात्=जननादित्यर्थः ॥ अव्याप्तिमाशंक्य निषेधति-**न चेति ।** वाच्यमित्यनेनाऽन्वयः । यत्र घटादौ नानाजातीयं शुक्लनीलादिरूपं नोत्पन्नमेव तत्रैकजातीयरूपवति घटादौ 'समवायेन नानाजातीयरूपवत्त्वमि'तिलक्षणस्याऽव्याप्तिरित्यर्थः ॥ उत्तरयति-**रूपद्वयेति ।** रूपत्रयादीत्यपि बोध्यम् । पाकबलेन यत्र क्रमेण रूपद्वयमुत्पन्नं तादृशरूपद्वयवन्तो ये घटादयस्तत्र वृत्तिर्या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वरूपा तद्वत्त्वस्य लक्षणस्य विवक्षितत्वेन एकजातीयमात्ररूपवति घटादौ नाऽव्याप्तिः । जलत्वमादाय जलेऽतिव्याप्तिवारणाय-रूपद्वयवद्वृत्तीति । सत्ताजातिमादाय जलादावतिव्याप्तिवारणाय-द्रव्यत्वव्याप्येति । पृथिवीजलान्यतरत्वमादाय जलेऽतिव्याप्तिवारणाय-जातीति । कालिकेन जलत्वमादाय जलेऽतिव्याप्तिवारणाय वृत्तिमत्त्वं समवायेन बोध्यम् । न च समवायेन वृत्तिमत्ताकथनेनैव पृथिवीजलान्यतरत्वस्याऽग्रहणादेव जलेऽतिव्याप्त्यभावात् तदर्थमुपात्तं जातिपदं व्यर्थमिति वाच्यम् । रूपद्वयवति समवा-

**द्रव्यत्वव्याप्यजातिमत्त्वस्य वा, वाच्यत्वात्। वैशेषिकनये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वात्, न्यायनये घटादावपि तत्सत्त्वाल्लक्षणसमन्वयः षड्विध इति। मधुरादिभेदेन यः षड्विधो रसः स पृथिव्यामेव। जले च मधुरः।**

येन वर्तमानं जलपृथिव्युभयत्वमादायाऽतिव्याप्तिस्तद्वारणाय—जातिपदं बोध्यम्। जातिमत्त्वमपि समवायेन ग्राह्यम्, तेन कालिकेन पृथिवीत्ववत्त्वस्य जलादौ सत्त्वेऽपि नाऽतिव्याप्तिः। द्रव्यत्वव्याप्यत्वं नाम द्रव्यत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्, तेन द्रव्यत्वस्य स्वाऽभाववद्वृत्तित्वात्मकस्वव्याप्यत्ववत्त्वेऽपि जलादौ नातिव्याप्तिः। साक्षात्त्वं च द्रव्यत्वव्याप्यत्वरूपं बोध्यम्॥ लक्षणमेतन्मूलोक्ताऽनुसारेणाऽभिहितम्। वस्तुतस्तु—पाकजशुक्लरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम् नीलरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, पीतरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, रक्तरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, हरितरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, कपिशरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, चित्ररूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमित्येवं प्रत्येकं लक्षणं बोध्यम्॥ अथवा नीलवद्वृत्तिजलावृत्तिजातिमत्त्वमित्येवं प्रत्येकं लक्षणं कार्यमिति। ननु 'रूपद्वयेत्यादिलक्षणे रूपनिष्ठं द्वित्वं न सङ्ख्यारूपं, गुणे गुणाऽनङ्गीकारात्, किन्तु—अपेक्षाबुद्धिविशेषविषयतात्मकम्, अपेक्षाबुद्धिश्च 'अयमेक अयमेक'—इति, तन्निरूप्या विषयतैव 'इमे द्वे'—इतिद्वित्वरूपा। अपेक्षाबुद्धीनां च नानात्वेन तद्घटितलक्षणस्य गौरवमित्यतो नाशघटितलघुलक्षणमाह—**रूपनाशेति**' यदा भ्राष्ट्रे निक्षिप्ते आमघटे कृष्णरूपनाशो रक्तस्य चोत्पत्तिस्तत्र स्वरूपसम्बन्धेन श्यामरूपनाशवति घटे समवायेन वृत्तिर्या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वं समवायेन तद्वत्त्वमितिवक्तव्यत्वादित्यर्थः॥ जलत्वमादाय जलेऽतिव्याप्तिवारणाय—रूपनाशवद्वृत्तीति। जले तु न जलं विहाय रूपमात्रनाश इति तत्र नाऽतिव्याप्तिः। सत्तां चाऽऽदाय जलादावतिव्याप्तिवारणाय—द्रव्यत्वव्याप्येति॥ द्रव्यत्वव्याप्यत्वं द्रव्यत्वसमानाधिकरणाऽत्यन्ताभावप्रतियोगित्वम्। घटत्वमादाय पटादावव्याप्तिवारणाय—साक्षादिति। साक्षात्त्वं च द्रव्यत्वव्याप्याऽव्याप्यत्वम्। वृत्तिमत्त्वस्य जातिमत्त्वस्य च समवायेनोक्तौ न कालिकेन वृत्तिजलत्वमादाय कालिकेन पृथिवीत्ववत्तां चादाय जलेऽतिव्याप्तिरिति, नाशत्वं चाखण्डोपाधिरिति न गौरवम्॥ ननु रूपनाशवती का पृथिवीत्याकांक्षायां वैशेषिकमतेन न्यायमतेन च रूपनाशवतीं पृथिवीं स्फुटतया दर्शयति—**वैशेषिकनय** इति। वैशेषिकदर्शनकारकणादमते पाकेन पृथिवीपरमाणावेव पूर्वरूपनाशो रूपान्तरोत्पत्तिश्च भवति। न्यायदर्शनकारगोतममते तु पाकेन घटात्मकाऽवयविन्यपि पूर्वरूपनाशः परमाणुष्वपि पूर्वरूपनाशो भवतीति तद्वत्परमाणुं घटं वादाय लक्षणसमन्वयादिति भावः॥ तत्सत्त्वात्=रूपनाशसत्त्वात्॥ 'षड्विधस्तु रसस्तत्रे'तिमूलं व्याख्याति—**मधुरादीति**। मधुराम्ललवणकटुकषायतिक्तभेदेन यः=प्रसिद्धः षड्विधः=मधुरत्वाम्लत्वलवणत्वकटुत्वकषायत्वतिक्तत्वेतिषड्विधजातीयो रसः स पृथिव्यामेव=स्वसमवायिकारणे क्षितावेव, 'एव'कारेण पृथिवीत्वाऽनवच्छिन्ने जले षड्विधरसवत्त्वं निरस्तं वेदितव्यम्॥ एवकारव्यवच्छेद्यमाह—**जले चेति**। जलत्वावच्छिन्ने तु मधुरत्वजातीय एव रसः, न तु मधुरत्वभिन्नाम्लत्वादिजातीयरसस्तत्रेत्यर्थः॥ अत्र यदि 'समवायेन षड्विधरसवत्त्वं' लक्षणम्, तदा यत्र शर्करादौ षड्विधरसाः क्रमशो नोत्पन्नास्तत्राऽव्याप्तिः, यदि च 'समवायेन रसवत्त्वमात्रं' लक्षणम्, तदा जलेऽतिव्याप्तिः, अतो जातिघटितलक्षणं दर्शयितुमाह—**अत्रापीति**। पृथिव्याः षड्विधरसवत्त्वात्मकलक्षणाऽवसरेऽपीत्यर्थः॥ **पूर्ववदिति**। 'नानारूपवती मता'इत्यस्य व्याख्याऽवसरे रूपद्वयवद्वृत्तीत्यादिलक्षणानुसरणं यथा कृतं तथेत्यर्थः॥ परिष्कृतलक्षणमाह—**रसद्वयेति**। रसत्रयादीत्यपि बोध्यम्। रसद्वयवन्ति

**एव रसः । अत्रापि पूर्ववद्–'रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं'लक्षणार्थोऽवसेयः ॥ गन्धस्त्विति । द्विविध-इति वस्तुस्थितिमात्रं, न तु द्विविधगन्धवत्त्वं लक्षणं, द्विविधत्वस्य व्यर्थत्वात् । द्वैविध्यं च सौरभासौरभभेदेन बोध्यम् ॥ ३५ ॥**

यानि आम्रफलादीनि तत्र वृत्तिर्या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वात्मिका तद्वत्त्वं शर्करादावप्यस्तीति नाऽव्याप्तिः, जले च नाऽतिव्याप्तिरिति ॥ यद्यपि विभिन्नानां जलानां विभिन्नमधुररसवत्तया मधुररसद्वयवन्ति जलान्यपि भवन्तीति तत्राऽतिव्याप्तिः स्यात्, तथापि 'रसद्वयवदि'त्यस्य रसत्वव्याप्यमिथोविरुद्धमधुरत्वाम्लत्वादिजातीयवदित्यर्थः, अतो जले नाऽतिव्याप्तिशंकेति । कालिकेन रसद्वयवत्त्वस्य जलादौ सत्त्वेन तत्राऽतिव्याप्तिवारणाय समवायेन रसद्वयवत्त्वं बोध्यम् । समवायेन रसद्वयवत्पृथिव्यां कालिकेन वृत्तिजलत्वादिकमादाय जलादावतिव्याप्तिस्तद्वारणाय वृत्तित्वमपि समवायेन बोध्यम्, तच्च जातेर्विशेषणं न तु द्रव्यत्वस्य, जलादावतिव्याप्त्यापत्तेः । द्रव्यत्वव्याप्यत्वं नाम द्रव्यत्वसाक्षाद्व्याप्यत्वम्, तच्च द्रव्यत्वव्याप्यत्वे सति द्रव्यत्वव्याप्याऽव्याप्यत्वम् , तेन घटत्वादिकमादाय पटादौ नाऽव्याप्तिः ॥ द्रव्यत्वव्याप्यत्वं च द्रव्यत्वसमानाधिकरणात्यन्ताऽभावप्रतियोगित्वरूपम् , तेन द्रव्यत्वाऽभाववदवृत्तित्वरूपं व्याप्यत्वं द्रव्यत्वे गृहीत्वा जलादौ नातिव्याप्तिः ॥ जातिमत्त्वमपि समवायेन बोध्यम्, तेन कालिकेन पृथिवीत्ववत्तामादाय जलादौ नातिव्याप्तिः । जातिपदोपादानेन पृथिवीजलोभयत्वमादाय तद्वत्त्वस्य जलादौ नाऽतिव्याप्तिः ॥ अत्रापि लक्षणे रसे संख्यात्मकद्वित्वस्याऽसंभवात् 'अयमेक अयमेक' इत्यपेक्षाबुद्धिजन्या 'इमौ द्वा'वितिद्वित्वात्मिका विषयता कल्पनीयेति गौरवं स्यात्, अतो 'रसनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्व'मिति लक्षणमनुसरणीयम् । क्रमेण आश्रयतासम्बन्धेन रसप्रतियोगिताकध्वंसवति पृथिव्यां समवायेन वृत्तिर्या द्रव्यत्वस्य साक्षाद्व्याप्या पृथिवीत्वरूपा जातिः समवायेन तद्वत्त्वस्य सर्वत्रैकरसवत्यां नीरसायां च पृथिव्यां सत्त्वाल्लक्षणसमन्वयः । ध्वंसत्वमत्राऽखण्डोपाधिरूपं बोध्यम् ॥ **वस्तुतस्तु**–'रससमानाधिकरणजलाऽवृत्तिजातिमत्त्व'मितिलक्षणमुचितम् , एवम्–पाकजमधुरवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, अम्लवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, लवणवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, कटुमद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, कषायवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, तिक्तवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमितिप्रत्येकं लक्षणषट्कमत्र बोध्यम् ॥ **'गन्धस्तु द्विविधो मत'** इतिमूलं व्याख्याति–**द्विविध** इति । गन्धत्वव्याप्यसुरभित्वाऽसुरभित्वजातीयतया गन्धस्य द्वैविध्यं बोध्यम् । सुरभेरसुरभेर्वा गन्धस्य पृथिवीभिन्नेऽसंभवादेव द्वैविध्याऽप्रवेशेन 'समवायेन गन्धवत्त्वमात्रं'लक्षणं बोध्यम्, 'द्विविध'इत्युक्तिस्तु 'वस्तुस्थितिमात्रम्'=वस्तुनो गन्धस्य सुरभित्वेन असुरभित्वेन च द्विविधतया पृथिव्यां स्थितिरस्तीतिं सूचयितुं कृता, न तु द्वैविध्यस्य लक्षणे प्रवेश इत्यर्थः ॥ तदेवाह–**न त्विति ।** द्विविधगन्धवत्त्वं=गन्धत्वव्याप्यसुरभित्वाऽसुरभित्वजातीयवत्त्वमिति न लक्षणं कार्यमित्यर्थः ॥ तत्र हेतुमाह–**द्विविधत्वस्य व्यर्थत्वादिति ।** लक्षणे द्विविध'पदोपादानस्याऽतिव्याप्त्यादिवारणात्मकप्रयोजनशून्यत्वात्,असार्थक्यात् व्यर्थविशेषणघटितत्वादिति यावत् । **व्यर्थविशेषणघटितत्वं** च स्वसमानाधिकरण-प्रकृतसाध्यव्याप्यतावच्छेदक-पक्षवृत्तितावच्छेदक-धर्मान्तर-घटितत्वम्, 'पृथिवी, इतरभिन्ना, द्विविधगन्धादि'त्यत्र स्वं द्विविधगन्धत्वं तत्समानाधिकरणं गन्धत्वं, प्रकृतसाध्यस्य इतरभेदस्य व्याप्यतावच्छेदकं गन्धत्वं, पृथिव्यात्मकपक्षवृत्तितावच्छेदकं धर्मान्तरं गन्धत्वम्, तद्घटिततया द्विविधगन्धत्वं द्विविधत्वात्मकव्यर्थविशेषणघटितं भवतीतिव्याप्यत्वाऽसिद्धिभयान्न द्विविधत्वस्य लक्षणे प्रवेश इति भावः॥ गन्धस्य द्वैविध्यं प्रकाशयति–**द्वैविध्यं चेति ।** सौरभाऽसौरभभेदेन=सुरभित्वाऽसुरभित्वात्मकाऽ-

स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः ।
नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६ ॥

**स्पर्शइति । तस्याः=पृथिव्याः । अनुष्णाशीतस्पर्शवत्त्वं वायोरपि वर्तत इत्युक्तं पाकज इति । इत्थं च पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञापनार्थं तदुक्तम् । वस्तुतस्तु पाकजस्पर्शवत्त्वमात्रं लक्षणम्, अधिकस्य वैयर्थ्यात् । यद्यपि पाकजस्पर्शः पटादौ नास्ति तथापि पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः॥ नित्येति॥ सा**

---

वच्छेदकधर्मभेदेन प्रयोजकेन । द्वैविध्यम्=सुरभ्यसुरभिधर्मिभेदो बोध्य इत्यर्थः॥ अत्रापि निर्गन्धघटे अव्याप्तिवारणाय 'गन्धसमानाधिकरणजलाऽवृत्तिजातिमत्त्वम्, सुरभिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्, असुरभिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमिति प्रत्येकं लक्षणं बोध्यम् ॥

मूले—**'स्पर्शस्तस्यास्तु विज्ञेय इति** । तस्याः=पृथिव्याः स्पर्शस्तु, न उष्णः अनुष्णः—'अयमुष्ण'इतिप्रतीतिविषयताशून्य इत्यर्थः । न शीतः अशीतः—'अयं शीत'इतिप्रतीतिविषयताशून्य इत्यर्थः।'अयम् अनुष्णाऽशीत'इतिप्रत्यक्षप्रतीतिविषय इति भावः । **अन्ये** तु—अनुष्णोऽव्यक्तोष्णः,अशीतोऽव्यक्तशीतश्चेति व्याख्यान्ति, तन्न, अव्यक्तस्य प्रत्यक्षविषयत्वाऽनुपपत्तेः पृथिव्याः स्पर्शस्य सर्वथैवाऽप्रत्यक्षत्वापत्तेः ॥ पाको विजातीयतेजःसंयोगस्तस्माज्जायते यस्तादृशश्चेत्यर्थः ॥ अनुष्णश्च अशीतश्च—अनुष्णाशीतः, अनुष्णाशीतश्चासौ पाकजश्चेति कर्मधारयः । समवायेन अनुष्णाशीतपाकजस्पर्शः पृथिव्या विज्ञेयः=साधर्म्यतयाऽनुसन्धेय इत्यर्थः ॥ पृथिवीं विभजते—**नित्याऽनित्येति** । स्पष्टोऽर्थः ॥ **मुक्तावल्यां 'तस्याः'**—इतिपदस्यार्थमाह—**पृथिव्या इति** ॥ 'पाकज'पदसार्थक्यमाह—**अनुष्णाशीतस्पर्शवत्त्वमिति** । समवायेन वायावपि तादृशस्पर्शसत्त्वादतिव्याप्तिस्तन्निरासाय पाकजेति । वायौ स्पर्शपरावर्तकतेजःसंयोगात्मकस्य पाकस्याऽनङ्गीकारात् तत्र नातिव्याप्तिरिति भावः ॥ ननु तर्हि पृथिवीभिन्ने पाकजस्पर्शाऽभावात् पाकजस्पर्शवत्त्वमात्रं लक्षणमुचितमित्यभिलापं पूरयति—**इत्थञ्चेति** । पाकजस्पर्शवत्त्वोक्तौ चेत्यर्थः । पृथिव्याः स्पर्शोऽनुष्णाशीतः=उष्णशीतभिन्न एवेति ज्ञापनार्थं, तत्=अनुष्णाशीतेति पदम्, उक्तम्=प्रयुक्तम् । वस्तुतस्तु=निर्दोषतस्तु,समवायेन पाकजस्पर्शवत्त्वमात्रं लक्षणमत्राभिप्रेतम्, तस्यैवेतरभेदानुमितिसाधकत्वात्, 'पृथिवी,—इतरभिन्ना,—पाकजस्पर्शात्'—इति ॥ अनुष्णाशीतपाकजस्पर्शादिति हेतुस्तु व्यर्थविशेषणघटिततया व्याप्यत्वाऽसिद्धो भवतीत्याह—**अधिकस्य वैयर्थ्यादिति** । अधिकस्य अनुष्णाशीतपदस्य वैयर्थ्यात्=व्यभिचाराद्यवारकतया निष्प्रयोजनकत्वात् । तथा च—'स्व( अनुष्णाशीतपाकजस्पर्शत्व )समानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकपक्षवृत्तितावच्छेदकधर्मान्तर( पाकजस्पर्शत्व )घटितधर्मस्य अनुष्णाशीतपाकजस्पर्शत्वस्य गुरुतया तत्र व्याप्यतावच्छेदकताया एवाऽनभ्युपगमेन पृथिव्यामितरभेदानुमापकं तन्न स्यादतः पाकजस्पर्शवत्त्वमेव लक्षणं बोध्यमिति भावः ॥ 'पाकजस्पर्शवत्त्वस्य' अव्याप्तिं शंकते—**यद्यपीति** । अयं भावः—पटे पाको न भवति विजातीयतेजःसंयोगात्मकपाकस्य पटेऽङ्गीकारे पटस्यैव दाहापत्तेः, तथा च नैयायिकमते पाकजस्पर्शरहिते पटेऽव्याप्तिः । वैशेषिकमते तु परमाणावेव पाकस्वीकारेण सर्वेष्ववयविषु पार्थिवेषु अव्याप्तिः । आदिना उत्पत्तिकालीने घटादौ चाऽव्याप्तिः ॥ समाधत्ते—**तथापीति । पाकजेति** । पाकजस्पर्शवन्तो ये घटादयस्तत्र वृत्तिर्या द्रव्यत्वव्याप्या जातिः पृथिवीत्वरूपा तद्वत्त्वस्य निरुक्ते पटे घटे च सत्त्वाल्लक्षणसमन्वयात् । जलादावतिव्याप्तिवारणाय—पाकजेति । गन्धवत्त्व'मित्यादिपूर्वलक्षणेभ्यो लक्षणान्तरतासम्पादनार्थं पाकजद्रवत्वसमानाधिकरण-

पृथिवी द्विविधा, नित्या अनित्या चेत्यर्थः। अणुलक्षणा परमाणुरूपा पृथिवी नित्या॥३६॥

अनित्या तु तदन्या स्यात्सैवावयवयोगिनी।
सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥

अनित्येति। तदन्या=परमाणुभिन्ना पृथिवी द्व्यणुकादिरूपा सर्वाऽप्यनित्येत्यर्थः।

---

तेजस्त्वमादाय तेजस्यतिव्याप्तिवारणार्थं च स्पर्शपदम्। कालिकेन पाकजस्पर्शवत्त्वस्य कालादावतिव्याप्तिस्तद्वारणाय—समवायेन पाकजस्पर्शवत्त्वं बोध्यम्। समवायेन पाकजस्पर्शवत्यां पृथिव्यां कालिकेन जलत्वादिकमादाय जलादावतिव्याप्तिस्तद्वारणाय—समवायेन वृत्तित्वं बोध्यम्। तच्च जातेर्विशेषणम्। द्रव्यत्वव्याप्यत्वं नाम—द्रव्यत्वसाक्षाद्व्याप्यत्वम्, द्रव्यत्वव्याप्यत्वे सति द्रव्यत्वव्याप्याऽव्याप्यत्वमिति यावत्। तेन घटत्वादिकमादाय तद्भिन्ने च पटादौ नाऽव्याप्तिः। व्याप्यत्वं च स्वसमानाधिकरणात्यन्ताऽभावप्रतियोगितावच्छेदकधर्मवत्त्वरूपं बोध्यम्। जलपृथिवीद्वित्वमादाय जलेऽतिव्याप्तिवारणाय—जातीति। कालिकेन तादृशजातिमत्त्वस्य जलादावतिव्याप्तिस्तद्वारणाय—समवायेन जातिमत्त्वं बोध्यम्॥ अथ 'अनुष्णाशीतस्पर्शवद्वृत्तिवाय्ववृत्तिजातिमत्त्वमि'त्यपि लक्षणं बोध्यम्। एवं वायुभिन्नत्वे सति अनुष्णाशीतस्पर्शवत्त्वमि'त्यपि लक्षणं बोध्यम्। एवम् पृथिवीत्वजातिमत्त्वमित्यपि लक्षणं बोध्यम्। न चैवं लक्षणलक्ष्यतावच्छेदकयोरैक्यापत्तिरिति वाच्यम्। स्वार्थानुमाने तदैक्यस्याऽकिञ्चित्करत्वात्। यद्यपि परार्थानुमानस्थले लक्षणलक्ष्यतावच्छेदकयोरैक्ये सति 'शाब्दबोधद्वारा पञ्चावयववाक्यस्य यद् परार्थानुमितिप्रयोजकत्वं तन्नोपपद्येत, यतः 'पृथिवी, स्वेतरभिन्ना,—पृथिवीत्वा' दित्याकारक—पृथिवीपक्षकेतरभेदानुमापकस्य पृथिवीत्वस्य लक्षणत्वे उपनयात् पक्षधर्मतामात्रबोधवादिमते 'पृथिवीत्ववती पृथिवी'त्याकारकशाब्दबोधस्याऽव्युत्पन्नतया पञ्चावयववाक्याधीनशाब्दबोध एव न स्यात्, तथा च उपनयाऽनुत्थानप्रसंगापत्तिः स्यात्। तथापि उपनयात् पक्षधर्मतामात्रभानवादिमते नैतल्लक्षणम्, अपि तु उपनयात् 'साध्यव्याप्यहेतोः पक्षे' बोधवादिमते एवैतल्लक्षणम्, 'दण्डवान् रक्तदण्डवान्'इत्याकारकबोधस्य सर्वानुभवसिद्धतया 'इतरभेदव्याप्यपृथिवीत्ववती पृथिवी'ति बोधस्य सर्वसम्मतत्वादितिध्येयम्॥ **'नित्याऽनित्या च सा द्वेधे'ति** मूलं व्याख्याति-**सा=पृथिवीति**। नित्यत्वम्—ध्वंसभिन्नत्वे सति ध्वंसाऽप्रतियोगित्वम्। ध्वंसेऽतिव्याप्तिवारणाय—ध्वंसभिन्नत्वमिति। घटादावतिव्याप्तिवारणाय—विशेष्यदलम्। अथवा पृथिवीत्वविशिष्टनित्यत्वं ध्वंसाऽप्रतियोगित्वमात्रं वक्तव्यम्। अनित्यत्वम्—ध्वंसप्रतियोगित्वप्रागभावप्रतियोगित्वाऽन्यतरवत्त्वम्, तेन न ध्वंसे प्रागभावे वाऽव्याप्तिः। वस्तुतः पृथिवीत्वविशिष्टाऽनित्यत्वं ध्वंसप्रतियोगित्वमात्रं प्रागभावप्रतियोगित्वमात्रं वा वक्तव्यमिति ध्येयम्॥ **अणुलक्षणा=**अणुः परमाणुः स एव लक्षणं स्वरूपं यस्याः सा एतादृशी परमाणुस्वरूपा या पथिवी सा नित्येत्यर्थः॥ अणुत्वस्य द्व्यणुकेऽपि सत्त्वाद् 'अणुलक्षणा'इत्यस्य 'परमाणुरूपे'त्यर्थोऽभिहितः ॥ ३६ ॥

**"अनित्या तु तदन्येति'**मूलम्। तदन्या=परमाणुतोऽन्या भिन्ना द्व्यणुकादिस्वरूपा पृथिवी तु अनित्या स्यात्=भवति, सैव=अनित्यैव च पृथिवी,—अवयवैः सह युज्यते—समवायेन सम्बध्यते इति अवयवयोगिनी=सावयवा भवति। सा च=कार्यरूपाऽनित्या पृथिवी, त्रिधा=त्रिप्रकारा-अवान्तरधर्मत्रयावच्छिन्नेति यावत्, भवति। तत्रैका देहम्=पार्थिवशरीरत्वावच्छिन्ना। द्वितीया—इन्द्रियम्—पार्थिवेन्द्रियत्वावच्छिन्ना। तृतीया—विषयः—पार्थिवविषयत्वावच्छिन्नेत्यर्थः॥ **मुक्तावल्याम्**—'तदन्या'—पदार्थमाह—**परमाणुभिन्नेति**। परमाणुत्वावच्छिन्नप्रतियोगिताकभेदवती पृथिवीत्यर्थः॥

**सैव अनित्या पृथिव्येवावयववतीत्यर्थः॥ नन्ववयविनि किं मानं, परमाणुपुञ्जैरेवोपपत्तेः, न च परमाणूनामतीन्द्रियत्वाद्घटादेः प्रत्यक्षं न स्यादिति वाच्यम्, एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वात्। यथैकस्य केशस्य दूरेऽप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वम्। न चैको घटः स्थूल इति बुद्धेरनुपपत्तिरिति वाच्यम्, एको महान्धान्यराशिरितिवदुपपत्तेः।**

---

तां नाम्ना स्पष्टयति–**द्व्यणुकादिरूपेति**। द्व्यणुकत्र्यणुकचतुरणुकपिण्डघटब्रह्माण्डगोलकाद्यात्मिका सर्वाऽपि अनित्या–ध्वंसप्रतियोगिनी प्रागभावप्रतियोगिनी वा भवतीत्यर्थः॥ सैव च अनित्या पृथिवी एव अवयववती = समवेतत्वसम्बन्धेनाऽवयवविशिष्टेत्यर्थः॥ अथ बौद्धाः–'खरस्नेहोष्ण्येरणस्वभावाश्चतुर्विधाःपरमाणवः, तत्राऽऽद्यो रूपरसगन्धस्पर्शस्वभावः, द्वितीयो रूपरसस्पर्शस्वभावः,तृतीयो रूपस्पर्शस्वभावः, चतुर्थः स्पर्शस्वभावः, एते च मिथः संहताः पृथिव्यप्तेजोवायुशब्दैः क्रमशो व्यवह्रियन्ते, तानि चत्वारि भूतानीति कथ्यन्ते, ते च पृथिव्यादयः संघातभावमापन्नाः शरीरेन्द्रियविषयात्मका भवन्ति,न त्ववयविनस्ते, प्रमाणाऽभावात्। अत एव नित्याऽनित्यविभागोऽप्ययुक्तः, परमाणुपुञ्जानां तादृशविभागाऽसम्भवादित्याशंकन्ते–**नन्ववयविनीति**। अवयविनि=समवेतत्वसम्बन्धेन अवयवविशिष्टे द्रव्ये, किं मानम् = किं प्रमाणमुपलभ्यते ?, न किञ्चिदित्यर्थः॥ ननु 'अयं घट'इत्यादि प्रत्यक्षप्रतीतिरेव घटस्याऽवयवित्वे प्रमाणं भविष्यत्यत आह–**परमाणुपुञ्जैरेवेति**। पुञ्जो नाम धान्यराशिगतसंयोगसमानोऽवयवित्वाऽप्रयोजको विलक्षणसंयोगस्तद्विशिष्टैः परमाणुभिरेव, 'अयं घट'इति प्रत्यक्षस्योपपत्तेः=सिद्धेः = निर्वाहात्, तथा च तस्याऽवयवित्वे प्रबलप्रमाणाऽभाव एवेति भावः॥ बौद्धो नैयायिकस्याऽभिप्रायमुत्थाप्य खण्डयति–**न चेति**। वाच्यमित्यनेनाऽन्वयः। परमाणूनाम् अतीन्द्रियत्वात्=इन्द्रियजन्यप्रत्यक्षाऽविषयत्वात्, घटादेः,=पुञ्जाश्रयपरमाणुसंघातात्मकघटादेः, बौद्धमते प्रत्यक्षं न स्यात्, तथा च प्रत्यक्षाऽनुभवविरोधः स्यात् तस्मादवयवी स्वीकार्य इति शंकाऽभिप्रायः॥ बौद्धः समाधत्ते–**एकस्येति**। एकस्यैकस्य परमाणोः, अप्रत्यक्षत्वेऽपि= इन्द्रियजन्यप्रत्यक्षविषयत्वाऽभाववत्त्वेऽपि, तत्समूहस्य=परमाणुसमूहस्य,–विलक्षणसंयोगाश्रयपरमाणूनाम्, प्रत्यक्षत्वात्=इन्द्रियजन्यप्रत्यक्षविषयत्वात्। तथा च यथा चाक्षुषप्रत्यक्षं प्रति आलोकसंयोग उद्भूतरूपं महत्त्वं च कारणं तथा विलक्षणसंयोगस्य स्वतन्त्रकारणत्वात् पुञ्जभावापन्नपरमाणूनां प्रत्यक्षं स्यादेवेति भावः॥ एतद् दृष्टान्तेन समर्थयति–**यथैकस्येति**। यथा एकस्य केशस्य दूरे=दूरत्वदोषे सति, अप्रत्यक्षत्वेऽपि तत्समूहस्य=केशानां समूहस्य,- दूरत्वदोषे सत्यपि समुदायभावापन्नकेशानामित्यर्थः, प्रत्यक्षत्वं = चक्षुरिन्द्रियजन्यप्रत्यक्षविषयतासंभवः, तथा परमाणूनां महत्त्वाऽभावेपि समुदितभावापन्नानां तेषां प्रत्यक्षत्वेऽविरोध इत्यर्थः, प्रयोगस्तु–परमाणुपुञ्जः–प्रत्यक्षः–पुञ्जत्वात्, केशपुञ्जवत्॥ बौद्धः पुनर्नैयायिकमतमाशंक्य निषेधति–**न चैक इति**। पुञ्जभावापन्नघटात्मकपरमाणूनामनेकत्वेन अणुपरिमाणवत्त्वेन च तद्विरुद्धं यद् एकत्वं स्थूलत्वं=महत्परिमाणं च तद्विषयिणी 'एकः (स्थूलः) महान् घट'इति प्रत्यक्षप्रतीतेः अनुपपत्तिः=असिद्धिः–अपलापः स्यादिति यावत्॥ तत्समाधत्ते–**एको महानिति**। यथा अपकृष्टानां सर्षपादिधान्यानां राशिभावमापन्नानां बहूनाम् अपकृष्टत्व-बहुत्वविरोधिनी 'एको महान्' धान्यराशि'रितिप्रतीतिः प्रत्यक्षात्मिका भवति तत्र धान्यराशिसमुदायगतैकत्वं महत्त्वं चादाय सा प्रतीतिर्निर्वहति, तद्वत् परमाणुसमूहगतैकत्वमादाय एकपरमाणुसंयुक्ताऽपरपरमाणुसंयुक्ताऽन्यपरमाणुसंयोगाद्यात्मकमेव महत्त्वमादाय च 'एको महान् घट'इति प्रत्यक्षप्रतीतिः निर्वहत्येव। तस्मात् नास्ति कश्चिदवयवीति भावः॥

मैवं, परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षत्वाऽयोगात् । दूरस्थकेशस्तु नातीन्द्रियः, सन्निधाने तस्यैव प्रत्यक्षत्वात् । न च तदानीमदृश्यपरमाणुपुञ्जाद् दृश्यपरमाणुपुञ्जस्योत्पन्नत्वान्न प्रत्यक्षत्वे विरोध इति वाच्यम् , अदृश्यस्य दृश्यानुपादानत्वात् । अन्यथा चक्षुरूष्मादिसंततेरपि कदाचिद् दृश्यत्वप्रसङ्गात् । न चाति-

अतीन्द्रियाणां यो विलक्षणः संयोगस्तस्य न स्वातन्त्र्येण गौणतया वाऽपि प्रत्यक्षप्रयोजकत्वम्, समुदिताऽऽकाशकालदिगादीनामपि प्रत्यक्षविषयत्वापत्तेः, न च रूपिद्रव्याणां समुदायस्यैव प्रत्यक्षप्रयोजकत्वमिति वाच्यम् । तथासति रूपस्यैव कारणत्वं प्राप्तम्, न तु विलक्षणसंयोगस्य, एवं द्व्यणुकात्मकसमुदायस्य सरूपस्यापि प्रत्यक्षाऽभावात् महत्परिमाणमपि कारणं वक्तव्यम्, तथा च विलक्षणसंयोगस्य सर्वथैवाऽन्यथासिद्धत्वमित्यभिप्रायेण समाधत्ते–**मैवमित्यादिना** । न्यायमते परमाणुः परमसूक्ष्म आदिरवयवः स्वयं निरवयवोऽतीन्द्रियो नित्य इति । बौद्धमते उत्पत्तिविनाशवन्तः क्षणभङ्गुराः परमाणवः प्रतिक्षणं संघातभावापन्नाश्चेति वस्तुस्थितिः । तत्र न्यायमते परमाणोरतीन्द्रियत्वेन=महत्परिमाणशून्यत्वेनाऽप्रत्यक्षतया, तत्समूहस्यापि=परमाणुसमूहस्यापि–निरुक्ताऽन्यथासिद्धविलक्षणसंयोगाश्रयसंघातात्मकपरमाणूनामपीत्यर्थः । प्रत्यक्षत्वाऽयोगात्=प्रत्यक्षविषयत्वाऽसंभवात् । तथा च शतमप्यन्धानां न पश्यति सहस्रमपि पङ्गूनां न चलतीति न्यायेन स्वभावतोऽतीन्द्रियाः परमाणवः संहता अपि न प्रत्यक्षविषयीभवितुमर्हन्तीति भावः ॥ यदुक्तं परमाणुपुञ्जः,–प्रत्यक्षः,–पुञ्जत्वात्,–केशपुञ्जवदिति । तत्र दूरस्थकेशस्तु स्वभावतो नातीन्द्रिय इति दृष्टान्तस्य वैषम्यं दर्शयति–**दूरस्थकेशस्त्विति** । दूरप्रदेशस्थो यः केशः स तु नातीन्द्रियः=न प्रत्यक्षाऽयोग्यः, सन्निधाने=समीपदेशस्थत्वे सति तु तस्यैव=दूरस्थकेशस्यापि प्रत्यक्षत्वात्,= दूरतादोषनिवृत्तौ सत्याम् प्रत्यक्षविषयत्वेनाऽतीन्द्रियत्वाऽभावात् केशसमुदायस्यापि स्वाभाविकप्रत्यक्षत्वं परमाणोस्तु स्वाभाविकमेवाऽप्रत्यक्षत्वमतस्तत्पुञ्जस्यापि न प्रत्यक्षत्वमिति भावः ॥ ननु वस्तुतो यद् अतीन्द्रियं तत्समुदायः प्रत्यक्ष इति न वयमाचक्ष्महे, किन्तु क्षणभङ्गुरेषु प्रतिक्षणभिन्नेषु परमाणुषु ये पिण्डकपालघटादिव्यपदेशभाजः परमाणुसन्तानास्ते नाऽतीन्द्रियाः, अतस्ते चक्षुषा गृह्यन्ते ये तु तत्पूर्वतनास्ते त्वतीन्द्रियाः, अतो न गृह्यन्ते इति वक्ष्यामः,–इत्याशंकां निराकुरुते–**न चेति** । तदानीं='अयं घट'–इत्याकारकप्रत्यक्षपूर्वक्षणे एव, अदृश्यपरमाणुपुञ्जात्=प्रत्यक्षाऽविषयसमुदितपरमाणुभिः, दृश्यपरमाणुपुञ्जस्य=प्रत्यक्षयोग्यपरमाणुसमुदायस्य, उत्पन्नत्वात्=जातत्वात्, 'यत् सत् तत् क्षणिक'मिति क्षणभङ्गवादिनां मते परमाणूनामुत्पत्तिस्वीकारान्न प्रत्यक्षत्वे विरोध इत्यभिप्रायः॥ **अथ** 'घट'व्यपदेशार्हाः परमाणवो दृश्यन्ते 'चक्षुरादि'व्यपदेशार्हास्तु प्रतिक्षणमुत्पद्यमाना अपि न-दृश्यन्तेऽतो व्यवस्थोपपत्तये–दृश्यत्वे दृश्योपादेयत्वं प्रयोजकम् अदृश्यत्वे चाऽदृश्योपादेयत्वं प्रयोजकमिति **बौद्धेन** वक्तव्यम्, तथा च अदृश्यैः पूर्वपरमाणुभिः कथं घटात्मका दृश्याः परमाणवः उपादीयन्त इत्याशयेन नैयायिकः समाधत्ते–**अदृश्यस्येति** । त्वन्मतेऽप्रत्यक्षस्य पूर्वपरमाणुपुञ्जस्य, दृश्याऽनुपादानत्वात्=प्रत्यक्षपरमाणुपुञ्जकारणत्वाऽभावात् । दृश्यपरमाणुपुञ्जे दृश्योपादेयत्वाऽभावान्न दृश्यपरमाणुपुञ्जोत्पत्तिरेवेति भावः ॥ उक्तनियमाऽभावे त्वापत्तिं दर्शयति–**अन्यथेति** । अदृश्यस्य दृश्योत्पादकत्वस्वीकारे इत्यर्थः । दृश्यत्वे दृश्योपादेयत्वस्याऽप्रयोजकत्वे इति यावत् ॥ **चक्षुरूष्मादीति** । आदिना ताम्बूलचर्वणोपयोगिचूर्णगततेजःपरिग्रहः । तथा च प्रतिक्षणं जायमानायां चक्षुस्सन्ततौ ऊष्मसन्ततौ चूर्णादिगततेजस्सन्ततौ च कदाचिद् एकस्य दृश्यस्याऽप्युत्पत्तिसम्भवेन तत्प्रत्यक्षापत्तेः, न त्वेवमनुभूयतेऽतो न दृश्यपुञ्जोत्पत्तिरिति भावः ॥ अथ स्थलविशेषेऽदृश्यस्य

तप्ततैलादौ कथमदृश्यदहनसंततेर्दृश्यदहनोत्पत्तिरिति वाच्यम्, तत्र तदन्तःपातिभिर्दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपगमात्। न चादृश्येन द्व्यणुकेन कथं दृश्यत्रसरेणोरुत्पत्तिरिति वाच्यं, यतो न दृश्यत्वमदृश्यत्वं वा कस्यचित्स्वभावादाचक्ष्महे किन्तु महत्त्वोद्भूतरूपादिकारणसमुदायवशाद् दृश्यत्वं, तदभावे चादृश्यत्वम्। तथा च त्रसरेणोर्महत्त्वात्प्रत्यक्षत्वं न तु द्व्यणुकादेस्तदभावात्। न हि त्वन्मतेऽपि सम्भवतीदं, परमाणौ महत्त्वाभावात्।

इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षसिद्धत्वादनित्यत्वम्। तेषां

---

दृश्योपादानत्वमस्तीत्याशंकते–**न चातितप्तेति**। कटाहस्थेऽतितप्ततैले पूरिकादिपरिपाचनकालेऽदृश्यो वह्निर्भवति तत्र तादृशाऽदृश्यवह्निसन्ततेः कथं=केन प्रयोजकेन जलादिक्षेपे सति दृश्यदहन-(वह्नि)सन्ततेरुत्पत्तिर्भवति? न केनचिदन्येन, किन्तु अदृश्यदहनसन्तत्यात्मकादेव प्रयोजकात् दृश्यदहनसन्तत्युत्पत्तिर्भवति, तथा च दृश्यत्वे दृश्योपादेयत्वमेव प्रयोजकमिति नियमो व्यभिचरित इति भावः॥ नैयायिकः समाधत्ते–**तत्र तदन्तरिति**। तत्र=अतितप्ततैलादौ, तप्ततैलान्तःपातिभिः चुल्लिकास्थदृश्यवह्न्यवयवैः कटाहतलद्वारा तैलबिन्दुवादिद्वारा वाऽन्तःप्रविष्टैरेव स्थूलवह्निसन्तत्युत्पत्तेरङ्गीकारात् नोक्ते तव नियमे व्यभिचार इति, अतो न परमाणुपुञ्जस्य प्रत्यक्षमिति हृदयम्॥ पुनः शंकते–**न चाऽदृश्येनेति**। अप्रत्यक्षद्व्यणुकेन प्रत्यक्षत्रसरेणोरुत्पत्तिः कथं=केन प्रयोजकेन जायते?, न द्व्यणुकातिरिक्तेन केनचित्, तस्मात् अदृश्यादपि दृश्योत्पत्तिर्भवति, अतो दृश्यत्वे' दृश्योपादेयत्वमेव प्रयोजकमिति न नियमः।

ननु तर्हि त्वया बौद्धेन दृश्यत्वप्रयोजकं सर्वमतसाधारणं किंचिदङ्गीकार्यं येनोक्तस्थले व्यभिचारो न स्यात्,–इत्यादिशयोभयमतसाधारणं दृश्यत्वप्रयोजकं नियमं 'दृश्यत्वे दृश्योपादेयत्वं प्रयोजक'मितिनियमाभासमनङ्गीकुर्वन् सन् दर्शयति–**यतो नेत्यादिना**। यतः=यस्माद्धेतोः, दृश्यत्वस्याऽदृश्यत्वस्य च कारणसमाजाधीनधर्मात्मकत्वादिति हेतोरिति यावत्। कस्यचिदपि पदार्थस्य दृश्यत्वं–प्रत्यक्षत्वम्, अदृश्यत्वम्–अप्रत्यक्षत्वम् वा। स्वभावात्=कारणनैरपेक्ष्यात्, उपादानदृश्यत्वाऽदृश्यत्वाऽधीनाद्वा, न आचक्ष्महे=नाङ्गीकुर्मः। किन्तु=अपि तु, महत्त्वं–महत्परिमाणम्, उद्भूतरूपं–'यद्यत्र प्रत्यक्षत्वप्रयोजकसन्निकर्षवत्ता स्यात् तर्ह्युपलभ्येते' त्यापादनविषयं रूपम्, आदिना आलोकसंयोगः चक्षुःसंयोगादिरपि ग्राह्यः। एतादृशकारणसमुदायवत्त्वं यत्र तत्र दृश्यत्वं, तदभावे च=यत्र च महत्त्वोद्भूतरूपादिकारणसमुदायवत्त्वं प्रयोजकं न, तत्र न दृश्यत्वमिति व्याप्तिमङ्गीकुर्मः, तत्राऽपि तत्राऽविरोधात्॥ तथा च=तादृशनियमाङ्गीकाराच्च। त्रसरेणोर्महत्त्वात्=महत्परिमाणादिवत्त्वात्मकप्रयोजकवत्तया, प्रत्यक्षत्वं भवति, द्व्यणुकादेः=द्व्यणुकस्य परमाणूनां च, तदभावात्=महत्त्वादिमत्त्वात्मककारणाऽभावात् न तु प्रत्यक्षं भवतीति, **नहीति**। तत्र बौद्धस्य मतेऽपि, परमाणौ=परमाणुपुञ्जे कार्ये महत्त्वाभावात्=महत्त्वादिकारणाऽभावात्, **इदम्**=कारणीभूतपरमाणुपुञ्जस्य महत्त्वाभावाददृश्यत्वोपपादनेऽपि कार्यभूतपरमाणुपुञ्जेऽपि महत्त्वाभावाद् दृश्यत्वोपपादनं, न संभवति=नैवोपपद्येत, तस्मात् परमाणुभिः द्व्यणुकादिद्वारा उत्पाद्यमानो घटादिरवयवी महत्परिमाणाद्याश्रयः स्वीकार्यः इत्यवयविसिद्धिरिति भावः॥ न च परमाणुपुञ्जे महत्त्वं स्वीक्रियते इति वाच्यम्। महत्त्वस्याऽनेकपरमाणुषु अन्येषु कल्पनाऽपेक्षया लाघवाद् घटात्मकावयविस्वीकारस्यैवोचितत्वादिति दिक्॥

**इत्थं चेति**। परमाणौ महत्त्वाभावादित्यादियुक्त्या चेत्यर्थः। अवयविसिद्धौ सत्याम्, तेषाम्=

**चावयवावयवधाराया अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः। अतः क्वचिद्विश्रामो वाच्यः, यत्र तु विश्रामस्तस्याऽनित्यत्वेऽसमवेतभावकार्योत्पत्तिप्रसङ्ग इति तस्य नित्यत्वम्। महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः, न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यं, 'त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात्, घटवदि'त्यनुमानेन तदवयवसिद्धौ, त्रसरेणोरवयवाः सावयवाः महदारम्भकत्वात् कपालवदित्यनुमानेन**

---

घटात्मकाऽवयविनाम्, उत्पादविनाशयोः=आद्यक्षणसम्बन्धात्मकोत्पत्तेः चरमक्षणसम्बन्धात्मकध्वंसस्य च, प्रत्यक्षप्रमाणसिद्धत्वात्, अनित्यत्वम्=प्रागभावप्रतियोगित्वं ध्वंसप्रतियोगित्वं चेत्यर्थः। तेषां च घटाद्यवयविनाम् अवयवस्यावयवस्तस्याऽवयवस्तस्य तस्याप्यवयव इत्येवं धारायाः, अनन्तत्वे=असंख्यत्वे क्वचिदपि विश्रामाऽभावे, मेरुपर्वतावयवानां सर्षपावयवानां च धाराया अनन्ततया धारायाः साम्यत्वे सति धारानिरूपकाऽवयवानां साम्यापत्तिः, अवयवानां साम्यापत्तौ सत्यां च मेरुसर्षपयोरवयविनोरतिविषमयोरपि साम्यप्रसङ्गः=समानपरिमाणापत्तिः, परस्परपरिमाणतारतम्याऽभावः स्यात्, तत्तु प्रत्यक्षविरुद्धमप्रामाणिकं वस्त्वापद्येतेति। अतः=समानपरिमाणवत्ताप्रसङ्गवारणार्थम्, अवयवधारायाः क्वचित्=कुत्रचित् अन्तिमेऽवयवे विश्रान्तिः वक्तव्येत्यर्थः॥ तस्य नित्यत्वं साधयति-**यत्रेति**। यत्र तु=यस्मिन्नन्तिमेऽवयवे, विश्रामः=धारायाः अन्तः, तस्य=अन्तिमाऽवयवस्य, अनित्यत्वे=ध्वंसप्रतियोगित्वे सति, असमवेतभावकार्योत्पत्तिप्रसङ्ग इति=भावात्मककार्यस्य द्रव्यगुणकर्मात्मकस्य असमवेतत्वप्रसंगादित्यर्थः। पृथिवीजलतेजोवायूनामवयवधाराविश्रामाश्रया येऽन्तिमा अवयवाः, (परमाणुत्वेन अभिमतास्ते) यदि अनित्याः स्युस्तर्हि तेषां क्वचित् सर्वथा नाशात् समवायिकारणानां तेषां नाशादेव द्व्यणुकादिकं कार्यं समवायेन कुत्रोत्पद्येत? न कुत्रचित्, किं तर्हि, समवायिकारणं विना यत्र क्वाप्युत्पद्येतेत्यापत्तिरिति भावः। तादृशापत्तिवारणाय **तस्य**=विश्रामाश्रयावयवस्य, नित्यत्वं=ध्वंसाऽप्रतियोगित्वादिकं स्वीकार्यमिति॥ तस्य परमाणुत्वं साधयति-**महदिति**। तरः उत्कृष्टता, तमः-अत्युत्कृष्टता, तरात् तमः तरतमः तरतमस्य भावस्तारतम्यम्, महत्परिमाणस्य तारतम्यं महत्परिमाणतारतम्यं तस्य, तथा च पराकाष्ठापन्नोत्कर्षाश्रयमहत्परिमाणस्येत्यर्थः। गगनादौ=गगने काले दिशि आत्मनि च, विश्रान्तत्वमिव=यथा वृत्तित्वं भवति तथा अणुपरिमाणतारतम्यस्य=पराकाष्ठापन्नोत्कर्षाश्रयाऽणुपरिमाणस्यापि गुणस्य, क्वचित्=कुत्रचित् विश्रान्तत्वं वृत्तित्वमस्तीति, यत्र च सूक्ष्मतमे द्रव्ये वृत्तित्वं, **तस्य**=सूक्ष्मतमस्यान्तिमावयवस्य नित्यस्य पूर्वोक्तस्य, परमाणुत्वसिद्धिः=परमाणुसंज्ञाप्रवृत्तिनिमित्तभूतपरमाणुत्वसिद्धिरित्यर्थः॥ अथ चार्वाका अप्रत्यक्षे परमाणौ द्व्यणुके च मानाभावात् त्रसरेणव एव अणुपरिमाणाश्रया जगत्कारणीभूताश्चेति मन्यन्ते, दीधितिकारोऽपि त्रसरेणुपर्यन्तमेवाऽवयवधाराविश्राममङ्गीकृत्य जगत्कारणतां त्रसरेणावेव स्वीकरोतीति, तन्मतखण्डनाय तदाशंक्य निराकरोति-**न च त्रसरेणावेवेति**। पराकाष्ठापन्नोत्कर्षाश्रयाऽणुपरिमाणस्य विश्रामो वृत्तित्वं त्रसरेणावेवास्तु-स्वीकरोत्विति-शंकार्थः॥ समाधत्ते-**त्रसरेणुरिति**। परमाणुद्वयस्यैकं द्व्यणुकम्, द्व्यणुकत्रयस्यैकस्त्रसरेणुः, स चात्र पक्षः, साध्यं च सावयवत्वं=समवायेनाऽवयववत्त्वम्,-समवेतद्रव्यत्वमिति यावत्, हेतुश्च-चाक्षुषद्रव्यत्वात्=संयोगसन्निकर्षप्रयोज्यचाक्षुषप्रत्यक्षविषयतावत्त्वात्॥ अवयविसंयोगस्याऽवयवसंयोगजन्यतया त्रसरेणोः सावयवत्वमुपपन्नमिति हृदयम्॥ घटवदिति दृष्टान्तः, यथा घटः चक्षुःसंयोगजन्यप्रत्यक्षविषयताश्रयः सावयवो दृष्टस्तथा त्रसरेणुरपीति भावः। इत्यनुमानेन **तदवयव**-

**तदवयवसिद्धेः। न चेदमप्रयोजकम्, अपकृष्टमहत्त्वं प्रत्यनेकद्रव्यवत्त्वस्य प्रयोजकत्वात्। न चैवं क्रमेण तदवयवधाराऽपि सिध्येदिति वाच्यम्, अनवस्थाभयेन तदसिद्धेरिति। सा चेति। सा कार्यरूपा पृथिवी त्रिधेत्यर्थः। शरीरेन्द्रियविषयभेदादित्यर्थः॥ ३६॥ ३७॥**

---

सिद्धौ=तस्य त्रसरेणोः अवयवस्य द्व्यणुकस्य **सिद्धौ**=विषयतासम्बन्धेन प्रमितिमत्त्वे सति द्व्यणुकाऽवयवसिद्ध्यर्थमप्यनुमानमाश्रयणीयमित्यर्थः। तदेवाह–**त्रसरेणोरवयवा** इति। अयं पक्षः, तत्र समवायेन त्रुटिमत्वं पक्षतावच्छेदकं बोध्यम्। साध्यं-'सावयवा' इति, समवेतद्रव्यत्वमिति तदर्थः। हेतुः–महदारम्भकत्वादिति,–महत्पदार्थ( त्रसरेणु )निष्ठसमवायसम्बन्धावच्छिन्नाऽऽधेयतानिरूपिताऽधिकरणतावत्त्वादित्यर्थः। कपालवदितिदृष्टान्तः। कपालं यथा घटात्मकमहत्पदार्थनिष्ठसमवायावच्छिन्नाधेयतानिरूपिताऽधिकरणतावत् सावयवं ( कपालिकासमवेतद्रव्यत्ववत् ) दृष्टम्, तथा द्व्यणुकमपाति भावः। इत्यनुमानेन तदवयवसिद्धेः=तस्य त्रसरेण्ववयवस्य द्व्यणुकस्यापि योऽवयवस्तस्य सिद्धेः=विषयतासम्बन्धेन प्रमितिमत्त्वादित्यर्थः॥ **वस्तुतस्तु**–'त्रसरेणुः–'सावयवद्रव्यारब्धः,–चाक्षुपद्रव्यत्वात्,–घटवदि'त्येकेनैवानुमानेन निर्वाह इति ध्येयम्॥

**ननु** 'त्रसरेणुः,–सावयवः,–चाक्षुपद्रव्यत्वा'दित्यत्र 'हेतुरस्तु साध्यं मास्तु'–इति ( हेतुः साध्यव्यभिचारी न वे'ति )व्यभिचारशंकाग्रस्तत्वात चाक्षुपद्रव्यत्वादिति हेतुर्न सावयवत्वं साधयितुं क्षमते–इतिचार्वाकाशंकां निषेधति–**न चेदमिति**। इदम्=चाक्षुपद्रव्यत्वादिति हेतुः, न चाऽप्रयोजकम्=न च अव्याप्यः,–न च असाधकः,–न च व्यभिचारशंकानिवर्तकतर्कशून्य इति यावत्॥ कुतः ?, तत्र तर्कसत्त्वात्, तथाहि–'चाक्षुपद्रव्यत्वं यदि सावयवत्वव्यभिचारि स्यात् तर्हि सावयवत्वव्याप्याऽनेकद्रव्यत्वव्याप्याऽपकृष्टमहत्त्वव्याप्यं न स्यात्, किन्तु चाक्षुपद्रव्यत्वं सावयवत्वव्याप्याऽनेकद्रव्यत्वव्याप्याऽपकृष्टमहत्त्वव्याप्यं भवति अतो न व्यभिचारी'ति। एतत्तर्के प्रथमं दलम् आपादकं द्वितीयं दलम् आपाद्यम्, आपाद्याऽभावेन–सावयवत्वव्याप्याऽनेकद्रव्यत्वव्याप्याऽपकृष्टमहत्त्वव्याप्यत्वाऽभावाऽभावेन, आपादकाऽभावस्य–सावयवत्वव्यभिचारित्वाऽभावस्य ( सावयवत्वव्याप्यत्वस्य ) सिद्धिर्भवति, तथा च सावयवत्वव्याप्य एव चाक्षुपद्रव्यत्वहेतुरिति। एतादृशव्याप्यव्यापकभावाऽवधारणं तर्कजनकं दर्शयति–**अपकृष्टमहत्त्वमिति**। चाक्षुपद्रव्यत्वस्य व्यापकम् अपकृष्टमहत्त्वम्, अपकृष्टमहत्त्वस्य व्यापकम् अनेकद्रव्यत्वम्, अनेकद्रव्यत्वस्य च व्यापकं सावयवत्वमित्येवम् अपकृष्टमहत्त्वं प्रति अनेकद्रव्यत्वस्य **प्रयोजकत्वात्**=व्यापकत्वात् सावयवत्वसाधकमेवेदमनुमानमिति भावः। अपकृष्टमहत्त्वं नाम=त्रसरेणुनिष्ठमपकृष्टमहत्परिमाणम्, अनेकद्रव्यत्वं नाम=अणुभिन्नद्रव्यत्वम्॥ **अथ**–अनुमानेन यदि सावयवत्वसिद्धिस्तदा–'द्व्यणुकावयवाः,–सावयवाः,–महदारम्भकारम्भकत्वात्' कपालिकावदि'त्यनुमानेन परमाणोरपि सावयवत्वसिद्धिः स्यादित्याशंक्य निषेधति–**न चैवंक्रमेणेति**। एवंक्रमेण=तथाविधाऽवयवसाधकानुमानप्रणाल्या, तदवयवधारापि=तेषां द्व्यणुकावयवानां परमाणूनाम् अवयवाः, पुनश्च तदवयवाः इत्येवं तेषामवयवानां धारा=प्रवाहोऽपि सिद्ध्येत्=प्रमितिविषयिणी स्यादिति आशंकार्थः। समाधत्ते–**अनवस्थेति**। अप्रामाणिककल्पनासमाप्त्यभावात्मिकाया अनवस्थाया आपत्तिभयेन, तदसिद्धेः=अवयवधाराया असिद्धेः=अनुमित्यविषयत्वादित्यर्थः। अनवस्था हेतौ वर्तमाना सती हेतावप्रामाण्यज्ञानं जनयति, तेन न साध्यस्य सिद्धिरिति भावः। **'सा च त्रिधा भवेदि'**तिमूलं व्याख्याति–**सा कार्यरूपेति**। कार्यरूपा पृथिवी पक्षः, त्रिविधत्वं साध्यम्, शरीरेन्द्रियविषयभेदादिति हेतुः। अत्र त्रिविधत्वम्–

**योनिजादि भवेद्देहमिन्द्रियं घ्राणलक्षणम् ।**
**विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३८ ॥**

**तत्र देहमुदाहरति–योनिजादिरिति । योनिजमयोनिजं चेत्यर्थः । योनिजमपि द्विविधं जरायुजमण्डजं च । जरायुजं मानुषादीनाम् । अण्डजं सर्पादीनाम् । अयोनिजं स्वेदजोद्भिज्जादिकम् । स्वेदजाः कृमिदंशाद्याः । उद्भिज्जास्तरुगुल्माद्याः । नारकिणां शरीरमप्ययोनिजम् । न च मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्यम्, गन्धादिमत्त्वस्यैव प्रमाणत्वात् । न च क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति**

---

उद्देश्यतावच्छेदकसमनियतवस्तुमदन्यसंख्यावत्त्वम् । समनैयत्यं च–स्वाश्रयाश्रयत्वसम्बन्धेन, स्वं त्रित्वम्, तदाश्रयाणि देहत्वेन्द्रियत्वविषयत्वानि, तदाश्रयास्त्रयो देहेन्द्रियविषयाः । समनियतत्वं च व्यापकत्वे सति व्याप्यत्वम् ,–स्वाश्रयाश्रयत्वसम्बन्धेन । वस्तुमत्त्वं च–स्ववृत्तित्व–स्वसमानाधिकरण-स्वेतरवृत्तित्वोभयसम्बन्धेन, स्वम्–कार्यपृथिवीत्वम् , तद्वृत्तित्वम् , अथ च कार्यपृथिवीत्वसमानाधि-करणस्वेतरदेहत्ववृत्तित्वमित्युभयसम्बन्धेन वस्तुमत्त्वं–चतुष्ट्वसंख्यायाम्' तदन्यत्वाऽभावान्न कार्य-पृथिवी चतुर्विधेति व्यवहारः । हेतुः स्वप्रतियोगितासम्बन्धेन बोध्यः इति ॥ ३७ ॥

'**योनिजादिर्भवेद्देहमिति**मूलम् । देहम्–पार्थिवशरीरम्, योनिजादिः=स्त्रीगर्भवासाद् भग-द्वाराजातं योनिजम्, शुक्रशोणितसम्मेलनजन्यमित्यर्थः । आदिना तद्भिन्नम्–अयोनिजं ग्राह्यम् । इन्द्रियम्=पार्थिवेन्द्रियम्, घ्राणम् एव लक्षणं स्वरूपं यस्य तद् बोध्यम् । विषयः=पार्थिवविषयः, विसिनोति इति विषयः, स च पार्थिवद्व्यणुकम् आदिर्यस्य त्र्यणुकादेः, अथ च ब्रह्माण्डः अन्तो यस्य त्र्यणुकादेः तादृशः उदाहृतः=कथित इत्यर्थः ।

मुक्तावल्यां–**तत्र देहमिति** । तत्र–देहेन्द्रियविषयेषु मध्ये । देहम्–पार्थिवशरीरमुदाहरणेन स्पष्टयतीत्यर्थः । 'योनिजादि'पदार्थमाह–**योनिजमयोनिजमित्यर्थ** इति । योनिजम्–शुक्रशोणित-परस्परमेलनजन्यम् , तद्भिन्नम् अयोनिजमित्यर्थः । योनिजेऽपि द्वैविध्यमाह–**जरायुजेति** । जरायु-जम्–गर्भवेष्टनचर्मपुटकं जरायुस्तज्जन्यम् , अण्डजम्–अण्डः–गर्भवेष्टनशुक्तिकटाहस्तज्जन्यमित्यर्थः। तत्र जरायुजं शरीरं मानुषपशुमृगादीनां बोध्यम् । अण्डजंच शरीरं सर्पविहङ्गमादीनां बोध्यमिति । अयोनिजे शरीरे त्वनेकविधत्वमाह–**स्वेदजोद्भिज्जादिकमिति** । स्वेदः–शरीरनिःसृतोदबिन्दुस्त-ज्जन्यम् , उत्–ऊर्ध्वं भिद्य–पृथिव्यादिक्षेत्रं भित्त्वा जायते यत् तत्–उद्भिज्जम्–वृक्षादिकमित्यर्थः । आदिना–नारकीयशरीराणि, देवादिशरीराणि ग्राह्याणीति तेषां धर्मविशेषसहिताऽणुभ्य उत्पन्नत्वात । तत्र स्वेदजमुदाहरति–**कृमिदंशाद्या** इति । कृमयः कीटाः, दंशाः मशकाः, आदिना मत्कुणप्रभृतयः शय्याजन्तवो रोमजन्तवश्च ग्राह्याः । उद्भिज्जमुदाहरति–**तरुगुल्माद्या** इति । तरवो वृक्षाः, गुल्माः अशाखस्तम्बाः खर्जूरादयः, आदिना लतादयो ग्राह्याः । 'स्वेदजोद्भिज्जादिक'मित्यत्राऽऽदिना ग्राह्यं दर्शयति–**नारकिणामिति** । नरकः–यमलोकः, तत्र भवा नारकिणस्तेषां शरीराण्यपि अधर्मविशेष-सहिताणुभ्यो जायमानत्वात् अयोनिजानीति । अथ 'योनिं विना न शरीर'मितिश्रुतौ योनिपदं कारणमात्रपरं बोध्यम् ॥ मानुषादिशरीरस्य पार्थिवत्वे प्रमाणं पृच्छति–**न च''' किं मानमिति** ॥ अनुमानप्रमाणं दर्शयति–**गन्धादिमत्त्वस्यैवेति** । तथा च–'मानुषादिशरीरं,–पार्थिवत्ववत्,–समवायेन गन्धवत्त्वात्, आदिपदेन शुक्लेतररूपवत्त्वात्, घटवदि'त्यनुमानं बोध्यम् ॥ मानुषादि-शरीरस्य जलीयत्वं तैजसत्वादिकमपि तुल्ययुक्त्या शंकते–**न च क्लेदोष्मादेरिति** ।

वाच्यं, तथा सति जलत्वपृथिवीत्वादिना संकरप्रसङ्गात्। न च तर्हि जलीयत्वादिकमेवास्तु न तु पार्थिवत्वमिति वाच्यं, क्लेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानात्, गन्धाद्युपलब्धेश्च पृथिवीत्वसिद्धेः। तेन पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रं बोध्यम्। शरीरत्वं तु न जातिः, पृथिवीत्वादिना साङ्कर्यात्, किंतु चेष्टाश्रयत्वम्।

---

आप्यत्वादिकम्=जलीयत्वादिकम्। तथा च–'मानुषादिशरीरम्,–जलीयम्,–क्लेदवत्त्वात्,–क्लेदावयववत्'–इत्यनुमानं बोध्यम्। क्लेदः–स्वेदः स च भ्रान्त्या समवायेन हेतुत्वेन उपन्यस्तो बोध्यः। वस्तुतस्तु संयोगेन क्लेदः मानुषादिशरीरे वर्ततेऽतोऽसद्धेतुः क्लेदो बोध्यः॥ एवम्–'मानुषादिशरीरम्,–तैजसम्,—ऊष्मावत्त्वात्। एवम्–'मानुषादिशरीरम्,– वायवीयम्,–श्वासवत्त्वात्, एवं–'मानुषादिशरीरम्,–गगनीयम्,–अवकाशवत्त्वादि'त्येवं तत्तल्लिङ्गैर्जलादिचतुष्टयाऽन्यतमस्याप्यनुमातुं शक्यत्वादिति भावः॥ समाधत्ते–**तथा सतीति**। मानुषादिशरीरे जलीयत्वादिस्वीकारे सतीत्यर्थः। **जलत्वपृथिवीत्वादिना संकरप्रसंगादिति**। पृथिवीत्वाऽभाववति सरिज्जले जलत्वं, जलत्वाऽभाववति च घटे पृथिवीत्वं, द्वयोर्जलत्वपृथिवीत्वयोः समावेशो मनुष्यशरीरे इति। एवम्–पृथिवीत्वाऽभाववति सूर्यकिरणे तेजस्त्वं तेजस्त्वाऽभाववति च घटे पृथिवीत्वं, द्वयोः पृथिवीत्वतेजस्त्वयोः समावेशो मानुषशरीरे इति सांकर्यात् पृथिवीत्वादिधर्माणां जातित्वं व्याहन्येतेति हृदयम्॥ ननु सांकर्यभयेन मानुषशरीरे पार्थिवत्वं जलीयत्वादिकं चेत्युभयं मा स्वीक्रियताम्, केवलं जलीयत्वं तैजसत्वादिकमेव वा स्वीक्रियताम्, इत्याशंकते–**न च तर्हीति**। तर्हि=सांकर्यापत्तिभिया, जलीयत्वादिकम्=जलजन्यम्, तेजोजन्यं, वायुजन्यम्, गगनात्मकं वाऽस्तु=भवत्वित्यर्थः॥ एवकारव्यवच्छेद्यमाह–**न त्विति**। पार्थिवत्वं=पृथिवीजन्याऽवयवित्वं मास्त्वित्यर्थः॥ समाधत्ते–**क्लेदादीनामिति**। क्लेदस्य औष्ण्यस्य प्राणस्य अवकाशस्य च विनाशेऽपि=कचित्क्वचित् यथायोगं नाशे जातेऽपि मानुषशरीरादेः शरीरत्वेन'इदंशरीर'मिति प्रत्यभिज्ञानात् चक्षुःसंयोग–संस्कारोभयजन्यज्ञानस्यैव प्रत्यभिज्ञात्मकस्य प्रत्यक्षप्रमाणत्वात्,एवं गन्ध–गौररूपादेस्तत्र संयुक्तसमवायादिनोपलब्धेः=प्रत्यक्षात् तेन हेतुना "मानुषादिशरीरं,–पार्थिवम्, गन्धादिमत्त्वादि"ति पार्थिवत्वसिद्धिसत्त्वात् मानुषादिशरीरस्य पृथिवीत्वं निराबाधमिति बोध्यम्॥ ननु तर्हि कथं पाञ्चभौतिकत्वव्यवहार इत्यत आह–**तेनेति**। मानुषादिशरीरस्य जलत्वादिनिराकरणेन पार्थिवत्वसाधनेन चेत्यर्थः॥ **पार्थिवादिशरीरे इति** पृथिवीशरीरे जलतेजोवाय्वाकाशानां स्वल्पांशतया निमित्तकारणतामात्रं बोध्यम्, एवं जलीयशरीरे पृथिवीतेजोवाय्वाकाशानां, तैजसशरीरे पृथ्वीजलवाय्वाकाशानाम्, वायवीयशरीरे पृथिवीजलतेजोगगनानां च निमित्तकारणतामात्रं बोध्यमित्यर्थः। तत्र पाञ्चभौतिकत्वव्यवहारो न पञ्चभूतोपादानकत्वनिबन्धनः किन्तु पञ्चभूतसाहचर्य्यनिबन्धनः, तत्राऽपि एकैकस्य मुख्यस्य भूतस्योपादानत्वं चतुर्णां तु निमित्तकारणत्वमिति भावः॥ ननु "करचरणादिनिष्ठसमवायिकारणतानिरूपितसमवायसम्बन्धावच्छिन्ना कार्यता,–किञ्चिद्धर्मावच्छिन्ना,–कार्यतात्वादि"–त्यनुमानेन सिद्धायाः शरीरत्वजातेर्वृक्षादौ बाधितत्वात् कथं वृक्षादीनामयोनिजदेहत्वमित्याशंकां शरीरत्वस्य जातित्वनिराकरणेन परिहरति–**शरीरत्वं न जातिरिति**। प्रयोगस्तु–"शरीरत्वं,–जातित्वाऽभाववत्,–सांकर्यवत्त्वाद् भूतत्ववत्'इति॥ सांकर्यं दर्शयति–**पृथिवीत्वादिनेति**। तथाहि पृथिवीत्वं विहाय शरीरत्वं जलादित्रितयशरीरेषु, शरीरत्वं विहाय पृथिवीत्वं घटादौ, मानुषशरीरे तु शरीरत्वं पृथिवीत्वमुभयं वर्तते इति सांकर्ययुक्तत्वात् शरीरत्वस्य जातित्वाऽभावो बोध्य इति भावः॥ ननु तर्हि किं नाम

**वृक्षादीनामपि चेष्टासत्त्वान्नाव्याप्तिः। न च वृक्षादेः शरीरत्वे किं मानमिति वाच्यम्, आध्यात्मिकवायुसम्बन्धस्य प्रमाणत्वात्। तत्रैव किं मानमिति चेद्? भग्नक्षतसंरोहणादिना तदुन्नयनात्। यदि हस्तादौ शरीरव्यवहारो न भवति तदाऽन्त्यावयवित्वेन विशेषणीयम्। न च यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरिति वाच्यं, तादृशे प्रमाणा-**

---

शरीरत्वमित्यत्राह–**किन्तु चेष्टाश्रयत्वमिति**। ईप्सितं जिहासितमर्थमधिकृत्य ईप्साजिहासाप्रयुक्तस्य तदुपायाऽनुष्ठानलक्षणा समीहा चेष्टा, हिताऽहितप्राप्तिपरिहारानुकूला क्रियेति यावत्, समवायेन तद्वत्त्वं शरीरत्वमिति भावः। चेष्टात्वं जातिविशेषः–चेष्टते इति प्रत्यक्षसिद्धः प्रयत्नजन्यतावच्छेदकः॥ **वृक्षेति**। वृक्षतृणौषधिगुल्मलतावनस्पतीनामपि हितस्य जलस्य या प्राप्तिः पानम् अहितस्य क्षारादेर्वह्निज्वालादेश्च यः परिहारोऽग्रहणम्, तदात्मिका या क्रिया तदाश्रयत्वात् शरीरत्वसमन्वयान्नाऽव्याप्तिशंकेत्यर्थः॥ ननु 'स्थावरा वृक्षास्तृणौषधिगुल्मलतावनस्पतय' इत्यादिना भाष्यकृता वृक्षादेर्विषयमध्ये परिगणितत्वात् तद्विरुद्धत्वेन कथं वृक्षादेः शरीरत्वांगीकार इति भाष्यमतेनाऽऽक्षिपति–**न चेति**। वृक्षतृणौषधिप्रभृतीनां शरीरत्वे किं प्रमाणमुपलभ्यते?, न किञ्चिदिति आक्षेपार्थः॥ आक्षेपं परिहरति–**आध्यात्मिकेति**। आत्मानं शरीरमधिकृत्य वर्तते यः स आध्यात्मिकः=शरीरवर्ती यो वायुः प्राणस्तस्य सम्बन्धः–स्व(प्राण)सञ्चारकजीवनयोनियत्नावच्छेदकताख्यः, तस्यैव प्रमाणत्वात्=हेतुविधया मानत्वादित्यर्थः। प्रयोगश्च–'वृक्षादिः–शरीरम्, स्वसञ्चारकजीवनयोनियत्नाऽवच्छेदकतासम्बन्धेन प्राणवत्त्वात्, मानुषशरीरवदि'ति। एतदनुमाने स्वरूपाऽसिद्धिं शंकते–**तत्रैवेति**। प्राणवायुमत्त्वे इत्यर्थः। किं प्रमाणम्?, न किञ्चिदित्यभिप्रायः। तथा च–प्राणवायुमत्त्वे प्रमाणाऽभावाद् वृक्षादौ प्राणवत्त्वं स्वरूपाऽसिद्धमिति भावः। स्वरूपासिद्धिं परिहरति–**भग्नेति**। भग्नः–भंगविशिष्टः, भंगः–विच्छेदःशाखास्तम्बयोर्विलक्षणविभाग इति यावत्, क्षतः–क्षतिविशिष्टः, क्षतिः=परश्वादिना किञ्चित्त्वगादिच्छेदः,–विजातीयविभाग इति यावत्, तथा च वृक्षे यत्र शाखाया द्वैधीभावः छेदो वा क्रियते तत्र भग्नावच्छेदेन क्षतावच्छेदेन च पुनः शाखान्तरस्य (अंकुरस्य यत्) संरोहणम्=सम्यग् उद्भवनम्, आदिना पुनर्मेलनं त्वग्वर्धनं चेति भवन्ति, तेन हेतुना तदुन्नयनात्=तस्य प्राणादिमत्त्वस्य उन्नयनात्–अनुमितत्वात्। प्रयोगश्च– वृक्षादिः–प्राणवान्,–भग्नावच्छेदेन क्षतावच्छेदेन च संरोहणवत्त्वात्, अस्मच्छरीरवदिति भावः॥ अत एव "नर्मदातीरसञ्जाताः सरलाऽर्जुनपादपाः। नर्मदातोयसंस्पर्शात् ते यान्ति परमां गतिम्–॥ गुरुं हुंकृत्य त्वंकृत्य विप्रं निर्जित्य वादतः। श्मशाने जायते वृक्षः कंकगृध्रोपसेवितः"। इत्यादिना व्यासेन वृक्षादेः कर्मफलसम्बन्धप्रतिपादनाद् भाष्यकारव्यासवचनयोर्मध्ये व्यासवचनं बलवदिति हृदयम्॥ अथ करपादादावपि चेष्टावत्त्वात् तत्राऽतिव्याप्तिं शंकते–**यदि हस्तादाविति**। हस्ते पादेऽङ्गुल्यादौ प्रत्येकेऽवयवे यदि लोके शरीरव्यवहारो न भवत्येव, चेष्टायाश्च तत्र सत्त्वात् शरीराऽवयवेऽतिव्याप्तिः, तद्वारणाय–"अन्त्यावयवित्वे सति चेष्टाश्रयत्व'मिति लक्षणं कार्यमित्यर्थः। अन्ते=परमाणोरवयवी द्व्यणुकस्तस्य त्र्यणुकस्तस्य चतस्रेणुस्तस्य पिण्डस्तस्य कपालस्तस्य घटः, घटस्य तु न कश्चिदवयवीत्येवम् अवयव्यवयविधारायाः विश्रामे, भवः=स्थितः–विश्रामाश्रयतयोपलब्धो योऽवयवी घटादिः तत्त्वे सतीति विशेषणीयमिति भावः। तथा च अन्त्यावयवित्वं नाम–समवायेन द्रव्यवद्भिन्नत्वम्, द्रव्याऽनारम्भकद्रव्यत्वमिति यावत्। हस्तादीनां मध्यावयवित्वं न त्वन्त्यावयवित्वमिति तत्र नाऽतिव्याप्तिः॥

ननु मूर्छासुषुप्तिकालीनशरीरे चेष्टाविरहादव्याप्तिरित्याशंकते–**न च यत्रेति**। यस्मिन् मूर्छि-

**भावात्। अथवा चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम्, अन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं वा तत्। मानुपत्वचैत्रत्वादिजातिमादाय लक्षणसमन्वयः। न च नृसिंहशरीरे कथं लक्षणसमन्वयः, तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावाज्जलीयतैजसशरीरवृत्तितया देवत्वस्यापि जातित्वाभावादिति वाच्यं,**

---

तच्छरीरे सुषुप्तशरीरे च चेष्टा न जाता=नोपलभ्यते तत्राऽव्याप्तिरित्याशंकार्थः॥ समाधत्ते—**तादृशइति**। तादृशम्—मूर्च्छाकालीनं सुषुप्तिकालीनं सत् चेष्टाशून्यं शरीरं तत्र प्रमाणाऽभावात्, मूर्छाकाले सुषुप्तिकाले च प्राणग्रहण-निद्राग्रहणात्मकहितानुकूलक्रियायाः सत्त्वात् प्रत्यक्षप्रमाणेनैव चेष्टावत्तासिद्धेरिति भावः॥

ननु तथापि उत्पत्तिकालावच्छिन्ने शरीरे मृतशरीरे च चेष्टाऽभावादव्याप्तिः स्यादेवेति मनस्याशंक्य समाधत्ते—**अथवेति**। चेष्टावत् यद् अन्त्यावयवि जीवच्छरीरं तत्र वृत्तिर्या द्रव्यत्वव्याप्या जातिः मानुपत्वब्राह्मणत्वचैत्रत्वादिरूपा यथायोग्यग्राह्या तद्वत्त्वस्य मृतशरीरे उत्पत्तिकालीनशरीरे च सत्त्वाल्लक्षणसमन्वयः। घटत्वमादाय घटेऽतिव्याप्तिवारणाय—चेष्टावदिति। करपादादावतिव्याप्तिवारणाय—अन्त्यावयवीति। चेष्टावत्त्वं समवायेन बोध्यम्, अन्यथा कालिकेन चेष्टावद्घटमादाय तत्रातिव्याप्तिः स्यात्। वृत्तित्वमपि समवायेन बोध्यम्, अन्यथा घटत्वमादाय घटेऽतिव्याप्तिः स्यात्। द्रव्यत्वव्याप्यत्वं द्रव्यत्वाऽभाववदवृत्तित्वरूपं परम्परया बोध्यम्। शरीरघटोभयत्वमादाय घटेऽतिव्याप्तिवारणाय जातिपदम्। जातिमत्त्वमपि समवायेन बोध्यम्, तेन कालिकेन मनुपत्वादिमत्त्वस्य घटे नातिव्याप्तिरिति॥

**ननु** द्रव्यत्वव्याप्यपृथिवीत्वमादायाऽपि घटादावतिव्याप्तिः स्यादेव। यदि च द्रव्यत्वव्याप्यत्वमुच्येत, तत्तु द्रव्यत्वसमानाधिकरणाऽन्योन्याऽभावप्रतियोगितावच्छेदिका या जातिः तत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वे सति तत्समानाधिकरणत्वरूपं वक्तव्यं तत्तु महागौरवमित्यस्वरसात् लाघवादाह—**अन्त्यावयवीति** लक्षणान्तरम्। अन्त्यावयविमात्रवृत्तिः=द्रव्यसमवाय्यवृत्तिरित्यर्थः। पृथिवीत्वस्य तु घटात्मकद्रव्यस्य समवायिकारणं यत् कपालं तत्र वृत्तित्वात् अन्त्यावयव्यतिरिक्तवृत्तित्वात् तद्व्युदासः। चेष्टावद्वृत्तीत्यनेन घटत्वादिव्युदासः। अत्रापि वृत्तित्वं चेष्टावत्त्वं जातिमत्त्वं च समवायेन बोध्यम्, तेन कालिकेन वृत्तित्वादिकमादाय घटादौ नाऽव्याप्तिरिति॥ **वा तदिति**। वा—परिष्कारद्वयोर्विकल्पार्थः, पूर्वपरिष्कारेऽस्वरससूचको वा। तत्=चेष्टाश्रयत्वं परिष्कृतमित्यर्थः॥ समन्वयति—**मानुपत्वेति**। मानुपत्वेत्यनेन मानुपत्वपशुत्वादिव्यापकजातयो दर्शिताः, चैत्रत्वेत्यनेन व्याप्यजातयोऽपि दर्शिताः। यथायोगं जातिमादाय लक्षणसमन्वयः कार्यं इत्यभिप्रायः॥ ननु नृसिंहावतारस्यैकव्यक्तितया तत्र नृसिंहत्वस्य जातित्वाऽभावात् नृसिंहशरीरे चेष्टाश्रयत्वपरिष्कारस्याऽव्याप्तिरित्याशंकते—**न च नृसिंहेति**। नृसिंहशरीरे कथं=केन निर्बाधेन प्रकारेण, द्वितीयपरिष्कारात्मकलक्षणस्य समन्वयः स्यात्!, न स्यादित्यर्थः। यतस्तत्र=नृसिंहशरीरे यत् नृसिंहत्वं तस्य नृसिंहावतारात्मकैकव्यक्तिवृत्तित्वात् जातित्वाऽभावात्। प्रयोगस्तु—'नृसिंहत्वं,—न जातिः,—एकव्यक्तिवृत्तित्वादिति। ननु नृत्वं सिंहत्वं वा जातिमादाय लक्षणसमन्वयः कार्यं इति चेन्न, एकैकमात्रस्वीकारे विनिगमनाविरहात्, उभयोः स्वीकारे च द्वयोः जातिसंकरप्रसंगात्, आंशिकत्वापाताच्च॥ ननु तर्हि देवत्वजातिमादाय लक्षणसमन्वयः कार्यं इति चेत्? तत्राह—**जलीयेति**। देवत्वं विहाय जलीयत्वं सरिज्जलेषु, जलीयत्वं विहाय च देवत्वं तैजससूर्यादिदेवेषु, उभयोः समावेशो जलीयशरीरे। एवं—देवत्वं विहाय तैजसत्वं सुवर्णादिषु, तैज-

कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात्। इन्द्रियमिति। घ्राणेन्द्रियं पार्थिवमित्यर्थः। पार्थिवत्वं कथमिति चेत्? इत्थम्, घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात्, कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत्। न च दृष्टान्ते स्वकीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यं, परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात्। न चैवं नवशरावगन्धव्यञ्जकजलेऽनैकान्तिकत्वमिति वाच्यं, तस्य सक्तुरसाभिव्यञ्जकत्वात्। यद्वा परकीयेति न देयं, वायूपनीतसुरभिभागस्य

---

सत्वं विहाय च देवत्वं जलीयदेवेषु वरुणादिषु, द्वयोः समावेशस्तैजसशरीरे इति सांकर्याद्देवत्वस्य जातित्वाऽभावादित्यर्थः ॥ समाधत्ते-**कल्पभेदेनेति**। कल्पशब्दः-ब्रह्मणो दिवसवाचकः, स च चत्वारिंशदर्बुद-द्वात्रिंशत्कोटि-संख्याकवर्षकालः, प्रतिब्रह्मकल्पं नृसिंहावतारस्वीकारात्, एवमुपासनादिनाऽपि बहुत्र नृसिंहप्रादुर्भावसंभवात् 'कल्प'पदेन उपासनाऽपि उपलक्षणीया, तथा च कल्पभेदेन उपासकभेदेन च नृसिंहशरीरस्य नानात्वेन=अनेकत्वेन,-स्वप्रतियोगिवृत्तित्व-स्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टनृसिंहत्वावच्छिन्नत्वेनेति यावत्। तत्र नृसिंहत्वस्याऽनैकव्यक्तिवृत्तितया जातित्वे एकव्यक्तिवृत्तित्वात्मकबाधकाऽभावात् लक्षणसमन्वयादिति भावः ॥ जातिसांकर्यस्याऽदोषत्वे तु शरीरत्वजातिमादायैव शरीरमात्रे लक्षणसमन्वयो गुरुतरलक्षणानुसरणं च व्यर्थमित्यवधेयम्॥ पार्थिवेन्द्रियं नाम्ना निर्दिशति-**घ्राणेन्द्रियमिति**। घ्राणेन्द्रियं पार्थिवमिति प्रतिज्ञावाक्यं बोध्यम्। आशंकते-**पार्थिवत्वं कथमिति**। केन हेतुना पार्थिवत्वं साध्यते इत्याशंकाऽर्थः॥ उत्तरयति-**इत्थमिति**-अनेन निर्दिश्यमाणेन हेतुनेत्यर्थः॥ घ्राणेन्द्रियं पक्षः, पार्थिवत्वं साध्यम्, रूपादिष्वित्यादिर्हेतुः, कुंकुमेत्यादि दृष्टान्तम्। यथा कुंकुमं-केसरकिञ्जल्कानि, तेषां सुगन्धस्याऽभिव्यञ्जकम् उद्भावकं गोघृतं पार्थिवं भवति तथा घ्राणेन्द्रियमपि गन्धस्यैव अभिव्यञ्जकं-ग्राहकं पार्थिवं भवतीत्यर्थः॥ साध्यं पार्थिवत्वं पृथिवीसमवेतद्रव्यत्वात्मकं बोध्यम्। हेतौ रूपादिषु-इत्यत्राऽऽदिना रसगन्धस्पर्शा ग्राह्याः, सप्तम्या घटकत्वमर्थः, मध्यशब्दः समुदायपरः, एवकारार्थश्च गन्धेतराऽव्यञ्जकत्वम्-गन्धेतरविषयकज्ञानाऽजनकत्वरूपम्, सप्तम्यर्थघटकत्वस्य गन्धेतरस्मिन्नन्वयः। तथा च रूपरसगन्धस्पर्शसमुदायघटकीभूतं यद् गन्धेतरत् तद्विषयकज्ञानाऽजनकत्वे सति गन्धविषयकज्ञानजनकत्वादिति हेत्वर्थः फलितः॥ हेतौ पदकृत्यं दर्शयितुं विशेषणासिद्धिं शंकते-**न च दृष्टान्ते** इति। दृष्टान्ते केसरगन्धज्ञानजनके गोघृते स्वीय(गोघृतीय)रूपज्ञानजनकत्वात् 'गन्धेतरविषयकज्ञानाजनकत्वे सतीति सत्यन्तस्य (विशेषणस्य) असिद्धिः-दोषः, असिद्धेश्च परामर्शप्रतिबन्धकत्वात् अनुमितिरेव न स्यादिति भावः॥ समाधत्ते-**परकीयरूपेति**। परकीयं-परस्मिन् स्वभिन्ने समवेतं यद् गन्धेतरद् रूपादिकं-रूपरसस्पर्शाः तज्ज्ञानाऽजनकत्वादिति'सत्यन्तदलस्यार्थः। निरुक्तगोघृतस्य परकीयरूपाद्यव्यञ्जकत्वान्न विशेषणाऽसिद्धिरिति भावः॥ नवशरावगन्धव्यञ्जके जले व्यभिचारमाशंकते-**न चैवमिति**। रूपरसस्पर्शेषु परकीयत्वोपादाने सतीत्यर्थः। नवशरावः= पाकाऽनन्तरं गन्धनाशकद्रव्याद्यस्पृष्टः शरावः-मृत्पात्रविशेषो वर्धमानकः, तस्य गन्धस्य व्यञ्जकं समुद्भावकं ज्ञानजनकं यज्जलं, तत्र पार्थिवत्वात्मकसाध्याऽभाववति जले हेतोः सत्त्वाद्व्यभिचार इत्यर्थः॥ समाधत्ते-**तस्येति**। तस्य=नवशरावगतजलस्य, सक्तुः-भर्जितयवादिपिष्टं तस्य रसो-मधुरक्षारादिस्तस्य (परकीयरसस्य) व्यञ्जकत्वात्=ज्ञानजनकत्वात् तत्र 'परकीयरसादिज्ञानाऽजनकत्वे सतो'ति विशेषणस्याऽगमनान्न व्यभिचार इति भावः॥ परकीयेति विशेषणाऽप्रवेशे लाघवं हेतुं दर्शयितुं विशेषणाऽसिद्धिदोषशून्यं दृष्टान्तान्तरमाह-**यद्वा परकीयेति न देयं, वायूपनीतेति**।

**दृष्टान्तत्वसंभवात्। न च घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रव्यञ्जकत्वात् तत्र व्यभिचार इति वाच्यं, द्रव्यत्वे सतीति विशेषणात्। विषय इति। उपभोगसाधनं विषयः। सर्वमेव हि कार्यजातमदृष्टाधीनम्, यत्कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परं-**

---

वायुना आ समन्तान्नीता नीयमाना ये सुरभिभागाः सुगन्धिपार्थिवद्व्यणुकादयस्तेषामदृश्यानां दृष्टान्तत्वे तत्र रूपरसस्पर्शज्ञानजनकत्वाऽभावाद् गन्धज्ञानजनकत्वाच्च हेतोः सत्त्वेन न दृष्टान्ते भागाऽसिद्धिरिति भावः॥ घ्राणेन्द्रियगन्धयोर्यः–घ्राणसंयुक्तसमवायाख्यसन्निकर्षस्तत्र व्यभिचारमाशंकते **न च घ्राणेन्द्रियेति**। घ्राणसंयुक्तसमवायस्य रूपरसस्पर्शाऽव्यञ्जकत्वे सति गन्धस्यैवाऽभिव्यञ्जकत्वात् तत्राऽपार्थिवे षष्ठे पदार्थे समवायात्मके व्यभिचार इति भावः॥ समाधत्ते–**द्रव्यत्वे सतीति**। हेतौ द्रव्यत्वे सतीति विशेषणदानात् स्वसंयुक्तसमवायस्य च द्रव्यत्वाऽभावात् तत्र हेत्वभावान्न व्यभिचार इति भावः॥ तथा च–द्रव्यत्वे सति लौकिकसन्निकर्षप्रयोज्यरूपरसस्पर्शविषयकप्रत्यक्षाऽजनकत्वे सति लौकिकसन्निकर्षप्रयोज्यगन्धविषयकप्रत्यक्षजनकत्वादिति हेतुर्बोध्यः॥कालिकसम्बन्धानवच्छिन्नचाक्षुषनिष्ठकार्यतानिरूपितकारणताशून्यत्वे सति घ्राणजनिष्ठकालिकसम्बन्धानवच्छिन्नकार्यतानिरूपितकारणतावत्त्वादित्येको हेतुः, रासननिष्ठकालिकसम्बन्धानवच्छिन्नकार्यतानिरूपितकारणताशून्यत्वे सति घ्राणजनिष्ठकालिकसम्बन्धानवच्छिन्नकार्यतानिरूपितकारणतावत्त्वादिति द्वितीयो हेतुः, स्पार्शननिष्ठकालिकसम्बन्धानवच्छिन्नकार्यतानिरूपितकारणताशून्यत्वे सति घ्राणजनिष्ठकालिकसम्बन्धानवच्छिन्नकार्यतानिरूपितकारणतावत्त्वादिति तृतीयो हेतुः फलितः॥ **'विषय'** इतिमूलं व्याख्याति–**उपभोगेति**। सुखदुःखान्यतरसाक्षात्कार उपभोगः, तत्प्रयोजकः सर्वोऽपि विषयः, विषयत्वस्य सामान्यादिसाधारणधर्मतया जातित्वाऽभावाल्लक्षणम् 'उपभोगसाधनत्वमि'त्युक्तम्, साक्षात्परम्परासाधारणोपभोगप्रयोजकत्वमित्यर्थः, त्रसरेणुप्रभृतीनां साक्षाद् द्व्यणुकपरमाणूनां तु परम्परयोपभोगप्रयोजकत्वं बोध्यम्, परम्परा तु स्वसमवेतत्वादिरूपा, यत्र त्रसरेण्वादौ स्व(सुखादि) जनकाऽदृष्टसाधनत्वसम्बन्धेन सुखादिस्तत्र स्व(द्व्यणुकादि)समवेतत्वादिसम्बन्धेन द्व्यणुकादिकमिति। परम्परासम्बन्धेन परमाणूनामप्युपभोगसाधनत्वमस्त्येव, 'विषयो द्व्यणुकादिश्चे'त्युक्तिस्तु कार्यरूपपृथिव्या एव त्रिप्रकारेण विभजनात् कार्यरूपपृथिवीविषयस्य प्रदर्शनार्थं, नैतावतापरमाणूनाम-विषयत्वं भवतीति भावः॥ विषयत्वोपपादनाय कार्यादृष्टयोः कार्यकारणभावं दर्शयति–**सर्वमेवेति**। कार्यस्य जातं समूहः, अत्र जादपदं निष्प्रयोजनं 'सर्व'पदेनैव तदर्थलाभात्। तथा च सर्वं कार्यम् अदृष्टं यौ धर्माधर्मौ तदधीनं तज्जन्यं भवति। अत्र **केचित्**–कार्यमात्रं प्रति स्वसमवायिसंयुक्तसंयोगेनाऽदृष्टस्य हेतुतां वदन्ति, स्वम्–अदृष्टं तत्समवायी आत्मा तत्संयुक्तः कालस्तत्संयोगः कार्याधिकरणे इति। **वस्तुतस्तु** कालिकेन कार्यं प्रति कालिकेनाऽदृष्टं हेतुरिति बोध्यम्। अत एव तत्र विषयितासम्बन्धेन कार्यं प्रति समवेतत्वसम्बन्धेनेश्वरस्य, विषयितासम्बन्धेन कार्यं प्रति तादात्म्यसम्बन्धेनेश्वरज्ञानेच्छाकृतीनाम्, कालिकसम्बन्धेन कार्यं प्रति तादात्म्यसम्बन्धेन कालस्य, दैशिकविशेषणतासम्बन्धेन कार्यं प्रति तादात्म्येन दिशः, कालिकसम्बन्धेन कार्यं प्रति कालिकेन अदृष्टम्,–हेतुरिति कार्यकारणभावाः संगच्छन्ते॥ विषयत्वमुपपादयति–**यत्कार्यमिति**। यत्र कार्ये यत्पुरुषीयाऽदृष्टजन्यत्वं तत्र कार्ये तत्पुरुषीयोपभोगजनकत्वं साक्षात्=संयोगादिसम्बन्धेन परम्परया=स्वसमवेतसंयुक्तत्वादिसम्बन्धेन वर्तते इत्यर्थः। शब्दार्थस्तु यत्कार्यं घटो यस्य देवदत्तस्याऽदृष्टाधीनतयोत्पन्नः तत्=तत्कार्यं घटः साक्षात्=संयोगेन, परम्परया=स्वाहार्यजलप्रापकत्वेन वा, तस्य देवदत्तस्य उपभोगं=तृषानिवृत्त्या सुखसाक्षात्कारं जनयत्येवेति॥ **अन्ये तु साक्षादित्यस्य** कपालसंयो-

परया वा जनयत्येव, न हि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति। तेन द्व्यणुकादि ब्रह्माण्डान्तं सर्वमेव विषयो भवति। शरीरेन्द्रिययोर्विषयत्वेऽपि प्रकारान्तरेणोपन्यासः शिष्यबुद्धिवैशद्यार्थः ॥ ३८ ॥

वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ।
स्नेहस्तत्र, द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥

जलं निरूपयति–वर्णः शुक्ल इति। स्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिः सिद्ध्यति। यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्यतावच्छेदकं, तथापि जन्य-

---

गचक्षुस्संयोगादिवत् किञ्चिद्व्यापारमनपेक्ष्यैवेत्यर्थः, परम्परयेत्यस्य च दण्डचक्रेन्द्रियादिवत् कञ्चिद्व्यापारमपेक्ष्येत्यर्थः, इति व्याख्यान्ति ॥ पूर्वोक्तार्थे न्यायमाह–नहीति। कस्यचिदपि कार्यस्य उत्पत्तिः, बीजं=समवाय्यसमवायिनिमित्तकारणान्यतमं विना, प्रयोजनं=यत् ज्ञातं सत् स्ववृत्तितया इष्यते तत्–फलं सुखादिकमिति यावत्, तद्विना च, हि–निश्चयेन, न अस्ति=न भवतीत्यर्थः निगमयति–तेनेति। द्व्यणुकादेः साक्षात्परम्परया वा तत्तत्पुरुषोपभोगसाधनत्वेनेत्यर्थः। द्व्यणुकम् आदिः–कार्यत्वस्य प्रथममाश्रयः, ब्रह्माण्डश्च अन्तः–कार्यत्वस्यान्तिमाश्रयो यत्रेति तादृशं सर्वमेव–कार्यत्वावच्छिन्नम्, विषयो भवति ॥ ननु सर्वस्यैव विषयत्वे शरीरेन्द्रियविषयभेदेन त्रैविध्येन विभागोऽसंगतः, परस्परवैयधिकरण्यापन्नधर्मैरेव विभागस्य सकलतन्त्रसिद्धत्वादत आह–शरीरेन्द्रिययोरिति। शरीरत्वविषयत्वयोः इन्द्रियत्वविषयत्वयोः सामानाधिकरण्येऽपि, प्रकारान्तरेण=शरीरत्वेन्द्रियत्वविषयत्वात्मकधर्मत्रयेण, शरीरेन्द्रियाभ्यां विषयस्य भिन्नतयेति यावत्, उपन्यासः=विभागः, शिष्याणां बुद्धेः 'इमानि शरीराणि, इमानीन्द्रियाणि, इमे च तद्भिन्ना विषया अपि' इत्याकारकं यद् वैशद्यं–विशेषविशेषदिपयिता, तदर्थमित्यर्थः ॥ वस्तुतस्तु प्रकारान्तरेण पृथिवी त्रिविधा–शरीरेन्द्रियविषयभेदादिति व्याख्यानं शिष्यबुद्धिवैशद्यार्थं ग्रन्थविरुद्धमप्युचितं भातीत्यनुसन्धेयम् ॥ इति पृथिवीग्रन्थः ॥ ३८ ॥

जलं वर्णयति–मूले–'वर्णः शुक्ल' इति। जले–शुक्लो वर्णः=अभास्वरशुक्लं रूपं समवायेन वर्तत इत्यर्थः। रसस्पर्शौ क्रमेण मधुरशीतलौ समवायेन वर्तेते। तत्र–जले, स्नेहः समवायेन वर्तते। द्रवत्वं तु सांसिद्धिकं–स्वाभाविकम्, उदाहृतम्=समवायेन वर्तते–इति स्वीकृतमित्यर्थः ॥ तथा च अभास्वरशुक्लमात्ररूपवत्त्वं, मधुरमात्ररसवत्त्वं, शीतमात्रस्पर्शवत्त्वं, स्नेहवत्त्वं, सांसिद्धिकद्रवत्ववत्त्वं, चेति जललक्षणानि बोध्यानीति भावः ॥ मुक्तावल्यां–जलं निरूपयतीति। लक्षणस्वरूपप्रामाण्यादिप्रकारकज्ञानाऽनुकूलव्यापारो निरूपयतेरर्थः। तथा च जलनिष्ठविषयतानिरूपकं यल्लक्षणस्वरूपप्रामाण्यादिप्रकारकं ज्ञानं तदनुकूलव्यापारानुकूलकृतिमान् ग्रन्थकार इति बोधः ॥ शुक्लरूपवत्त्वादिलक्षणानां लक्ष्यतावच्छेदकं यज्जलत्वं तस्य जातित्वेऽनुमानप्रमाणमादावाह–स्नेहेति। स्नेहस्य समवायिकारणं यज्जलं तदवच्छेदकतया जलत्वस्य जातित्वं सिद्ध्यतीत्यर्थः। अनुमानं यथा–समवायसम्बन्धावच्छिन्नस्नेहत्वावच्छिन्नस्नेहनिष्ठकार्यतानिरूपिता या तादात्म्यसम्बन्धावच्छिन्ना जलनिष्ठा कारणता सा,–किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्,–घटगतकार्यतानिरूपितकपालनिष्ठकारणतावदिति। जलनिष्ठसमवायिकारणताया अवच्छेदको यः कश्चिद्धर्मः स जलत्वजातिरूप इत्याशयः। कारणतावच्छेदकतया सिद्धधर्मस्य व्यक्त्यैक्यादिरूपजातिबाधकत्वाऽभावात् जातिरूपत्वमिति भावः ॥ नित्यपरमाणुवृत्तिस्नेहस्य नित्यस्य कार्यत्वाऽभावात् स्नेहत्वस्य कार्यतावच्छेदकत्वं

**स्नेहत्वं तथा बोध्यम् । अथ परमाणौ जलत्वं न स्यात्तत्र जन्यस्नेहाभावात्, तस्य च नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमादिति चेत्? न, जन्यस्नेहजनकतावच्छेदकतया जन्यजलत्वजातेः सिद्धौ, तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धेः। शुक्लरूपमेव जलस्येति दर्शयितुमुक्तं–वर्णः शुक्ल इति, नतु शुक्लरूपवत्त्वं लक्षणम् ।**

न सम्भवतीत्याशंकते–**यद्यपीति** । स्नेहत्वजातिः नित्ये परमाणुस्नेहेऽनित्ये द्व्यणुकादिस्नेहे च समवायेन वृत्तितया न कार्यतामात्रावच्छेदिका भवितुमर्हति, तथा च स्नेहत्वावच्छिन्नकार्यताया अप्रसिद्धत्वात् तन्निरूपितकारणताया अप्यप्रसिद्धेस्तदवच्छेदकतया जलत्वजातिसिद्धिरपि न भवेदित्याशंकार्थः ॥ समाधत्ते–**तथापीति** । जन्यस्नेहत्वं=जन्यस्नेहमात्रवृत्तिवैजात्यमेव, तथा=कार्यतावच्छेदकं, बोध्यम्=ग्राह्यम् । तथा च–'समवायसम्बन्धावच्छिन्नजन्यस्नेहमात्रवृत्तिवैजात्यावच्छिन्नजन्यस्नेहनिष्ठकार्यतानिरूपित–तादात्म्यसम्बन्धावच्छिन्नजन्यजलनिष्ठकारणता,–किञ्चिद्धर्मावच्छिन्ना,कारणतात्वादि'त्यनुमानं बोध्यम् । अनेन जन्यजलत्वं साधितं भवतीति ॥ तत्राऽप्याक्षिपति–**अथेति** । जन्यस्नेहजन्यजलयोः कार्यकारणभावमवलम्ब्य जन्यजलत्वस्य सिद्धौ कृतायां सत्यामित्यर्थः । परमाणौ=नित्यजले, जलत्वजातिर्न सिद्ध्येत् । कुतः?,–तत्र=जलपरमाणौ, जन्यस्नेहात्मककार्याऽभावात्,–जन्यस्नेहकारणताया परमाणावसत्त्वे तदवच्छेदकतया सिद्धस्य जन्यजलत्वस्यापि परमाणौ सिद्धिर्न स्यादिति भावः ॥ ननु यथाऽरण्यस्थदण्डादौ फलानुपधायकेऽपि घटकारणतावच्छेदकतया दण्डत्वादिजातिस्तथा स्नेहानुपधायकपरमाणावपि जलत्वजातिसिद्धिर्भविष्यतीत्यत आह–**तस्य चेति** । स्वरूपयोग्यत्वं नाम–कार्योत्पत्तियोग्यत्वं कारणतावच्छेदकधर्मवत्त्वमिति यावत् । तथा च अरण्यस्थदण्डादेरनित्यत्वात्तत्र स्वरूपयोग्यत्वेऽपि फलावश्यंभावनियमाऽभावः । तस्य च नित्यस्य=ध्वंसाऽप्रतियोगिनः परमाणोस्तु स्वरूपयोग्यतायामवश्यम्फलेन जन्यस्नेहेन भवितव्यम्, तथा चाऽवश्यं जन्यस्नेहोत्पत्तिरापद्येतेति बाधकं बोध्यम्, किन्तु जन्यस्नेहोत्पत्तिस्तु नोपलभ्यते तस्माज्जलपरमाणौ जलत्वसिद्धिर्न स्यादेवेत्याक्षेप्तुरभिप्रायः ॥ आक्षेपं परिहरति–**न, जन्यस्नेहेति** । जन्यो यः स्नेहस्तज्जनकं जन्यजलं तन्निष्ठा या समवायिकारणता तदवच्छेदकतया जन्यजलत्वजातेः=जन्यजलमात्रवृत्तिजातेः, सिद्धौ सत्यामित्यर्थः । अनुमानं तु–'समवायसम्बन्धावच्छिन्नजन्यस्नेहमात्रवृत्तिवैजात्यावच्छिन्नजन्यस्नेहनिष्ठकार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्नजन्यजलनिष्ठा कारणता,–किञ्चिद्धर्मा( जन्यजलत्वा )वच्छिन्ना,–कारणतात्वादि'ति तूपरि दर्शितमेव ॥ इत्येवं जन्यस्नेहकारणतावच्छेदकतया जन्यजलत्वं प्रसाध्य ततो जन्यजलत्वं कार्यतावच्छेदकं गृहीत्वा सामान्यतः परमाणावपि अनुमानेन जलत्वं सिद्ध्यतीति दर्शयति–**तदवच्छिन्नेति** । जन्यजलत्वावच्छिन्नेत्यर्थः । तथा च प्रयोगः–'समवायसम्बन्धावच्छिन्नजन्यजलत्वावच्छिन्नजन्यजलनिष्ठकार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्न-जलनिष्ठा ( परमाण्वादिसाधारणजलनिष्ठा ) कारणता,–किञ्चिद्धर्मावच्छिन्ना,–कारणतात्वात्,–घटगतकार्यतानिरूपितकपालगतकारणतावदिति' । अनेन परमाणुजले जलत्वं सिद्धमिति भावः ॥ ननु अन्त्यावयविनि जले जन्यजलत्वावच्छिन्नकार्यतानिरूपितकारणताया असंभवात् जलत्वं न सिद्ध्येदिति चेन्न, तादृशकारणतावच्छेदकतया सिद्धजलत्वजातेर्जलाऽन्त्याऽवयविवृत्तित्वस्वीकारात्, सर्वत्र जले जलान्तरसंयोगेन महज्जलजननयोग्यतासत्त्वात् जलस्याऽन्त्यावयवित्वानुपगमाचेति ध्येयम् ॥ **शुक्लरूपमेवेति** । जलस्य अभास्वरमेव शुक्लं रूपं समवायेन बोध्यमिति दर्शयितुं=विज्ञापयितुं कारिकायां 'वर्णः शुक्ल'इत्युक्तम्, न तु जलस्य लक्षणं 'शुक्लरूपवत्त्व'मिति, कुतः?, पृथिव्यादावतिव्याप्त्यापत्तेरिति भावः ॥ अथवा शुक्लरूपवत्त्वस्य लक्षणत्वेऽपि न पृथिव्या-

**अथवा नैमित्तिकद्रवत्ववदवृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिसत्त्वं वा तदर्थः।**

दावतिव्याप्तिरित्यभिप्रायेणाह–**अथवा नैमित्तिकेति** । नैमित्तिकद्रवत्ववती पृथिवीतेजसी, तत्र अवृत्तिः–न वृत्तिर्यस्यास्तादृशी, अथ च रूपवद्यज्जलं तत्र वृत्तिः, अथ च द्रव्यत्वस्य साक्षाद् व्याप्या या जलत्वजातिस्तद्वत्त्वं जले इति लक्षणसमन्वयः, पृथिव्यां तेजसि च जलत्वजातिमत्त्वाऽभावान्नाऽतिव्याप्तिरित्याशयः । पृथिव्यादावतिव्याप्तिवारणाय–नैमित्तिकद्रवत्ववदवृत्तीति । वाय्वादावतिव्याप्तिवारणाय रूपवद्वृत्तीति । पटत्वादिकमादाय वज्रत्वादिकमादाय च पटादौ वज्रादौ चातिव्याप्तिवारणाय, कूपत्वनदीत्वादिकं प्रत्येकजातिमादाय वा तदनवच्छिन्ने जलेऽव्याप्तिवारणाय–च, द्रव्यत्वसाक्षाद्व्याप्येति। नैमित्तिकद्रवत्ववत्त्वं समवायेन बोध्यम्। अन्यथा कालिकेन नैमित्तिकद्रवत्ववति अनित्यजलेऽवर्तमाना रूपवत्तु परमाणुषु वर्तमाना द्रव्यत्वसाक्षाद्व्याप्या जातिरेव न प्रसिद्ध्यतीति अप्रसिद्धिनिबन्धनोऽसम्भवः स्यात्। एवं–रूपवत्त्वमपि समवायेन बोध्यम्, अन्यथा–समवायेन नैमित्तिकद्रवत्ववत्पृथिवीतेजसोरवृत्तिः कालिकेन रूपवति वायौ च वृत्तिर्या द्रव्यत्वसाक्षाद्व्याप्या जातिर्वायुत्वं तामादाय वायावतिव्याप्तिः स्यात्। जातिमत्त्वमपि समवायेन बोध्यम्, अन्यथा कालिकेन तद्वत्त्वस्य वाय्वादावतिव्याप्तिः स्यात्। जलपृथिव्यन्यतरत्वमादाय पृथिव्यामतिव्याप्तिवारणाय, यद्वा जलीयपरमाणुगतबहुत्वमादायाऽनित्यजलेऽव्याप्तिवारणाय, जातिपदम् । **द्रव्यत्वसाक्षाद्व्याप्यत्वमत्र**–स्वसामानाधिकरण्य स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वो-भयसम्बन्धेन द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकजातिविशिष्टान्यत्वं बोध्यम्। द्रव्यत्वेन सह समानमेकमधिकरणं यस्यैतादृशो यः पृथिव्यां जलत्ववान्नेति भेदस्तत्प्रतियोगितावच्छेदकजलत्वजातिः स्व-पदार्थः, तत्सामानाधिकरण्यं करकात्वादौ, एवं स्वं जलत्वं तत्समानाधिकरणः करकात्ववन्न नदीत्ववन्न, हिमत्ववन्न, तुषारत्ववन्न, अभ्रत्ववन्ने,–त्यादिभेदस्तत्प्रतियोगितावच्छेदकत्वं करकात्वादौ तादृशोभयसम्बन्धेन द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकजलत्वजातिविशिष्टाः करकात्वनदीत्वहिमत्वादयस्तदन्यत्वं जलत्वे तदेव द्रव्यत्वस्य साक्षाद्व्याप्यमिति ध्येयम्। अथवा–द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदिका यावत्यो जातयः प्रत्येकं तत्तत्समानाधिकरणत्वविशिष्टतत्तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वाऽभावकूटवत्त्वं, अथवा–स्वसमानाधिकरण-द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकजातिसमानाधिकरणभेदप्रतियोगितावच्छेदकं यद्यत् स्वं तत्तद्भेदकूटवत्त्वं, द्रव्यत्वसाक्षाद्व्याप्यत्वं बोध्यम्॥ **वस्तुतस्तु**–शुक्लरूपवत्त्वमित्यस्य–'पृथिवीवृत्तित्वसामान्याऽभाव,–तेजोवृत्तित्वसामान्याऽभाव,–शुक्लवद्वृत्तित्वै,–तत्त्रितयविशिष्टजातिमत्त्व'मित्यर्थो बोध्यः॥ **ननु** 'वर्णश्शुक्ल'इति मूलान्नैमित्तिकद्रवत्वस्याऽनुपस्थिततया तदुपस्थितिकल्पनेगौरवं कारिकाऽनानुगुण्यं चेत्यतः परिष्कारान्तरमाह–**अभास्वरेति**। अभास्वरं=पराऽप्रकाशकं यच्छुक्लं रूपं तदितररूपं नालादिकं भास्वरशुक्लं च तदसमानाधिकरणिका, अथ च रूपवति=अभास्वरशुक्लरूपवति वृत्तिः, अथ च द्रव्यत्वसाक्षाद्व्याप्या जलत्वजातिस्तद्वत्त्वं विवक्षितमिति न पृथिव्यादावतिव्याप्तिरित्यर्थः । पृथिवीत्वमादाय पृथिव्यामतिव्याप्तिवारणाय–असमानाधिकरणान्तम्। जलत्वस्य शुक्लरूपसामानाधिकरण्यात् असंभवापत्तिः स्यात् तद्वारणाय–रूपे शुक्लेतरत्वं विशेषणं दत्तम्। तेजस्त्वमादाय तेजस्यतिव्याप्तिवारणाय–अभास्वरेति । वायुत्वमादाय वायावतिव्याप्तिवारणाय–रूपवद्वृत्तीति। कार्पासत्वमादाय कार्पासेऽतिव्याप्तिवारणाय,–करकात्वमादाय तदनवच्छिन्ने हिमादावव्याप्तिवारणाय च–साक्षादिति। वायुजलान्यतरत्वमादाय वायावतिव्याप्तिवारणाय–

**तेन स्फटिकादौ नातिव्याप्तिः। रसस्पर्शाविति। जलस्य मधुर एव रसः, शीत एव स्पर्शः। तिक्तरसवदवृत्तिमधुरवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः। तेन**

---

जातीति। जाती अभास्वरशुक्लेतररूपाऽसामानाधिकरण्यं = अभास्वरशुक्लेतररूपवन्निष्ठाधिकरणता-निरूपितसमवायावच्छिन्नवृत्तित्वाऽभाववत्त्वम्, अन्यथा जलत्वस्य कालिकेन अभास्वरशुक्लेतररूप-सामानाधिकरण्यादनित्यजले लक्षणाऽसमन्वयः स्यात्। रूपवत्त्वमपि समवायेन बोध्यम्, अन्यथा कालिकेन रूपवत्त्वस्य वायौ सत्त्वाद्वायुत्वमादाय वायावतिव्याप्तिः स्यात्। जातिमत्त्वमपि समवायेन बोध्यम्, अन्यथा कालिकेन जलत्ववत्त्वं वाय्वादावतिव्याप्तं स्यात्। 'अभास्वरशुक्लसमानाधिकरणे'-त्युक्तौ पृथिवीत्वजातिमादाय पृथिव्यामतिव्याप्तिः स्यादतः–अभावद्वयगर्भता। **द्रव्यत्वसाक्षाद्व्याप्यत्वमत्र** न द्रव्यत्वव्याप्याऽव्याप्यत्वात्मकम्, तद्धि न द्रव्यत्वसमानाधिकरणान्योन्याभावप्रतियो-गितावच्छेदकजातिसमानाधिकरणाऽन्योन्याभावप्रतियोगितावच्छेदकत्वाऽभावः, जलत्वस्यापि तादृश-पृथिवीत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वेनाऽसम्भवापत्तेः, नापि द्रव्यत्वसमानाधिक-रणभेदप्रतियोगितावच्छेदकजातिसमानाधिकरणत्वविशिष्टं यत् तादृशजातिसमानाधिकरणभेद-प्रतियोगितावच्छेदकत्वं तदभावः, जलत्वस्यापि तादृशकरकात्वादिसमानाधिकरणत्वेन तादृश-पृथिवीत्वादिसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वेन चाऽसम्भवापातात्। नापि द्रव्यत्व-समानाधिकरणभेदप्रतियोगतावच्छेदिका या जातिस्तद्व्यक्तिसमानाधिकरणत्वविशिष्टतद्व्यक्ति-समानाधिकरणभेदप्रतियोगितावच्छेदकत्वाऽभावः, घटत्वस्यापि तादृशजलत्वाऽव्याप्यत्वमादायाति-व्याप्त्यापत्तेः॥ **किन्तु**–स्वसामानाधिकरण्य-स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसम्ब-न्धेन द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकजातिविशिष्टाऽन्यत्वरूपं ग्राह्यमिति॥ **वस्तुतस्तु**–द्रव्यविभाजकोपाधित्वमेव द्रव्यत्वसाक्षाद्व्याप्यजातित्वं ग्राह्यमतो न कल्पनागौरवाद्यापत्तिरिति **ध्येयम्। तदर्थ** इति। 'शुक्लरूपवत्त्व'मित्यस्य लाक्षणिकोऽर्थ इत्यर्थः। **तेनेति**। एतादृशपरिष्का-रार्थकरणेन 'शुक्लरूपवत्त्वस्य' स्फटिके वस्त्रादौ च याऽतिव्याप्तिः सा न भवति, तत्र "अभास्वर... जातिमत्त्वा"त्मकलक्षणस्याऽगमनान्नातिव्याप्तिरित्यर्थः। **"रसस्पर्शा"**वित्यस्यार्थमाह–**जलस्य मधुर एवेति**। समवायेन मधुररसवत्त्वं जलस्य लक्षणं बोध्यम्। **शीत एवेति**। समवायेन शीतस्पर्शवत्त्वमपि जलस्य लक्षणं बोध्यम्। यद्यपि 'शीतं गुण'इति कोशात् क्लीवतैवोचिता, तथापि 'अस्त्रीनियतलिङ्गानां योगे तल्लिङ्गताऽपि चे'तिनियमेन 'शीतशब्दस्य पुंस्त्वम्। ननु 'समवायेन मधुररसवत्त्वं' शर्करादिपृथिव्यामतिव्याप्तमित्याशंकावारणाय परिष्करोति–**तिक्तरसेति**। तिक्त-रसवती पृथिवी तत्राऽवृत्तिः, अथ च मधुररसवति जले वृत्तिर्या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः जल-त्वरूपा तद्वत्त्वं जले समन्वयः, शर्करायां तु जलत्वजातेरभावान्नातिव्याप्तिरिति भावः। पृथिव्यामतिव्या-प्तिवारणाय तिक्तरसवदवृत्तीति। तेजआदावतिव्याप्तिवारणाय–मधुरवद्वृत्तीति। शर्करात्वमादायातिव्या-प्तिवारणाय, करकात्वमादाय तदनवच्छिन्ने हिमादावव्याप्तिवारणाय–च द्रव्यत्वसाक्षाद्व्याप्येति। जलशर्करोभयत्वमादाय वायावतिव्याप्तिवारणाय। जातीति। तिक्तरसवदवृत्तित्वं नाम समवाया-वच्छिन्नतिक्तरसवन्निष्ठाधिकरणतानिरूपितसमवायावच्छिन्नवृत्तित्वाऽभाववत्त्वम्, तेन कालिकेन तिक्तरसवति अनित्यजले जलत्वस्य वृत्तित्वेन नाऽसम्भवसंभावना। मधुरवत्त्वमपि समवायेन बोध्यम्, अन्यथा कालिकेन मधुरवत्त्वं वायावादाय तत्रातिव्याप्तिः स्यात्। द्रव्यत्वसाक्षाद्व्याप्यत्वं नाम–स्वसामानाधिकरण्य–स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन द्रव्यत्वस-मानाधिकरणभेदप्रतियोगितावच्छेदकजातिविशिष्टाऽन्यत्वं बोध्यम्। जातिमत्त्वमपि समवायेन बोध्यम्

**शर्करादौ नातिव्याप्तिः। शीतेतरस्पर्शवदवृत्तिस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः। ननु शुक्लरूपवत्त्वमेवेति कुतः, कालिन्दीजलादौ नीलिमोपलब्धेरिति चेद्, न, नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावाज्जले नीलरूपासंभवात्। कालिन्दीजले नीलत्वप्रतीतिस्त्वाश्रयौपाधिकी। अत एव वियति विक्षेपे धवलिमो-**

---

अन्यथा कालिकेन जलत्ववत्त्वस्य तेजआदावतिव्याप्तिः स्यात्। परिष्कृतार्थस्य फलं दर्शयति—**तेनेति**। "तिक्तरसवदवृत्तीत्यादिपरिष्कृतार्थकरणेन शर्करादौ नातिव्याप्तिः 'मधुररसवत्त्व'मात्रलक्षणस्येत्यर्थः। 'समवायेन शीतस्पर्शवत्त्व'लक्षणस्य उत्पत्तिकालीने उत्पन्नविनष्टे च जलेऽव्याप्तिरित्याशंकावारणार्थं तत्परिष्करोति—**शीतेतरेति**। शीतस्पर्शाद् इतरो य उष्णोऽनुष्णाशीतश्च स्पर्शस्तद्वति तेजसि पृथिव्यां वायौ चाऽवृत्तिः, अथ च स्पर्शः=शीतस्पर्शस्तद्वति जले वृत्तिः द्रव्यत्वस्य साक्षाद्व्याप्या या जलत्वजातिस्तद्वत्त्वस्य उत्पत्तिकालीने उत्पन्नविनष्टे च जले वर्तते एवेति नाऽव्याप्तिरित्यर्थः। पृथिव्यादावतिव्याप्तिवारणाय—शीतेतरस्पर्शवदवृत्तीति। आत्मादावतिव्याप्तिवारणाय—स्पर्शवद्वृत्तीति। करकात्वमादाय तदनवच्छिन्ने जलेऽव्याप्तिवारणाय—द्रव्यत्वसाक्षाद्व्याप्येति। करकाचन्दनान्यतरत्वमादाय चन्दनात्मकपृथिव्यामतिव्याप्तिवारणाय अथवा करकाहिमोभयत्वमादाय तदनवच्छिन्ने जलान्तरेऽव्याप्तिवारणाय—जातीति। शीतेतरस्पर्शवत्त्वं=शीतत्वावच्छिन्नप्रतियोगिताकभेदविशिष्टो यो यः स्पर्शः समवायेन तदधिकरणत्वात्मकं बोध्यम्। तेन यत्किञ्चिज्जलीयो यो यत्किञ्चिच्छीतस्पर्शस्तदितरोऽन्यजलीयशीतस्पर्शस्तद्वज्जलमादाय, कालिकेन च शीतेतरस्पर्शवज्जलमादाय तत्र जले नाऽसम्भवादसम्भावनेति। स्पर्शवत्त्वमपि समवायेन बोध्यम्, अन्यथा कालिकेन शीतस्पर्शवत्त्वस्य वायुकालादौ सत्त्वात् तत्रातिव्याप्तिः स्यात्। द्रव्यत्वसाक्षाद्व्याप्यत्वं=स्वसामानाधिकरण्य-स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकजातिविशिष्टान्यत्वम्। जातिमत्त्वं समवायेन बोध्यम्, तेन कालिकेन जलत्ववत्त्वं वायावादाय तत्र नातिव्याप्तिरिति ध्येयम्। ननु जले नीलादिरूपवत्तायाः प्रत्यक्षप्रतीतिसिद्धत्वात् 'वर्णः शुक्ल' इति मूलं प्रतीतिविरुद्धं, तथा च नीलरूपवत्त्वादिकमपि लक्षणं वक्तव्यमित्याशयेन शंकते—**नन्विति**। समवायेन शुक्लरूपवत्त्वमेवेति यल्लक्षणं तत्, कुतः=कस्माद्धेतोः सिद्ध्यति?। 'नीलादिरूपवत्त्व'मित्यपि लक्षणं कथं न भवतीति? हृदयम्॥ जले नीलरूपवत्त्वे प्रत्यक्षप्रतीतिं दर्शयति—**कालिन्दीति**। कालिन्दी=यमुना, तस्या जले आदिना नवीनमेघे मध्यसमुद्रे चेति ग्राह्यम्। नीलिमा=नीलरूपं तस्योपलब्धिः प्रत्यक्षं तस्मादित्यर्थः॥ तन्निषेधति—**नेति**। **नीलेति**। समवायसम्बन्धावच्छिन्ननीलरूपत्वावच्छिन्ननीलरूपनिष्ठकार्यतानिरूपिता या तादात्म्यसम्बन्धावच्छिन्ना कारणता पृथिवीनिष्ठा तदवच्छेदिकायाः पृथिवीत्वजातेः जले, अभावात्=समवायेनाऽवर्तमानत्वात्, समवायेन नीलं प्रति तादात्म्येन जलस्य कारणत्वाऽभावात् कार्यस्य नीलरूपस्य असम्भवात्=अनुत्पादात्, जलस्य न नीलरूपवत्त्वादिकं लक्षणं भवतीति भावः॥ ननु तर्हि जले नीलरूपवत्ताप्रतीतिः (जलं नीलमिति) कथं भवतीत्यत आह—**कालिन्दीजले**—इति। कालिन्द्या यमुनाया जले, नीलत्वप्रतीतिस्तु=नीलत्वं=नीलरूपं तद्वत्ताप्रतीतिस्तु, आश्रयौपाधिकी=आश्रयःसंयोगेन जलस्याऽऽधारात्मिका या कृष्णवर्णा पृथिवी तादृशपृथिव्यात्मकोपाधिप्रयुक्ता भवति, स्वसमवायिसंयुक्तत्वसम्बन्धेन पार्थिवरूपं जले प्रतीयते इति भावः। तथा च समवायेन नीलरूपाऽभाववति जले 'समवायेन नीलरूपवज्जलमि'ति प्रतीतिस्तु भ्रान्तिरेवेति हृदयम्। 'स्वसमवायिसमवेतत्वसम्बन्धेन नीलरूपवज्जल'मितिप्रतीतिस्तु

पलब्धिः। अथ जले माधुर्ये किं मानम्, नहि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते। न च नारिकेलजलादौ माधुर्यमुपलभ्यत एवेति वाच्यं, तस्याश्रयौपाधिकत्वात्। अन्यथा जम्बीररसादावम्लाद्युपलब्धेरम्लादिमत्त्वमपि स्यादिति चेत् ?, न, हरीतक्यादिभक्षणस्य जलरसव्यञ्जकत्वात्। न च हरीतक्यामेव जलोष्मसंयोगाद्रसान्त-

---

यथार्थैव भवतीत्यैदंपर्यम् ॥ अत एवेति। स्वसमवायिसंयुक्तत्वसम्बन्धस्य 'नीलं जल'मितिप्रतीतिनियामकत्वादेव, 'समवायेन नीलं जलमिति'प्रतीतेर्भ्रान्तित्वादेव चेत्यर्थः। वियति=आकाशे, विक्षेपे=जले उत्क्षिप्यमाणे सति, धवलिमा=श्वेतरूपं तस्य उपलब्धिः=समवायेन तद्वत्ताज्ञानात्मिका प्रत्यक्षप्रतीतिः यथार्था भवति, कुतः? तदानीं स्वसमवायिसंयुक्तत्वाख्यसम्बन्धनाशादिति भावः। एवं नूतनमेघादावपि सूर्यकिरणाऽभावा (निरोधाऽऽ)त्मकच्छायाया भानात्, अथवा नीलरूपवत्पार्थिवत्रसरेण्वादीनां तत्र सहभावात् स्वसमवायिसंयुक्तत्वसम्बन्धेन मेघे नीलरूपवत्ताभानात् 'समवायेन नीलो मेघ' इतिप्रतीतेस्तु भ्रान्तित्वादित्यवधेयम्। मध्यसमुद्रजलेऽप्याश्रयौपाधिकी नीलवत्ताप्रतीतिर्बोध्येति ॥ ननु जले माधुर्ये प्रमाणाऽभावात् 'जले मधुर एव रस' इत्युक्तिरयुक्तेत्याशंकते—अथेति। जले मधुररसवत्त्वे किं मानम्=किं प्रत्यक्षम् वाऽनुमानं वोपमानं वा शब्दः प्रमाणम् अस्ति? ॥ यच्चोच्यते—प्रत्यक्षम् प्रमाणम् भवति,—तन्नेति निषेधति—नहि प्रत्यक्षेणेति। प्रत्यक्षेण=रसनेन्द्रियेण, संयुक्तसमवायसन्निकर्षद्वारा कोऽपि=मधुराऽम्ललवणकटुकषायतिक्तान्यतमो रसः, तत्र=जले, न ह्यनुभूयते=प्रत्यक्षानुभवविषयो न भवति, अतः प्रत्यक्षप्रमाणं न प्रवर्तते इति भावः ॥ नारिकेलजले माधुर्यं प्रत्यक्षं प्रमाणमस्तीत्याशंक्य निषेधति—न चेति। नारिकेलः=लाङ्गलं, तत्फलान्तर्गते जले, आदिना इक्षुरसादौ च, माधुर्यं=मधुररसः उपलभ्यत एव=रसनासंयुक्तसमवायसम्बन्धेन रासनप्रत्यक्षविषयो भवत्येव, तथा च जले प्रत्यक्षप्रमाणसिद्धो मधुररस इत्याशंकार्थः। उत्तरयति—तस्याश्रयौपाधिकत्वादिति। तस्य नारिकेलजलस्य इक्षुरसादेश्च आश्रयो यः फलात्मिका दण्डाद्यात्मिका च पृथिवी सैव उपाधिः-उप समीपवर्तिनि-संयुक्तजले आधीयन्ते स्वधर्मान् इति उपाधिस्तत्प्रयुक्तमधुररसवत्त्वादित्यर्थः। स्वसमवायिसंयुक्तत्वसम्बन्धेन पृथिवीरसो जले तत्र प्रतीयते नतु समवायेन, तथा च जले समवायेन मधुररसवत्त्वे न प्रत्यक्षं प्रमाणमिति भावः। जलस्य माधुर्ये आश्रयौपाधिकत्वाऽनङ्गीकारे आपत्तिमपि दर्शयति—अन्यथेति। अन्यथा=आश्रयौपाधिकत्वाऽनङ्गीकारे, जम्बीरस्य( नींबू )दन्तशठस्य अम्लरसादौ स्वाश्रयसंयुक्तत्वसम्बन्धेनोपलभ्यमानेऽपि तत्रौपाधिकत्वाऽनङ्गीकारे जलस्य अम्लादिरसवत्त्वमपि आपद्येत, तथा च पृथिव्यामिव जलेऽपि सर्वेषां रसानां समवायेन आपत्तिः स्यात्तच्चानुभवविरुद्धमिति॥ समाधत्ते-हरीतक्यादीति। हरीतकी=हैमवती आदिना आमलकपरिग्रहः, तस्य भक्षणं—चर्वणानुकूलव्यापारः स च दन्तेष्विव जिह्वायामपि आश्रयतासम्बन्धेन वर्तते तादृशव्यापारसहकृतजिह्वायाः, जलरसव्यञ्जकत्वात्=जलस्य मधुररसग्राहकत्वात् हरीतकीभक्षणोत्तरं प्रत्यक्षेण माधुर्योपलम्भः, तथा च जले न सर्वदा मधुरप्रत्यक्षं, न च अम्लादिमत्त्वापत्तिरिति भावः ॥ ननु हरीतकीभक्षणे कृते सति तत्र हरितक्यामेव जलस्य मौखिकोष्मणश्च संयोगात् मधुररसः कल्प्यताम्, न तु जले मधुररसकल्पना युक्तेत्याशंकते—न च हरीतक्यामेवेति। हरीतकीचूर्णे एव पीतजलस्य मौखिकोष्मणश्च संयोगात् रसान्तरस्य=स्वाभाविकात् कषायादितरो यो मधुररसस्तस्योत्पत्तिः स्वीक्रियतामित्यर्थः ॥ समाधत्ते—कल्पनेति। नूतनकार्यकारणभावस्य या कल्पना तद्गौरवादित्यर्थः, तथाहि—अवयवरसाऽजन्यो यः पाकजः पृथिवीरसः 'तादृशपृथिवीरसत्वावच्छिन्नं प्रति तेजःसंयोगात्मकपाकस्य कारणत्वमिति'

**रोत्पत्तिरिति वाच्यं, कल्पनागौरवात् । पृथिवीत्वस्याम्ब्लादिजनकतावच्छेदकत्वाच्च जले नाम्ब्लादिकम् । जम्बीररसादौ स्वाश्रयौपाधिकी तथा प्रतीतिः । एवं जन्यशीतस्पर्शजनकतावच्छेदकं जन्यजलत्वं तदवच्छिन्नजनकतावच्छेदकं तु जलत्वं बोध्यम् । घृष्टचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तर्वर्तिशीततरसलिलस्यैव । तेजःसंयोगाज्जले**

---

नियमः सर्वजनसिद्धः, यदि च हरीतक्यां मधुररसो जलोष्मसंयोगात् उत्पद्यते इति स्वीक्रियेत तदा व्यभिचारवारणाय 'पार्थिवरसत्वावच्छिन्नं प्रति तेजःसंयोग–जलसंयोगान्यतरस्य कारणत्व'मित्यपि कार्यकारणभावः कल्पनीयः स्यात्, तदेव गौरवम् । तेजःसंयोगस्य जलसंयोगस्य च स्वातन्त्र्येण कारणत्व पृथक्कार्यकारणभावे त्वव्यवहितोत्तरत्वनिवेशगौरवम्, कार्यकारणभावद्वयापत्तिश्च स्यादिति भावः । 'अन्यथा जम्बीररसादावम्ब्लादिरसोपलब्धेरम्ब्लादिमत्त्वमपि स्यादि"त्यापत्तौ यद्युच्येत–'जम्बीररसादौ सर्वत्राऽम्ब्लरसस्याऽनुभूयमानत्वात् जलेऽम्ब्लरसोऽप्यङ्गीकर्तव्यः अतो नोक्तापत्तिर्दूषणमिति, तत्रोत्तरमाह–**पृथिवीत्वस्येति** । अम्ब्ललवणादिषड्विधरससमवायिकारणता, किञ्चिद्धर्मावच्छिन्ना, कारणतात्वादि'त्यनुमानसिद्धायाः अम्ब्लादिसमवायिकारणतावच्छेदिकायाः पृथिवीत्वजातेः जलेऽभावात् जलस्याऽम्ब्लादिकं प्रत्यकारणत्वात् जले नाऽम्ब्ललवणादिरसस्वीकारः प्रामाणिक इति भावः ॥ ननु तुल्यन्यायेन मधुररसजनकतावच्छेदकस्यापि पृथिवीत्वस्य जलेऽभावात् मधुररसोऽपि जले न स्वीकार्यः, न च पृथिवीत्वस्येव जलत्वस्यापि मधुररसजनकतावच्छेदकतया तादृशधर्मवत्त्वेन जले मधुररसोत्पत्तौ न क्षतिरिति वाच्यम्, तथासति तुल्ययुक्तया जम्बीरजलादावपि अम्ब्लजनकतावच्छेदकजलत्वस्यापि सत्त्वेन तादृशधर्मवत्तया जलेऽप्यम्ब्लोत्पत्त्यापत्तिः स्यादित्याशंकां जम्बीरगतजले अम्ब्लोपलब्धेर्भ्रमत्वोपपादनेन परिहरति–**जम्बीरेति** । जम्बीररसात्मकजले तु जम्बीरात्मकपृथिवी आश्रयस्तस्य संयोगाद् अम्ब्लोपलब्धिर्भवतीत्यर्थः । तथा प्रतीतिः='जम्बीरजलम् अम्ब्ल'मितिप्रतीतिः स्वसमवायिसमवेतत्वसम्बन्धेन जले जम्बीरात्मकपृथिवीरसविषयिण्येव भवति, न तु 'समवायसम्बन्धेन जम्बीरजलम् अम्ब्लम्' इति प्रतीतिर्भवति, यदि च समवायेन जम्बीरजलम् अम्ब्लमि'तिप्रतीतिः स्यात् तर्हि सा 'अम्ब्लरससमवायाऽभाववति अम्ब्लरससमवायवत्ताप्रतीतिः' भ्रान्तिरेवेति भावः ॥ जलत्वजातावनुमानान्तरं प्रमाणमाह–**एवमिति** । यथा जन्यस्नेहसमवायिकारणतावच्छेदकतया जन्यजलत्वं साधयित्वा जन्यजलसमवायिकारणतावच्छेदकतया सामान्यतो जलत्वं साधितं तद्वदित्यर्थः । **जन्येति** । समवायसम्बन्धावच्छिन्नजन्यशीतस्पर्शत्वावच्छिन्नजन्यशीतस्पर्शनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्न–जन्यजलनिष्ठकारणता,–किञ्चिद्धर्मावच्छिन्ना,–कारणतात्वात्'–इत्यनुमानेन जन्यजलत्वं साधयित्वा ततः समवायसम्बन्धावच्छिन्नजन्यजलत्वावच्छिन्नजन्यजलनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजलनिष्ठकारणता,–किञ्चिद्धर्मावच्छिन्ना, कारणतात्वादि'त्यनुमानेन सामान्यतो जलत्वं सिद्ध्यतीति भावः । शब्दार्थस्तु जन्यः=अनित्यो यो द्व्यणुकादिजलगतः शीतस्पर्शस्तस्य, जनकतावच्छेदकं=समवायिकारणतावच्छेदकं जन्यजलत्वम्=समवेतत्वविशिष्टजलत्वजातिः–सिद्ध्यति, तदवच्छिन्नजनकतावच्छेदकं=जन्यजलत्वावच्छिन्नस्य समवायिकारणतावच्छेदकं परमाण्वादिसाधारणं जलत्वं सिद्ध्यतीति ॥ ननु घृष्टचन्दनात्मकपृथिव्यामपि शीतस्पर्शोपलब्धेः 'शीतस्पर्शं प्रति जलं कारणमि'तिकार्यकारणभावे व्यभिचारस्तथा च जलत्वस्य कथं शीतस्पर्शसमवायिकारणतावच्छेदकत्वमत आह–**घृष्टचन्दनादाविति** । घृष्टचन्दने, आदिना शीलातलादौ तु, शैत्यस्य उपलब्धिः='चन्दनं शीतलम्' 'शिलातलं शीतल'मित्यादिप्रत्यक्षप्रतीतिस्तु, चन्दनस्य शिलायाश्चान्तरवयवेषु द्व्यणुकादिषु सहभावेन

**उष्णप्रतीतिरौपाधिकी स्फुटैव, तत्र पाकासंभवात्। स्नेहस्तत्रेति । घृतादावपि तदन्तर्वर्तिजलस्यैव स्नेहः, जलस्य स्नेहसमवायिकारणत्वात्। तेन जल एव स्नेह इति मन्तव्यम्। द्रवत्वमिति। सांसिद्धिकद्रवत्वत्वं जातिविशेषः प्रत्यक्षसिद्धः। तदवच्छिन्न-**

---

वर्तिनो ये शीततरसलिलस्याऽवयवाः तद्गतशीतस्पर्शस्य स्वसमवायिसंयुक्तत्वसम्बन्धेन चन्दने शीलातलादौ न च वर्तमानस्य भवति, तथा च समवायेन शीतस्पर्शाभाववति चन्दने शीलातलादौ वा 'समवायेन शीतस्पर्शवत्ता'प्रतीतिर्भ्रान्तिरेवेति भावः ॥ ननु 'जले शीत एव स्पर्श इति यदुक्तं तदयुक्तम्, जले उष्णस्पर्शस्याऽप्युपलभ्यमानत्वादत आह–**तेज इति**–तेजः वह्न्यात्मकं तत्संयोगात् जले स्वसमवायिसंयुक्तत्वसम्बन्धेन 'उष्णं जल'मिति प्रतीतिर्भवति, अतः सा औपाधिकी स्फुटा=जले तेजःसंयोगसत्त्वे एव उष्णप्रतीतिः तेजःसंयोगाऽभावे तु न' इत्यन्वयव्यतिरेकसिद्धाऽस्ति, तथा च समवायेन उष्णस्पर्शाऽभाववति जले 'समवायेन उष्णस्पर्शवत्ता'प्रतीतिस्तु भ्रान्तिरेवेति भावः ॥ ननु तेजःसंयोगसत्त्वे जले शीतस्पर्शनाशः उष्णस्पर्शोत्पत्तिश्चाङ्गीक्रियतामत-आह–**तत्रेति** । तत्र=जलादौ ॥ **पाकाऽसंभवादिति** । विजातीयरूपरसस्पर्शाद्युत्पादकस्तेजःसंयोगः पाकः तस्यः तस्य जलेऽसंभवादित्यर्थः । यदि पाकेन जले शीतस्पर्शनाश उष्णस्पर्शोत्पत्तिश्च स्वीक्रियते तदा तेजःसंयोगनाशोत्तरमपि उष्णस्पर्श एव प्रतीयेत शीतस्पर्शश्च न प्रतीयेत, न त्वेवं प्रतीयते, तस्मात् पृथिव्यामेव पाको न तु जलादाविति भावः ॥ ननु 'स्नेहस्तत्रे'तिमूलेन समवायेन स्नेहवत्त्वं जलस्य लक्षणं लभ्यते तच्च घृताद्यात्मकपृथिव्यामतिव्याप्तमत आह—**घृतादावपीति** । घृते तैले मधुनि अपि तेषामवयवेषु अन्तः=मध्ये मध्ये सहभावेन वर्तन्ते ये जलावयवास्त्र्यणुकादयस्तेषामेव स्नेहः स्वसमवायिसमवेतत्वसम्बन्धेन जले प्रतीयते न तु समवायेनेत्यर्थः ॥ ननु समवायेनैव घृतादौ स्नेहः प्रतीयतामित्यत आह–**जलस्येति** । जलस्य स्नेहसमवायिकारणत्वात्=समवायसम्बन्धावच्छिन्नजन्यस्नेहत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वात्, तेन=स्नेहसमवायिकारणतावच्छेदकजलत्वस्य घृतादावभावेन, घृतादौ समवायेन न स्नेहः, किन्तु जले एव समवायेन स्नेहः, तथा च समवायेन स्नेहाऽभाववति घृतादौ 'समवायेन स्नेहवद् घृतादीति' प्रतीतिर्भ्रान्तिरितिभावः ॥ **मन्तव्यमिति** । अन्यत्र समवायेन वृत्तित्वाऽनुपपत्त्या जले एव समवायेन स्नेहः स्वीकार्य इत्यर्थः ॥ ननु सांसिद्धिकद्रवत्वत्वस्योपाधिस्वरूपत्वेन अननुगततया कथं तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धिरित्याशंकानिरासाय प्रथमं सांसिद्धिकद्रवत्वत्वस्य जातित्वं प्रमाणयति–**सांसिद्धिकद्रवत्वत्वमिति** । सांसिद्धिकद्रवत्वनिष्ठा सांसिद्धिकद्रवत्वत्वात्मिका जातिः 'द्रवती'तिप्रत्यक्षप्रमाणजन्यप्रमितिविषयिण्येव भवति, तथा च त्र्यणुकादिजलसमवेतद्रवत्वे प्रत्यक्षसिद्धं सांसिद्धिकद्रवत्वत्वं बाधकाऽभावाद्व्यवहारबलाच्च अतीन्द्रियपरमाण्वादिसमवेतद्रवत्वेऽपि स्वीक्रियते इति भावः ॥ **तदवच्छिन्नेति** । तदेव=जलत्वमेव ॥ समवायेन सांसिद्धिकद्रवत्वत्वावच्छिन्नं तु नित्यं सांसिद्धिकद्रवत्वमपि भवति तस्य कार्यत्वाऽभावात् अनुमानमेव न संभवेत् अतः समवायकालिकोभयसम्बन्धेन सांसिद्धिकद्रवत्वत्वावच्छिन्नं ग्राह्यम्, सांसिद्धिकद्रवत्वत्वस्य 'नित्येषु कालिकाऽयोगादि'तिनियमेन नित्यद्रवत्वे वृत्तित्वाऽभावात् कालिकसमवायोभयसम्बन्धेन सांसिद्धिकद्रवत्वत्वावच्छिन्नम् अनित्यमेव सांसिद्धिकद्रवत्वं तन्निष्ठकार्यतानिरूपिता या अनित्यजलनिष्ठा कारणता तदवच्छेदकमपि तदेव=अनित्यजलत्वमेवेत्यर्थः ॥ तथा च–समवायसम्बन्धावच्छिन्नजन्यसांसिद्धिकद्रवत्वत्वावच्छिन्नजन्यसांसिद्धिकद्रवत्वनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नाऽनित्यजलनिष्ठकारणता, किञ्चिद्धर्मावच्छिन्ना,–कारणतात्वादि'त्यनुमानेन अनित्यजलत्वं संसाध्य

जनकतावच्छेदकमपि तदेवेति भावः। तैलादावपि जलस्य द्रवत्वं, स्नेहप्रकर्षेण च दहनानुकूल्यमिति वक्ष्यति ॥ ३९ ॥

नित्यतादि प्रथमवत्किन्तु देहमयोनिजम्।
इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥ ४० ॥

प्रथमवदिति। पृथिव्या इवेत्यर्थः। तथा हि, जलं द्विविधं–नित्यमनित्यं च, परमाणुरूपं नित्यं, द्व्यणुकादिकं सर्वमनित्यमवयवसमवेतं च। अनित्यमपि त्रिविधं शरीरे-

---

ततः–'समवायसम्बन्धावच्छिन्नाऽनित्यजलत्वावच्छिन्नाऽनित्यजलनिष्ठकार्यतानिरूपिततादात्म्यसम्ब–न्धावच्छिन्नजलनिष्ठकारणता,–किञ्चिद्धर्मावच्छिन्ना,–कारणतात्वादित्यनुमानेन सामान्यतो जलत्वं सिद्धयतीति भावः ॥ ननु तैलादिपृथिव्यामपि सांसिद्धिकद्रवत्वोपलब्धेः कारणाऽभावेऽपि कार्यसत्त्वारूपव्यतिरेकव्यभिचारे कथं जलत्वं सांसिद्धिकद्रवत्वकारणतावच्छेदकमत आह–**तैलादाविति**। तैले मधुनि चापि तैलान्तर्वर्तिजलस्यैव सांसिद्धिकद्रवत्वं स्वसमवायिसंयुक्तत्वसम्बन्धेन वर्तते, न तु समवायेन, तथा च समवायेन सांसिद्धिकद्रवत्वाऽभाववति तैलादौ 'समवायेन सांसिद्धिकद्रवत्ववत् तैलादिक'मिति प्रतीतिर्भ्रान्तिरिति भावः ॥ ननु तैले जलस्वीकारे दहनाऽनुपपत्तिः, जलस्य दहनविरोधित्वादत आह–**स्नेहप्रकर्षेणेति**। प्रकृष्टस्नेहेनेत्यर्थः। प्रकृष्टस्नेहविशिष्टजलस्य दहनानुकूलत्वात् न दहनानुपपत्तिरिति भावः ॥ **वक्ष्यतीति**। स्नेहनिरूपणाऽवसरे "तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता" १५७ कारिकाव्याख्यायामिति शेषः। तथाहि–'तैले उपलभ्यमानस्नेहोऽपि जलीय एव, तस्य प्रकृष्टत्वादग्नेरानुकूल्यम्, अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति" ॥ ३९ ॥

मूले–**नित्यतादीति**। जलस्य नित्यत्वमनित्यत्वं प्रथमस्येव=प्रथमवत् 'तत्र तस्येवे'ति (पा०सू०) षष्ठ्यन्ताद्वतिः। पृथिव्या इव बोध्यम् किन्तु=त्रिविधाऽनित्यपृथिव्यामपि देहम्–जालीयशरीरं तु, अयोनिजं=स्त्रीगर्भवासाद्द भगद्वाराऽनुत्पन्नम्, बोध्यम्। जलीयमिन्द्रियं 'रसन'संज्ञकं बोध्यम्। जलीयविषयः सिन्धुः हिमं नदी इत्यादिरूपो बोध्य इत्यर्थः ॥ मुक्तावल्यां 'प्रथमवत्'–पदस्यार्थमाह–**पृथिव्या इवेति**। तत्स्फुटयति–**तथाहीति**। जलस्य द्वैविध्यमाह–**नित्यमनित्यं चेति**। नित्यत्वं–ध्वंसभिन्नत्वे सति ध्वंसाऽप्रतियोगित्वम्। ध्वंसेऽतिव्याप्तिवारणाय–ध्वंसभिन्नत्वमिति। घटादावतिव्याप्तिवारणाय–विशेष्यदलम्। अथवा–जलत्वविशिष्टनित्यत्वं ध्वंसाऽप्रतियोगित्वमात्रं वक्तव्यम्। अनित्यत्वम्–ध्वंसप्रतियोगित्व–प्रागभावप्रतियोगित्वान्यतरवत्त्वं, तेन न ध्वंसे प्रागभावे वाऽव्याप्तिः। वस्तुतः–जलत्वविशिष्टाऽनित्यत्वं ध्वंसप्रतियोगित्वमात्रं प्रागभावप्रतियोगित्वमात्रं वा वक्तव्यमिति ध्येयम्। नित्यं जलं नाम्ना निर्दिशति–**परमाणुरूपमिति**। परमाण्वात्मकं जलं नित्यमित्यर्थः। अनित्यं जलं नाम्ना निर्दिशति–**द्व्यणुकादीति**। द्व्यणुकत्रसरेण्वादिस्थूल–महाभूतात्मकं जलमनित्यम्, तदेव च अवयवेषु समवायेन वर्तमानम्=अवयवि जलमिति बोध्यम्, न तु बौद्धमतवत् परमाणुपुञ्जात्मकमिति भावः ॥ अनित्यमपि जलं त्रिविधम्=अवान्तरधर्मत्रयावच्छिन्नमिति दर्शयति-**शरीरेन्द्रियेति**। शरीरात्मकम्, इन्द्रियात्मकं, विषयात्मकं चेतिभेदादित्यर्थः, तथा चानुमानम् "समवेतजलं,–त्रिविधम् (उद्देश्यतावच्छेदकसमनियतवस्तुमदन्यसंख्यावत्,–) शरीरेन्द्रियविषयभेदादि'ति। हेतुः स्वप्रतियोग्यन्यतमत्वव्याप्यसमवेतजलत्ववत्त्वसम्बन्धेन बोध्यः, साध्ये समनैयत्यं च स्वाश्रयाश्रयत्वसम्बन्धेन बोध्यम्, स्वं त्रित्वं तदाश्रयाणि देहत्वेन्द्रियत्वविषयत्वानि, तदाश्रयास्त्रयो देहेन्द्रिय-

न्द्रियविषयभेदात्। पृथिवीतो यो विशेषस्तमाह–किन्त्विति। देहमयोनिजम्, अयोनिजमेवेत्यर्थः। जलीयं शरीरं वरुणलोके प्रसिद्धम् । इन्द्रियमिति । जलीयमित्यर्थः। तथाहि, रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवत्। रसनेन्द्रियसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम्। विषयं दर्शयति–सिन्धुहिमादिरिति। सिन्धुः समुद्रः। हिमं तुषारः । आदिपदात्सरित्कासारकरकादिः सर्वोऽपि ग्राह्यः। न च हिमकरकयोः कठिनत्वात्पार्थिवत्वमिति वाच्यम्,

---

विषयाः, समनियतत्वं नाम–व्यापकत्वे सति व्याप्यत्वम , वस्तुमत्त्वं च–स्ववृत्तित्व–स्वसमानाधिकरणस्वेतरवृत्तित्वोभयसम्बन्धेन, स्वं–समवेतजलत्वं, तद्वृत्तित्वम् , अथ च समवेतजलत्वसमानाधिकरणस्वेतरदेहत्ववृत्तित्वमित्युभयसम्बन्धेन वस्तुमत्त्वं चतुष्ट्वसंख्यायाम् , तदन्यत्वाऽभावात्र समवेतजलं चतुर्विधमिति व्यवहारः॥ **पृथिवीतो यो विशेष** इति। त्रिविधपृथिव्यां यत् देहं योनिजमयोनिजमुभयमुक्तं, तदपेक्षया यो विशेषः–असमानता,–अयोनिजदेहमात्रं, तदाहेत्यर्थः॥ 'देहमयोनिज' मितिमूलस्यार्थमाह–**अयोनिजमेवेत्यर्थः** इति। एवकारेण योनिजशरीरं सर्वथा निषिद्धमिति भावः॥ **जलीयमिति**। जलमात्रे हस्तपादाद्यसंभवेऽपि पार्थिवभागानां निमित्तत्वात् करपादादिमत्त्वं भवति, जलभागस्य मुख्यत्वाच्च जलीयमिति॥ तच्च कुत्र प्रसिद्धमित्याकांक्षायामाह–**वरुणेति**। वरुणो जलदेवता तल्लोकः–समुद्रादिजलम् , तत्र प्रसिद्धम्। अल्पजले जलदर्शककाच( यन्त्र )द्वारा जलवत्कोमलशरीरा प्रतिक्षणं ह्रस्वदीर्घभावमापाद्यमानाः कीटादयो दृश्यन्ते, कासारसरित्सु दीर्घतराः, महासमुद्रादौ तु दीर्घतमा बोध्यास्ते जलीयशरीरप्रधानाः, तद्वज्जलदेवा अपि जलीयशरीरप्रधाना बोध्याः । मत्स्यादयस्तु पार्थिवाः न तु जलीयाः, जलान्तर्भागे एवोत्पन्नत्वात् तज्जीवने जलं त्वसाधारणसहकारि मनुष्यजीवने श्वास इव बोध्यम् । 'इन्द्रिय'मित्यस्य उपलक्षितार्थमाह–**जलीयमित्यर्थ इति**। रसनं=जलीयेन्द्रियं बोध्यमित्यर्थः॥ किं तत्र प्रमाणमित्याकांक्षायामनुमानमाह–**तथाहीत्यादिना**। रसनं जिह्वास्थमिन्द्रियं पक्षः। जलीयं=जलसमवेतद्रव्यत्वं साध्यम् । गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वादिति हेतुः गन्धरूपस्पर्शशब्दविषयकप्रत्यक्षाऽजनकत्वे सति रसविषयकप्रत्यक्षजनकत्वादित्यर्थकः । सक्तुरसाभिव्यञ्जकोदकवदिति दृष्टान्तम्। यथा सक्तुरसस्य प्रत्यक्षज्ञानोत्पादकम् उदकं गन्धरूपस्पर्शशब्दप्रत्यक्षाऽजनकत्वे सति सक्तुरसस्य प्रत्यक्षजनकत्वात् जलसमवेतद्रव्यं भवति तथा रसनेन्द्रियमपि गन्धरूपस्पर्शशब्दविषयकप्रत्यक्षाऽजनकत्वे सति रसप्रत्यक्षजनकत्वात् जलसमवेतद्रव्यत्ववद्भवतीति॥ रसविषयकप्रत्यक्षजनके मनसि व्यभिचारवारणाय–गन्धाद्यव्यञ्जकत्वे सतीति । गन्धाद्यव्यञ्जके तेजोद्व्यणुकादौ व्यभिचारवारणाय रसव्यञ्जकत्वादिति । **रसनेन्द्रियसन्निकर्षे** इति। रसनेन्द्रियस्य रसेन सह यो रसनासंयुक्तसमवायात्मकसन्निकर्षस्तस्यापि गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् तत्र च साध्याऽभावाद्व्यभिचारस्तद्वारणाय–हेतौ 'द्रव्यत्वे सती'त्यपि निवेश्यम्, उक्तसन्निकर्षस्य तु संयोगात्मकगुणत्वात् समवायात्मकसम्बन्धत्वाद्वा तत्र हेतोरगमनान्न व्यभिचार इत्यर्थः। **विषयमिति**। जलीयं विषयं दर्शयतीत्यर्थः 'सिन्धुपदार्थमाह–**समुद्र** इति। 'हिम'पदार्थमाह–**तुषार** इति। आदिपदग्राह्यमाह–**सरिदिति**। सरित्=नदी, कासारः–सरः, करका=जलवृष्टिपाषाणः, करकादिरित्यत्रादिना–अभ्रपटलस्वेदादयः सर्वेऽपि जलत्वेनाऽनुभूयमाना ग्राह्याः॥ शंकते– **न चेति**। हिमं तुषारस्तस्य करकाणां च कठिनस्पर्शवत्त्वात् पार्थिवत्वं=पृथिवीसमवेतद्रव्यत्व, भवितुमर्हतीत्याशंकार्थः॥ समाधत्ते–**ऊष्मणेति** । ऊष्मणा—सूर्यरश्मिप्रभवोष्मणा ।

ऊष्मणा विलीनस्य तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात्। यद्द्रव्यं यद्द्रव्यध्वंसजन्यमिति व्याप्तेर्जलोपादानोपादेयत्वसिद्धेः, अदृष्टविशेषेण द्रवत्वप्रतिरोधात्। करकादीनां काठिन्यप्रत्ययस्य भ्रान्तित्वात्॥ ४०॥

उष्णः स्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्।
नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत्॥ ४१॥

तेजो निरूपयति—उष्ण इति। उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः। इत्थं च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः। तस्य परमाणुवृत्तित्वं

---

**विलीनस्य तस्येति**। सप्तम्यर्थे षष्ठी, द्रवितयोस्तयोर्हिमकरकयोरित्यर्थः। हिमे नष्टे सति करकायां च नष्टायां सत्याम्, तत्र जलत्वस्य 'हिमकरके जल'मित्येवं या चक्षुःप्रत्यक्षप्रमाणजन्यप्रमा तद्विषयतावच्छेदकतया सिद्धत्वात् 'हिमकरके जल'मेवेति भावः। ननु हिमादेर्नाशाऽनन्तरं जायमानद्रव्ये द्रवत्वजलत्वयोः प्रत्यक्षसिद्धत्वेऽपि हिमादेर्नष्टत्वेन तत्र द्रव्यत्वाद्यसिद्धेः पृथिवीत्वमेव स्वीकार्यमत आह—**यद्द्रव्यमिति**। यत् जलात्मकं द्रव्यं यद्द्रव्यस्य हिमाद्यात्मकस्य ध्वंसात् जन्यं भवति तज्जलात्मकं द्रव्यं तदुपादानोपादेयं=तस्य जलस्योपादानानि समवायिकारणानि परमाणवः तेषामुपादेयं—समवेतकार्यं भवतीति व्याप्तेः हिमादावपि जलस्य उपादानानि समवायिकारणानि परमाणवस्तदुपादेयत्वस्य तत्कार्यत्वस्य सिद्धेः हिमादिनाशोत्तरोत्पन्नद्रव्ये जलत्वस्य प्रत्यक्षसिद्धतया हिमादावपि जलत्वादिसिद्धिर्निराबाधेति भावः। ननु हिमकरकयोर्जलत्वे कथं सांसिद्धिकद्रवत्वं नाऽनुभूयते इत्यत आह—**अदृष्टविशेषेणेति**। जीवनाऽदृष्टविशेषेणेत्यर्थः। हिमं करका वा यस्य पुरुषादेः जीवनार्थं पुण्यादिप्रयुक्तोपभोगार्थमुत्पद्यते तस्य पुरुषस्य जीवनाऽदृष्टविशेषेण हिमादेः सांसिद्धिकस्यापि द्रवत्वस्य प्रतिरोधात्—आवृतत्वात्, न तु नष्टत्वात् न प्रत्यक्षं भवति, मणिमन्त्रादिन्यायेन अदृष्टस्य स्वातन्त्र्येण सांसिद्धिकद्रवत्वाऽऽवरणकत्वं मन्तव्यमिति भावः। ननु तथापि पृथिव्याः काठिन्यप्रत्ययस्य हिमादौ प्रत्यक्षसिद्धतया पार्थिवत्वमेव भवेदित्यत आह—**काठिन्येति**। 'हिमादि कठिन'मिति यः कठिनत्वाख्यसंयोगप्रकारकप्रत्ययस्तस्य पृथिवीद्व्यणुकादिसम्बन्धात् स्वसमवायिसंयुक्तत्वसम्बन्धेनोपपत्तेः 'समवायेन हिमं कठिन'मिति प्रतीतेः समवायेन कठिनत्वाऽभाववति हिमे कठिनत्वप्रकारकतया भ्रान्तित्वादिति भावः। हिमादौ पार्थिवभागस्तु स्वल्पो जलभागस्तु बहुलस्तथा च हिमादि न पार्थिवमिति हृदयम्॥ ४०॥

मूले—'—'**उष्णः**—इत्यादि। तेजसस्तु स्पर्श उष्णो बोध्यः, समवायेन उष्णस्पर्शवत्त्वं लक्षणमिति भावः। तेजसो रूपं तु शुक्लभास्वरं बोध्यम्, शुक्लं च तद्‌ भास्वरं चेति विग्रहः, समवायेन भास्वररूपवत्त्वं लक्षणमिति भावः। तेजसो द्रवत्वं तु नैमित्तिकं बोध्यम्, समवायेन नैमित्तिकद्रवत्ववत्त्वं लक्षणमिति भावः। 'चः'त्वर्थे। तेजसो नित्यत्वमनित्यत्वमवान्तरविभागश्चेतिपूर्ववत्=जलस्येव बोध्यम्, तच्च मुक्तावल्यां स्फुटम्॥ **तेजो निरूपयतीति**। तेजोनिष्ठविषयतानिरूपकं यल्लक्षणस्वरूपप्रामाण्यादिप्रकारकं ज्ञानं तदनुकूलव्यापारानुकूलकृतिमान् ग्रन्थकार इति बोधः। उष्णत्वजातिमन्तरेण तदवच्छिन्नकार्यसमवायिकारणतावच्छेदकतया तेजस्त्वजातिर्न सिद्ध्येदतः प्रत्यक्षप्रमाणसिद्धजातिरुष्णत्वमिति दर्शयति—**उष्णत्वमिति**। स्पर्शनिष्ठः=उष्णस्पर्शे समवेतः, जातिविशेषः—उष्णस्पर्शस्याऽसाधारणधर्मः, 'वह्निरुष्ण'इतिस्पार्शनप्रत्यक्षविषयतया सिद्धः॥ **इत्थंचेति**। प्रत्यक्षेणोष्णत्वजातिसिद्धौ चेत्यर्थः॥ **जन्योष्णेति**। जन्यः—अनित्यो य उष्णस्पर्शः कालिकसमवायोभय-

**तु जलत्वस्येवानुसन्धेयम् । न चोष्णस्पर्शवत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यं, तत्राप्युष्णत्वस्य सत्त्वात् । किन्तु तदन्तःपातिजलस्पर्शेनाभिभवादग्रहः । एवं रत्नकिरणादौ पार्थिवस्पर्शेनाभिभवाच्चक्षुरादौ चानुद्भूतत्वादग्रहः । रूपमित्यादि । वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवाच्छुक्लरूपाग्रहः । अथ तद्रूपाग्रहे**

सम्बन्धेन उष्णत्वजातिविशिष्टइतियावत्, तस्य समवायिकारणं यदनित्यं तेजस्तदवच्छेदकं तेजस्त्वं जातिरितिसिद्धमित्यर्थः । तथा चानुमानम्–'समवायसम्बन्धावच्छिन्नजन्योष्णस्पर्शत्वावच्छिन्नजन्योष्णस्पर्शनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजन्यतेजोनिष्ठकारणता, किञ्चिद्धर्मावच्छिन्ना,–कारणतात्वादिति ॥ अनेन जन्यतेजस्त्वं प्रसाध्य नित्यतेजोवृत्तितेजस्त्वसाधनरीतिं दर्शयति–**तस्येति** । तेजस्त्वस्य परमाणुवृत्तित्वस्य तु परमाणुवृत्तिजलत्वस्येव सिद्धिः कर्तव्या, तद्यथा–'समवायसम्बन्धावच्छिन्नजन्यतेजस्त्वावच्छिन्नजन्यतेजोनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नतेजोनिष्ठकारणता,–किञ्चिद्धर्मावच्छिन्ना,–कारणतात्वाद् इति ॥ वस्तुतस्तु–तेजःपदशक्यतावच्छेदकतया तेजस्त्वजातिसिद्धिः,असति बाधके शक्यतावच्छेदकतया जातिसिद्धेस्सर्वसम्मतत्वादिति ध्येयम्॥ समवायेनोष्णस्पर्शवत्त्वस्याऽव्याप्तिं शंकते–**न चोष्णेति** । चन्द्रकिरणे, आदिना रत्नकिरणे च उष्णस्पर्शाऽभावाद् अव्याप्तिरित्यर्थः ॥ समाधत्ते–**तत्रापीति** । चन्द्रकिरणे चोष्णस्पर्शस्य समवायेन सत्त्वान्नाऽव्याप्तिरित्यर्थः ॥ ननु तत्रोष्णस्पर्शसत्त्वेऽनुपलम्भः कुतः? इत्यत आह–**किन्त्विति** । तस्य चन्द्रकिरणस्य अन्तर्मध्ये पाति यज्जलं तस्य यः शीतस्पर्शस्तेनाऽभिभवाद् आवृतत्वाद् उष्णस्पर्शस्य अग्रहः=अप्रत्यक्षं भवतीत्यर्थः । सजातीयसंवलनकृतं यदग्रहणं तदभिभवशब्दार्थः । तथा च उष्णस्पर्शनिष्ठलौकिकविषयतानिरूपितलौकिकविषयतासम्बन्धेन स्पार्शनत्वविशिष्टं प्रति उष्णान्यस्पर्शस्य स्वाश्रयोपष्टम्भत्वसम्बन्धेन प्रतिबन्धकत्वमित्यूह्यम् । अनभिभूतस्पर्शस्यैव प्रत्यक्षमिति भावः ॥ आदिना ग्राह्ये रत्नकिरणेऽप्यव्याप्तिशंकां निरस्यति–**एवमिति** । रत्नकिरणे आदिना सुवर्णे च पार्थिवो भागो यो गुरुत्वाद्याश्रयस्तत्र वर्तमानो यः पाकजोऽनुष्णाशीतस्पर्शस्तेन उष्णस्पर्शस्याऽभिभवाद् अग्रहः=अप्रत्यक्षम् । तैजसे चक्षुरिन्द्रिये, आदिना प्रदीपप्रभादौ तेजसि च उष्णस्पर्शस्य अनुद्भूतत्वात्=यदि चक्षुरादिस्पर्शे प्रत्यक्षप्रयोजकसन्निकर्षवत्ता स्यात् तर्हि उपलभ्येतेत्याकारकाऽऽपादनविषयतात्मकयोग्यतारूपस्य उद्भूतत्वस्याऽभावात् । अग्रहः=अप्रत्यक्षमित्यर्थः । अनभिभूतोद्भूतस्पर्शस्यैव प्रत्यक्षत्वमिति भावः ॥ **रूपमित्यादीति** । 'स्याद्रूपं शुक्लभास्वर'मिति मूले शुक्लपदं स्वरूपकीर्तनपरं, लक्षणं तु–समवायेन भास्वररूपवत्त्वमात्रं भास्वरत्वं च–'भास्वरं शुक्ल'मिति प्रत्यक्षसिद्धतेजोरूपमात्रवृत्तिः शुक्लत्वव्याप्यजातिविशेषः । तदवच्छिन्नजनकतावच्छेदकतयाऽपि तेजस्त्वजातिः सिद्ध्यति,–अनुमानं यथा–'समवायसम्बन्धावच्छिन्नजन्यभास्वररूपत्वावच्छिन्नजन्यभास्वररूपनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजन्यतेजोनिष्ठकारणता, —किञ्चिद्धर्मावच्छिन्ना, –कारणतात्वात् । ततः 'समवायसम्बन्धावच्छिन्नजन्यतेजस्त्वावच्छिन्नजन्यतेजोनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नतेजोनिष्ठकारणता,—किञ्चिद्धर्मावच्छिन्ना, कारणतात्वादिति ॥ तादृशभास्वररूपस्य वैश्वानरादावप्रत्यक्षं कुत इत्याकांक्षायामाह–**वैश्वानरे इति** । वैश्वानरे=काष्ठोयरक्तवर्णाग्नौ, मरकतमणेः रक्तकिरणे, आदिना सुवर्णात्मकतेजसि च, पार्थिवो यो गुरुत्वाश्रयो भागस्तस्य क्रमशो यद् रक्तं पीतं च रूपं तेन भास्वररूपस्याऽभिभवाद् वैश्वानरे मरकतकिरणे सुवर्णेच भास्वरशुक्लरूपस्य अग्रहः=अप्रत्यक्षं भवतीति, न तत्रभास्वररूपवत्त्वस्याऽव्याप्तिरपि शंकनीयेति भावः, तथा च शुक्लरूपनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन चाक्षुषं प्रति वह्नयाद्युपष्टम्भकपार्थिवभाग-

**धर्मिणोऽपि चाक्षुषत्वं न स्यादिति चेत् ? न, अन्यदीयरूपेणापि धर्मिणो ग्रहसंभवात् शङ्खस्येव पित्तपीतिम्ना। वह्नेस्तु शुक्लरूपं नाभिभूतं किन्तु तदीयं शुक्लत्वमभिभूतमित्यन्ये। नैमित्तिकमिति। सुवर्णादिरूपे तेजसि तत्सत्त्वात्। न च नैमित्तिकद्रवत्वं लक्षणं दहनादावव्याप्तं घृतादावतिव्याप्तं चेति वाच्यं, पृथिव्यवृत्तिनैमित्ति-**

निष्ठलौहित्यादेः स्वाश्रयोपष्टब्धत्वसम्बन्धेन प्रतिबन्धकत्वमिति ऊह्यम्॥ ननु 'तद्धर्मनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन चाक्षुषप्रत्यक्षत्वावच्छिन्नं प्रति तद्धर्मचाक्षुषज्ञानस्य कारणत्वमिति' नियमाद्भास्वररूपाऽप्रत्यक्षे सति वैश्वानरादेः' प्रत्यक्षमेव न स्यादित्याशंकते—**अथेति**। तस्य वैश्वानरादेः शुक्लभास्वररूपस्याऽग्रहे सति धर्मिणो वैश्वानरादेः, अपिना तद्गतैकत्वादेश्च चाक्षुषप्रत्यक्षविषयत्वं न स्यादित्यर्थः॥ समाधत्ते—**अन्यदीयेति**। उपष्टम्भक–पार्थिवपाकजरूपेणापीत्यर्थः। वैश्वानरे वह्नौ काष्ठभागीयरक्तरूपेण, सुवर्णे च पार्थिवपीतरूपेण धर्मिणः = भास्वररूपात्मकधर्मस्य यत्तेजो धर्मि तस्य, चाक्षुषप्रत्यक्षात्मकग्रहसंभवात, यथा शुक्लस्यापि शंखस्य नेत्रस्थेन पित्तदोषजन्येन पीतिम्ना = पीतरूपेण 'पीतः शंख' इति चाक्षुषप्रत्यक्षं भवति तद्वदित्यर्थः॥ तथा च न 'स्वगतरूपसाक्षात्कारे सत्येव तद्धर्मिणो द्रव्यस्य साक्षात्कार' इति नियमः, किन्तु द्रव्यविषयकचाक्षुषप्रत्यक्षे उद्भूतरूपमात्रमपेक्षितं, तत्स्वीयं स्यादन्यदीयं वेति न तत्राऽऽग्रहः, स्वाश्रयोपष्टम्भकत्वसम्बन्धेन सुवर्णादिसमवेतरूपाऽभिभावकपार्थिवरूपं तेजसि वर्ततेऽतस्तस्य प्रत्यक्षं भवतीति भावः॥ समवायेन रक्तो वह्निरिति तु भ्रम एवेति हृदयम्। तृणावर्तादौ स्वाश्रयोपष्टम्भकत्वसम्बन्धेन पार्थिवरूपस्य सत्त्वेऽपि वायौ रूपस्यैवाऽभावेन तदभिभावकत्वस्यापि पार्थिवरूपेऽसम्भवात् न पार्थिवरजोरूपेण तृणावर्त( पवन )स्य प्रत्यक्षापत्तिरिति बोध्यम्॥ **अन्ये** तु अन्यदीयरूपं विषयीकृत्याऽन्यस्य चाक्षुषत्वे वायोरप्युक्तरीत्या चाक्षुषत्वापत्तिस्तद्वारणाय वह्न्यादिनिष्ठरूपस्याऽभिभूतत्वमनङ्गीकृत्य तदीयशुक्लत्वस्यैवाऽभिभूतत्वमङ्गीकृत्य वह्निनिष्ठशुक्लरूपस्य प्रत्यक्षत्वाद् वह्नेरपि प्रत्यक्षं निर्वहति, तत्र शुक्लत्वधर्मस्याऽभिभूतत्वात् शुक्लत्वधर्मो न प्रत्यक्षः, पार्थिवरूपनिष्ठरक्तत्वधर्मेण वह्निनिष्ठशुक्लस्य प्रत्यक्षमिति वदन्ति, तन्मतमाह—**वह्नेस्त्विति**। वह्नेर्यद्भास्वरशुक्लं रूपं तन्न पार्थिवरूपेणाऽभिभूतं भवति, किन्तु तदीयं = भास्वरशुक्लरूपीयं यद्भास्वरशुक्लत्वं धर्मः स एव पार्थिवरक्तत्वधर्मेणाऽभिभूत इत्यर्थः। तथा च स्वसमवायिसमवायिसंयुक्तसमवेतत्वसन्बन्धेन रक्तत्वादिजात्या शुक्लत्वमभिभूतमिति भावः। एवं चात्र न सामान्यतः शुक्लरूपनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन चाक्षुषं प्रति वह्न्युपष्टम्भकपार्थिवभागनिष्ठलोहितरूपस्य स्वाश्रयोपष्टब्धत्वसम्बन्धेन प्रतिबन्धकत्वं, किन्तु शुक्लत्वजातिनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन चाक्षुषं प्रति स्वाश्रयोपष्टब्धवह्निसमवेतत्वसम्बन्धेन लोहितरूपस्य प्रतिबन्धकत्वम्, अतो वह्नौ शुक्लं रूपम् उपष्टम्भकपार्थिवभागनिष्ठरूपसमवेतलोहितत्वप्रकारेण गृह्यत एव, न तु शुक्लत्वेन गृह्यते इति हृदयम्॥ नैमित्तिकद्रवत्वलक्षणस्याऽसंभवं वारयति—**सुवर्णादिरूप** इति। सुवर्णात्मके तेजसि तस्य नैमित्तिकद्रवत्वस्य सत्त्वादित्यर्थः॥ नैमित्तिकद्रवत्वस्याऽव्याप्तिमाशंकते—**न चेति**। दहनादौ = दहने भौमवह्नौ, आदिना विद्युदादौ चाऽव्याप्तिः, घृतादौ पृथिव्यां चाऽतिव्याप्तिरित्यर्थः। समाधत्ते—**पृथिव्यवृत्तीति**। पृथिव्याम् अवर्तमाना, अथ च नैमित्तिकद्रवत्ववति द्रुतसुवर्णात्मकतेजसि वर्तमाना, या द्रव्यत्वस्य साक्षाद्व्याप्या जातिस्तेजस्त्वरूपा तद्वत्त्वस्य दहनादावपि सत्त्वाल्लक्षणसमन्वयः॥ नैमित्तिकद्रवत्ववद्घृतादिपृथिवीवृत्तिपृथिवीत्वमादाय पृथिव्यामतिव्याप्तिवारणाय—पृथिव्यवृत्तीति पृथिव्यवृत्तिजलत्ववायुत्वादिकमादाय जलवाय्वादावतिव्याप्तिवारणाय—नैमित्तिकद्रवत्ववद्वृत्तीति।

कद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षितत्वात् । पूर्ववदिति । जलस्येवेत्यर्थः । तथाहि, तद्–द्विविधं—नित्यमनित्यं च । नित्यं परमाणुरूपम् । तदन्यदनित्यम्, अवयवि च । तच्च त्रिधा—शरीरेन्द्रियविषयभेदात् । शरीरमयोनिजमेव । तच्च सूर्यलोकादौ प्रसिद्धम् ॥ ४१ ॥

इन्द्रियं नयनं, वह्निस्वर्णादिर्विषयो मतः ।

अत्र यो विशेषस्तमाह–इन्द्रियमिति । ननु चक्षुषस्तैजसत्वे किं मानमिति चेत् ? चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत्, प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादत्र दृष्टान्तेऽव्याप्तिवारणाय प्रथमं परकीयेति । घटादेः

---

वायुतेजोऽन्यतरत्वमादाय वायावतिव्याप्तिवारणाय, सुवर्णरजतगतद्वित्वादिकमादाय तदन्यतेजस्यव्याप्तिवारणाय वा–जातीति । नैमित्तिकद्रवत्ववत्त्वं समवायेन बोध्यम्, तेन कालिकेन नैमित्तिकद्रवत्ववत्त्वं वायावादाय नातिव्याप्तिः । पृथिव्यवृत्तित्वघटक'वृत्तित्व'मपि समवायेन बोध्यम्, तेन संयोगेन पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्घृतादिवृत्तिपृथिवीत्वमादाय पृथिव्यां नाऽतिव्याप्तिः । जातिमत्त्वमपि समवायेन बोध्यम्, तेन वायौ नातिव्याप्तिः । द्रव्यत्वसाक्षाद्व्याप्यत्वं–स्वसामानाधिकरण्य-स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकजातिविशिष्टाऽन्यत्वात्मकं बोध्यम् । गुणत्वविशिष्टतेजस्त्वाऽन्यत्वस्य तेजस्त्वेऽसत्त्वादसंभवस्तद्वारणाय स्वसामानाधिकरण्येति । तेजस्त्वविशिष्टतेजस्त्वान्यत्वस्य तेजस्त्वेऽसत्त्वादसंभववारणाय–स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वेति । 'पूर्ववदि'त्यस्यार्थमाह–जलस्येवेत्यर्थ इति । तत्स्फुटयति–तथाहीति । तत्=तेजः, द्विविधम्=नित्यत्वाऽनित्यत्वोभयधर्मावच्छिन्नम्, तत्र नित्यत्वधर्मावच्छिन्नं परमाण्वात्मकम्, तदन्यत्=परमाणुभिन्नं यत्तेजस्तद् अनित्यत्वधर्मावच्छिन्नं बोध्यम् । तदेवाऽनित्यं तेजः अवयवि=अवयवसमवेतं बोध्यम् । तच्च=अवयवसमवेतं तेजः, शरीरेन्द्रियविषयभेदात् त्रिधा विभज्यते, तत्र तैजसं शरीरम् अयोनिजमेव बोध्यम्, तच्च सूर्यगोलके चन्द्रगोलके ताराग्रहनक्षत्रेषु प्रसिद्धं शास्त्रेणेति बोध्यम् ॥ ४१ ॥

'इन्द्रिय'मिति मूलम् । नयनं नेत्रं तैजस इन्द्रियं बोध्यम् । वह्निः काष्ठादीन्धनको वैश्वानरादिः, स्वर्णादिः='सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु, सीसं कालायसं चैवमष्टौ लौहानि चक्षते'–रीतिः=पित्तलम्, त्रपु=रङ्गम् । तथा विद्युत् । जाठरानलश्चेत्यादिर्विषयस्तेजसो नैयायिकैर्मतः इत्यर्थः । वह्निरित्यनेन भौमो विषयो दर्शितः, स्वर्णेत्यनेन आकरजो विषयो दर्शितः । आदिना दिव्योदर्यौ विषयौ बोध्यौ, तथा च–भौम-दिव्यो-दर्याऽऽकरजभेदाच्चतुर्विधस्तेजसो विषय इति भावः । मुक्तावल्याम्–अत्रेति । तैजसशरीरेन्द्रियविषयेषु मध्य इत्यर्थः । यो विशेषः=यत् पृथिवीजलेन्द्रियविषयतस्तारतम्यम्, तदाहेत्यर्थः । चक्षुषस्तैजसत्वमाक्षिपति–ननु–इति । चक्षुरिन्द्रियस्य द्व्यणुकाद्यात्मकस्याऽप्रत्यक्षस्य तैजसपदार्थत्वे किं प्रमाणम् ? न किमपीत्याक्षेपार्थः, तत्र प्रत्यक्षाऽप्रवृत्तेः प्रत्यक्षमूलकानुमानादीनामप्यप्रवृत्तेरिति भावः ॥ तत्रानुमानं प्रमाणयति–चक्षुस्तैजसमिति । चक्षुः पक्षः । तैजसं साध्यम्, तेजस्समवेतद्रव्यत्वमित्यर्थः । परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वादिति हेतुः, परकीयगन्धरसस्पर्शशब्दविषयकप्रत्यक्षाऽजनकत्वे सति रूपविषयकप्रत्यक्षजनकत्वादित्यर्थः । प्रदीपवदिति दृष्टान्तम् । हेतुस्थं प्रथमम् परकीयपदं सार्थकयति–प्रदीपस्येति । प्रथमपरकीयाऽनुपादाने 'स्पर्शाद्यव्यञ्जकत्वे सती'त्येवोच्येत तदा प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वाद्

**स्वीयरूपव्यञ्जकत्वाद्व्यभिचारवारणाय द्वितीयं परकीयेति । अथवा प्रभाया दृष्टान्तत्वसंभवादाद्यं परकीयेति न देयम्, चक्षुःसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम् । विषयं दर्शयति—वह्नीति । ननु सुवर्णस्य तैजसत्वे किं मानमिति चेद् ? न, सुवर्णं तैजसम्, असति प्रतिबन्धके अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वात्,**

---

दृष्टान्ते प्रदीपे हेतोरव्याप्तिः=विशेषणाऽसिद्धिरूपो दोषः स्यात् तद्वारणाय प्रथमं **परकीय** इति । तथा च प्रदीपः स्वीयस्पर्शव्यञ्जकः सन्नपि न परकीयस्पर्शव्यञ्जकत्वे समर्थ इति भावः ॥ चक्षुषः परकीयरूपादिव्यञ्जकत्वाद् असिद्धिवारणाय—स्पर्शपदम् । जन्यज्ञानमात्रं प्रति मनसः कारणत्वात् मनसि व्यभिचारवारणाय—सत्यन्तम् । कालोपाधिविधया परकीयस्पर्शविषयकज्ञानजनकत्वमादाय दृष्टान्ताऽसिद्धेः स्वरूपाऽसिद्धेश्च वारणाय सत्यन्तघटकजनकतायां कालिकसम्बन्धानवच्छिन्नत्वं देयम्॥ हेतौ द्वितीय**परकीय**पदसार्थक्यं दर्शयति—**घटादेरिति** । घटाद्याः पदार्थाः परकीयस्पर्शाऽव्यञ्जकाः सन्तो विषयतासम्बन्धेन स्वीयरूपव्यञ्जकाः इति तत्राऽतैजसे हेतोर्व्यभिचारस्तद्वारणाय द्वितीयं परकीयेति । तथा च घटादेः परकीयरूपव्यञ्जकत्वाऽभावान्न व्यभिचारः । घटादौ व्यभिचारवारणाय विशेष्यभागः । काले व्यभिचारवारणाय विशेष्यघटकजनकतायामपि कालिकसम्बन्धानवच्छिन्नत्वं देयम् ॥ हेतौ शरीरकृतं लाघवमभिप्रेत्य कल्पान्तरमाह—**अथवेति** । प्रदीपदृष्टान्तस्थाने **'प्रभावत्'** इति दृष्टान्तवाक्यं देयम् , तथा च प्रथमं परकीयपदं विहाय--'स्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वादि'ति हेतुः कल्पनीयः । न हि प्रभा स्वस्पर्शव्यञ्जने परकीयस्पर्शव्यञ्जने वा समर्था, अतो न हेतोर्विशेषणाऽसिद्धिस्तत्रेति भावः । ननु तथापि चक्षुःसंयुक्तसमवायात्मके सन्निकर्षे तैजसत्वाऽभाववति हेतोः सत्त्वाद्व व्यभिचार इत्याशंकां वारयति—**चक्षुस्सन्निकर्ष** इति । तथा च 'द्रव्यत्वे सति कालिकसम्बन्धानवच्छिन्नगन्धरसस्पर्शशब्दादिविषयकप्रत्यक्षजनकत्वाऽभाववत्त्वे सति कालिकसम्बन्धानवच्छिन्नपरकीयरूपविषयकप्रत्यक्षजनकत्वादिति हेतुः फलितः । अधिष्ठानाऽसम्बद्धार्थग्राहिण्याः प्रदीपप्रभाया इव चक्षुषोऽपि प्राप्यकारित्वं बोध्यम् , अचिन्त्यो हि तेजसो लाघवातिशयेन वेगातिशयो येन शाखाचन्द्रमसोर्ग्रहणं भवतीति । **विषयं दर्शयतीति** । तैजसो विषयश्चतुर्विधः—भौमदिव्योदर्याकरजभेदात् , भौमं वह्न्यादिकम् , अविन्धनं दिव्यं विद्युदादि, भुक्तस्य परिणामहेतुरुदर्यम् , आकरजं सुवर्णादिरिति । ननु सुवर्णं—पार्थिवं नैमित्तिकद्रवत्ववत्त्वात्, घृतादिवदि'त्यनुमानेन सुवर्णस्य पार्थिवत्वसिद्धेः, न तैजसत्वमित्यभिप्रायेणाशंकते—**ननु सुवर्णस्येति** । सुवर्णस्य पार्थिवत्वं प्रामाणिकमत एव तैजसत्वे न किमपि प्रमाणमित्याशंकितुरभिप्रायः ॥ तन्निषेधति—**नेति** । तत्राऽनुमानं प्रमाणं दर्शयति—**सुवर्णमिति** । सुवर्णं पक्षः । ननु सुवर्णत्वं द्विधा, पीतिमगुरुत्वाश्रयनिष्ठमेकम् , तेजोभागनिष्ठमेकम् , उभयसाधारणं नैकं सुवर्णत्वं, पृथिवीतैजसत्वाभ्यां संकरप्रसंगात् , तथा च पीतिमगुरुत्वाश्रयनिष्ठसुवर्णत्वस्य पक्षतावच्छेदकत्वे बाधः, द्वितीयस्य पक्षतावच्छेदकत्वे त्वाश्रयासिद्धिरिति चेन्न । सुवर्णपदवाच्यत्वं, प्रतिबन्धकाऽसमवधानकालिकाऽत्यन्ताऽग्निसंयोगसमानकालीनाऽनुच्छिद्यमानद्रवत्वाधिकरणत्वं वा पक्षतावच्छेदकं बोध्यम् । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेन पक्षतावच्छेदकहेत्वोरैक्येऽपि सामानाधिकरण्येन साध्यसिद्धेरदोषत्वात् । तैजसं साध्यम्—तेजस्समवेतद्रव्यत्वमिति तदर्थः । 'असति—इत्यादिहेतुवाक्यम् । 'यन्नैवं तन्नैवं यथा पृथिवीति' व्यतिरेकिदृष्टान्तवाक्यम् । तदयमर्थः—प्रतिबन्धकसंसर्गाभावे सति अत्यन्तं योऽनलसंयोगस्तस्मिन्सत्यपि अविनश्यद् यज्जन्यं द्रवत्वं तदधिकरणत्वाद सुवर्णं तैजसमिति । जलमध्यस्थघृतादौ व्यभिचारवारणाय—असति प्रतिबन्धके इति । आश्रयनाशनाश्यद्रवत्ववति घृतादौ

**यन्नैवं तन्नैवम्, यथा पृथिवीति। न चेदमप्रयोजकं, पृथिवीद्रवत्वस्य जन्यजलद्रवत्वस्य चात्यन्ताग्निसंयोगनाश्यत्वात्। ननु पीतिमगुरुत्वाश्रयस्य पार्थिवभागस्यापि**

---

व्यभिचारवारणाय–अत्यन्ताग्निसंयोगे सतीति। अनलसंयोगेऽत्यन्तत्वविशेषणं यत्किञ्चिदनलसंयोगसमानाधिकरणद्रवत्ववति घृतादौ व्यभिचारवारणाय। विजातीयसंयोगे सतीति सत्यन्तार्थः। अग्निसंयोगनाश्यद्रवत्ववति घृतादौ व्यभिचारवारणाय द्रवत्वेऽनुच्छिद्यमानत्वनिवेशः। नाशाऽप्रतियोगित्वमिति तदर्थः। अनित्ये सुवर्णेऽसिद्धिवारणाय–जन्येति। प्रागभावप्रतियोगित्वमिति तदर्थः। द्रवत्वादित्यस्य द्रवत्वाधिकरणत्वादित्यर्थः। तेन विजातीयाऽग्निसंयोगशून्यकालिकसुवर्णस्यापि पक्षतावच्छेदकाक्रान्ततया तत्र तादृशद्रवत्वहेतोरसत्त्वेऽपि द्रवत्वाधिकरणतायास्तत्र सत्त्वान्न भागाऽसिद्धिः॥ **यन्नैवम्**=यत्–पृथिवी(घृतं), न एवम्=असति प्रतिबन्धकेऽत्यन्ताऽनलसंयोगे सत्यनुच्छिद्यमानजन्यद्रवत्वाधिकरणं नास्ति, तत्–पृथिवी(घृतं)न एवम्=तैजसमपि न भवति। यथा पृथिवी=घृतलाक्षाद्यात्मिका क्षितिरिति तदर्थः। मुक्तावल्युक्तानुमाने व्यभिचारमाशंक्य निषेधति–**न चेदमप्रयोजकमिति**। इदम्="सुवर्णं,–तैजसम्, असति प्रतिबन्धकेऽत्यन्तानलसंयोगे सत्यनुच्छिद्यमानजन्यद्रवत्वादि'त्यनुमानम्। न अप्रयोजकम्=व्यभिचारशंकानिवर्तकविचार(तर्क)शून्यं न। व्यभिचारशंका–सुवर्णात्मके पक्षे 'असति प्रतिबन्धके'–इत्यादिहेतुरस्तु, साध्यं यत् तैजसं तन्माऽस्तु, इति। तथा च व्यभिचारिहेतुना तैजसत्वसिद्धिर्न स्यादिति। किन्तु तादृशशंकानिवर्तकस्तर्कोऽत्र वर्ततेऽतो नाऽप्रयोजकमिति भावः। **अत्रेदमनुसन्धेयम्**–'कार्यम्–अनुमितिः। तदुपयोगि व्याप्तिज्ञानम्। तद्विरोधिनी व्यभिचारशंका। शंकाविघटकस्तर्कः। तर्कजनकः कार्यकारणभावनिश्चयः। तन्निश्चयं प्रति प्रत्यक्षतोऽन्वयव्यतिरेकनिश्चयौ प्रयोजकौ। अत्र 'सुवर्णं तैजसम्'इत्यनुमितिः। तत्र 'यत्र तैजसत्वं नास्ति तत्र असति प्रतिबन्धकेऽत्यन्ताऽनलसंयोगे सत्यनुच्छिद्यमानजन्यद्रवत्ववत्त्वं नास्ति'–इति व्यतिरेकव्याप्तिज्ञानं कारणम्। व्यतिरेकव्याप्तिः–'साध्याभावव्यापकीभूताऽभावप्रतियोगित्वरूपा। साध्याभावः–तैजसत्वाऽभावः तद्व्यापकीभूतोऽभावो हेत्वभावः–तादृशाऽनुच्छिद्यमानजन्यद्रवत्ववत्त्वाऽभावः=उच्छिद्यमानजन्यद्रवत्वरूपः, तत्प्रतियोगित्वम् अनुच्छिद्यमानजन्यद्रवत्ववत्त्वे–इति। तत्र यदि तादृशनिश्चयविघटिका "तैजसत्वं माऽस्तु'–'तादृशानुच्छिद्यमानजन्यद्रवत्वमस्तु'=अनुच्छिद्यमानजन्यद्रवत्वम् अपार्थिवत्वव्यभिचारि न वे'ति शंका भवेत् तदा तन्नाशाय "असति प्रतिबन्धकेऽत्यन्तानलसंयोगे सति अनुच्छिद्यमानजन्यद्रवत्वं यदि तैजसत्वव्यभिचारि स्यात् तदा असति प्रतिबन्धकेऽत्यन्ताऽनलसंयोगे सति नाश्यं स्यादि'ति तर्कः कर्तव्यः, तर्के आपाद्याभावेन=असति प्रतिबन्धकेऽत्यन्तानलसंयोगविशिष्टनाश्यत्वाभावेन आपादकाऽभावस्य=तैजसत्वव्यभिचारित्वाऽभावस्य सिद्धिर्भवति, अतस्तैजसत्वव्याप्तिज्ञाने तादृशशंकाविघटनद्वारा तर्क उपयोगी, तर्के च 'पार्थिवद्रवत्वनाशं प्रति असति प्रतिबन्धकेऽत्यन्ताऽनलसंयोगः कारण'मिति कार्यकारणभावनिश्चयः कारणम्, निश्चये च प्रत्यक्षतः तेजस्त्वसत्त्वे असति प्रतिबन्धकेऽत्यन्यानलसंयोगे सति तैजसद्रवत्वाऽनाशः, तैजसत्वाऽभावसत्त्वे च प्रतिबन्धकाऽसमवहिते घृतादावत्यन्ताऽनलसंयोगे सति अच्छिनुद्यमानजन्यद्रवत्वनाशसत्त्वं'–न तु सति प्रतिबन्धके जलगतघृतादौ'–इति–अन्वयव्यतिरेकसहचारज्ञानं कारणम्, तादृशसहचारज्ञानात् कार्यकारणभावनिश्चयः, निश्चयात् तर्कः, तर्कात् शंकानाशः, शंकानाशाद् व्याप्तिनिश्चयः, निश्चयाच्च–'सुवर्णं तैजस'–मित्यनुमितिः सुदृढा भवति। अतः 'सुवर्णं तैजस'मिति साधयिष्यन् तादृशानुमाने व्यभिचारशंकावारकतर्कमूलभूतं कार्यकारणभावनिश्चयं तर्कं च दर्शयति–**पृथिवीद्रवत्वस्येत्यादिना नाश्यत्वादित्यन्तेन**। पार्थिवद्रवत्वनाशं

**तदानीं द्रुतत्वात्तेन व्यभिचार इति चेत् ? न, जलमध्यस्थमषीक्षोदवत्तस्याद्रुतत्वात्। अपरे तु पीतिमाश्रयस्य अत्यन्ताग्निसंयोगेऽपि पूर्वरूपापरावृत्तिदर्शनात्तत्प्रतिबन्धकं विजातीयद्रवद्रव्यं कल्प्यते। तथा हि-अत्यन्ताग्निसंयोगी पीतिमगुरुत्वाश्रयः,-विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः, अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरू-**

प्रति जन्यजलद्रवत्वनाशं प्रति चाऽसति प्रतिबन्धकेऽत्यन्ताग्निसंयोगः कारणमितिकार्यकारणभावः। तर्कस्तु-'असति प्रतिबन्धकेऽत्यन्तानलसंयोगे सति अनुच्छिद्यमानजन्यद्रवत्वं यदि तैजसत्वव्यभिचारि स्यात् तदा असति प्रतिबन्धकेऽत्यन्ताऽनलसंयोगे सति नाश्यं स्यात्' इति॥ यतो न तथा नाश्यम् अतो न व्यभिचारीति भावः॥ एवम्-'अग्नेरपत्यं प्रथमं हिरण्य'मिति श्रुतेः-'सुवर्णं यदि तैजसं न स्यात् तर्ह्येतदागमप्रतिपाद्याऽग्न्यपत्यत्ववन्न स्यादि'तितर्कोऽपि बोध्यः॥ उक्तानुमाने स्फुटं व्यभिचारमाशंकते-**ननु**-इति। पीतस्य भावः पीतिमा, गुरोर्भावो गुरुत्वम्, पीतिमा च गुरुत्वञ्च पीतिमगुरुत्वे, तयोराश्रयः पार्थिवद्रव्यमित्यर्थः, तस्य। तेजसि पीतवर्णाऽभावाद् गुरुत्वाऽभावाच्च। तदानीम्=अत्यन्ताऽनलसंयोगकाले। द्रुतत्वात्=द्रवणवत्त्वात्। व्यभिचारः=हेतोः साध्याभावाधिकरणवृत्तित्वम्, साध्यं तैजसत्वं तदभावाधिकरणे पीते गुरौ पार्थिवभागे हेतोः सत्त्वम्॥ समाधत्ते-**न इति। जलमध्यस्थ** इति। जलमध्ये स्थितो यो मषीक्षोदः-मषीचूर्णम्, तद्वत्। यथा जले द्रवति तदन्तर्वर्तिनि मषीक्षोदेऽपि द्रवणप्रत्ययो जायते, स च मषीक्षोदे भ्रमात्मकः, एवमेव अत्यन्तानलसंयोगेन सुवर्णे द्रवति सति तन्मध्यवर्तिनि अद्रविते पीतिमगुरुत्वाश्रयपार्थिवभागेऽपि जायमानो द्रवणप्रत्ययो भ्रमः, तथा च तस्य=पार्थिवभागस्य, अद्रुतत्वात्=तादृशद्रवत्ववत्त्वादिति हेतोरसत्त्वान्न व्यभिचार इति भावः॥ प्रकारान्तरेण सुवर्णस्य तैजसत्वं साधयतां मतं दर्शयति-**अपरे त्विति**। पीतिमाश्रयस्य=सुवर्णस्य पार्थिवभागस्य, अत्यन्ताऽग्निसंयोगे सत्यपि पूर्वरूपस्य=पीतवर्णस्य, अपरावृत्तिदर्शनात्=परिवर्तनस्य अदर्शनात्, पीतवर्णस्यैव पूर्ववदेव विद्यमानत्वात्, तत्प्रतिबन्धकं=रूपपरावृत्तिप्रतिबन्धकम्, विजातीयं विलक्षणं, द्रवद्रव्यं=द्रवत्वधर्मवद्द्रव्यम्, कल्प्यते=अनुमीयते। इत्याहुरिति शेषः। तन्मतं निर्दुष्टमिति तदेव सिद्धान्तयति-**तथाहीति**। 'अत्यन्ताग्निसंयोगी पीतिमगुरुत्वाश्रयः' पक्षः। अत्र अग्निसंयोगशब्दो विजातीयाऽग्निसंयोगपरः, तेनोदासीनाग्निसंयोगविशिष्टहरिद्रादेर्न पक्षतावच्छेदकाक्रान्तत्वं यत्किञ्चिदनलसंयुक्ते पार्थिवे भागे तु-बाधो हेत्वसिद्धिश्च स्याताम्, तत्र विजातीयद्रव्यस्य, अत्यन्ताग्निसंयोगस्य चाऽभावात्, अतः पक्षेऽत्यन्तत्वं निवेशितम्। पीतिमेत्यनुपादाने जलस्यापि तादृशपक्षतावच्छेदकाक्रान्ततया तत्र वक्ष्यमाणहेतोरभावेन भागाऽसिद्ध्यापत्तिः। तादृशपीतिमाश्रयः पृथिवीभाग एव न तेजोभाग इति स्फुटप्रतिपत्त्यर्थं गुरुत्वाश्रय इति॥ **'विजातीये**त्यादि साध्यम्, विजातीयं=पृथिवीभिन्नजातीयं यद् रूपस्य प्रतिबन्धकं द्रवद्रव्यं तत्संयुक्तः इत्यर्थः। सजातीयद्रवद्रव्यं न प्रतिबन्धकमिति दर्शयितुमुक्तं-विजातीयेति। सजातीयस्यापि प्रतिबन्धकत्वे घृतसंयुक्तपीतघटेऽपि रूपनाशाऽनुपपत्तेः। द्रव्यस्य प्रतिबन्धकत्वे वाय्वादिसंयोगस्य पृथिव्यां सर्वदा सत्त्वेन अग्निसंयोगाद् रूपनाशाऽनापत्तेः, अतो द्रवद्रव्यस्यैव प्रतिबन्धकत्वमिति स्फुटतरप्रतिपत्त्यर्थं द्रव्ये द्रवत्वविशेषणम्। तथा च रूपप्रतिबन्धकद्रव्यसंयुक्तत्वमात्रं साध्यमिति तत्त्वम्॥ **अत्यन्ताग्निसंयोगे सतीत्यादिः** हेतुः। अत्यन्ताऽनलसंयोगे सत्यपि पूर्वस्य पीतरूपस्य विजातीयं यद् रक्तादिरूपं तदनधिकरणत्वादित्यर्थः। अग्निसंयोगशून्ये पूर्वरूपविजातीयरूपाऽनाधारे घटे व्यभिचारवारणाय-सत्यन्तम्। हेतौ पृथिवीत्वं देयं, तेन जलपरमाणौ न व्यभिचारः। यथा कथञ्चिदग्निसंयुक्ते घटे व्यभिचारवारणाय-अत्यन्तेति।

पानधिकरणत्वात्, जलमध्यस्थपीतपटवत्। तस्य च पृथिवीजलभिन्नस्य तेजस्त्वनियमात्॥

अपाकजोऽनुष्णाशीतस्पर्शस्तु पवने मतः॥ ४२॥

वायुं निरूपयति—अपाकज इति। अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वादु-

विजातीयपीतरूपमादायाऽसिद्धिवारणाय–पूर्वरूपेति। तथैव हेत्वसिद्धिवारणाय विजातीयेति। यद्यपि पूर्वरूपविजातीयरूपाऽभाववत्त्वस्यैव हेतुत्वमुचितम्, आद्यक्षणावच्छिन्नघटे विजातीयाग्निसंयोगात्मकसत्यन्ताऽभावेन तत्र विशिष्टहेत्वभावात्, तथापि नानारूपवत्कपालारब्धघटे नवीनैरव्याप्यवृत्तिनीलादिनानारूपवत्तास्वीकारेण अत्यन्ताग्निसंयोगकाले किञ्चिदवच्छेदेन पूर्वरूपविजातीयरूपवत्यपि अवयवान्तराऽवच्छेदेन तादृशविजातीयरूपाऽभावस्यापि सत्त्वेन व्यभिचारापत्त्या तादृशरूपाऽभावघटितहेतुं परित्यज्य तादृशरूपाऽधिकरणत्वाऽभावघटितहेतुरुक्तः। घटादिनिष्ठपूर्वरूपविजातीयरूपाऽनाधारत्वस्यापि स्वव्यधिकरणघटादिनिष्ठात्यन्ताग्निसंयोगसमानकालिकतया तादृशघटादौ व्यभिचारवारणाय स्वसमानाधिकरणत्वेन अत्यन्ताग्निसंयोगो विशेषणीयः। तथा च–स्वसमानाधिकरणात्यन्ताग्निसंयोगसमानकालीनपूर्वरूपविजातीयरूपाऽनाधारत्वादिति हेतुः फलितः॥ जलमध्यस्थः पीतपटो दृष्टान्तः। तथा च अत्यन्ताग्निसंयोगेऽपि जलमध्यस्थपीतपटस्य यावत्कालं जलसंयोगस्तावत्कालं पीतरूपं न परावर्तते तद्वत् अत्यन्ताग्निसंयोगे सत्यपि पीतभागस्य पार्थिवस्य पीतरूपं न परावर्ततेऽतस्तत्परावृत्तिप्रतिबन्धकं पृथिवीजलभिन्नं द्रवद्रव्यं तेज एव कल्पनीयं भवतीतिभावः॥ ननु उक्तानुमानमप्रयोजकमिति चेन्न। प्रतियोगितासम्बन्धेन आश्रयनाशाऽजन्यरूपनाशं प्रति स्वानुयोगिसमवेतत्वसम्बन्धेन विजातीयतेजस्संयोगस्य प्रतिबन्धकाऽभावसहितस्य फलोपधायकत्वाद् एतादृशकार्यकारणभावात्मकानुकूलतर्कसत्त्वाद् अप्रयोजकत्वशंकाया अनवकाशात्॥ **नव्यास्तु** सुवर्णं न तैजसं किन्तु पार्थिवमेव, पीतं सुवर्णं द्रुतमिति साक्षात्सम्बन्धेन द्रवत्वप्रतीतेर्भ्रमत्वायोगात्, अग्निसंयोगेऽपि यत् तस्य न पूर्वरूपनाशः, तत्र विलक्षणं स्वर्णद्रव्यमेव प्रतिबन्धकमिति वदन्ति। **तस्य चेति**। द्रवद्रव्यस्य चेत्यर्थः। **पृथिवीजलभिन्नस्येति**। पृथिव्याः पक्षविजातीयत्वाऽभावात् जलस्य तत्राऽसंभवाच्चेति भावः। **तेजस्त्वनियमादिति**। वाय्वादौ रूपाऽभावादिति भावः॥ न चाऽन्धकारे पीतद्रव्यप्रत्यक्षापत्तिः सुवर्णात्मकालोकसंयोगसत्त्वादिति वाच्यम्। उद्भूताऽनभिभूतरूपालोकसंयोगस्यैव द्रव्यप्रत्यक्षे हेतुत्वात्, सुवर्णरूपस्य त्वभिभूतत्वात्। न च तथाप्यन्धकारे सुवर्णसाक्षात्कारः, सुवर्णभिन्नं यत्तेजस्तद्भिन्नद्रव्यप्रत्यक्षं प्रत्येव तस्य हेतुत्वादिति॥ इति तेजोग्रन्थः॥

**मूले अपाकज इति**। पवने अपाकजः=पाकेन विजातीयतेजस्संयोगेन जायते यः स पाकजः, पाकजो न भवतीति अपाकजः, अनेन पृथिवीस्पर्शव्युदासः, अनुष्णाशीतः=न उष्णः अनुष्णः, न शीतः अशीतः, अनुष्णश्चासौ अशीतश्चेत्यनुष्णाशीतः, 'अयमनुष्णाशीतोऽपाकज' इति प्रत्यक्षप्रतीतिविषय इति यावत्। तथा च समवायेन अपाकजाऽनुष्णाऽशीतस्पर्शवत्त्वं वायोर्लक्षणं (साधर्म्यं) बोध्यमिति भावः॥ मुक्तावल्यां–**वायुं निरूपयतीति**। लक्षणस्वरूपप्रामाण्यादिप्रकारकज्ञानानुकूलव्यापारो निरूपयतेरर्थः। तथा च वायुनिष्ठविषयतानिरूपकं यल्लक्षणस्वरूपप्रामाण्यादिप्रकारकं ज्ञानं तदनुकूलव्यापारानुकूलकृतिमान् ग्रन्थकार इति बोधः॥ अपाकजादिपदानां पदकृत्यमाह–**अनुष्णेति**। समवायेनाऽनुष्णाशीतस्पर्शस्य पथिव्यामतिव्याप्तिस्तद्वारणाय–अपाकज

**क्तमपाकज इति। अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तमनुष्णाशीत इति। एतेन वायवीयो विजातीयः स्पर्शो दर्शितः। तज्जनकतावच्छेदकं वायुत्वमिति भावः ॥४२॥**

**तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः।**
**पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥ ४३ ॥**

---

इत्युक्तम्, पथिव्याः स्पर्शस्तु पाकजः, न त्वपाकज इति नातिव्याप्तिरिति भावः ॥ अनुष्णाशीतपदस्य सार्थक्यमाह–**अपाकजस्पर्शस्येति**। जले, आदिना–तेजसि च पाकजस्पर्शो न भवति इति तत्र अतिव्याप्तिवारणाय–अनुष्णाशीतेत्युक्तम्, जले तु शीतः, तेजसि चोष्णः, स्पर्शो वर्तते इति तत्र नातिव्याप्तिरिति भावः ॥ **यद्यपि** अपाकजानुष्णाशीतस्पर्शवत्त्वं पटादौ अतिव्याप्तम् पटे विजातीयतेजःसंयोगाऽस्वीकारात्, तत्स्वीकारे पटस्य दग्धत्वापत्तेः, **तथापि**–अपाकजाऽनुष्णाशीतस्पर्शवन्मात्रवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वक्तव्यम्। अत्र परिष्कारे पृथिवीत्ववारणाय-मात्रपदम् अपाकजाऽनुष्णाशीतस्पर्शवद्भिन्ने पार्थिवपरमाणौ पृथिवीत्वस्य वृत्तेस्तद्व्युदासः। पटत्वादिकमादाय अतिव्याप्तिवारणाय साक्षाद्व्याप्यत्वनिवेशः, तच्च द्रव्यत्वव्याप्यजात्यव्याप्यत्वमात्रम्। वायुपटद्वित्वमादाय अतिव्याप्तिवारणाय जातिपदम्। अपाकजस्पर्शवद्भिन्नाऽवृत्तित्वनिवेशेनैव पृथिवीत्ववारणसंभवेऽपि जलत्वादीनामवारणात्–अनुष्णाशीतस्पर्शवदित्युक्तम्। **अथवा**–लाघवात् 'पाकजस्पर्शवदवृत्त्यनुष्णाशीतस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं लक्षणार्थो बोध्यः। अत्र पृथिवीत्ववारणाय अवृत्त्यन्तम्, जलत्ववारणाय वृत्त्यन्तम्। उष्णशीतभिन्नज्ञानादिमद्वृत्त्यात्मत्वजातिमादायातिव्याप्तिवारणाय–अनुष्णाशीतपदं स्पर्शत्वव्याप्यजातिविशेषावच्छिन्नपरम्। पूर्वदले स्पर्शपदं समवायेन पाकजवत्त्वलाभायेति ॥ वायुत्वजातौ प्रमाणोपन्यासार्थमाह–**एतेनेति**। स्पर्शस्याऽनुष्णाशीतत्वादिकथनेनेत्यर्थः। वायवीयः=वायुसमवेतः, विजातीयस्पर्शः=पृथिवीजलतेजस्स्पर्शव्यावृत्तजात्यवच्छिन्नः, स्पर्शः, दर्शितः=स्मारितः। पृथिवीस्पर्शस्य पाकप्रयोज्यत्वात् जलसमवेतस्पर्शस्य शीतत्वात् तेजस्समवेतस्पर्शस्य उष्णत्वाच्च तद्विलक्षणस्पर्श एव वायुनिष्ठ इति सूचितमिति भावः ॥ **तज्जनकतेति**। तादृशविजातीयस्पर्शसमवायिकारणतावच्छेदकं वायुत्वं जातिः सिद्ध्यतीत्यर्थः। **अनुमानं** यथा–'समवायसम्बन्धावच्छिन्नाऽपाकजाऽनुष्णाशीतस्पर्शत्वावच्छिन्नाऽपाकजाऽनुष्णाशीतस्पर्शनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नवायुनिष्ठकारणता,–किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्'–इति ॥ एवं–वायुपदशक्यतावच्छेदकतयाऽपि वायुत्वजातिसिद्धिर्बोध्या ॥ एवं रूपाऽसमानाधिकरणस्पर्शसमानाधिकरणजातिमत्त्वम्, रसाऽसमानाधिकरणाऽनुष्णाशीतस्पर्शसमानाधिकरणजातिमत्त्वम्, गन्धाऽसमानाधिकरणाऽनुष्णाशीतस्पर्शसमानाधिकरणजातिमत्त्वं वेति वायुलक्षणं बोध्यम् ॥ ४२ ॥

मूले–**तिर्यग्गमनवानिति**। एष वायुः, तिर्यग्गमनवान्=वक्रगतिमान् भवति,। शतजालैर्व्यवहितेऽपि प्रदेशे वक्रगत्या प्रविशति अतो वक्रगतिमानुक्त इति भावः। प्राचीनमते विश्वनाथमते च वायुर्न प्रत्यक्षः, किन्तु स्पर्शादिलिङ्गैरनुमेय इत्याह–**ज्ञेयइति**। अनुमेय इत्यर्थः। स्पर्शादिः-स्पर्श-शब्द-धृति-कम्पाः लिङ्गं ज्ञापकं यस्य सः। नित्यतादिः–नित्यत्वम् अनित्यत्वम्, पूर्ववत्–जलवदुक्तम्, तथाहि–वायुर्द्विविधो नित्योऽनित्यश्च, परमाणुरूपो नित्यः द्व्यणुकादिरूपः सर्वोऽप्यनित्यः सावयवश्च, अनित्योऽपि त्रिविधः शरीरेन्द्रियविषयभेदात्। तत्र शरीरम् अयोनिजमेव पिशाचादीनाम्। अत्र यो विशेषस्तमाह–**देहव्यापीति**। शरीरव्यापकं स्पर्शग्राहकम् इन्द्रियं त्वक्

एष वायुः स्पर्शादिलिङ्गकः। वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते, विजातीयस्पर्शेन विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां कम्पनेन च वायोरनुमानात्। यथा च वायुर्न प्रत्यक्षस्तथाऽग्रे वक्ष्यते ॥ पूर्ववदिति। वायुर्द्विविधो नित्योऽनित्यश्च। परमाणुरूपो नित्यस्तदन्योऽनित्योऽवयवसमवेतश्च। सोऽपि त्रिविधः,–शरीरेन्द्रिय-

इत्यर्थः। मुक्तावल्यां–'एषपदार्थमाह–वायुरिति। स्पर्शादिलिङ्गक इति। अत्र वक्ष्यमाणानुमानेषु स्पर्शत्वादीन्येव लिङ्गानि कथयिष्यति। तथाप्यत्र स्पर्शादीनां तादात्म्येन हेतुत्वमित्यभिप्रायेणेदं कथनं, अथवा–लिंगपदं ज्ञापकपरं, हेतुज्ञानस्येव पक्षज्ञानस्यापि अनुमितिहेतुतया पक्षस्यापि ज्ञापकत्वम् अविरुद्धं, तथाच स्पर्शादिपक्षकाऽनुमितिविषय इति फलितोऽर्थः ॥ विजातीयस्पर्शेनेति। 'रूपवद्द्रव्यसंयोगाऽसमानकालीनप्रत्यक्षविषयस्पर्शः, क्वचिदाश्रितः, स्पर्शत्वात्, वह्निसमवेतस्पर्शवत्। पृथिव्यादिसमवेतस्पर्शे सिद्धसाधनवारणाय–रूपवद्द्रव्यसंयोगाऽसमानकालीनत्वं प्रत्यक्षविशेषणम्। स यत्र आश्रितः स वायुरिति भावः ॥ विलक्षणशब्देनेति। 'वीणाध्वनिः–स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः,–विभागाऽजन्यशब्दसन्तानत्वात्,–मृदङ्गावच्छेद्यशब्दसन्तानवत्। यद्यपि वेगवद्द्रव्यसंयोगस्यैव शब्दजनकतया साध्ये स्पर्शवत्त्वविशेषणमनर्थकम्, तथाप्युक्तानुमानेनैव वायोः स्पर्शस्यापि सिद्ध्यर्थं स्पर्शवदित्युपात्तम्, व्यर्थविशेषणत्वस्य साध्येऽदोषत्वात् ॥ अग्रेऽप्येवं बोध्यम् ॥ वंशदलद्वयविभागजन्यशब्दे व्यभिचारवारणाय–हेतौ विभागाऽजन्यत्वनिवेशः ॥ अत्र यत् स्पर्शवद्वेगवद्द्रव्यं स एव वायुर्बोध्यः ॥ तृणादीनां धृत्येति। धृतिः–पतनाभावः। 'नभसि तृणतूलविमानादीनां धृतिः–स्पर्शवद्वेगवद्द्रव्यसंयोगजन्या, जन्यप्रयत्नाऽजन्यधृतित्वात्, नौकाधृतिवत्'। जलादिगततृणादौ सिद्धसाधनवारणाय–नभसीति। प्रयत्नवदात्मसंयोगहेतुकधृत्यादौ व्यभिचारवारणाय–धृतौ जन्यप्रयत्नाऽजन्यत्वनिवेशः ॥ अत्र यत् स्पर्शवद्वेगवद्द्रव्यं स वायुः ॥ शाखादीनां कम्पनेन चेति। 'रूपवद्द्रव्याभिघातशून्यतृणसमवेतकर्म,–स्पर्शवद्वेगवद्द्रव्याभिघातजन्यं,–विजातीयकर्मत्वात्,–प्रवाहाहतकाशकर्मवत् ॥ पार्थिवाभिघातजन्यतृणादिकर्मणि सिद्धसाधनवारणाय शून्यान्तम्। चेष्टात्मकक्रियायां व्यभिचारवारणाय हेतौ विजातीयेति। वेगाऽजन्यत्वे सति चेष्टाभिन्नत्वमत्र विजातीयत्वं बोध्यम् ॥ ननु 'वायुः–प्रत्यक्षः,–प्रत्यक्षस्पर्शाश्रयत्वात्,–घटवदि'ति चेन्न, उद्भूतरूपवत्त्वस्य उपाधित्वात्, यत्र द्रव्यत्वे सति बहिरिन्द्रियप्रत्यक्षत्वं तत्र उद्भूतरूपवत्त्वम् इति घटादौ साध्यव्यापकत्वम्, यत्र प्रत्यक्षस्पर्शाश्रयत्वं तत्र उद्भूतरूपवत्त्वं नास्तीति पक्षे साधनाऽव्यापकत्वम्, इत्यभिप्रायेण प्राचीनमतेनाह–यथा च वायुर्न प्रत्यक्ष इति ॥ अग्रे वक्ष्यते इति। 'रूपमत्राऽपि कारण'मिति (५६) कारिकाव्याख्यानावसरे इत्यर्थः। तत्रत्यो ग्रन्थो यथा–'अत्रापि त्वगिन्द्रियजन्यद्रव्यप्रत्यक्षेऽपि रूपं कारणम्, तथा च बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम्' इति। वायोश्च रूपाऽभावान्न प्रत्यक्षमिति प्राचीनानामभिप्रायः ॥ नवीनास्तु वायोस्त्वाचप्रत्यक्षं मन्यन्ते, तन्मते बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे न किमपि कारणं, किन्तु चाक्षुषप्रत्यक्षे रूपं कारणं त्वाचप्रत्यक्षे तु स्पर्शः कारणम्, तथा च प्रभां पश्यामीतिवत् वायुं स्पृशामीति प्रत्ययाद् वायोः स्पार्शनप्रत्यक्षं भवत्येवेति ॥ नित्योऽनित्यश्चेति। नित्यत्वं–ध्वंसभिन्नत्वे सति ध्वंसाऽप्रतियोगित्वम्। अथवा वायुत्वविशिष्टनित्यत्वं ध्वंसाप्रतियोगित्वमात्र वक्तव्यम्॥ अनित्यत्वम्–ध्वंसप्रतियोगित्वप्रागभावप्रतियोगित्वान्यतरवत्त्वम्। वायुत्वविशिष्टाऽनित्यत्वं ध्वंसप्रतियोगित्वमात्रं वा वक्तव्यम्॥ तदन्यः=परमाणुभिन्नो द्व्यणुकादिरूपो वायुरनित्यः, अवयवसमवेतः=अवयवी चेत्यर्थः॥ सोऽपि=अवयवी वायुरपि, त्रिविधः=त्रिप्रकारः,–उद्देश्यतावच्छेदकसमनियतवस्तुमदन्यसंख्याव-

विषयभेदात्। तत्र शरीरमयोनिजं पिशाचादीनाम्। परन्तु जलीयतैजसवायवीय शरीराणां पार्थिवभागोपष्टम्भादुपभोगक्षमत्वं, जलादीनां प्राधान्याज्जलीयत्वादिक मिति। अत्र यो विशेषस्तमाह-देहव्यापीति। शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक्। तच्च वायवीयं, रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात्, अङ्गसङ्गिसलिल-शैत्याभिव्यञ्जकव्यजनपवनवत्॥ ४३॥

**प्राणादिस्तु महावायुपर्यन्तो विषयो मतः।**

विषयं दर्शयति-प्राणादिरिति। यद्यप्यनित्यो वायुश्चतुर्विधः, तस्य चतुर्थी विधा प्राणादिरित्युक्तमाकरे, तथापि संक्षेपादत्र त्रैविध्यमुक्तम्। प्राणस्त्वेक एव हृदादिना-

---

दिति यावत्॥ **तत्रेति।** शरीरेन्द्रियविषयेषु मध्ये इत्यर्थः॥ वायवीयं शरीरम् अयोनिजमेव पिशाचभूतादीनां मरुल्लोके भुवर्लोके प्रसिद्धं बोध्यम्॥ ननु पूर्वम् उक्तैर्जलीयतैजसैः वायवीयैः शरीरैश्च कथं जीवानामुपभोगः? वायौ करचरणाद्यवयवाऽभावादित्याशंकायामाह-**परन्तु** इति। जलीयतैजसशरीरयोरपि शंकासाम्यादत्र लाघवाय समाधानमुक्तं बोध्यम्। जलीये तैजसे वायवीये च शरीरे पार्थिवभागस्य संयोगात् उपभोगावच्छेदकं तद् भवति, उपभोगस्तु सुखदुःखान्यतरसाक्षात्कारः॥ ननु तर्हि कथं जलीयतैजसवायवीयशरीरमिति व्यवहारः, कथं च पार्थिवशरीरमिति तत्र न व्यवहार इत्यत आह-**जलादीनामिति।** जलीयशरीरे जलस्य, तैजसशरीरे तेजसः, वायवीयशरीरे वायोश्च प्राधान्यात् जलीयं तैजसं वायवीयं चेति व्यवहार इति भावः॥ **अत्रेति।** अत्र=त्वगिन्द्रिये च यो विशेषः=सर्वशरीरवृत्तित्वादिरूपः। तमाह-**देहव्यापीतीति।** शरीरव्यापकं=सर्वशरीरवृत्ति, शरीरत्वव्यापकमिति यावत्। तथा च शरीरत्वव्यापकत्वे सतीन्द्रियत्वं त्वचो लक्षणं फलितम्। अथवा 'शरीरव्यापक'मिति शरीराश्रयमित्यभिप्रायकं, लक्षणन्तु-'स्पर्शग्राहक-मिन्द्रिय'मिति, लक्ष्यं च त्वगित्यभिप्रायेणाह-**शरीरव्यापकं स्पर्शग्राहकमिति।** तथा च-स्पार्शनत्वावच्छिन्नकार्यतानिरूपितकारणत्वं त्वगिन्द्रियलक्षणमिति फलितम्। त्वक्सन्निकर्षे व्यभि-चारवारणाय-इन्द्रियत्वनिवेशः, संयोगसम्बन्धावच्छिन्नकारणतालाभाय वा इन्द्रियपदं तेन नोक्त-व्यभिचारः॥ त्वगिन्द्रियस्य वायुकार्यत्वमनुमानेन साधयति-**तच्चेति।** तच्च-त्वगिन्द्रियं पक्षः। वायवीयं=वायुसमवेतमिति साध्यम्। रूपादिषु...व्यञ्जकत्वादिति हेतुः, रूपरसगन्धस्पर्शा आदिपदार्थाः, सप्तम्यर्थो घटकत्वं एतल्लाभाय **मध्य** इत्युक्तं, तस्य स्पर्शस्यैवेत्येवकारार्थघटकेतरपदार्थेऽन्वयः,तथा च 'रूपादिघटकं यत् स्पर्शेतरत् तद्विषयकप्रत्यक्षाऽजनकत्वे सति स्पर्शविषयकप्रत्यक्षजनकत्वादिति तदर्थः फलितः॥ मनसि व्यभिचारवारणाय-एवकारार्थ इतरत्वम्। त्वगिन्द्रियसन्निकर्षे व्यभिचार-वारणाय-द्रव्यत्वे सतीति देयम्॥ **अङ्गेत्यादि** दृष्टान्तम्। अङ्गं-शरीरावयवः, तत्र संगि=संगतं-प्रस्रवद् यत् सलिलं स्वेदः, तस्य शैत्यं-शीतस्पर्शः, तस्य अभिव्यञ्जकः-प्रत्यक्षजनको यो व्यजनस्य तालपत्रादेः पवनः, स यथा वायुपरमाणुसमवेतस्तथा त्वगिन्द्रियमपि वायुपरमाण्वारब्धमिति भावः॥ ४३॥

**मूले-प्राणादिस्त्विति।** प्राणापानसमानोदानव्याननागकूर्मकृकलदेवदत्तधनञ्जयाः दश शरीरान्तःसंचारिणः, बाह्याश्च महावायवः प्रलयकालीनावधिकाः, ते सर्वे वायवीयविषया बोध्या इत्यर्थः॥ **मुक्तावल्यां-यद्यप्यनित्य** इति। **चतुर्विध** इति। शरीरेन्द्रियविषय-प्राणभेदाच्चतुर्विध इत्यर्थः। तस्य-त्रिविधस्य अनित्यवायोः, चतुर्थीविधा=चतुर्थः प्रकारः, प्राणवायुरिति आकारे=

नास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च नानासंज्ञां लभत इति ।

**आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥ ४४ ॥**

आकाशं निरूपयति—आकाशस्येति । आकाशकालदिशामेकैकव्यक्तित्वादाकाशत्वादिकं न जातिः । किन्तु आकाशत्वं शब्दाश्रयत्वम् । वैशेपिक इति कथनं तु विशेषगुणान्तरव्यवच्छेदाय । एतेन प्रमाणमपि दर्शितम् । तथाहि-शब्दो विशेषगुणः चक्षु-

---

वैशेषिकदर्शनस्य प्रशस्तपादभाष्येऽभिहितम् । तथापि संक्षेपात्=विषयत्वेन प्राणवायुमन्तर्भूय समासात्, अनित्यवायोस्त्रैविध्यमुक्तमिति ॥ स च प्राणः एक एवापि हृदयादिस्थानभेदेन मुखान्निर्गमनतत्प्रवेशनादिक्रियाभेदाच्च पञ्च संज्ञा लभते—तथथा—'हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले । उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः' इतिस्थानभेदः । क्रियाभेदो यथा—मुखनासिकाभ्यां निष्क्रमणप्रवेशनात् प्राणः, मलादीनामधोनयनादपानः, भुक्तस्य पाकार्थं जाठराग्नेः समुन्नयनात् समानः, रसादेरूर्ध्वंनयनादुदानः, नाडीमुखेषु विततनाद् व्यानः इति । अधिका अपि—नागकूर्मकृकलदेवदत्तधनञ्जयाख्या वायवः पुराणेषु प्रसिद्धाः सन्तीति ॥ अनित्यकार्याणामुत्पत्तिविनाशक्रमस्तु १०५ कारिकाव्याख्यायां विस्तरतो दृष्टव्यः । संक्षेपात्तु—ईश्वरस्य चिकीर्षावशात् परमाणुषु क्रिया जायते, ततः परमाणुद्वयसंयोगे सति द्वयणुकमुत्पद्यते, त्रिभिर्द्वयणुकैः त्र्यणुकम्, एवं चतुरणुकादिक्रमेण महती पृथिवी, महत्य आपः, महत् तेजः, महान् वायुः । एवमुत्पन्नस्य कार्यद्रव्यस्य संजिहीर्षावशात् परमाणुषु क्रिया, क्रियया परमाणुद्वयविभागे सति द्वयणुकस्य नाशः, ततस्त्र्यणुकस्य, ततश्चतुरणुकस्य, इत्येवं महापृथिव्यादिनाशः । असमवायिकारणनाशाद् द्वयणुकनाशः, समवायिकारणनाशात् त्र्यणुकनाश इति प्राचीनाः । सर्वत्र असमवायिकारणनाशाद् द्रव्यनाश इति नवीनाः ॥ इति वायुग्रन्थः ।

मूले—**आकाशस्येति** । गगनस्य शब्द एव वैशेषिकः—विशेष एव वैशेषिकः, विनयादित्वात्स्वार्थे ठक्, गुणो विज्ञेयः, तथा च समवायेन शब्दाधिकरणत्वमाकाशस्य लक्षणम् । वैशेषिक इति कथनन्तु विशेषगुणान्तरव्यवच्छेदाय ॥ मुक्तावल्यां—**आकाशमिति** । आकाशनिष्ठविषयतानिरूपकं यल्लक्षणस्वरूपप्रामाण्यादिप्रकारकं ज्ञानं तदनुकूलव्यापारानुकूलकृतिमान् ग्रन्थकार इति बोधः ॥ एकव्यक्तिवृत्तित्वादाकाशत्वं न जातिः, किन्त्वखण्डोपाधिः, लाघवमनुसन्धाय कालत्वादीनामप्यत्रैव जातित्वं निषेधति—**आकाशकालेति** । आकाशस्य कालस्य दिशश्चैकैकव्यक्तित्वात् तद्वृत्ति आकाशत्वं कालत्वं दिक्त्वं च न जातिः, आकाशत्वादीनाम् एकव्यक्तिमात्रवृत्तित्वात्, सजातीयनिष्ठभेदाऽप्रतियोगित्वात्, अनेकसमवेतत्वाऽभावादिति यावत् ॥ एकत्वमत्र—स्वप्रतियोगिकभेदाऽसमानाधिकरणधर्मवत्त्वं बोध्यम् । स्वम्—आकाशम् । तादृशो धर्मः आकाशत्वम् ॥ ननु तस्य जातित्वाऽभावे किं तत्स्वरूपमित्यत आह—**किन्त्विति** । तथा च—शब्दाश्रयत्वम् आकाशस्य लक्षणम् । आश्रयता च समवायेन विवक्षिता, तेन कालस्य जगदाधारत्वेन शब्दाश्रयत्वेऽपि न तत्रातिव्याप्तिः ॥ नन्वेवं सति शब्दस्य वैशेषिकत्वकथनं व्यर्थमत आह—**वैशेषिक इति । विशेषगुणान्तरव्यवच्छेदायेति** । आकाशस्य शब्द एव विशेषगुण इति निर्णयायेत्यर्थः । इत्थं च '**शब्द**' इति मूलं सावधारणं ज्ञेयम् ॥ ननु शब्दस्य विशेषगुणत्वनिर्णयाऽभावे का क्षतिरत आह—**एतेनेति** । शब्दस्य विशेषगुणत्वकथनेनेत्यर्थः । **प्रमाणमपीति** । आकाशेऽनुमानं प्रमाणमपि 'शब्दः—पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यसम-

**ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्वात् स्पर्शवत्। शब्दो द्रव्यसमवेतो गुणत्वात् रूपवत् इत्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे, शब्दो-न स्पर्शवद्विशेषगुणः, अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकप्रत्यक्षत्वात्, सुखवत्। पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम्। पटरूपादौ व्यभिचारवारणाय-अकारण गुणपूर्वकेति। जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति। शब्दो-न दिक्काल-**

---

वेतः,-अष्टद्रव्याऽसमवेतत्वे सति द्रव्यसमवेतत्वादि'ति प्रमाणं सूचितमित्यर्थः॥ अत्रानुमाने हेतो विंशेष्याऽसिद्धिशंकानिरासाय द्रव्यसमवेतत्वं साधयितुं तत्साधकं हेतुं गुणत्वमादौ साधयति-**तथाहि शब्द इति**। शब्दः पक्षः, गुणत्वं समवायेन साध्यम्। चक्षुः···जातिमत्त्वादिति हेतुः। चक्षुर्ग्रहणाऽयोग्या या बहिरिन्द्रिय(त्वग्)ग्राह्या जातिः शब्दत्वं तादृशजातिमत्त्वादित्यर्थः। चक्षुर्ग्रहणं=चाक्षुषप्रत्यक्षम्। चक्षुर्ग्रहणाऽयोग्या-चाक्षुषनिरूपितलौकिकप्रत्यक्षस्वरूपाऽयोग्या। बहिरिन्द्रियग्राह्या=बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयतावती। तथा च—चाक्षुषनिरूपितलौकिकप्रत्यक्षस्वरूपाऽयोग्यत्वे सति बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयताविशिष्टजातिमत्वादि'ति फलितार्थः॥ त्वगिन्द्रियजन्यलौकिकप्रत्यक्षविषयघटत्वादिजातिमति घटादौ व्यभिचारवारणाय-चक्षुर्ग्रहणाऽयोग्येति। घटः शब्दावच्छेदक इति शब्दांशे अलौकिकविषयताशालिचाक्षुषं प्रति शब्दस्यापि स्वरूपयोग्यतया स्वरूपाऽसिद्धिवारणाय-लौकिकत्वनिवेशः। तादृशप्रत्यक्षाऽविषयत्वोक्तौ चक्षुस्संयोगाद्यभावेन तादृशप्रत्यक्षाऽविषयघटादौ व्यभिचारतादवस्थ्यमतः स्वरूपयोग्यताप्रवेशः। आत्मनि व्यभिचारवारणाय बहिरिन्द्रियग्राह्येति। रसत्वादौ हेतोरभावज्ञानाय-जातिमदिति। **वस्तुतस्तु** चाक्षुषनिरूपितलौकिकविषयताशून्यद्रव्याऽवृत्तिजातिमत्त्वादिति हेतुः सम्यक्॥ स्पर्शवदिति दृष्टान्तः॥ शब्दस्य गुणत्वं प्रसाध्य सम्प्रति शब्दस्य द्रव्याश्रितत्वं साधयति अनुमानान्तरेण-'**शब्दो द्रव्यसमवेत** इति। शब्दः पक्षः। द्रव्यसमवेतत्वं साध्यम्। गुणत्वादिति हेतुः। रूपवदिति दृष्टान्तः। भवति रूपं समवायेन घटादिद्रव्यसमवेतं, तद्वत् शब्दोऽपि गुणत्वात् द्रव्यसमवेतो भवतीति॥ एतावता परिशेषानुमानेन विशेष्यासिद्धिं निराकृत्येदानीं विशेषणाऽसिद्धिं निराकरोति--**शब्दो नेति**। शब्दः पक्षः। स्पर्शवद्विशेषगुणत्वाऽभावः साध्यम्। स्पर्शवन्तः-पृथवीजलतेजोवायवः, तेषां विशेषगुणत्वाऽभाववानित्यर्थः। हेतुमाह-**अग्नि···प्रत्यक्षत्वादिति**। अग्निसंयोगः असमवायिकारणं यस्य पाकजरूपस्य पार्थिवगुणस्य सः-अग्निसंयोगाऽसमवायिकारणकः, तस्य भावस्तत्त्वं तदभावे सतीत्यर्थः। भवति शब्दस्तादृशः, अनेन पार्थिवगुणत्वनिषेधः सूचितः॥ **अकारणगुणपूर्वकप्रत्यक्षत्वादिति**। अकारणगुणपूर्वकत्वे सति प्रत्यक्षत्वादित्यर्थः। कारणगुणाः जलीयतैजसवायवीयपरमाणुद्व्यणुकस्थाः रसरूपस्पर्शात्मकाः, पूर्वम्=असमवायिकारणं येषां-जलीयतैजसवायवोयत्र्यणुकादिगतरसरूपस्पर्शानां, ते जलीयतैजसवायवीयगुणाः कारणगुणपूर्वकाः, कारणगुणपूर्वको न भवतीति अकारणगुणपूर्वकः। भवति शब्दस्तादृशः, आकाशस्याऽवयवाऽभावात्। अनेन-जलतेजोवायुगुणत्वनिषेधः सूचितः। **सुखवदिति** दृष्टान्तः॥ एतदनुमाने हेतोः पदकृत्यमाह-**पाकजेति**। पाको विलक्षणतेजस्संयोगस्तज्जन्यं यत् पार्थिवं रूपरसादिकं तत्र साध्याभाववति हेतुसत्त्वेन व्यभिचारस्तद्वारणाय सत्यन्तम्=अग्निसंयोगाऽसमवायिकारणकत्वाभाववत्त्वे सतीति पदोपादानं॥ **पटरूपादाविति**। पटरूपे न भवत्यग्निसंयोगोऽसमवायिकारणं, तथा सति दाहापत्तेः, किन्तु पटरूपं प्रति तन्तुरूपमेव असमवायिकारणम्, तत्र साध्याभाववति पटरूपे हेतुसत्त्वेन व्यभिचारस्तद्वारणाय-अकारणगुणपूर्वकेति। पटरूपं तन्त्वात्मककारणस्य गुणो यद्रूपं तत्पूर्वकत्वाद्अकारणगुणपूर्वकत्वाऽभावान्न व्यभिचार इति॥

मनसां गुणः, विशेषगुणत्वात् रूपवद्। नात्मविशेषगुणो बहिरिन्द्रियग्राह्यत्वाद्रूपवत्। इत्थं च शब्दाधिकरणं नवमं द्रव्यं गगनात्मकं सिध्यति । नच वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वाच्यम्, अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात् ॥ ४४ ॥

---

जलपरमाण्विति । जलतेजःपरमाणुरूपम् अग्निसंयोगाऽसमवायिकारणकत्वाऽभाववद् अकारणगुणपूर्वकं चेति तत्र हेतोः सत्त्वेन साध्यस्य चाऽसत्त्वेन व्यभिचारस्तद्वारणाय–प्रत्यक्षेति । तत्तु न प्रत्यक्षमिति न व्यभिचारः ॥ उक्तानुमानेन पृथिवीजलतेजोवायूनां विशेषगुणत्वं निषिध्येदानीं दिक्कालमनसां गुणत्वं निषेधति–शब्दो न दिक्कालमनसामिति । शब्दः पक्षः । दिक्कालमनोगुणत्वाऽभावः साध्यम् । विशेषगुणत्वात्–हेतुः । रूपवदिति दृष्टान्तः। हेतौ व्यभिचारित्ववारणाय विशेषेति । विशेषगुणत्वं च–द्रव्यविभाजकोपाधिद्वयसमानाधिकरणाऽवृत्तिजातिमत्त्वं, पृथिवीत्वजलत्वाद्यात्मकं यद् द्रव्यविभाजकोपाधिद्वयं प्रत्येकं तत्समानाधिकरणा द्वित्व-पृथक्त्व संयोगादयस्तदवृत्तिजातिमद्गुणत्वमित्यर्थः । रूपादिषु चतुर्षु तादृशं रूपत्वादिकं, सांसिद्धिकद्रवत्वे च द्रवत्वत्वाऽवान्तरजातिम्, स्नेहादिषु दशसु स्नेहत्वादिकम्, भावनायां संस्कारत्वाऽवान्तरजातिं चादाय लक्षणसमन्वयः । वस्तुतस्तु–कालदिङ्मनोवृत्तिताऽनवच्छेदकजातिमद्गुणत्वं विशेषगुणत्वं बोध्यम् । अथवा–पृथिवीवृत्तिवृत्ति-जलवृत्तिवृत्तीतरसंयोगाऽवृत्तिगुणत्वव्याप्यजातिमत्त्वं, अथवा–स्वाश्रयसमानाधिकरणयत्किञ्चिज्जातिव्यापकतावच्छेदिका या स्वाश्रयसमानाधिकरणद्रव्यविभाजकोपाधिमदितरभेदव्याप्यतावच्छेदिका गुणत्वव्याप्या जातिस्तद्वत्त्वम्, अथवा–भावनाऽन्यो यो वायुवृत्तिवृत्तिस्पर्शोऽवृत्तिधर्मसमवायी, तदन्यत्वे सति गुरुत्वाऽजलद्रवत्वान्यगुणत्वं विशेषगुणत्वमिति । तथा च 'शब्दः–विशेषगुणः–लौकिकप्रत्यासत्त्येन्द्रियग्राह्यत्वे सति लौकिकप्रत्यासत्त्या द्वीन्द्रियग्रहणयोग्यताराहित्ये च सति गुणत्वव्याप्यजातिमत्त्वादि'ति ॥ शब्दस्यात्मविशेषगुणत्वं निषेधति–नात्मविशेषगुण इति । शब्दः पक्षः । आत्मविशेषगुणत्वाऽभावः साध्यम् । बहिरिन्द्रियग्राह्यत्वादिति हेतुः । लौकिकसन्निकर्षप्रयोज्या या मनोभिन्नेन्द्रियजन्यप्रत्यक्षीयविषयता तदवच्छेदकधर्मवत्त्वादित्यर्थः । आत्मगुणे व्यभिचारवारणाय हेतौ बहिः पदम् । आद्यशब्दस्य लौकिकविषयताशून्यत्वेऽपि तदवच्छेदकधर्मवत्त्वान्नाऽसिद्धिः ॥ रूपं दृष्टान्तम् ॥ इत्थं चेति । पूर्वोक्तप्रकारेण पृथिव्याद्यष्टद्रव्याऽनाश्रितत्वसिद्धौ चेत्यर्थः । शब्दाधिकरणमिति । 'शब्दः–अष्टद्रव्यातिरिक्तद्रव्यसमवेतः,–अष्टद्रव्याऽसमवेतत्वे सति द्रव्यसमवेतत्वादि' तिपरिशेषानुमानेन लाघवशानसहकृतेन शब्दस्य समवायेनाधिकरणं नवमं द्रव्यं गगनात्मकं सिद्ध्यतीति । 'प्रसक्तप्रतिषेधेऽन्यत्राऽप्रसंगाच्छिष्यमाणे सम्प्रत्ययः परिशेषः' । यत्र द्रव्येषु शब्दाश्रितत्वप्राप्तिसम्भावना तत्र निषेधे सति, अन्यत्र–गुणादौ अप्राप्तेरेव, शिष्यमाणे आकाशे, सम्प्रत्ययः–सिद्धिः, तत्परिशेषानुमानमित्यर्थः ॥ 'शब्दो,–न स्पर्शवद्विशेषगुण'इत्यनुमाने बाधं स्वरूपाऽसिद्धिं चाऽऽशंकते–न चेति । शब्दो वायुगुणः तथा च वाय्ववयवेषु परमाणुद्व्यणुकादिषु यः सूक्ष्मः शब्दः सः क्रमेण त्रसरेण्वादिमहावायौ कार्ये शब्दं समुत्पादयेत् सः कार्यात्मकः शब्दः कारणगुणपूर्वको भवति अतः–अकारणगुणपूर्वकत्वाऽभावात् हेतोः स्वरूपाऽसिद्धत्वं, स्पर्शवतो वायोः विशेषगुणत्वाच्च तदभावात्मकसाध्यस्य शब्दे बाधश्चेति भावः ॥ समाधत्ते–अयावदिति । यावद्द्रव्यस्थितिकालस्थितिकत्वं यावद्द्रव्यभावित्वं, द्रव्यस्थितिकालपर्यन्तं यस्य स्थितिः, असौ यावद्द्रव्यभावी, यथा पृथिव्या गन्धादिगुणा उत्पद्यमाना यावत्कार्यस्थायिनो यावद्द्रव्यभाविन इत्युच्यन्ते, शब्दस्तु न तथा, किन्तु मन्दमन्दतरमन्दतमादितारतम्यविशिष्टः शनैः

**इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः।**

**तत्र च शरीरस्य विषयस्य चाभावादिन्द्रियं दर्शयति–इन्द्रियमिति। नन्वाकाशं लाघवादेकं सिद्धं श्रोत्रं तु पुरुषभेदेन भिन्नं कथमाकाशं स्यादिति चेत्तत्राह–एकः सन्नपीत्यादि। आकाश एक एव सन्नपि उपाधेः कर्णशष्कुल्यादेर्भेदाद्भिन्नं श्रोत्रात्मकं भवतीत्यर्थः।**

**जन्यानां जनकः कालो जगतामाश्रयो मतः ॥४५॥**

---

शनैर्नाशमुपैति, अस्याश्रयो द्रव्यमाकाशन्तु न नश्यति, तस्मात् पृथिव्यादिगतगन्धादिगुणविपरीतधर्मवान् शब्दो न यावद्द्रव्यभावी, किन्तु अयावद्द्रव्यभावी, अतो न वायुगुण इति भावः॥ अयावद्द्रव्यभावित्वेन=आश्रयनाशाऽजन्यनाशप्रतियोगित्वेन, त्रिक्षणवृत्तिध्वंसप्रतियोगित्वेनेति यावत्। तादृशप्रतियोगित्वस्य वायुविशेषगुणत्वाभावव्याप्यत्वम्। अनुमानं–'शब्दः–वायुविशेषगुणत्वाऽभाववान्,–आश्रयनाशाऽजन्यनाशप्रतियोगित्वात्, ज्ञानवदि'ति॥ ४४॥

**मूले–इन्द्रियन्त्विति।** आकाशस्य इन्द्रियन्तु श्रोत्रनामकं भवेत्, तच्चेन्द्रियम् आकाशात्मकं नित्यमेव न त्वनित्यम्। आकाशः एकः–सजातीयप्रतियोगिकभेदशून्यः सन्नपि, श्रोत्रं पुरुषभेदाभिन्नं तु उपाधितः–कर्णशष्कुलीभेदात्, व्यवह्रियते। न तु वस्तुतो भिन्नमिति भावः॥ आकाशीयशरीरनिरूपणमुपेक्ष्य कथमादाविन्द्रियनिरूपणमत आह–मुक्तावल्यां–**तत्र चति।** आकाशे चेत्यर्थः। आकाशीयस्य चेष्टाश्रयस्य शरीरस्य उपभोगसाधनस्य विषयस्य च असत्त्वादेव तन्निरूपणाऽसंभवाद् इन्द्रियं निरूपयतीत्यर्थः। आकाशस्येन्द्रियात्मकत्वेऽनित्यत्वमाशंकते–**नन्वाकाशमिति। लाघवादिति।** घटाकाशमठाकाशादीनामनेकत्वे अनेकत्वकल्पनागौरवापेक्षया एककल्पनालाघवमिति भावः। **पुरुषभेदेनेति।** 'श्रोत्रं, स्वानुयोगिवृत्तित्वस्वप्रतियोगिवृत्तित्वोभयसम्बन्धावच्छिन्नभेदवद्धर्मावच्छिन्नम्,–स्वप्रतियोग्याश्रितत्वसम्बन्धेन पुरुषभेदवत्त्वादित्य'नुमितम्। आकाशस्य निरुक्तरीत्या भेदवद्धर्मावच्छिन्नत्वाऽभावान्न श्रोत्रं भिन्नं भवितुमर्हतीत्याशंकार्थः॥ अन्यत् सरलम्॥ **उपाधेरिति।** शष्कुलीव कर्ण इति कर्णशष्कुली तद्भेदात्, कर्णशष्कुलीविवरात्मकोपाधेः भेदात् तदवच्छिन्नमाकाशमपि भिन्नमिति व्यवह्रियते, न तु वस्तुतो भिन्नमिति भावः॥ तथा च स्वप्रतियोगिकर्णशष्कुलीरूपविशेषणभेदप्रयोज्यविशिष्टभेदप्रतियोगि श्रोत्रंभवतीति भावः॥ तच्चाकाशं विभु नित्यं च, विभुत्वं–व्यापकत्वम्, अत्यन्ताभावाऽप्रतियोगित्वमिति॥ **नव्यास्तु**–शब्दनिमित्तकारणत्वेन क्लृप्तस्येश्वरस्यैव शब्दसमवायिकारणत्वं, ईश्वरस्यैव श्रोत्रत्वं चेति स्वीकुर्वन्ति। **अन्ये तु**–मृदंगादेरेव गुणः शब्दो नाऽकाशस्येति वदन्ति॥ इत्याकाशग्रन्थः।

**मूले–जन्यानामिति।** जन्यानां=कार्याणां जनकः=निमित्तकारणं यः स कालः, कार्यमात्रं प्रति कालो न समवायिकारणं, द्रव्यत्वाच्च नाऽसमवायिकारणं, किन्तु निमित्तकारणमेवेति भावः॥ तथाच कालिकसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नाधिकरणत्वावच्छिन्नकारणत्वं काललक्षणम्। कालिकसम्बन्धावच्छिन्नत्वकथनेन दिशि, अधिकरणत्वावच्छिन्नत्वकथनेन चाऽदृष्टादौ नातिव्याप्तिः॥ ननु कार्यमात्रं प्रति कालस्य निमित्तकारणत्वे किम्मानमिति चेत्! तदुत्पत्त्यधिकरणस्य तदुत्पत्तिहेतुत्वं, तदुत्पत्तिहेतोश्च तद्धेतुत्वमिति नियम एवेति मानम्। कालस्य कार्योत्पत्त्यधिकरणत्वं तु 'अद्य घटो भविष्यति–श्वः घटो भविता'इति प्रत्ययात्। न च तत्तत्कार्यविशेषं प्रति तत्तत्कालविशेषस्य हेतुत्वसिद्धावपि कार्यसामान्ये न कालस्य हेतुत्वसिद्धिरिति

कालं निरूपयति–जन्यानामिति । तत्र प्रमाणं दर्शयितुमाह–जगतामिति । तथाहि 'इदानीं घट' इत्यादिप्रतीतिः सूर्यपरिस्पन्दादिकं यदा विषयीकरोति, तदा सूर्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः। स च सम्बन्धः संयोगादिर्न संभवतीति काल एव तत्सम्बन्धघटकः कल्प्यते । इत्थं च तस्याश्रयत्वमपि सम्यक् ॥ ४५ ॥

परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।

प्रमाणान्तरं दर्शयति—परापरत्वेति । परत्वापरत्वबुद्धेरसाधारणं निमित्तं काल एव । परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः काल एकः

---

वाच्यम् । 'यद्विशेषयोः तत्सामान्ययोरपी'तिन्यायेन कार्यमात्रे कालस्य हेतुत्वसिद्धेः ॥ कालसत्त्वे प्रमाणं दर्शयति–जगतामिति । जगतां=सर्वपदार्थानाम्, आश्रयः=कालिकेन अधिकरणो मतः । तथा च 'कालः–कालिकेन सर्ववानि'तिप्रतीत्या सर्वाधिकरणत्वेन कालाख्यद्रव्यसिद्धिरिति भावः ॥ नन्वियं प्रतीतिर्दिग्विषयिण्येवास्तु–इतिचेन्न, प्रतीत्यन्तरेण कालसिद्धौ प्रकृतप्रतीतिबलेनापि कालस्य जगदाधारत्वकल्पनात् ॥ मुक्तावल्यां–कालं निरूपयतीति । कालनिष्ठविषयतानिरूपकं यल्लक्षण-स्वरूपप्रामाण्यादिप्रकारकं ज्ञानं तदनुकूलव्यापारानुकूलकृतिमान् ग्रन्थकार इत्यर्थः ॥ तत्र प्रमाण-मिति । कालेऽनुमानं दर्शयितुमित्यर्थः ॥ प्रमाणं दर्शयति–तथाहीति । 'इदानीं=एतत्काले मध्याह्नादौ, घटोऽस्ति'इत्यादिप्रतीतिः=ज्ञानम्, सूर्यस्य परिस्पन्दं=गतिरूपां क्रियां, यदा=यस्मिन् वर्तमानकालादौ, विषयीकरोति=अवगाहते, तदा=तस्मिन् वर्तमानकालादौ, सूर्यस्य परिस्पन्दा-दिना=गत्यात्मकक्रियया सह, घटपटादिपदार्थानां सम्बन्धः स्वीकार्यः, स च न संयोगः, सूर्यक्रियया सह घटस्य संयोगाऽसंभवात्, नापि समवायः,–घटे सूर्यक्रियायाः असमवायात् , नाऽपि स्वरूपः, तयोस्तदभावात् , किन्तु–स्वाश्रयतपनसंयोगिसंयोगात्मकः परम्परासम्बन्धः कल्पनीयः, स्वं–सूर्यक्रि-या,तदाश्रयस्तपनः सूर्यः, तस्य संयोगी कालः, तत्संयोगः घटे वर्तते–इति परम्परासम्बन्धघटकः काल एव पदार्थः ॥ ननु तथापि आकाशादिरेव तत्सम्बन्धघटकः कल्प्यतामिति चेन्न । आकाशदि-गात्मनां विनिगमनाविरहेण अतिरिक्तैककालस्यैव संयोगिपदेन ग्रहणात् । अनुमानं तु–'इदानीं घट'इत्याकारकसूर्यपरिस्पन्दप्रकारकघटविशेष्यकप्रतीतिः, परम्परासम्बन्धविषया,–साक्षात्सम्बन्धाऽ-भावे सति विशिष्टबुद्धित्वात् ॥ इत्थं चेति । उक्तरीत्या अतिरिक्तकालसिद्धौ चेत्यर्थः । तस्य काल स्यैव सर्वपदार्थानामाश्रयत्वं युक्तमिति ॥ ४५ ॥

मूले–परापरत्वेति । 'अयं घटः परः अयमपर'–इति बुद्धेर्हेतुः–असाधारणं निमित्तं काल एवेत्यर्थः ॥ कालस्त्वेकोऽपि क्षणदिनमासादिव्यवहारविषयः उपाधेर्भेदात् भवति, उपाधयो मुक्ता-वल्यामुक्ताः ॥ मुक्तावल्यां–परत्वापरत्वेति । कालिकं परत्व ज्येष्ठत्वं, कालिकापरत्वं कनिष्ठ-त्वम् , ज्येष्ठे 'अयं पर'इति प्रत्ययः, कनिष्ठे–'अयमपर' इति प्रत्ययः, तस्य असाधारणं=कार्यत्व-व्याप्य(ज्येष्ठत्वत्वादि)धर्मावच्छिन्नकार्यतानिरूपितकारणतावान् काल एव । परत्वापरत्वयोरित्यस्यैव वक्तुमुचितत्वेऽपि तद्बुद्धिपर्यन्तानुधावनं कालिकपरत्वापरत्वयोःप्रमाणं दर्शयितुमित्यभिप्रायेण भाव-माह–परत्वापरत्वयोरसमवायीति । घटे परत्वमुत्पद्यते तस्य समवायिकारणं घटः, असम-वायिकारणं घटकालसंयोगः, तदाश्रयः एकः घटः, द्वितीयस्तु–कालः, एवमपरत्वस्याऽसमवायिका-रणसंयोगाश्रयोऽपि काल इति । अनुमानन्तु–'कालिकपरत्वाऽपरत्वे,–असमवायिकारणसंयोगजन्ये, भावत्वे सति कार्यत्वात् , घटवदि'ति ॥ न च पृथिवी–पिण्डसंयोगस्यैव परत्वापरत्वयोरसमवायिकार-

**कल्प्यत इति भावः। नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादत आह—क्षणादिरिति । कालस्त्वेकोऽप्युपाधिभेदात्क्षणादिव्यवहारविषयः । उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा, पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्नं कर्म वा।**

---

णत्वं कल्प्यतां तथा च न कालसिद्धिरिति वाच्यम् । पृथिव्यसंयुक्तपदार्थेऽपि कालिकपरत्वादेरुत्पादात् तत्र व्यभिचारात् । ननु तथापि आकाशदिगात्ममनोऽन्यतमेन सह यो घटादिसंयोगस्तस्यैव परत्वापरत्वयोरसमवायिकारणत्वं कल्प्यतां किं कालसंयोगकल्पनयेत्यत आह—**लाघवादिति**। आकाशदिग्भ्यां पिण्डसंयोगस्य तथात्वे जीवात्मभिः प्रत्येकं विनिगमनाविरहात्, आत्ममनसोस्त्वनन्तत्वान्न तथात्वं, किन्तु लाघवादतिरिक्तः काल एव तथात्वेन कल्प्यते इति भावः ॥ एकस्मिन् पदार्थे काले कथं क्षणदिनादिविभिन्नव्यवहारः इत्याशंकते—**नन्वेकस्येति**। समयभेदः—समयभेदव्यवहारः, क्षणादिविभिन्नव्यवहारविषयः कथं स्यादित्याशंकार्थः॥'**उपाधिभेदादिति**। तथा चैकस्यापि कालस्य उपाध्यात्मककिञ्चिद्धर्मविशिष्टस्य क्षणत्वं किञ्चिद्धर्मविशिष्टस्य दिनत्वं न तु केवलस्येति भावः ॥ तादृशोपाधीनामेव क्षणत्वादिव्यवहारविषयत्वं न तु महाकालस्येति हृदयम् ॥ उपाधीनाह—**उपाधिस्त्विति**। क्षणत्वव्यवहारौपयिकोपाधिस्तु उच्यते इत्यर्थ। तत्र—एकः—क्रिया, द्वितीयः—क्रियातो विभागः, तृतीयः—विभागात् पूर्वसंयोगनाशःविशिष्ट उत्तरसंयोगप्रागभावः, चतुर्थस्तु—उत्तरसंयोगविशिष्टक्रिया इत्येतानाह—**स्वजन्येति**। स्वं—मूर्तद्रव्यनिष्ठा क्रिया, तया जनिष्यमाणस्य विभागस्य प्रागभावः स्वक्षणे एव वर्तते इति तत्प्रागभावविशिष्टा स्वं क्रियैव 'प्रथमोपाधिः, तेन काले 'अयं प्रथमः क्षण इति व्यवहारो जायते । द्वितीयक्षणस्य प्रथमक्षणत्वापत्तिवारणाय प्रागभावेति । घटगतैकक्रियानाशोत्तरोत्पन्नतद्गतक्रियान्तरोत्पन्नविभागप्रागभावविशिष्टप्रथमकर्मणः क्षणचतुष्टयावस्थायिनः प्रथमक्षणत्वापत्तिवारणाय—स्वजन्येति । तथा च स्वजन्यविभागप्रागभावावच्छिन्नं यत् स्वं स एव प्रथमक्षणत्वव्यवहारौपयिकोपाधिरिति भावः ॥ इदं प्राचीनमते ॥ प्रागभावाऽनङ्गीकर्तृनवीनमते तु स्वजन्यविभागानवच्छिन्नं स्वयमेव क्रिया उपाधिरिति ॥ प्रतिक्षणं क्रियोत्पत्तौ मानाभावेन द्वितीयादिक्षणेषु तादृशव्यवहारौपयिकोपाधिमाह—**पूर्वसंयोगेति** । मूर्तद्रव्यस्य यः पूर्वदेशेन संयोगः क्रियासमये आसीत्, अव्यवहितोत्तरत्वसम्बन्धेन तादृशसंयोगविशिष्टो यः क्रियाजन्यो विभागः स द्वितीयक्षणोपाधिरित्यर्थः । विभागमात्रस्योपाधित्वे विभागोत्तरकालेऽपि द्वितीयक्षणत्वापत्तिः । पूर्वसंयोगमात्रस्य तथात्वे तु विभागपूर्वकालेऽपि द्वितीयक्षणत्वापत्तिः । उभयोपादाने तु पूर्वसंयोगविभागयोरधिकरणीभूते काले एव द्वितीयक्षणत्वव्यवहारः इति । स्वजन्यविभागनाश्यपूर्वसंयोगविशिष्टस्वजन्यविभाग इति यावत्, तेन स्वजन्यविभागस्य उदासीनपूर्वसंयोगविशिष्टस्य द्वित्रिक्षणवृत्तित्वेऽपि उदासीनविभागस्य स्वजन्यविभागनाश्यसंयोगविशिष्टस्य तथात्वेऽपि न क्षतिः ॥ तृतीयक्षणोपाधिमाह—**पूर्वसंयोगनाशेति**। क्रियाकाले यः पूर्वदेशवर्ती मूर्तद्रव्यस्य संयोग आसीत् तादृशसंयोगध्वंसविशिष्टो यो जनिष्यमाणस्य उत्तरसंयोगस्य प्रागभावः स तृतीयक्षणोपाधिरित्यर्थः ॥ पूर्वसंयोगनाशमात्रस्य तृतीयक्षणोपाधित्वे पूर्वसंयोगनाशोत्तरक्षणेऽपि तृतीयक्षणत्वापत्तिः। उत्तरसंयोगप्रागभावमात्रस्य तथात्वे च पूर्वसंयोगनाशात्प्राक्कालेऽपि क्षणत्वापत्तिः स्यात्, अतः उभयमुपात्तम् ॥ स्वजन्यविभागजन्यसंयोगनाशविशिष्टस्वजन्यसंयोगप्रागभाव इति यावत् ॥ नवीनमते तु स्वजन्यसंयोगानवच्छिन्नस्वजन्यविभागजन्यसंयोगनाश एवोपाधिस्तृतीयः ॥ चतुर्थक्षणोपाधिमाह—**उत्तरसंयोगेति**। उत्तरदेशवर्तिसंयोगविशिष्टा क्रिया एव चतुर्थक्षणोपाधि-

**नचोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यं, कर्मान्तरस्यापि सत्त्वादिति। महाप्रलये क्षणादिव्यवहारो यद्यस्ति तदाऽनायत्या ध्वंसेनोपपादनीय इति। दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति ॥**

रित्यर्थः। स्वजन्यसंयोगावच्छिन्नं स्वमेवोपाधिरिति भावः। स्वं क्रिया चतुर्थक्षणपर्यन्तस्थायित्वादुपाधिर्भवतीति ॥ उत्तरसंयोगमात्रस्योपाधित्वे उत्तरसंयोगातिरिक्तस्य प्रथमादिक्षणीयकालस्यापि चतुर्थक्षणत्वापत्तिः स्यात्। क्रियामात्रस्योपाधित्वे च क्षणचतुष्टयेऽपि चतुर्थक्षणत्वापत्तिः स्यात्, अत उभयोपादानम् ॥ **उपाधित्वमत्र**–परिचायकत्वमेव बोध्यमिति ॥ ननु प्रथमादिक्षणे तर्हि क्षणव्यवहारो न स्यात्, प्रथमक्षणीयोपाधेरनिरूपणादित्याशंकते–**न चोत्तरेति**। चतुर्थक्षणीयो य उत्तरदेशसंयोगः तदनन्तरं प्रथमे क्षणे क्षणव्यवहारो न स्यात्, तत्परिचायकोपाधेरभावादित्यर्थः ॥ समाधत्ते–**कर्मान्तरस्यापीति**। प्रथमक्षणे पुनः अन्या क्रिया उत्पद्यते, सा एव प्रथमक्षणोपाधिः, एवं प्राग्वत् चत्वारः क्षणाः कल्पनीया इत्याशयः ॥ ननूक्तक्षणलक्षणं महाप्रलयात्मकक्षणेऽव्याप्तं, तत्र क्रियादेरभावात्। न च तत्र क्षणत्वाऽभावे का क्षतिरिति वाच्यम्। तथा सति 'अध्वस्तक्षणयोगस्य क्षणयोगो जनिर्मता'–इति उत्पत्तिलक्षणप्रतिपादकाचार्यकारिकायाः मणिकारकृतस्य तदधिकरणक्षणाऽवृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वात्मकोत्पत्तिलक्षणार्थस्याऽव्याप्त्यापत्तेः तत्र महाप्रलयाधिकरणक्षणाप्रसिद्धेरत आह–**महाप्रलय** इति। तथा च महाप्रलये क्षणव्यवहारस्तु ध्वंसेन उपपादनीयः। स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंस एव उपाधिस्तद्विशिष्टसमय एव क्षणव्यवहारविषयः, स्वं–महाप्रलयत्वेनाभिमतः कालः, तत्र वृत्तियों द्रव्यस्य ध्वंसो गुणस्य ध्वंसः इत्यादितत्तद्ध्वंसास्तत्प्रतियोगिनस्तत्तद्भावाः प्रतियोगिनो यस्य एतादृशो यो यावतां भावानां ध्वंसः स उपाधिः, तद्विशिष्टसमयः क्षणव्यवहारविषय इति भावः, इदं मणिकारमतम् ॥ वस्तुतस्तु–महाप्रलये क्षणव्यवहारो नास्त्येव, उत्पत्तिलक्षणस्य क्षणाऽघटितस्यैव स्ववृत्तिध्वंसप्रतियोगिकालाऽवृत्तित्वविशिष्टस्ववृत्तित्वात्मकस्य तदुत्पत्तौ सम्भवादित्यभिप्रायेण **यद्यस्ति तदेत्युक्तम्** ॥ तथा च–यत्समयवृत्तिध्वंसप्रतियोगित्वव्यापकतावच्छेदकं यदधिकरणक्षणवृत्तित्वसामान्याभावत्वं तस्य तत्समयसम्बन्ध उत्पत्तिरिति फलितार्थः ॥ स्ववृत्तिध्वंसप्रतियोगित्वव्यापकतावच्छेदकाऽभावत्वावच्छिन्ननिरूपितप्रतियोगितावच्छेदकवृत्तित्वावच्छिन्ननिरूपकक्षणसामान्यवृत्तित्वसम्बन्धेन क्षणत्वत्वमुत्पत्तिरिति यावत् ॥ ननु क्षणव्यवहारसिद्धावपि दिनादिव्यवहारः कथं स्यादत आह–**दिनादीति**। तत्तत्क्षणकूटैः=तत्तत्क्षणसमुदायैः। आदिना–लव–निमेष-काष्ठा-कला-मुहूर्त-दिन-पक्ष-मासर्त्वयन-संवत्सर-युगादिव्यवहारो बोध्यः। स चेत्थम्–तत्र निमेषो नाम–नेत्रपुटयोर्द्रागेव संयोजनवियोजनम्, त्रिलव इति यावत्। त्रिनिमेषाः कक्षः। त्रिकक्षाः काष्ठा, त्रिंशत्काष्ठाः कला। त्रिंशत्कलाः मुहूर्तम्। 'त्रिंशन्मुहूर्तानि दिवसः। पञ्चदश दिवसाः पक्षः। द्वौ पक्षौ मासः। द्वौ मासौ ऋतुः। ऋतवस्त्रयोऽयनम्। अनये द्वे संवत्सरः। सत्ययुगस्य वर्षाणि–अष्टाविंशतिसहस्राधिकसप्तदशलक्षाणि। त्रेतायुगस्य वर्षाणि–षण्णवतिसहस्राधिक–द्वादशलक्षाणि। द्वापरयुगस्य वर्षाणि चतुःषष्टिसहस्राधिकाऽष्टलक्षाणि। कलियुगस्य वर्षाणि–द्वात्रिंशत्सहस्राधिकचतुर्लक्षाणि। मिलित्वा चतुर्युगानां वर्षाणि विंशतिसहस्राधिकत्रिचत्वारिंशल्लक्षाणि। तादृशचतुर्युगानामेकसप्ततिः–मन्वन्तरं भवति, एकमन्वन्तरस्य वर्षाणि–विंशतिसहस्राधिक–सप्तषष्टिलक्षोत्तर–त्रिंशत्कोट्यः। तादृशचतुर्दशमन्वन्तरकालः एककल्पः ब्रह्मणः एकदिवसः'। दिवसान्ते महर्जनतपःसत्यलोकान् विहाय स्वर्गादिपातालान्तानां दशलोकानां खण्डप्रलयो

दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥

दिशं निरूपयति—दूरान्तिकेति । दूरत्वमन्तिकत्वं च दैशिकं परत्वमपरत्वं

भवति सोयं 'नैमित्तिकप्रलय' उच्यते । नित्यप्रलयस्तु—ब्रह्मणो लवनिमेषादिषु प्रलीयतेऽकस्माद्वस्तुजातमिति स उक्तः । ब्रह्मणः शतवर्षाणां समाप्तौ अष्टावरणसहितब्रह्माण्डप्रलयो भवति सः खण्डप्रलयः 'प्राकृतिकप्रलय' उच्यते । सोऽयं महाविष्णोरेकदिवसात्मकः कालः । महाविष्णोः शतवर्षसमाप्तौ सर्वं भावकार्यं सृष्टिमयं प्रलीयते सोऽयम् आत्यन्तिकप्रलयः—महाप्रलय उच्यते। एतदधिकं **श्रीस्वामिनारायणवेदान्तसारे कालप्रकरणतोऽवगन्तव्यम् । तदयं संक्षेपः—**

"क्षणद्वयं लवः प्रोक्तो, निमेषस्तु लवत्रयम् । त्रयाणां तु निमेषाणां कक्ष इत्यभिधीयते ॥ १ ॥ पञ्चदशनिमेषाश्च काष्ठास्त्रिंशत्तु ताः कला । त्रिंशत्कला मुहूर्तः स्यात्, त्रिंशद्रात्र्यहनी च ते ॥ २ ॥ अहोरात्राः पञ्चदश, पक्षो मासस्तु तावुभौ । ऋतुर्मासद्वयं प्रोक्तमयनन्तु ऋतुत्रयम् ॥३॥ अयनद्वितयं वर्षो मानुषोऽयमुदाहृतः । एष दैवस्त्वहोरात्रस्तैः पक्षादि च पूर्ववत् ॥४॥ दैववर्षसहस्राणि द्वादशैव चतुर्युगम् । युगानां सप्ततिः सैका मन्वन्तरमिहोच्यते ॥ ५ ॥ कृताब्दसंख्या तस्यान्ते सन्धिः प्रोक्तो जलप्लवः । ससन्धयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश ॥ ६ ॥ चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते । रात्रिश्चैतावती तस्य ताभ्यां पक्षादिकल्पना ॥ ७ ॥ ब्रह्मणः शतवर्षाणि महाविष्णोरहः स्मृतम् । तस्य वर्षशतान्ते हि महाप्रलय उच्यते ॥ ८ ॥ इति ॥

'काललक्षणम्—विभुत्वे सति अतीतादिव्यवहाराऽसाधारणनिमित्तहेतुत्वम् । विभुत्वानुपादाने कण्ठताल्वाद्यभिघातेऽतिव्याप्तिः । निमित्तहेतुत्वानुपादाने शब्दात्मकाऽतीतादिव्यवहारस्य गगने सत्त्वादतिव्याप्तिः । ईश्वरवारणाय-असाधारणेति । प्राच्यादिव्यवहारमादाय दिग्वारणाय-अतीतादिव्यवहारेति । काले अतीतत्वं नाम-वर्तमानकालीनध्वंसीयप्रतियोगिताश्रयोपाध्यवच्छिन्नत्वम् । काले अनागतत्वं—वर्तमानप्रागभावप्रतियोगित्वम् । वर्तमानत्वं—शब्दप्रयोगाधिकरणत्वम् ॥ विभुत्वं च—सर्वमूर्तद्रव्यसंयोगित्वम् ॥ एवं—विभुत्वे सति दिगसमवेतपरत्वाऽपरत्वाऽसमवायिकारणत्वमपि लक्षणं बोध्यम् ॥ **अन्ये तु**—'अल्पतरसूर्यपरिस्पन्दविशिष्टपिण्डज्ञानम्,—विशेषणविशेष्यसम्बन्धघटकसापेक्षम्, साक्षात्सम्बन्धाऽभावे सति विशिष्टज्ञानत्वात,—लोहितः स्फटिक इतिविशिष्टज्ञानवदि'त्यनुमानेन सम्बन्धघटकतया कालं साधयन्तीति । इति कालग्रन्थः ॥

मूले—**दूरान्तिकादीति** । इदं दूरम् इदमन्तिकम्' इति बुद्धेरसाधारणं निमित्तं दिगेवेत्यर्थः । सा च एका—सजातीयप्रतियोगिकभेदशून्या। नित्या—ध्वंसाऽप्रतियोगिनी, प्रागभावाऽप्रतियोगिनी च। दिक्पदजन्यबोधविषयत्वं दिशो लक्षणम् । विभुत्वे सति प्राच्यादिव्यवहाराऽसाधारणनिमित्तहेतुत्वमित्यपि लक्षणम् । कण्ठताल्वाद्यभिघातवारणाय-विभुत्वे सतीति । विभुत्वं सर्वमूर्तद्रव्यसंयोगित्वम् । प्राच्यादीति—शब्दात्मकव्यवहारस्याऽऽकाशे सत्त्वात् तद्वारणाय—निमित्तहेतुत्वमिति । ईश्वरवारणाय-असाधारणेति । अतीतादिव्यवहारमादाय कालवारणाय प्राच्यादीति ॥ एवं—दिग्विशेषणतासम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वमपि दिशो लक्षणम् ॥ मुक्तावल्यां—**दिशं निरूपयतीति** । दिङ्निष्ठविषयतानिरूपकं यल्लक्षणस्वरूपप्रामाण्यादिप्रकारकं ज्ञानं तदनुकूलव्यापारानुकूलकृतिमान् ग्रन्थकार इति बोधः ॥ किं दूरत्वं किं चाऽत्राऽन्तिकत्वमित्याकांक्षायां दूरत्वादिपदार्थमाह—**दूरत्वमिति** । दूरत्वं दैशिकपरत्वम्, अन्तिकत्वं—दैशिकाऽपरत्वं बोध्यमित्यर्थः ॥ तद्बुद्धेरिति । यत्किमपि मूर्तद्रव्यमवधिं कृत्वा येषु केषुचिन्मूर्तेषु 'इदमस्मात्परम्'—

बोध्यम्। तद्बुद्धेरसाधारणं बीजं दिगेव। दैशिकपरत्वापरत्वयोरसमवायिकारण-संयोगाश्रयतया लाघवादेका दिक् सिध्यतीति भावः॥ ४६॥

उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक्।

ननु यद्येकैव दिक् तदा प्राचीप्रतीच्यादिव्यवहारः कथमुपपद्यत इत्यत आह–उपाधीति। यत्पुरुषस्य उदयगिरिसन्निहिता या दिक् सा तस्य प्राची। एवमुदयगिरि-

---

'इदमस्मादपर'मिति ज्ञानमुत्पद्यते, तादृशज्ञाने परत्वाऽपरत्वे निमित्तकारणे, संयुक्तसंयोगभूयस्त्वाश्रयत्वं परत्वम्, संयुक्तसंयोगाऽल्पीयस्त्वाश्रयत्वम् अपरत्वम्, परत्वापरत्वे प्रति च कालः असाधारणं निमित्तकारणम्। बीजं=प्रयोजकमित्यर्थः। तथा च–'इदं परम् इदमपरम्'–इति प्रत्ययस्य असाधारणं=कार्यत्वव्याप्यदूरत्वादिधर्मावच्छिन्नकार्यतानिरूपितकारणतावान् काल एव। दूरान्तिकादिहेतुरित्यस्यैव मूले वक्तुमुचितत्वेऽपि तद्'धी'पर्यन्तानुधावनं दैशिकपरत्वापरत्वयोः प्रमाणं दर्शयितुमित्यभिप्रायेण भावमाह–दैशिकपरत्वापरत्वयोरिति। काशीतो गयापेक्षया कालिकातायां परत्वं कालिकातापेक्षया च गयायामपरत्वम्, तस्य समवायिकारणं कालिकाता गया च, असमवायिकारणं दिग्गयासंयोगो दिक्कालिकातासंयोगश्च, तदाश्रय एकस्तु गया, कालीकाता वा, द्वितीयस्तु दिगेवेति। अनुमानन्तु दैशिकपरत्वापरत्वे,–असमवायिकारणसंयोगजन्ये,–भावत्वे सति कार्यत्वाद् घटवदिति। न च पृथिवीपिण्डसंयोगस्यैव तदसमवायिकारणत्वं कल्प्यतां तथाच न दिक्सिद्धिरिति वाच्यम्। पृथिव्यसंयुक्तपदार्थेऽपि दैशिकपरत्वादेरुत्पादात् तत्र व्यभिचारात्। ननु तथापि आकाशकालात्ममनोऽन्यतमेन सह गयादिसंयोगस्यैव तदसमवायिकारणत्वं कल्प्यतां किं दिक्संयोगस्य कल्पनयेत्यत आह–लाघवादिति। आकाशकालाभ्यां गयादिसंयोगस्य तथात्वे जीवात्मभिः प्रत्येकं विनिगमनाविरहात्, आत्ममनसोस्त्वनन्तत्वात् न तथात्वं, किन्तु लाघवादतिरिक्ता दिगेव तथात्वेन कल्प्यते इति भावः॥ एवमनुमानान्तरमपि–'इदं दूरमिदमन्तिकमि'तिप्रत्ययः,–पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यसम्बन्धप्रयुक्तः, परत्वापरत्वहेतुकत्वात्,–कालिकपरत्ववदिति। अत्र यद्द्रव्यस्य सम्बन्धप्रयुक्तः प्रत्ययः सा दिगिति॥ द्वयोर्दूरान्तिकद्रव्ययोः सम्बन्धस्तु-स्वसमवायिसंयुक्तसंयोगाख्यः, स्वं–बहुतरसंयोगाः, अल्पतरसंयोगाश्च, तत्समवायि मूर्तद्रव्यं गयादि, तत्संयुक्ता दिक्, तत्संयोगः कालिकातादाविति बोध्यम्॥ ४६॥

मूले–उपाधिभेदेति। दिक्–एकापि–सजातीयप्रतियोगिकभेदशून्यापि, उपाधिभेदात्=परिचायकभेदात्, प्राची, प्रतीची, अवाची, उदीची, इति व्यवहारं भजते इत्यर्थः॥ मुक्तावल्यां–शंकते–ननु यद्येकैवेति। तथा च 'दिग्' इत्येव व्यवहार उचितः, न तु प्राची प्रतीची, इत्यादिरूप इत्याशंकार्थः॥ समाधत्ते–उपाधिभेदादितीति। उपाधीनाह–यत्पुरुषस्येति। पुरुषपदं मूर्तमात्रोपलक्षकं, पञ्चम्यर्थे अवधित्वे षष्ठी, दिक्पदमपि मूर्तमात्रोपलक्षकम्, तथा च यन्मूर्ताद् उदयगिरिसन्निहितं यन्मूर्तं सा ततः प्राचीत्यर्थः। प्रागस्यामञ्चति सूर्य इति व्युत्पत्तेः। यथा काशीतो गया। तदपेक्षयोदयगिरिसन्निहितत्वं च–तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षया अल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वम्। एवं च 'काशीतः प्राच्या गया' इत्यत्र–'काशीनिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्याप्यसंख्यापर्याप्त्यधिकरणोदयगिरि संयुक्तसंयोगवन्मूर्तवृत्तिः गया'इत्यन्वयबोधः॥ एवमुदयेति। यस्मादुदयाचलविप्रकृष्टं यन्मूर्तं तत्तस्य प्रतीची,प्रातिकूल्येनाऽस्यामञ्चति सूर्य इति व्युत्पत्तेः, यथा कालिकातातो गया। 'कालिकातानिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्यापकसंख्यापर्याप्त्य-

व्यवहिता या दिक् सा प्रतीची। एवं यत्पुरुषस्य सुमेरुसन्निहिता या दिक् सोदीची। तद्व्यवहिता त्ववाची। "सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः" इति नियमात्।

आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥ ४७ ॥

आत्मानं निरूपयति—आत्मेन्द्रियेति। आत्मत्वजातिस्तु सुखदुःखादिसमवायि-

---

धिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्तवृत्तिः गया' इति बोधः॥ **एवं यत्पुरुषस्येति**॥ यस्यात्सुमेरु-सन्निकृष्टं यन्मूर्तं तत्तस्य उदीची, उदगस्यामञ्चति सूर्य इति व्युत्पत्तेः। यथा रामेश्वरक्षेत्रात् काशी। रामेश्वरनिष्ठसुमेरुसंयुक्तसंयोगपर्याप्तसंख्याव्यापकसंख्यापर्याप्त्यधिकरणसुमेरुसंयुक्तसंयोगवन्मूर्तवृत्तिः काशी' इति बोधः॥ **तद्व्यवहितेति**। यस्मात्सुमेरुविप्रकृष्टं यन्मूर्तं तत्तस्य अवाची, अवाग-स्यामञ्चति सूर्य इति व्युत्पत्तेः। यथा काश्या रामेश्वरक्षेत्रम्। काशीनिष्ठसुमेरुसंयुक्तसंयोगपर्याप्तसं-ख्याव्यापकसंख्यापर्याप्त्यधिकरणसुमेरुसंयुक्तसंयोगवन्मूर्तवृत्तिः रामेश्वरक्षेत्रमिति बोधः॥ एवं—यतः पतति सा दिग् ऊर्ध्वा, यत्र पतति सा अधः,। तथा च—मूर्तपदार्था उदयगिर्यादय उपाधयः, मूर्त-मात्रं तु दिगुपाधिरिति नियमात् कालोपाधिस्तु जन्यमात्रं क्रियामात्रं वा भवतीति॥ ननु मेरोरपेक्षा कथं कृतेत्यत आह—**सर्वेषामिति**। वर्षाणां नवखण्डानां मेरोः परितः स्थितानामपि मेरुः उत्तरस्थ एव भवति, सूर्यस्योदयाऽभिमुखं स्थितस्य जनस्य दक्षिणो भागः उत्तरदिशा मेरुसम्बन्धिनी, वामभागो दक्षिणा दिशा, सर्वखण्डस्थानां तथा भवतीति पृथ्वीमध्यस्थोऽपि मेरुः सर्वेषामुत्तरस्थो भवतीति बोध्यम्॥ दीधितिकारस्तु—दिक्कालौ नेश्वरादतिरिच्येते, मानाभावात्, तत्तत्कालोपाधिदिगुपाधिविशिष्टेश्वरादेव क्षणादि-प्राच्यादिव्यवहारसंभवादित्याहुः॥ इति दिग्ग्रन्थः॥

मूले—**आत्मेन्द्रियेति**। आत्मा=जीवात्मा, इन्द्रियाणां शरीरस्य चाऽधिष्ठाता भवति। अधिष्ठाता=जनकताख्यपरम्परासम्बन्धेनेन्द्रियाणां ज्ञानवत्तासम्पादकः, अवच्छेदकताख्यपरम्परा-सम्बन्धेन च शरीरस्य ज्ञानवत्तासम्पादकः। तथा चेन्द्रियाद्यधिष्ठातृत्वमात्मनो लक्षणम्, अनुमा-नन्तु 'इन्द्रियाणि शरीरं च, ज्ञात्रधिष्ठितम्,—अचेतनत्वे सति जनकत्वाऽवच्छेदकत्वान्यतरसम्बन्धेन ज्ञानवत्त्वात्, वास्यादिवत्' इति॥ एतदभिप्रायेण सामान्यव्याप्तिमाह—**करणं हीति**। यद्यत् करणं—तत्तत् सकर्तृकं यथा वृक्षद्वैधीभावस्य करणं कुठारः कर्त्रा चेतनेनाधिष्ठितो दृश्यते तथा ज्ञानकरण-मिन्द्रियं चेतनेन कर्त्राऽधिष्ठितं भवतीति स आत्मा सिद्धः। अनुमानं तु 'इन्द्रियाणि—कर्त्रधिष्ठितानि-अचेतनत्वे सति करणत्वात्, कुठारवदिति'॥ मुक्तावल्यां—**आत्मानमिति**। जीवात्मनिष्ठविषय-तानिरूपकं यल्लक्षणस्वरूपप्रामाण्यादिप्रकारकं ज्ञानं तदनुकूलव्यापारानुकूलकृतिमान् ग्रन्थकार इतिबोधः॥ ज्ञानस्य समवायेनाऽधिकरणत्वमात्मनो लक्षणम्। विषयतासम्बन्धेन विषयाणां ज्ञानवत्त्वात् तत्राऽतिव्याप्तिवारणाय—समवायेनेति। भूतलादिवारणाय—ज्ञानेति। ननु मुक्तिदशायाम् आत्ममनःसंयोगाऽभावेन ज्ञानाऽभावादात्मन्यव्याप्तिरिति चेन्न। ज्ञानसमानाधिकरणद्रव्यत्वव्याप्य-जातिमत्त्वस्य विवक्षणात्। **वस्तुतस्तु**—नित्यज्ञानवत्त्वस्य लक्षणत्वे जीवात्मन्यव्याप्तिः, अनित्य-ज्ञानवत्त्वस्य लक्षणत्वे परमात्मन्यव्याप्तिः, उभयविधज्ञानवत्त्वं त्वप्रसिद्धम्, अतः—स्वावच्छिन्ना-धिकरणत्वसम्बन्धेन ज्ञानत्ववत्त्वमेव लक्षणं बोध्यमिति॥ **ननु** आत्मसामान्यलक्षणोक्त्यनन्तर-मेवात्मस्वरूपप्रमाणयोर्वक्तव्यतया तदकथनेन न्यूनतेत्याशंकाम् आत्मशब्देन आत्मत्वविशिष्टस्यो-पस्थित्या आत्मत्वजातिमत्त्वम् आत्मनो लक्षणमित्युक्तप्रायम् आत्मशब्दस्यैव लक्षणकथनरूपत्वादिति परिहर्तुमादावात्मत्वजातं साधयति **मुक्तावल्याम्—आत्मत्वजातिस्तु सुखेति**। सुखदुःखेच्छा-

**कारणतावच्छेदकतया सिद्ध्यति । ईश्वरेऽपि सा जातिरस्त्येव । अदृष्टादिरूपकारणाभावान्न सुखदुःखाद्युत्पत्तिः। 'नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियम'इत्यस्याप्रयोजकत्वात् । परे त्वीश्वरे सा जातिर्नास्त्येव, प्रमाणाभावात् । न च दशमद्रव्यत्वा-**

---

द्वेषप्रयत्नधर्माधर्मभावनान्यतमसमवायिकारणता आत्मनिष्ठा तदवच्छेदकतया सिद्धा भवत्यात्मत्वजातिः । अनुमानं—'समवायसम्बन्धावच्छिन्नसुखत्वावच्छिन्नसुखनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नात्मनिष्ठकारणता, –किञ्चिद्धर्मावच्छिन्ना, –कारणतात्वात् –तन्तुनिष्ठकारणतावदिति, यः किञ्चिद्धर्मः स आत्मत्वम् । एवं दुःखादिकमादायाऽप्यनुमानान्यूह्यानि ॥ एवम्–'जीवेश्वरनिष्ठा या आत्मपदशक्यता सा,–किञ्चिद्धर्मावच्छिन्ना,–शक्यतात्वात, पटनिष्ठपटपदशक्यतावदिति, एतादृशशक्यतावच्छेदकमात्मत्वं सिद्ध्यति । अत एव– आत्मपदजन्यप्रतीतिविषयत्वमपि लक्षणं बोध्यम् ॥

**यद्यपि**–आत्मत्वे 'अहं सुखी'त्यादिप्रत्यक्षप्रमाणमपि संभवति, **तथापि** सकलात्मसाधारण्येन प्रत्यक्षाऽसंभवात् सकलात्मसु आत्मत्वसिद्ध्यर्थमनुमानमुक्तमिति बोध्यम् ॥ ननु–परमेश्वरे सुखाऽनुत्पादेन सुखसमवायिकारणत्वस्य तत्राऽभावात्परमेश्वरसाधारणी आत्मत्वजातिर्न सिद्ध्येदित्यत आह–**ईश्वर** इति । फलोपधायकतारूपकारणताया परमेश्वरेऽसत्त्वेऽपि स्वरूपयोग्यतारूपकारणतायाः सत्त्वेन तदवच्छेदकतया सिद्ध्यन्त्या आत्मत्वजातेस्तत्र सत्त्वादिति भावः ॥ एवम्–'आत्मा वा अरे द्रष्टव्य' ( बृहदा–२।४।५ ) इति श्रुतावपि परमेश्वरेऽपि आत्मपदव्यवहारादात्मपदशक्यतावच्छेदकतया सिद्ध्यन्त्यास्तस्यास्तत्र सत्त्वादिति बोध्यम् ॥ नन्वेतादृश्यात्मत्वस्य परमेश्वरसाधारण्ये तत्र कुतो न सुखाद्युत्पत्तिरत आह–**अदृष्टादीति** । अदृष्टं–धर्माधर्मौ, आदिना दुःखाद्यवच्छेदकशरीरपरिग्रहः । अदृष्टमेव सुखदुःखाद्युपभोगहेतुः, परमेश्वरे च तन्नास्तीति जातिसत्त्वेऽपि न सुखदुःखाद्युत्पत्तिरिति भावः ॥ ननु यथा वनस्थदण्डे घटस्वरूपयोग्यतासत्त्वे तेन कदाचिद्‌ घटः फलं भवेत् तद्वत्–'नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभाव'इतिनियमानुरोधेन परमेश्वरे स्वरूपयोग्यतात्मकसुखकारणतायाः सत्त्वे कदाचित्सुखोत्पादेन भवितव्यम्, तथा च स जीववत् सुखदुःखादिमान् स्यादित्यत आह–**नित्यस्येति** । नित्यस्य परमात्मनः स्वरूपयोग्यत्वे=स्वरूपयोग्यतात्मिका या सुखदुःखादिसमवायिकारणता तद्वत्त्वे सति तत्र परमेश्वरे फलस्य सुखदुःखादेः अवश्यंभावः=अवश्यमुत्पत्तिर्भाव्या'इति नियमार्थः ॥ तस्य **अप्रयोजकत्वादिति** । 'सकलकारणसमवधाने सति नित्यस्य स्वरूपयोग्यत्वे फलावश्यं भाव'–इत्येव नियमः, सकलकारणसमवधानाऽघटितस्य तादृशनियमस्य तु–जलपरमाणौ स्वरूपयोग्यतात्मककारणतासत्त्वेऽपि स्नेहानुत्पादेन तत्र व्यभिचारात् फलापत्त्यसम्पादकत्वादिति भावः । परमेश्वरे च सुखादिसकलकारणान्तर्गताऽदृष्टाऽभावान्न सुखाद्यापत्तिरिति हृदयम् ॥ ननु परमेश्वरे कुतोऽदृष्टं नोत्पद्यते इति चेन्न, मिथ्याज्ञाना(तत्त्वज्ञानान्यज्ञाना)त्मककारणाऽभावात् ॥ नन्वत्र सुखसमवायिकारणतावच्छेदकतया सिद्धो जातिविशेषो जीवत्वमेव, नात्मत्वम् अतिप्रसक्तधर्मत्वात्, अन्यथा द्रव्यत्वमपि तत्र जातिः सिद्ध्येदिति वदतां नवीनैकदेशिनां मतमाह–**परे त्विति** । परमेश्वरे सा=सुखादिकारणतावच्छेदकतया सिद्धा आत्मत्वजातिर्नास्त्येव, **प्रमाणाऽभावात्**=अतिप्रसक्तधर्मस्याऽवच्छेदकत्वे प्रमाणाऽभावादित्यर्थः ॥ आपत्तिं शंकते–**न चेति** । द्रव्यविभाजकवाक्ये आत्मपदेन जीवस्यैव ग्रहणे सति परमेश्वरस्य नवद्रव्येऽसमावेशाद्‌ दशमद्रव्यत्वापत्तिः, किञ्च 'आत्मा वा अरे'–इति श्रुतिघटकीभूतात्मत्वजातिपदवाच्यत्वानुपपत्तिरित्याशंकार्थः ॥ समाधत्ते–**ज्ञानवत्त्वेनेति** । आत्मपदं विहाय तत्स्थाने 'ज्ञानवद्'इति पदं निवेश्य ज्ञानवत्त्वेन आत्मनो विभागकरणान्नोक्तापत्तिरनुपपत्तिश्चेतिभावः । तथा च–जातिस्तु जीवत्वं सिद्ध्यति, विभागस्तु ज्ञानवत्त्वेन कार्यः

**पत्तिः, ज्ञानवत्त्वेन विभजनादित्याहुः। इन्द्रियादीति । इन्द्रियाणां शरीरस्य च परम्परया चैतन्यसम्पादकः। यद्यप्यात्मनि "अहं जाने, अहं सुखी" इत्यादिप्रत्यक्षविषयत्वमस्त्येव तथापि विप्रतिपन्नं प्रति प्रथमत एव 'शरीरादिभिन्नस्तत्तत्प्रतीतिगोचर' इति प्रतिपादयितुं न शक्यत इत्यतः प्रमाणान्तरं दर्शयति--करणमिति। वास्यादीनां छिदाकरणानां कर्तारमन्तरेण फलानुपधानं दृष्टम्। एवं चक्षुरादीनां ज्ञानकरणानामपि फलोपधानं कर्तारमन्तरेण नोपपद्यत इत्यतिरिक्तः कर्ता कल्प्यते४७।**

---

परमेश्वरस्यापि ज्ञानवत्तया नवमे द्रव्ये समावेश इति हृदयम्॥ श्रुतिघटकीभूतात्मशब्दस्य ज्ञानावच्छिन्ने लाक्षणिकत्वमित्यपि बोध्यम्॥ **आहुरित्यनेन**–'पूर्वोक्तानुमानेन परमेश्वरेऽप्यात्मत्वजातिस्वीकारे बाधकाऽभावे सति आत्मपदस्यात्मत्वाऽवच्छिन्ने शक्तिं परित्यज्य ज्ञानावच्छिन्ने लक्षणाकल्पनं जीवत्वात्मकन्यूनधर्मस्यावच्छेदकत्वकल्पनम् अश्रुतज्ञानवत्तया विभजनं चानुचितमित्यस्वरसः सूचितः लक्षणमुक्त्वा स्वरूपं वक्तुमुपक्रमते–**इन्द्रियाणामिति**। श्रोत्रत्वक्चक्षूरसनाघ्राणानामित्यर्थः॥ यथा जपाकुसुमं स्वसंयुक्तस्फटिकादौ स्वच्छत्वविशिष्टसामीप्यादिसम्बन्धेन लौहित्यवत्त्वं सम्पादयति तथेन्द्रियाणां ज्ञानं प्रति जनकत्वाज्जनकताख्यपरम्परासम्बन्धेन इन्द्रियाणां चैतन्यं=ज्ञानं सम्पादयत्यात्मा, शरीरस्य चाऽवच्छेदकतासम्बन्धेन ज्ञानं प्रति कारणत्वाद् अवच्छेदकताख्यपरम्परासम्बन्धेन शरीरस्य चैतन्यं=ज्ञानं सम्पादयत्यात्मा, इन्द्रियजन्यत्वेन शरीराऽवच्छेदेनाऽऽत्मनि ज्ञानं भवतीति सरलार्थः॥ एतेनाऽऽत्मन्यनुमानप्रमाणं दर्शितम्–'इन्द्रियाणि, ज्ञात्रधिष्ठितानि, अचेतनत्वे सति जनकतासम्बन्धेन ज्ञानवत्त्वात्। 'शरीरं ज्ञात्रधिष्ठितम्,–अचेतनत्वे सति अवच्छेदकतासम्बन्धेन ज्ञानवत्त्वादिति। स्वरूपमुक्त्वाऽऽत्मनि प्रमाणान्तरं दर्शयितुमाक्षिपति–**यद्यपीति**। स्वे जीवात्मनि 'सुखवानहम् दुःखवानहं ज्ञानवानह'मित्यादि स्वमानसप्रत्यक्षमेव प्रमाणं वर्तते, अत आत्मा प्रत्यक्षप्रमाणसिद्धः। तथापि **विप्रतिपन्नं**='न्यायमतविरुद्धप्रतिपत्ति(निर्णय)मन्तं–'शरीरमेवात्मा, इन्द्रियाण्येवात्मा, मन एवात्मा, इति वदन्तं विभिन्नं चार्वाकं प्रति, तथा क्षणिकविज्ञानमेवात्मेति वदन्तं बौद्धं प्रति, तथा नित्यविज्ञानमेवात्मेति वदन्तम् अद्वैतवेदान्तिनं प्रति, **प्रथमत एव**=आत्मनः स्वरूपनिर्णयात्मके प्रथमप्रस्तावे–एव, शरीरेन्द्रियमनःक्षणिकविज्ञाननित्यविज्ञानभिन्नः, **तत्तत्प्रतीतिगोचरः**='सुखवानहं दुःखवानहं ज्ञानवानहम्'–इत्यादिप्रतीतेर्विषयः–सुखादिनिष्ठप्रकारतानिरूपिताहन्त्वावच्छिन्नविशेष्यतावान्, चेतनात्मैव भवतीति न तादृशप्रत्यक्षप्रतीतिबलेन **प्रतिपादयितुं शक्यते**, सुखवानहमि'त्यादिप्रतीतेः सर्वमते संभवेन अहन्त्वावच्छिन्नविशेष्यतायाश्चार्वाकमते शरीरे नास्तिकमते इन्द्रिये मनसि च, बौद्धमते क्षणिकविज्ञाने, वेदान्तिमते नित्यविज्ञाने च अभिमतत्वात्। इत्यतोऽनुमानं प्रमाणं दर्शयति–**करणमितीति**। वास्यादीनामिति दृष्टान्तनिर्देशः। छिदा=छेदनं=द्वैधीभावो वृक्षादेः, तत्करणानां वास्यकुठारादीनाम् अचेतनानां चेतनात्मानं कर्तारमन्तरेण छेदनात्मकफलाऽभावो दृश्यते, तथा ज्ञानं प्रति करणानां जडानां चक्षुरादीन्द्रियाणामपि फलस्य ज्ञानस्य उपधानम् उत्पादकत्वं चेतनात्मानं कर्तारमन्तरेण विना न संभवति, तस्मादचेतनेभ्योऽतिरिक्तश्चेतनात्मा कर्ता कल्प्यते=अनुमीयते इत्यर्थः। अनुमानं तु–'इन्द्रियं,–सकर्तृकम्,–फलोपधानात्मककारणत्वघटितकरणत्वात्, छेदनफलोपधायकवास्यादिवदि'ति। आत्मनि व्यभिचारवारणाय–घटितकारणत्वादिति। फलानुपधायके वास्यादौ स्वरूपयोग्यतात्मककारणत्वघटितहेतोः सत्त्वाद् व्यभिचारवारणाय–फलोपधानात्मकारणत्वेति। 'यत्करणं तत्सकर्तृकम्'–इति व्याप्तिस्तु–'यद्यद् अचेतनं यत् करोति यदुपधायकं भवति तत्तदुपधाने चेतनाधिष्ठितं भवती'ति॥ ४७॥

शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।

ननु शरीरस्यैव कर्तृत्वमस्त्वत आह—शरीरस्येति । ननु चैतन्यं ज्ञानादिकमेव, मुक्तात्मनां त्वन्मत इव मृतशरीराणामपि तदभावे का क्षतिः, प्राणाभावेन ज्ञानाभावस्य सिद्धेरिति चेन्न । शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः, शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात् । न च पूर्वशरीरो-

---

मूले शरीरस्येति । चैतन्यं ज्ञानं समवायेन शरीरस्य गुण इति चार्वाकमतम् , समवायेन ज्ञानं प्रति शरीरं कारणमिति तन्मते कार्यकारणभावः, तन्न, मृतेषु शरीरेषु शवेषु, व्यभिचारतः= शरीरात्मककारणसत्त्वेऽपि कार्यस्य ज्ञानस्याऽसत्त्वात् तादृशकार्यकारणभावेऽन्वयव्यभिचारादित्यर्थः ॥ ननु 'स्थूलोऽहं कृशोऽहं करोमी'त्यादिप्रतीतेः-स्थूलत्वस्य कृशत्वस्य क्रियानुकूलकृतेश्च शरीरे प्रत्यक्षसिद्धत्वादहंपदविषयता अपि शरीरे एव युक्ता, तथा च कृतिकारणमिच्छा इच्छाकारणं च ज्ञानमपि शरीरम् एवेति 'शरीरमेवात्मे'ति चार्वाकमतं स्फुटयति—मुक्तावल्यां—ननु चैतन्यमिति । त्वन्मते=नैयायिकमते, तदभावे=ज्ञानाभावे । अयमर्थः-समवायेन ज्ञानं प्रति शरीरंकारण'मित्यत्र यथा मृतशरीरे व्यभिचारस्तथा न्यायमतेऽपि 'समवायेन ज्ञानं प्रति आत्मा(चेतनः)कारण'मित्यत्रापि मुक्तात्मनि ज्ञानाऽभावादन्वयव्यभिचारः । तद्वारणाय यदि–(त्वन्मते-)नैयायिकेन–'समवायेन ज्ञानं प्रति शरीरविशिष्टमनःसंयोगावच्छिन्नात्मनः कारणत्व'मुच्यते, तर्हि मया चार्वाकेणापि– 'समवायेन ज्ञानं प्रति प्राणविशिष्टशरीरं कारण'मिति निवेशे व्यभिचारवारणं क्रियते । तस्मात् शरीरमेवात्मेति ॥ अथवा–चैतन्यं=चेतनत्वम्–आत्मत्वमिति यावत् , तत्र ज्ञानादिकमेव ज्ञानेच्छाद्यधिकरणत्वमेव, नतु ज्ञानवत्त्वं येन मृतशरीरे व्यभिचारः स्यात्, तथा च–त्वन्मते–नैयायिकमते मुक्तात्मनि ज्ञानाऽसत्त्वेऽपि ज्ञानाधिकरणत्वस्य सत्त्वेन यथा न 'आत्मनि इतरभेदसाधकस्य ज्ञानाधिकरणत्वात्मकहेतोः स्वरूपाऽसिद्धिस्तथा मम चार्वाकस्य मते मृतशरीराणामपि ज्ञानाऽभावेऽपि ज्ञानाधिकरणत्वस्य सत्त्वेन, न काचित् स्वरूपासिद्ध्याद्यात्मकदोषप्रयुक्ता क्षतिर्भवतीति ग्रन्थार्थः ॥ ननु तर्हि मृतशरीरे ज्ञानानुत्पत्तिः कथमित्यत आह–प्राणाभावेनेति । ज्ञानं प्रति कारणकूटान्तर्गतस्य प्राणस्य तत्राऽभावात् प्राणाभावप्रयुक्तज्ञानाऽभावसंभवादिति भावः ॥ नैयायिको दूषणान्तरैश्चार्वाकमतं परिहरति–शरीरस्येति । शरीरस्य चैतन्ये=चेतनत्वे आत्मत्वे इति यावत् । यदि शरीरमेवात्मा स्यात् तर्हि बाल्ये विलोकितम्=अनुभूतं यद् यत्कन्दुकक्रीडादिकं तस्य स्थाविरे=वार्धक्ये यौवने च स्मरणं न स्यात् ॥ तत्र हेतुमाह–शरीराणामेति । शरीरस्याऽवयवा ये मांसपिण्डादयस्तेषाम् उपचयः=वृद्धिः अपचयः=ह्रासः, ताभ्याम् उत्पतिप्रतियोगित्वे सति विनाशप्रतियोगित्वात् पूर्वं शरीरं नश्यति नूतनं चोत्पद्यते, 'तदेवेदं 'शरीरमि'ति प्रत्यभिज्ञानं तु स्वरूपाकृत्यादिसाजात्याद्भवतीति । तथा च क्रीडनकाद्यनुभवाश्रयस्य बाल्यशरीरस्य नष्टत्वेन आश्रयनाशादनुभवजन्यसंस्काराणामपि विनष्टत्वात्, स्मरणं नैवोपपद्यते । भवति तु स्मरणम्, अतः शरीरातिरिक्तानुभवजन्यसंस्काराश्रय आत्मा सिद्ध्यतीति भावः ॥ चार्वाकः स्वमते स्मरणमुपपादयति–न चेति । पूर्वं पूर्वं शरीरं यद्बाल्यादि, तत्रोत्पन्ना ये संस्कारास्तैरेव संस्कारैरुत्तरोत्तरोत्पन्ने द्वितीयादियौवनादिशरीरे नूतनाः संस्कारा उत्पादयिष्यन्ते, तथा च परम्परया वृद्धशरीरेऽपि संस्काराणामुत्पत्तिसत्त्वात् तत्र स्मरणं स्यादेव, अतो न स्मरणानुपपत्तिरूपं दूषणं, तस्माच्छरीरमेवात्मेति भावः ॥ स्वजन्यसंस्कारप्रयोज्यसंस्कारवत्त्वसम्बन्धेन स्वं पूर्वशरीरस्थोऽनु-

त्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उत्पद्यत इति वाच्यम्, अनन्तसंस्कारकल्पने गौरवात् । एवं शरीरस्य चैतन्ये बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यात्, इष्टसाधनताज्ञानस्य तद्धेतुत्वात्तदानीमिष्टसाधनतास्मारकाभावात् । मन्मते तु जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः । नच जन्मान्तरानुभूतमन्यदपि स्मर्यतामिति वाच्यम्, उद्बोधकाभावात् । अत्र त्वनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते । इत्थं च संसारस्यानादितया आत्मनोऽनादित्वसिद्धावनादिभावस्य नाशासंभवान्नित्यत्वं सिद्ध्यतीति बोध्यम् ।

---

भवः कारणं वृद्धशरीरे तिष्ठति तत्र स्मरणं कार्यमुत्पद्येतेति हृदयम् ॥ नैयायिकस्तद्दूषयति-अनन्तेति । अवयवानां वृद्धिह्रासाभ्यां प्रतिक्षणं शरीरं परिणमति नश्यति नवं चोत्पद्यते, तत्र कोटिसंख्याकेषु शरीरेषूत्पद्यमानानामनन्तानां संस्काराणां कल्पनं महद्गौरवं चार्वाकमते स्यात् । मम नैयायिकस्य मते त्वात्मैक एव बाल्ययौवनवार्धक्येऽनुस्यूतस्तत्र पूर्वानुभवजन्यः स्थायी संस्कार एव स्मरणं जनयतीति 'समवायेन स्मरणं प्रति समवायेन संस्कारद्वाराऽनुभवस्य कारणतया नोक्तगौरवम्, किन्तु महल्लाघवमित्यत आत्मा देहातिरिक्त एवेतिभावः ॥ ननु शरीरस्यात्मत्वेऽनन्तसंस्कारकल्पनं फलमुखगौरवं न दोषायेत्यतो दूषणान्तरमाह-एवमिति । शरीरं यथात्मा तदोत्पन्नस्य बालस्य प्रथमे स्तन्यस्य दुग्धस्य पाने प्रवृत्तिर्न स्यात् ॥ प्रवृत्त्यभावे हेतुमाह-इष्टेति । 'इदं दुग्धपानं मदिष्टस्य जीवनस्य साधन'मितिस्मरणात्मकज्ञानस्य तद्धेतुत्वात्=इच्छाद्वारा प्रवृत्तिं प्रति कारणत्वात् नहि प्रथमात् स्तन्यपानात् पूर्वं स्तन्यपानानुभवो बालशरीरेण कृतः, तदानीम्=दुग्धपानप्रवृत्त्यव्यवहितपूर्वसमये, 'इदं मदिष्टसाधन'मितिस्मरणजनकस्य सहकारिकारणस्य शरीरात्मकात्मनि अभावात् । तथा च कस्तावदनुभवः संस्कारमुत्पाद्य इष्टसाधनताज्ञानात्मकं स्मरणमुत्पादयेत्, प्रवृत्तिं च कुर्यात् ! नैव कुर्यात् । अतः पूर्वजन्मनि शरीरे अनुभूतस्य दुग्धपानस्य दीर्घसंस्कारवानात्मा स्मर्ता शरीरभिन्नः प्रवर्तते इति भावः ॥ नैयायिको बाल्ये दुग्धपाने प्रवृत्तिमुपपादयति-मन्मते इति । पूर्वं जन्मान्तरे कृतं यत् स्तन्यपानं तज्जन्यो यः 'स्तन्यपानं मदिष्टसाधनमि'त्यनुभवस्तेन आहितेन संस्कारेण, तदानीं-बाल्ये स्तन्यपानप्रवृत्त्यव्यवहितपूर्वसमये, 'स्तन्यपानं-मदिष्टसाधनमि'ति स्तन्यपाननिष्ठस्य मदिष्टसाधनत्वस्य स्मरणं जन्यते तस्माच्चेच्छाद्वारा बालः प्रवर्तते, स्मृत्यनुभवसाधारणेष्टसाधनताज्ञानत्वेन प्रवृत्तौ हेतुत्वात् । अतः शरीरातिरिक्त आत्मेति ॥ चार्वाको नैयायिकमते आपत्तिं शंकते-न च जन्मेति । पूर्वजन्मन्यनुभूतमन्यत् युद्धादिकं कामसंभोगादिकमपि च बालेन अवश्यं स्मर्यताम्, तत्संस्कारसत्त्वादित्यर्थः । नैयायिकः समाधत्ते-उद्बोधकाऽभावादिति । संस्कारसत्त्वेऽपि ते संस्कारा बाल्ये अनुद्बुद्धा वर्तन्ते युद्धादिकामसंभोगादिसंस्काराणामुद्बोधकं तु यौवनशरीरादि, तस्य बाल्येऽभावात्, स्मृतिं प्रत्युद्बुद्धसंस्कारस्यैव कारणत्वात्, न तदानीं कामभोगादिस्मरणापत्तिरिति भावः ॥ ननु इष्टसाधनतास्मरणजनकसंस्काराणां किं तावदुद्बोधकमित्याकांक्षायामाह-अत्रेति । इष्टसाधनतास्मारकसंस्कारे तु, अनायत्या=अगतिकगतिन्यायेन, जीवनाऽन्यथाऽनुपपत्त्येति यावत्, जीवनाऽदृष्टम्=जीवनं-शरीरे प्राणस्थितिः, तत्प्रयोजकम् आत्मनि यद् धर्माऽधर्मात्मकमदृष्टम्, तदेव इष्टसाधनतास्मारकसंस्कारोद्बोधकं कल्प्यतेऽनुमीयते 'बालात्मा-स्तन्यपानेष्टसाधनतास्मारकसंस्कारोद्बोधकाऽदृष्टवान्, स्तन्यपानप्रवृत्तिमत्त्वात्, मद्वदिति ॥ नैयायिक आत्मनो नित्यत्वं साधयति-इत्थं चेति । शरीरातिरिक्तात्मसिद्धौ चेत्यर्थः । संसारस्य=जननमरणान्यतरस्य अनादितयेति । अनादित्वमत्र-स्वाश्रयाऽनधिकरणकालकभिन्न-

तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥४८॥

ननु चक्षुरादीनामेव ज्ञानादिकं प्रति करणत्वं कर्तृत्वं चास्तु, विरोधे साधका-

---

धर्मवत्त्वम्, स्वपदेन जननमरणान्यतरत्वरूपसंसारत्वस्य न ग्रहणं भवति, कालमात्रस्य जननमरणा-न्यतराश्रयत्वात्, किन्तु स्वं–घटादिनिष्ठतद्व्यक्तित्वादिकं, तादृशस्वाश्रयाऽनधिकरणकालकं यद्यत्स्वं तत्तद्व्यक्तित्वादि तत्तद्व्यक्तिभेदकूटवत्त्वस्य जननमरणान्यतरत्वे सत्त्वात् तद्वत्त्वमादाय संसारस्याऽना-दित्वं समन्वितम्। शरीरस्य जननमरणयोरनादित्वे तत्कारणीभूताऽदृष्टस्याऽप्यनादित्वं वक्तव्यम्, तच्च–स्वाश्रयप्रागभावाधिकरणस्वाश्रयानधिकरणकालकभिन्नधर्मवत्त्वरूपम्, स्वपदेन न अदृष्टत्वग्रह-णम्, कालस्य सर्वदा अदृष्टाधिकरणत्वात्, किन्तु घटगततद्व्यक्तित्वं, तदाश्रयतद्घटप्रागभावाधिकरणः अथ च तद्व्यक्तिस्वाश्रयतद्घटानधिकरणो यः कालः तादृशकालकं यद्यत् स्वं तद्व्यक्तित्वादि, तद्भिन्न-धर्मः अदृष्टत्वं तद्वत्त्वमिति समन्वयः। अदृष्टस्याऽनादित्वसिद्धौ आत्मनोऽप्यनादित्वं वक्तव्यम्, तच्च प्रागभावाऽप्रतियोगित्वरूपं बोध्यम्, न तु पूर्वोक्तं पारिभाषिकमिति। अनादिभावपदार्थस्य च आत्मनो नाशाऽसंभवात् नित्यत्वं–ध्वंसाऽप्रतियोगित्वं सिद्ध्यति। प्रयोगस्तु 'आत्मा,–नित्यः,–अनादित्वे सति भावत्वादि'ति॥ संस्कारस्य अनादित्वं तु–स्वाश्रयप्रागभावाधिकरणकालकभिन्नधर्मवत्त्वरूपं बोध्यम्। स्वं–संस्कारनिष्ठं तद्व्यक्तित्वं तदाश्रयतत्संस्कारप्रागभावाधिकरणकालकं यद्यत् स्वं–संस्कारगततद्व्यक्तित्वं तद्भिन्नधर्मो भावनात्वं तद्वत्त्वमिति समन्वयः॥

तदिदं चार्वाकमतम्–'यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः। भस्मीभूतस्य देहस्य पुनराग मनं कुतः॥ अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्। बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः॥ अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः। चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते॥ किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्। अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः॥ देहः स्थौल्यादि-योगाच्च स एवात्मा न चापरः। मम देहोऽयमित्युक्तिः सम्भवेदौपचारिकी॥ अङ्गनालिंगनाजन्यं सुखमेव पुमर्थता। कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते॥ लोकसिद्धो भवेद् राजा परेशो नाऽपरः स्मृतः। देहस्य नाशो मुक्तिस्तु न ज्ञानान्मुक्तिरिष्यते॥ अग्निरुष्णो जलं शीतं शीतस्पर्श-स्तथानिलः। केनेदं चित्रितं तस्मात् स्वभावात् तद्व्यवस्थितिः॥ न स्वर्गो नाऽपवर्गो वा नैवात्मा पारलौकिकः। नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः॥ पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमि-ष्यति। स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते॥ मृतानामपि जन्तूनां श्राद्धं चेत् तृप्तिकारणम्। गच्छतामिह जन्तूनां वृथा पाथेयकल्पनम्॥ स्वर्गस्थिता यदि तृप्तिं गच्छेयुस्तत्र दानतः। प्रासाद-स्योपरिस्थानामिह कस्मान्न दीयते॥ यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्। भस्मी-भूतस्य देहस्य पुनरागमनं कुतः॥ यदि गच्छेत् परं लोकं देहादेष विनिर्गतः। कस्माद्भूयो न चायाति बन्धुस्नेहसमाकुलः॥ त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः। जर्फरीतुर्फरीत्यादि पण्डितानां वचः स्मृतम्॥ इत्यादि॥

मूले–**तथात्वमिति**। ननु चक्षुरादीन्द्रियाणां **तथात्वं**=चेतनत्वं मन्तव्यम्, इन्द्रियाण्ये-वात्मेति भावः, इति **चेत्**!, तदपि न, इन्द्रियाणाम् अनित्यत्वात् यौवने कथंचिच्चक्षुरादेः **उपघाते**-नाशे सति, बाल्यचक्षुषाऽनुभूतस्य विषयस्य अनुभवितुर्नाशात् वार्धक्ये **स्मरणं कथं**–केन कारणेन स्यात्, न स्यादिति भावः। तस्मान्नेन्द्रियाण्यात्मेति॥ इन्द्रियाणां कर्तृत्ववादिचार्वाकैकदेशिमताऽ-भिप्रायकत्वेन 'तथात्वं चे'दिति मूलमवतारयति–**ननु चक्षुरादीनामेवेति**। चक्षुःश्रोत्रत्वक्रसना-

भावादत आह—तथात्वमिति। चैतन्यमित्यर्थः, उपघाते-नाशे सति, अर्थाच्चक्षुरादीनामेव॥ कथं स्मृतिरिति। पूर्वं चक्षुषा साक्षात्कृतानां चक्षुषोऽभावे स्मरणं न स्यात्, अनुभवितुरभावात्, अन्यदृष्टस्यान्येन स्मरणासंभवात्, अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावादिति भावः॥ ४८॥

**मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्।**

ननु चक्षुरादीनां चैतन्यं मास्तु, मनसस्तु नित्यस्य चैतन्यं स्यादत आह—मनो-

---

घ्राणानां समवायेन ज्ञानेच्छाकृतिभावनादिकं प्रति **करणत्वं**—व्यापारवत्त्वे सति कारणत्वम् भवतु, भवति हि चक्षुरादौ चक्षुःसंयोगादिरूपव्यापारवति चाक्षुषज्ञानाऽव्यवहितपूर्वकालवृत्तित्वमिति अत एव च **कर्तृत्वमपि**—कृत्याश्रयत्वमपि भवतु। अनुमानं यथा—'चक्षुरादीनि,—कर्तृणि, करणत्वात्। दृष्टान्तस्तु व्यतिरेको ग्राह्यः। ननु व्यापारवत्कारणत्वस्य हेतोः व्याप्तिज्ञानेऽपि सत्त्वात् तत्र कर्तृत्वस्य साध्यस्याऽभावाद् व्यभिचार इति चेन्न, प्रत्यक्षकरणत्वादिति हेतोः कृतत्वात्। ननु कथं तदेवैकं करणं कर्तृ च, करणत्वकर्तृत्वयोः विरुद्धस्वभावत्वादित्यत आह—**विरोधे**—इति। असामानाधिकरण्ये इत्यर्थः। विभिन्नाधिकरणवृत्तित्वे, इति यावत्। साधकाऽभावात्='करणकर्तृत्वे विरुद्धे' इति साधकप्रत्ययाऽभावात्॥ 'न चैतन्य'मित्यत्र विशेष्यतयोपस्थितस्याऽभावस्यैव तच्छब्देन परामर्शसंभवः, तस्य च प्रकृताऽनुपयुक्तत्वात् **मुक्तावल्यां तथात्वमि**त्यस्यार्थमाह—**चैतन्यमिति**। उपघातपदस्य केवलावयवनाशे एव प्रयोगादाह—**नाश**—इति॥ उपघातपदस्य ससम्बन्धिकतया उपघातः केषामित्याकांक्षायाः सत्त्वादाह—**अर्थादिति**। तथा चैकमेवेन्द्रियाणामितिपदं काकाक्षिन्यायेन आकांक्षावशादुभयत्र सम्बध्यते, तेन—'इन्द्रियाणां तथात्वं चेत्! इन्द्रियाणामुपघाते सति कथं स्मृति'रिति मूलवाक्यार्थो बोध्य इति भावः॥ '**कथं स्मृति**'रितिमूलेन इन्द्रियनाशे सति वार्धक्ये स्मृत्यभाव आपादितः, तत्र हेतुं पूरयन्नर्थमाह—**पूर्वमिति**। चक्षुर्नाशात्पूर्वम्—बाल्याद्यवस्थायामित्यर्थः। चक्षुरिन्द्रियेण प्रत्यक्षीकृतानां घटादिविषयाणां वार्धक्ये चक्षुर्विगमे सति चक्षूरूपात्मनः अनुभवितुरभावात् स्मरणं कुत्र स्यात्! न स्यादेवेति भावः। ननु इन्द्रियान्तरेण स्मृतिर्भविष्यति इत्यत आह—**अन्यदृष्टस्येति**। चक्षुषा दृष्टस्याऽनुभूतस्य विषयस्य तद्भिन्नेन श्रोत्रादिना मनसा वा स्मरणाऽसंभवादित्यर्थः॥ तत्र हेतुमाह—**अनुभवेति**। अनुभवस्य स्मरणस्य च समवायघटितेन सामानाधिकरण्येन=एकाधिकरणवृत्तित्वेन कार्यकारणभावनियमात्, समवायेन तद्विषयकस्मरणं प्रति समवायेन अनुभवस्य कारणत्वं, तच्चैकस्मिन्नधिकरणे भवति न व्यधिकरणेऽत इन्द्रियातिरिक्तः सार्वदिक आत्मा इति भावः।

किञ्च—इन्द्रियाणां प्रत्येकं चेतनत्वं? सम्भूय वा? प्रत्येकपक्षे सर्वेषां स्वातन्त्र्ये कदाचिदनैकमत्ये विरुद्धक्रियाकर्तृकैस्तैः शरीरं विदीर्येत। सम्भूय पक्षे तु नष्टेऽपि श्रोत्रे चक्षुषा शब्दस्मरणादि स्यादिति। एवम्—'अहं नेत्रेण पश्यामी'त्यादौ नेत्रात्मकोपकरणभिन्नोऽहंविषय आत्मेति॥४८॥

मूले-**मनोऽपि नेति**। मनोऽपि न तथा=न चेतनम्। तदा=मनसश्चेतनत्वे सति तु मनसोऽणुत्वात् तत्र प्रत्यक्षप्रयोजकमहत्परिमाणाऽभावात् मनोरूपात्मनो ये गुणा ज्ञानादयस्तेषाम् अनध्यक्षं=अप्रत्यक्षं भवेदित्यापत्तिः स्यादित्यर्थः॥

मन आत्मवादी शंकते-मुक्तावल्यां-**ननु चक्षुरादीनामिति**। उपघाते सति स्मरणानुपपत्ति'रूपदूषणसत्त्वाच्चक्षुरादीन्द्रियाणामात्मत्वं मास्तु, किन्तु नित्यस्य=ध्वंसाप्रतियोगिनो मनसस्तु

**पीति। न तथा=न चेतनम्। ज्ञानादीति। मनसोऽणुत्वात्प्रत्यक्षे च महत्त्वस्य हेतुत्वात् मनसि ज्ञानसुखादिसत्त्वे तत्प्रत्यक्षानुपपत्तिरित्यर्थः। यथा च मनसोऽणुत्वं तथाऽग्रे वक्ष्यते। नन्वस्तु क्षणिकविज्ञानमेवात्मा, तस्य स्वतःप्रकाशरूपत्वाच्चेतनत्वम्, ज्ञानसु-**

---

चैतन्यम्–आत्मत्वं स्यादेव, अत्र 'नाशे सति स्मरणानुपपत्ति'रूपदोषाऽभावादिति भावः॥ तथा च मन एव ज्ञानादेःकरणं कर्तृ च, 'अनुमानं तु–'मनः,–कर्तृ,–मानसत्वावच्छिन्नकरणत्वादिति। 'न तथे'त्यत्र तथेति–पदेन पूर्वोक्तचैतन्यस्य परामर्शे सति असंगतिः स्यात्, मनसोऽचैतन्यात्, अतो **'न तथा'**–इत्यस्यार्थमाह–**न चेतनमिति।** 'ज्ञानाद्यनध्यक्ष'मित्यस्यार्थे हेतुं पूरयन्नाह–**मनसोऽणुत्वादिति।** मनसोऽणुपरिमाणवत्त्वात्, प्रत्यक्षं प्रति च महत्परिमाणस्य कारणत्वात्, मनसि च महत्परिमाणाभावात् मनस एवाऽप्रत्यक्षत्वात् मनआत्मवादिमते मनोरूपात्मनि समवेतानां ज्ञानसुखादिगुणानां प्रत्यक्षमेव न स्यादित्यापत्तिरित्यर्थः॥ **किञ्च**–'मनसाऽहं जानामी'त्यादौ मनसो ज्ञानकरणत्वं सिद्ध्यति न तु ज्ञानकर्तृत्वं, कर्तृत्वं हि स्वातन्त्र्यनियतम्, स्वातन्त्र्यं च स्वच्छन्दानुरोधेन साध्यसिद्ध्यनुगुणोपकरणसम्पादनसामर्थ्यम्। करणत्वं तु पारतन्त्र्यनियतं, पारतन्त्र्यं च पराधिष्ठानाधीनं व्यापारत्वमिति। तस्मान्न मन आत्मेति॥ **ननु** मनसोऽणुत्वे ज्ञानाद्यनध्यक्षात्मकं दूषणं भवेत्, तस्य तु अणुत्वे एव न प्रमाणमित्यत आह–**यथा चेति।** यया युक्त्या मनसोऽणुपरिमाणवत्त्वं सिद्ध्यति, तथा=तया युक्त्या तत्प्रमाणं तु **अग्रे**='अयौगपद्याज् ज्ञानानामि'ति (८५) कारिकया वक्ष्यते इत्यर्थः। **तद्यथा**–'ज्ञानानां चाक्षुषरासनादीनाम् एककालोत्पत्तिर्नास्तीत्यनुभवसिद्धम्, तत्र नानेन्द्रियाणां विषयसन्निधाने सत्यपि यस्य मनसः सम्बन्धादेकेनेन्द्रियेण ज्ञानं जन्यते यस्य मनसोऽसम्बन्धाच्चाऽन्यैरिन्द्रियैर्ज्ञानं नोत्पाद्यते, तत् मनसो विभुत्वे न संभवेत्, अतो मनोऽणु बोध्यमिति' इति मनआत्मवादखण्डनम्॥

**योगाचारबौद्धाः**–ज्ञानत्वस्य प्रमेयत्वव्यापकतया सर्वस्यापि विज्ञानरूपत्वं, तच्च विज्ञानं क्षणिकम्, अतः–क्षणिकविज्ञानमेवात्मेति वदन्ति, क्षणिकत्वं तन्मते द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वम्। तद्विज्ञानं द्विविधम्–प्रवृत्तिविज्ञानम् आलयविज्ञानं च, प्रवृत्तिविज्ञानं 'अयं घट' इति सविषयकं विज्ञानम्, तच्च जाग्रति स्वप्नेऽर्धसुषुप्तौ च वर्तते। आलयविज्ञानं–निर्विषयकं विज्ञानं, तच्च गाढसुषुप्तौ वर्तते, अतो न मरणप्रसंगः सुषुप्तस्य, पूर्वपूर्वविज्ञानेन उत्तरोत्तरविज्ञानधाराप्रवाहोऽखण्डो वहतीति, सार्वदिकः क्षणिकविज्ञानात्मक आत्मा–इत्यभिप्रायेण बौद्धाः शंकन्ते–**नन्वस्त्विति।** एवकारः अप्यर्थः। क्षणिकविज्ञानम्=प्रवृत्त्यालयेत्युभयविधविज्ञानमपि आत्मा भवतु इत्यर्थः। यद्यप्येतन्मते 'विज्ञानं सर्व'मित्येव वक्तुमुचितम्, तथापि आत्मनिरूपणस्य प्रस्तुतत्वात् 'विज्ञानमात्मे'त्युक्तिः॥ ननु विज्ञानाऽपरपर्याया बुद्धेः कथं चेतनत्वम्?, जडायास्तस्या आत्मत्वाऽयोगात्, किं च ज्ञानस्य ज्ञानाऽनाधारत्वात् ज्ञानाधिकरणात्मकचैतन्यानुपपत्तिरित्यत आह–**तस्येति।** तस्य क्षणिकविज्ञानस्य, स्वतःप्रकाश्यरूपत्वात्=स्वपरव्यवहारे स्वभिन्नप्रकाशाऽनपेक्षत्वात् स्वाऽभिन्नज्ञानविषयत्वादिति यावत्, अतो न जडत्वं किन्तु चेतनत्वमेवेत्यर्थः॥ नन्वात्मनः क्षणिकविज्ञानरूपत्वे सुखादिसमवायिकारणत्वाऽनुपपत्तिः, ज्ञानोत्पत्तिक्षणे सुखाद्युत्पत्तौ विज्ञानस्य पूर्ववृत्तित्वाऽभावेन कारणत्वस्यैवाऽनुपपत्तेः, विज्ञानोत्पत्तिद्वितीयक्षणे च सुखाद्युत्पत्तिस्वीकारे सुखाद्युत्पत्तिकाले विज्ञानस्यैव नाशात् समवायिकारणत्वाऽनुपपत्तेः, समवायिकारणस्य कार्यकालवृत्तितया हेतुत्वादित्यत आह–**ज्ञानसुखादिकमिति।** ज्ञानादय आत्मनो गुणास्तु तस्य क्षणिकविज्ञानस्यैवाऽऽकारविशेषाः, 'अहं जानाम्यहं सुखी'त्याद्यनेकाकारं विज्ञानमेव ज्ञानसुखाद्याकारेण भासते, निर्विशेष-

**खादिकं तु तस्यैवाकारविशेषः, तस्यापि भावत्वादेव क्षणिकत्वं, पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञाने हेतुत्वात् सुषुप्त्यवस्थायामप्यालयविज्ञानधारा निराबाधैव, मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चेद्, न, तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः, यत्किंचिद्विषयकत्वे विनिगमनाविरहः, सुषुप्तावपि विषयावभासप्रसङ्गाच्च, ज्ञानस्य सविषयत्वात्। तदानीं निराकारा चित्सन्ततिरनुवर्तत इति चेन्न, तस्याः स्वप्रकाश-**

---

स्यापि( अभिन्नस्यापि ) विज्ञानस्य, संवृत्त्या (संवृणोत्यात्मनो रूपमिति संवृत्तिः—अविद्या तया)विशिष्टा आकारा भासन्ते इत्यर्थः ॥ आकारविशेषत्वं च—वस्तुतस्तदभिन्नत्वे सत्यपि तद्भिन्नत्वेन भासमानत्वम्। एवं च ज्ञानसुखादीनामात्माऽभिन्नत्वेन कार्यकारणभावाऽप्रसक्त्या न पूर्वोक्तदोष इति भावः ॥ ननु ज्ञानसुखादीनामात्माऽभिन्नत्वे 'अहं सुखी'त्यादिसर्वानुभवसिद्धसुखाद्यधिकरणत्वावगाहिप्रत्ययो न स्याद् अभेदे आधाराधेयभावासंभवादिति चेन्न। आधाराधेययोरैक्येऽपि आधारतावच्छेदकाधेयतावच्छेदकयोर्भेदस्याधाराधेयभावनियामकत्वात्, तादात्म्यस्य च तादात्म्यत्वेन अधिकरणत्वाऽनियामकत्वेऽपि स्वरूपत्वेन अधिकरणत्वनियामकत्वात् ॥ अथ ज्ञानादीनामात्मनः आकारविशेषरूपत्वेन बौद्धमते आत्मनो विकारत्वप्राप्त्या अनित्यत्वापत्तिरित्यत्रेष्टापत्तिमाह—**तस्यापीति**। 'यत् सत् तत् क्षणिक'मिति व्याप्तेः भावमात्रस्यापि क्षणिकत्वात् क्षणिकविज्ञानस्य भावपदार्थत्वात् क्षणिकत्वं=द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वम्, अनित्यत्वं च स्वीक्रियते एवेत्यर्थः। **नन्वेवं** सति सुषुप्तौ आत्मा न सिद्ध्येत्, पूर्वोत्पन्नविज्ञानस्य क्षणिकत्वेन नाशात्, विज्ञानान्तरस्योत्पादकाऽभावाचेत्यत आह—**पूर्वपूर्वेति**। बौद्धमते कार्यकारणयोरेकाधिकरणवृत्तित्वाऽनियमात् 'कारणत्वं—कार्यपूर्ववृत्तित्वमात्र'मिति सिद्धान्तात् पूर्वपूर्वविज्ञानस्य अव्यवहितोत्तरविज्ञानं प्रति हेतुत्वात्—प्रवृत्तिविज्ञानस्य आलयविज्ञानं प्रति हेतुत्वात् गाढसुषुप्तिप्रारम्भे प्रवृत्तिविज्ञानेनाऽऽलयविज्ञानजननात् 'अह'मित्यालयविज्ञानधारा निराबाधा संचरति, अतः सुषुप्तौ आत्मा अस्त्येवेति भावः ॥ ननु विज्ञानस्य क्षणिकत्वे तदाश्रितसंस्काराणामपि क्षणिकत्वात् कालान्तरे स्मरणानुपपत्तिरित्यत आह—**मृगमदेति**। मृगस्य मदः कस्तूरी, तस्य वासना सुगन्धः, तेन वासितं—सुगन्धितं वसनं पटः, येन पटेन सह योगं लभते तस्मिन्नपि पटे कस्तूरिकासुगन्धः संचरति, एवं तत्—पटात् संयुक्ते पटान्तरे, पटान्तराच्च संयुक्तेऽन्यपटे संचरति, तद्वत् पूर्वपूर्वविज्ञानजनिताः संस्काराः उत्तरोत्तरे विज्ञाने संक्रमिता भवन्ति, अतः कालान्तरे स्मरणं निराबाधमिति भावः ॥ तदिदं बौद्धमतं नैयायिकः खण्डयति—**नेति**। विज्ञानस्य जगद्विषयकत्वं यत्किंचिद्विषयकत्वं वेति विकल्प्य आद्ये दूषणमाह—**तस्येति**। यज्ज्ञानं तत्सविषयकमितिव्याप्तेः, क्षणिकविज्ञानस्य जगद्विषयकत्वे=यावद्वस्तुविषयकत्वे, सर्वज्ञत्वापत्तिः=जीवात्मनां सार्वज्ञ्यापत्तिरित्यर्थः ॥ द्वितीयपक्षे दूषणमाह—**यत्किंचिदिति**। क्षणिकविज्ञानस्य वार्तमानिकयत्किंचिद्विषयकत्वे तु, विनिगमनाविरहः=एकस्मिन्नेव ज्ञाने विशेषणविशेष्यादीनां बहूनां स्फुरणात् घटविषयकमेवेदं विज्ञानं न तु पटविषयकमि'त्येकपक्षसाधकयुक्त्यात्मकविनिगमनाया अभावाद् यत्किंचिदेकविषयकमेव विज्ञानमित्यनिर्णयापत्तेः सर्वदा भ्रान्तत्वप्रसंगापत्तिः ॥ ननु—यद्विषयकत्वं यदा यत्रात्मनि अनुभवसिद्धं तत्र तद्विषयकत्वमेव विज्ञेयं, तथा च नोक्ताऽनिर्णयापत्तिरतो दूषणान्तरमाह—**सुषुप्तावपीति**। **ज्ञानस्य सविषयत्वात्**='यज् ज्ञानं तत् सविषयं',विषयं विना विषयिणः स्वरूपाऽनुपपत्तेः, तथा च बौद्धमते सुषुप्तावपि ज्ञाने विषयाऽवभास आपद्येतेति भावः ॥ बौद्धः स्वमतं दर्शयति—**तदानी-**

त्वे प्रमाणाभावात्, अन्यथा घटादीनामपि ज्ञानत्वापत्तिः। न चेष्टापत्तिर्विज्ञानव्यतिरिक्तवस्तुनोऽभावादिति वाच्यं, घटादेरनुभूयमानस्यापलपितुमशक्यत्वात्। आकारविशेष एवायं विज्ञानस्येति चेत्, किमयमाकारोऽतिरिच्यते विज्ञानात्!, तर्हि समायातं विज्ञानव्यतिरिक्तेन। नातिरिच्यते चेत्!,तर्हि समूहालम्बने नीलाकारोऽपि पीताकारः स्यात्, स्वरूपतो विज्ञानस्याविशेषात्, अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेन्न, नीलत्वादीनां विरुद्धानामेकस्मिन्नसमावेशात्। इतरथा विरोधावधार-

मिति। सुषुप्तिकाले निराकारा विषयाकाररहिता निर्विषयिणी, चित्सन्ततिः=क्षणिकज्ञानधारा, अनुवर्तते-जायते, अतो न विषयावभासप्रसंगइति शंकार्थः॥ नैयायिकस्तद्दूषयति-तस्या इति। तस्याः=निर्विषयकचित्सन्ततेः, स्वप्रकाशत्वे=विज्ञानत्वे, प्रमाणाऽभावात्=अप्रामाणिकत्वात्, ज्ञानत्वस्य विषयिताव्याप्यत्वादिति भावः॥ अन्यथा=प्रमाणाऽभावेऽपि निर्विषयस्यापि च ज्ञानत्वस्वीकारे, घटादीनामपि निर्विषयाणां ज्ञानत्वापत्तिः स्यादिति। यथा ज्ञानस्य विषयो घटः ज्ञानं तु विषयि, तद्वत् घटस्य न कश्चिद्विषयो, येन घटो विषयी भवेत्, अतो निर्विषयो घटो भवतीति। ज्ञानेच्छाकृतिभावनाद्वेषाः पञ्च सविषयाः पदार्थाः, अन्ये तु निर्विषया इति बोध्यम्॥ ननु बौद्धमते सर्वमपि प्रमेयं विज्ञानं तथा च घटादीनामपि ज्ञानत्वापत्तिरिष्टैवेति-शंकते-न च इष्टापत्तिरिति। न च-वाच्यमित्यन्वयः। विज्ञानव्यतिरिक्तं किमपि वस्तु एव नास्ति घटादिकं सर्वमपि प्रमेयं विज्ञानाऽभिन्नम् अतः इष्टा आपत्तिरिति भावः॥ नैयायिकस्तत्समाधानाय दूषयति-घटादेरिति। अनुभूयमानस्य=विज्ञानभिन्नत्वेन विषयीक्रियमाणस्य, घटपटादिविषयजातस्य, अपलपितुं=बाधितुम्-अन्यथयितुमिति यावत्, अशक्यत्वादित्यर्थः॥ बौद्धः स्वमतं दर्शयन् शंकते-आकारेति। अयं=घटादिपदार्थः, क्षणिकविज्ञानस्य आकारविशेषः=स्वरूपविशेषः एवास्ति, यथा पटस्तन्तूनां स्वरूपविशेषो नतु तन्तुसत्तातिरिक्तसत्तावान्, तथा च घटादेर्नापलापो न च विज्ञानातिरिक्तत्वमित्यर्थः॥ नैयायिको विकल्प्य दूषयति-किमयमिति। अयं=घटाद्याकारो विज्ञानाद् भिद्यते न वा?, यदि अतिरिच्यते! तर्हि=विज्ञानभिन्नाकारस्वीकारे हि। विज्ञानव्यतिरिक्तेन=विज्ञानव्यतिरिक्तघटस्वीकारेण 'विज्ञानव्यतिरिक्तो घट'इतियन्न्यायमतं तत्र तव मतं समायातम्-मिलितम्, तथा च 'सर्वं विज्ञान'मिति बौद्धस्य प्रतिज्ञाहानिः॥ द्वितीयपक्षे दूषणमाह-नातिरिच्यते चेत्तर्हीति। नानाविशेष्यतानिरूपितनानाप्रकारताशालिज्ञानं समूहालम्बनं यथा 'इमे नीलपीते'इत्येकं ज्ञानम्, विज्ञानाद्विषयाणां भेदाऽभावान्नीलाकाराऽभेदवतो विज्ञानाद् अभिन्नः पीताकारोपि नीलाकारादभिन्न एव प्रतीयेत, तेन नीलेऽपि पीतप्रत्ययो यथार्थ आपद्येत, अर्थात्-'इमे नीलपीते'-इत्यस्य स्थाने 'इमे नीले' इत्येव, अथवा 'इमे पीते'इत्येव प्रत्ययो भवेत्॥ अत्र हेतुमाह-स्वरूपतो विज्ञानस्येति। विज्ञानस्वरूपस्याऽविशेषात्=अभिन्नत्वादित्यर्थः, एकत्वादिति यावत्॥ तदभिन्नाऽभिन्नस्य तदभिन्नतेतिनियमादिति हृदयम्॥ ननु नीलाकारः पीताकाराद् अभिन्न एव, परन्तु नीलेऽतद्व्यावृत्तिरूपः (अनीलव्यावृत्तिरूपः) नीलत्वधर्मः, पीते चाऽपीतव्यावृत्तिरूपो धर्मः स्वीक्रियते, भिन्नाभ्यां तादृशनीलत्वपीतत्वाभ्यामेव नीलपीतयोर्भेदप्रतीतिः स्यादित्याशंकते-अपोहरूप इति। अपोह्यते व्यावर्त्यत इत्यपोहः-अतद्व्यावृत्तिरूपः, नीलादौ नीलत्वादिरूपो नीलात्मकविज्ञानस्य धर्मः पीतान्नीलं भेदेन बोधयेदित्याशयः॥ नैयायिकः तत्खण्डयति-नीलत्वादीनामिति। एकस्मिन् विज्ञानात्मके धर्मिणि विरुद्धानाम्-असमानाधिकरणानाम्,-परस्पराऽभावव्याप्तानामिति यावत्, नीलत्वादिधर्माणामसमावेशात्=अवृत्तेः। तथा च नीलत्वपीतत्वाधिकरणेऽपि विभिन्ने पदार्थेऽङ्गीकार्ये,

**णस्यैव दुरुपपादत्वात् । न वा वासनासंक्रमः संभवति, मातृपुत्रयोरपि वासनासंक्रमप्रसङ्गात् । न चोपादानोपादेयभावो नियामक इति वाच्यम् । वासनायाः संक्रमासंभवात् । उत्तरस्मिन्नुत्पत्तिरेव संक्रम इति चेन्न, तदुत्पादकाभावात् । चितामेवोत्पादकत्वे संस्कारानन्त्यप्रसङ्गः । क्षणिकविज्ञानेष्वतिशयविशेषः कल्प्यत**

---

तेन च न्यायमतसिद्धिरिति भावः ॥ **इतरथेति** । विरुद्धानामपि सामानाधिकरण्ये सति त्वित्यर्थः । विरोधावधारणस्यैव='नीलत्वपीतत्वे विरुद्धे'-इत्याकारकाऽभ्रान्तानुभवस्यैव, दुरुपपादत्वात्= प्रमात्वेन उपपादितुमशक्यत्वादित्यर्थः ॥ तथा च नीलत्वादिधर्मवन्तः पदार्था विज्ञानाद्भिन्नाः, ज्ञानं च सविषयं, तच्च सुषुप्तौ न संभवतीत्यत आत्मा विज्ञानातिरिक्तः सिद्ध्यतीति भावः ॥ **ननु**-समूहालम्बने न नीलत्वं न वा पीतत्वमङ्गीक्रियते किन्तु चित्रत्वं, चित्त्वं वा, तथा च नोक्तदोष इत्यतः पूर्वोक्तवासनासंक्रममेव मुख्यतया दूषयति-**न वेति** । यत् मृगमददृष्टान्तेन पूर्वपूर्वविज्ञानसंस्काराणामुत्तरोत्तरविज्ञाने संक्रमणमुक्तं तदपि नैव संभवतीत्यर्थः ॥ वासनासंक्रमे आपत्तिमाह-**मातृपुत्रयोरिति** । अपिना पूर्वोत्तरालयविज्ञानयोः परिग्रहः, पूर्वालयविज्ञानस्योत्तरालयविज्ञानहेतुतया पूर्वालयविज्ञाननिष्ठसंस्कार उत्तरालयविज्ञाने यथा संक्रमेत तथा मातृरूपविज्ञानस्यापि पुत्रविज्ञानहेतुतया मातृनिष्ठसंस्कारस्य पुत्रे संक्रमापत्तिः । न चेष्टापत्तिः, पुत्रस्य मात्रनुभूतपदार्थस्मरणापत्तेरिति भावः ॥ ननु-उपादानेनाऽनुभूतम् उपादेयेन कार्येण स्मर्यते, मातृपुत्रयोर्नोपादानोपादेयभावः, पुत्रं प्रति मातुर्निमित्तकारणत्वात्, तथा च न मातृदृष्टं पुत्रः स्मर्तुमर्हति-इत्याशयवान् बौद्धः शंकते-**न चोपादान पादेयभाव** इति । बौद्धमते उपादानत्वं न समवायिकारणत्वं, विभिन्नकालीनक्षणिकविज्ञानव्यक्त्योः समवायिकारणत्वाऽसंभवात्, किन्तु-असहकृतं कारणमुपादानम्, उत्तरव्यक्तौ पूर्वव्यक्तिमात्रस्यैव तैः कारणत्वाऽङ्गीकारात् , माता च पुत्रं प्रति न असहकृतं कारणं, शुक्रादेरपि पुत्रकारणत्वात् । **वस्तुतस्तु**-कार्याऽव्यवहितप्राग्वृत्तित्वे सति कार्यसजातीयत्वमुपादानत्वम्, कार्यसजातीयत्वं च कार्यतावच्छेदकावच्छिन्नत्वम्, तन्मते आत्मत्वावच्छिन्नं प्रति आत्मत्वेनैवोपादानतया उत्तरालयविज्ञानं प्रति पूर्वालयविज्ञानस्योपादानत्वं भवति, न तु पुत्रं प्रति मातुः, पुत्रत्वमातृत्वयोर्विभिन्नधर्मत्वात् । तथा च तादृशोपादानोपादेयभाव एव कारणगुणानां कार्यगुणवृत्तित्वनियामक इति न मातृसंस्काराणां पुत्रे संक्रमणापत्तिरिति भावः ॥ नैयायिकस्तत्समाधत्ते-**वासनाया** इति । वासनाया भावनात्मकसंस्कारात्मिकाया गुणत्वाद् गुणे च गुणक्रिययोरभावाद् उत्तरत्र गमनात्मकसंक्रमणक्रियाया असंभवादित्यर्थः ॥ बौद्धः शंकते-**उत्तरस्मिन्निति** । संक्रमो न क्रिया, किन्तूत्पत्तिः, तथा च उत्तरविज्ञानोत्पत्तिकाले एव पूर्वालयविज्ञानस्थितसंस्काराद् उत्तरालयविज्ञाने संस्कारोऽप्युत्पद्यते, तयोश्चोत्तरालयविज्ञानसंस्कारयोरेककालीनयोरप्याधाराधेयभावस्य तन्मते स्वीकारात्, अतो न संस्कारसंक्रमाऽनुपपत्तिरित्याशयः ॥ नैयायिकः समाधत्ते-**तदुत्पादकेति** । संस्कारस्य संस्काराऽहेतुत्वाद् उत्तरालयविज्ञाने उत्पद्यमानसंस्काराणाम् अन्यस्योत्पादकस्य तत्राऽभावाद् उत्तरस्मिन्नुत्पत्तिः खपुष्पायत इति भावः ॥ ननु संस्कारं प्रति ज्ञानत्वेन हेतुत्वात् चितामेव=ज्ञानानामेवोत्पादकत्वं संभवतीति बौद्धमतं खण्डयति-**चितामेवोत्पादकत्वे संस्काराऽनन्त्यप्रसंग** इति । ज्ञानानाम् प्रतिक्षणभिन्नानाम् आनन्त्यात् तज्जन्यसंस्काराऽऽनन्त्यापत्तिरित्यर्थः ॥ बौद्धः शंकते-**क्षणिकेति** । यादृशज्ञानव्यक्त्युत्तरं स्मरणमनुभवसिद्धं तज्ज्ञाननिष्ठसंस्कारानुकूला काचित् शक्तिः ( अतिशयविशेषः ) पूर्वज्ञानव्यक्तौ स्वीकरणीया, न तु सर्वज्ञानव्यक्तौ, तथा च सा शक्तिरेव संस्कारोत्पादिका भवति, अतो न संस्काराऽऽनन्त्य-

इति चेन्न, मानाभावात्कल्पनागौरवाच्च। एतेन क्षणिकशरीरेष्वेव चैतन्यमिति प्रत्युक्तं, गौरवादतिशये मानाभावाच्च। बीजादावपि सहकारिसमवधानासमवधा-

मित्याशयः॥ नैयायिकस्तत्खण्डयति-**मानाभावादिति**। कार्यानुकूलशक्तौ प्रमाणाऽभावादित्यर्थः॥ ननु शक्तौ ज्ञानव्यक्तिभेदेनाऽनन्तसंस्काराऽकल्पनमेव लाघवं प्रमाणमित्यतो दूषणान्तरमाह-**कल्पनागौरवाच्चेति**। शक्तेरपि भावत्वेन क्षणिकतयाऽनन्तशक्तितत्प्रागभावादिकल्पनागौरवस्य तुल्यत्वेन लाघवाऽभावादिति भावः॥ तथाच क्षणिकविज्ञानस्य न कथंचिदप्यात्मत्वमिति ध्येयम्॥

**ननु** क्षणिकशरीरमेवास्तु आत्मा-इति बौद्धैकदेशिमतमपि खण्डयति-**एतेनेति**। वक्ष्यमाणदूषणेनेत्यर्थः॥ 'क्षणिकशरीरस्यैवाऽऽत्मत्वमिति मतं प्रत्युक्तं=खण्डितम्, गौरवात्=कालान्तरे स्मरणनिर्वाहार्थं क्षणिकाऽनन्तशरीरव्यक्तिभेदेनाऽनन्तसंस्कारकल्पनाप्रयुक्तगौरवादित्यर्थः। तदपेक्षयाऽतिरिक्त आत्मा कल्पनीय इति भावः॥ ननु यादृशयादृशशरीरेषु स्मरणमुपलभ्यते तत्तच्छरीराऽव्यवहितपूर्ववृत्तिशरीरेष्वेव संस्कारस्वीकारेण तत्तदव्यवहितपूर्ववृत्तिशरीरेष्वेव संस्कारजनकतावच्छेदकशक्तिस्वीकारान्न शरीरव्यक्तिभेदेनाऽनन्तसंस्कारकल्पनागौरवमत आह-**अतिशये मानाभावाच्चेति**। शक्तेरपि भावत्वेन क्षणिकतयाऽनन्तशक्तितत्प्रागभावादिकल्पनागौरवस्य तुल्यतया तादृशशक्तौ मानाभावादिति भावः॥ ननु क्षेत्रस्थबीजादङ्कुरोत्पत्तिर्भवति न तु कुसूलस्थबीजात्, अतोऽङ्कुरत्वावच्छिन्नं प्रति कुर्वद्रूपत्वेन बीजस्य हेतुत्वमङ्गीक्रियते, कुर्वत्=फलोन्मुखं रूपं यस्य तस्य भाव इति व्युत्पत्त्या कुर्वद्रूपत्वम् अङ्कुरजनकतावच्छेदकतया सिद्धो जातिविशेषः, स च फलोपधायके क्षेत्रस्थबीजे एव वर्तते न तु कुसूलस्थबीजे, तस्य फलोपधायकक्षणिकसमर्थबीजमात्रवृत्तित्वे सति बीजत्वव्याप्यत्वात्, एवं क्षणिकविज्ञाने कुर्वद्रूपत्वेनैवोत्तरविज्ञाने संस्कारोत्पादकत्वं वक्तव्यं, एवं क्षणिकशरीरेष्वपि कुर्वद्रूपत्वेनैवोत्तरोत्तरशरीरनिष्ठसंस्कारोत्पादकत्वं वक्तव्यम्, तथाच नाऽनन्तशक्तिकल्पनागौरवादिकं दूषणमित्यतआह-**बीजादावपीति**। बीजे मूले चांऽकुरस्य सहकारिकारणं यद्धरणिसलिलसंयोगरूपं तस्य समवधानेन=सान्निध्येन अङ्कुरोत्पत्तिर्भवति, तस्याऽसान्निध्ये सति त्वंकुरोत्पत्तिर्न भवति, तथा च-'अङ्कुरं प्रति धरणिसलिलसंयोगसहकृतबीजं कारणमि'ति कार्यकारणभावेनैव कुसूलादिबीजादङ्कुरोत्पत्तिवारणोपपत्तेः 'अङ्कुरं प्रति कुर्वद्रूपत्वेन बीजस्य कारणत्वकल्पनम् अन्यथासिद्धम्। तथैव च 'समवायेन संस्कारं प्रत्यपि अनुभवत्वेन कारणत्वे सिद्धे कुर्वद्रूपत्वेन क्षणिकविज्ञानस्य क्षणिकशरीरस्य वा कारणत्वकल्पनमन्यथासिद्धमिति। तथा च वासनासंक्रमाऽनुपपत्तिरूपो दोषस्तदवस्थ एवेत्ययुक्तो विज्ञानवादिसिद्धान्त इति भावः॥

"सुगतो बुद्धो भगवानुपदेष्टा एक एव, तस्य चत्वारः शिष्याः माध्यमिक-योगाचर-सौत्रान्तिक-वैभाषिकाख्याः, चतुर्णामपि 'यत्सत् तत्क्षणिक'मित्यत्रैकमत्यम्-'यत्सत् तत्क्षणिकं, यथा जलधरः, सन्तश्च भावा अमी। सत्ताशक्तिरिहार्थकर्मणि मितः सिद्धेपु सिद्धा न सा॥ नाऽप्येकैव विधाऽन्यथा परकृतेनापि क्रियादिर्भवेत्। द्वेधाऽपि क्षणभङ्गसंगतिरतः साध्ये च विश्राम्यती'ति॥ **माध्यमिकः**-सर्वशून्यतावादी 'परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ। कुणपः कामिनी भक्ष्य इति तिस्रो विकल्पना' इति। तस्मात्-सर्वं क्षणिकं क्षणिकं, सर्वं दुःखं दुःखं, सर्वं स्वलक्षणं स्वलक्षणं, सर्वं शून्यं शून्यम्, इति भावनाचतुष्टयवशान्निखिलवासनानिवृत्तौ परनिर्वाणं शून्यरूपं सेत्स्यतीति। **योगाचारस्तु**-विज्ञानमवश्यं स्वीकर्तव्यम्, तच्च-'तत्स्यादालयविज्ञानं यद् भवेदहमास्पदम्।

**नाभ्यामेवोपपत्तेः कुर्वद्रूपत्वाकल्पनात् ॥ अस्तु तर्हि क्षणिकविज्ञाने गौरवान्नित्य-विज्ञानमेवात्मा, 'अविनाशी वाऽरेऽयमात्मा' (बृ० ५ ब्रा-१४ कं०) 'सत्यं ज्ञानमनन्तं**

---

तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेदि'ति, ततश्च भावनाचतुष्टयबलात् शुद्धक्षणिकविज्ञानोदय एव मोक्ष इति वदति । **सौत्रान्तिकस्तु**–बाह्यं घटादिकमस्त्येव, तत्सर्वं न प्रत्यक्षं, किन्त्वनुमेयम्, तथा च ज्ञानाकारानुमेयक्षणिकबाह्यार्थ एवात्मा, दुःखं दुःखायतनं दुःखसाधनं च निरोधयित्वा विमलज्ञानोदयो मुक्तिरिति स्वीकरोति । **वैभाषिकस्तु**–पदार्थौ द्विधा ग्राह्योऽध्यवसेयश्च । तत्र–'कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम् । विकल्पो वस्तुनिर्भासादसंवादादुपप्लव'इति ॥ तत्पदार्थतत्त्वज्ञानोत्तरं विमलज्ञानोदयो मोक्षइत्यंगीकरोति । 'अर्थानुपार्ज्य बहुशो द्वादशायतनानि वै । परितः पूजनीयानि किमन्यैरिह पूजितैः ॥ ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च । मनो बुद्धिरिति प्रोक्तं द्वादशायतनं बुधैः ॥ बौद्धानां सुगतो देवो विश्वं च क्षणभङ्गुरम् । आर्यसत्त्वाख्यया तत्त्वचतुष्टयमिदं क्रमात् ॥ दुःखमायतनं चैव ततः समुदयो मतः । मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामतः ॥ दुःखं संसारिणः स्कन्धाः, ते च पञ्च प्रकीर्तिताः । विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥ पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् । धर्मायतनमेतानि द्वादशायतनानि तु ॥ रागादीनां गणोऽयं स्यात् समुदेति नृणां हृदि । आत्माऽऽत्मीयस्वभावाख्यः स स्यात् समुदयः पुनः ॥ क्षणिकाः सर्वसंस्कारा इति या वासना स्थिरा । स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते ॥ प्रत्यक्षमनुमानं च प्रमाणद्वितयं तथा । चतुःप्रास्थानिका बौद्धाः ख्याता वैभाषिकादयः ॥ अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते । सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः ॥ आकारसहिता बुद्धिर्योगाचारस्य सम्मता । केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः ॥ रागादिज्ञानसन्तानवासनोच्छेदसंभवा । चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता ॥ कृत्तिः कमण्डलुर्मौण्ड्यं चीरं पूर्वाह्णभोजनम् । सङ्घो रक्ताम्बरत्वं च शिश्रिये बौद्धभिक्षुभिः' ॥ इति संक्षेपः । एषां स्फुटं विशेषस्तु–सांख्यकारिकायाः 'श्रीकृष्णवल्लभाचार्यस्वामिनारायणभाष्या'दवलोकनीयः ॥ इति क्षणिकविज्ञानात्मवादनिरासः ॥

अथ नित्यविज्ञानात्मवादिनोऽद्वैतवेदान्तिनो मतमुपन्यस्यति–**अस्तु तर्हीति** । आत्मनः क्षणिकविज्ञानस्वरूपत्वपक्षे गौरवात्=अनन्तसंसारशक्त्यादिकल्पनागौरवादिदोषसद्भावात्, आत्मनः क्षणिकविज्ञानरूपत्वाऽसंभवात्, नित्यं=प्रागभावध्वंसाऽप्रतियोगि, त्रिकालाऽबाध्यमिति यावत, यद्विज्ञानं–स्वप्रकाशचैतन्यं श्रुतिप्रसिद्धं तदेवात्माऽस्त्वित्यर्थः ॥ सच्चिदानन्दस्वरूपं ब्रह्मैवात्मा नाऽन्य इति भावः ॥ अत्रार्थे–बृहदारण्यकश्रुतिं प्रमाणयति–**अविनाशीति** । याज्ञवल्क्यः स्वस्त्रीं गार्गीं सम्बोधयति–अरे इति । हे गार्गि ! अयम्–वेदान्तविचारे प्रस्तूयमानः, आत्मा=चेतनः, अविनाशी-नाशाऽप्रतियोगी, त्रिकालाऽबाधितोऽस्तीत्यर्थः ॥ अस्मिन्नेवार्थे तैत्तिरीयश्रुतिं संवादयति–**सत्यमिति** । 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यत्र ब्रह्म लक्ष्यम्, सत्यादिपदत्रयं लक्षणपरम्, सत्यं–त्रैकालाऽबाध्यम्, ज्ञानं–चित्स्वभावः, अनन्तम्–व्यापकं–देशकालवस्त्वपरिच्छिन्नमिति यावत् । सत्येन अनृतव्यावृत्तिः । ज्ञानेन जडव्यावृत्तिः । अनन्तेन परिच्छिन्नव्यावृत्तिः । इत्यादिश्रुतेरित्यत्रादिना–'नित्यं विज्ञानमानन्दं ब्रह्मे'त्यादिश्रुतिजातं ग्राह्यम् । निर्विशेषस्यैव ब्रह्मणोऽत्र सत्यादयो विशेषाः, एतैर्हि ब्रह्म यदा विशेष्यते तदा सत्यादिविरुद्धेभ्योऽसत्यजाड्यपरिच्छिन्नेभ्यो व्यावृत्तं ब्रह्म सिद्ध्यति तथा च–'व्यावृत्तत्वे सति सच्चिदेकतानं परिपूर्णमिति ब्रह्मस्वरूपं ज्ञातं भवति, व्यावृत्तिश्चेन्न ज्ञायेत तदाऽनृतादिभ्यो व्यावृत्त्यसिद्धेर्न ब्रह्म ज्ञातं स्यात्, व्यावृत्तेश्च ब्रह्मस्वरूपाऽनतिरेकान्न

**ब्रह्म' ( तैत्ति० आ० व० अनु० १ ) इत्यादिश्रुतेरिति चेद् ? न, तस्य सविषयकत्वासंभवस्य दर्शितत्वात्, निर्विषयकस्य ज्ञानत्वे मानाभावात्सविषयकत्वस्याप्यननुभवात्। अतो ज्ञानादिभिन्नो नित्य आत्मेति सिद्धम्। 'सत्यं ज्ञानमि'ति तु ब्रह्मपरं जीवे तु नोपयुज्यते। ज्ञानाज्ञानसुखित्वादिभिर्जीवानां भेदसिद्धौ सुतरामीश्वरभेदः। अन्यथा बन्धमोक्षव्यवस्थानुपपत्तेः। योऽपीश्वराभेदबोधको वेदः सोऽपि तदभेदेन**

निर्विशेषाद्वैतवादक्षतिरिति। तदेव च ब्रह्म-उपाधिवशाज्जीवभावं प्राप्तं, उपाधिनानात्वान्नानाजीवाः। उपाधिर्द्विविधः—मायोपाधिकञ्चैतन्यमीश्वरः, अविद्योपाधिकश्चैतन्यञ्जीवः। अविद्यैव संसारकारणम्। 'तत्त्वमस्या'दिमहावाक्यजन्या 'अहंब्रह्माऽस्मी'त्यखण्डाकारा वृत्तिर्विद्या, तयाऽविद्यानाशे सति जीवस्य ब्रह्मस्वरूपाविर्भावो मोक्ष इति वेदान्तिमतम्॥ **नैयायिकस्तद्दूषयति—नेति**। तत्राऽऽत्ममात्रस्य नित्यविज्ञानस्वरूपत्वं परमेश्वरस्यैव वेति विकल्प्याऽऽद्ये दूषणमाह—**तस्येत्यादिना**। तस्य विज्ञानस्य, अत्र तु नित्यविज्ञानस्येत्यभिप्रायः। **सविषयत्वाऽसंभवस्येति**। क्षणिकविज्ञानात्मवादखण्डनारम्भे **'तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः, यत्किञ्चिद्विषयकत्वे विनिगमनाविरहः, सुषुप्तावपि विषयाऽवभासप्रसंगाच्च ज्ञानस्य सविषयत्वादि'**तिग्रन्थेन विज्ञानात्मनः सविषयकत्वाऽसंभवस्य दर्शितत्वात्, तथाच जीवस्य तादृशत्वाऽभावादात्मसामान्यस्य न नित्यविज्ञानस्वरूपत्वमिति भावः। आत्मनो निर्विषयकत्वे दूषणमाह—**निर्विषयकस्येति। मानाभावादिति**। ज्ञानत्वस्य विषयिताव्याप्यत्वेन व्यापकीभूतविषयिताऽनङ्गीकारे ज्ञानत्वमपि न स्यादिति भावः॥ ननु जीवस्य न जगद्विषयकत्वं न वा नियतयत्किञ्चिद्विषयकत्वं, किन्तु यद्विषयकत्वं यत्र जीवेऽनुभवसिद्धं तत्र तद्विषयकत्वमत आह—**सविषयकत्वस्येति**। सविषयकत्वस्यापि जीवात्मनोऽननुभवात्, 'घटस्य ज्ञान'मित्यनुभवात् ज्ञानस्य घटादिविषयकत्वमङ्गीकृतं भवति, 'घटस्याऽऽत्मे'त्यनुभवाऽभावादात्मनो न सविषयकत्वमिति, अतो नित्यज्ञानं नात्मेति भावः। उपसंहरति—**अत इति**। उक्तदोषेण सविषयकत्वाऽसंभवात्, नित्यः—ध्वंसप्रागभावाऽप्रतियोगी आत्मा, ज्ञानादिभिन्नः—ज्ञानेच्छादिगुणभेदवान्, ज्ञानेच्छाद्यधिकरणमित्यवश्यमंगीकर्तव्यमिति भावः॥ नन्वेवं सत्यात्मनो विज्ञानस्वरूपताबोधकश्रुतिविरोध इत्यत आह—**सत्यमिति**। 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुतिस्तु ब्रह्मपदसामानाधिकरण्याद् ब्रह्मस्वरूपप्रतिपादनपरेत्यर्थः। 'जीवे तु नोपयुज्यते=न तु जीवस्वरूपप्रतिपादनपरेत्यर्थः॥ ननु जीवब्रह्मणोरभेदान्नित्यविज्ञानस्वरूपत्वं जीवस्य निराबाधमित्याशंकानिरासाय जीवब्रह्मणोर्भेदं साधयति—**ज्ञानाऽज्ञानेति**। केषांचित् ज्ञानं केषाञ्चिदज्ञानं केषांचित्सुखित्वं केषाञ्चिद् दुःखित्वमित्यादिविभिन्नधर्मैः जीवानां परस्परं नानात्वसिद्धौ, सुतराम्=अनायासेन, परमेश्वरस्यैकस्याऽनेकजीवात्मकत्वाऽसंभवात् एकत्वाऽनेकत्वयोर्विरोधात् परमेश्वरजीवात्मनोर्भेदः सिद्ध्यतीत्यर्थः॥ **जीवानां परस्परभेदानुमानम्**—"एतच्छरीरावच्छेद्यविज्ञानादिमान्—एतच्छरीरसमानकालीनयोगाद्यजन्यैतच्छरीरसजातीयैतच्छरीरभिन्नशरीरावच्छिन्नभिन्नः, एतच्छरीरसमानकालीनैतच्छरीरसजातीयैतच्छरीरभिन्नयोगाद्यजन्यशरीरावच्छेद्यज्ञानाधारत्वादि 'ति, एतादृशव्यतिरेक्यनुमानात् जीवानां परस्परभेदसिद्धिः॥ 'जीवः—परमेश्वरभिन्नः,—सुखित्वादि'त्यनेन जीवे परमेश्वरभेदः सिद्धः॥ अथवा, 'परमेश्वरः,—जीवभिन्नः,—'एकमेवाऽद्वितीयं ब्रह्मे'तिश्रुतिप्रतिपाद्यैकत्ववत्त्वात्॥ ननु परमेश्वरस्य जीवभिन्नत्वेऽपि 'ममैवांशो जीवलोके'—इति गीतावचनेन जीवानामीश्वरांशत्वप्रतिपादनात् परमेश्वराऽभिन्नत्वमङ्गीकार्यमिति जीवानां विज्ञानाऽभिन्नत्वं निराबाधमिति,—मतं दूषयितुम्—'अन्यथाऽनुपपत्तिं'—दर्शयति—**अन्यथेति**। जीवनाम् परमेश्वराऽभिन्नत्वे

**तदीयत्वं प्रतिपादयन् स्तौति, अभेदभावनयैव यतितव्यमिति वदति । अत एव "सर्व एवात्मनि समर्पिताः" इति श्रूयते । मोक्षदशायामज्ञाननिवृत्तावभेदो जायत**

---

इत्यर्थः ॥ **बन्धेति** । कश्चित् संसारी बद्धः, कश्चिन्मुक्तः, इति व्यवस्था न स्यात् , बद्धमुक्तात्मनो-र्जीवपरमात्मनोश्चैक्यादिति हृदयम् । अथ तत्तदन्तःकरणावच्छिन्नचैतन्यस्यैकत्वेपि तदन्तःकरणस्य नाशे तदन्तःकरणावच्छिन्नचैतन्यस्य मुक्तत्वव्यवहारः, यदन्तःकरणस्य न नाशस्तदन्तःकरणावच्छि-न्नचैतन्ये बद्धत्वव्यवहार इति बद्धमुक्तव्यवस्थाया नाऽनुपपत्तिरिति चेत् ?, एवमपि मोक्षार्थं प्रयत्ना-नुष्ठानवैफल्यापत्तेर्दुर्वारत्वात् , एकान्तःकरणनाशेऽप्यन्तःकरणान्तरावच्छिन्ने स्वात्मनि दुःखोत्प-त्तेरावश्यकतया प्रवृत्तिफलस्य निर्दुःखत्वस्याऽसंभवात् , यदि चान्तःकरणस्यैव सुखदुःखादिर्न चैत-न्यस्येत्युच्यते, तदा विमुक्त्यर्थप्रयासो व्यर्थ एव, स्वस्य नित्यमुक्तत्वात् । यदि च भ्रान्तिनिवृत्त्यर्थं प्रयासः कर्तव्य इत्युच्यते तदाप्यन्तःकरणान्तरावच्छिन्ने स्वस्मिन्नेव भ्रान्तेरावश्यकत्वेन प्रयत्नस्य निष्फलत्वापत्तेर्दुर्वारत्वादिति ध्येयम् ॥ **ननु** जीवब्रह्मणोः परस्परभेदस्वीकारे 'तत्त्वमसि' 'अहं ब्रह्मास्मी'त्यभेदश्रुतिविरोधापत्तिरत आह-**योपीऽति** । परब्रह्मणा सह जीवात्मनोऽभेदप्रतिपादिका (वेदः)=श्रुतिः-'तत् त्वम् असी'ति । **वेदान्तिमते** तस्या अयमर्थः-'**तत्**-परोक्षत्वादिविशिष्ट-चैतन्यम् , सर्वज्ञत्वविशिष्टात्मेति यावत् । **त्वम्**-अपरोक्षत्वादिविशिष्टचैतन्यम् , अल्पज्ञत्वविशिष्ट-श्वेतकेत्वाद्यात्मेति यावत् । असि=भेदाभाव-एकतेति यावत् । "एकता ग्राह्यतेऽसीति तदैक्यमनु-भूयताम्"-इति **पञ्चदशी** ॥ तथा च-जहदजहल्लक्षणया-विरुद्धपरोक्षत्वाऽपरोक्षत्वादिविशिष्टांशं परित्यज्याऽविरुद्धमखण्डचैतन्यमात्रं बोध्यते इति ॥ **नैयायिक** उभयपदे लक्षणाऽपेक्षया लाघवात् पूर्वपदे एव लक्षणयाऽर्थं निर्वाह्य तन्मतं खण्डयन् तदर्थं करोति-**सोऽपीति** । 'तत्त्वमसी'ति वेदोऽपि, तदभेदेन=ईश्वराऽभेदेन, तदीयत्वं=तत्स्वरूपत्वं, प्रतिपादयन्=निरूपयन् , स्तौति-अर्थवादरूपतां भजते । तथा च-तत्पदस्य-तत्सम्बन्धिनि लक्षणा, परमेश्वरसम्बन्धस्तु-जीवे चेतनत्वं,-ज्ञानसजातीयज्ञानादिमत्त्वात्मको, मोक्षस्थितिकत्वात्मको वा बोध्यः, अन्ये तु नियाम्य-नियामकभावाख्यः सम्बन्ध इति वदन्ति । त्वं-पदम् अल्पज्ञात्मपरम् असि-वर्तमानाऽस्तित्व-बोधकम् , तथा च 'परमेश्वरज्ञानादिसजातीयज्ञानादिमदस्तितावानिति बोधः । चेतनत्वेन ज्ञानादिना वा परमेश्वरसमानोऽसीति यावत् ॥ स्तुतिवाक्यस्याऽन्यार्थपरतया श्रूय-माणोऽभेदो न तादृश्यश्रुत्यर्थः, किन्त्वन्यार्थः-स चात्र-'**मोक्षार्थं यत्नः कार्यं**' इत्याकारकः, तदेनमर्थं दर्शयति-**अभेदभावनयैव यतितव्यम्**' इति । 'परमेश्वरसमानस्त्वमपि मोक्षस्थितिको भवितुं योग्योऽस्यतो मोक्षे यत्नः कार्यः' इति वदति=बोधयतीति भावः ॥ भावनाऽत्र उपासना, सा च निदिध्यासनात्मको ज्ञानप्रवाह इत्यर्थः ॥ उक्तार्थदृढतायै श्रुतिं प्रामाणयितुमाह-**अत एवेति** । उक्तश्रुतेः साम्यतया मोक्षयत्नप्रतिपादकत्वस्वीकारेणैवेत्यर्थः । श्रुतिमाह-**सर्वे इति** । सर्वे एव जीवात्मानः, आत्मनि-परब्रह्मणि समर्पिताः='हे परमेश्वर ? तवाऽहमि'ति समर्पणी-कृताः । 'सर्वं आत्मानःसमर्पिता'इति तु श्रुतिभावार्थो बोध्यः । तथा च परमेश्वरशरणागतिर्जीवानां परमेश्वरभिन्नानामेव युक्ता, न त्वभिन्नानामिति भावः । न चैवं तत्त्वज्ञानादेव मुक्तिरिति न्याय-सिद्धान्तहानिरिति वाच्यम्, पदार्थतत्त्वज्ञानस्य पराकाष्ठैव निदिध्यासनं, तच्च परमेश्वरे 'तवाहं तवाहं तवाहमि'तिस्मृतिप्रवाहरूपं, तस्यैव शरणागत्यपराऽभिधानत्वात् ॥ इति='सर्वे आत्मानः समर्पिता' इत्येतादृशोऽर्थः, **श्रूयते**=श्रुतिवाक्यजन्यशाब्दबोधविषयीक्रियते इत्यर्थः । तथा च जीवब्रह्मणोरैक्ये-उपास्योपासकभावबोधकश्रुतेरप्रामाण्यापत्तिः स्यादिति हृदयम् ॥ ननु-ब्रह्मभिन्नस्य सर्वस्य

इत्यपि न, भेदस्य नित्यत्वेन नाशाऽसंभवात्। भेदनाशेऽपि व्यक्तिद्वयं स्थास्यत्येव। न च द्वित्वमपि नश्यतीति वाच्यं, तव निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि सत्यस्वरूपं तदितिवद् द्वित्वाभावेऽपि व्यक्तिद्वयात्मकौ ताविति सुवचत्वात्। मिथ्यात्वाभावोऽधिकरणात्मकस्तत्र सत्यत्वमिति चेदेकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमित्यप्युच्य-

---

मिथ्यात्वादन्योन्याऽभावोऽपि मिथ्या, तथाचाऽज्ञानकाले भेदसत्त्वेपि मोक्षकाले तु जीवात्मनां ब्रह्मणा सहाऽभेदः स्यादेवेति वेदान्तिमतं निरस्यति—**मोक्षेति**। मोक्षदशायां=तत्त्वज्ञानाऽव्यवहितोत्तरक्षणे। अज्ञाननिवृत्तौ=मिथ्याज्ञाननिवृत्तौ। असुरादिघटकनञ्पदस्येवात्रापि नञो विरोध्यर्थकत्वम्। अभेदः=ऐक्यं जायते, इत्यपि मतं न युक्तिसहमित्यर्थः ॥ तत्त्वज्ञानेन मिथ्याज्ञानजन्यसंस्कारनाशः, तेन स्मरणानुत्पादः, तेन रागाद्यनुत्पादः, तेन धर्माधर्मयोरनुत्पादः, तेन सुखाद्यनुत्पादे जीवेश्वरयोः समानधर्मवत्त्वेन बाधकाऽभावादभेद उत्पद्यते इत्यपि नेति प्रघट्टकार्थः ॥ तत्र हेतुमाह—**भेदस्येति**। भेदस्य=अन्योन्याभावस्य न्यायमते नित्यत्वेन=ध्वंसाऽप्रतियोगित्वेन, नाशाऽसंभवादित्यर्थः ॥ नवीनमतेऽन्योन्याभावस्य पृथक्त्वरूपत्वेन यथाऽनित्यत्वं तथा मम वेदान्तिमतेऽनियताऽपेक्षाबुद्धिजन्यजीवगताऽनेकपृथक्त्वरूपान्योन्याभावस्याऽप्यनित्यत्वं तथा च मोक्षकालेऽभेदः स्यादेवेत्याशंकायामाह—**भेदनाशेपीति**। वेदान्त्यभिमताऽनियताऽपेक्षाबुद्धिजन्याऽनेकपृथक्त्वरूपान्योन्याभावस्य नष्टत्वेऽपि, व्यक्तिद्वयं=जीवात्मपरमात्मात्मकव्यक्तिद्वयं स्थास्यत्येवेत्यर्थः। अपेक्षाबुद्धिनाशाद् द्वित्वनाशेऽपि यथा व्यक्तिद्वयं तिष्ठति तथा कारणीभूताऽनियताऽपेक्षाबुद्धिनाशाद् अनियतपृथक्त्वरूपाऽन्योन्याभावस्य नाशेऽपि जीवात्मपरमात्मात्मकव्यक्तिद्वयस्थितिर्निराबाधेति भावः ॥ वेदान्ती शंकते—**न च द्वित्वमपीति**। ब्रह्मभिन्नस्य द्वित्वस्यापि मिथ्यात्वाद् द्वित्वमप्यपेक्षाबुद्धिनाशान्नश्यति, तथा च विशेषणाऽभावाद् विशिष्टव्यक्तिद्वयस्थितिर्न स्यादिति भावः ॥ नैयायिकः समाधत्ते—**तवेति**। यथा तव—वेदान्तिनो मते द्वैतापत्तिभिया ब्रह्मणि धर्माः सत्यत्वज्ञानत्वादयो न स्वीक्रियन्तेऽत एव निर्धर्मकं निर्विशेषं ब्रह्म स्वीक्रियते, तादृशेऽपि निर्धर्मके ब्रह्मणि सत्यत्वज्ञानत्वनित्यत्वादिधर्माणामसत्त्वेऽपि तद्ब्रह्म सत्यस्वरूपमिति स्वीक्रियते, तथा—अपेक्षाबुद्धिनाशाद् द्वित्वस्य नाशेन द्वित्वस्याऽसत्त्वेऽपि तौ=जीवपरमात्मानौ, व्यक्तिद्वयात्मकौ—इत्यपि सुवचत्वात्—वक्तुं शक्यत्वात्, तथा च न द्वयोरैक्यमिति भावः ॥ वेदान्ती आक्षिपति—**मिथ्यात्वाऽभाव** इति। निर्धर्मकत्वं नाम—स्वभिन्नधर्मशून्यत्वम्, अभावस्य वेदान्तिमतेऽधिकरणात्मकतया च मिथ्यात्वाभावात्मकसत्यत्वस्य ब्रह्मभिन्नत्वाऽभावाद् ब्रह्मात्मकसत्यत्वेन ब्रह्मणि सत्यमिति व्यवहारो नाऽनुपपन्नः, तव नैयायिकस्य तु द्वित्वस्य तत्राऽभावाद् एकत्वाभावस्य चाऽधिकरणाऽनात्मकत्वाद्—व्यक्तिद्वयमिति व्यवहारो नैव स्यादित्याक्षेपार्थः ॥ तत्र=ब्रह्मणि, अधिकरणात्मकः—ब्रह्मात्मकः, मिथ्यात्वाऽभावः,=स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वाऽभावः, सत्यत्वव्यवहारविषयमिति शब्दार्थः ॥ नैयायिकः—परिहरति—**एकत्वाऽभाव** इति। प्रत्येके एकत्वं वर्तते, जीवेशात्मकव्यक्तिद्वये त्वेकत्वं नास्ति, तथा च व्यक्तिद्वयसाधारणो य एकत्वाऽभाव आपत्त्यभावाल्लाघवाच्चाधिकरणात्मकः—व्यक्तिद्वयात्मकः, स एव 'द्वित्व'मितिव्यवहारविषयः, तेन 'जीवेशौ द्वा'वितिव्यहारः स्यादेवेत्याशयः। ननु—उत्पत्तिकालीनघटे एकत्वाऽभावाद् 'घटो द्वावि'त्यापत्तिरिति चेन्न, तत्र तद्व्यक्तित्वात्मकस्यैवैकत्वस्य स्वीकारात्॥ **अथवा**—जीवे एकत्वं परमेश्वरे चैकत्वं वर्तते, न तूभयत्र, एवमुभयत्र द्वित्वं वर्तते, तन्न प्रत्येके, तथा च तत्र एकत्वम् अभावो यस्य-व्यक्तिद्वयात्मकद्वित्वस्य सः—'द्वित्वाऽभावः=एकत्व-

**ताम्। प्रत्येकमेकत्वेऽपि पृथ्वीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनसिद्धत्वात्। योऽपि तदानीमभेदप्रतिपादको वेदः, सोऽपि निर्दुःखत्वादिना साम्यं प्रतिपादयति, संपदाधिक्ये पुरोहितोऽयं राजा संवृत्त इतिवत्। अतएव 'निरञ्जनः परमं साम्यमुपैति' इति श्रूयते। ईश्वरोपि न ज्ञानसुखात्मा, किंतु ज्ञानाद्याश्रयः,**

---

मि'ति विपरीतार्थः, तत्र जीवगतमेकत्वम् परमेश्वरगतमेकत्वं च यथा द्वित्वाऽभावरूपं, तथा लाघवाद् द्वित्वमपि एकत्ववदन्योन्याभावरूपम्, एकत्ववज्जीवस्य अन्योन्याभावस्य ब्रह्मणि सत्त्वात्, एकत्ववद्ब्रह्मणोऽन्योन्याभावस्य च जीवे सत्त्वात्, तेन प्रत्येके एकत्वव्यवहारः, उभयत्र च द्वाविति व्यवहारो निराबाध इति ध्येयम्॥ ननु प्रत्येकम् एकत्वात् कथं तदवच्छिन्नप्रतियोगिताकान्योन्याभावरूपं द्वित्वं तत्र संभवेत्!, अन्योन्याभावस्य प्रतियोगितावच्छेदकेन सह विरोधाद्–इत्याशंक्य समाधत्ते–**प्रत्येकमेकत्वेऽपीति**। जीवे एकत्वसत्त्वे परमेश्वरे चैकत्वसत्त्वेऽपि, 'उभयं=द्वौ, नैकम्=नैकत्ववदि'ति व्यवहारस्य सर्वजनप्रसिद्धत्वात्, तत्र 'द्वा'वितिव्यवहारः स्यादेवेत्यर्थः॥ तत्र दृष्टान्तमुक्तं–**पृथिवीजलयोर्न गन्ध इतिवदिति**। पृथिव्यां गन्धसत्त्वेऽपि, पृथिवीजलयोर्न गन्ध'इति प्रतीत्या पृथिवीजलोभयत्वात्मकव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताको गन्धात्यन्ताभावो यथा स्वीक्रियते तथा 'द्वौ नैक'मिति प्रतीत्या द्वित्वात्मकव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकस्य एकत्ववदन्योन्याभावस्य स्वीकारे बाधकाऽभाव इति भावः॥ **ननु** तर्हि 'ब्रह्मविद् ब्रह्मैव भवती'तिमोक्षकाले जीवब्रह्मणोरभेदप्रतिपादकश्रुतेः का गतिरत आह–**योऽपि तदानीमिति**। तदानीं–मोक्षकाले, अभेदस्य जीवब्रह्मणोरैक्यस्य प्रतिपादको वेदः 'ब्रह्मविद् ब्रह्मैव भवती'तिश्रुतिः। सोऽपि=सा श्रुतिरपि, निर्दुःखत्वादिना=निर्दुःखत्वादिविशिष्टात्मत्वेन, आदिना निर्द्वेषत्वादिपरिग्रहः, तृतीयार्थोऽभेदः, तस्य साम्येऽन्वयः, तथा च निर्दुःखत्वाद्यात्मकसाम्यं बोधयतीति भावः॥ **वेदान्तिमते** श्रुतेरर्थः–'ब्रह्मविद्–ब्रह्मविषयकनिदिध्यासनवान्, ब्रह्मैव–ब्रह्मात्मकः, ब्रह्मस्वरूपो, भवति–सम्पद्यते' इति। **नैयायिकमते** तु–'ब्रह्मविषयकतत्त्वज्ञानवान् ब्रह्मसमानो मोक्षस्थितिको भवती'त्यर्थः। तथाच न प्रातीतिकोऽभेदार्थो वास्तवः, किन्तु साम्यार्थ एव वास्तव इति हृदयम्॥ **ननु** साम्यबोधतात्पर्येण–अभेदेन प्रतिपादनं न दृष्टमित्याशंकां तादृशोदाहरणप्रतिपादनेन परिहरति–**सम्पदाधिक्येइति**। सम्पदां गजाश्वपृथिवीद्रव्यादीनामाधिक्ये सति 'अयं पुरोहितः कर्मकाण्डी ब्राह्मणो राजा संवृतः'–इत्यत्राऽभेदार्थबोधिका प्रथमा विभक्तिः साम्यार्थबोधतात्पर्येण प्रयुज्यते, तेन–'सम्पदाधिक्यप्रयोज्यराजसाम्यः पुरोहित' इति बोधः, नतु राजाऽभिन्नपुरोहित इति। तथा 'ब्रह्मविद् ब्रह्मैव भवती'त्यत्रापि ब्रह्मसमानो भवतीति बोध्यत इति हृदयम्। **अतएवेति**। ब्रह्मविदिति श्रुत्या साम्यत्वप्रतिपादनादेवेत्यर्थः॥ श्रुतिमाह–**'निरञ्जनइति**। वेदान्तिमतेऽयमर्थः। निरञ्जनः–अविद्यारहितः सन्, परमं=ब्रह्मस्वरूपात्मकं, साम्यम्–सामानाधिकरण्यप्रयुक्तम् ऐक्यमुपैति अनुभवतीति। नैयायिकमते तु निरञ्जनः–अंजनं–मिथ्याज्ञानं तच्छून्यः, मुक्तः सन्निति यावत्, परमं=निर्दुःखत्वात्मकमपुनर्भवरूपं, साम्यं–समानताम्, उपैति–प्राप्नोतीति, तदनया श्रुत्या ब्रह्मजीवात्मनोर्भेदस्यैव साम्यव्याप्यतया सिद्धिरिति भावः॥ तदेवम् आत्ममात्रस्य विज्ञानस्वरूपत्वं निरस्येदानीं–परमेश्वरस्य विज्ञानमात्रस्वरूपत्वात्मकं द्वितीयं पक्षं दूषयति–**ईश्वरोपीति**। अपिना जीवो यथा न ज्ञानसुखात्मा तथा परमेश्वरोऽपि न ज्ञानसुखात्मा, ज्ञानं सुखं च आत्मा स्वरूपं यस्येत्यर्थः॥ तर्हि कीदृश इत्यत आह–**किन्तु इति**। ज्ञानसुखादीनां समवायेन आश्रयः–अधिकरणमित्यर्थः। ननु तर्हि 'नित्यं विज्ञानमानन्दं ब्रह्मे'ति ब्रह्मणो विज्ञानाद्यभिन्नत्वप्रतिपादकश्रुतिविरोध-

"नित्यं विज्ञानमानन्दं ब्रह्म" इत्यादौ विज्ञानपदेन ज्ञानाश्रय एवोक्तः, "यः सर्वज्ञः स सर्ववित्" इत्याद्यनुरोधात्। आनन्दमित्यस्याप्यानन्दवदित्यर्थः। अर्शआदित्वान्मत्वर्थीयाऽच्प्रत्ययात्। अन्यथा पुँल्लिङ्गत्वापत्तिः। आनन्दोऽपि दुःखाभावे उपचर्यते, भाराद्यपगमे सुखी संवृत्तोऽहमितिवत्, अस्तु वा तस्मिन्नानन्दो न त्वसावानन्दः, "असुखम्" इति श्रुतेः। न विद्यते सुखं यस्येति कुतो नार्थ इति चेद् ? न, क्लिष्टक-

---

इत्यत आह–'**नित्यमिति**' न्यायमते श्रुतेरयमर्थः 'नित्यम्–प्रागभावध्वंसाऽप्रतियोगितावत्। विज्ञानम्–समवायेन नित्यज्ञानाधिकरणम्। आनन्दम्–दुःखत्वावच्छिन्नाऽभाववत्, परं ब्रह्म' बोध्यमिति। **विज्ञानपदेनेति**। विज्ञानमस्मिन्नस्तीति विज्ञानम्, व्युपसृष्ट ज्ञा धातोः 'करणाधिकरणयोश्च'( ३।३।११७ )तिसूत्रेण अधिकरणार्थकल्युट्प्रत्ययान्तं पदमिति भावः॥ तादृशश्रुतिघटकविज्ञानपदस्य स्वार्थकल्युडन्तत्वे बाधिकां मुण्डकश्रुतिमुपन्यस्यति–'**यः सर्वज्ञः** इति। 'विद्'धात्वर्थो विशेषरूपेण ज्ञानम्, 'ज्ञा'धात्वर्थः सामान्यरूपेण ज्ञानम्, तथाच यत्तत्पदे व्यत्यस्य–'यो यद्विषयकविशेषज्ञानवान् स तद्विषयकसामान्यज्ञानवानिति फलितोऽर्थः, अतो न पुनरुक्तता। आदिना 'यस्य ज्ञानमयं तपः'–इत्यादेर्ग्रहणम् 'यस्य–परमात्मनः,तपः-तेजः–परमत्वात्मकमुत्कृष्टतेति यावत्,ज्ञानमयम्–प्रचुरार्थे मयट्,–नित्यज्ञानसुखादिप्राचुर्यात्मिका भवति' इत्यर्थः। तथा च नित्यं विज्ञानमितिश्रुतौ विज्ञानपदस्य स्वार्थल्युडन्तत्वे 'यः सर्वज्ञ'–इत्यादिश्रुतिविरोधापत्त्या अधिकरणार्थकल्युडन्तत्वमवश्यमङ्गीकार्यमिति भावः॥ **एवमानन्द**–मित्यस्यापि–'अर्श आदिभ्योऽच्'–(५।२।१२७) इतिसूत्रेण मतुवर्थकाच्प्रत्ययनिष्पन्नमिदं नपुंसकलिङ्गमानन्दपदम्–आनन्दोऽस्याऽस्तीति व्युत्पत्तेः, ततश्च 'आनन्दम्'–इत्यस्यापि 'आनन्दवत्'–इत्यर्थो बोध्यः। **अन्यथा**–आनन्दवदित्यर्थकत्वाऽभावे, सुखार्थानन्दशब्दस्य 'स्यादानन्दथुरानन्द'–इति कोशेन पुल्लिङ्गत्वनियमेन मत्वर्थीयाच्प्रत्ययान्तत्वं विना नपुंसकत्वाऽनुपपत्तिः पुल्लिङ्गत्वापत्तिश्च स्यादिति भावः॥ ननु न्यायमते परमेश्वरे आनन्दात्मकगुणाऽभावाद् आनन्दवत्त्वमपसिद्धान्त इत्यत आह–**आनन्दोऽपीति**। दुःखाभावं प्रवृत्तिनिमित्तीकृत्य दुःखाभाववति लक्षणया आनन्दशब्दः प्रयुज्यते, आनन्दं–दुःखाभाववानित्यर्थः॥ तत्र दृष्टान्तमाह–**भारेति**। भारशून्येन जनेन भारवहनोत्तरं भारापगमे सति पूर्ववत्स्थितिं प्राप्तेन यथा 'सुखी संवृत्तोऽहमि'ति मन्यते, नतु पूर्वतोऽधिकं सुखमनुभूयते इतिवदित्यर्थः। ( दुःखाभावेन सुखित्वप्रत्ययादि ) त्यधिकः पाठः। ननु तर्हि घटादावप्यानन्दशब्दस्य प्रयोगापत्तिः, लक्षणाकल्पनं च गौरवमित्यत आह–**अस्तु वेति**। वेदान्तश्रुतेर्विशिष्टाद्वैतिमतानुसारेणार्थमुपगम्य नैयायिकस्तदर्थं दर्शयति–**तस्मिन्नानन्द** इति। परमात्मनि नित्यज्ञानमिव नित्यसुखमपि भवतु, तु=किन्तु, असौ परमात्मा न आनन्दपदार्थः, स तु आनन्दभिन्न एव मन्तव्य इत्यर्थः॥ तत्र श्रुतिप्रमाणमाह–**असुखमिति**। 'न सुखम्' इति नञ्तत्पुरुषाश्रयणेन नञ्पदं परमेश्वरसकाशात् सुखस्य भेदं बोधयति, तथाच सुखभिन्नः सुखाधिकरणः परमात्मा इत्याशयः॥ वेदान्ती शंकते–**न विद्यते** इति। 'यत्समवेततया सुखमप्रसिद्धमि'ति विग्रहवाक्यार्थः। तथा चेश्वरः सुखवानित्यर्थोऽप्रसिद्धः, अतः सुखमेवेश्वर इत्यर्थः सम्यक्, उक्तरीत्या विग्रहवाक्यार्थः कुतो न गृह्यते–इत्याशयः॥ नैयायिकः समाधत्ते–**क्लिष्टकल्पनापत्तेरिति**। निरुक्तेऽन्यपदार्थप्रधाने बहुव्रीहौ अन्यपदार्थे नञो लक्षणात्मिकायाः कल्पनाया आपत्तेः, नञ्तत्पुरुषे तु नाऽयं दोष इति भावः॥ **ननु** नञ्तत्पुरुषेऽपि असुखपदब्रह्मपदयोरेकधर्मिबोधकत्वरूपं सामानाधिकरण्यमनुभवसिद्धम्, अन्यथा असुखपदब्रह्मपदयोः समानवचनत्वाऽनुपपत्तेः, तथाच सामानाधिकरण्यनिर्वाहार्थं नञः अभाववति लक्षणा आवश्यकीति

ल्पनापत्तेः, प्रकरणविरोधाद्, आनन्दमित्यत्र मत्वर्थीयाचप्रत्ययविरोधाच्चेति संक्षेपः॥
एतेन–प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः, किन्तु चेतनः, कार्यकारण-

---

समाना तत्पुरुषपक्षेऽपि नैयायिकस्य क्लिष्टकल्पना, अतोऽन्यपदप्रधानो बहुव्रीहिरेव साधुः, इत्यत आह–**प्रकरणेति**। 'अशरीरम्'''अस्थूलम्'''असुखमि'ति बार्हदारण्यक–शरीरभेदाद्यर्थदर्शकश्रुतिघटकाऽसुखशब्दस्य सुखाभाववदर्थकत्वाऽसंभवात् तत्र वाक्ये सर्वत्र नञ्तत्पुरुष एवाश्रितः, समानप्रवाहपतिताऽसुखपदस्यापि प्रकरणेन स एवाश्रयणीयः, नतु बहुव्रीहिरिति भावः॥ विरोधान्तरमाह–**आनन्दमित्यत्रेति**। सुखार्थकानन्दशब्दस्य पुल्लिङ्गत्वनियमेन मत्वर्थीयाचप्रत्ययान्तत्वमन्तरेण नपुंसकत्वानुपपत्त्या आनन्दमिति शब्दस्याऽसाधुत्वापत्तेश्चेति भावः॥ अपि च 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इति श्रुत्या ब्रह्मण आनन्दस्य च भेदः स्पष्ट एवाऽऽम्नातः, सोऽयं गुणगुणिनोर्भेदवादिनां नैयायिकानां मते एवोपपद्यते,न त्वभेदवादिवेदान्तिमते इत्याशयेनाह–**संक्षेप इति**। भेदप्रतिपादकश्रुतीनां बाहुल्येऽपि युक्तीनाम् बहुत्वेऽपि संक्षेपाद्वेदान्तमतखण्डनमवसेयमिति हृदयम्॥**अद्वैतवेदान्तिमतम्**–'सतो ब्रह्मणः–असन्मिथ्यात्मकमिदं जगद्विवृतं जायते। 'सदेव सौम्येदमग्र आसीत्, नित्यं विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिश्रुतिप्रमाणकं संसारप्राक्समये परं ब्रह्मैव व्यापकं नित्यविज्ञानात्मकमासीत् तच्च सदासीत्, सृष्टिसमये 'स ऐक्षत बहु स्यां प्रजायेय' 'स इक्षाञ्चक्रे'इतिभगवता ब्रह्मणा बहुरूपेण भवितुमभिलषितम्, ततो मायायां ब्रह्मणः प्रतिबिम्बमवतरितम्, तच्च ब्रह्म निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं निराकारमकर्तृ च, यच्च कर्तृ तत् सधर्मकं यत्सधर्मकं तन्नश्वर'मितिव्याप्त्या 'ब्रह्मभिन्नं सधर्मकं जगत्कारणं गम्यते, घटपटाद्यात्मकं जगन्मायिकं नश्वरं तस्य कारणेनापि तथैव भवितव्यम्, अत एव जगत्कारणमज्ञानं सिद्धम्, तच्चाहमज्ञ इत्यनुभवसिद्धम्, तदेव मायाऽविद्या चेत्युच्यते, सा च विचित्रपरिणामस्वभावा, अतो जगदपि विचित्रस्वभावं समवलोक्यते, अज्ञानन्तु शुद्धसत्त्वप्रधानं माया, मलिनसत्त्वप्रधानमविद्या। यथा जलादौ सूर्यप्रतिबिम्बानि भवन्ति तथा मायायां गतानि ब्रह्मप्रतिबिम्बानि ईश्वरा इति प्रथन्ते, अविद्यागतानि ब्रह्मप्रतिबिम्बानि तु जीवा इति प्रथन्ते, ब्रह्मणो मायाऽविद्यासम्बन्धेन ईश्वरजीवेतिव्यवहारः। यथा रज्जौ सर्पाभासस्तथा ब्रह्मणि जीवाद्यवभास इति। अत एव 'वाचाऽऽरम्भणं विकारो नामधेय'मित्यादिश्रुतिष्वपि विकारो घटादिर्वाचा आरभ्यते, न वस्तुसदित्युक्तम्, मायिकत्वेन जगत् मिथ्याभूतं ब्रह्मणि भासते, अविद्यायाश्च विचित्रप्रभावभावानां शक्त्यात्मकानां सर्वदा सत्त्वात् तैर्भावैर्भावितं ब्रह्म विवृतं सत् निखिलजगदुपादानं भवति। उपादानन्तु–जगदध्यासाधिष्ठानमिति। सृष्टिक्रमेण मनोबुद्ध्यहंकारचित्तात्मकान्तःकरणस्वरूपमिन्द्रियात्मकं तन्मात्रात्मक पृथिव्याद्यात्मकं च भवति। तथा च जगतो मिथ्यात्वमवगच्छन् ब्रह्मोपासनया सर्वत्राऽभेदेन ब्रह्मदृष्ट्या च सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चने'त्यादश्रुतिभिः केवलया ब्रह्मभावनया चित्तशुद्धौ सत्यामद्वैतस्फुरणयाऽविद्यानिवृत्त्या ब्रह्मैव भवतीति मोक्षः इत्यद्वैतिमतम् इति॥

अथ–'ज्ञानादिमती बुद्धिरेवान्तःकरणम् प्रकृतिकार्यम्, आत्मा तु तद्भिन्नो निगुण इति–सांख्यमतं–दूषयितुमुपन्यस्यति–**एतेनेति**। प्रागुक्तरीत्याऽऽत्मनो ज्ञानवत्तासाधनेन, वक्ष्यमाण'कृत्यदृष्टभोगानामिवे'त्यादियुक्त्यादिना चेत्यर्थः। **सांख्यमते**–'प्रकृतिः=सत्त्वरजस्तमोगुणात्मिका मूलप्रकृतिः कर्त्री=कर्तृत्वं नात्र कृतिमत्त्वम्, तस्य बुद्धौ प्रकृतिकार्यात्मके स्वीकारात्, किन्तु–कर्तृभूतबुद्ध्यात्मकान्तःकरणकारणत्वम्, तद्वतीत्यर्थः। प्रकृतेर्लक्षणं–'अकार्यावस्थोपलक्षितत्वे सति गुणसामान्यत्वं बोध्यम्॥ न्यायमताऽभिमतं कृतिमत्त्वात्मकं कर्तृत्वं पुरुषे, इति तन्निषेधति–**पुरुष-**

**योरभेदात् कार्यनाशे सति कार्यरूपतया तन्नाशोऽपि स्यादित्यकारणत्वं तस्य। बुद्धिगतचैतन्याभिमानान्यथानुपपत्त्या तत्कल्पनम्। बुद्धिश्च प्रकृतेः परिणामः। सैव महत्तत्त्वम्, अन्तःकरणमित्युच्यते। तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ। तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना सम्बन्धः। पुरुषे कर्तृत्वाभिमानो**

---

**स्त्विति।** पुरि शरीरे शेते पुरुषः चेतनस्त्वित्यर्थः। पुष्करस्य कमलस्य पत्रम् अम्भसा लिप्तं न भवति यथा तद्वत्, निर्लेपः—असङ्गः, कृतिज्ञानसुखदुःखेच्छादिलेपरहितः सर्वदा शुद्ध इत्यर्थः, वास्तविकसुखदुःखादिसंयोगानधिकरणत्वं निर्लिप्तत्वमिति। अन्ये तु—अनुयोगितासम्बन्धेन विजातीय—(सुखादि)संयोगवत्त्वं लिप्तत्वं तद्भिन्नत्वम् अलिप्तत्वमित्याहुः॥ अनुमान—'पुरुषः—कर्तृत्वाभाववान् कारणत्वाऽभावादि'ति बोध्यम्॥ ननु हेत्वसिद्धिरित्यत आह—**किन्तु**—इति। यतः, इत्यर्थः, 'यतः पुरुषश्चेतनः अतो निर्लेप इति भावः। अनुमान—पुरुषः—कारणत्वाभाववान्—(निर्लेपः)—चेतनत्वात्। यत्र हेतुर्नास्ति तत्र साध्यं नास्ति, यथा प्रकृतिरिति॥ सांख्यमते चेतनत्वं न ज्ञानाश्रयत्वं, ज्ञानस्य पुरुषेऽभावात्, किन्तु 'चेतन'इत्यनुगतप्रतीत्या चेतनपदशक्यतावच्छेदकतया सिद्धजातिविशेषवत्त्वम्, तदेवाऽऽत्मत्वमिति बोध्यम्॥ ननु तथापि बाधो विरोधश्च दोष इत्यत आह—**कार्यकारणयोरिति।** सांख्यमते कार्यस्य कारणेनोपादानेन सहाऽभेदात्—तादात्म्यसम्बन्धात्, कार्यस्य घटादेर्नाशे सति कार्यरूपतया—घटाऽभिन्नतया कारणस्य कपालादेर्नाशो भवति, तद्वत् तन्नाशोऽपि=आत्मनो नाशोऽपि **स्यात्**—आपद्येत, स च मा भवतु इति हेतोः **तस्य**—आत्मनः, अकारणत्वं—कारणत्वानधिकरणत्वं, आत्मा न कारणमिति स्वीकार्यमिति भावः॥ नन्वेतादृशो निर्विशेषपुरुष एव न स्वीकार्यः सांख्येन, प्रमाणाऽभावात् निरर्थकत्वाच्च, इत्यत आह—**बुद्धिगतेति।** बुद्धिः—अन्तःकरणात्मकं जडरूपं प्रकृतेः साक्षात्कार्यं, तत्र गतो वर्तमानो यः—चैतन्याभिमानः—'चेतनोऽह'मित्याकारकस्तस्य, अन्यथा=पुरुषस्याऽस्वीकारे, अनुपपत्त्या—असिद्ध्या, तादृशाभिमानसिद्ध्यर्थं तस्य पुरुषस्य कल्पनम्। तथा च पुरुषे प्रसिद्धस्य चेतनभावस्य पुरुषसंयुक्तायां बुद्धौ चेतनाभिमानं समारोपेणोपपद्यते इति भावः॥ ननु का सा बुद्धिर्यस्यां पुरुषोपरागवशाच्चैतन्यं प्रतीयते—इत्यत आह—**बुद्धिश्चेति।** त्रिगुणसाम्यावस्थात्मकप्रकृतेः प्रथमं साक्षात् कार्यं परिणामः,—अवस्थाविशेषो बुद्धिः, सैव च बुद्धिः 'महत्तत्त्व'मिति नाम्ना 'अन्तःकरणमि'ति नाम्ना च सांख्यैरुच्यते। तस्याः बुद्धेः सत्त्वं—पुरुषेण सह संयोगः, तेन संसारे बन्धनम् भवति, असत्त्वं—संयोगाऽभावः—वियोग इति यावत्, बुद्धिवियोगेन पुरुषस्य अपवर्गः=आत्यन्तिकदुःखध्वंसात्मको मोक्षो भवति, यथा स्फटिकस्य जपाकुसुमयोगात् लौहित्यं जपाकुसुमवियोगे च स्वो भावः श्वेतिमा तद्वदित्यर्थः। **तस्याः**—अन्तःकरणात्मिकाया बुद्धेरेव, परिणतिः=ज्ञानवृत्त्यात्मकपरिणामः, इन्द्रियप्रणालिकया—चक्षुरादीन्द्रियात्मकनालिकाद्वारा, यो घटपटादिविषयेण सह विषयाकारतात्मकः सम्बन्धः परिणतिः=परिणामः, स एव ज्ञानरूपो नान्यः, विषयाकारेणाऽऽकारितमिन्द्रियवृत्तिरूपं ज्ञानं बुद्धेरेव धर्मो न त्वात्मनः, एवमिच्छाकृतिसुखदुःखादयोऽपि परिणामा बुद्धेरेवेति कर्त्री भोक्त्री सुखदुःखादिमती बुद्धिरेवेति भावः॥ 'अयं घट'इत्याकारा चित्तवृत्तिः प्रमाणम्, तज्जन्यो 'घटमहं जानामी'ति बोधः प्रमा फलम्, सच बुद्धौ वर्तमानोऽपि बुद्धिगते आत्मनः प्रतिबिम्बे (औपाधिकेन) स्वाश्रयप्रतिबिम्बितत्वसम्बन्धेन वर्तते, अतः पौरुषेयः॥ एवं बुद्धिरथाः कर्तृत्वादयो धर्मा अपि पुरुषे औपाधिका स्वीक्रियन्ते, तथा च 'पुरुषः कर्ता'—इत्यनुभवो बुद्धिपुरुषयोर्भेदाऽग्रहमूलको भ्रमात्मक एवेति—दर्शयति—**पुरुषे इति।** पुरुषे 'अहं करोमी'ति कर्तृत्वप्रकारकाऽभिमानः, 'बुद्धिश्चेतना'—इति बुद्धावभिमानश्च, भेदाऽग्रहाद्=बुद्धिपुरुषयोरसंसर्गाऽग्रहात्, विवे-

**बुद्धौ चैतन्याभिमानश्च भेदाग्रहात्। ममेदं कर्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया तत्प्रतिविम्बादतात्त्विको दर्पणस्येव मुखोपरागः। इदमिति विषयोपरागः, इन्द्रियप्रणालिकया परिणतिभेदस्तात्त्विको निःश्वासाभिहतदर्पणस्येव मलिनिमा। कर्तव्यमिति व्यापारांशः, तेनांशत्रयवती बुद्धिः, तत्परिणामेन ज्ञानेन पुरुषस्याता-**

काग्रहादिति यावत्, प्रतीयते इत्यर्थः॥ अथ 'मम इदं कर्तव्य'मिति सर्वस्य जनस्य भवति प्रत्ययः, तत्र न्यायमते—'मम इत्यनेन स्वामित्वं, इदमित्यनेन विषयत्वम्, कर्तव्यमित्यनेन व्यापारः क्रिया भासते, तत्र स्वामित्वं आत्मनो वास्तविकं, विषयत्वं च विषयस्य वास्तविकम्, क्रिया च विषयस्था वास्तविकी, तानि च ज्ञाने विषयतया भासन्ते, अतो न भ्रमः। सांख्यमते तु तत्र कीदृशं सम्बन्धत्रयमित्याकांक्षायामाह—**'ममेदं कर्तव्य'मिति**। 'मम, इदं, कर्तव्य'मित्यंशत्रयवती बुद्धिरित्यर्थः। 'मम'इति तु बुद्धिवृत्तिः, तस्य अर्थस्तु=पुरुषस्य। पुरुषस्य बुद्धया सह सम्बन्धमाह **मदंश** इति। मदंशः=अस्मच्छब्दार्थः **पुरुषः**, पुरुषस्य च यः **उपरागः**=बुद्धया सह सम्बन्धः स आरोपिताऽभेदात्मको बोध्य इत्यर्थः। ननु तेजस्तिमिरवत् जडचेतनयोः कथम् अभेदो भवतीत्याकांक्षायामाह-**बुद्धेः स्वच्छतयेति**। जडाया अपि बुद्धेः सत्त्वोद्रेकात्मकेन स्वाच्छयेन किञ्चिन्मात्रया पुरुषसाम्यताभ्रमात्, स्वच्छतया च **तत्प्रतिबिम्बात्**=तस्य पुरुषस्य बुद्धौ प्रतिविम्बस्य पतनाच्च, अभेदः समारोपितो भवतीति, स च अभेदः **अतात्त्विकः**=अवास्तवः। बुद्धिपुरुषयोर्भेदस्तु वास्तवः, तत्र भासमानोऽभेदस्तु अवास्तवसम्बन्धो बोध इति यावत्॥ तत्र दृष्टान्तः—**दर्पणस्येवेति**। दर्पणस्य स्वच्छतया तत्र प्रतिविम्बिते मुखे दर्पणस्य वास्तवसम्बन्धाऽभावेऽपि स्वच्छत्वरूपोपाधिप्रयुक्ताध्यासिकमुखसम्बन्धवत्त्वं भासते स सम्बन्धो न वास्तवस्तथा आत्मबुद्धयोः सम्बन्धो न वास्तव इत्यर्थः॥ विषयस्य बुद्धया सह सम्बन्धमाह—**इदमितीति**। इदमंशो यो घटादिर्विषयः, तस्य **उपरागः**—बुद्धया सह यः सम्बन्धः स ज्ञानात्मकवृत्तिरूपो बोध्यः, तच्च ज्ञानं चक्षुरादीन्द्रियात्मकनालिकाद्वारा जायमानं **परिणतिभेदः**-बुद्धिपरिणामविशेषात्मकम् 'अयं घट'इत्याकारकम्, स च सम्बन्धः **तात्त्विकः**=वास्तवः। तथा च बुद्धौ—घटाद्याकारज्ञानवत्त्वमेव विषयसम्बन्ध इत्याशयः। स च सम्बन्धो ज्ञानं बुद्धेर्धर्मो न तु बुद्धिरिति न्यायमताद्वैलक्षण्यं बोध्यम्। दृष्टान्तमाह-**निःश्वासेति**। फूत्कारजन्यवायुना अभिहितं यद् दर्पणं तत्र फूत्कारगतं वाष्पात्मकं मालिन्यम् उपसंक्रामति, तथा च फुत्कारस्य दर्पणेन सह सम्बन्धो योगात्मकं मालिन्यं यथार्थम्, तथा विषयस्य बुद्धया सह सम्बन्धो ज्ञानात्मको वास्तव इत्यर्थः॥ विषयनिष्ठक्रियात्मकव्यापारस्य बुद्धया सह सम्बन्धं दर्शयति-**कर्तव्यमितीति**। व्यापारांशः—घटादिनिष्ठो य उत्पादनादिक्रियात्मको व्यापारांशः, तस्य बुद्धया सह सम्बन्धो 'घटः कर्तव्य'—इत्याकारकज्ञानवत्त्वमेव बोध्यः स च वास्तविकः। तत्र दृष्टान्तोऽपि यथा निःश्वासाभिहतदर्पणस्थं मालिन्यं श्वासदर्पणयोः सम्बन्धो वास्तवस्तद्वदितिबोध्यम्॥ उपसंहरति-**तेनेति**। बुद्धेः 'मम—इदं—कर्तव्यमि'त्याकारकत्वेन, सा बुद्धिः **अंशत्रयवती**=अंशः सम्बन्धः, पुरुषसम्बन्ध—विषयसम्बन्ध—व्यापारसम्बन्धवती उच्यत इत्यर्थः॥ नैयायिका 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तर'म् मन्यन्ते तन्निरसनाय सांख्यः स्वमतं स्फुटयति—**तत्परिणामेनेति**। अयं भावः—न्यायमते 'अयं घट'इतिबुद्धिः—व्यवसायात्मकं ज्ञानं, 'घटविषयकज्ञानवान् अहं'—इति या बुद्धिः, सा तु व्यवसायज्ञानविषयि।अनुव्यवसायात्मकं ज्ञानमिति, तदेतत् सर्वं, बुद्धिरिति ज्ञानमिति उपलब्धिरिति शब्देनाऽविभागतयोच्यत इति। सांख्यास्तु—बुद्धिः कूटस्थं द्रव्यम्, तज्जन्या 'अयं घट' 'अयं पट'इत्याकारा वृत्तयः ज्ञानशब्देन उच्यन्ते, तादृश-

**त्त्विकः सम्बन्धो दर्पणमलिनिम्नेव मुखस्योपलब्धिरुच्यते । ज्ञानवत्सुखदुःखेच्छाद्वेषधर्माधर्मा अपि बुद्धेरेव, कृतिसामानाधिकरण्येन प्रतीतेः । न च बुद्धिश्चेतना, परिणामित्वात्, इति मतमपास्तम्, कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावाच्च । चेतनोऽहं करोमीति प्रतीतिश्चैतन्यांशे भ्रम इति**

ज्ञानविषयकं यज्ज्ञानं 'घटविषयकज्ञानवानहम्' 'पटविषयकज्ञानवानह'मित्याकारकं,–यन्नैयायिकैरनुव्यवसायात्मकं कथ्यते तद् उपलब्धिः( पौरुषेयप्रमा )इति शब्देन उच्यते इति स्वीकुर्वन्ति, इति । तथा च–**तत्परिणामेन**=बुद्धिपरिणामेन 'अयं घट'इत्यादिवृत्तिरूपज्ञानेन सह यः पुरुषस्य सम्बन्धो 'घटविषयकज्ञानवानहम्( अयं घट इतिज्ञानवानहम् )इति ज्ञानविषयकबोधात्मकः, सोऽपि सम्बन्धः प्रमात्मकोऽन्तिमपरिणामरूपोऽपरिणामिनः पुरुषस्य **अतात्त्विकः**–अवास्तवो निगद्यते, स उपलब्धि-शब्देनोच्यत इत्यर्थः ॥ तत्र दृष्टान्तमाह–**दर्पणमलिम्नेव मुखस्येति** । दर्पणस्थं क्षत–वक्र-रेखा–धूसर-भावादिमालिन्यं दर्पणे एव वर्तते नतु मुखे, तथापि मुखप्रतिबिम्बे दृश्यते, तद् यथा अवास्तवो मुखप्रतिबिम्बदर्पणयोः सम्बन्धः, तथा पुरुष-बुद्धिवृत्तिज्ञानयोः सम्बन्ध उपलब्ध्याख्यः, अवास्तवः । तथा च पुरुषो नित्यशुद्धबुद्धमुक्तनिर्विशेष इति सांख्यसिद्धान्तः । **ज्ञानेति** । ज्ञानं यथा बुद्धिधर्मस्तथा सुखं दुःखमिच्छा द्वेषो धर्मोऽधर्मश्चेत्येते गुणा अपि बुद्धेरेव परिणामा बोध्याः, तेषां **कृतिसामानाधिकरण्येन**=कृतिः प्रयत्नस्तदधिकरणवृत्तित्वेनाऽनुभवसिद्धत्वात् । तेषां कृतिसाध्यत्वाद् यत्र ज्ञानं तत्रेच्छा, यत्रेच्छा तत्र च कृतिरिति नियमादिति भावः ॥ ननु बुद्धौ चैतन्यानुभवानुरोधेन बुद्धावेव चैतन्यं कल्पनीयम्, कृतं पुरुषस्य चैतन्यवत्तया कल्पनेनेत्यत आह–**न च बुद्धिरिति** । बुद्धिः पक्षः, न च चेतना इति साध्यम्,–चेतनत्वाभाववतीत्यर्थः । हेतुः–परिणामित्वादिति,–अनित्यत्वादित्यर्थः । घटादिर्दृष्टान्तोऽनुसन्धेयः ॥ इति यत् सांख्यमतम्, तद् अपास्तम्–खण्डितमित्यर्थः ॥ नैयायिकः खण्डनयुक्तिमाह–**कृत्यदृष्टेति** । कृतिः–प्रयत्नः, अदृष्टं धर्माधर्मौ, भोगः–सुखदुःखान्यतरसाक्षात्कारः, तत्र कृतिः स्वसमानाधिकरणमेवाऽदृष्टं जनयति तच्चादृष्टं स्वसमानाधिकरणमेव भोगं जनयतीति कृत्यदृष्टभोगानामेकस्मिन्नधिकरणे आत्मनि प्रथमं साधितत्वात् तत्प्रतीतिवत् '**चैतन्यस्यापि**=ज्ञानस्यापि 'चेतनोऽहं करोमी'ति सामानाधिकरण्यप्रमितिप्रतीतेरित्यर्थः । तत्र आत्मनि कृतिः चैतन्यं=ज्ञानं च भासत इति यावत् ॥ **तद्भिन्ने**–कर्तृभिन्ने चेतने प्रमाणाभावात् ॥ सांख्यः शंकते–**चेतनोऽहमिति** । 'चेतनोऽहं करोमी'ति प्रतीतौ अंशत्रयम्–चैतन्यांशः, अस्मदंशः, कृत्यंशश्च, तत्र अस्मदंशः कृत्यंशश्च बुद्धेर्वास्तविकौ, चेतनत्वांशस्तु–पुरुषस्य प्रतिबिम्बावतरणाद् बुद्धावुपसंक्रान्तोऽवास्तविकः, अतः–चेतनत्वाभाववत्यां बुद्धौ चेतनत्वप्रकारकज्ञानांशो भ्रमः स्वीक्रियत इत्याशयः । नैयायिकस्तत् तुल्यद्वन्द्वया प्रतिक्षिपति–**कृत्यंशेऽपि किं नेष्यते**–इति । अपिः–निर्धारणार्थः । तथाच न्यायमते 'चेतनोऽहं करोमी'त्यत्र चेतनत्वांशोऽस्मदंशः कृत्यंशश्च वास्तविको जीवस्य, अतश्चैतन्यांशेऽहमंशे च सांख्यो भ्रमं स्वीकरोति, तर्हि कृत्यंशोऽपि बुद्धौ भ्रमोऽधिकं स्वीक्रियताम्, तत्र का हानिः?, यदि बुद्धौ कृतेर्भ्रमो न स्वीक्रियते तर्हि चैतन्यस्यापि भ्रमो मा स्वीक्रियताम्, तथा चांशत्रयेऽपि सा प्रतीतिरात्मनि वास्तविकी, पूर्वोक्तस्य च–'पुरुषः–कर्तृत्वाऽभाववान्,–कारणत्वाऽभावादि'त्यनुमानस्य बाधकमनुमानम्–'बुद्धिः, कर्तृत्वाऽभाववती, जन्यधर्मत्वा'दिति बोध्यम् ॥ आत्मनश्च कर्तृत्वात् सुखादिकमपि तत्रैवांगांकार्यमिति प्रमाणाऽभावान्न ज्ञानातिरिक्तं द्रव्यं काचिद्बुद्धिरिति भावः ॥ बुद्धौ प्रमाणाऽभावमुक्त्वा बाधकम-

**चेत्! कृत्यंशेऽपि किं नेष्यते। अन्यथा बुद्धेर्नित्यत्वे मोक्षाभावोऽनित्यत्वे तत्पूर्वमसंसारापत्तिः। नन्वचेतनायाः प्रकृतेः कार्यत्वाद्बुद्धेरचैतन्यं कार्यकारणयोस्तादात्म्यादिति चेन्न, असिद्धेः। कर्तुर्जन्यत्वे मानाभावात्। 'वीतरागजन्मादर्शनात्' (अ-३, आ-१, सू० २५) अनादित्वम्। अनादिभावस्य नाशासंभवान्नित्यत्वम्। तत्किं प्रकृत्यादिकल्पनेन। न च-"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहं-**

---

व्याह-अन्यथेति। अतिरिक्तद्रव्यात्मकबुद्धेः स्वीकारे, सा नित्या अनित्या वा, नित्यत्वपक्षे तस्याः सर्वदा सत्त्वे आत्मनो मोक्षाभावः स्यात्, सांख्यमते बुद्धियोगपर्यन्तं मोक्षाऽनङ्गीकारात्, अनित्यत्वपक्षे तु-बुद्धेरुत्पत्तेः पूर्वं तु बुद्ध्याश्रितबुद्धिजनकाऽदृष्टस्यैवाऽभावाद् बुद्धेरेवाऽनुत्पत्त्या संसारस्यैवाऽनुत्पत्तिः स्यात्॥ **ननु**-बुद्धेरनित्यत्वं स्वीक्रियते, तथापि न तत्पूर्वमसंसारापत्तिः, कल्पान्तरे बुद्ध्यन्तरस्य नित्यकारणात्मकप्रकृतित उत्पाद्यमानत्वात् तत्पूर्वकल्पान्तरे च बुद्ध्यन्तरमिति संसारप्रवाहस्याऽनादित्वं निराबाधम्। किञ्च तव 'चेतनोऽहं करोमी'ति प्रतीतेः कृत्यधिकरणे आत्मनि चैतन्यं बुद्ध्यात्मकं यथार्थमङ्गीकृतं, तदपि न, जडायाः प्रकृतेः कार्यतया बुद्धेर्जडत्वात्=अचैतन्याद्-इत्याशयेन सांख्यः शंकते-**नन्वचेतनाया** इति। अचेतनायाः-जडायाः, प्रकृतेः=नित्यस्य त्रिगुणात्मकप्रधानस्य, कार्यत्वात्-जन्यपरिणामात्मकत्वात्, बुद्धेः-महत्तत्त्वस्य, अचैतन्यं=न चेतनत्वं किन्तु जडत्वम्, सांख्यमते कार्यस्य बुद्ध्यादीनां कारणेन=प्रकृत्या सह तादात्म्यात्=अभेदाङ्गीकारात्। तथा च प्रकृतेर्नित्याया अनादित्वात् तत्प्रयुक्तबुद्ध्यादिद्वारा संसारस्याऽप्यनादित्वं निराबाधम्, प्रकृतेर्जडत्वाच्च बुद्ध्यादेर्जडत्वमपि निराबाधम्, अतो न चैतन्यं बुद्धिर्येन कृत्यादिसामानाधिकरण्यतया आत्मनि समवेयादिति भावः॥ अनुमानं तु-'संसारः-अनादिः,-अनादिकारणप्रकृतिप्रयुक्तत्वात्। 'बुद्धिः-अचेतना,-प्रकृतिजन्यत्वादिति॥ नैयायिकस्तत् खण्डयति-**असिद्धेरिति**। उक्तानुमानद्वयं हेत्वसिद्धिदूषणग्रस्तमित्यर्थः। मूलप्रकृतौ प्रमाणाऽभावात्-प्रकृतिप्रयुक्तत्वस्य प्रकृतिजन्यत्वस्य च असिद्धत्वादिति भावः॥ **ननु** 'बुद्धिः-जन्या, कृत्यादिपरिणामवत्त्वादि'त्यनेन जन्यत्वे सिद्धे, 'बुद्धिः-स्वसमाननित्यकारणवती, जन्यत्वा'दित्यनुमानेन बुद्धिकारणतया मूलप्रकृतिः सिद्ध्यतीत्यत आह-**कर्तुरिति**। कर्तुः-कृतिमतः पदार्थस्य जन्यत्वे-अनित्यत्वे, प्रमाणाऽभावात्, कर्तृत्वस्य (कृतिमत्त्वस्य) नित्यत्वव्याप्यत्वात्, तथाच 'बुद्धिः-जन्या,-कृत्यादिपरिणामवत्त्वादि'त्युक्तानुमानं विरुद्धव्यभिचारीति भावः। तथाच नित्यः कर्ता आत्मैव न बुद्धिरिति हृदयम्॥ कर्तृत्वस्य नित्यत्वव्याप्यत्वे कर्तुरनादित्वप्रतिपादकं न्यायसूत्रं प्रमाणमाह-**वीतेति**। वीतो नष्टो रागो मिथ्याज्ञानजन्यवासना यस्य, तस्य पुरुषस्य जन्मनः=संसरणस्य, अदर्शनात्-अभावादित्यर्थः। सरागस्य जनस्यैव जन्मदर्शनादिति यावत्। तथा च यः कृतिमान् स एव बाल्ये स्तन्यपाने इष्टसाधनताज्ञानं विना न प्रवर्तते, इष्टसाधनताज्ञानं च स्मरणं संस्कारापेक्षम्, संस्कारश्च अनुभवापेक्षः, अनुभवश्च पूर्वजन्म विना नोपपद्यते तदानीम्, इति पूर्वजन्मसिद्धिः, तत्रापि प्रथमप्रथमप्रवृत्त्यनुरोधेन पूर्वं पूर्वं जन्म सिद्ध्यतीति जन्मप्रवाहस्याऽनादित्वे=सुतरां पुरुषस्याऽनादित्वं=उत्पत्त्यप्रतियोगित्वं, **अनादिभावस्य**=अनादिनो भावपदार्थस्य च पुरुषस्य नाशाऽसंभवात् नित्यत्वम् बोध्यम्। तथा च प्रकृतिमहत्तत्त्वादिकल्पनेन किं प्रयोजनम्? किमपि नेत्यर्थः॥ सांख्यः प्रकृतौ शब्दं प्रमाणयति-'**प्रकृतेरिति**। सांख्यमतेनार्थः-'प्रकृतेः-प्रधानस्य, गुणैः-सत्त्वरजस्तमःसंज्ञकैः, कर्तृभिः, क्रियमाणानि-अनुष्ठीयमानानि, कर्माणि-शुभाऽशुभक्रियात्मकानि, तेषां कर्मणां, सर्वशः-सर्वतोभावेन, 'अहं कर्ता' इति

कारविमूढात्मा कर्ताहमिति मन्यते'' इत्यनेन विरोध इति वाच्यम्, प्रकृतेः=अदृष्टस्य, गुणैः=अदृष्टजन्यैरिच्छादिभिः, कर्ताहमेवेत्यस्य तदर्थत्वात्। "तत्रैवं सति कर्तारमात्मानं केवलं तु यः" इत्यादि वदता भगवता प्रकटीकृतोऽयमुपरिष्टादाशय इति संक्षेपः॥

धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥४९॥
प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः।
अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥ ५० ॥
विभुर्बुद्ध्यादिगुणवान्—

धर्माधर्माश्रय इति। आत्मेत्यनुषज्यते। शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्मणां देहान्तरेण भोगानुपपत्तेः। विशेषगुणयोगत इति। योग्यविशेषगुणस्य ज्ञानसुखादेः

---

अहंकारेण मूढ आत्मा—अकर्ताऽपि सन् तथा मन्यते, इति। तदनेन गीतावाक्येन सह—प्रकृत्यनङ्गीकर्तृन्यायमतस्य विरोध इति भावः॥ नैयायिकः स्वमतेन तदर्थं कृत्वा समाधत्ते—प्रकृतेरदृष्टस्येति। प्रकृतिपदं न प्रधानपरं किन्तु धर्माधर्माख्यादृष्टपरमिति भावः। प्रकृतेरित्यस्यार्थमाह—अदृष्टस्येति। गुणैरित्यस्यार्थमाह—अदृष्टजन्यैरिच्छादिभिरिति। कार्यमात्रं प्रति साधारणकारणानि यानि—'ईशस्तज्ज्ञानयत्नेच्छाः कालोऽदृष्टं दिग् प्रागभावप्रतिबन्धकाऽभावौ—इत्यष्टौ तदन्यानि च विशेषकारणानि तैर्मिलित्वा क्रियमाणानि यावन्ति कार्याणि भवन्ति, तेषां कर्ता 'अहमेक एव'इति तु अहंकारेण विमूढः—अज्ञानावच्छिन्न आत्मा मन्यते तज्ज्ञानं भ्रम इत्यर्थः। तथा च तेन वाक्येन स्वतन्त्रकर्तृत्वाऽभाव एवात्मनि प्रतिपाद्यते नतु कर्तृत्वसामान्याभाव इति भावः॥ एतादृशार्थे—गमकं गीताया उत्तरवाक्यान्तरमाह—तत्रैवेति। 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्। विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥१४॥ 'शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः। न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः' ॥१५॥ इत्यनेन पञ्चानां कर्तृत्वं प्रतिपाद्य 'तत्रैवं सति कर्तारमात्मानं केवलं तु यः। नश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः'। ( अ. १८। श्लो. १६ )इत्यनेन आत्मनः स्वतन्त्रकर्तृत्वं निषिद्धमिति भगवता श्रीकृष्णेन, अयमाशयः=आत्मनः कर्तृत्वाशयः प्रकटीकृतः इति भावः॥ पुरुषस्यैव कर्तृत्वमस्तु। न च कारणत्वाऽभावेन कर्तृत्वाभावः साधित इति वाच्यम्। स्वरूपाऽसिद्धेः। एवं कार्यकारणयोरभेदात्पुरुषस्य नाशापत्तिरित्यपि न, अभेदत्वे मानाभावादु इत्यादियुक्तिसत्त्वेऽपि ता ग्रन्थविस्तरभयान्नोक्ता इत्याशयेन **संक्षेप** इत्युक्तम्॥

मूले-**धर्माधर्माश्रय इति**। आत्मा धर्मस्य अधर्मस्य च आश्रयः,=समवायेनाधिकरणमित्यर्थः। सच विशेषगुणानां योगतः=सम्बन्धतः, अध्यक्षः=मानसप्रत्यक्षविषयो भवतीत्यर्थः॥ अयम्=आत्मा परशरीरे प्रवृत्त्या=शरीरस्थगमनादिक्रियानुकूलप्रयत्नेन अनुमेयः—अनुमितिविषयो भवति, अनुमानमग्रे दर्शयिष्यते। यथा रथस्य गत्या सारथिः अनुमितिविषयो भवतीति, अनुमानमग्रे बोध्यम्। अयम्—आत्मा, अहंकारस्य—अहमिति प्रत्ययस्य, आश्रयः—विषयो भवति। मनइन्द्रियमात्रस्य गोचरः प्रत्यक्षविषयो भवति। विभुः—व्यापको भवति। बुद्ध्यादिचतुर्दशगुणवांश्च भवतीत्यर्थः॥ मुक्तावल्यां—शरीरस्य धर्माधर्माद्याश्रयत्वे दूषणमाह—**शरीरस्येति**। तदाश्रयत्वे=धर्माधर्माद्याश्रयत्वे, देहान्तरे कृतानि कर्माणि यैः तेषां, देहान्तरावच्छेदोत्पत्तिककर्मजन्याऽदृष्टवतामितियावत्। देहान्तरेण=देहान्तरावच्छेदेन, भोगाऽनुपपत्तेः=तत्फलसुखदुःखानुभवो न स्यादित्यर्थः॥ विशेषगुणस्याऽदृष्टस्य सम्बन्धेन आत्मनः प्रत्यक्षाऽभावात् विशेषगुणपदार्थमाह—**योग्यविशेषगुणस्येति**।

सम्बन्धेनात्मनः प्रत्यक्षत्वं संभवति, न त्वन्यथा, अहं जाने अहं करोमीत्यादिप्रतीतेः ॥४९॥ प्रवृत्त्येति। अयमात्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते, प्रवृत्तिरत्र चेष्टा, ज्ञानेच्छायत्नादीनां देहेऽभावस्योक्तप्रायत्वाच्चेष्टायाश्च प्रयत्नसाध्यत्वाच्चेष्टया प्रयत्नवानात्माऽनुमीयत इति भावः। अत्र दृष्टान्तमाह–रथेति। यद्यपि रथकर्म चेष्टा न भवति, तथापि तेन कर्मणा सारथिर्यथाऽनुमीयते, तथा चेष्टात्मकेन कर्मणा परात्मानुमीयते इति भावः। अहंकारस्येति। अहंकारोऽहमितिप्रत्ययस्तस्याश्रयो विषयः आत्मा, न शरीरादिरिति भावः। मन इति। मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयो मानसप्रत्यक्षविषयश्चेत्यर्थः। रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात् ॥५०॥ विभुरिति। विभुत्वं परममह-

---

योग्या मानसप्रत्यक्षा ये आत्मनो विशेषगुणाः ज्ञान–सुख–दुःखेच्छा–द्वेष–प्रयत्नाः, तेषां सम्बन्धेन–समवायेन, समवायावच्छिन्नप्रकारतयेति यावत्, आत्मनो मानसप्रत्यक्षं भवति। न तु अन्यथा–विशेषगुणसम्बन्धं विना तु न मनसः प्रत्यक्षो भवतीति॥ प्रत्यक्षप्रतीतेराकारं दर्शयति–'अहं जाने' इति। ज्ञानवानहमित्यर्थः। 'अहं सुखी' अहं दुःखी, अहम् इच्छामि, अहं द्वेष्मि, अहं-प्रयते अहं करोमि, इत्यादिप्रतीतिः–तत्तद्गुणनिष्ठप्रकारतानिरूपितसमवायावच्छिन्नात्मनिष्ठविशेष्यताका भवति, सैव प्रत्यक्षात्मिका, तत्र विशेष्यतया आत्मा विषयो भवतीति भावः॥ ४९ ॥

**अयमिति**। आत्मा परदेहादौ–परशरीरे प्रवृत्तिजन्यचेष्टयाऽनुमीयते, अनुमानं–'परकीयशरीरं,–अवच्छेदकतासम्बन्धेन प्रयत्नवत्, चेष्टावत्त्वात्, मच्छरीरवदि'ति। अत्र यः प्रवृत्त्याश्रयः स चेतनः सिद्धः। परदेहादौ–इत्यत्रादिना वीणादिपरिग्रहः, अनुमानं तु–परकीयवीणातन्त्री,–स्वप्रयोज्याभिघाताख्यसंयोगसम्बन्धेन प्रयत्नवती,–अवच्छेदकतासम्बन्धेन षड्जमादिस्वरवत्त्वात्,–अस्मदीयताल्वोष्ठादिवदिति। अत्रापि प्रयत्नवानात्मा सिद्ध इति भावः॥ प्रवृत्तेः शरीरेऽभावात् तदर्थमाह–**प्रवृत्तिरत्र चेष्टेति**। चेष्टा=हिताऽहितप्राप्तिपरिहारानुकूला क्रिया॥ **उक्तप्रायत्वादिति**। 'शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः'–इतिचार्वाकमतखण्डनकाले साधितत्वादित्यर्थः॥ इच्छादीनामभावस्य कण्ठतोऽनुक्तेश्च प्रायपदम्। चेष्टायाः प्रवृत्तिज्ञानजनकत्वे कार्यकारणभावमाह–**चेष्टायाश्चेति**। प्रयत्नकार्यं चेष्टा भवतीति कार्येण=चेष्टया प्रयत्नस्यानुमानात्, ततः 'परकीयशरीरम्,–आत्माधिष्ठितम्, तद्गुणप्रयत्नवत्त्वादि'त्यनुमानेन आत्मा सिद्ध्यतीति भावार्थः॥ **रथेतीति**। 'रथः-प्रयत्नवत्सारथ्यधिष्ठितः,–अनुकूलक्रियावत्त्वात्'इत्यनुमानम् बोध्यम्। यदि चेष्टावत्त्वादिति हेतुः क्रियेत स स्वरूपाऽसिद्धः स्यादित्याह–**यद्यपीति**। रथगमनस्य हिताहितप्राप्तिपरिहारानुकूलक्रियात्मकचेष्टानात्मकत्वात्, रथे पक्षे चेष्टावत्त्वं स्वरूपासिद्धं स्यात्, अतः प्रवृत्तिपदं लक्षणया प्रवृत्तिजन्यगमनात्मकक्रियापरं बोध्यम्। तथा च तेन गत्यात्मकेन रथकर्मणा सारथिरनुमेयः। स च दृष्टान्ते योजनीय इत्याह–**तथा चेष्टात्मकेनेति**। अनुमानं पूर्वमुक्तम्॥ **अहंकार इति**। 'अहमि'तिप्रतीतेर्विषय आत्मा, न शरीरेन्द्रियमनोविज्ञानादिरित्यर्थः॥ **मनोभिन्नेति**। मनोभिन्नानि यानि चक्षुरादीनि इन्द्रियाणि तज्जन्यप्रत्यक्षनिरूपितलौकिकविषयताशून्यत्वे सति मानसत्वावच्छिन्ननिरूपितलौकिकविषयतावानित्यर्थः। ननु कथं चक्षुरादिना न गृह्यतेऽत आह–**रूपाद्येति**। रूपस्पर्शाद्यभावेन चाक्षुषत्वाचादिप्रत्यक्षविषयो न भवति, चाक्षुषादिप्रत्यक्षे रूपादीनां समवायादिना कारणत्वादिति भावः॥ ५०॥ ननु प्रत्यक्षे विभुत्वस्याकारणत्वात् आत्मनः प्रत्यक्षं न स्यात् इत्याकांक्षायां विभुत्वं स्फुटयति–**विभुत्वमिति**। तथा च विभुशब्दस्य परममहत्परिमाणे लक्षणा बोध्या, स चात्रार्थो ग्राह्यः। समवायेन परममहत्परिमाणवत्त्वमिति तदर्थः॥

स्परिमाणवत्त्वम् । तच्च पूर्वमुक्तमपि स्पष्टार्थमुक्तम् । बुद्ध्यादीति । बुद्धिसुखदुःखेच्छादयश्चतुर्दश गुणाः पूर्वमुक्ता वेदितव्याः ॥

---

अथवा विभुत्वं–व्यापकत्वम् अत्यन्ताभावाऽप्रतियोगित्वमिति बोध्यम् ॥ ननु 'कालखात्मदिशां सर्वगतत्वं परमं महदि'ति(२६)कारिकयोक्तस्यात्र उक्तिः पुनरुक्तिरत आह–**तच्चेति** । परममहत्परिमाणवत्त्वं पूर्वमुक्तं तदेवात्र स्मर्तव्यमित्याशयः, अतो न पुनरुक्तिरितिभावः॥ अथवा झटिति तदुपस्थित्यर्थं पुनरुक्तिर्न दोषायेति बोध्यम् ॥ आत्मनश्चतुर्दशगुणा नाम्ना–बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारसंख्यापरिमाणपृथक्त्वसंयोगविभागाश्चतुर्दश बोध्या इत्यर्थः । ते च पूर्वम्–'बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा । धर्माऽधर्मौ गुणाश्चैते ह्यात्मनः स्युश्चतुर्दश'(३२)इतिकारिकया उक्ताः॥

अथ विशिष्टाद्वैतसिद्धान्तवादिनः **श्रीस्वामिनारायणीयास्तु** 'अणुत्वे सति चेतत्वं, स्वतःशेषत्वे सति चेतनत्वं, आश्रितत्वे सति चेतनत्वं, नियाम्यत्वे सति चेतनत्वं, पराधीनकर्तृत्वे सति चेतनत्वम्, परतन्त्रत्वे सति चेतनत्वम्, इत्यादीनि जीवलक्षणानि बोध्यानि, चेतनत्वं ज्ञानाश्रयत्वम्, जीवो हृदयपद्मे तिष्ठति, स च नित्यः, अणुपरिमाणः, नित्यज्ञानशक्तिमान्, इन्द्रियाणामधिष्ठाता चेति। आत्मा स्वयंप्रकाशः, ज्ञानात्, धर्मभूतज्ञानवदिति । आत्मनो ज्ञातृत्वं स्वाभाविकम्, तस्य ज्ञानप्रसरणं भवति, तद्धर्मभूतज्ञानस्य सर्वशरीरव्यापित्वेन युगपदनेकविषयानुभवसंभवात्, मोक्षदशायामपि सर्वगतं सर्वव्यापि ज्ञानं संकोचविकासरहितं सत् प्रकाशते। अनादिकर्मरूपाऽविद्याकृताऽचित्संसर्गात्मकोपाधिवशात् जीवस्य संसारः । परमेश्वरभक्त्या च मोक्ष इति सिद्धान्तयन्ति । एतत्सर्वं '**श्रीस्वामिनारायण–वेदान्तसार**'तोऽवगन्तव्यम् ॥

इति श्रीमद्दार्शनिकपञ्चानन–षड्दर्शनाचार्य–नव्यन्यायाचार्य–सांख्ययोगवेदान्तमीमांसातीर्थ–'पण्डित—'**श्रीकृष्णवल्लभाचार्य**'स्वामिनारायण–विरचितायां न्यायसिद्धान्तमुक्तावल्याः किरणावल्यां प्रत्यक्षखण्डे द्रव्यनिरूपणपरिच्छेदः ॥



**—बुद्धिस्तु द्विविधा मता।**
**अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥ ५१ ॥**
**प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।**

**अत्रैव प्रसङ्गाद् बुद्धेः कतिपयं प्रपञ्चं दर्शयति । बुद्धिस्त्विति । द्वैविध्यं व्युत्पादयति-अनुभूतिरिति । अनुभूतिश्चतुर्विधेति। एतासां चतसृणां करणानि चत्वारि 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति' सूत्रोक्तानि वेदितव्यानि ॥५१॥ प्रत्यक्षेति। इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्। यद्यपि मनोरूपेन्द्रियजन्यं सर्वमेव ज्ञानं, तथा-**

---

मूले-**बुद्धिस्त्विति**। बुद्ध्याख्यो गुणोऽवान्तरभेदेन संक्षेपाद् द्विधा स्वीकृतः। तत्रैकोऽनुभूतिः=अनुभवः, द्वितीयस्तु-स्मृतिः=स्मरणम्। तत्राऽनुभवश्चतुर्विधः स्वीकृतो, यथा-प्रत्यक्षप्रमितिः, अनुमितिः, उपमितिः, शब्दजा=शाब्दबोधश्चेति मूलार्थः॥ आत्मनिरूपणाऽनन्तरं मनोनिरूपणे प्राप्ते तद्विहाय बुद्ध्यात्मकगुणनिरूपणमसङ्गतमित्याशंकानिरासाय-मुक्तावल्यामाह-**अत्रैव प्रसंगादिति।** अत्र=आत्मनिरूपणानन्तरमेव, प्रसंगसंगत्येत्यर्थः। प्रसंगत्वम्-स्मृतस्योपेक्षाऽनर्हत्वम्, आत्मनिष्ठसमवायावच्छिन्नवृत्तित्वसम्बन्धेन बुद्धेः स्मरणात् तन्निरूपणमिति बोध्यम्॥ 'अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते'-(१२६)इत्यादिना प्रमात्वाऽप्रमात्वाभ्यां बुद्धेर्विभागस्याऽग्रे करणीयतया सर्वधर्मैरत्र विभागाऽकरणादनुभवत्वेन स्मृतित्वेन विभागकरणादुक्तं-**कतिपयमिति**। ईषदित्यर्थः। प्रपञ्चशब्दो धर्मपरः। ईषतोऽभेदेन धर्मेऽन्वयः, ज्ञानजनकशब्दानुकूलकृतिमानितिदर्शयतेरर्थः। तत्र ज्ञाने निरुक्तधर्मस्यान्वयः, बुद्धेरित्यत्र षष्ठ्यर्थो विशेष्यत्वम्। तथा च-बुद्धिविशेष्यकेषदभिन्नाऽवान्तरधर्मप्रकारकज्ञानजनकशब्दानुकूलकृतिमान्ग्रन्थकार इति बोधः॥ **अथ**-प्रत्यक्षात्मिकैवाऽनुभूतिरिति चार्वाकाः, अनुमितिरपीति-काणादबौद्धाः, उपमितिरपीति नैयायिकैकदेशिनः, शाब्दमपीति-नैयायिकाः, अर्थापत्तिरपीति प्राभाकराः, आनुपलब्धिकोऽपीति भाट्टवेदान्तिनौ, सांभविकैतिह्यकावपीति-पौराणिकाः, चैष्टिकोऽपीति तान्त्रिकाः॥ **तत्र** प्रत्यक्षाऽनुमित्युपमितिशाब्दभेदेनाऽनुभवश्चतुर्विध इति**नैयायिकाः**। अन्येषामन्तर्भावश्च 'व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः'-(१४४)इत्यादिना स्वयं करिष्यते। प्रत्यक्षाद्यतिरिक्तत्वं चानुमानादीनां 'शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते'१४०इत्यत्र प्रसंगेन दर्शयिष्यामस्ततोऽवगन्तव्यम्॥ मुक्तावल्या**मेतासामिति**। प्रत्यक्षानुमित्युपमितिशाब्दबोधाख्यानां चतसृणां, **करणानि**=व्यापारवत् कारणानि, चत्वारि वेदितव्यानि, कानि तानीत्यतो न्यायसूत्रप्रमाणप्रदर्शनपूर्वकं नामान्याह-**प्रत्यक्षानुमानेति**। प्रत्यक्षप्रमितेः षड्विधसन्निकर्षादिव्यापारवत्त्वे सति कारणं=करणम् प्रत्यक्षं प्रमाणं, प्रतिगतमक्षं-प्रतिगमकम्,-इन्द्रियमित्यर्थः॥ अनुमित्यात्मकप्रमितेः परामर्शात्मकव्यापारवत्त्वे सति कारणं=करणम् अनुमानम्,-अनुमीयतेऽनेनेति-अनुमानम्=व्याप्तिज्ञानम्। उपमित्यात्मकप्रमाया उपदिष्टवाक्यार्थस्मरणात्मकव्यापारवत्त्वे सति कारणम्=करणम्-उपमानम्-उपमीयतेऽनेनेति व्युत्पत्त्या उपमानम्=सादृश्यज्ञानम्। शाब्दबोधात्मकप्रमायाः पदार्थस्मरणात्मकव्यापारवत्त्वे सति कारणं=करणं-शब्दः-पदज्ञानमिति तदर्थः॥ उक्तप्रमासु प्रथमोपस्थितप्रत्यक्षप्रमां लक्षयति-**इन्द्रियजन्यमिति**। इन्द्रियजन्यत्वे सति ज्ञानत्वं प्रत्यक्षप्रमाया लक्षणम्। अनुमित्यादावतिव्याप्तिवारणाय-इन्द्रियजन्यत्वे इति। इन्द्रियवृत्तिरूपादावतिव्याप्तिवारणाय-ज्ञानमिति॥ एतल्लक्षणस्यानुमित्यादावतिव्याप्तिं शंकते-**यद्यपीति**। मनःस्वरूपं यदिन्द्रियं तज्जन्यं सर्वमेव प्रत्यक्षानुमित्युपमितिशाब्दादिज्ञानं भवति, ज्ञानत्वावच्छिन्नं

पीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने करणत्वं तत्प्रत्यक्षमिति विवक्षितम्। ईश्वरप्रत्यक्षं तु न लक्ष्यम्। 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमि'ति सूत्रे तथैवोक्तत्वात्। अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। अनुमितौ व्याप्तिज्ञानस्योपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मृतावनुभवस्य करणत्वात्तत्र तत्र नातिव्याप्तिः। इदं लक्षणमीश्वरप्रत्यक्षसाधारणम्।

---

प्रति आत्मना सह मनःसंयोगस्य कारणत्वात्, अतोऽनुमित्यादौ तल्लक्षणस्यातिव्याप्तिरितिभावः॥ समाधत्ते-**तथापीति**। अयं भावः-मनसि धर्मद्वयं वर्तते इन्द्रियत्वं मनस्त्वं च, तत्र ज्ञानत्वावच्छिन्नं प्रति मनसो मनस्त्वावच्छिन्नतया कारणत्वं, न तु इन्द्रियत्वावच्छिन्नतया। प्रत्यक्षप्रमामात्रं प्रति तु मनस इन्द्रियत्वावच्छिन्नतया कारणत्वम्, चक्षुरादीन्द्रियाणामपीन्द्रियत्वावच्छिन्नतया कारणत्वं भवति। अतः-प्रत्यक्षप्रमितिकरणतावच्छेदको धर्म इन्द्रियत्वम्, तेनेन्द्रियत्वेन **रूपण**=धर्मेण **इन्द्रियाणां** चक्षुरादीनां, **यत्र ज्ञाने**-प्रत्यक्षप्रमित्यात्मकं प्रति, **करणत्वम्**-व्यापारवदसाधारणकारणत्वं, तज्ज्ञानं प्रत्यक्षप्रमितिरित्यर्थः। 'इन्द्रियत्वावच्छिन्न-व्यापारसम्बन्धावच्छिन्न-जनकतानिरूपितजन्यतावज्ज्ञानत्वमि'ति लक्षणार्थो बोध्यः॥ **अन्ये** तु प्रत्यक्षं प्रति इन्द्रियाणाम् इन्द्रियत्वव्याप्यघ्राणत्वादिना कारणत्वात्-"घ्राणत्वाद्यन्यतमावच्छिन्नव्यापारसम्बन्धावच्छिन्नकारणतानिरूपितकार्यतानिरूपितसमवायातिरिक्तसम्बन्धानवच्छिन्नाऽवच्छेदकताश्रयजातिमत्त्व'मिति लक्षणं कल्पयन्ति॥

ननु परमेश्वरे समवेता या नित्यज्ञानात्मिका प्रत्यक्षप्रमा सा नित्यत्वात् न इन्द्रियजन्या, तत्र परमेश्वरसमवेतप्रत्यक्षप्रमायामव्याप्तिरित्याशंकायां परमेश्वरप्रमाया एतल्लक्षणाऽलक्ष्यत्वंदर्शयति-**ईश्वरप्रत्यक्षं तु न लक्ष्यमिति**। परमेश्वरसमवेता नित्या प्रमा तु न 'इन्द्रियजन्यं ज्ञान'मितिलक्षणस्य लक्ष्यं, किन्तु जैवं जन्यप्रत्यक्षमेव लक्ष्यमिति, अतो नाव्याप्तिशंकाऽपीति भावः॥ उक्तार्थे न्यायसूत्रं प्रमाणयति-**इन्द्रियार्थेति**। इन्द्रियस्य चक्षुरादेः, अर्थेन-घटादिना सह, सन्निकर्षात्-संयोगादिषड्विधव्यापारात्, उत्पन्नम्-जन्यते यद् अव्यभिचारि ज्ञानं तत्प्रत्यक्षमिति सूत्रे लक्षणांशः। 'शुक्तौ-इदं रजत'मिति जायमानं भ्रमज्ञानमपि इन्द्रियार्थसन्निकर्षोत्पन्नम्, अतस्तत्रातिव्याप्तिस्तद्वारणाय सूत्रे-अव्यभिचारीत्युक्तम्। व्यभिचारपदार्थोऽत्र भ्रमः, अव्यभिचारि=भ्रमभिन्नमित्यर्थः। तथा च-'इन्द्रियार्थसन्निकर्षोत्पन्नं भ्रमभिन्नं ज्ञानं प्रत्यक्षं, तच्च द्विविधम्-अव्यपदेश्यम्, व्यवसायात्मकं चेतिसूत्रार्थः। 'अयं घट' इति व्यपदेशः शब्दव्यवहारः, तस्य अयोग्यम्-अव्यपदेश्यम्-निर्विकल्पकमित्यर्थः। व्यवसायः-'अयं घट'इत्यादिविशिष्टव्यवहारविषयकम्, सविकल्पकमित्यर्थः। एतत्सूत्रे तथैव=जीवसमवेताऽनित्यप्रत्यक्षप्रमात्मकज्ञानस्यैव लक्षितत्वात्, अस्माभिरपि अनित्यप्रत्यक्षप्रमाया लक्षणं कृतमतो न न्यूनतेति भावः॥ ईश्वरप्रत्यक्षप्रमाया अपि लक्ष्यत्वमभिप्रेत्याह-**अथवेति**। ज्ञानाकरणकत्वे सति ज्ञानत्वमिति लक्षणम्। ज्ञानं व्याप्तिज्ञानं, सादृश्यज्ञानं, पदज्ञानं, अनुभवश्च न भवति करणं यत्र तत् ज्ञानम्-प्रत्यक्षमिति तदर्थः॥ अस्मत्प्रत्यक्षे परमेश्वरप्रत्यक्षे च व्याप्तिज्ञानादीनामकरणत्वात् ज्ञानाकरणकत्वे सति ज्ञानत्वस्योभयत्र सत्त्वाल्लक्षणसमन्वय इति॥ 'ज्ञानाऽकरणकत्वा'नुपादाने अनुमित्यादौ सर्वत्र ज्ञानेतिव्याऽप्तिः स्यात्, तदुपादाने तु नातिव्याप्तिरिति दर्शयति-**अनुमितौ**-इति। अनुमितिं प्रति व्याप्तिज्ञानं, उपमितिं प्रति सादृश्यज्ञानं, शाब्दबोधं प्रति पदज्ञानं करणं, स्मृतिं प्रति अनुभवः करणम्, प्रत्यक्षप्रमां प्रति तु न किमपि ज्ञानं करणं, अतो ज्ञानाऽकरणकं ज्ञानमिति लक्षणस्य, तत्र तत्र=अनुमित्यादौ नातिव्याप्तिरित्यर्थः॥ ईश्वरप्रत्यक्षप्रमायां च समन्वय इत्याह-**इदं लक्षणमिति**। 'ज्ञानाकरणकं ज्ञान'मितिलक्षणं परमे-

**परामर्शजन्यं ज्ञानमनुमितिः । यद्यपि परामर्शप्रत्यक्षादिकं परामर्शजन्यं तथापि परामर्शजन्यं हेत्वविषयकं ज्ञानमनुमितिः । न च कादाचित्कहेतुविषयकानुमितावव्याप्तिरिति वाच्यम्, तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ।**

श्वरीयनित्यप्रत्यक्षात्मकप्रमायाः अपि साधारणं—वर्तमानं बोध्यमिति ॥ ननु निदिध्यासनद्वारा मननादिद्वारा ज्ञानकरणके योगिप्रत्यक्षे एतल्लक्षणस्याऽव्याप्तिरिति चेन्न । 'ज्ञानकरणकत्वाऽव्यभिचारिजातिशून्यज्ञानत्व'मिति तदर्थत्वात् । तादृशी जातिरनुमितित्वादिरेव ॥ क्रमप्राप्तानुमितिं लक्षयति—**परामर्शेति** । व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः, परामर्शजन्यं ज्ञानमनुमितिः । भवति हि 'वह्निव्याप्यधूमवान्पर्वत'इत्याकारकं ज्ञानं व्याप्तिविशिष्टपक्षधर्मताज्ञानम्, स एव परामर्शः, तज्जन्यं 'पर्वतो वह्निमानि'तिज्ञानम् अनुमितिरिति तत्र—'परामर्शजन्यत्वे सति ज्ञानत्व'मित्यनुमितिलक्षणसमन्वयः, प्रत्यक्षादावतिव्याप्तिवारणाय—सत्यन्तम् । परामर्शध्वंसादावतिव्याप्तिवारणाय-ज्ञानत्वमिति 'व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वे सति ज्ञानत्व'मिति लक्षणार्थो बोध्यः । एतल्लक्षणस्य प्रत्यक्षेऽतिव्याप्तिं शंकते—**यद्यपीति** । यथा घटस्य प्रत्यक्षं घटजन्यं, घटप्रत्यक्षे विषयविधया घटस्य कारणत्वात्, कारणतावच्छेदकं विषयत्वं न तु घटत्वं, तद्वत् 'वह्निव्याप्यधूमवान्पर्वत'इति यत् परामर्शात्मकं ज्ञानं तस्यापि मानसप्रत्यक्षं ज्ञानं 'परामर्शं जानामी'त्याकारकं जायते, तत्र परामर्शस्य विषयतया कारणत्वात्, विषयतया परामर्शजन्यं यत् परामर्शात्मकज्ञानस्य प्रत्यक्षात्मकमानसज्ञानं तत्र 'परामर्शजन्यत्वे सति ज्ञानत्व'मित्यनुमितिलक्षणस्यातिव्याप्तिः ॥

**ननु**—व्याप्यप्रकारकपक्षविशेष्यकनिश्चयत्वावच्छिन्न( परामर्श )जन्यत्वे सति ज्ञानत्व'मिति लक्षणं वक्तव्यम्, परामर्शविषयकप्रत्यक्षे तु परामर्शस्य व्याप्यप्रकारकपक्षविशेष्यकनिश्चयत्वावच्छिन्नतया अकारणत्वाद् विषयत्वावच्छिन्नतयैव कारणत्वान्नातिव्याप्तिरित्यतः प्रत्यक्षादिकमित्यत्राऽऽदिग्रहणम् । आदिना—'वह्निव्याप्यधूमवत्पर्वतवानयं देश'—इति विशिष्टवैशिष्ट्यावगाहिबोधपरिग्रहः । तत्र विशेषणविधया—व्याप्यप्रकारकपक्षविशेष्यकनिश्चयस्य 'वह्निव्याप्यधूमवत्पर्वत'इत्यस्य कारणत्वात्, तत्रातिव्याप्तिरिति भावः ॥ समाधत्ते—**तथापीति** । 'परामर्शजन्यत्वे सति हेत्वविषयकत्वे सति ज्ञानत्व'मित्यनुमितिलक्षणम्, परामर्शजन्यायां 'पर्वतो वह्निमानि'त्यनुमितौ 'पर्वतो वह्निश्चे'त्युभौ विषयौ भवतः, तत्र धूमात्मकहेत्वंशो नास्ति प्रविष्टः । परामर्शजन्ये प्रत्यक्षे वह्निव्याप्यधूमवत्पर्वतं जानामीत्यत्र, विशिष्टवैशिष्ट्यज्ञाने वह्निव्याप्यधूमवत्पर्वतवान् देश इत्यत्र च, धूमात्मकहेतोः प्रविष्टत्वात् ते ज्ञाने न हेत्वविषयके किन्तु हेतुविषयके भवतः, अतो न तत्रातिव्याप्तिरिति भावः ॥ पुनरव्याप्तिं शंकते—**न च कादाचित्केति** । कदाचित्काले—वह्निव्याप्यधूमवान्पर्वत इति परामर्शात् 'धूमवत्पर्वतो वह्निमान्'—इत्याकारिका हेतुविषयिणी अधिकावगाहिन्यनुमितिरपि भवति, तत्र हेतोः धूमस्य पक्षांशे विशेषणतया विषयत्वात्, 'परामर्शजन्यं हेत्वविषयकं ज्ञान'मित्यनुमितिलक्षणमव्याप्तमित्यर्थः ॥ समाधत्ते—**तादृशज्ञानेति** । तादृशज्ञानं,=व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं यदनुमित्यात्मकं 'पर्वतो वह्निमानि'ति ज्ञानं,तत्र वर्तमाना या अनुभवत्वव्याप्या जातिः—अनुमितित्वं, समवायेन तद्वत्त्वमित्यर्थः ॥ तेन 'धूमवान् पर्वतो वह्निमानि'त्याकारायामनुमितौ 'हेत्वविषयक'त्वात्मकविशेषणांशस्याऽसत्त्वेऽपि अनुमितित्वजातेः सत्त्वाल्लक्षणसमन्वयः ॥ घटज्ञानेऽतिव्याप्तिवारणाय जन्यान्तम् । ध्वंसेऽनुभवत्वव्याप्यजातेरप्रसिद्धत्वादसंभववारणाय—द्वितीयं ज्ञानपदम् । सत्तामादाय प्रत्यक्षादावतिव्याप्तिवारणाय अनुभवत्वव्याप्येति । अनुभवत्वन्यूनवृत्तिकत्वमिति तदर्थः, तेन न समव्याप्तमनुभवत्वमादाय प्रत्यक्षादावतिव्याप्तिः ॥ जातिमत्त्वं च समवायेन बोध्यम् तेन कालिकेन जातिमति काले नाऽति

**अथवा व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः। एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः। पदज्ञानकरणकं ज्ञानं शाब्दबोधः। वस्तुतस्तु यां कांचिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमनुमितित्वम्। एवं यत्किंचित्प्रत्यक्षादिकमादाय**

---

व्याप्तिः॥ **तथाच**–'व्याप्तित्वावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपित-पक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ननिष्ठजनकतानिरूपितजन्यतावत्–'पक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नविधेयताकज्ञानवृत्त्यनुभवत्वन्यूनवृत्तिजातिनिष्ठाऽधेयतानिरूपितसमवायावच्छिन्नाधिकरणतावत्त्वमनुमितित्व'मिति फलितोऽर्थः॥ **एतादृशार्थे**-पक्षतावच्छेदकावच्छिन्नविशेष्यताघटिततया निश्चयत्वघटकतदभावाऽप्रकारकत्वघटिततया च गौरवमतो लघुलक्षणमाह–**अथवेति**। व्याप्तिज्ञानम् अनुमानखण्डे (६९) कारिकया वक्ष्यमाणं,'हेतुमन्निष्ठात्यन्ताभावाऽप्रतियोगिसाध्यसामानाधिकरण्या'त्मकधर्मरूपाया व्याप्तेर्धूमे प्रकारतया जायमानं यत् प्रत्यक्षज्ञानं 'यत्र धूमस्तत्र वह्नि'रित्याद्याकारकं, तदेव करणम्–व्यापारवदसाधारणकारणं यस्य ज्ञानस्य तज्ज्ञानमनुमितिरित्यर्थः॥ उपमित्यादावतिव्याप्तिवारणाय–व्याप्तीति। व्याप्तिकरणके व्याप्त्यनुव्यवसायेऽतिव्याप्तिवारणाय-ज्ञानेति। व्याप्तिज्ञानजन्ये परामर्शेऽतिव्याप्तिवारणाय–करणकमिति। व्याप्तिज्ञानकरणके परामर्शजन्यसंस्कारेऽतिव्याप्तिवारणाय–द्वितीयं ज्ञानपदम्॥ ननु व्याप्तौ हेतुतावच्छेदकधर्मसम्बन्ध,–साध्यतावच्छेदकधर्मसम्बन्धानामननुगमाद् एकां धूमादिनिष्ठां कांचिद्व्याप्तिमादाय लक्षणसमन्वयकरणे तदजन्याऽनुमितावव्याप्तिरिति चेन्न। एकां तादृशव्याप्तिज्ञानजन्यामनुमितिमुपादाय तत्र वृत्तिरनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षणेनाऽदोषात्॥ क्रमेणोपमितिलक्षणमाह–**एवमिति**। सादृश्यज्ञानं करणं यस्य तज् ज्ञानम् उपमितिः। प्रत्यक्षादावतिव्याप्तिवारणाय–सादृश्येति। सादृश्यकरणके सादृश्यानुव्यवसायेऽतिव्याप्तिवारणाय–ज्ञानेति। वाक्यार्थस्मरणात्मके व्यापारेऽतिव्याप्तिवारणाय–करणकमिति। सादृश्यज्ञानकरणके–वाक्यार्थस्मरणजन्यसंस्कारेऽतिव्याप्तिवारणाय ज्ञानमिति विशेष्यपदम्॥ शाब्दबोधलक्षणमाह–**पदेति**। प्रत्यक्षादावतिव्याप्तिवारणाय–पदेति। पदकरणके पदानुव्यवसायेऽतिव्याप्तिवारणाय–ज्ञानेति। पदार्थस्मरणेऽतिव्याप्तिवारणाय–करणकमिति। पदज्ञानकरणके पदार्थस्मरणजन्यसंस्कारेऽतिव्याप्तिवारणाय–ज्ञानमिति विशेष्यपदम्। ननु–व्याप्तिज्ञानकरणकत्वं व्याप्तिज्ञाननिष्ठव्यापारसम्बन्धावच्छिन्नकारणतानिरूपितकार्यत्वं, तत्रापि घटकीभूतव्याप्तिः साध्यसाधनभेदेन भिन्नैवेति एकैकव्याप्तिघटितलक्षणस्य तदजन्यानुमितावव्याप्तिवारणाय–एकैकव्याप्तिमुपादाय 'तादृशव्याप्तिज्ञाननिष्ठव्यापारसम्बन्धावच्छिन्नकारणतानिरूपितकार्यत्वावच्छिन्नाऽनुमितिवृत्त्यनुभवत्वव्याप्यजातिमत्त्वमि'ति लक्षणं परिष्करणीयं, तत्र 'तादृशव्याप्तिज्ञाननिष्ठव्यापारसम्बन्धावच्छिन्नकारणतानिरूपितकार्यत्वावच्छिन्नतया अनुमितेर्निवेशाऽपेक्षया लाघवात् तद्व्यक्तित्वेनैवानुमितिर्निवेशनीयेत्यभिप्रायेणाह–**वस्तुतस्त्विति**। 'पर्वतो वह्निमानि'त्याद्यनुमितिव्यक्तिमात्रं गृहीत्वा तस्यां व्यक्तौ वर्तमाना प्रत्यक्षज्ञाने चाऽवर्तमाना या जातिरनुमितित्वं तद्वत्त्वमित्यर्थः। अनुमितित्वजातिमत्त्वमेवानुमितित्वमिति भावः॥ घटेऽतिव्याप्तिवारणाय–वृत्त्यन्तम्। अनुभवत्वमादाय प्रत्यक्षादावतिव्याप्तिवारणाय–प्रत्यक्षाऽवृत्तीति। अनुमित्युपमित्यन्यतरत्वमादायोपमितावतिव्याप्तिवारणाय–जातिपदम्। जातिमत्त्वं समवायेन बोध्यम्, अन्यथाऽनुमितित्ववत्त्वस्य कालिकेन कालादावतिव्याप्त्यापत्तेः॥ प्रत्यक्षादिलक्षणमपि लाघवात्तथैव वक्तव्यमित्याशयेनाह–**एवमित्यादि**। अनुमितिलक्षणवदित्यर्थः॥ यत्किंचिद्घटप्रत्यक्षमादाय तत्र घटप्रत्यक्षे वर्तमानाऽनुमिताववर्तमाना प्रत्यक्षत्वजातिस्तद्वत्त्वं प्रत्यक्षप्रमालक्षणम्। प्रत्यक्षत्वजातिमत्त्वं प्रत्यक्षप्रमालक्षणमिति भावः॥

तद्व्यक्तिवृत्त्यनुमित्यवृत्तिजातिमत्त्वं प्रत्यक्षत्वादिकं वाच्यमिति ॥

**घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥**

जन्यप्रत्यक्षं विभजते–घ्राणजादीति । घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति षड्विधं प्रत्यक्षम् । न चेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वम्, जन्यप्रत्यक्षस्यैव निरूपणीयत्वाद् उक्तसूत्रानुसारात् ॥ ५२ ॥

**घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ।**
**तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥ ५३ ॥**

---

घटेऽतिव्याप्तिवारणाय–वृत्त्यन्तम् । अनुभवत्वमादाय–अनुमित्यादावतिव्याप्तिवारणाय–अनुमित्यवृत्तिरिति । प्रत्यक्षोपमित्यन्यतरत्वमादायोपमितावतिव्याप्तिवारणाय–जातिपदम् । जातिमत्त्वं समवायेन बोध्यम्, तेन कालिकेन प्रत्यक्षत्ववत्त्वस्य काले नातिव्याप्तिरिति ॥ **आदिना**–'गवयो गवयपदवाच्य' इति यत्किञ्चिदुपमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षाऽवृत्तिजातिमत्त्वम् उपमितित्वम् । घटेऽतिव्याप्तिवारणाय–वृत्त्यन्तम् । अनुमित्यादावतिव्याप्तिवारणाय–प्रत्यक्षाऽवृत्तीति । उपमितिशाब्दबोधान्यतरत्वमादाय शाब्दबोधेऽतिव्याप्तिवारणाय–जातिपदम् । जातिमत्त्वं समवायेन बोध्यम् । तेन उपमितित्ववत्त्वस्य कालिकेन काले नातिव्याप्तिः ॥ **एवम्**–'यत्किञ्चिच्छाब्दबोधव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षाऽवृत्तिजातिमत्त्वं शाब्दबोधत्वमिति । घटेऽतिव्याप्तिवारणाय–वृत्त्यन्तम् । प्रत्यक्षादावतिव्याप्तिवारणाय–प्रत्यक्षाऽवृत्तिरिति । शाब्दबोधानुमित्यन्यतरत्वमादायाऽनुमितावतिव्याप्तिवारणाय–जातिपदम् । जातिमत्त्वं समवायेन बोध्यम् । तेन काले नातिव्याप्तिः ॥ **अत्र** 'तद्व्यक्तिसमवेताऽनुभवत्वन्यूनवृत्तिधर्मसमवायित्व'मिति लक्षणचतुष्टयस्यैकशब्देनापि वक्तुं शक्यत्वात् लक्षणचतुष्टयस्य विभिन्नप्रदर्शनं शिष्यबुद्धिवैशद्यार्थमिति बोध्यम् ॥ ५१ ॥

मूले–**घ्राणजादीति** । लौकिकसन्निकर्षजन्यं प्रत्यक्षं घ्राणजादिषड्विधं बोध्यमित्यर्थः । अलौकिकसन्निकर्षजन्यप्रत्यक्षं तु त्रिविधं (६३) कारिकया वक्ष्यते इति मूलाशयः ॥ मुक्तावल्यां **जन्यप्रत्यक्षमिति** । स्वसमभिव्याहृतपदार्थतावच्छेदक–व्याप्यमिथोविरुद्धयावद्धर्मप्रकारकज्ञानानुकूलव्यापारो विभजतेरर्थः । स्वं–विभजतिः । तथा च सर्वानुगतैकजन्यप्रत्यक्षत्वाऽवान्तर-घ्राणजत्वाद्यवान्तरजात्यवच्छिन्नधर्मिप्रतिपादनानुकूलकृतिमान् ग्रन्थकार इति बोधः । घ्राणजम्=घ्राणेन्द्रियजन्यप्रत्यक्षम्, रासनम्=रसनेन्द्रियजन्यप्रत्यक्षम्, चाक्षुषं=चक्षुरिन्द्रियजन्यप्रत्यक्षम्, स्पार्शनं–त्वगिन्द्रियजन्यप्रत्यक्षम्, श्रौत्रं–श्रोत्रेन्द्रियजन्यप्रत्यक्षम्, मानसं=मनइन्द्रियजन्यप्रत्यक्षमिति षड्विधं बोध्यम् । ननु–ईश्वरसमवेतं प्रमात्मकं प्रत्यक्षं सप्तमं कुतो नोक्तम्, तथा च ग्रन्थस्य न्यूनता, इत्याशंकते–**नचेश्वरेति** । ईश्वरसमवेतनित्यप्रत्यक्षप्रमाया अविभजनात्=सप्तमत्वेन विभागाऽकरणाद् ग्रन्थन्यूनतेत्यर्थः ॥ समाधत्ते–**जन्येति** । जन्यम्–इन्द्रियजन्यं यज् जीवात्मसमवेतप्रमात्मकप्रत्यक्षं तस्यैव, निरूपणीयत्वात्=विभाज्यत्वेनाऽभिप्रेतत्वादित्यर्थः ॥ तत्र प्रमाणमाह–**उक्तेति** । 'इन्द्रियार्थसन्निकर्षोत्पन्न'–मित्यादिदर्शितन्यायसूत्रानुसारादित्यर्थः ॥ तथा च–'प्रत्यक्षं द्विविधं–नित्यमनित्यं च, नित्यमेकमेवेश्वरस्य । अनित्यं तच्च षड्विधं, घ्राणजादि, इति विभागेन बोध्यमिति न ग्रन्थस्य न्यूनतेति भावः ॥ ५२ ॥

मूले–**घ्राणस्येति** । घ्राणेन्द्रियस्य, गोचरः,=प्रत्यक्षविषयः, गन्धः, गन्धत्वं, आदिना गन्धाऽभावः, गन्धत्वाऽभावश्च, स्मृतः=बोध्य इत्यर्थः ॥ तथा–तद्वत् । रसज्ञायाः–रसनेन्द्रियस्य, प्रत्यक्ष-

गोचर इति। ग्राह्य इत्यर्थः। गन्धत्वादिरिति ॥ आदिपदात् सुरभित्वादिपरिग्रहः। गन्धस्य प्रत्यक्षत्वात्तद्वृत्तिजातिरपि प्रत्यक्षा, गन्धाश्रयग्रहणे तु घ्राणस्यासामर्थ्यमिति बोध्यम्। तथा रस इति। रसत्वादिसहित इत्यर्थः। तथा शब्दोऽपि शब्दत्वादिसहितः। गन्धो रसश्च–उद्भूतो बोध्यः ॥ ५३ ॥

उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये।
विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥
क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः।
गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः ॥ ५५ ॥

उद्भूतरूपमिति। ग्रीष्मोष्मादावनुद्भूतं रूपमिति न तत्प्रत्यक्षम्। तद्वन्ति=उद्भूतरूपवन्ति ॥५४॥ योग्येति। पृथक्त्वादिकमपि योग्यव्यक्तिवृत्तितया बोध्यम् ॥ तादृशः=योग्यव्यक्तिवृत्तिरित्यर्थः। चक्षुर्योग्यत्वमेव कथं तदाह–गृह्णातीति। आलो-

---

विषयो रसो रसत्वं रसाभावो रसत्वाऽभावश्चेत्यर्थः। तथा श्रुतेः–श्रोत्रेन्द्रियस्य प्रत्यक्षः शब्दः शब्दत्वं शब्दाभावः शब्दत्वाऽभावश्चेत्यर्थः ॥ मुक्तावल्यां–ग्राह्य इति। गोचरपदस्य विषयत्वे शक्तेः,–ग्राह्य इत्यर्थः कृतः। सुरभित्वादीत्यत्रादिपदात् असुरभित्वपरिग्रहः ॥ तद्वृत्तिजातिः–गन्धवृत्तिगन्धत्वजातिः। ननु पृथिव्याअपि प्रत्यक्षं कथं न भवतीत्यत आह–गन्धाश्रयेति। गन्धसमवायिकारणस्य पृथिव्याः प्रत्यक्षकरणे तु घ्राणस्य, असामर्थ्यम्=करणत्वाऽभाव इत्यर्थः ॥ रसत्वादिसहित इत्यत्रादिपदात् मधुरत्वाम्लत्व-लवणत्व-कटुत्व-कषायत्व-तिक्तत्वग्रहणम् ॥ शब्दत्वादीत्यत्रादिपदात् कत्वखत्वादिपरिग्रहः ॥ अनुद्भूतस्य गन्धस्य रसस्य चाऽग्रहणात्–गन्धो रसश्चोद्भूतो बोध्य इत्युक्तम्। उद्भूतत्वं—'यद्येतत्प्रत्यक्षप्रयोजकसन्निकर्षवत् स्यात्तर्ह्युपलभ्येते'त्यापादनविषयत्वम्। अथवा–अनुद्भूतत्वाऽभावः–उद्भूतत्वं, अनुद्भूतत्वं–चोपाधिः शुक्लत्वादिव्याप्यो नानाविध इति बोध्यम् ॥५३॥

मूले–उद्भूतरूपमिति। नयनस्य=चक्षुरिन्द्रियस्य, गोचरः=प्रत्यक्षविषयः, उद्भूतरूपं रूपत्वं रूपाभावश्च भवति, तथा तद्वन्ति=उद्भूतरूपवन्ति, द्रव्याणि अपि पृथिवीजलतेजांसि, पृथिवीत्वजलत्वतेजस्त्वानि तदभावाश्च चक्षुषः प्रत्यक्षाणि भवन्ति, तथा पृथक्त्वं, संख्या, विभागः, संयोगः, परत्वम्, अपरत्वम्, स्नेहः, द्रवत्वम्, परिमाणम्, क्रिया=उत्क्षेपणाद्यात्मिका पञ्चविधा, जातिः,–एते सर्वे, तथा पृथक्त्वत्वादिजातयः, तदभावाश्च, योग्ये=प्रत्यक्षविषयेऽधिकरणे वृत्तयो यदि स्युस्तदा चक्षुषः प्रत्यक्षा भवन्तीति। समवायसम्बन्धोऽपि,–तादृशः=प्रत्यक्षद्रव्यवृत्तिः प्रत्यक्षः, समवायत्वं तदभावश्च तथा बोध्यः। एतान् सर्वान् चक्षुः आलोकस्य=प्रकाशस्य उद्भूतरूपस्य च साक्षात्सम्बन्धेन परम्परया च यथायोग्यं गृह्णाति=प्रत्यक्षं करोतीत्यर्थः ॥ मुक्तावल्याम् उद्भूतत्वनिवेशप्रयोजनमाह–ग्रीष्मेति। ग्रीष्मसमये या सूर्योष्मणि भर्जनकपालस्थवह्नौ मर्चिकादिस्थतेजःप्रभृतिषु चाऽनुद्भूतं रूपमिति तेषां न चक्षुषा प्रत्यक्षं भवतीत्यर्थः ॥ 'तद्वन्ति'पदस्यार्थमाह–उद्भूतरूपवन्तीति। न्यूनतां परिहर्तुमाह–पृथक्त्वादिकमपीति। योग्यव्यक्तिः=लौकिकप्रत्यक्षयोग्यपदार्थः, तत्र समवायेन वृत्तितयेत्यर्थः ॥ 'तादृश'इति पदस्यार्थमाह—योग्यव्यक्तिवृत्तिरिति। चक्षुःप्रत्यक्षयोग्यपदार्थसमवेत इत्यर्थः ॥ चक्षुर्योग्यत्वमेवेति। कथं=केन प्रयोजकेन पृथक्त्वादिकं चक्षुर्जन्यप्रत्यक्षविषयं भवतीत्यर्थः ॥ आलोकसंयोग उद्भूतरूपं च चाक्षुषप्रत्यक्षे च=चक्षुरिन्द्रि-

**कसंयोग उद्भूतरूपं च चाक्षुषप्रत्यक्षे कारणम्। तत्र द्रव्यचाक्षुषं प्रति तयोः समवायसम्बन्धेन कारणत्वम्। द्रव्यसमवेतरूपादिप्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन। द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेनेति ॥५५॥**

**उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः।**
**रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥ ५६ ॥**
**द्रव्याध्यक्षे, त्वचो यागो मनसा ज्ञानकारणम्।**

**उद्भूतेति। उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः। सोऽपि=उद्भूतस्पर्शोऽपि, स्पर्शत्वादिसहितः। रूपान्यदिति। रूपभिन्नं रूपत्वादिभिन्नं च यच्चक्षुषो योग्यं**

---

यजन्यलौकिकसर्वविधप्रत्यक्षेइत्यर्थः॥ तयोः केन केन सम्बन्धेन कुत्र कुत्र कारणत्वमिति स्फुटमाह— **तत्रेति।** घटपटादिद्रव्यविषयकं चाक्षुषप्रत्यक्षं कार्यं विषयतासम्बन्धेन घटादौ वर्तते तत्र समवायसम्बन्धेन कारणे आलोकसंयोगोद्भूतरूपे वर्तेते, अतो विषयतासम्बन्धेन द्रव्यविषयकप्रत्यक्षं प्रति समवायसम्बन्धेन आलोकसंयोगोद्भूतरूपयोः कारणत्वमित्यर्थः। **द्रव्यसमवेतरूपादीति।** घटादिद्रव्ये समवायेन वर्तमानं यद् रूपरसादिकं तस्य विषयतासम्बन्धेन प्रत्यक्षं प्रति स्वाश्रयसमवायसम्बन्धेन आलोकसंयोगोद्भूतरूपयोः कारणत्वम्, स्वम्—आलोकसंयोग उद्भूतरूपं च, समवायेन तदाश्रयो घटः, तत्र समवायेन रूपादिकं वर्तत—इति तादृशपरम्परासम्बन्धेन कारणम् आलोकसंयोगोद्भूतरूपे घटरूपे वर्तते इति॥ **द्रव्यसमवेतसमवेतस्येति।** घटादिद्रव्यसमवेते रूपादौ समवेतं यद्रूपत्वादिकं जातिस्तत्प्रत्यक्षं प्रति स्वाश्रयसमवेतसमवायसम्बन्धेन आलोकसंयोगोद्भूतरूपयोः कारणत्वम्, स्वम्—आलोकसंयोगोद्भूतरूपे, तदाश्रयो घटस्तत्र समवेतं रूपादि तत्र समवायेन रूपत्वादिकं वर्तत इति तादृशपरम्परया कारणम् आलोकसंयोगउद्भूतरूपं च रूपत्वे वर्तेते, तत्र विषयतासम्बन्धेन कार्यं प्रत्यक्ष भवतीति भावः। ननु आलोकसंयोगोद्भूतरूपयोः कारणत्वे किं प्रमाणमिति चेत्! तर्कजन्यनिश्चय एव, यथा 'यद्यालोकसंयोगः कारणं न स्यात् तदाऽन्धकारेऽपि घटादीनाञ्चाक्षुषप्रत्यक्षं स्यात्, 'एवं यद्युद्भूतरूपं कारणं न स्यात् तदा पिशाचादीनामपि प्रत्यक्षं स्यादिति॥ ५४–५५॥

मूले–**उद्भूतस्पर्शवदिति।** उद्भूतस्पर्शवद् यद् द्रव्यं तत् त्वचो ग्राह्यम्। सोऽपि=उद्भूतस्पर्शोऽपि त्वचो ग्राह्यः। तथा चकारेण=उद्भूतस्पर्शत्वं तदभावश्च त्वग्ग्राह्य इत्यर्थः। एवं रूपान्यत्=रूपभिन्नं रूपं विहाय, यद् द्रव्यगुणादिकं चक्षुषः योग्यम्=प्रत्यक्षविषयम् भवेत्, तत् सर्वं च त्वचः प्रत्यक्षविषयम्, यथा घटादि॥ **अत्रापि**=त्वगिन्द्रियजन्यद्रव्यप्रत्यक्षेऽपि, रूपं समवायेन कारणं भवतीति प्राचीनमतम्॥ वायुस्तु न प्रत्यक्षः, किन्त्वनुमेय एव, पृथिव्यप्तेजांसि द्रव्याण्येव त्वाचप्रत्यक्षाणि भवन्ति॥ भावार्थदर्शयितुमाह—**द्रव्याध्यक्षे इति।** बहिरिन्द्रियजन्ये द्रव्यस्याऽध्यक्षे =प्रत्यक्षे समवायेन रूपं कारणं, पृथिव्यप्तेजस्सु रूपसत्त्वाच्चाक्षुषप्रत्यक्षं त्वाचप्रत्यक्षं च स्यादित्यर्थः॥ **त्वचो योग इति।** मनसा सह यस्त्वचः संयोगः स ज्ञानसामान्यं प्रति कारणमित्यर्थः॥ चाक्षुषप्रत्यक्षं निरूप्य त्वाचप्रत्यक्षं निरूपयति **मुक्तावल्यां–उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचर** इति। नवीनमते वायोस्त्वाचप्रत्यक्षत्वाद् उद्भूतस्पर्शवतां पृथिव्यप्तेजोवायूनां त्वाचप्रत्यक्षं भवतीत्यर्थः। स्पर्शत्वादीत्यत्रादिना–उष्णत्वशीतत्वादिकं तदभावश्च ग्राह्याः॥ **रूपभिन्नमिति।** रूपभिन्नं रूपत्वादिभिन्नं रूपाऽभावभिन्नं रूपत्वाद्यभावभिन्नं च यद् यद् द्रव्यगुणकर्मजातिसमवाय-तद्धर्म–

तत्त्वगिन्द्रियस्यापि ग्राह्यम् । तथा च पृथक्त्वसंख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ताः, एवं क्रियाजातयो योग्यवृत्तयश्च, ते त्वचो ग्राह्या इत्यर्थः ।

अत्रापि=त्वगिन्द्रियजन्येऽपि, द्रव्यप्रत्यक्षे रूपं कारणम् । तथा च बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम् । नवीनास्तु बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे न रूपं न वा स्पर्शः कारणं प्रमाणाभावात् । किंतु चाक्षुपप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शः कारणम् अन्वयव्यतिरेकात् । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति चेत्, न

---

तदभावात्मकपदार्थजातं चक्षुषो योग्यं=प्रत्यक्षं तत् त्वगिन्द्रियस्यापि ग्राह्यम्=प्रत्यक्षं भवतीत्यर्थः ॥ तदेव स्पष्टयति–**तथा चेति** । पृथक्त्वं संख्या विभागः संयोगः परत्वम् अपरत्वम् स्नेहो द्रवत्वम् परिमाणम् इत्यादयश्चक्षुर्ग्राह्याः, अथ क्रिया जातिः समवायः, एते ये योग्यवृत्तयः प्रत्यक्षपदार्थवृत्तयो भवन्ति ते सर्वेऽपि त्वगिन्द्रियग्राह्या इत्यर्थः ॥ **अत्रापीत्यस्यार्थः**–त्वगिन्द्रियजन्येऽपि । द्रव्याध्यक्षे-इत्यस्यार्थः–द्रव्यप्रत्यक्षे इति । तस्यैव फलितार्थमाह–**तथा च बहिरीति** । बहिरिन्द्रियं त्वक्चक्षुरुभयं तज्जन्ये द्रव्यस्य पृथिवीजलतेजआत्मकस्य प्रत्यक्षे समवायेन रूपं कारणमित्यर्थः । त्रयाणामेव स्पर्शवतां द्रव्याणां प्रत्यक्षस्वीकारात् तेषामेव त्वाचप्रत्यक्षाणां रूपवतां चाक्षुषप्रत्यक्षं, अतः स्पर्शरूपयोः कारणत्वाऽपेक्षया रूपस्यैव लाघवात्कारणत्वमिति भावः ॥ वायोः प्रत्यक्षत्ववादिनव्यनैयायिकमतमाह–**नवीनास्त्विति** । गंगेशोपाध्यायगदाधरजगदीशमथुरानाथादयो नव्यन्यायाचार्याः । अस्य 'आहु' रित्यग्रिमेणान्वयः । बहिरिन्द्रियजन्ये द्रव्यप्रत्यक्षमात्रे रूपं न कारणम् , स्पर्शोऽपि केवलो न कारणं, तस्य कारणत्वे प्रमाणाऽभावात्=वायावुद्भूतरूपाऽभावेऽपि स्पार्शनप्रत्यक्षोत्पत्तेः 'रूपसत्त्वे वायुप्रत्यक्षसत्त्वं रूपाभावे वायुप्रत्यक्षाऽभाव' इत्यन्वयव्यतिरेकसहकृतप्रत्यक्षप्रमाणाऽभावात्, प्रभायाश्च स्पर्शाऽभावेऽपि रूपेण प्रत्यक्षोपपत्तेरन्वयव्यतिरेकसहकृतप्रत्यक्षप्रमाणाभावादित्यर्थः ॥ **किन्तु** अन्वयव्यतिरेकात्='रूपसत्त्वे चाक्षुषप्रत्यक्षं रूपाऽभावे चाक्षुषप्रत्यक्षाऽभाव'इत्याकारकात्, **चाक्षुषप्रत्यक्षे**=चक्षुरिन्द्रियजन्यद्रव्यादिप्रत्यक्षे रूपं समवायादिना कारणं, अथ च स्पर्शसत्त्वे त्वाचप्रत्यक्षसत्त्वं स्पर्शाऽभावे त्वाचप्रत्यक्षाऽभाव'इत्यन्वयव्यतिरेकात् **स्पार्शनप्रत्यक्षे**=त्वगिन्द्रियजन्ये द्रव्यादिप्रत्यक्षे स्पर्शः समवायादिना कारणं भवतीति, वायोश्च त्वचा प्रत्यक्षं भवत्येवेत्यर्थः ॥ **प्राचीनाः** शंकन्ते **बहिरिन्द्रियेति** । बहिरिन्द्रियजन्ये द्रव्यविषयकप्रत्यक्षमात्रे किमनुगतं कारणमित्यर्थः ॥ नव्यः समाधातुमाह–**न किञ्चिदिति** । न किमप्यनुगतं कारणं गौरवात् , तथाहि–बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे-इत्यनेन द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति बहिरिन्द्रियस्य कारणत्वमिति लभ्यते । तत्राऽऽत्मनि कार्यसत्त्वेऽपि कारणाऽभावाद् व्यतिरेकव्यभिचारवारणाय सम्बन्धांशे द्रव्ये आत्मान्यत्वं देयम् , एवं–प्रत्यक्षत्वस्य नित्यप्रत्यक्षेऽपि सत्त्वात् कार्यतावच्छेदकत्वोपपत्तये कालिकसमवायोभयस्यैव कार्यतावच्छेदकतावच्छेदकसम्बन्धत्वं वाच्यम् । एवं बहिरिन्द्रियत्वं मनोभिन्नेन्द्रियत्वं तत्रेन्द्रियत्वं चक्षुरादिव्यक्तिभेदेन भिन्नमित्यननुगततया परस्परव्यभिचारेण सांकर्यवशाज्जातित्वाभावेन तेन रूपेण कारणत्वाऽसंभवः । यदि च व्यभिचारवारणाय बहिरिन्द्रियपञ्चकान्यतमत्वात्मकानुगतबहिरिन्द्रियत्वेन कारणत्वमुच्यते तदा घ्राणसंयुक्ते घटादौ तादृशान्यतमत्वावच्छिन्नस्य संयोगेन सत्त्वादन्धस्य रोगविशेषान्नष्टत्वगिन्द्रियस्यापि च प्रत्यक्षानुपपत्तेरन्वयव्यभिचारापत्तिः । आत्मान्यद्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति एकस्य कारणत्वे, द्रव्यगुणान्यतरादिवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति कस्यचिद्धेतुत्वकल्पनेत्यनन्ताप्रामाणिककार्यकारणभावकल्पनापत्तिरिति बोध्यम् ॥ ननु बहिरिन्द्रियजन्यप्रत्यक्षशब्देन चाक्षुषस्पार्शनत्वावच्छिन्नं बोध्यते, तं

**किंचित्, आत्माऽवृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकमस्तु। रूपस्य कारणत्वे लाघवमिति चेन्न, वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात्। इष्टापत्तिरिति चेद्, उद्भूतस्पर्श एव लाघवात्कारणमस्तु। प्रभाया अप्रत्यक्षत्वे तु, इष्टापत्तिरेव किं नेष्यते। तस्मात् प्रभां पश्यामीतिवत् वायुं स्पृशामीति प्रत्ययस्य संभवाद्वायोरपि**

---

प्रति कस्यचित्कारणत्वानंगीकारे तदभावः किंप्रयोज्यः, कार्याभावस्य कारणाभावप्रयोज्यत्वादत आह–**आत्माऽवृत्तीति**। आत्मनि न वृत्तिर्यस्य तादृशो यः शब्दभिन्नो विशेषगुणः पृथिव्यादिचतुष्टयवृत्तिः रूपादिस्तादृशगुणवत्त्वमेव=रूपादिविशेषगुण एव वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षज्ञानं प्रति प्रयोजकम् अस्तु। तथा च तादृशगुणवत्त्वाभावः तादृशप्रत्यक्षाऽभावे प्रयोजकः, पृथिव्यादिचतुष्टये तु तादृक्षगुणवत्तायाः सत्त्वात् तादृशप्रत्यक्षं निराबाधम्। आत्मनो वहिरिन्द्रियजन्यप्रत्यक्षवारणाय–आत्माऽवृत्तीति। आकाशस्य बहिरिन्द्रियजन्यप्रत्यक्षवारणाय–शब्दभिन्नेति। कालादेर्वहिरिन्द्रियजन्यप्रत्यक्षवारणाय–विशेषेति। अत्र सकलविशेषगुणसाधारणविशेषगुणत्वस्याऽभावेन रूपादिषु तत्प्रत्येकमेव पर्यवस्यतीति प्रकृते रूपत्वस्पर्शत्वान्यतरवत्त्वमेव आत्माऽवृत्तिशब्दभिन्नविशेषगुणत्वं वक्तव्यं, एवं च चाक्षुषत्वावच्छिन्नं प्रति उद्भूतरूपस्य स्पार्शनत्वावच्छिन्नं प्रति उद्भूतस्पर्शस्य च हेतुत्वस्य क्लृप्ततया चाक्षुषत्वस्पार्शनत्वान्यतरावच्छिन्नाऽभावे उद्भूतरूपत्वोद्भूतस्पर्शत्वान्यतरावच्छिन्नाभावस्य प्रयोजकत्वस्वीकारौचित्येन गगनादौ प्रत्यक्षापत्तेरभावात् चाक्षुषत्वादिघटितान्यतरावच्छिन्नं प्रति उद्भूतरूपत्वादिघटितान्यतरावच्छिन्नस्य प्रयोजकत्वमेव, न तु कार्यतावच्छेदकान्यतरावच्छिन्नं प्रति कारणतावच्छेदकान्यतरस्यापि हेतुत्वान्तरम्, अप्रामाणिकाऽनन्तकार्यकारणभावकल्पनापत्तेरित्याशयेन कारणमस्त्वित्यनुक्त्वा **प्रयोजकमस्त्वित्युक्तमिति** ध्येयम्॥ प्राचीनः शंकते॥ **रूपस्येति**। बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षं प्रति उद्भूतरूपस्यैव कारणत्वं लाघवाद्वक्तव्यमित्यर्थः। लाघवमत्र शरीरकृतम्, तद्यथा चाक्षुषप्रत्यक्षं प्रत्युद्भूतरूपत्वेन स्पार्शनप्रत्यक्षं प्रति उद्भूतस्पर्शत्वेन कारणत्वकल्पने चाक्षुषत्वस्पार्शनत्वान्यतरावच्छिन्नं प्रति उद्भूतरूपत्वोद्भूतस्पर्शत्वघटितान्यतरावच्छिन्नस्य प्रयोजकत्वकल्पने च गौरवात् तादृशान्यतरावच्छिन्नं प्रति उद्भूतरूपत्वेन हेतुत्वमेव लाघवात् कल्पनीयं, तेन अप्रामाणिकाऽनन्तकार्यकारणभावकल्पनागौरवस्याऽप्यनवकाश इत्याशयः॥ नवीनस्तन्मतं समाधत्ते–**वायोरिति**। वायौ रूपाऽभावेन त्वगिन्द्रियेण अग्रहणम्=अप्रत्यक्षं तत्प्रसंगात्, तस्माद् रूपं न कारणमित्याशयः॥ प्राचीन इष्टापत्त्या दोषाभावं स्वीकरोति—**इष्टापत्तिरिति**। स्पर्शेन लिङ्गेन वायुरनुमेयो न तु प्रत्यक्षः, अत उक्तापत्तिरिष्टैवास्माकमिति भावः॥ नवीनः विनिगमनाविरहं मन्वानः समानेन विरोध्युत्तरेण समाधत्ते–**उद्भूतस्पर्श** इति। वहिर्द्रव्यमात्रप्रत्यक्षत्वा(चाक्षुषत्वस्पार्शनत्वान्यतरा)वच्छिन्नं प्रति लाघवबलसमानयुक्त्या उद्भूतस्पर्शस्यैव कारणत्वं स्वीक्रियतामित्यर्थः॥ उद्भूतरूपत्वोद्भूतस्पर्शत्वाभ्यां कार्यकारणभावकल्पनेन तादृशान्यतरावच्छिन्नस्य चाक्षुषत्वादिघटिताऽन्यतरावच्छिन्नं प्रति प्रयोजकत्वाऽकल्पनेन च लाघवमिति भावः॥ प्राचीनः शंकते–**प्रभाया अप्रत्यक्षत्वे** इति। प्रभाया उद्भूतस्पर्शाऽभावाद् अप्रत्यक्षापत्तिः स्यादित्यर्थः॥ नवीन उत्तरयति–**इष्टापत्तिरेव किं नेष्यत** इति। प्रभाया अप्रत्यक्षत्वे एवेष्टापत्तिरभ्युपगम्यतां विनिगमनाविरहादित्यर्थः॥ नवीन उपसंहरति–**तस्मादिति**। तस्मात्=समानप्रतिबन्धात्मकबाधकसत्त्वात् 'प्रभां पश्यामी'त्यनुभवस्योभयमतसिद्धतया तदप्रत्यक्षे यथेष्टापत्तिर्नाङ्गीक्रियते तथा 'वायुं स्पृशामी'त्यनुभवस्यापि सत्त्वाद् वायोः प्रत्यक्षमपि स्वीक्रियताम्। तथा च चाक्षुषप्रत्यक्षं प्रति रूपस्य त्वाचप्रत्यक्षं प्रति स्पर्शस्य हेतुत्वं पृथक्

प्रत्यक्षं संभवत्येव । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपस्य न वा स्पर्शस्य हेतुत्वम् । वायुप्रभयोरेकत्वं गृह्यत एव, क्वचिद्द्वित्वादिकमपि, क्वचित्संख्यापरिमाणाद्यग्रहो दोषादित्याहुः ॥ ५६ ॥

त्वचइति। त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः। किं तत्र प्रमाणं ? सुपुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननमिति। ननु सुपुप्तिकाले किं ज्ञानं भविष्यति ? अनुभवरूपं स्मरणरूपं वा ? नाद्यः, अनुभवसामग्र्यभावात् । तथाहि प्रत्यक्षे चक्षुरादिना मनःसंयोगस्य हेतुत्वात्तदभावादेव न चाक्षुपादिप्रत्य-

---

पृथक् स्वीकरणीयम् । न तु बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे रूपस्यैव केवलस्य कारणत्वं स्पर्शस्यैव वा केवलस्य कारणत्वं कल्पनीयमिति ॥ नव्यः स्वमते युक्त्यन्तरमाह–वायुप्रभयोरिति । 'अयमेकः पौरस्त्यो वायुः' 'इमौ द्वौ दक्षिणोत्तराऽनिलौ'–इतिवायुगतसंख्याया यथा त्वगिन्द्रियेण ग्रहः, तथैव वायोरपि ग्रहणं । प्रभोपादानं दृष्टान्तार्थम् । यथा च 'इयमेका सौरी प्रभा' कचिच्च 'इमे द्वे प्रभे'इति प्रभागतसंख्यायाः प्रभायाश्च चक्षुषा ग्रहो भवति तद्वदित्यर्थः ॥ वायुप्रभयोर्भिन्नं भिन्नं प्रत्यक्षमिति बोध्यम् । क्वचिद्द्वित्वादिकमपीति । क्वचित्=वायुप्रभयोःविलक्षणसंयोगाऽभावस्थले, द्वित्वं परिमाणं च गृह्येते तादृशसंयोगाऽभावस्थले 'अस्मिन् गृहे एका प्रभा अन्यस्मिन्गृहे एका प्रभा' 'अयमेको वायुरयमेको वायु'रित्यपेक्षाबुद्धिसंभवात् तेन द्वित्वोत्पत्त्या 'द्वितीयोयं महान्वायुरिति'द्वित्वपरिणामप्रत्यक्षमपि संभवति, तादृशविलक्षणसंयोगसत्त्वे तु दोषात्=तादृशसम्बन्धात्मकदोषवशात्—द्वित्वाद्यनुत्पत्त्या द्वित्वादिसंख्याया महत्परिमाणस्य च अग्रहः=प्रत्यक्षाऽसंभवो भवतीति । नवीनमते आहुरित्यनेनाऽस्वरसः सूचितः, तद्बीजं तु वायोः प्रत्यक्षत्वस्य उभयवाद्यसम्मतत्वेन मध्यस्थस्य प्रत्यक्षतासन्देहविषयतया लाघवान्मूर्तप्रत्यक्षत्वावच्छिन्नं प्रति रूपत्वेनैव कारणताया उचितत्वात् । 'उपरिदेशे विहंगम'इत्यत्र प्रभामण्डलस्यैवोपरिदेशतया प्रभायाः प्रत्यक्षात् 'प्रभाया अप्रत्यक्षत्वे त्विष्टापत्तिः किं नेष्यते'–इति कथनस्याऽप्ययुक्तत्वादिति ॥ ५६ ॥

जन्यज्ञानमात्रस्य ऽसाधारणकारणमाह–त्वङ्मनःसंयोगइति । ज्ञानसामान्ये–जन्यज्ञानमात्रे कारणमित्यर्थः । अत्र प्रमाणं पृच्छति–किं तत्रेति । जन्यज्ञानमात्रं प्रति त्वङ्मनस्संयोगस्य कारणत्वे किं प्रमाणमित्यर्थः ॥ उत्तरयति–सुपुप्तिकालइति । ज्ञानाऽजननमित्यत्र प्रमाणमित्यनुपज्यते । गाढनिद्रानाड्यवच्छिन्नात्ममनोयोगः सुपुप्तिः, गाढनिद्रानाडी पुरीतत् । अत्र श्रुतिः 'हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते'(बृहदा०५।१।२१) इति । तथा च कारणाऽभावो हि कार्याऽभावप्रयोजकः, ज्ञानाऽभावं प्रति त्वङ्मनस्संयोगाभावस्य प्रयोजकत्वे युक्तितः सिद्धे सति ज्ञानसामान्यं प्रति त्वङ्मनोयोगस्य कारणत्वं सिद्धमेवेति । यदि त्वङ्मनोयोगो ज्ञानत्वावच्छिन्नं प्रति कारणं न भवेत् तदा सुपुप्त्यवस्थायामपि ज्ञानं भवेत्, नतु तदा किमपि ज्ञानं भवति, तस्मात् सुपुप्तौ ज्ञानाऽनुत्पत्तिरेव त्वङ्मनोयोगस्य ज्ञानसामान्यकारणत्वे प्रमाणमितिभावः ॥ ननु सुपुप्तौ त्वङ्मनस्संयोगाऽभावान्न ज्ञानसामान्याभावसिद्धिः, किन्तु ज्ञानविशेषसामग्र्यभावादेव, तथा च त्वङ्मनःसंयोगस्य कारणत्वं नैव स्वीकर्तव्यमित्यभिप्रायेणाशंकते–ननु इति। सुपुप्त्यवस्थायां किं=कियद्धर्मावच्छिन्नं ज्ञानमुत्पत्स्यते ?, न किमपीत्यर्थः । तद्विकल्प्य स्फुटयति–अनुभवरूपमिति । अनुभवत्वावच्छिन्नं स्मृतित्वावच्छिन्नं वा उत्पत्स्यते ?, इत्यर्थः । प्रथमपक्षं निराकरोति–नाद्य इति । अनुभवस्य इन्द्रिय–व्याप्तिज्ञान–सादृश्यज्ञान–पदज्ञानात्मिकायाः सामग्र्या अभावं दर्शयति–तथाहीति । प्रत्यक्षानुभवेऽपि चाक्षुषप्रत्यक्षे चक्षुर्मनस्संयोगः कारणं, त्वाचप्रत्यक्ष-

**क्षम्। ज्ञानादेरभावादेव न मानसं प्रत्यक्षम्, ज्ञानाद्यभावे चात्मनोऽपि न प्रत्यक्षमिति। एवं व्याप्तिज्ञानाभावादेव नानुमितिः। सादृश्यज्ञानाभावान्नोपमितिः। पदज्ञानाभावान्न शाब्दबोधः। इत्यनुभवसामग्र्यभावान्नानुभवः। उद्बोधकाभावाच्च न स्मरणम्। मैवम्। सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्संबन्धेनात्मनश्च प्रत्यक्षत्वप्रसङ्गात्। तदतीन्द्रियत्वे मानाभावात्। सुषुप्तिप्राक्काले निर्विकल्पकमेव नियमेन**

---

म्प्रति त्वङ्मनस्संयोगः कारणम्, रासनप्रत्यक्षं प्रति रसनामनस्संयोगः कारणम्, घ्राणजप्रत्यक्षे घ्राणमनस्संयोगः कारणम्, श्रावणप्रत्यक्षे श्रोत्रमनस्संयोगः कारणम्, तथा च **तदभावादेव**= चक्षुरादिना सह मनःसंयोगात्मकसामग्र्यभावादेव न चाक्षुषादिप्रत्यक्षम्=बाह्य प्रत्यक्षात्मकोऽनुभव इत्यर्थः॥ ननु बाह्यं प्रत्यक्षं मा भूत्, मानसन्तु स्यादत आह-**ज्ञानादेरभावादेवेति**। द्विविधो मानसोऽनुभवः, आत्मवृत्तिज्ञानादिगुणविषयक आत्मविषयकश्च। तत्र ज्ञानादेर्विशेषगुणस्याऽभावादेव नाद्यः। ज्ञानादिविशेषगुणयोगादेवात्मनः प्रत्यक्षस्वीकाराद् योग्यविशेषगुणात्मकज्ञानादिसामग्र्यभावादेव आत्मविषयकोऽपि नाऽनुभव इत्यर्थः। **व्याप्तिज्ञानाभावादेवेति**। व्याप्तिज्ञानं-'हेतुव्यापकसाध्यसामानाधिकरण्यरूपं, तदात्मककारणस्याऽभावात् नाऽनुमित्यात्मकं कार्यं भवति। **सादृश्यज्ञानाऽभावादिति**। अनुयोगितासम्बन्धेन तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं यत् सादृश्यं, यथा 'गोसदृशो गवयः'-तदात्मककारणाऽभावादेव नोपमित्यात्मकं कार्यं भवतीति। **पदज्ञानाऽभावादिति**। 'घटो घटपदवाच्य' इति शक्तिज्ञानसहकृतघटपदज्ञानात्मककाणाऽभावात् न शाब्दबोधः॥ **इत्यनुभवेति**। इत्येवं रीत्या चतुर्विधानुभवात्मकज्ञानस्य समग्र्या अभावात् सुषुप्तावनुभवात्मकं ज्ञानं तु नैव भवतीति॥ ननु-अस्तु तत्र स्मरणात्मकं ज्ञानम्? अत आह-**उद्बोधकाभावादिति**। स्मृतिजनकसंस्काराणाम् उद्बोधकानि यानि-'प्रणिधाननिबन्धाऽभ्यासलिङ्ग-लक्षण-सादृश्यानि' तेषां तत्राऽभावात् स्मृतिरपि न भवति। अनुद्बुद्धसंस्काराणां स्मृतावकारणत्वादिति भावः॥ तथा च सुषुप्तौ यावत्सामग्र्यभावादेव किमपि ज्ञानं न भविष्यति, तर्हि त्वङ्मनःसंयोगस्य ज्ञानसामान्यं प्रति कारणतास्वीकारोऽयुक्त इत्याशंकितुरभिप्रायः। तदेतत्खण्डयितुमाह-**मैवमिति। सुषुप्तिप्राक्काल इति**। 'सुषुप्तिप्रथमक्षणाऽव्यवहिते पूर्वस्मिन् स्वप्नान्तिमे क्षणे उत्पन्ना या इच्छादिव्यक्तिः,-इच्छाया आदिरिति व्युत्पत्त्या इच्छाकारणं ज्ञानव्यक्तिः 'अयं घट' इत्याद्याकारिका आत्मविषयकप्रत्यक्षस्य कारणीभूता विशेषसामग्री, तस्याःस्थितिक्षणात्मके सुषुप्तिप्रथमक्षणे सत्त्वात् तया सह मनसः-संयुक्तसमवायसम्बन्धसत्त्वात् तेन सम्बन्धेन ज्ञानादिगुणयोगादात्मनः 'अहं सुखी' 'अहं ज्ञानी'त्याद्याकारकस्य आत्मप्रत्यक्षस्य प्रसंगोऽवश्यं स्याद् यदि त्वङ्मनस्संयोगस्य ज्ञानसामान्यं प्रति कारणत्वं न स्वीक्रियेत। मम तु सुषुप्तिप्रथमक्षणे त्वङ्मनस्संयोगात्मककारणासत्त्वान्न ज्ञानस्य प्रत्यक्षापत्तिरिति त्वङ्मनस्संयोगस्य स्वप्नान्तिमक्षणपर्यन्तं स्वीकारात्। तथा च सुषुप्तिप्रथमक्षणे विशेषसामग्रीसत्त्वेऽपि सामान्यसामग्र्यभावान्न प्रत्यक्षापत्तिरिति भावः। ननु सुषुप्तिप्राक्कालीनज्ञानव्यक्तेः अतीन्द्रियतया सुषुप्तिकाले न आत्मप्रत्यक्षापत्तिरित्यत आह-**तदतीन्द्रियत्वे-इति**। तस्य सुषुप्तिप्राक्क्षणोत्पन्नज्ञानव्यक्तेः, अतीन्द्रियपदार्थत्वे, मानाभावात्= प्रत्यक्षादिप्रमाणाऽभावात्॥ ननु-निर्विकल्पकत्वात् सुषुप्तिप्राक्कालोत्पन्नं ज्ञानम् अतीन्द्रियमत आह-**सुषुप्तिप्राक्काल इति**। निर्विकल्पकम्=प्रकारतासंसर्गताविशेष्यताऽनवगाहिज्ञानं सुषुप्तिपूर्वक्षणे नहि नियमेन उत्पद्यते, तत्र प्रमाणाऽनुपलम्भादित्यर्थः॥ **यदि ज्ञानसामान्यं प्रति त्वङ्मनस्संयोगो न कारणम्, किन्तु विशेषसामग्री एव, तत्तज्ज्ञानं प्रति कारणं, तदा स्वप्नान्तिमक्षणे उत्पन्नस्य 'अहं**

जायत इत्यत्रापि प्रमाणाभावात् ॥ अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं, तदा रासनचाक्षुषादिप्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात्। विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्त्वात्। परस्परप्रतिबन्धादेकमपि वा न स्यादिति ॥ अत्र केचित्-पूर्वोक्तयुक्त्या त्वङ्मनोयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वम् अनुभवानुरोधात्कल्प्यत इति ॥ अन्ये तु सुषुप्त्यनुरोधाच्चर्ममनः-

---

सुखी'त्यादिज्ञानस्य विशेषगुणस्य विशेषणतया आत्मनः प्रत्यक्षे कारणो( विशेषसामग्री )भूतस्य सुषुप्तिप्रथमक्षणे वर्तमानस्य बलाद् आत्ममानसप्रत्यक्षात्मकज्ञानापत्तिः स्यात, त्वङ्मनस्संयोगस्य ज्ञानसामान्यकारणत्वे तु स्वप्नान्तिमक्षणपर्यन्तमात्रस्थायिनस्तस्य सुषुप्तिप्रथमक्षणे नाशात सामान्यकारणाऽभावान्नाऽऽत्मविषयकप्रत्यक्षापत्तिरिति समुदिततात्पर्यार्थः ॥ त्वङ्मनस्संयोगस्य ज्ञानसामान्यकारणत्वे दोषमाशंकते-**अथेति**। **रासनेति**। आम्रादिरसानां रसनेन्द्रियजन्यप्रत्यक्षकाले, एवम् आम्ररूपादिगतचक्षुरिन्द्रियजन्यप्रत्यक्षकाले वा, त्वाचप्रत्यक्षम्=त्वगिन्द्रियजन्यस्पर्शादिप्रत्यक्षमपि स्यात्=आपद्येत ॥ अत्र हेतुमाह-**विषयेति**। विषयः-आम्रादिः, तेन सह त्वक्संयोगस्य सत्त्वात, त्वचा सह च मनस्संयोगस्य सत्त्वादित्यर्थः ॥ **ननु**-चाक्षुषसामग्र्याश्चक्षुःसंयोगादिरूपायाः, रासनसामग्र्याश्च रसनासंयुक्तसमवायादिरूपाया वा,-स्पार्शनज्ञानप्रतिबन्धकत्वमेव कल्पयिष्यत-इत्यत आह-**परस्परेति**। रासनसामग्र्याः स्पार्शनज्ञानप्रतिबन्धकत्वं स्पार्शनसामग्र्याश्च त्वग्विषयसंयोगाद्यात्मिकाया रासनज्ञानप्रतिबन्धकत्वम्। एवं चाक्षुषसामग्र्याः स्पार्शनज्ञानप्रतिबन्धकत्वं स्पार्शनसामग्र्याश्च चाक्षुषज्ञानप्रतिबन्धकत्वम्। इत्येवं परस्परयोः सामग्र्योः प्रतिबन्धाद् एकम्=रासनप्रत्यक्षं त्वाचप्रत्यक्षं वा, चाक्षुषप्रत्यक्षं त्वाचप्रत्यक्षं वा, नोत्पद्येत, रासनत्वाचसामग्र्योः परस्परं प्रतिबन्धकत्वात, चाक्षुषत्वाचसामग्र्योश्च परस्परं प्रतिबन्धकत्वादित्याशयः ॥ ज्ञानसामान्यं प्रति त्वङ्मनस्संयोगस्य कारणतावादी समाधत्ते-**अत्र केचिदिति**। **केचित्**=त्वङ्मनःसंयोगनिष्ठज्ञानसामान्यकारणतावादिनः। पूर्वोक्ता या "सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाऽजननम्" "सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्सम्बन्धेनात्मनश्च प्रत्यक्षत्वप्रसंगात्"-इति युक्तिस्तया त्वङ्मनस्संयोगस्य ज्ञानसामान्यं प्रति कारणत्वे सिद्धे चाक्षुषप्रत्यक्षसामग्र्याश्चक्षुस्संयोगात्मिकायाः स्पार्शनप्रत्यक्षसामग्रीं त्वग्विषयसंयोगात्मिकां प्रति प्रतिबन्धकत्वम्, एवं रासनसामग्र्या रसनासंयुक्तसमवायाद्यात्मिकायाः स्पार्शनसामग्रीं त्वक्संयुक्तसमवायाद्यात्मिकां प्रति प्रतिबन्धकत्वं कल्प्यते। स्पार्शनादीत्यत्रादिना घ्राणजसामग्री ग्राह्या। तथा च परस्परप्रतिबन्धकत्वाऽभावाच्चाक्षुषरासनादिसामग्र्या एव त्वाचप्रत्यक्षं प्रति प्रतिबन्धकत्वात् चाक्षुषप्रत्यक्षं स्याद् रासनप्रत्यक्षं वा स्यात् त्वाचप्रत्यक्षं तु नैव स्यादित्याशयः ॥ ननु कथमेवमेव प्रतिबन्धकत्वं न तु वैपरीत्येनेत्यत आह--**अनुभवेति**। तथा अनुभवबलात् कल्प्यते=अनुमीयते, यथा-'घटचक्षुरिन्द्रियसन्निकर्षः,-स्पार्शनप्रत्यक्षप्रतिबन्धकः,-'रूपी घट'-इत्याकारकरूपविशिष्ट-विषयकज्ञानजनकत्वात्, यन्नैवं तन्नैवं यथा त्वाचसन्निकर्ष इति ॥ अथ पक्षधरमिश्रमतमाह-**अन्ये त्विति**। सुषुप्त्यनुरोधात्=सुषुप्तौ ज्ञानाऽनुत्पादानुरोधात्, चर्ममनःसंयोगस्य=त्वगिन्द्रियगोलकस्थानं चर्म तेन सह मनःसंयोगस्य ज्ञानसामान्यं प्रति हेतुत्वं कल्प्यते=अनुमीयते-"चर्ममनःसंयोगः, ज्ञानसामान्यकारणम्, ज्ञानसामान्याभावाधिकरणकसुषुप्त्यवच्छिन्नाभावप्रतियोगित्वात्" इति ॥ एतत्कल्पे रासनचाक्षुषादिप्रत्यक्षकाले स्पार्शनप्रत्यक्षापत्तिरूपो दोषो नास्ति, तदा स्पार्शनप्रत्यक्षविशेषसामग्र्यास्त्वङ्मनःसंयोगात्मिकाया अभावात्, नापि च परस्परप्रतिबध्यप्रतिब

संयोगस्य ज्ञानहेतुत्वं कल्प्यते, चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति ॥

मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥५७॥

मनोग्राह्यमिति। मनोजन्यप्रत्यक्षविषय इत्यर्थः। मतिर्ज्ञानम्। कृतिः प्रयत्नः। एवं सुखत्वदुःखत्वादिकमपि मनोग्राह्यम्। एवमात्मापि मनोग्राह्यः, किंतु "मनोमात्रस्य गोचर" इत्यनेन पूर्वमुक्तत्वादत्र नोक्तः ॥ ५७ ॥

ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।
महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥५८॥

चक्षुःसंयोगाद्यनन्तरं 'घट'इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न संभवति, पूर्वं

---

न्धकभावकल्पनागौरवमित्यभिप्रायेणाह–चाक्षुषादिप्रत्यक्षकाले...न त्वाचप्रत्यक्षमिति। एतन्मते–ज्ञानसामान्ये चर्ममनःसंयोगः कारणम्, विशेषज्ञाने च तत्तदिन्द्रियमनःसंयोगः कारणम्, जाग्रति स्वप्ने च चर्ममनःसंयोगस्य सर्वदा सत्त्वेऽपि येन विशेषेन्द्रियेण सह मनोयोगस्तज्जन्यं प्रत्यक्षं भवेत् नत्वन्यदिति बोध्यम् ॥ अत्र **'केचित्कल्पे'** त्वङ्मनोयोगस्य ज्ञानसामान्यं प्रति हेतुत्वकल्पनेन चाक्षुषादिसामग्र्याः स्पार्शनप्रतिबन्धकत्वकल्पनेन च गौरवम्, **'अन्ये तु–'** कल्पे चर्ममनःसंयोगस्य हेतुत्वकल्पनेन गौरवमित्यस्वरसो बोध्यः ॥ **वस्तुतस्तु**–त्वङ्मनःसंयोगस्य चर्ममनःसंयोगादेर्वा न जन्यज्ञानसामान्यं प्रति कारणत्वम्, प्रमाणाऽभावात्, किन्तु आत्मविशेषगुणं प्रति आत्ममनःसंयोगत्वेनाऽसमवायिकारणत्वस्वीकारेणैवैतन्निर्वाहोपपत्तिरिति बोध्यम् ॥

मूले–**मनोग्राह्यमिति**। सुखं, दुःखं, इच्छा, द्वेषः, मतिः=बुद्धिः, कृतिः=प्रयत्नः, एते सर्वे तथा सुखत्वादिजातयः, तथा सुखाद्यभावः सुखत्वाद्यभावश्चेति मनसा ग्राह्याः भवन्तीत्यर्थः॥ मुक्तावल्यां–**मनोजन्येति**। मनोमात्रजन्यम्, मानसत्वाश्रयनिरूपितलौकिकविषयतावदित्यर्थः। तेन चाक्षुषादेर्मनोजन्यत्वेऽपि मानसत्वाश्रयनिरूपितलौकिकसन्निकर्षप्रयोज्यविषयत्वाऽभावान्न क्षतिः॥ 'मति'शब्दस्य करणव्युत्पत्त्या चक्षुरादिप्रमाणपरत्वादाह–**मतिर्ज्ञानमिति**। 'कृति'शब्दस्य करणव्युत्पत्त्या कृतिसाधनपरत्वादाह–**प्रयत्न**।**इति**। न्यूनतां परिहर्तुमाह–**सुखत्वादिकमिति**। आदिना इच्छात्वादिकं सुखसुखत्वाद्यभावश्च ग्राह्याः॥ ननु आत्मनोऽपि मनोग्राह्यत्वेन तत्कथं नोक्तमित्याशंकां परिहरति–**आत्माऽपीति**। मनसैव ग्राह्यो भवतीत्यर्थः॥ किन्तु 'मनोमात्रस्य गोचर'–(का० ५०) इत्यनेनोक्तत्वादत्र पौनरुक्त्यापत्तिभिया नोक्तमित्यर्थः॥ ५७॥

मूले–**ज्ञानमिति**। निर्गतो विकल्पो विशेषणविशेष्यभावो यस्मात् तत् निर्विकल्पकम्, तदेव आख्या यस्य तत्, एतादृशं यज् ज्ञानं तत्, अतीन्द्रियम्=इन्द्रियाण्यतिक्रम्य वर्तते, इन्द्रियाऽग्राह्यमिति नैयायिकैरिष्यते। विशेष्यताख्य–विशेषणताख्य–संसर्गताख्य–विषयताऽतिरिक्तविषयतानिरूपकं ज्ञानं निर्विकल्पकं यथा-'किञ्चिदि'ति। उक्तं भट्टपादेन श्लोकवार्तिके "अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजमि"ति॥ षड्विधे=घ्राणजे रासने चाक्षुषे श्रोत्रजे स्पार्शने मानसे च प्रत्यक्षे, महत्परिमाणं साक्षात्सम्बन्धेन समवायेन परम्परया च समवेतसमवायादिना कारणं भवति। लौकिकविषयतासम्बन्धेन जन्यप्रत्यक्षसामान्यं प्रति महत्त्वं नियतपूर्ववृत्तीत्यर्थः॥

**विशेषणस्य घटत्वादेर्ज्ञानाभावात्। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्। तथा च प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानं जायते। तदेव निर्विकल्पकम्। तच्च न प्रत्यक्षम्। तथाहि वैशिष्ट्यानवगाहिज्ञानस्य प्रत्यक्षं न भवति, 'घटमहं जानामी'-**

---

षड्विधेऽपि निरुक्ते प्रत्यक्षे इन्द्रियं=चक्षुरादिकं करणम्=असाधारणं कारणं भवतीत्यर्थः॥ निर्विकल्पके प्रमाणं दर्शयति-मुक्तावल्यां-**चक्षुस्संयोगेति**॥ घटेन सह चक्षुस्संयोगाऽनन्तरं द्रागेव 'किंचिदि'ति ज्ञानं जायते, तत्र घटत्वं घटश्च स्वातन्त्र्येण भासेतेऽतः तदेवेदं ज्ञानं 'घटत्वघटौ'-इत्याकारकं वैशिष्ट्या(सम्बन्धा)नवगाहि उच्यते, तदेव निर्विकल्पकमुच्यते। तदनन्तरम् 'अयं घट'इत्याकारकं (घटत्वविशिष्टो घट)इति ज्ञानं घटत्वादिविशिष्टं-समवायेन घटत्वविशिष्टं ज्ञानं व्यवसायात्मकं सविकल्पकं जायते। तदनन्तरं च 'घटमहं जानामि'(घटविषयकज्ञानवानहम्)इत्याकारकं विशिष्टवैशिष्ट्याव-गाहिज्ञानम् अनुव्यवसायात्मकं जायते, इदं विशिष्टवैशिष्ट्यावगाहिज्ञानमुच्यते॥ तत्र प्रथमं घटेन सह चक्षुस्संयोगानन्तरं 'किंचिदि'तिनिर्विकल्पकं विना द्रागेव 'अयं घट'इतिसविकल्पकं कदाचिदपि न भवत्येनमर्थं स्फुटयति-**'घट'इत्याकारकमिति**। घटे महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नालोक-संयोगावच्छिन्नचक्षुस्संयोगानन्तरं-'किंचित्'(घटत्वघटौ)इत्याकारकं ज्ञानं विना **'घट'इत्याकारकं**='अयं घट'(घटत्ववान्घट)इति घटत्वादिविशिष्टज्ञानं सविकल्पकं नैवोत्पत्तुमर्हतीत्यर्थः॥ हेतुमुखेन एनमर्थं दृढयति-**पूर्वमिति**। 'अयं घट'(घटत्ववान्घट)इतिज्ञानाऽव्यवहितप्राक्क्षणे, **विशेषणस्य**= विशिष्टज्ञाननिरूपितविशेषणताश्रयस्य, **घटत्वादेः**=घटत्वस्य समवायस्य च ज्ञानाऽभावात्= कारणात्मकस्य ज्ञानस्याऽभावादित्यर्थः। ननु विशेषणज्ञानाऽभावे सति विशिष्टज्ञानाऽभावः कुतः? इत्यत आह-**विशिष्टबुद्धाविति**। अयं घट'(घटत्ववान्घट)इतिविशिष्टज्ञानं प्रति विशेषणं यद् घटत्वं प्रकारस्तज्ज्ञानस्य प्रत्यक्षात्मकस्य कारणत्वात्। 'नाऽगृहीतविशेषणा बुद्धिर्विशिष्टे उपजायते'इति नियमादिति। अतः 'घटत्वघटौ'इतिनिर्विकल्पकात्मकं ज्ञानं मध्येऽपेक्षणीयमितिभावः॥ अनुमानं यथा-'अयं घट'इतिबुद्धिः,-विशेषणज्ञानजन्या,-विशिष्टबुद्धित्वात्, दण्डीतिविशिष्टबुद्धिवदिति॥ तदेतत्स्फुटयति-**तथा चेति**। 'अयं घट' इतिज्ञानकारणतया 'घटत्वज्ञानसिद्धौ च सत्यामित्यर्थः। प्रथमतः=घटचक्षुःसंयोगोत्तरक्षणे एव विशिष्टज्ञानपूर्वम्। घटघटत्वयोः=विशेष्यविशेषणयोः, वैशिष्ट्यानवगाह्येव=सम्बन्धानवगाहि,-विशेष्यत्व-प्रकारत्व-संसर्गत्वाऽविषयकमेव, ज्ञानं='घटत्वघटौ'-इत्याकारकं विशकलितं जायते, तदेव चतुर्थविषयिताशालि ज्ञानं निर्विकल्पकं नाम्नोच्यते। तच्च निर्विकल्पकं ज्ञानं न प्रत्यक्षम्=न प्रत्यक्षप्रमात्मकानुव्यवसायविषयं भवतीत्यर्थः। यथेन्द्रियजन्यघटस्य ज्ञानं घटविषयकं प्रत्यक्षमुच्यते, तथा प्रत्यक्षज्ञानस्यापि ज्ञानं ज्ञानविषयकं ज्ञानं प्रत्यक्षप्रमात्मकमनुव्यवसायरूपमुच्यते, यथा 'घटचाक्षुषज्ञानवानहम्'इति। तादृशवैशिष्ट्यावगाहिज्ञानस्यैव ज्ञानान्तरं प्रत्यक्षमुत्पद्यते, नतु निर्विकल्पकज्ञानस्य ज्ञानान्तरं (निर्विकल्पकज्ञानविषयकम् अप्रत्यक्षात्मकं ज्ञानान्तरम्) उत्पद्यते, अतो निर्विकल्पकज्ञानस्य प्रत्यक्षं नोत्पद्यते इति भावः॥ एनमर्थं दर्शयति-**तथाहीति**। वैशिष्ट्यानवगाहिज्ञानस्य=विशेषणता-संसर्गता-विशेष्यताऽनिरूपकज्ञानस्य 'घटघटत्वे'-इत्याकारकस्य, प्रत्यक्षं=तद्विषयकोऽनुव्यवसायो न भवतीत्यर्थः॥ यस्य चानुव्यवसायो भवति तदत्र व्यतिरेकदृष्टान्ततया दर्शयति-**घटमहं जानामीति**। 'अयं घट' (घटत्ववान्घट)इतिव्यवसायात्मकविशिष्टज्ञानस्य 'अयं घट'इतिज्ञानवान् अहमि'त्यनुव्यवसायो विशिष्टवैशिष्ट्यप्रत्यक्षात्मको भवतीत्यर्थः। **तत्र**='घटमहं जानामि' (घटविषयकज्ञानवानहम्) इति विशिष्टवैशिष्ट्यानुव्यवसाये, आत्मनि घटविषयकं 'अयं घट'इति ज्ञानं समवायेन विशेषणीभूय भासते,

ति प्रत्ययात्। तत्रात्मनि ज्ञानं प्रकारीभूय भासते, ज्ञाने घटस्तत्र घटत्वम्। यः प्रकारः स एव विशेषणमित्युच्यते। विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते। विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम्। निर्विकल्पके च घटत्वादिकं न प्रकारस्तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न संभवति। घटत्वाद्यप्रकारकं च घटादिविशिष्टज्ञानं न संभवति। जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किंचिद्धर्मप्रकारकत्वनियमात्। महत्त्वमिति। द्रव्यप्रत्यक्षे

'अयं घट'इतिज्ञाने च विषयितासम्बन्धेन घटो विशेषणीभूय भासते, तत्र घटे च समवायेन घटत्वं जातिः प्रकारतया प्रतीयते॥ प्रकारविशेषणयोः पर्यायताम्बोधयति—**यः प्रकार** इति। प्रकारो विशेषणमित्येकार्थः। विशेषणे='अयं घट'इति ज्ञानविशेषणीभूते घटे यद्‌ विशेषणं घटत्वं तदेव विशेषणतावच्छेदकमित्युच्यते॥ **विशेषणतावच्छेदकप्रकारकमिति**। विशेषण( घट )तावच्छेदकं घटत्वं प्रकारो यत्र तादृशं ज्ञानं 'अयं घट'इतिनिर्णयः=विशिष्टज्ञानं, तत्, विशिष्टवैशिष्ट्यज्ञाने='घटमहं जानामि ( घटज्ञानवानहम् )इत्याकारकेऽनुव्यवसायात्मके प्रत्यक्षे ज्ञाने कारणं हेतुरित्यर्थः॥ भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वम्। विशेषणत्वं—व्यावर्तकत्वम् इतरभेदानुमितिजनकत्वमिति॥ कारणाऽभावात् निर्विकल्पकस्य प्रत्यक्षं न भवतीत्याह—**निर्विकल्पके चेति**। 'घटत्वघटौ'इत्याकारके निर्विकल्पके ज्ञाने घटत्वं न प्रकारतया भासते, तेन=निर्विकल्पके घटत्वस्य प्रकारतया अभासनादेव, **ज्ञाने**=निर्विकल्पके 'घटत्वघटावि'तिज्ञाने, **घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं**=घटत्वादिविशिष्टतया घटस्य भानाऽभावादेव घटादिविशिष्टज्ञानस्यापि भानं न भवति। निर्विकल्पकज्ञाने विशिष्टस्य भानाऽभावाद्‌ वैशिष्ट्यस्यापि भानं न भवति, अतो न तस्य प्रत्यक्षमुत्पद्यते इत्याशयः॥ **ननु** विशिष्टज्ञानसामान्यं प्रति विशेषणज्ञानस्य हेतुत्वे मानाऽभावः, एवं विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षमात्रेऽपि विशेषणतावच्छेदकप्रकारकनिर्णयस्य हेतुत्वे मानाऽभावः, तथा च निर्विकल्पकस्य घटत्वप्रकारकनिर्णयाऽनात्मकतया निर्विकल्पकविषयकघटत्वविशिष्टघटवैशिष्ट्यावगाह्यनुव्यवसायाऽसंभवेऽपि घटविशिष्टज्ञानवैशिष्ट्यावगाह्यनुव्यवसाये बाधकाऽभावान्न निर्विकल्पकस्याऽतीन्द्रियत्वमत आह—**घटत्वाद्यप्रकारकं चेति**। घटत्वादिर्न प्रकारो विशेषणं यत्र तादृशं यज्ज्ञानम्, अर्थात्—घटादिरेव प्रकारो यत्र तादृशं ज्ञानं घटादिविशिष्टज्ञानं=घटादिविशिष्टज्ञानवैशिष्ट्यावगाहिप्रत्यक्षमेव न संभवतीत्यर्थः॥ अत्रार्थे हेतुमाह—**जात्यखण्डेति**। घटत्वादिर्जातिः, अखण्डोपाधिः प्रतियोगित्वगगनत्वादिः, तेभ्योऽतिरिक्तानां घटादीनां यज्ज्ञानं तस्य किञ्चिद्धर्मघटत्वादिप्रकारकतयैवोत्पद्यमानतेति नियमः। तस्मादवश्यम् 'अयं घट'इतिज्ञानादौ घटत्वादिविशेषणानां निर्विकल्पकज्ञानं स्वीकर्तव्यम्। तथा च न निर्विकल्पकस्य घटविशिष्टज्ञानवैशिष्ट्यावगाह्यनुव्यवसायः, अतो निर्विकल्पकस्य न प्रत्यक्षमिति भावः॥ ननु—'घटत्वघटौ'—इतिनिर्विकल्पकज्ञानोत्तरं 'घटत्वज्ञानवानह'मित्याकारकोऽनुव्यवसायो भवतु, जात्यखण्डोपाध्यतिरिक्तस्य किञ्चिद्धर्मप्रकारकत्वनियमात्, घटत्वस्य स्वरूपतो विषयितासम्बन्धेन ज्ञाने प्रकारत्वसंभवादिति चेन्न। जातेः समवायेनैव स्वरूपतः प्रकारत्वं न तु विषयित्वादिना, तथा सति 'कालो घटो ज्ञानं घट'इतिप्रतीतेरपि कालिकेन काले विषयितया च ज्ञाने स्वरूपतो घटत्वस्य प्रकारत्वात् प्रमात्वापत्तेः। अतो न 'घटत्वज्ञानवानह'मित्यनुव्यवसायोऽपीति भावः॥ **द्रव्यप्रत्यक्षे महत्त्वमिति**। तन्महत्परिमाणं केन केन सम्बन्धेन कुत्र कुत्र कारणमिति स्फुटयति—**द्रव्यप्रत्यक्षे** इति। लौकिकसन्निकर्षप्रयोज्यविषयतासम्बन्धेन द्रव्यवृत्ति चाक्षुषप्रत्यक्षं प्रति स्पार्शनप्रत्यक्षं प्रति च समवायसम्बन्धेन महत्परिमाणं

महत्त्वं समवायसम्बन्धेन कारणम् । द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन कारणम् । द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कारणमिति ॥ इन्द्रियमिति । अत्रापि 'षड्-विध' इत्यनुषज्यते ॥ इन्द्रियत्वं तु न जातिः, पृथिवीत्वादिना सांकर्यप्रसङ्गात् । किन्तु 'शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रि-यत्वम् । आत्मादिवारणाय सत्यन्तम् । उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्त्वात्-शब्देतरेति । विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वादुद्भूतेति । उद्भूतत्वं न जातिः, शुक्लत्वादिना सांकर्यात् । न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति

---

कारणम् । द्रव्ये समवेतानां गुणानां कर्मणां सामान्या( जाती )नां च लौकिकसन्निकर्षप्रयोज्यविषय-तासम्बन्धेन चाक्षुषप्रत्यक्षत्वादिधर्मावच्छिन्नं (प्रत्यक्षं) प्रति स्वा(महत्परिमाणा)श्रय(द्रव्य)समवाय-( गुणादौ )सम्बन्धेन महत्परिमाणं कारणम् । द्रव्ये समवेताः–समवायेन वर्तमाना ये गुणकर्मजात-यस्तत्र समवेता ये गुणत्वकर्मत्वादयस्तेषां लौकिकसन्निकर्षप्रयोज्यविषयतासम्बन्धेन चाक्षुषप्रत्यक्षत्वा-दिधर्मावच्छिन्नं(प्रत्यक्षं)प्रति स्वा(महत्परिमाणा)श्रय(द्रव्य)समवेत( गुणादि )समवाय( गुणत्वादौ ) सम्बन्धेन महत्परिमाणं कारणमित्यर्थः॥ **अत्रापीति** ॥ 'इन्द्रियं करणं मतं'मित्यस्याग्रे 'षड्विधे'–इति पदमनुषज्यत इत्यर्थः ॥ ननु जन्यप्रत्यक्षं प्रति चक्षुष्ट्वादिना षड्विधकार्यकारणभावापेक्षया इन्द्रियत्वेन एकहेतुताऽस्तु लाघवादित्याशंकामिन्द्रियत्वस्याऽनुगतत्वाऽभावप्रतिपादनेन परिहरति **इन्द्रियत्वमिति** न जातिः, किन्तु सखण्डोपाधिः ॥ जातित्वाभावे संकरं बाधकमाह–**पृथिवीत्वादिनेति** । पृथि-वीत्वं विहाय इन्द्रियत्वं चक्षुरादिषु वर्तते, इन्द्रियत्वं विहाय च पृथिवीत्वं घटादिषु वर्तते, उभयो-र्घ्राणेन्द्रिये समावेशात् संकरः, संकरदोषवत्त्वादिन्द्रियत्वं न जातिरित्यर्थः ॥ "इन्द्रियत्वं,–जातित्वाऽ-भाववत्,–स्वाभाववद्वृत्ति–स्वसमानाधिकरण-धर्माऽभाववद्वृत्तित्वादि"त्यनुमानम् ॥ तर्हि किन्नामे-न्द्रियत्वमत आह–**किन्तु शब्देति** । शब्दादितरे उद्भूताःप्रत्यक्षसन्निकर्षवत्तापादनविषया ये विशेष-गुणा रूपादयः सुखादयश्च तेषामनाश्रयत्वे सति ज्ञानस्याऽसाधारणकारणं य इन्द्रियमनस्संयोगस्तदाश्र-यत्वम् इन्द्रियत्वं सखण्डोपाधिरिति ॥ पदकृत्यमाह–**आत्मादीति** । सत्यन्ताऽनुपादाने ज्ञानकार-णात्ममनस्संयोगमादाय, आदिना च चर्ममनःसंयोगमादायाऽऽत्मनि चर्मणि चाऽतिव्याप्तिः । सत्यन्तोपादाने तु आत्मन उद्भूतज्ञानादिविशेषगुणाश्रयत्वात् चर्मणश्चोद्भूतरूपादिविशेषगुणाश्रय-त्वान्नातिव्याप्तिरित्याशयः ॥ **यद्यपि**–'आत्मभिन्नत्वे सति ज्ञानकारणमनस्संयोगाश्रयत्वमिन्द्रियत्व'-मिति लक्षणे कृते सति नात्मन्यतिव्याप्तिस्तथापि चर्ममनस्संयोगमादाय चर्मण्यतिव्याप्तिःस्यात् तद्वारणार्थं सत्यन्तदानस्याऽऽवश्यकतेत्यभिप्रायेण–**आत्मादिवारणायेत्यत्र** आदिपदमुपात्तमिति बोध्यम् ॥ 'शब्देतर'पदव्यावृत्तिमाह–**उद्भूतेति** । उद्भूतत्वं–'यद्यत्र प्रत्यक्षप्रयोजकसन्निकर्षवत्ता स्यात् तर्हि उपलभ्येत–इत्यापादनविषयत्वमेव, तच्च शब्दे वर्तते, अतः शब्द उद्भूतः, तथा च उद्भूतविशेषगुणशब्दानाश्रयत्वाभावात् गगनात्मकश्रोत्रेन्द्रियेऽव्याप्तिः । शब्देतरोपादाने तु शब्देतरो-द्भूतगुणानां रूपादीनामनाश्रयत्वाल्लक्षणसंगतिरिति भावः ॥ उद्भूतपदव्यावृत्तिमाह–**विशेषगुण-स्येति** । उद्भूतपदानुपादाने 'शब्देतराऽनुद्भूतविशेषगुणरूपाद्यनाश्रयत्वाऽभावात् चक्षुरादावव्याप्तिः । उद्भूतपदोपादाने तु चक्षुरादीनामुद्भूतविशेषगुणरूपादीनामनाश्रयत्वान्नाऽव्याप्तिरिति भावः ॥ 'विशेष'पदस्य प्रयोजनं वक्तुं भूमिकामाह–**उद्भूतत्वमिति** । गुणेषु उद्भूतत्वं नाम जातिः, उत उपाधिः ? तत्र नाद्यः पक्ष इत्याह–**न जातिरिति** । जातित्वाऽभावे हेतुमाह–**शुक्लत्वादिना**

**वाच्यम्, उद्भूतरूपत्वादिना चाक्षुषादौ जनकत्वानुपपत्तेः, किंतु शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्वं, तदभावकूटश्चोद्भूतत्वम्, तच्च संयोगादावप्यस्ति, तथा च शब्दे-**

---

**सांकर्यादिति।** शुक्लत्वं विहाय उद्भूतत्वं प्रत्यक्षगन्धे वर्तते, उद्भूतत्वं विहाय शुक्लत्वम् परमाणुगतेऽनुद्भूतशुक्ले वर्तते, द्वयोरुद्भूतत्वशुक्लत्वयोरेकत्र वस्त्रादिशुक्ले समावेशात् सांकर्यम्। अनुमानन्तु- 'उद्भूतत्वं, जातित्वाऽभाववत्,-स्वाभाववद्वृत्तिस्वसमानाधिकरण-धर्माभाववद्वृत्तित्वादि'ति॥ व्याप्यत्वं न्यूनवृत्तित्वं॥ शुक्लत्वव्याप्यमेकं कृष्णत्वव्याप्यमपरं सुरभित्वव्याप्यमन्यत् मधुरत्वव्याप्यं भिन्नमित्येवं तत्तद्धर्मव्याप्यमुद्भूतत्वं नाना इति वादिनो मतं शंकते-**न चेति।** वाच्यमित्यन्वयः। तादृशं नानाविधमुद्भूतत्वमुपाधिर्न त्वेकविधमेवोपाधिरित्यर्थः॥ समाधत्ते-**उद्भूतरूपत्वादिनेति।** चाक्षुषादौ= 'चक्षुरिन्द्रियजन्यद्रव्यादिप्रत्यक्षं प्रति उद्भूतरूपत्वावच्छिन्नमुद्भूतरूपं कारण'मिति नियमात्,-यत्र यत्र चाक्षुषप्रत्यक्षं भवति तत्र तत्र कारणम् उद्भूतरूपं एकेन उद्भूतरूपत्वेन धर्मेण कारणतावच्छेदकेन युक्तं वर्तते, यदि च-उद्भूतत्वं भिन्नं भिन्नं स्यात् तर्हि सामान्यतश्चाक्षुषप्रत्यक्षं प्रति एकेनोद्भूतरूपत्वेन धर्मेणोद्भूतरूपस्य कारणत्वेऽन्यस्योद्भूतरूपस्याऽकारणत्वप्राप्तेः, तत्र च चाक्षुषप्रत्यक्षस्य जायमानत्वात् कारणाऽभावेऽपि कार्यसत्त्वात्मकव्यतिरेकव्यभिचारः स्यात्, अत एकैकस्योद्भूतत्वस्य कारणतावच्छेदकत्वे व्यभिचारात्, उद्भूतत्वानां कूटस्य चैकस्मिन्नवर्तमानत्वात् कारणतावच्छेदकत्वमेव न स्यात्, तथा च कारणतानवच्छेदकाक्रान्तैरुद्भूतत्वैर्धर्मैः रूपादीनामपि चाक्षुषादौ कारणत्वाऽनुपपत्तिः स्यादिति भावः॥ तर्हि कीदृशमुद्भूतत्वमत आह-**किन्त्विति।** शुक्लत्वादिन्यूनवृत्ति अनुद्भूतत्वं नानाविधम्, तदभावकूटः=नानाविधाऽनुद्भूतत्वाऽभावसमुदाय एवोद्भूतत्वं बोध्यम्, **तच्च=** तादृशाऽभावकूटात्मकोद्भूतत्वं संयोगे विभागादौ च वर्तते, **तथाच,** 'विशेष'पदानुपादाने शब्देतरोद्भूतगुणसंयोगाऽनाश्रयत्वाऽभावाच्चक्षूरसनादावव्याप्तिः स्यात्, 'विशेष'पदोपादाने तु-संयोगो न विशेषगुण इति शब्देतरोद्भूतविशेषगुणाऽनाश्रयत्वाच्चक्षुरादौ लक्षणसमन्वयः "रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रव्यः बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः'॥ **अथ-**उद्भूतत्वजातीनां नानात्वेऽपि उद्भूतत्वसप्तकान्यतमत्वस्य सर्वोद्भूतत्वेष्वनुगतस्य संभवेन तादृशान्यतमत्वेन रूपेणोद्भूतत्वजातीनां कारणतावच्छेदकतासंभवेन तादृशान्यतमत्वावच्छिन्नत्वेन रूपस्य कारणत्वे बाधकाऽभावाद् 'विशेष'पदं व्यर्थमिति **ध्येयम्॥** **ननु-**चर्मण्यतिव्याप्तिः, शब्देतरोद्भूतविशेषगुणेष्वेकस्य तादृशविशेषगुणत्वस्याऽभावाद् भिन्नं भिन्नं विशेषगुणत्वं घटीयरूपादिनिष्ठं गृहीत्वा तदाश्रयाऽनधिकरणत्वस्य चर्मणि सत्त्वादिति चेत् !,अत्र **प्राञ्चः-**'शब्देतरोद्भूतविशेषगुणाश्रयभूता यावत्यो व्यक्तयस्तावदन्यतमत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वे सति'-इतिसत्यन्तार्थतया न चर्मण्यतिव्याप्तिः। **अथवा-**यावन्तः शब्देतरोद्भूतगुणास्तावदन्यतमत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वे सती'ति सत्यन्तार्थतया नातिव्याप्तिः॥ **अथवा-**उद्भूतरूपरसगन्धस्पर्शान्यतमत्वावच्छिन्नाऽवच्छेदकताकप्रतियोगिताकभेदाऽऽत्मत्वावच्छिन्नप्रतियोगिताकभेदै-तदुभयवत्त्वे सती'ति सत्यन्तार्थतया नातिव्याप्तिः॥ **अथवा-**उद्भूतस्पर्शत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदाऽऽत्मत्वावच्छिन्नप्रतियोगिताकभेदैतदुभयवत्त्वे सतीति-सत्यन्तार्थतया नोक्तातिव्याप्तिरिति **ध्येयम्।** **अत्र-नवीनानाम् अन्नंभट्टस्य** चाभिप्रायस्तु-उद्भूतत्वं जातिः त्रसरेण्वादिगतरूपादिनिष्ठा प्रत्यक्षप्रयोजिका, न च शुक्लत्वादिना सांकर्यं, गुणसांकर्यं न बाधकमित्यभिप्रायात्, अनुद्भूतत्वं तु उद्भूतत्वाऽभावः परमाणुद्व्यणुकादिगतरूपादिनिष्ठ इति॥ **अन्ये-**विश्वनाथादयस्तु परमाणुद्व्यणुकानां शुक्लादिगतं नानाऽनुद्भूतत्वं तत्तद्रूपाणां प्रत्यक्षाऽभावप्रयोजको धर्मविशेष उपाधिः, तादृशाऽनुद्भूतत्वाभाव

तरोद्भूतगुणः संयोगादिश्चक्षुरादेरप्यस्त्यतो विशेषेति। कालादिवारणाय विशेष्य-दलम्। इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वादिन्द्रियावय-ववारणाय, नवीनमते कालादौ रूपाभावप्रत्यक्षे सन्निकर्षघटकतया कारणीभूत-चक्षुःसंयोगाश्रयस्य कालादेश्च वारणाय मनःपदम्। ज्ञानकारणमित्यपि तद्वारणाय॥ करणमिति। असाधारणं कारणं करणम्। असाधारणत्वं व्यापारवत्त्वम्॥ ५८॥

---

एवोद्भूतत्वम्, तच्च त्रसरेण्वादिगतसंयोगादिगुणनिष्ठं प्रत्यक्षत्वप्रयोजकं सप्तमपदार्थरूपम्॥ वस्तु-तस्तु—'यद्यत्र प्रत्यक्षप्रयोजकसन्निकर्षवत्ता स्यात् तर्ह्युपलभ्येत'इत्यापादनविषयतैवोद्भूतत्वमिति। न चात्रान्योन्याश्रयादिप्रसंगः, विषयताया ज्ञानभेदेन भेदादिति॥ कालादीति। 'ज्ञानकारणमनस्संयोगा-श्रयत्व'मितिविशेष्यानुपादाने कालस्य कस्यापि विशेषगुणस्याऽनाश्रयत्वात्तत्रातिव्याप्तिः। ज्ञानकारण-मनस्संयोगाश्रयत्वोपादाने तु कालस्य ज्ञानकारणमनस्संयोगाश्रयत्वाऽभावान्नातिव्याप्तिरिति भावः॥ आदिपदेन दिक्परिग्रहः॥ 'मनः'पदनिवेशस्य फलमाह—इन्द्रियावयवेति। प्राचां मते घटप्रत्यक्षं प्रति चक्षुरिन्द्रियावयवस्य घटस्य च यः संयोगः स कारणं भवति तादृशज्ञानकारणसंयोगाश्रयत्वस्य चक्षुरवयवे सत्त्वात् तत्र सत्यन्तदलस्यापि सत्त्वाद् अतिव्याप्तिस्तद्वारणाय—मनःपदम्, तथा च ज्ञान-कारणमनस्संयोगस्तु इन्द्रियमनस्संयोग एव, न त्विन्द्रियावयवमनस्संयोगोऽपीति इन्द्रियावयवे नाऽति-व्याप्तिः। नवीनानां मते 'कालो रूपाभाववानि'ति काले रूपाभावस्य प्रत्यक्षं प्रति चक्षुस्संयुक्त-विशेषणतात्मकसन्निकर्षस्य कारणत्वात् तत्सन्निकर्षान्तःपतितो यश्चक्षुस्संयोगस्तदाश्रयत्वात्, सत्यन्तदलस्य च सत्त्वात् कालेऽतिव्याप्तिः, तद्वारणाय मनःपदम्, तथा च ज्ञान-सामान्यकारणीभूतस्य मनस्संयोगस्य कालेऽभावान्नातिव्याप्तिरिति भावः॥ ज्ञानकारणमित्यपीति। ज्ञानकारणमितिपदानुपादाने मनस्संयोगस्य कालेऽपि सत्त्वात् कालेऽतिव्याप्तिः, ज्ञानकारणेत्युपादाने तु काले मनस्संयोगो यः स न ज्ञानकारणमिति नातिव्याप्तिरित्यर्थः॥ वस्तुतस्तु—शरीर-संयुक्तत्वे सति ज्ञानकारणत्वे सति अतीन्द्रियत्वम्—इन्द्रियत्वम्। अथवा—ज्ञाननिष्ठप्रत्यक्षप्र-मितिविभाजकोपाध्यवच्छिन्नकार्यतानिरूपतकारणताश्रयमनस्संयोगवत्त्वम्। अथवा—ज्ञाननिष्ठ-कार्यतानिरूपितव्यापारसम्बन्धावच्छिन्नकारणत्वम्। अथवा—ज्ञाननिष्ठकार्यतानिरूपितव्यापारस-म्बन्धावच्छिन्नकारणतावद्वृत्तीन्द्रियविभाजकधर्मवत्त्वम्। अथवा—घ्राणादिमनोऽन्ताऽन्यतमत्वं, लघुरूपमिन्द्रियसामान्यलक्षणं, बोध्यमिति॥ अथ—प्राचां मते यत् 'फलाऽयोगव्यवच्छिन्नकारणत्वं' करणत्वं तदा इन्द्रियेऽव्याप्तिरित्याशंकायां करणत्वं निर्वक्ति—असाधारणमिति। नव्यमते'अ-साधारणत्वे सति कारणत्वं'करणत्वमिति। कारणे असाधारणत्वं च कार्यत्वातिरिक्तधर्मावच्छिन्नका-र्यतानिरूपितकारणताशालित्वम्। ननु कार्यत्वातिरिक्तप्रत्यक्षत्वधर्मावच्छिन्नकार्यतानिरूपितकारण-त्वस्य इन्द्रिये इव सन्निकर्षेऽपि सत्त्वात् सन्निकर्षे करणत्वस्याऽतिव्याप्तिरतोऽसाधारणत्वं निर्वक्ति—व्यापारवत्त्वमिति। सन्निकर्षस्तु व्यापारः, न तु स्वजनकत्वसम्बन्धेन व्यापारवान् इति तत्र सन्निकर्षे नातिव्याप्तिः। व्यापारश्च—तज्जन्यत्वे सति तज्जन्यजनकः, इन्द्रियजन्यत्वे सति इन्द्रियसन्नि-कर्षस्य इन्द्रियजन्यप्रत्यक्षजनकत्वाद् व्यापारत्वम्। ननु—श्रोत्रजन्यशब्दप्रत्यक्षं प्रति समवायसन्नि-कर्षस्य व्यापारता न स्यात् समवायस्य नित्यतया इन्द्रियजन्यत्वाऽभावादिति चेन्न। इन्द्रियसत्ता-तिरिक्तसत्ताशून्यत्वे सति इन्द्रियजन्यजनकत्वमिति व्यापारनिर्वचनात्॥ अथवा श्रोत्रमनस्संयो-गस्य तत्र व्यापारताकल्पनान्न क्षतिरिति॥ ५८॥

विषयेन्द्रियसम्बन्धो व्यापारः, सोऽपि षड्विधः ।
द्रव्यग्रहस्तु संयोगात्, संयुक्तसमवायतः ॥ ५९ ॥
द्रव्येषु समवेतानां, तथा तत्समवायतः ।
तत्रापि समवेतानां, शब्दस्य समवायतः, ॥ ६० ॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः, ।
प्रत्यक्षं समवायस्य विशेषणतया भवेत्, ॥ ६१ ॥
विशेषणतया तद्वदभावानां ग्रहो भवेत् ।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥ ६२ ॥

विषयेन्द्रियेति । व्यापारः सन्निकर्षः। षड्विधं सन्निकर्षमुदाहरणद्वारा प्रदर्शयति- द्रव्यग्रह इति । द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम् । द्रव्यसमवेतप्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम् । एवमग्रेऽपि ॥ वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः

---

मूले–विषयेन्द्रियसम्बन्ध इति । विषयेण सहेन्द्रियस्य सम्बन्ध एव व्यापारः= सन्निकर्ष उच्यते, स च षड्विधः । यथा द्रव्यग्रहस्तु=घटादिद्रव्यप्रत्यक्षं तु, इन्द्रियसंयोगाद् भवति, अतः संयोगः एकः सन्निकर्षः ॥ द्रव्येषु=घटादिषु समवेतानां=समवायेन वर्तमानानां गुणकर्मसामान्यानां प्रत्यक्षं तु संयुक्तसमवायतः=इन्द्रियसंयुक्तसमवायसन्निकर्षेण भवति, अतः संयुक्तसमवायो द्वितीयः सन्निकर्षः ॥ तथा–तद्वत्, तत्रापि=द्रव्यसमवेतेषु–गुणकर्मसु समवेतानां= गुणत्वकर्मत्वादीनां ग्रहस्तु तत्समवायतः=इन्द्रियसंयुक्तसमवेतसमवायसन्निकर्षेण भवति, अतः संयुक्तसमवेतसमवायस्तृतीयः सन्निकर्षः ॥ शब्दस्य प्रत्यक्षं समवायतः–कर्णसमवायेन भवति, अतः–समवायश्चतुर्थः सन्निकर्षः ॥ तद्वृत्तीनां=शब्दवृत्तिशब्दत्वादीनां ग्रहस्तु=प्रत्यक्षन्तु समवेतसमवायेन=श्रोत्रसमवेतसमवायेन भवति, अतः समवेतसमवायः पञ्चमः सन्निकर्षः ॥ समवायस्य=समवायसम्बन्धस्य प्रत्यक्षं तु विशेषणतया=स्वरूपसम्बन्धाख्यविशेषणतासन्निकर्षेण भवति, अतः संयुक्तविशेषणताद्याख्यः षष्ठः सन्निकर्षः ॥ तद्वत्=समवायवत्, अभावानाम्=अभावपदार्थस्यापि विशेषणतासम्बन्धेन गृह्यो भवति ॥ ननु कस्य अभावस्य प्रत्यक्षं भवति ? इत्यत आह–यदि स्यादिति । योग्यपदार्थस्याऽभावः प्रत्यक्षो भवति, योग्यता च 'यदि स्याद् उपलभ्येते'त्यापादनविषयता, सा यत्र घटादौ प्रसज्यते–आपाद्यते, तदभावः प्रत्यक्षो भवतीत्यर्थः ॥ मुक्तावल्यां–'व्यापार'पदार्थमाह–सन्निकर्ष इति । सम्बन्ध इत्यर्थः ॥ षड्विधं सन्निकर्षमिति । संयोगं, संयुक्तसमवायं, संयुक्तसमवेतसमवायम्, समवायं, समवेतसमवायं, विशेषणविशेष्यभावं च दर्शयतीत्यर्थः ॥ द्रव्येति । घटादिप्रत्यक्षे इन्द्रियसंयोगो व्यापारः । घटादिद्रव्यसमवेतगुणादिप्रत्यक्षे–इन्द्रियसंयुक्तसमवायो व्यापारः ॥ एवमग्रेऽपीति । द्रव्यसमवेतसमवेतगुणत्वादिप्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवायो व्यापार इत्यर्थः ॥ ननु द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति इन्द्रियसंयोगस्य हेतुत्वे त्वक्प्रभासंयोगात् प्रत्यक्षापत्तिः, एवमन्धकारेऽपि घटचक्षुस्संयोगात् स्पार्शनापत्तिः, द्रव्येन्द्रियसंयोगस्य तत्र सत्त्वात्, इन्द्रियत्वस्याऽननुगततया तद्घटितसंयोगत्वादेरप्यननुगततया परस्परव्यभिचारात् ,–इत्याद्यस्वरसात् नवीनमतेन विश्लिष्य कार्यकारणभावं वक्तुमुपक्रमते-

कारणम्। द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः कारणम्। द्रव्यसमवेतसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतसमवायः कारणम्। एवमन्यत्रापि विशिष्यैव कार्यकारणभावः॥ परन्तु पृथिवीपरमाणुनीले नीलत्वं पृथ्वीपरमाणौ पृथिवीत्वं च चक्षुषा कथं न गृह्यते, तत्र परम्परयोद्भूतरूपसम्बन्धस्य महत्त्वसम्बन्धस्य च सत्त्वात्। तथाहि—नीले नीलत्वं जातिरेकैव घटनीले परमाणुनीले च वर्तते। तथाच महत्त्वसम्बन्धो घटनीलमादाय वर्तते उद्भूतरूपसम्बन्धस्तूभयमा

---

**वस्तुतस्त्विति**। विषयतासम्बन्धेन द्रव्यनिष्ठं यत् चक्षुरिन्द्रियजन्यप्रत्यक्षं तत्प्रति चक्षुस्संयोगः समवायसम्बन्धेन कारणम्। एवं विषयतासम्बन्धेन द्रव्यसमवेतगुणादिनिष्ठं यत् चक्षुरिन्द्रियजन्यप्रत्यक्षं तत्प्रति चक्षुस्संयुक्तसमवायः स्वरूपसम्बन्धेन कारणम्। विषयतासम्बन्धेन प्रत्यक्षं द्रव्यसमवेतगुणे वर्तते तत्र चक्षुस्संयुक्तघटादिद्रव्यसमवायः स्वरूपसम्बन्धेन वर्तते इति॥ एवं विषयतासम्बन्धेन द्रव्यसमवेतगुणादिसमवेतगुणत्वादिनिष्ठं चक्षुरिन्द्रियजन्यप्रत्यक्षं प्रति चक्षुस्संयुक्तसमवेतसमवायः स्वरूपसम्बन्धेन कारणमिति॥ **एवमन्यत्राऽपीति**। स्पार्शनप्रत्यक्षादावपि तथैव रीतिः। तद्यथा विषयतासम्बन्धेन द्रव्यनिष्ठं स्पार्शनप्रत्यक्षं प्रति त्वक्संयोगः समवायेन कारणम्। विषयतासम्बन्धेन द्रव्यसमवेतगुणादिनिष्ठस्पार्शनप्रत्यक्षं प्रति त्वक्संयुक्तसमवायः स्वरूपसम्बन्धेन कारणम्। विषयतासम्बन्धेन द्रव्यसमवेतसमवेतगुणत्वादिनिष्ठस्पार्शनप्रत्यक्षं प्रति त्वक्संयुक्तसमवेतसमवायः स्वरूपसम्बन्धेन कारणमिति। एतत्सर्वमत्रैव प्रकरणेऽग्रे स्फुटं वक्ष्यते। **अथ**—महत्परिमाणस्योद्भूतरूपस्य च प्रत्यक्षं प्रति पृथक् कार्यकारणभावे सति गौरवं स्यात्, अतो महत्परिमाणम् उद्भूतरूपं च सन्निकर्षांशे निवेश्य कार्यकारणभावकल्पनाप्रयुक्तं लाघवं दर्शयितुं—तत्पूर्वपक्षात्मिकां शंकामवतारयति—**परन्तु**—इत्यादिना। पृथिव्या नीलपरमाणुषु नीलरूपगतं नीलत्वं जातिः, तथा पृथिवीपरमाणुनिष्ठा पृथिवीत्वजातिः, चक्षुषा कथं न गृह्यते ?=चक्षुरिन्द्रियजन्यप्रत्यक्षविषया स्यादि'त्याक्षेपार्थः। कुतः इति चेत्! **तत्र**=नीलत्वे पृथिवीत्वे च, परम्परया=स्वाश्रयसमवेतसमवेतत्वसम्बन्धेन, उद्भूतरूपस्य महत्परिमाणस्य च सत्त्वात्। तथाहि=तद्यथा, एकैव नीलत्वजातिर्घटस्य नीलरूपे परमाणोर्नीलरूपे च समवायेन वर्तते, **तथाच**—महत्परिमाणं घटे समवायेन वर्तते, तदेव स्वसमवायिसमवेतसमवेतत्वसम्बन्धेन नीलत्वजातौ वर्तते, स्वं महत्परिमाणं, तत्समवायिकारणं घटः, तत्र समवेतं नीलरूपं, तत्र समवेता नीलत्वजातिरिति। तथा च विषयतासम्बन्धेन नीलत्वजातिनिष्ठं चाक्षुषप्रत्यक्षं प्रति स्वाश्रयसममेतसमवेतत्वसम्बन्धेन महत्परिमाणं कारणं भवतीति परमाणुगतनीले नीलत्वजातेः प्रत्यक्षापत्तिः स्यात्। एवम् उद्भूतरूपमपि घटगतं नीलं, तदाश्रयो घटः, तत्र समवेतं नीलरूपं तदेव, तत्र समवेता नीलत्वजातिः, तथा च विषयतासम्बन्धेन नीलत्वजातिनिष्ठं चाक्षुषप्रत्यक्षं प्रति स्वाश्रयसमवेतसमवेतत्वसम्बन्धेन उद्भूतरूपं कारणं भवतीति परमाणुनीलवृत्तिनीलत्वजातेः प्रत्यक्षापत्तिः स्यात्। तदेवाह—**उद्भूतरूपसम्बन्धस्तु** इति। उद्भूतरूपं तु, **उभयमादाय**=घटनीलमादाय परमाणुनीलमादाय च स्वाश्रयसमवेतसमवेतत्वादिसम्बन्धेन नीलत्वे वर्तते इत्यर्थः॥ ननु परमाणुनीलं न उद्भूतरूपं, तथा च कथं परमाणुनीलमादाय नीलत्वे उद्भूतरूपसम्बन्धो बोध्यः? इति चेत्?। इत्थम्—'परमाणुनीलमादाय'—इत्यस्य परमाणुनीलघटितपरम्परया त्रसरेणुगतोद्भूतरूपसम्बन्धो बोध्य इत्यर्थकत्वात्, परमाणुनीलघटितपरम्परा तु—स्वाश्रयसमवायिसमवायिसमवेतसमवेतत्वाख्यः, स्वं—त्रसरेणुगतमुद्भूतं नीलरूपं, तदाश्रयस्त्रसरेणुः, तत्समवायि द्व्यणुकं, तत्समवायी परमाणुः, तत्र समवेतं

**दायैव वर्तते। एवं पृथिवीपरमाणौ पृथिवीत्वेऽपि घटादिकमादाय महत्त्वसम्बन्धो बोध्यः। एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात्। तस्मादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतचाक्षुषप्रत्यक्षे, तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतचाक्षुषे कारणत्वं वाच्यम्। इत्थं च परमाणुनीलादौ न नीलत्वादिग्रहः, परमाणौ चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात्, एवं वाय्वादौ न सत्तादिचाक्षुषं, तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात्॥**

---

परमाणुनीलं, तत्र समवेतं नीलत्वमिति। ननु त्रसरेणुगतमहत्परिमाणस्यापि ईदृशरीत्या परमाणुनीलघटितपरम्परासम्बन्धेन सत्त्वमनुक्त्वा "उद्भूतरूपसम्बन्धस्तु उभयमादाय वर्तते" इति पृथक् कथनप्रयासः कथं कृतः इति चेत्?। परमाणुपाकवादिनः केचन परमाणौ–उद्भूतगन्धम् उद्भूतरूपं च स्वीकुर्वन्ति, तन्मतमालम्ब्य "उद्भूतरूपसम्बन्धस्तूभयमादाय वर्तते" इत्युक्तम्। नव्यास्तु परमाणौ उद्भूतगन्धमुद्भूतरूपं च नाङ्गीकुर्वन्ति, अननुभवात्। अतो नवीनमते–त्रसरेणुगतमुद्भूतरूपं स्वाश्रयसमवायिसमवायिसमवेतसमवेतत्वसम्बन्धेन परमाणुनीलघटितेन नीलत्वे गृहीत्वा "उद्भूतरूपसम्बन्धस्तूभयमादाय वर्तते" इति ग्रन्थः संगमनीयः। एतन्मते–'तुः' अप्यर्थकः. तेन त्रसरेणुगतमहत्परिमाणमपि स्वाश्रयसमवायिसमवायिसमवेतसमवेतत्वसम्बन्धेन नीलत्वे वर्तत इत्यप्यनुसन्धेयमिति॥ **एवं पृथिवीपरमाणाविति**। एवं पृथिवीपरमाणौ, पृथिवीत्वजातिरेकैव घटेऽपि वर्तते, घटगतपृथिवीत्वे च घटगतमहत्परिमाणमुद्भूतरूपं च स्वाश्रयसमवेतत्वसम्बन्धेन वर्ततेऽतः पृथिवीपरमाणौ पृथिवीत्वस्य प्रत्यक्षं स्यादित्यापत्तिः॥ **एवं वायाविति**। वायौ वर्तमानाया सत्ताजातेः चाक्षुषप्रत्यक्षापत्तिः, तत्रापि स्वाश्रयसमवेतत्वसम्बन्धेन घटसत्तामादाय महत्परिमाणस्योद्भूतरूपस्य च सत्त्वात्। एवं–वायुस्पर्शे सतायाश्चाक्षुषप्रत्यक्षं स्यात् तत्रापि महत्परिमाणस्योद्भूतरूपस्य च घटस्पर्शमादाय स्वाश्रयसमवेतसमवायेन सत्त्वात्, स्वं–महत्परिमाणम् उद्भूतरूपंच, तदाश्रयो घटः, तत्र समवेतः स्पर्शः, तत्र समवेता सत्ताजातिरिति। एवं–स्वाश्रयसमवेतसमवेतत्वसम्बन्धेन वायुगतमहत्परिमाणमपि वायुस्पर्शे वर्तत इति॥ तदेवं पूर्वपक्षं कृत्वा समाधत्ते–**तस्मादिति**। उक्तापत्तिवारणार्थमित्यर्थः॥ **उद्भूतरूपावच्छिन्नेति**। उद्भूतरूपावच्छिन्नं महत्त्वावच्छिन्नं यत् चक्षुस्संयुक्तं तत्समवायो द्रव्यसमवेतरूपादिगुणसाक्षात्कारे हेतुः। **तादृशेति**। उद्भूतरूपावच्छिन्नं महत्त्वावच्छिन्नंयत् चक्षुस्संयुक्तं तत्समवेतसमवायो द्रव्यसमवेतसमवेतरूपत्वादिप्रत्यक्षे हेतुः॥ एतादृशरूपेण सन्निकर्षस्य कारणत्वे पूर्वोक्तापत्तिर्नेत्याह **इत्थञ्चेति**। उद्भूतरूपमहत्परिमाणघटितचक्षुस्सन्निकर्षस्य हेतुत्वे चेत्यर्थः॥ **परमाणुनीलादाविति**। पृथिवीपरमाणुनीले नीलत्वस्य पृथिवीपरमाणौ पृथिवीत्वस्य च न प्रत्यक्षम् आपद्यते इत्यर्थः॥ तदुपपादयति–**परमाणाविति**। परमाणौ यश्चक्षुःसंयोगः स न महत्परिमाणविशिष्टः, परमाणौ महत्परिमाणाऽभावात्, तथाच महत्परिमाणविशिष्टं यच्चक्षुस्संयुक्तं तत्समवेतसमवायस्य परमाणुनीलगतनीलत्वेऽभावान्न तत्र नीलत्वस्य प्रत्यक्षम्, एवं महत्परिमाणविशिष्टं यच्चक्षुस्संयुक्तं तत्समवायस्य पृथिवीपरमाणुगतपृथिवीत्वेऽभावान्न तत्र पृथिवीत्वस्य प्रत्यक्षम्॥ **एवमिति**। वायौ तदीयस्पर्शादौ च सत्ताजातेश्चाक्षुषप्रत्यक्षमपि न आपद्यते, तत्र=वायौ यश्चक्षुस्संयोगः स न रूपावच्छिन्नः=रूपविशिष्टः, तथाच उद्भूतरूपावच्छिन्नं यच्चक्षुस्संयुक्तं तत्समवायस्य वायुनिष्ठसत्तायामभावात् न वायुनिष्ठसत्तायाश्चाक्षुषप्रत्यक्षम्, एवम्–उद्भूतरूपावच्छिन्नं यच्चक्षुस्संयुक्तं तत्समवेतसमवायस्य वायुस्पर्शनिष्ठसत्तायामभावान्न वायुस्पर्शनिष्ठसत्ताप्रत्यक्षमिति॥ आदिना भर्जनकपालस्थवह्निनिष्ठसत्तायाश्चाक्षुषमपि

**एवं यत्र घटस्य मध्यावच्छेदेनालोकसंयोगः, चक्षुःसंयोगस्तु बाह्यावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम् ॥ एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणम् । द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवायः कारणम् । द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः कारणम् ॥ अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वं च पूर्ववदेव बोध्यम् । एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः । गन्धसमवेतस्य घ्राणजन्यप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः कारणम् ॥ एवं रसप्रत्यक्षे रसनासंयुक्तसमवायः । रससमवेतरासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणम् ॥ शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः कारणम् । शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः**

---

वारणीयमिति ॥ **एवमिति** । अन्धकारे महत्परिमाणविशिष्टोद्भूतरूपविशिष्ट–चक्षुस्संयुक्तस्य घटस्य प्रत्यक्षं न भवतीति तत्रान्वयव्यभिचारवारणाय चक्षुस्संयोगे आलोकसंयोगविशिष्टत्वं निवेशनीयम् । ननु तथापि–**यत्र घटस्य** मध्यावच्छेदेन=मध्यभागे दीपः स्थाप्येत तदा मध्ये उदरभागे आलोकसंयोगः, चक्षुस्संयोगस्तु, बाह्यावच्छेदेन=घटस्य बाह्यभागे भवेत्, तत्र घटे महत्वसत्त्वे उद्भूतरूपसत्त्वे आलोकसंयोगसत्त्वे चक्षुःसंयोगसत्त्वेऽपि च घटप्रत्यक्षं न भवतीत्यन्वयव्यभिचारः, तद्वारणाय चतुर्णामेकस्थलावच्छेदेन वैशिष्ट्यं वक्तव्यम्, तदेवाह–**आलोकसंयोगावच्छिन्नत्वं चक्षुस्संयोग** इति । तथा च–एकस्थलावच्छेदेन यो महत्त्वविशिष्टोद्भूतरूपविशिष्टाऽऽलोकसंयोगविशिष्ट–चक्षुस्संयोगः स द्रव्यप्रत्यक्षे कारणमि'ति कार्यकारणभावः । घटबाह्यभागे यत्र चक्षुस्संयोगादिर्वर्तते तत्र यदि आलोकसंयोगः स्यात् तर्हि प्रत्यक्षम् भवेत् । उक्तस्थले तु भिन्नदेशे आलोकसंयोगस्य चक्षुस्संयोगस्य च सत्त्वाद् विशिष्टकारणाऽभावादेव न प्रत्यक्षमिति न व्यभिचार इत्यर्थः ॥ चाक्षुषप्रत्यक्षे चक्षुः करणम्, चक्षुस्सन्निकर्षः संयोगादिर्व्यापारः, महत्त्वम् उद्भूतरूपम् आलोकसंयोगश्चेति त्रयं सहकारिनिमित्तम्, सर्वमिदं मिलित्वा प्रत्यक्षस्य पुष्कला सामग्री, यत्रैकमपि न स्यात् तत्र तस्य न प्रत्यक्षमिति बोध्यम् ॥ उक्तरीतिवत् स्पार्शनप्रत्यक्षे सन्निकर्षं दर्शयति–**एवं द्रव्यस्पार्शनेति** । द्रव्यस्पार्शनप्रत्यक्षे महत्त्वावच्छिन्नोद्भूतस्पर्शावच्छिन्नत्वक्संयोगः कारणम्, द्रव्यसमवेतस्पर्शादिप्रत्यक्षे महत्त्वावच्छिन्नोद्भूतस्पर्शावच्छिन्नत्वक्संयुक्तसमवायः कारणम्, द्रव्यसमवेतसमवेतस्पर्शत्वादिप्रत्यक्षे महत्त्वावच्छिन्नोद्भूतस्पर्शावच्छिन्नत्वक्संयुक्तसमवेतसमवायः कारणम् इत्यर्थः ॥ एनमेवार्थमाह–**अत्रापीति** । त्वक्संयोगेऽपि महत्परिमाणविशिष्टत्वम् तद्भूतस्पर्शविशिष्टत्वं च समवायघटितसामानाधिकरण्येन **पूर्ववत्**=चाक्षुषसन्निकर्षं इव, बोध्यमिति ॥ **एवं गन्धप्रत्यक्ष इति** । तथा च 'गन्धप्रत्यक्षे महत्त्वावच्छिन्नघ्राणसंयुक्तसमवायः कारणम्, गन्धसमवेतस्य गन्धत्वस्य घ्राणेन्द्रियजन्यप्रत्यक्षे महत्त्वावच्छिन्न–घ्राणसंयुक्तसमवेतसमवायः कारणमिति कार्यकारणभावो बोध्यः ॥ घ्राणेन पृथिव्या अग्रहणात् रसनासंयोगस्य घ्राणजप्रत्यक्षे कारणत्वमेव न भवतीति स नोक्त इति बोध्यम् ॥ **रासनप्रत्यक्षे इति** । 'रसविषयकप्रत्यक्षे महत्त्वावच्छिन्नरसनासंयुक्तसमवायः कारणम्, रससमवेतरसत्वप्रत्यक्षे महत्त्वावच्छिन्नरसनासंयुक्तसमवेतसमवायः कारणम् ॥ रसनेन्द्रियेणापि द्रव्यप्रत्यक्षं न भवतीति रसनासंयोगस्य रासनप्रत्यक्षे कारणत्वं नोक्तमिति बोध्यम् ॥ चक्षुस्त्वङ्मनांसि त्रीण्येव द्रव्यग्राहकाणीति सिद्धान्तात् ॥ **शब्दप्रत्यक्षे**–इति । श्रोत्रस्याकाशात्मकत्वात् श्रोत्रात्मकाकाशसमवेतशब्दस्य प्रत्यक्षे श्रोत्रानुयोगिकसमवायः कारणम्, अतो न देशान्तरीणशब्दप्रत्य-

**कारणम् । अत्र सर्वं प्रत्यक्षं लौकिकं बोध्यम् । वक्ष्यमाणमलौकिकप्रत्यक्षमिन्द्रियसंयोगादिकं विनापि भवति ॥ एवमात्मनः प्रत्यक्षे मनःसंयोगः, आत्मसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवायः, आत्मसमवेतसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः कारणम् । अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसम्बद्धविशेषणता हेतुः । वैशेषिकमते तु समवायो न प्रत्यक्षः ॥ अत्र यद्यपि विशेषणता नानाविधा ।**

---

क्षम् । शब्दसमवेतशब्दत्वादेः प्रत्यक्षे श्रोत्रानुयोगिक-समवेतसमवायः कारणम् । आकाशस्तु न प्रत्यक्ष इति तत्सन्निकर्षो नोक्तः ॥ प्रत्यक्षं द्विविधम्,-लौकिकम्, अलौकिकं च । एतट्-षड्विधं लौकिकं=लोके प्रसिद्धं यत् तदुक्तमित्याह-**अत्र सर्वमिति** । अत्र-उक्तकार्यकारणभावस्थले । सर्वं=चाक्षुषादिभेदेन नानाविधम् , लौकिकं=लौकिकसन्निकर्षप्रयोज्यविषयतानिरूपकं, प्रत्यक्षं बोध्यम् । **वक्ष्यमाणमलौकिकं**=लोके प्रायशोऽप्रसिद्धत्वात् अज्ञातत्वात् अलौकिकं, तच्च सामान्यलक्षणासन्निकर्षज्ञानलक्षणासन्निकर्ष-योगजधर्मसन्निकर्षप्रयोज्यविषयतानिरूपकं प्रत्यक्षन् तु चक्षुरादीन्द्रियसंयोगात्मकलौकिकसन्निकर्षनिरपेक्षमपि जायते, तदग्रे निर्देक्ष्यते,-इति ततोऽवगन्तव्यम् । **विनापि**-इत्यत्रापिना लौककसन्निकर्षसापेक्षमपि अलौकिकप्रत्यक्षं कश्चिद्भवतीति ज्ञापितम् ॥ **एवमात्मनः** इति । आत्मनो मानसप्रत्यक्षे महत्परिमाणस्य कारणता प्राक् "पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृत" (१५)मितिकारिकामुक्तावल्यां "आत्ममानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वा"दित्यनेन दर्शिता, किन्तु कार्यकारणभावमध्ये महत्परिमाणस्य निवेशनस्य प्रयोजनाऽनुपलम्भात् महत्परिमाणमनिवेश्यैव कार्यकारणभावमाह-**मनःसंयोग इति** । आत्मवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति केवलमनस्संयोगः कारणम् । आत्मसमवेतज्ञानादिप्रत्यक्षं प्रति मनस्संयुक्तसमवायः कारणम् । आत्मसमवेतसमवेतज्ञानत्वादिप्रत्यक्षं प्रति मनःसंयुक्तसमवेतसमवायः कारणमिति ॥ अभावसमवाययोः प्रत्यक्षे सन्निकर्षं दर्शयति-**अभावप्रत्यक्षे** इति । समवायप्रत्यक्षे विवादात् प्रथमम् अभावप्रत्यक्षे-इत्युक्तम् ॥ यथा-भूतले घटाभावप्रत्यक्षस्थले-चक्षुरादीन्द्रियसंयुक्तभूतले विशेषणं घटाभावः स्वरूपसम्बन्धेन वर्तते, स्वरूपसम्बन्धावच्छिन्नवृत्तिता एव विशेषणता,-विषयता,-इत्युच्यते सा च घटाभावे वर्तते, अतोऽभावप्रत्यक्षे इन्द्रियसम्बद्धविशेषणतासन्निकर्षो हेतुः । एवं-'रूपसमवायवान् घट' इत्यत्र-समवायप्रत्यक्षस्थले चक्षुःसम्बद्धघटे विशेषणं समवायः स्वरूपसम्बन्धेन वर्तते,-विशेषणतारूपा विषयता समवायनिष्ठा, अतः समवायप्रत्यक्षे इन्द्रियसम्बद्धविशेषणतासन्निकर्षः कारणम् ॥ विशेषणविशेष्यभावाख्यः षष्ठः सन्निकर्षो बोध्यः, स च द्विधा विभिद्यते-इन्द्रियसम्बद्धविशेष्यत्वम्, इन्द्रियसम्बद्धविशेषणत्वं चेति । यदा-'भूतले घटाभाव'इति प्रत्ययस्तदा 'भूतलवृत्तितावान् घटाभाव'-इति तदर्थत्वाद् घटाभावो विशेष्यपदार्थः, भूतलं तु वृत्तितासम्बन्धेन घटाभावे विशेषणं भवति, तत्र घटाभावप्रत्यक्षे चक्षुःसंयुक्तभूतलनिरूपितविशेष्यताख्यः सन्निकर्षो हेतुः बोध्यः ॥ 'घटाभाववद् भूतलमि'ति यदा प्रत्ययस्तदा घटाभावो भूतले विशेषणं भवतीति तत्र चक्षुस्संयुक्तभूतलनिरूपितविशेषणतासन्निकर्षो हेतुर्बोध्य इति ॥ समवायस्तु गौतममते प्रत्यक्षः, नव्यमतेतु समवायसम्बन्धा बहुविधाः, प्रत्यक्षद्रव्यादौ प्रत्यक्षाः इतिमतेन समवायप्रत्यक्षमुक्तम् । **वैशेषिकमत इति** । यदि समवायः प्रत्यक्षः स्यात् तर्हि रूपादिसमवायवतां परमाण्वादीनामपि प्रत्यक्षापत्तिः स्यात्, समवायस्यैकतया च एकदा भाविभूतसकलसमवायाश्रयव्यक्तीनां प्रत्यक्षापत्तिश्च, सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात्, अतः समवायो न प्रत्यक्ष इति वैशेषिका वदन्ति । **गौतमाः नव्यास्तु**-सम्बन्धप्रत्यक्षत्वं न कार्यतावच्छेदकं,

**तथाहि भूतलादौ घटाद्यभावः स्वसंयुक्तविशेषणतया गृह्यते। संख्यादौ रूपाद्यभावः स्वसंयुक्तसमवेतविशेषणतया। संख्यात्वादौ रूपाद्यभावः स्वसंयुक्तसमवेतसमवेतविशेषणतया। शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया। कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया। एवं कत्वाद्यवच्छिन्नाभावे गत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया। एवं घटाभावादौ पटाभावः चक्षुःसंयुक्तविशेषणविशेषणतया।एवमन्यदप्यूह्यम्। तथापि विशेषणतात्वेनरूपेणैकैव सा गण्यते। अन्यथा षोढा सन्निकर्ष इति प्राचां प्रवादो व्याहन्येतेति॥ यदि स्यादुपलभ्येत इति। अत्राभावप्रत्यक्षे**

किन्तु यावदाश्रयप्रत्यक्षस्य कार्यतावच्छेदकं संयोगप्रत्यक्षत्वमेव, तथा च समवायप्रत्यक्षे न वैशेषिकोक्ताऽऽपत्तिरिति समवायप्रत्यक्षं मन्तव्यमिति वदन्ति ॥ **अत्र यद्यपीति**। अत्र विशेषणतासन्निकर्षस्य प्रत्यक्षेण सह कार्यकारणभावस्थले, विशेषणतासम्बन्ध इन्द्रियतत्सन्निकर्षभेदेन 'इन्द्रियसम्बद्ध'-इतिविशेषणभेदाद् बहुविधो भवति, तेन विशेषणतासन्निकर्ष एकः षष्ठसंख्यापूरक इति कथनं न भवति संगतम्, तथापि विशेषणतात्वेन एकेन धर्मेण विशेषणतानामेकत्वव्यवहारः, अतः षष्ठसंख्यापूरकतया स्वीकृतो वेदितव्य इति भावः॥ 'यद्यपो'त्याशंकायाः 'तथापी'त्युत्तरं बोध्यम्॥ विशेषणतानां नानाविधत्वमुपपादयति-**तथाहीति**। भूतले जले वा घटपटाद्यभावप्रत्यक्षं प्रति (स्व) चक्षुःसंयुक्त( भूतलजल )विशेषणतासन्निकर्षः कारणम्। **संख्यादाविति**। घटस्थायाम् एकत्वसंख्यायां गुणे रूपाऽभावो वर्तते तस्य प्रत्यक्षं प्रति चक्षुस्संयुक्त( घट )समवेत( संख्या )विशेषणतासन्निकर्षः कारणम्। घटस्थैकत्वसंख्यावृत्तिसंख्यात्वे जातौ रूपाऽभावो वर्तते तस्य प्रत्यक्षं प्रति चक्षुस्संयुक्त( घट )समवेत( संख्या )—समवेत ( संख्यात्व )विशेषणतासन्निकर्षः कारणम् ॥ श्रोत्रे यः शब्दाऽभावस्तस्य प्रत्यक्षं प्रति श्रोत्रवृत्तिविशेषणतासन्निकर्षः कारणम्। श्रोत्रवृत्तिककारे खत्वजातेरभावो वर्तते तस्य प्रत्यक्षम् प्रति श्रोत्रसमवेत( क )विशेषणतासन्निकर्षः कारणम्। एवम् आकाशात्मकश्रोत्रे यः कत्वावच्छिन्नस्य ककारस्याऽभावो वर्तते तत्राऽभावे गत्वजातेरभावो वर्तते तस्य प्रत्यक्षम् प्रति श्रोत्रविशेषण ( ककाराभाव ) विशेषणतासन्निकर्षः कारणम्, श्रोत्रे विशेषणं ककाराऽभावः ककाराभावे विशेषणं गत्वजातेरभाव इति॥ एवम्-भूतले यो घटाभावस्तत्र वर्तते यो पटाभावस्तस्य प्रत्यक्षम् प्रति चक्षुस्संयुक्त(भूतल) विशेषण ( घटाभाव )विशेषणता (पटाभावनिष्ठ)सन्निकर्षः कारणम् ॥ **एवमन्यदप्यूह्यमिति**। यथा घटद्रव्ये गुणः, गुणे गुणत्वं, गुणत्वे पदार्थत्वं, पदार्थत्वे धर्मे घटाभावः, घटाभावे गुणत्वाभावः, इत्येवं क्रमेण विशेषणविशेष्याणाम् अवस्थितिस्तत्र तत्तद्विशेष्येण सह विशेषणानां ये ये सम्बन्धा भवेयुस्तांस्तानादाय सम्बन्धपरम्परा कल्पनीया, यथा-गुणत्वाऽभावप्रत्यक्षम् प्रति चक्षुस्संयुक्त( घट )समवेत( गुण ) समवेत( गुणत्व )विशेषण ( पदार्थत्व ) विशेषण ( घटाभाव )विशेषणता( गुणत्वाभावनिष्ठ ) सन्निकर्षः कारणमिति ॥ येन येन सम्बन्धेन पदार्थाः संकलितास्तत्तत्सम्बन्धपरम्पराऽन्ते विशेषणता योजनीया इत्यूह्यमिति भावः॥ यद्यपीत्याशंकां समाधत्ते-**तथापीति**। विशेषणतात्वेन धर्मेण सा बहुविधाऽपि विशेषणता एकैव स्वीक्रियते अतो न षोढासन्निकर्षव्याघातः। अन्यथा = विशेषणतात्वेन एकत्वाऽनभ्युपगमे तु षड्विधसन्निकर्षगणना विरुध्येतेति भावः॥ **मीमांसकाः**-अभावो न प्रत्यक्षः, किन्तु-अनुपलब्धिप्रमाणजन्याऽनुपलम्भात्मकप्रमितिविषय एव, समवायानङ्गीकाराच्च, तयोः प्रत्यक्षानुरोधेन विशेषणतासन्निकर्षो नैव स्वीकार्य इति वदन्ति,तन्मतं दूषयति-**यदि स्यादुपलभ्येतेति**। अनुपलब्धिसहकृतेनेन्द्रियेणैवाऽभावप्रत्यक्षसम्भवे अनुपलम्भात्मकप्रमित्यन्तरं तत्करणत्वेन अनुपल-

योग्यानुपलब्धिः कारणम् । तथाहि भूतलादौ घटादिज्ञाने जाते घटाभावादिकं न ज्ञायते । तेनाभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम् । तत्र योग्यताप्यपेक्षिता, सा च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा । तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे

---

बध्यात्मकं प्रमाणं च न स्वीकार्यं गौरवादिति भावः ॥ एवं सिद्धान्तं निरूपयति–**अभावप्रत्यक्षे योग्यानुपलब्धिरिति ।** इन्द्रियजन्येऽभावप्रत्यक्षे योग्याऽनुपलब्धिः सहकारिकारणमित्यर्थः ॥ योग्यस्य=प्रत्यक्षयोग्यतावतो घटादेः, अनुपलब्धिः=उपलम्भाभावः–प्रत्यक्षप्रतीत्यभाव इति यावत् यथा घटादिप्रत्यक्षाभावो घटाद्यभावप्रत्यक्षे सहकारिकारणमिति भावः ॥ वस्तुतस्तु–योग्याऽनुपलब्धिर्नाम योग्यताविशिष्टः उपलब्ध्यभावः, योग्यता अभावनिष्ठा अग्रे वक्ष्यते ॥ **कारणमिति ।** कारणमेव नतु करणमिति भावः ॥ तदेवोपपादयति–**तथाहीति ।** भूतलाद्यात्मकेऽधिकरणे चक्षुःसंयुक्तसंयोगेन घटपटादिप्रत्यक्षज्ञाने जाते सति घटाभावादिकं=घटपटादिप्रतियोगिताकाऽभावः, न ज्ञायते=न प्रत्यक्षो भवतीत्यर्थः ॥ तत्तदिन्द्रियजन्यसंयोगादिसम्बन्धावच्छिन्नघटत्वाधवच्छिन्नप्रकारताशाल्यनाहार्यनिश्चये जाते सति तत्तदिन्द्रियजन्यसंयोगादिसम्बन्धावच्छिन्नघटत्वाधवच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नलौकिकप्रकारताशाल्यनाहार्यज्ञानत्वावच्छिन्नं न जायते इति समुदितार्थः ॥ विशेष्यतासम्बन्धेन भूतलनिष्ठं घटाभावज्ञानं प्रति विशेष्यतासम्बन्धेन घटनिश्चयः प्रतिबन्धक इति तात्पर्यार्थः ॥ **तेनेति ।** घटाद्यभावज्ञानं प्रति घटादिनिश्चयस्य प्रतिबन्धकत्वेनेत्यर्थः ॥ अभावोपलम्भे=विशेष्यतासम्बन्धेन घटाद्यभावज्ञानं प्रति प्रतियोग्युपलम्भाभावः=विशेष्यतासम्बन्धेन घटाद्यात्मकप्रतियोगिनिश्चयाऽभावः, कारणम्=हेतुः । न तु करणमिति । ननु अभावप्रत्यक्षे यदि प्रतियोग्युपलम्भाभावः कारणं तदा जलपरमाणौ पृथिवीत्वोपलम्भाभावसत्त्वात् पृथिवीत्वाभावप्रत्यक्षमापद्येतेत्याद्यशंकावारणार्थं योग्यताविशिष्टः प्रतियोग्युपलम्भाभावः कारणमिति दर्शयति–**तत्रेति ।** तत्र=प्रतियोग्युपलम्भाभावे,–पृथिवीत्वादिप्रत्यक्षाभावे कारणे इत्यर्थः । योग्यता अपेक्षिता=सहकारिकारणतया स्वीक्रियते ॥ सा च कीदृशी ? इत्यतो मणिकारमतेन तामाह–**प्रतियोगीत्यादिना ।** अत्र–तर्कः–'यद्यत्र घटः स्यात्, तर्ह्युपलभ्येत' इति । तत्र 'यद्यत्र घटः स्यात्' इतिप्रथमं दलम् आपादकम्–प्रतियोगिनो घटस्य सत्त्वस्य=सत्ताया आरोपकं भवति, तेन आपादकेन प्रतियोगिसत्त्वारोपेण 'तर्हि उपलभ्येत' इत्यापाद्यस्य घटोपलम्भस्य=घटप्रत्यक्षस्य आरोपो भवति । आपाद्याभावेन–घटोपलम्भाभावेन च आपादकाभावस्य=घटाभावस्य सिद्धिरत्र प्रत्यक्षात्मिका भवति । तत्र आपाद्याभावे=प्रतियोग्युपलम्भाभावे, यद् आपाद्यप्रतियोगिकत्वं धर्मः, घटोपलम्भप्रतियोगिकत्वं धर्मः, स एव योग्यतापदार्थः । तथाच **प्रतियोगिसत्त्वप्रसंजनं**=घटस्य सत्ताया आरोपो 'यद्यत्र घटः स्याद्'-इत्याकारकः, तेन आरोपेण,–**प्रसञ्जितप्रतियोगिकः**=आरोपितो प्रतियोगी–'तर्हि उपलभ्येत'–इत्यारोपविषयो घटोपलम्भः=घटप्रत्यक्षं, तदेव प्रतियोगी यस्य=अभावस्य स घटोपलम्भप्रतियोगिकोऽभावः, तत्राऽभावे यस्तादृशप्रतियोगिकत्वात्मको धर्मः स एव योग्यतापदार्थः,तादृशयोग्यताविशिष्टप्रतियोग्युपलम्भाभावः प्रतियोग्यभावप्रत्यक्षे कारणमिति भावः ॥ जलपरमाणौ च 'यद्यत्र पृथिवीत्वं स्यात् तर्ह्युपलभ्येते'त्यापादयितुमशक्यत्वात् पृथिवीत्वसत्तारोपजन्यारोपविषयपृथिवीत्वात्मकप्रतियोगिकत्वस्य जलपरमाणुगतपृथिवीत्वाभावे विरहात् न तत्र तस्य प्रत्यक्षमिति ॥ प्रतियोगिसत्ताव्यापकोपलम्भप्रतियोगिकत्वं योग्यत्वमिति हृदयम् ॥ योग्यतां व्युत्पाद्य दर्शयति–**तदर्थश्चेति ।** यस्याऽभावः प्रत्यक्षीकर्तव्यः स प्रतियोगी घटादिः, तस्य सत्त्वप्रसक्त्या='स्यात्'=इतिसत्तायाः, प्रसक्त्या=

हेतुः । तथाहि—यत्रालोकसंयोगादिकं वर्तते, तत्र 'यद्यत्र घटः स्यात्तर्हि उपलभ्येते'—त्यापादयितुं शक्यते । तत्र घटाभावादिप्रत्यक्षं भवति । अन्धकारे तु नापादयितुं शक्यते । तेन घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम्, स्पार्शनप्रत्यक्षं तु भवत्येव, आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात् । गुरुत्वादिकं यदयोग्यं तदभावस्तु न प्रत्यक्षस्तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुमशक्यत्वात् । वायौ

---

आरोपेण, प्रसञ्जितः=आरोपितः—'तर्हि उपलभ्येत'—इत्यारोपविषयीकृतः, उपलम्भरूपः=प्रत्यक्षज्ञानात्मकः, प्रतियोगी यस्य—उपलम्भाभावस्य, तत्त्वं योग्यता, सः=योग्यताविशिष्टः घटोपलम्भाभावः, अभावप्रत्यक्षे=घटाभावप्रत्यक्षे हेतुः=कारणमिति शब्दार्थः ॥ प्रतियोगि(घट)सत्ताया व्याप्यत्वं प्रतियोग्युपलम्भस्य च व्यापकत्वम् अभिलापकशब्दैर्दर्शयति—**यत्रालोकसंयोगादिकं वर्तत** इति। यदा यत्र भूतले घटादौ च **आलोकसंयोगादिकम्**=आलोकसंयोगावच्छिन्नोद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयोगो वर्तते तदा तत्र भूतले 'यद्यत्र घटः स्यात् तर्ह्युपलभ्येते'त्यापादयितुम्=आरोपितुं शक्यते, तत्र=तादृशाधिकरणे, घटाभावादेश्चाक्षुषप्रत्यक्षं भवतीति 'यत्र प्रतियोगिसत्ता तत्र प्रतियोग्युपलंभो भवति ॥ तथा च—चक्षुस्सन्निकर्षसहकृतो यः प्रतियोगि( घटादि )सत्तानिष्ठव्याप्यतानिरूपितव्यापकतावान् प्रतियोग्युपलम्भस्तस्य विशेष्यतासम्बन्धेन अभावो भूतलादिनिष्ठः प्रतियोग्यभावनिष्ठप्रत्यक्षे हेतुरिति समुदितग्रन्थार्थः ॥ 'तन्निष्ठ(घटादिनिष्ठ)प्रकारताशालि( घटवद्भूतलमिति )प्रत्यक्षस्य लौकिकविशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकत्वात्मकयोग्यताविशिष्टोऽभावः तदभाव( घटाभाव )प्रत्यक्षे हेतुरिति तु हृदयम् ॥ यत्र आलोकसंयोगाद्यवच्छिन्नचक्षुस्संयोगो न वर्तते तत्राऽन्धकारे तु 'यद्यत्र घटः स्यात् तर्ह्युपलभ्येत'—इति **आपादयितुम्**=आरोपितुं न शक्यते, **तेन**=प्रतियोगि( घट )सत्ताव्यापक-प्रतियोग्युपलम्भप्रतियोगिकत्वात्मकयोग्यताया एवाऽभावेन, योग्यताविशिष्टप्रतियोग्युपलम्भाभावात्मककारणाऽभावाद् अन्धकारे घटाभावस्य न चाक्षुषप्रत्यक्षात्मकं कार्यं भवतीति ॥ किन्तु—घटस्य **स्पार्शनप्रत्यक्षं** त्वगिन्द्रियजन्यप्रत्यक्षं भवत्येव, घटस्पार्शनप्रत्यक्षे आलोकसंयोगस्याऽकारणत्वात्, उद्भूतस्पर्शावच्छिन्नमहत्त्वावच्छिन्नत्वक्संयोगस्यैव कारणत्वात् । तथा च अन्धकारेऽपि यदा घटो न वर्तते तदा त्वगिन्द्रियजन्याऽभावप्रत्यक्षं प्रति उद्भूतस्पर्शावच्छिन्नमहत्त्वावच्छिन्नत्वक्संयुक्तविशेषणताया एव हेतुत्वेन तस्याश्चाऽन्धकारेऽपि गृहनिष्ठे घटाभावे सत्त्वात् तत्र **आलोकसंयोगं विनाऽपि स्पार्शनप्रत्यक्षस्य**=त्वगिन्द्रियजन्यप्रत्यक्षस्य 'यद्यत्र गृहे घटः स्यात् तर्हि त्वचा उपलभ्येत'इति—आपादयितुम्—आरोपितुं शक्यत्वाद् घटसत्ताव्यापक-घटस्पार्शनोपलम्भप्रतियोगिकत्वात्मकयोग्यताविशिष्टाऽभावस्य कारणस्य बलाद् घटाभावस्पार्शनप्रत्यक्षं भवत्येवेति भावः ॥ अतीन्द्रियपदार्थस्य अभावोऽपि न भवति प्रत्यक्ष इति दर्शयति—**गुरुत्वादिकमिति** । गुरुत्वं धर्मः अधर्मः पिशाचः इति ये अयोग्याः प्रत्यक्षाऽयोग्या अतीन्द्रियाः पदार्थाः, तेषामभावोऽपि न भवति योग्यः=प्रत्यक्षविषयः, यतस्तत्र=गुरुत्वाद्यधिकरणे गुरुत्वादिप्रत्यक्षस्य 'यदि घटे गुरुत्वं स्यात् तर्ह्युपलभ्येत'—इत्यापादयितुम् अशक्यत्वात् । गुरुत्वस्य सर्वथा तुलयाऽनुमेयत्वमेव । एवं धर्माऽधर्मावपि न प्रत्यक्षयोग्यौ, अतो 'यदि मयि धर्मः स्यात् तर्ह्युपलभ्येते'त्यापादनमपि नहि भवति । किन्तु सुखादिफलात्मकलिङ्गेन धर्मोऽनुमेय एवेति । तथाऽधर्मोऽपि ॥ तथा च तादृशयोग्यताया उपलम्भस्य चाऽप्रसिद्धत्वात् कारणाप्रसिद्ध्यैव कार्यं गुरुत्वादिप्रत्यक्षमप्रसिद्धमिति बोध्यम् ॥ अथ—चक्षुरादिमनोऽन्तानामेकैकेन्द्रियजन्यमेकैकेन्द्रियमात्रग्राह्यगुणप्रतियोगिकाऽभावलौकिकप्रत्यक्षं क्रमेणोपपादयति—

**रूपाभावः। पाषाणे सौरभाभावः। गुडे तिक्ताभावः। श्रोत्रे शब्दाभावः। आत्मनि सुखाभावः। एवमादयस्तत्तदिन्द्रियैर्गृह्यन्ते तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात्। संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता, अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यताऽ-**

---

**वायावित्यादिना।** पृथिव्यादावुद्भूतरूपस्य चाक्षुषप्रत्यक्षात् 'वायौ यदि उद्भूतरूपं स्यात् तर्हि चक्षुषा उपलभ्येते'त्यापादयितुं शक्यत्वाद्, उद्भूतरूपसत्ताव्यापक–चाक्षुषप्रत्यक्षप्रतियोगिकत्वात्मकयोग्यताविशिष्टाऽभावात्मककारणसत्त्वाद् उद्भूतरूपाऽभावो वायौ गृह्यते–इति भावः॥ **एवं** पुष्पादावुद्भूतसौरभस्य चाक्षुषप्रत्यक्षात्–'पाषाणे यदि उद्भूतसौरभं स्यात् तर्हि घ्राणेनोपलभ्येते'त्यापादयितुं शक्यत्वात् उद्भूतसौरभसत्ताव्यापक·घ्राणजप्रत्यक्षप्रतियोगिकत्वात्मकयोग्यताविशिष्टाऽभावात्मककारणसत्त्वाद् उद्भूतसौरभाभावः पाषाणे गृह्यते॥ **एवं** मरीचिकादावुद्भूततिक्तरसस्य रासनप्रत्यक्षाद् 'गुडे यद्युद्भूततिक्तः स्यात् तर्हि रसनयोपलभ्येते'त्यापादयितुं शक्यत्वाद् उद्भूततिक्तसत्ताव्यापक––रासनप्रत्यक्षप्रतियोगिकत्वात्मकयोग्यताविशिष्टाऽ भावात्मककारणसत्त्वाद् उद्भूततिक्ताऽभावो गुडे गृह्यते॥ एवं पृथिव्यामनुष्णस्पर्शस्य त्वाचप्रत्यक्षाद् वह्नौ यदि उद्भूताऽनुष्ण स्पर्शः स्यात् तर्हि त्वचोपलभ्येते'–त्यापादयितुं शक्यत्वात्, उद्भूताऽनुष्णस्पर्शसत्ताव्यापक–त्वाचप्रत्यक्षप्रतियोगिकत्वात्मकयोग्यताविशिष्टाऽभावात्मककारणसत्त्वाद् उद्भूताऽनुष्णाऽभावो वह्नौ गृह्यते॥ **श्रोत्रे शब्दस्य** एकदा प्रत्यक्षाद् अन्यदा 'यदि श्रोत्रे शब्दः स्यात् तर्हि श्रोत्रेणोपलभ्येते'-त्यापादयितुं शक्यत्वात्,·शब्दसत्ताव्यापकश्रोत्रजप्रत्यक्षप्रतियोगिकत्वात्मकयोग्यताविशिष्टाऽभावात्मककारणसत्त्वात् शब्दाऽभावः श्रोत्रे गृह्यते॥ **एकदा**–आत्मनि सुखादेः प्रत्यक्षाद् अन्यदा 'यद्यात्मनि सुखं स्यात् तर्हि मनसोपलभ्येते'–त्यापादयितुं शक्यत्वात् सुखसत्ताव्यापक–मानसप्रत्यक्षप्रतियोगिकत्वात्मकयोग्यताविशिष्टाऽभावात्मककारणसत्त्वाद् आत्मनि सुखाभावो मनसा गृह्यतेति, एवमादयः। प्रत्यक्षयोग्यपदार्थाऽभावास्तत्पदार्थग्राहकेन्द्रियैर्गृह्यन्ते तत्तत्प्रत्यक्षस्याऽऽपादयितुं = आरोपितुं शक्यत्वादितिभावः॥ आदिना–'प्रभायां यदि उद्भूतस्पर्शः स्यात् तर्ह्युपलभ्येते'त्यापादयितुं शक्यत्वात् प्रभायामुद्भूतस्पर्शाऽभावस्त्वचा गृह्यते इति॥ **अथ** संसर्गाभावप्रत्यक्षे अन्योन्याभावप्रत्यक्षे च योग्यताभेदं दर्शयति–**संसर्गाभावप्रत्यक्षे** इति। संसर्गाभावस्त्रिविधः–प्रागभाव–प्रध्वंसाभावात्यन्ताभावभेदात्, तस्य प्रत्यक्षे प्रतियोगिनो घटादेः योग्यता=प्रत्यक्षयोग्यता अपेक्ष्यते, येन केनापीन्द्रियेण यः प्रतियोगी प्रत्यक्षयोग्यः, तस्यैव प्रागभावस्य प्रध्वंसाभावस्य अत्यन्ताभावस्य च प्रत्यक्षम् भवति, यस्तु प्रतियोगी सर्वथा इन्द्रियाऽगोचरः, तदीयसंसर्गाभावस्य कदापि न प्रत्यक्षम्। तथा च–'**प्रतियोगिनो योग्यता**=प्रतियोगियोग्यत्वम्,–तच्च योग्य-(प्रत्यक्षविषय)मात्रप्रतियोगिकत्वम् अभावनिष्ठं योग्यता इत्यर्थः॥ अयोग्याऽप्रतियोगिकत्वे सति योग्यधर्मावच्छिन्नप्रतियोगिताकत्वमिति फलितार्थः॥ अत्र पृथिवीत्वसामान्याभावप्रत्यक्षवारणाय सत्यन्तम्। घटादिनिष्ठगुरुत्वव्यक्तिनिष्ठतद्व्यक्तित्वावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावात्मकतद्व्यक्तिमदत्यन्ताभावप्रत्यक्षवारणाय–विशेष्यदलम्॥ वस्तुतस्तु–इयं योग्यता न जातिरूपा, अभावाऽवृत्तित्वप्रसंगात्, नापि प्रत्यक्षप्रयोजकोपाधिरूपा,–सप्तातिरिक्तपदार्थानङ्गीकारात्, नाऽप्यभावरूपा,–अननुगतत्वात्। किन्तु प्रतिबन्धकाऽभावत्वात्मिका, सर्वत्र तस्याः सुलभत्वात्॥ **अन्योन्याभावप्रत्यक्षे त्विति।** संसर्गाऽभावभिन्नाऽभावस्य प्रत्यक्षे तु, अधिकरणयोग्यता=अभावाधिकरणस्यैव प्रत्यक्षयोग्यता अपेक्ष्यते, यदि अधिकरणं प्रत्यक्षयोग्यं भवेत् तदाऽन्योन्याभावस्य प्रत्यक्षं भवत्वेवेति अधिकरणयोग्यत्वं=योग्या(प्रत्यक्षविषया)धिकरणवृत्तित्वम् अन्यो·

पेक्षिता। अतः स्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यत एव। एवं प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधम्। तत्र लौकिकप्रत्यक्षे षोढा सन्निकर्षो वर्णितः। ५९६२॥

अलौकिकसन्निकर्षस्त्विदानीमुच्यते—

**अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा॥ ६३॥**

अलौकिकस्त्विति॥ व्यापारः=सन्निकर्षः॥ सामान्यलक्षण इति। सामान्यं लक्षणं यस्येत्यर्थः। अत्र लक्षणपदेन यदि स्वरूपमुच्यते, तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते। तच्चेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं बोध्यम्। तथाहि यत्रे-

---

न्याभावनिष्ठं योग्यतापदार्थ इत्यर्थः॥ जात्यवच्छिन्नप्रतियोगिताकत्व-जात्यतिरिक्तयोग्यधर्मावच्छिन्नप्रतियोगिताकत्वाऽन्यतरदेव अन्योन्याभावे योग्यतेति फलितार्थः॥ **अत इति**। अन्योन्याभावप्रत्यक्षेऽधिकरणयोग्यतायाः कारणत्वादित्यर्थः। 'स्तम्भः पिशाचो ने'त्यत्र स्तम्भात्मकेऽधिकरणे प्रत्यक्षाऽयोग्यस्यापि पिशाचस्य अन्योन्याभावः पिशाचत्वावच्छिन्नप्रतियोगिताकत्वात्मकयोग्यताविशिष्टत्वाद्व योग्याधिकरणवृत्तित्वात्मकयोग्यताविशिष्टत्वाद्वा चाक्षुषप्रत्यक्षो भवति। घटवत्कपालान्योन्याभावस्य भूतले प्रत्यक्षोपपत्तये जात्यतिरिक्तयोग्य(घटात्मक)धर्मावच्छिन्न(कपाल)प्रतियोगिताकत्वात्मिका योग्यताऽपि प्रदर्शिता॥ उपसंहरति—**एवमिति**॥ न्यायमते प्रत्यक्षं लौकिकाऽलौकिकभेदेन द्विविधं स्वीक्रियते, तत्र लोके प्रसिद्धसंयोगादिषड्विधसन्निकर्षजन्यं प्रत्यक्षं लौकिकमुच्यते, तत्कारणीभूताः षोढा=षड्विधसन्निकर्षाः वर्णिताः इत्यर्थः॥ ५९।६०।६१।६२॥

**अलौकिकसन्निकर्षस्तु**—इति। लोके प्रसिद्धसंयोगादिसन्निकर्षभिन्ना ये शास्त्रगम्याः सन्निकर्षास्तान् **इदानीं**=लौकिकसन्निकर्षनिरूपणानन्तरम्, **उच्यते**=उद्दिश्यत इत्यर्थः॥ **अलौकिकस्त्विति मूलम्**। अलौकिको व्यापारः=सन्निकर्षस्तु नैयायिकैस्त्रिप्रकारः कथितः। **सामान्यलक्षणः**=सामान्यं जातिः घटादिव्यक्तिश्च, तदेव लक्षणं स्वरूपम् आत्मा यस्येति व्युत्पत्त्या जात्यात्मको व्यक्त्यात्मकश्च सन्निकर्ष एकः॥ **ज्ञानलक्षणः**=ज्ञानमेव लक्षणम् स्वरूपम् यस्य सः—ज्ञानात्मकः सन्निकर्षो द्वितीयः। तथा तृतीयो **योगजः**=योगः—चित्तवृत्तिनिरोधस्तज्जन्यः संयमः—ध्यानधारणासमाध्यात्मकः सन्निकर्ष इत्यर्थः॥ **मुक्तावल्यां—व्यापार इति**। 'तत्सत्तातिरिक्तसत्ताकशून्यत्वे सति तज्जन्यजनकत्वमि'तिव्यापारलक्षणस्य जात्यादावपि सुघटत्वात् मूले 'व्यापार'इति पदप्रयोगः। तस्याऽलौकिकप्रत्यक्षप्रयोजकसम्बन्धत्वं दर्शयितुं पर्यायमाह—**सन्निकर्ष इति**। कर्मधारयपक्षे लक्षणशब्दस्य नित्यनपुंसकत्वेन पुल्लिङ्गत्वानुपपत्तिः, नवीनमते सामान्यज्ञानस्यैव प्रत्यासत्तित्वेन तस्य सामान्यात्मकत्वानुपपत्तिश्चेत्यतो बहुव्रीहिमाह—**सामान्यं लक्षणमिति**। तत्र=बहुव्रीहिसमासे, यो 'लक्षण'शब्दस्तस्य 'स्वरूप—विषयश्चे'त्यर्थद्वयम्। तत्र स्वरूपार्थकपक्षं व्युत्पादयति—**यदि स्वरूपमिति**। स्वरूपार्थकत्वस्य अग्रे दूषणीयत्वात् यदीत्युक्तम्। सामान्यस्वरूपा=आकृत्या समानानां पदार्थानां( घटादीनां ) भावोऽनागन्तुको धर्मः सामान्यं जातिः(घटत्वादिधूमत्वादिः ) द्रव्यगुणकर्मवृत्तिरिति॥ लक्ष्यते व्यवच्छिद्यत इति व्युत्पत्त्या लक्षणं स्वरूपम् असाधारणधर्मइत्युच्यते, असाधारणधर्मेण धर्मिणो धर्म्यन्तरेभ्यो व्यावर्तनात्॥ **प्रत्यासत्तिः**=सम्बन्धः॥ ननु धूमत्वात्मकसामान्यलक्षणाया नित्यत्वेन सर्वदा सकलधूमविषयकप्रत्यक्षमापद्येतेत्यत आह—**तच्चेति**। सामान्यं चेत्यर्थः। **इन्द्रियेति**। इन्द्रियं चक्षुरादि तेन

न्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं यत्र जातं, तत्र ज्ञाने धूमत्वं प्रकारः, तत्र धूमत्वेन सन्निकर्षेण धूमा इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते। अत्र यदीन्द्रियसम्बद्धमित्येवोच्यते, तदा अत्र धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात्, तत्र धूमत्वेन सहेन्द्रियसम्बन्धाभावात्। मन्मते तु इन्द्रियसम्बद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानम्, तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः। इन्द्रियसम्बन्धश्च लौकिको ग्राह्यः। इदं च बहिरिन्द्रियस्थले। मानस-

---

सम्बद्धः संयुक्तो धूमादिस्तद्विशेष्यकम् 'अयं धूम'इति ज्ञानं तादृशज्ञाननिरूपितप्रकारताविशिष्टसामान्यमेव प्रत्यासत्तिर्नतु केवलं सामान्यमिति भावः॥ तथा च न नित्यधूमत्वेन सर्वदा सकलधूमप्रत्यक्षापत्तिरिति दर्शयितुं स्फुटमुपपादयति–**तथाहीति**। यत्र=यदा, चक्षुरादीन्द्रियसंयुक्तधूमादिविशेष्यकं धूमत्वप्रकारकं 'धूम'इति ज्ञानं जातं, तत्र=तदा 'धूम'इति ज्ञाने धूमत्वं प्रकारतया भासते, तत्र=तदा, तादृशज्ञाननिरूपितप्रकारताविशिष्टधूमत्वात्मकजातिसम्बन्धेन 'धूमा'इत्येवं सकलधूमविषयकं प्रत्यक्षमुत्पद्यते न तु सर्वदा, अतो नोक्तापत्तिरिति भावः॥ चक्षुःसंयोगेन धूमप्रत्यक्षज्ञाने सति ततो धूमसमवेतधूमत्ववत्तासम्बन्धेन सकलधूमप्रत्यक्षज्ञानं भवतीति तत्र धूमत्वमेव सन्निकर्ष इति बोध्यम्॥ ननु 'ज्ञानप्रकारीभूतं' पदं कथमुच्यते!, इन्द्रियसम्बद्धसामान्यमेव सन्निकर्षमुच्यताम्, तावतैव सर्वदा सकलधूमप्रत्यक्षापत्तिर्निवार्यते इत्यतस्तत्सार्थक्यं दर्शयति–**अत्र यदीति**। अत्र=प्रत्यासत्तौ, लाघवादिन्द्रियसम्बद्धसामान्यमेवाऽलौकिकसन्निकर्ष इत्युच्येत! तदा='पुरोवर्तिनि धूलीपटले 'अयं धूम' इति धूमत्वप्रकारकभ्रमात्मकज्ञानानन्तरं धूमत्वेन सन्निकर्षेण 'धूमा'–इति सकलधूमविषयकाऽलौकिकप्रत्यक्षं नैव स्यात् इत्यापत्तिः, यतस्तत्र=तदा, धूमत्वेन धूमसमवेतसामान्येन सह चक्षुरिन्द्रियसंयुक्तसमवायात्मकसन्निकर्षाऽभावात्, चक्षुस्संयोगस्य धूलीपटले सत्त्वात्। भवति च धूलीपटले धूमत्वभ्रमानन्तरं 'धूमा'इति सकलधूमविषयकं सर्वानुभवसिद्धं ज्ञानम्, तन्निर्वाहार्थं 'ज्ञानप्रकारीभूत'मित्युक्तम्। तथा च सति **मन्मते**='ज्ञानप्रकारीभूते'तिविशेषणदातुर्मते–चक्षुस्सम्बद्ध–धूलीपटलविशेष्यकं 'अयं धूम'इति भ्रमज्ञानं तत्र प्रकारविधया धूमत्वं विषयीभवति तदेव **प्रत्यासत्तिः**=सन्निकर्षः, तादृशचक्षुस्संयुक्तधूलीपटलविशेष्यकभ्रमज्ञानप्रकारताविशिष्टधूमत्वसामान्यसन्निकर्षाद् 'धूमा'–इत्यलौकिकप्रत्यक्षं भवेदेवेति॥ **इन्द्रियसम्बन्धश्चेति**। इन्द्रियसम्बन्धस्तु लौकिकः संयोगादिषड्विधसन्निकर्षान्यतमो यथायोगं ग्राह्य इत्यर्थः। अन्यथा 'सुरभि चन्दनम्'—इति चन्दनांशे लौकिकं चाक्षुषं सौरभांशेऽलौकिकज्ञानलक्षणासन्निकर्षजन्यं चाक्षुषं यत्र जातं तत्र ज्ञानलक्षणात्मकचक्षुस्सम्बन्धविशिष्टसौरभविशेष्यक–'सुरभि चन्दनमि'तिज्ञानप्रकारताविशिष्टसौरभत्वप्रत्यासत्त्या सकलसौरभविशेष्यकचाक्षुषापत्तिः स्यात्, न चेष्टापत्तिः, सामान्यप्रत्यासत्त्या बहिरिन्द्रियेण सर्वांशेऽलौकिकभानस्याऽनुभवविरुद्धत्वात्॥ किञ्च–विनश्यदवस्थचक्षुस्संयोगाद् घटचाक्षुषोत्तरं तादृशज्ञानात्मकेन्द्रियसम्बन्धविशिष्टलौकिकविशेष्यताशालितादृशचाक्षुषज्ञानप्रकारीभूतघटत्वप्रत्यासत्त्या सकलघटविषयकचाक्षुषापत्तिश्च स्यादिति। लौकिकेन्द्रियसम्बन्धग्रहणे तु नोक्तापत्तिरिति॥ ननु–गुरुत्वत्वेन यत्किञ्चिद्गुरुत्वोपस्थित्यनन्तरं सकलगुरुत्वविषयकमानसप्रत्यक्षाऽनुपपत्तिः, गुरुत्वेन सह मनसो लौकिकसन्निकर्षस्य, गुरुत्वे लौकिकविशेष्यतायाश्चाऽभावात् तादृशलौकिकविशेष्यताशालिमानसप्रकारताविशिष्टगुरुत्वत्वात्मकसामान्यस्याऽप्रसिद्धत्वाद् अत आह–**इदं चेति**। च एवार्थः। इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतसामान्यं बहिरिन्द्रियजन्यसकलघटादिप्रत्यक्षस्थले एव प्रत्यासत्तिविधया कारण

स्थले तु ज्ञानप्रकारीभूतं सामान्यमात्रं प्रत्यासत्तिः ॥ ६३ ॥

परन्तु समानानां भावः सामान्यम् । तच्च क्वचिन्नित्यं धूमत्वादि, क्वचिच्चानित्यं घटादि । यत्रैको घटः संयोगेन भूतले, समवायेन कपाले ज्ञातस्तदनन्तरं सर्वेषामेव तद्धटवतां भूतलादीनां कपालादीनां वा ज्ञानं भवति, तत्रेदं बोध्यम् । परन्तु सामान्यं येन सम्बन्धेन ज्ञायते, तेन सम्बन्धेनाधिकरणानां प्रत्यासत्तिः । किन्तु यत्र

---

बोध्यम्, न तु मानसस्थले । **मानसस्थले** तु=मनःकरणकसकलघटादिविषयकप्रत्यक्षस्थले केवलज्ञानप्रकारीभूतसामान्यमेव सन्निकर्षः, न तु इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतसामान्यम् । तथा च गुरुत्वोपस्थित्यात्मकज्ञाने प्रकारीभूतगुरुत्वत्वप्रत्यासत्त्या पत्र कारणात्मिकायाः सत्त्वात् सकलगुरुत्वविषयकमानसप्रत्यक्षन् निर्वहत्येवेति । **एवम्**—अणुत्वेन यत्किंचिदणूपस्थितौ अणुत्वसामान्यलक्षणया सकलाणुगोचरो मानसो बोधोऽपि निर्वहत्येवेति । एवं—शब्दादिना यत्किंचित्पिशाचाद्युपस्थितौ मानसः सकलपिशाचादिबोध उपपद्यत इति ध्येयम् ॥ ६३ ॥

अथ संयोगेन घटादिव्यक्तिप्रकारकभूतलविशेष्यकचाक्षुषोत्तरं संयोगेन तद्घटप्रकारकतद्घटाश्रययावद्व्यक्तिविशेष्यकं सर्वानुभवसिद्धमलौकिकचाक्षुषं न स्यात् तद्घटादेस्तादृशप्रकारतावत्त्वेऽपि सामान्य( जाति )त्वाऽभावादित्याशंकामपनेतुम् 'आसत्तिराश्रयाणा'मिति ( ६४ ) कारिकामवतारयितुं च 'सामान्य'पदस्य योगव्युत्पत्तिं दर्शयन् भूमिकां रचयति—**परन्तु**—इति । समानानां भावः=एकधर्मवन्निष्ठसाधारणधर्मः, यथा 'घटवद्भूतल'मित्यत्र भूतलत्वधर्मवद्भूतलनिष्ठः साधारणो धर्मो घटः,—भूतलं चेत्युभयं सामान्य गृहीतुं शक्यत इति ॥ तच्च=एतादृशसामान्यं च, क्वचित्=किंचित्, नित्यं=नित्यजात्याद्यात्मकं धूमत्वभूतलत्वादिरूपम्, क्वचित्=किंचिच्च सामान्यं, अनित्यम्=उत्पत्तिध्वंसप्रतियोगिघटपटाद्यात्मकं बोध्यम् ॥ अनित्यसामान्यप्रत्यासत्त्याऽलौकिकप्रत्यक्षमुदाहरति—**यत्रैक** इति । यत्र=यदा, एको घटः=तद्घटव्यक्तिः, संयोगेन भूतले, ज्ञातः=दृष्टः, तदनन्तरं चक्षुस्सम्बद्धभूतलविशेष्यक'घटवद्भूतल'मितिज्ञानप्रकारताविशिष्टघटात्मकप्रत्यासत्त्या 'संयोगेन सकलघटवद्भूतलानि'—इत्यलौकिकप्रत्यक्षात्मकं ज्ञानं भवति । एवम्—यदा तद्धटः समवायेन कपाले दृष्टस्तदनन्तरं चक्षुस्सम्बद्धकपालविशेष्यक'घटवत्कपाल'मितिज्ञानप्रकारताविशिष्टघटात्मकप्रत्यासत्त्या 'समवायेन सकलघटवत्कपालानी'त्यलौकिकप्रत्यक्षात्मकं ज्ञानं भवति । **तत्र**=एतादृशस्थले, इदं=समानानां भावः सामान्यमितिव्युत्पत्तिलभ्यम् इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतघटाद्यात्मकाऽनित्यसामान्यं, बोध्यमित्यर्थः ॥ ननु संयोगेन घटवद्भूतलमि'तिज्ञानोत्तरम् इन्द्रियसम्बद्धज्ञानप्रकारघटात्मकप्रत्यासत्त्या कालिकेन घटवद्यावद्विषयक'घटवान्पटः''घटवज्जन्यम्'—'घटवान्काल'इत्याद्यलौकिकचाक्षुषापत्तिः, निरुक्तप्रकारताविशिष्टघटस्य कालिकेन जन्ये महाकाले च सत्त्वादित्यतआह—**परन्तु सामान्यं येन सम्बन्धेनेति** । इन्द्रियसम्बद्धविशेष्यकज्ञानीययत्सम्बन्धावच्छिन्नप्रकारताविशिष्टं सामान्यं भवति, **तेन सम्बन्धेन**=इन्द्रियसम्बद्धविशेष्यकज्ञानीयप्रकारतावच्छेदकसम्बन्धेन, अधिकरणानां=सामान्यवतां विशेष्याणां, प्रत्यासत्तिः=सम्बन्धो मन्यते । यथा संयोगेन घटवद्भूतलज्ञानप्रकारीभूते घटे संयोगावच्छिन्नप्रकारता भवति तदा तत्र संयोगेनैव घटवतां भूतलानाम् अलौकिकप्रत्यक्षे निरुक्तसंयोगावच्छिन्नघटः सन्निकर्षो भवति, न तु कालिकेन, अतो न उक्ता'घटवान्पट' 'घटवज्जन्यं' 'घटवान् काल'इत्याद्यापत्तिरिति । तथा च—विशेष्यतासम्बन्धेन इन्द्रियसम्बद्धविशेष्यकज्ञानीयप्रकारतावच्छेदकसम्बन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपिततत्सम्बन्धावच्छिन्नतन्निष्ठाधेयतानिरूपिताऽधिकरणताश्रययावन्निष्ठविशेषणताशालिचाक्षुषत्वाद्यवच्छिन्नं प्रति तादृशलौ-

तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं, तत्र सामान्यलक्षणया सर्वेषां तद्घटवतां भानं न स्यात्, सामान्यस्य तदानीमभावात्। किंचेन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं यत्र जातं, तत्र परदिने इन्द्रियसम्बन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वात्तादृशज्ञानं कुतो न जायते, तस्मात्सामान्यविषयकं ज्ञानं प्रत्यासत्तिर्न तु सामान्यमित्याह—

आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते ।
तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥

आसत्तिः प्रत्यासत्तिरित्यर्थः। तथा च सामान्यलक्षण इत्यत्र लक्षणशब्दस्य

---

किकविशेष्यताशालिचाक्षुषत्वावच्छिन्ननिरूपिततत्सम्बन्धावच्छिन्नप्रकारताविशिष्टतद्व्यक्तेस्तादृशप्रकारतावच्छेदकसम्बन्धेन हेतुत्वमिति कार्यकारणभावः फलितः॥ एतावता प्राचीनमतेन ज्ञायमानसामान्यस्य प्रत्यासत्तित्वं प्रदर्श्येदानीं नवीनमतेन सामान्यज्ञानस्य प्रत्यासत्तित्वं सिद्धान्तयितुं प्राचीनमतं दूषयति—किन्तु—इत्यादिना। यत्र=भूतले, पूर्वं संयोगेन घटस्य प्रत्यक्षं कृतम्, तदनन्तरं किंचित्कारणवशाद् अज्ञातमध्यकाले तद्घटो नष्टः, तदनन्तरं तद्घटवतः=तद्घटसंयुक्तभूतलस्य 'भूतलं तद्घटवदि'ति स्मरणं जातम्, तत्र=तदानीं, सामान्यलक्षणया=इन्द्रियसम्बद्धज्ञानप्रकारीभूतघटसन्निकर्षेण, सर्वेषां तद्घटवतां 'संयोगेन तद्घटवद्यावद्भूतलानी'ति, भानं=सर्वानुभवसिद्धं जायमानं यदलौकिकप्रत्यक्षं, तन्न स्यादित्यनुपपत्तिः। कुतः?, तदानीम् सामान्यस्य=इन्द्रियसम्बद्धज्ञानप्रकारीभूतघटात्मकसम्बन्धस्य, अभावात्=नष्टत्वादित्यर्थः॥ कारणाऽसत्त्वेपि कार्यभवनात्मके व्यतिरेकव्यभिचारे एतद्दूषणस्य तात्पर्यं बोध्यम्॥ अथाऽन्वयव्यभिचारतात्पर्यकं दूषणान्तरमाह—**किञ्चेति**। यत्र=यदा, चक्षुरादीन्द्रियसंयुक्तसमवायेन 'घट'इति (घटत्ववान्घट) इति घटत्वप्रकारकसमवायसंसर्गकघटविशेष्यकं प्रत्यक्षज्ञानं पूर्वदिवसे जातं, परदिने=द्वितीयस्मिन् दिवसे, तत्र=घटत्वे,इन्द्रियसम्बन्धं—चक्षुस्संयुक्तसमवायं विनापि, तादृश'घट'इतिज्ञानप्रकारीभूतघटत्वात्मकनित्यसामान्यस्य कारणस्य सत्त्वात्, 'सर्वे घटा घटत्ववन्त'इतिज्ञानेन अवश्यं भाव्यम्, किन्तु तादृशमलौकिकज्ञानं न जायते। तत् कुतः=केन कारणाभावेन न जायते। येन कारणाभावेन न जायते, तदेव कारणमत्र कल्पनीयम्॥ तथा चोक्तस्थलेऽन्वयव्यभिचारो ज्ञापितः॥ **तस्मात्**=व्यतिरेकव्यभिचाराद् अन्वयव्यभिचाराच्च दोषादित्यर्थः॥ इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतसामान्यज्ञानं सन्निकर्षो वक्तव्यः, नतु तादृशसामान्यमात्रमिति। तथा च—पूर्वोक्ततद्घटनाशस्थलेऽपि इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूततद्घटज्ञाना (स्मरणा) त्मकसन्निकर्षस्य कारणस्य सत्त्वेन कार्यजननान्न व्यतिरेकव्यभिचारः, परदिने च इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतघटत्वज्ञाना(स्मरणा)भावेन कार्याऽजननान्नाऽन्वयव्यभिचार इति॥

एतदेव नवीनमतमाह मूले—**आसत्तिरिति**। आश्रयाणाम्=अधिकरणानां भूतलादीनाम्, अलौकिकप्रत्यक्षस्य कारणम्, सामान्यज्ञानम्=इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतसामान्यज्ञानमेव, आसत्तिः=सन्निकर्षो बोध्य इत्यर्थः॥ **तदीन्द्रियजेति**। चक्षुरादीन्द्रियजन्यो यो घटात्मकधर्मस्य बोधस्तत्र चक्षुस्संयुक्तसंयोगः आलोकसंयोगो महत्परिमाणम् उद्भूतरूपादि चेति सामग्र्योऽपि सहकारितया तत्रैवोपस्थिता अपेक्ष्यन्ते, तद्विना बोधाऽजननादित्यर्थः॥ **मुक्तावल्याम्**—आसत्तिपदार्थमाह—**प्रत्यासत्तिरिति**। सम्बन्ध इत्यर्थः। सामान्यज्ञानस्य

विषयोऽर्थः। तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते । ननु चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्तते तत्र सकलघटादीनां चाक्षुषादिप्रत्यक्षं स्यादत आह-तदिति । अस्यार्थः—यदा बहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किंचिद्धर्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानस्य सामग्री अपेक्षिता। सा च सामग्री चक्षुःसंयोगालोकसंयोगादिकम् । तेनान्धकारादौ चक्षुरादिना तादृशज्ञानं न जायते ॥ ६४ ॥

---

सामान्यलक्षणापदार्थत्वमुपपादयितुं लक्षणापदार्थमाह--तथा चेति । 'सामान्यलक्षणा'इतिवाक्यघटकस्य 'लक्षण'शब्दस्य 'विषयः'--इत्यर्थः, तेन=विषयार्थकत्वेन । सामान्यविषयकं ज्ञानम्=निर्विकल्पकसाधारणं स्मृतिसाधारणं च सामान्यविषयकज्ञानत्वम् प्रत्यासत्तितावच्छेदकं बोध्यम् ॥ 'घटा'-इत्यलौकिकप्रत्यक्षस्थले-घटत्वप्रकारकाऽलौकिकप्रत्यक्षत्वं कार्यतावच्छेदकम्, घटत्वज्ञानत्वं कारणतावच्छेदकम्, स्वप्रकारीभूतघटत्वाश्रयत्वं कार्यतावच्छेदकसम्बन्धः, स्वविषयकघटत्वाश्रयत्वं कारणतावच्छेदकसम्बन्धः ॥ अत्र समवायेन तद्धर्माश्रययावद्व्यक्तिविषयकप्रत्यक्षत्वावच्छिन्नं प्रति समवायेन तद्धर्मविषयकज्ञानत्वेन कारणमिति-आत्मनिष्ठकार्यकारणभावो बोध्यः ॥ अत्र विषयाऽऽनन्त्याद्गौरवम् । तदपेक्षया पुरुषाऽल्पत्वाल्लाघवात्-स्वीयप्रकारताश्रयतद्धर्मवत्त्वसम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति स्वीयविषयताश्रयतद्धर्मवत्त्वसम्बन्धेन ज्ञानत्वावच्छिन्नं प्रत्यासत्तिविषया कारणमिति कार्यकारणभावः करणीय इति भावः ॥ सामान्यज्ञानसन्निकर्षस्याऽलौकिकस्वभावत्वादिन्द्रियसम्बन्धं विनाऽपि सकलव्यक्तिसाक्षात्कारः स्यादित्याशंकते-ननु चक्षुःसंयोगादिकं विनापीति । 'घटेन सह चक्षुस्संयोगं विनापि, यत्र=यदा, सामान्यज्ञानं=घटज्ञानं स्मरणाद्यात्मकं वर्तते=जायते, तत्र=तदा, सकलघटादीनाम्=सकलघटवद्भूतलादीनाम्, अलौकिकं चक्षुष्प्रयोज्यं प्रत्यक्षमापद्येतेत्यर्थः । यद्वा=पूर्वग्रन्थानुसन्धानेन, अलौकिकसाक्षात्कारं प्रति इन्द्रियसम्बद्धज्ञानप्रकारीभूतसामान्यज्ञानं प्रत्यासत्तिः-अतीताऽनागतादिसामान्यविषयिणो अपि कारणमुक्ता, तथा च तत्र सामान्यस्य ज्ञाने प्रकारतयैवाऽपेक्षणाद् भूतलादावनपेक्षणाद् वर्तमानकाले भूतलादौ घटेन सह चक्षुस्संयोगादिकं विनापि यत्र=यदा, घटात्मकसामान्यस्य स्मरणाद्यात्मकज्ञानं वर्तते=जायते तत्र=तदा, यावद्घटवद्भूतलानाम् अलौकिकप्रत्यक्षात्मकज्ञानकारणीभूतस्य ज्ञानात्मकसन्निकर्षस्य विषयीभूतानां सकलानां घटानां चाक्षुषप्रत्यक्षापत्तिः स्यात्, अलौकिकप्रत्यक्षं प्रति अलौकिकसन्निकर्षद्वारा विशेषणविषयकलौकिकप्रत्यक्षस्यैव प्रयोजकत्वात् घटज्ञानस्य लौकिकचाक्षुषादिप्रत्यक्षत्वस्वीकारस्यापत्तिरिति भावः ॥ समाधत्ते-अस्यार्थ इति। 'तदिन्द्रियजतद्धर्मबोधसामग्री' इत्यस्यायमर्थ इत्यर्थः॥ यदा बहिरिन्द्रियेण=चक्षुरिन्द्रियेण सामान्यलक्षणासन्निकर्षद्वारा अलौकिकप्रत्यक्षात्मकं ज्ञानं जननीयं भवेत् तदा यत्किंचिद्भूतलादिधर्मिणि भूतलवृत्तिसामान्यस्य घटादेः चक्षुरिन्द्रियजन्यप्रत्यक्षज्ञानस्य कारणात्मिका सामग्री आलोकसंयोगचक्षुस्संयोगादिका अपेक्ष्यते सा च सामग्री एकावच्छेदेन महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नालोकसंयोगावच्छिन्नचक्षुःसंयोगात्मिका बोध्या। तेन-अन्धकारे आलोकसंयोगाऽभावात्, उत्पन्नक्षणे उद्भूतरूपाऽभावात्, देशान्तरे चक्षुस्संयोगाभावाच्च, चक्षुरिन्द्रियेण तादृशं=घटप्रत्यक्षं, घटज्ञानद्वारा अलौकिकप्रत्यक्षं च, न जायते। घटेन सह चक्षुस्संयोगादिसत्त्वे एव घटप्रत्यक्षज्ञानद्वारा घटवतामलौकिकप्रत्यक्षं स्यात् ॥ त्वक्संयोगे सति तु त्वाचप्रत्यक्षद्वाराऽलौकिकप्रत्यक्षं स्यादिति बोध्यम् ॥ ६४ ॥

**ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा, सामान्यलक्षणापि ज्ञानरूपा, तदा तयोर्भेदो न स्यादत आह—**

**विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।**

**सामान्यलक्षणा प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति । ज्ञानलक्षणा प्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति । अत्रायमर्थः । प्रत्यक्षे सन्निकर्षं विना भानं न सम्भवति । तथा च सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च भानं कथं भवेत् ?, तदर्थं सामान्यलक्षणा स्वीक्रियते ॥**

---

सामान्यलक्षणाप्रत्यासत्तेरपि सामान्यज्ञाने पर्यवसानात् ज्ञानलक्षणात्मकद्वितीयप्रत्यासत्त्या सह अभेदं शंकते-**नन्विति** । ज्ञानलक्षणा=ज्ञानमेव लक्षणं स्वरूपं यस्याः सा, तदुदाहरणमग्रे प्रदर्शयिष्यते । द्वयोरैक्ये भेदेन कीर्तनं निरर्थकं, तथा चाऽलौकिकसन्निकर्षो द्विधा एव वक्तव्य इत्याशंकितुरभिप्रायः ॥ **मूले विषयीति** । 'सुरभि चन्दन'मित्यत्र यस्य=सौरभादेः, विषयी=ज्ञानं, तस्यैव=सौरभादेरेव, व्यापारः=सन्निकर्षः, ज्ञानलक्षणः=ज्ञानस्वरूपः=बोध्यः इत्यर्थः ॥ प्रथमदिवसे चन्दनं घ्रात्वा 'सुरभि चन्दनमि'ति निश्चित्य दिवसान्तरेऽघ्रात्वैव दूरतश्चन्दनदर्शनमात्रेण 'सुरभि चन्दन'मित्यन्यस्मै जिज्ञासमानाय वदति, तदेतद्दिवसान्तरीये 'सुरभि चन्दन'मिति ज्ञाने सौरभं चन्दनं चन्दनत्वं चेति भासते, तत्र चक्षुस्संयोगेन चन्दनज्ञानं, चक्षुस्संयुक्तसमवायेन चन्दनत्वज्ञानं लौकिकसन्निकर्षजन्यत्वात् लौकिकप्रत्यक्षमुच्यते, परन्तु घ्राणसम्बन्धं विनाऽपि सौरभज्ञानं यत् जातं तत्तु चक्षुस्संयुक्तमनस्संयुक्तात्मसमवेतज्ञानाख्येन सन्निकर्षेण संस्कारद्वारा जनितमलौकिकमेव प्रत्यक्षं बोध्यमिति । नच सौरभांशे स्मरणमिति वाच्यम् । स्मृतित्वप्रत्यक्षत्वयोः सांकर्यापत्तिभिया 'सुरभि चन्दन'मिति विशिष्टज्ञानस्यैकस्यैव स्वीकारात् । नतु प्राभाकरवत् ज्ञानद्वयं तत्रेति ॥ **मुक्तावल्यां** द्वयोर्भेदं स्फुटयति-**सामान्यलक्षणा प्रत्यासत्तिर्हीति** । 'सामान्यलक्षणा घटादिस्वरूपा आद्या प्रत्यासत्तिः, तदाश्रयस्य=सामान्याश्रयस्य धर्मिणः=घटाश्रयाणां घटवद्भूतलादीनां देशान्तरीणकालान्तरीणानामपि, ज्ञानम्=अलौकिकसाक्षात्कारं जनयति, तथा च स्वप्रकारीभूतसामान्यवत्त्वसम्बन्धेन प्रत्यक्षं प्रति स्वविषयसामान्यवत्त्वसम्बन्धेन सामान्यलक्षणाप्रत्यासत्तेर्हेतुत्वमुपलब्धम् ॥ **ज्ञानलक्षणा** द्वितीया प्रत्यासत्तिस्तु यद्विषयकं ज्ञानं=यस्य सौरभादेरलौकिकं भानं जातं तस्य धर्मात्मकसौरभज्ञानस्यैव जनिका प्रत्यासत्तिः, नतु धर्मिणश्चन्दनस्याऽपीति । तथा च-'अलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति विषयतासम्बन्धेन ज्ञानलक्षणाप्रत्यासत्तेर्हेतुत्वमुपलब्धम् । एवं च-उभयोः ज्ञानस्वरूपत्वेऽपि फलवैचित्र्यात् प्रत्यासत्तितावच्छेदकसम्बन्धभेदाच्च भेदो बोध्यः । सामान्यलक्षणायाः स्वीकारे बीजं दर्शयितुमाह-**अत्रायमर्थ** इति । अत्र=सामान्यलक्षणास्वीकारे, अयमभिप्राय इत्यर्थः । **प्रत्यक्षे** इति । भानं=विषयता, तथा च-प्रत्यक्षनिरूपितविषयता सन्निकर्षं विना न सम्भवति, अतः प्रत्यक्षविषयताव्यापकं सन्निकर्षवत्त्वं भवतीत्यर्थः । 'यत्र च व्यापकाऽभावः-सन्निकर्षाभावः, तत्र व्याप्याभावः-प्रत्यक्षविषयत्वाभावोऽवश्यं स्यात्, यत्र च प्रत्यक्षविषयता भवेत् तत्राऽवश्यं कश्चित्सन्निकर्षो भवेदितिव्याप्त्या सामान्यलक्षणास्वीकारं स्फुटयति-**तथा चेति** । सामान्यलक्षणां विना=यदि सामान्यलक्षणासन्निकर्षो न स्वीक्रियेत, तदा सकलधूमेषु सकलवह्निषु चान्यसन्निकर्षाऽभावेन,-'धूमत्वेन सकलधूमानां ( सर्वे धूमा ) इत्यलौकिकज्ञानं, वह्नित्वेन सकलवह्नीनां ( सर्वे वह्नयः ) इत्यलौकिकज्ञानं च, कथं=केन हेतुना भवेत्, अतस्तदर्थम्=अनुभवसिद्ध-

**न च सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यं, प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वादन्यधूमस्य चानुपस्थितत्वाद् धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः। मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसन्देहः सम्भवति। न च सामान्यलक्षणायाःस्वीकारे प्रमेयत्वेन सकलप्रमेयज्ञाने जाते सार्वज्ञ्यापत्तिरिति वाच्यं, प्रमेयत्वेन सकलप्रमेयज्ञाने जातेऽपि विशिष्य सक-**

---

'सर्वे धूमाः सर्वे वह्नयः' इति प्रत्यक्षज्ञानार्थम्, कारणीभूता सामान्यलक्षणाप्रत्यासत्तिः स्वीकर्तव्या इत्यर्थः। शंकते–**न च सकलेति**। सकलवह्नीनां सकलधूमानां च भानमेव न भवति, तथा च तदर्थं सामान्यलक्षणापि न स्वीकर्तव्या, क्षत्यभावात्, इत्याशंकितुरभिप्रायः॥ अथ महानसे प्रत्यक्षधूमे वह्निव्याप्यत्वनिर्णयानन्तरं सामान्यलक्षणासन्निकर्षात्मकधूमत्वेन कालान्तरीणदेशान्तरीण-सकलधूमानामलौकिकमानसप्रत्यक्षं जायते ततस्तेषु धूमेषु वह्निव्याप्यत्वसंशयो भवति, ततः कदाचित् पर्वतीयधूमदर्शने सति तत्र धूमे वह्निव्याप्यत्वसन्देहस्फुरणात् 'पर्वतो वह्निमान्नवे'तिसन्देहः स्यात्, स एव पक्षता, तदनन्तरं परामर्शात्मकनिर्णये सति 'पर्वतो वह्निमा'नित्यनुमितिर्भवति। तत्र 'पर्वतो वह्निमान्नवे'तिसंशयात्मकपक्षतासम्पादको 'धूमो वह्निव्याप्यो न वा'–इति संशयः, सामान्यलक्षणाया अस्वीकारे अयं पक्षतासम्पादकसंशय एव न स्यात् तेन पक्षता न स्यात्, तेन च पर्वतादौ वह्न्यादेरनुमितिरेव नोदीयादिति क्षतिं दर्शयन् समाधत्ते–**प्रत्यक्षधूमे**–इति। इन्द्रिय-सन्निकृष्टे महानसीयधूमे, वह्निसम्बन्धस्य=वह्निसामानाधिकरण्यात्मकव्याप्तिरूपसम्बन्धस्य चक्षुषा गृहीतत्वेन तत्र धूमे वह्निव्याप्यत्वसंशयाऽनुत्पादः, अन्यधूमस्य=देशान्तरीणकालान्तरीणधूमानां च तदानीम्, अनुपस्थितत्वात्=चक्षुषा अगृहीतत्वेन धर्मि(अन्यधूम)ज्ञानाऽभावादेव तेषु धूमेषु वह्निव्याप्यत्वसंशयाऽनुत्पादः, तथाच 'धूमो वह्निव्याप्यो न वा'इति संशयस्य पक्षतासम्पादकस्य **अनुपपत्तेः**=अनुत्पन्नत्वात्, तथा च तदधीनस्य पर्वते वह्निसंशयस्य पक्षतात्मकस्याऽप्यनुत्पादात्, पक्षता-विरहादनुमितिरेव न स्यादिति क्षतिरिति भावः॥ सामान्यलक्षणाप्रत्यासत्तिवादिमते तु नोक्ता क्षतिरिति दर्शयति–**मन्मते तु इति**। सामान्यलक्षणाप्रत्यासत्तिवादिनो मम नैयायिकस्य मते तु, सामान्य-लक्षणया=सामान्यात्मकधूमत्वसन्निकर्षेण, सकलानां कालान्तरीणदेशान्तरीणधूमानाम् उपस्थितौ=अलौकिकसाक्षात्कारे सति पर्वतीयादिधूमादौ वह्निव्याप्यत्वसन्देहः='अयं वह्निसमानाधिकरणो न वा'–इति संशयः, सम्भवति=जायते एव, तेन च पक्षतासत्त्वे भवेदनुमितिरिति सामान्यलक्षणास्वीकारो न निरर्थक इति भावः॥ साध्यसंशयस्य पक्षतावादिमतेऽयं ग्रन्थः संगच्छते॥ सिषाधयिषाविरहवि-शिष्टसिद्ध्यभावपक्षतावादिमते तु सामान्यलक्षणयोपस्थितेष्वन्यधूमेषु वह्निव्याप्यत्वसंशये सति तद्विघटकस्य तर्कस्य 'धूमो यदि वह्निव्याप्यो न स्यात् तर्हि वह्निशून्येऽपि देशे उपलभ्येते'त्याकारक-स्याऽवतारात् तत्र 'वह्निशून्यदेशोपलम्भाभावेनाऽऽपाद्याभावेनाऽऽपादकाभावस्य 'धूमे वह्निव्याप्यत्वा-भावाभावस्य–वह्निव्याप्यत्वस्य' सामान्यतो निर्णयात्, ततः परामर्शेनाऽनुमितिर्भवति। यदि सामा-न्यलक्षणा न स्वीक्रियेत तदाऽन्यधूमेषु वह्निव्याप्यत्वसन्देहाऽनुत्पादात् तद्विघटकतर्कानवतारात् सक-लधूमेषु वह्निव्याप्तिनिर्णयाऽभावाद् वह्न्यनुमितिरेव नोदीयादिति क्षतिर्बोध्येति ध्येयम्। शंकते–**न चेति**। सामान्यलक्षणास्वीकारे प्रमेयत्वात्मकसामान्यसन्निकर्षेण सप्तपदार्थात्मकसकलप्रमेयज्ञाने प्रत्यक्षात्मके जाते सति सर्वज्ञत्वापत्तिः=सर्वविषयकानित्यप्रत्यक्षज्ञानवत्त्वापत्तिरित्यर्थः॥ समाधत्ते–**प्रमेयत्वेनेति**। प्रमेयत्वेन सकलसप्तपदार्थात्मकप्रमेयानां मानसप्रत्यक्षज्ञाने जातेऽपि, सकल-पदार्थानां **विशिष्य**–विशेषविशेषधर्मेणाऽज्ञानात् सर्वज्ञत्वापत्तिर्न भवतीत्यर्थः॥ सार्वज्ञ्यं प्रति

लपदार्थानामज्ञातत्वेन सार्वज्ञ्याभावात् ॥ एवं ज्ञानलक्षणाया अस्वीकारे 'सुरभि चन्दनमिति' ज्ञाने सौरभस्य भानं कथं स्यात् । यद्यपि सामान्यलक्षणयापि सौरभभानं संभवति, तथापि सौरभत्वस्य भानं ज्ञानलक्षणया । एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया ॥

योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६५ ॥
युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः ।

---

साधारणधर्मप्रकारकज्ञानवत्त्वे सति विशेषतत्तद्यावत्पदार्थवृत्तिधर्मप्रकारकज्ञानवत्त्वं प्रयोजकम्'–तदभावाच्च न सार्वज्ञापत्तिरिति भावः ॥ ज्ञानलक्षणास्वीकारे बीजमाह—**एवमित्यादिना** । ज्ञानलक्षणासन्निकर्षानङ्गीकारे प्राग्दिने घ्रात्वाऽनुभूतस्य 'सुरभिचन्दनस्य'–अपरदिने दूराच्चक्षुःसंयोगमात्रेण 'सुरभि चन्दन'मिति यज्ज्ञानमलौकिकं सौरभस्य जायते तत्रेन्द्रियसन्निकर्षाऽभावेन केन सन्निकर्षेण सौरभस्यालौकिकभानं स्यात्, अतः तादृशाऽलौकिकप्रत्यक्षविषयताव्यापकस्तत्र ज्ञानलक्षणात्मकः सन्निकर्षः स्वीकार्य इति भावः ॥ शंकते–**यद्यपीति** । सौरभस्याऽलौकिकभानं सौरभत्वात्मकसामान्यप्रत्यासत्त्या भवत्येव तथाच ज्ञानलक्षणा तत्र निरर्थिका–इत्याशंकितुरभिप्रायः ॥ समाधत्ते–**तथापीति** । जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किञ्चिद्धर्मप्रकारकत्वनियमेन सौरभत्वजातौ तु केनाऽपि धर्मेण ज्ञानाऽनुत्पादात् सौरभत्वस्य स्वरूपतोऽलौकिकमानसः साक्षात्कारो ज्ञानलक्षणाजन्य एव भवतीति तदर्थं ज्ञानलक्षणाया आवश्यकत्वात् ॥ जातेः स्वरूपतो भानार्थं ज्ञानलक्षणावश्यकतां प्रदर्श्य जात्यतिरिक्तपदार्थस्य किञ्चिद्धर्मप्रकारेण भाननिर्वाहार्थं ज्ञानलक्षणावश्यकतां दर्शयति–**एवमिति** । यत्र=यदा, धूमत्वेन धूलीपटलभ्रमो जातस्ततो 'धूमत्वावच्छिन्नधूलीपटलभ्रमवानहम्' ( धूमत्वेन धूलीपटलं जानामी )त्यनुव्यवसायज्ञानं मनसा जातम् , अत्रानुव्यवसाये धूमत्वं धूलीपटलं भ्रमश्चेति त्रयं भासते, ज्ञानज्ञानस्यापि ज्ञानविषयविषयकत्वात् , तथा च तत्र भ्रमांशविषयकानुव्यवसायो मनस्संयोगसन्निकर्षजन्यः, धूमत्वांशविषयको धूलीपटलांशविषयकश्चानुव्यवसायो मनस्संयुक्तात्मसमवेतभ्रमात्मकज्ञानलक्षणासन्निकर्षजन्य एव भवति। धूलीपटलेन धूमत्वेन च सह मनसो लौकिकसन्निकर्षाऽभावात् , धूमत्वाऽसत्त्वाच्च सामान्यलक्षणाया अप्यसंभवाच्च । तत्र ज्ञानलक्षणया धूलीपटलं किञ्चिद्धर्मधूमत्वप्रकारेण विषयीभवतीति भावः ॥

तृतीयं योगजसन्निकर्षमाह–मूले–**योगज** इति । **यद्यपि** योगदर्शनमते–'योगः चित्तवृत्तिनिरोधः, समाधिरिति यावत् , स च द्वेधा–सम्प्रज्ञातयोगः, असम्प्रज्ञातयोगः, तत्र असम्प्रज्ञातयोगः विवेकसाक्षात्कारमात्राऽनुवर्तमानो भवति, न हि तदानीं विवेकख्यात्यतिरिक्ताश्चित्तवृत्तिधर्माधर्मसंस्कारादयो वर्तन्ते, किन्तु लीना एव, **तथा च**–तदानीं योग( यावच्चित्तवृत्तिनिरोधावस्थचित्तसमाधि )जन्यो विवेकसाक्षात्कार एव धर्मः सन्निकर्षः स्वीकर्तव्यः स च अविच्छिन्नसाक्षात्कारात्मकः पक्वयोगिनः, किञ्चिदपक्वयोगिनस्तु सम्प्रज्ञातयोगो विच्छिन्नसाक्षात्कारात्मकः, तत्र–**युक्तस्य**=पक्वयोगिनः, पूर्वपूर्वसार्वदिकस्फुरणात्मकविवेकसाक्षात्कारसन्निकर्षेण उत्तरोत्तरसार्वदिकविवेकसाक्षात्कारात्मकाऽलौकिकबोधोऽनुवर्तते, तत्र पूर्वपूर्वसाक्षात्कारः सन्निकर्षः, उत्तरोत्तरसाक्षात्कारस्तु फलमिति भेदः ॥ अथ **अपरः**=सम्प्रज्ञातोऽपक्वयोगी, चिन्तासहकृतः, चिन्ताऽत्र ध्यानं धारणा च, तत्सहायकेन विच्छिन्नविच्छिन्नविवेकसाक्षात्कारात्मकसन्निकर्षेण उत्तरोत्तरं जायमानविवेकसाक्षात्कारवान् भवतीति । इति रीत्या ग्रन्थः संगमनीयः ॥ **तथापि 'योगज'**-

योगज इति । योगाभ्यासजनितो धर्मविशेषः श्रुतिस्मृतिपुराणादिप्रतिपाद्य इत्यर्थः। युक्तयुञ्जानभेदत इति । युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्मस्य द्वैविध्यमिति भावः ॥ ६५ ॥ युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादिनिखिल-पदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति। द्वितीयस्य चिन्ताविशेषोऽपि सहकारीति ॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां
सिद्धान्तमुक्तावल्यां प्रत्यक्षखण्डम् ।

---

पदस्य 'योगाभ्यासजनितो धर्मविशेषः श्रुतिपुराणादिप्रतिपाद्य'—इत्यर्थकरणात्—धर्मविशेषः—उत्कृष्टपुण्यं सन्निकर्षो लभ्यते, तद्बलाद् अनया रीत्या ग्रन्थः संगमनीयः—तद्यथा—**योगाभ्यासजनितः**=योगः समाधिः तदर्थं यः समाधिसाधनभूतेषु—यमनियमासनप्राणायामप्रत्याहारेषु अभ्यासः, ईश्वरप्रणिधाने चाऽभ्यासः क्रमशस्तज्जनितो यो धर्मविशेषः=धारणाध्यानसम्पादकं महत्पुण्यम्, ईश्वरानुग्रहसम्वलितज्ञानविशारदीभावश्च, अत्रार्थे श्रुतयः—"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" ( कठवल्ली—अ १, व—२, मं—१२ ) "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा। ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः" ( मु० ३, खं—१, मं—८ ) "ते सर्वगं सर्वतः प्राप्य धीरा **युक्तात्मानः** सर्वमेवाविशन्ति" ( मु० ३, खं—२, मं—५ ) इति । तथाच यमनियमाद्यभ्यासजन्यपुण्यात्मकसन्निकर्षेण धारणाध्यानसमाध्यात्मकसंयमापराभिधानचिन्तासहकृतेन युञ्जानयोगिनः कालान्तरीणदेशान्तरीणसूक्ष्मविप्रकृष्टपदार्थविषयकाऽलौकिकसाक्षात्कारो भवतीति । एवम् ईश्वरप्रणिधानलभ्येश्वरानुग्रहान्वितज्ञानवैशारद्येन सार्वज्ञ्यकल्पेन सन्निकर्षेण युक्तयोगिनः सार्वदिकस्फुरणात्मकविवेकसाक्षात्कारो भवतीति । तत्र ईश्वरानुग्रहान्वितज्ञानप्रसादो युक्तधर्म उच्यते तद्वान् योगी **युक्तयोगी** । संयमसहकृतमहत्पुण्यं—युञ्जानधर्म उच्यते तद्वान् योगी **युञ्जानयोगी**, ति । युक्तयुञ्जानात्मकधर्मद्वैविध्यमिति ग्रन्थः संगमनीयः ॥ **युक्तस्य**=ईश्वरानुग्रहविशिष्टज्ञानप्रसादवतो योगिनः, योगजधर्मः=ईश्वरप्रणिधानजन्यानुग्रहविशिष्टज्ञानप्रसादात्मकधर्मः, तत्सहायेन, मनसा अन्तःकरणेन, आकाशपरमाण्वादयो ये निखिला पदार्थास्तेषां ज्ञानम् अलौकिकप्रत्यक्षात्मकं सर्वदैव=मध्ये तिरोभावरहितमेव, भवति ॥ **द्वितीयस्य**—युञ्जानयोगिनस्तु ध्यानधारणाद्यात्मकसंयमरूपश्चिन्ताविशेषः सहकारी=, संयमसहकृतपुण्यान्वितमनसा यद्विषयकसंयमस्तद्विषयकम् अलौकिकसाक्षात्कारात्मकं ज्ञानं भवतीति भावः ॥ यद्दिन्द्रियस्य यद् योग्यं स्थूलं सूक्ष्मं सन्निकृष्टं विप्रकृष्टं भूतं भव्यं च तत्सर्वमपि योगाभ्यासजनितधर्मविशेषसहकृततत्तदिन्द्रियजन्याऽलौकिकसाक्षात्कारविषयं भवतीति नियमः, न त्वन्येन्द्रियविषयस्याऽन्येन्द्रियसाक्षात्कारविषयत्वमिति, अत एव च "तत्राऽप्यतिशयो दृष्टः स्वस्वार्थानतिलंघनात् । स्थूलसूक्ष्मादिबुद्धौ स्याद न रूपे श्रोतृवृत्तिता" इति प्रशस्तपादाचार्य्योक्तिरपि संगच्छते इति ध्येयम् ॥

इति श्रीमद्दार्शनिकपञ्चानन—षड्दर्शनाचार्य्य,—नव्यन्यायाचार्य्य,—सांख्ययोगवेदान्तमीमांसातीर्थ—पण्डित—'श्रीकृष्णवल्लभाचार्य्य'स्वामिनारायणविरचितायां न्यायसिद्धान्तमुक्तावल्याः किरणावल्यां प्रत्यक्षखण्डे प्रत्यक्षप्रमाणसन्निकर्षादिनिरूपणपरिच्छेदः

❀ इति प्रत्यक्षखण्डः ❀

# ❀ अथानुमानखण्डः ❀

व्यापारस्तु परामर्शः, करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥
अनुमायां, ज्ञायमानं लिङ्गं तु करणं न हि ।
अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥

अथानुमितिं व्युत्पादयति—व्यापारस्त्विति । अनुमितौ व्याप्तिज्ञानं करणं, परा-

---

मूले–**व्यापारस्तु-इति**। 'पर्वतो,-वह्निमान्,-धूमादि'ति सद्धेतुस्थले 'पर्वतो वह्निमान्' इत्यनुमितिः कार्यम्, तज्जनकः परामर्शो 'वह्निव्याप्यधूमवान् पर्वत'इति व्यापारः, तज्जनकम् अनुमानं=व्याप्तिज्ञानम् 'साध्याऽभाववदवृत्तित्वादि'विषयकं 'साध्यसामानाधिकरण्य'विषयकं च, तदेवानुमानप्रमाणं करणं भवति। तथा **चाक्षरार्थः**–अनुमायाम् अनुमितौ, व्याप्तिधीः=व्याप्तिज्ञानं, करणं=व्यापारवदसाधारणकारणं भवति,परामर्शः वह्निव्याप्यधूमवानयं पर्वत'इति व्यापारः=व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितिजनकः,भवतीत्यर्थः॥प्राचीनमते व्याप्तिज्ञानंनकरणं,किन्तु व्याप्तिज्ञानविषयो धूमादिर्हेतुरेव करणम्, तन्निषेधति–**ज्ञायमान**मिति। ज्ञायते यत्तत् ज्ञायमानं–वर्तमानव्याप्तिज्ञानविषयं, लिंगं=लिङ्गयति–लीनमर्थं वन्ह्यादिकं गमयतीति लिङ्गं धूमादिः, स तु नव्यमते करणं नहि भवति। तत्र व्यभिचारमाह–**अनागतेति**। तदा=धूमादेः करणत्वे, अनागतेन=भविष्यत्कालीनेन धूमेन, आदिना भूतकालीनेन च धूमेन 'यज्ञशाला,-वह्निमती आसीत्, भूतधूमात्, 'यज्ञशाला, वह्निमती भविष्यति,-भाविधूमाद्' इत्यत्र, अनुमितिर्न स्यात्, वर्तमानकाले ज्ञायमानधूमाऽभावात्, सा च भवतीति सर्वमतसिद्धं, तथा च कारणाभावेऽपि कार्यसत्तात्मकव्यतिरेकव्यभिचारः। नव्यमते तु–अनागतादिधूमस्य तदानीं व्याप्तिज्ञानसत्त्वादनुमितिर्भवत्येवेति न व्यभिचारः इति भावः।

मुक्तावल्याम्–**अथानुमितिमिति**। प्रत्यक्षनिरूपणानन्तरमनुमाननिरूपणे उपजीव्योपजीवक-(कार्यकारण)भावरूपां संगतिं सूचयितुम् **'अथे'**त्युक्तम्। प्रत्यक्षनिरूपणानन्तरमित्यर्थः॥ उपजीवकत्वं=कार्यत्वम्, उपजीव्यत्वं कारणत्वम्, प्रत्यक्षकार्यमेवानुमानं भवत्यतः प्रत्यक्षकार्यत्वसंगत्याऽनुमाननिरूपणमिति। **अन्ये** तु–प्रत्यक्षनिरूपणाऽनन्तरमनुमितिनिरूपणेऽवसरसंगतिमाहुः यथा–'प्रत्यक्षमप्यनुमितिस्थोपमितिशब्दजे' (५२) इति विभागवाक्यात् प्रथमतः प्रत्यक्षस्योपस्थितौ तत्रैवानुमितिनिरूपणप्रतिबन्धिका 'किम्प्रत्यक्षमि'त्याकारिका जिज्ञासा जायते, अनन्तरं प्रत्यक्षनिरूपणेन तादृशजिज्ञासानिवृत्तौ अनन्तरोपस्थितानुमितेरेव वक्तव्यतया अवसरसंगतित्वलाभात्॥ **संगतिसामान्यलक्षणम्** – अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयस्मरणानुकूलसम्बन्धत्वम् स च सम्बन्धो निरूपणीयनिष्ठा संगतिः, तथाहि–प्रत्यक्षनिरूपणाऽनन्तरम् अनुमाननिरूपणे प्रयोजकजिज्ञासा 'अनुमानज्ञानं मे भवतु'–इत्याकारिका, तज्जनकज्ञानम् 'अनुमानज्ञानं मदिष्टसाधन'मित्याकारकम्। तद्विषयोऽनुमानम्, तत्स्मरणानुकूलसम्बन्धः–अनुमाननिष्ठं प्रत्यक्षकार्यत्वं संगतिरिति॥ संगतिः षड्विधा–**"सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा। निर्वाहकैककार्यत्वे षोढा संगतिरिष्यते"**। तत्र 'उपोद्घातादिभिन्नत्वे सति स्मरणप्रयोजकसम्बन्धत्वं प्रसङ्गत्वम्। प्रकृतोपपादकत्वमुपोद्घातत्वम्, ज्ञानजनकज्ञानविषयत्वमितियावत्। हेतुता=अजहत्स्वार्थलक्षणया–

**मर्शो व्यापारः ॥ तथा हि--येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता, पश्चात् स एव पुरुषः क्वचित् पर्वतादावविच्छिन्नमूलां धूमरेखां पश्यति, तदनन्तरं 'धूमो वह्निव्याप्य' इत्येवंरूपं व्याप्तिस्मरणं तस्य भवति, पश्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं, स एव परामर्श इत्युच्यते। तदनन्तरं पर्वतो वह्निमानित्यनुमितिर्जायते॥ अत्र**

---

कार्यकारणभाव उपजीव्योपजीवकभाव इत्यर्थः। अवसरः=अनन्तरवक्तव्यत्वम्। निर्वाहकैक्यम्=एक-प्रयोजकप्रयोज्यत्वम्। कार्यैक्यम्=एककार्यानुकूलत्वमिति ॥ **व्युत्पादयति**=निरूपयति। तथा च-प्रत्यक्षनिरूपणानन्तरानुमितिविषयकलक्षणस्वरूपप्रामाण्यादिप्रकारकज्ञानानुकूलव्यापारानुकूलकृति-मान् ग्रन्थकार इति बोधः ॥ **अनुमाया**'मित्यस्यार्थमाह-**अनुमिताविति**। करणे निर्दिष्टे एव व्यापारे जिज्ञासोदयात् मूले पश्चान्निर्दिष्टमपि करणं प्रथमं दर्शयति-**व्याप्तिज्ञानमिति**। साध्य-सामानाधिकरण्यादिविषयकं ज्ञानम्, करणं=व्यापारवदसाधारणं कारणं बोध्यम्॥ अथ परामर्शः= 'साध्यव्याप्यहेतुमान् पक्ष' इत्याकारकः, व्यापारः=तज्जन्यत्वे सति तज्जन्यजनकः,व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितिजनको भवतीत्यर्थः ॥ व्याप्तिज्ञानपरामर्शयोः करणत्वव्यापारत्वे उदाहरण-द्वारा दर्शयति-**तथाहीति**। येन पुरुषेण महानसावच्छेदेन गोष्ठावच्छेदेन चत्वरावच्छेदेन वा, **धूमे**=धूमनिष्ठा, वह्निनिरूपिता=वह्न्यभाववदवृत्तित्वाद्यात्मिका वह्निसामानाधिकरण्यात्मिका वा व्याप्तिर्गृहीता, धूमे वह्निव्याप्तेः प्रत्यक्षज्ञानं जातमित्यर्थः। **पश्चात्**-व्याप्तिज्ञानानन्तरं व्याप्तिज्ञानध्वंसकाले इत्यर्थः, तेन व्याप्तिस्मरणोपयोगिसंस्कारसत्त्वमावेदितम्। **स एव पुरुषः**=व्याप्तिसंस्कारवान् पुरुषः। क्वचित्पर्वतादौ=कस्मिँश्चित्पर्वते वने वा। सर्वपर्वतेषु चक्षुस्सम्ब-न्धाऽभावात् क्वचिदित्युक्तम्। **अविच्छिन्नमूलाम्**=नास्ति विच्छिन्नं विच्छिन्नभावं प्राप्तं मूलं= भूमिसंयोगः, अन्तराऽन्तराऽव्यवहितपूर्वापररेखाभावो वा यस्याः, ताम्। विच्छिन्नमूलाया अत एव च पर्वताऽसम्बद्धधूमरेखाया वह्निव्याप्यभाववत्त्वाद् विच्छिन्नरेखात्मकधूमज्ञानस्य व्याप्तिसम्बन्धिज्ञानत्वाऽभावेन धूमदर्शनस्य संस्कारोद्बोधकता न स्याद् अतः-अविच्छिन्नमूलामि-त्युक्तम्॥ एतादृशीं धूमपंक्तिं पश्यति। तद्दर्शनानन्तरम्। व्याप्तिसम्बन्धिधूमदर्शनस्य व्याप्तिस्मृतिज-नकसंस्काराणामुद्बोधकत्वाद् 'धूमो वह्निव्याप्यः'-वह्निनिरूपितसामानाधिकरण्यात्मकव्याप्तिविशिष्टो धूम'-इत्येवंरूपं धूमविशेष्यकव्याप्तिप्रकारकं स्मरणं, न तु 'धूमे वह्निव्याप्ति'रिति=व्याप्तिविशेष्यक-धूमवृत्तित्वप्रकारकम्, तस्य विशेषणतावच्छेदकप्रकारकनिर्णयाऽभावात् ततो वक्ष्यमाणपरामर्शाऽनु-त्पत्तेः। तस्य=व्याप्तिसंस्कारवतो धूमद्रष्टुश्च तस्यैव पुरुषस्य, भवति। अनुभवस्मरणयोः सामानाधि-करण्येन कार्यकारणभावादिति भावः। **पश्चात्**=तादृशव्याप्तिस्मरणाऽनन्तरं च, 'वह्निव्याप्यधूम वानयं पर्वत'-इत्याकारकं ज्ञानं जायते, तदेव ज्ञानं 'परामर्श'शब्देन व्यवह्रियत इत्यर्थः॥ **तदनन्तरं**= परामर्शानन्तरं, 'पर्वतो वह्निमान्' इत्यनुमितिर्जायते। तथा च-'पर्वतत्वावच्छिन्नोद्देश्यतानिरूपित-संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नविधेयताकाऽनुमितित्वावच्छिन्नं प्रति 'वह्नित्वावच्छिन्नप्रकार-तानिरूपितव्याप्तित्वावच्छिन्नप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्न विशे-ष्यताशालिनिर्णयः' कारणम्। प्रकारताविशेष्यतयोश्चाऽभेदाऽनङ्गीकर्तृगदाधरमते 'वह्नित्वावच्छिन्नप्र-कारतानिरूपितविशेष्यत्वावच्छिन्न-व्याप्तित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-धूमत्वावच्छि-न्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिर्णयः कारणं, तादृशव्याप्तिविशिष्टवैशिष्ट्यावगा-हिनिर्णयं (परामर्शं) च प्रति-विशेषणतावच्छेदकप्रकारकनिर्णयविधया व्याप्तिस्मरणं कारणमिति बोध्यम्॥ तदनुमानं द्विविधं-स्वार्थं परार्थं च, स्वार्थं स्वानुमितिहेतुरुक्तम्, परार्थं पञ्चावयववाक्य-

**प्राचीनास्तु व्याप्यत्वेन ज्ञायमानं लिङ्गमनुमितिकरणमिति वदन्ति, तद् दूषयति–ज्ञायमानमिति। लिङ्गस्याऽनुमित्यकरणत्वे युक्तिमाह–अनागतादीति। यद्यनुमितौ लिङ्गं करणं स्यात्, तदाऽनागतेन लिङ्गेन, विनष्टेन, चाऽनुमितिर्न स्यात्, अनुमितिकरणस्य लिङ्गस्य तदानीमभावादिति ॥ ६६ ॥ ६७ ॥**

**व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते।**

जन्यम्, पञ्चावयवाः'–प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि, 'पर्वतो वह्निमानि'—ति साध्यवत्तया पक्षबोधजनकवाक्यं प्रतिज्ञा, 'धूमादिति' पञ्चम्यन्तं लिंगप्रतिपादकवचनं हेतुः, 'यत्र धूमस्तत्र वह्निर्यथा महानसमितिव्याप्तिप्रतिपादकवचनमुदाहरणम्, 'अयं च पर्वतो वह्निव्याप्यधूमवानि'तिव्याप्तिविशिष्टलिंगप्रतिपादकवचनमुपनयः 'साध्यव्याप्यहेतुमत्त्वाद्वह्निमानि'ति हेतुसाध्यवत्तया पक्षप्रतिपादकं वचनं निगमनम्, तत्र पञ्चावयववाक्यप्रयोगेण 'पर्वतो वह्निमान्, हेतुत्वं धूमीयं,–महानसं धूमवद्वह्निमच्च महानसान्यद्धूमवद्वह्निमच्च,–वह्निव्याप्यधूमवान्पर्वतः साध्यव्याप्यधूमज्ञानज्ञाप्याऽबाधिताऽसत्प्रतिपक्षितवह्निमानि' तिमहावाक्यार्थबोधे सति अनुमितिर्भवतीति बोध्यम् ॥ मध्यस्थस्य 'वह्निव्याप्यधूमवान्पर्वत'इतिपरामर्शे सति अनुमितिर्भवतीति बोध्यम् ॥ **अत्रेति**। प्राचीनाः वदन्ति–अत्र=अनुमितिकरणताविचारे। **व्याप्यत्वेनेति**। व्याप्यत्वेन ज्ञायमानं=व्याप्यत्वप्रकारकवर्तमानग्रहविषयीभूतम्, लिङ्गम्=अनुमापकम्, तथा च व्याप्तिप्रकारकवर्तमानग्रहविशेष्यताविशिष्टलिङ्गस्यानुमितिकरणत्वमित्यर्थः ॥ अनुमितौ परामर्शमात्रं न हेतुरपि तु लिङ्गपरामर्शः, तथा च विशिष्टस्य कारणताग्रहे विशेषणस्यापि कारणताग्रहात् परामृश्यमाणलिङ्गस्य लिङ्गपरामर्शस्य वा कारणतेत्यत्र विनिगमनाविरहादुभयोर्हेतुतासिद्धौ, तत्र च व्यापाराऽभावान्न परामर्शस्य कारणता किन्तु लिङ्गस्यैवेति प्राचामाशयः। तत्प्राचीनमतं दूषयति–**ज्ञायमानमितीति**। व्याप्तिप्रकारकवर्तमानज्ञानविषयीभूतं लिङ्गं धूमादिकम् अनुमितिं प्रति करणं नैव भवतीत्याशयः॥ **लिङ्गस्य**=व्याप्तिप्रकारकज्ञानविषयीभूतलिङ्गस्य, अनुमितिनिरूपितकरणत्वाऽभाववत्त्वे व्यतिरेकव्यभिचारात्मिकां युक्तिमाह–**अनागतादीतीति**। यदि ज्ञायमानलिङ्गमनुमितौ करणं स्वीक्रियेत तदा, अनागतेन=भविष्यता धूमेन, विनष्टेन=भूतेन च धूमादिना लिङ्गेन, अनुमितिर्न स्यादित्यापत्तिरित्यर्थः॥ "इयं यज्ञशाला,–वह्निमती भविष्यति,–भाविधूमात्' "इयं यज्ञशाला,–वह्निमत्यासीत्,–भूतधूमाद्" इत्यत्रानुमितिः सर्वानुभवसिद्धा जायते, तत्र च ज्ञायमानं वर्तमानं लिङ्गं नास्तीति 'कारणाऽभावेऽपि कार्यसत्ता'त्मको व्यतिरेकव्यभिचार इति भावः॥ अनुमितेरभवने हेतुमाह–**अनुमितिकरणस्य लिङ्गस्येति**। तदानीम्—अनुमितिप्राक्क्षणे, अनुमितेरसाधारणकारणस्य लिङ्गस्य धूमादेरभावादित्यर्थः॥ तथा च–लिङ्गम्,–अनुमितिकरणत्वाऽभाववत्,–स्वाभाववद्वृत्तिकार्यकत्वात् ( व्यतिरेकव्यभिचारात्' ), इति फलितमनुमानम्॥ **वस्तुतस्तु**–प्राचीनैरतीतादिलिङ्गकाऽनुमितिर्नांगीक्रियते, अतोऽतीतादिलिङ्गकानुमित्यनुत्पत्तिस्तेषां भूषणमेव न तु दूषणम्॥ किन्तु–ज्ञायमानलिङ्गस्याऽनुमितिकरणतामते संयोगसमवायाद्यात्मकाऽनेकसम्बन्धानां करणतावच्छेदकसम्बन्धत्वकल्पनेन,–वर्तमानग्रहविशेष्यताविशिष्टधूमादेरेव करणतया तत्राऽनेकवर्तमानकालानां करणतावच्छेदकत्वकल्पनेन, च गौरवमेव दूषणं तन्मते बोध्यमिति॥ लिङ्गज्ञानस्य करणतावादिनव्यमते तु–स्वसंयुक्तमनस्संयुक्तात्मसमवेतस्मरणात्मकज्ञानलक्षणासन्निकर्षेण अतीतादिधूमज्ञानस्य विषयतादिसम्बन्धेन यज्ञशालादौ सत्त्वादनुमितिर्भवेदेवेति बोध्यम्॥ ६६।६७॥

मूले–**व्याप्यस्येति**। व्याप्यस्य=व्याप्तिविशिष्टस्य लिङ्गस्य धूमादेः, या **पक्षवृत्तित्वधीः**=

व्याप्यस्येति । व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानमनुमितौ जनकं, तच्च 'पक्षे व्याप्य'इतिज्ञानं, 'पक्षो व्याप्यवान्'इतिज्ञानं च, अनुमितिस्तु 'पक्षे व्याप्य'इतिज्ञानात् 'पक्षे साध्यम्'इत्याकारिका, 'पक्षो व्याप्यवान्'इतिज्ञानात्

---

पक्षे पर्वतादौ संयोगादिना वृत्तिताज्ञानम्–'संयोगेन वह्निव्याप्यधूमवान् पर्वत'इत्याकारकं यद् वह्निव्याप्यधूमप्रकारक-संयोगसंसर्गक-पर्वत-विशेष्यकज्ञानं तत् 'परामर्श'शब्देन उच्यते, तस्य द्वितीयं नाम 'व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञान''मिति । तदेव च 'व्याप्तिविशिष्टपक्षधर्मताज्ञान' मुच्यत इति । मुक्तावल्यां–'व्याप्यस्य'–इतिमूलस्यार्थमाह–व्याप्तिविशिष्टस्येति । हेतुव्यापकसाध्यसामानाधिकरण्यात्मकव्याप्त्याश्रयस्य हेतोर्धूमादेर्यत् पक्षेण=पर्वतेन सह वैशिष्ट्याव-गाहि=सम्बन्धावगाहि ज्ञानं=निश्चयस्तद् व्यापारविषयाऽनुमितिकारणमित्यर्थः । व्याप्त्यवच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वं परामर्शत्वमिति भावः । व्याप्त्यवच्छिन्नविषयतानिरूपित-पक्षनिरूपिताऽऽधेयत्वनिष्ठसांसर्गिकविषयत्व-हेतुतावच्छेदकसम्बन्धनिष्ठसांसर्गिकविषयत्वान्यतरनिरूपित-पक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वं परामर्शत्वमिति तु फलितार्थः । एतल्लक्षणमभिप्रेत्य तल्लक्ष्यतया द्विधा परामर्शमुदाहरति–तच्चेति। व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहि ज्ञानं च विशेषणविशेष्यभावव्यत्यासेन द्विविधं भवतीत्यर्थः । तत्राद्यं पक्षप्रकारकं व्याप्तिविशिष्टविशेष्यकं–'पक्षे व्याप्य'इति, व्याप्यः=व्याप्तिविशिष्टो धूमादिः, पक्षे=पर्वतादौ,–सप्तम्यर्थ आधेयत्वं,–तथा च–पक्षनिरूपिताधेयतावान् व्याप्तिविशिष्टधूम' इत्यर्थः । द्वितीयन्तु व्याप्तिविशिष्टप्रकारकं पक्षविशेष्यकं 'पक्षः व्याप्यवान्' इति, पक्षः=पर्वतादिः, व्याप्यवान्=व्याप्तिविशिष्टधूमादिमान्, तथा च–व्याप्तिविशिष्टधूमादिमान् पर्वत'इत्यर्थः ॥ चः–अवधारणार्थः, तेन व्याप्ये पक्षो व्याप्यः पक्षवानिति न ग्राह्यमिति बोध्यम् । तत्र 'पक्षे व्याप्य' इति ज्ञाने-व्याप्त्यवच्छिन्नविषयतानिरूपित–पक्षनिरूपिताधेयतानिष्ठसांसर्गिकविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वलक्षणसंगतिः, द्वितीये च 'पक्षः व्याप्यवानि'तिज्ञाने–व्याप्त्यवच्छिन्नविषयतानिरूपित– हेतुतावच्छेदकसम्बन्धनिष्ठसांसर्गिकविषयतानिरूपित– पक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वलक्षणसंगतिरिति ॥ ननु–फलितं यत्परामर्शद्वयसाधारणं परामर्शलक्षणं तल्लक्षितैतादृशपरामर्शद्वयस्यानुमितिकारणत्वे यदा व्याप्यप्रकारकपक्षविशेष्यक'पक्षो व्याप्यवानि'तिपरामर्शादनुमितिर्जाता तदा पक्षप्रकारकव्याप्यविशेष्यक'पक्षे व्याप्य'इति परामर्शो नास्ति, यदा च पक्षप्रकारकव्याप्यविशेष्यक'पक्षे व्याप्य'इतिपरामर्शादनुमितिर्जाता तदा व्याप्यप्रकारकपक्षविशेष्यक'पक्षो व्याप्यवानि'तिपरामर्शो नास्तीति 'कारणाऽभावे कार्यसत्त्वा'त्मकव्यतिरेकव्यभिचारात् कस्यापि परामर्शस्य कारणता नोपपद्येतेत्याशंकां समाधत्ते–अनुमितिस्त्विति ॥ अथवा–यदि परामर्शद्वयसाधारणपरामर्शत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकं पक्षविशेष्यकसाध्यविशेष्यकानुमितिसाधारणं पक्षोद्देश्यकानुमितित्वं, तर्हि–साध्यव्याप्यवान् पक्ष इतिपरामर्शकाले पटादिप्रत्यक्षसामग्रीसत्त्वे पक्षविशेष्यकसाध्यप्रकारकानुमित्यन्यज्ञानं जायतामितीच्छासत्त्वे 'पक्षे साध्यमि'त्यनुमित्यापत्तिः, सा च कस्यापि नेष्टा, इत्यत आह–अनुमितिस्त्विति । 'पक्षे व्याप्य' मितिव्याप्यविशेष्यकपक्षप्रकारकपरामर्शात् 'पक्षे साध्यमि'ति साध्यविशेष्यकपक्षप्रकारिकैवानुमितिर्जायते, अथ च 'पक्षो व्याप्यवानि'तिव्याप्यप्रकारकपक्षविशेष्यकपरामर्शात् 'पक्षः साध्यवानि'ति साध्यप्रकारकपक्षविशेष्यकानुमितिर्जायते,तथा च-पक्षप्रकारकसाध्यविशेष्यकानुमितित्वावच्छिन्नं प्रति पक्षप्रकारकव्याप्यविशेष्यकपरामर्शत्वावच्छिन्नस्य कारणत्वम्, साध्यप्रकारकपक्षविशेष्यकानुमितित्वा-

**'पक्षः साध्यवान्'इत्याकारिका। द्विविधादपि परामर्शात् पक्षः साध्यवानित्येवाऽ-**

वच्छिन्नं प्रति च व्याप्यकारकपक्षविशेष्यकपरामर्शत्वावच्छिन्नस्य कारणत्वमिति व्यवस्थानान्न परस्परव्यभिचारः, न वा वह्निव्याप्यवान् पर्वत इतिपरामर्शकाले पटादिप्रत्यक्षसामग्रीसत्त्वे पक्षविशेष्यकसाध्यप्रकारकानुमित्यन्यज्ञानं जायतामितीच्छासत्त्वे 'पक्षे साध्य'मित्यनुमित्यापत्तिः, 'साध्यव्याप्यः पक्षे'इतिविशेषपरामर्शाऽभावात्। उक्तेच्छाविशिष्टघटादिप्रत्यक्षसामग्र्याश्च प्रतिबन्धिकायाः सत्त्वात् 'पक्षः साध्यवानि'त्यप्यनुमितिर्न भवतीति बोध्यम्॥ ननु व्याप्यप्रकारकपक्षविशेष्यक-पक्षप्रकारकव्याप्यविशेष्यकान्यतरपरामर्शत्वेन 'पक्षः साध्यवानि'त्यनुमितिं प्रति कारणत्वं, तथा च न पूर्वोक्तव्यभिचार इति चेन्न। अन्यतरत्वं तद्भिन्नत्वे सति तद्भिन्नो यस्तत्प्रतियोगिकभेदवत्त्वम्, एवं च सति पक्षविशेष्यकपरामर्शभिन्नत्वे सति व्याप्यविशेष्यकपरामर्शभिन्नो यः संसारस्तद्भिन्नत्वं द्विविधपरामर्शे इत्यन्यतरत्वकुक्षौ संसारस्य प्रवेशेन गौरवात्, अन्यतरत्वपदार्थेऽपि विशेषणविशेष्यभावव्यत्यासे सति 'व्याप्यविशेष्यकपरामर्शभिन्नत्वे सति पक्षविशेष्यकपरामर्शभिन्नो यस्तद्भिन्नत्वस्य, पक्षविशेष्यकपरामर्शभिन्नत्वे सति व्याप्यविशेष्यकपरामर्शभिन्नो यस्तद्भिन्नत्वस्य चाऽन्यतरत्वस्य विनिगमनाविरहेण कारणतावच्छेदकत्वेन गौरवाच्च॥ नव्यमतमाह—**द्विविधादपीति**। पक्षविशेष्यक—व्याप्यविशेष्यकोभयविधादपि परामर्शादित्यर्थः॥ तथा च पक्षविशेष्यकसाध्यप्रकारकानुमितित्वावच्छिन्नं प्रत्येव व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नं हेतुरिति फलितोऽर्थः 'पक्षे साध्य'मित्यनुमितिर्नैव भवतीति भावः॥ ननु द्विविधादपि परामर्शादेकविधाऽनुमितिस्वीकारे व्यतिरेकव्यभिचार इति चेन्न। व्याप्यप्रकारकपक्षविशेष्यकपरामर्शाऽव्यवहितोत्तरजायमानं'पक्षः साध्यवानि'त्यनुमितित्वावच्छिन्नं प्रति व्याप्यप्रकारकपक्षविशेष्यकपरामर्शस्य कारणत्वम्, अथ च पक्षप्रकारकव्याप्यविशेष्यकपरामर्शाऽव्यवहितोत्तरजायमान 'पक्षः साध्यवानि'त्यनुमितित्वावच्छिन्नं प्रति पक्षप्रकारकव्याप्यविशेष्यकपरामर्शस्य कारणत्वमिति कार्यकारणभावात् व्यतिरेकव्यभिचारविरहात् तदपेक्षयाऽपि लाघवात् पक्षविषयतानिरूपितव्याप्यविषयताकपरामर्शत्वेन द्विविधपरामर्शस्य पक्षविशेष्यकसाध्यप्रकारकानुमितिं प्रति कारणत्वस्वीकार उचितः, तेन पूर्वोक्तव्यभिचारवारणसंभवात्॥ वस्तुतस्तु 'पर्वतो वह्निमानि'त्येवंविधस्यैव प्रतिज्ञावाक्यस्य प्रयोगाद् 'वह्निव्याप्यधूमवाँश्चाऽयमि'त्युपनयवाक्यस्य च प्रयोगात् पक्षविशेष्यकानुमितिः पक्षविशेष्यकपरामर्शश्च कार्यकारणभावविषयोऽनुभवानुरोधात्॥ वह्निव्याप्यधूमवान्पर्वत'इत्यत्र—वह्निनिरूपितत्वसम्बन्धेन व्याप्तौ, तस्याश्च स्वरूपसम्बन्धेन आश्रये, तस्य चाऽभेदेन धूमे, तस्य च संयोगेन मतुबर्थाश्रये, तस्य च अभेदेन पर्वतेऽन्वयः, समानाधिकरणप्रकारताविशेष्यतयोरवच्छेद्यावच्छेदकभाव इति गदाधरमतं,तयोरभेद इति जगदीशमतं, आद्ये—वह्नित्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या व्याप्तित्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्न-स्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपिता या आश्रयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नाऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपिता या धूमत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रकारतानिरूपिता या आश्रयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपिता या पर्वतत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताशालिनिर्णयः परामर्श इत्यर्थः॥ **द्वितीये** तु वह्नित्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या व्याप्तित्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वाऽभिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपिता या आश्रयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वाऽभिन्नाऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपिता या धूमत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वाऽभिन्नसंयोगसम्बन्धावच्छिन्न-

नुमितिरित्यन्ये ॥ ननु 'वह्निव्याप्यधूमवान् पर्वत'इतिज्ञानं विनाऽपि 'यत्र पर्वतो धूमवानिति' प्रत्यक्षं, ततो 'वह्निव्याप्यो धूम'इति व्याप्तिस्मरणं, तत्र ज्ञानद्वयादेवाऽनुमितेर्दर्शनाद् व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं न सर्वत्र कारणं, किन्तु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वस्याऽऽवश्यकत्वात्, तत्र विशिष्टज्ञानकल्पने गौरवाच्चेति चेन्न, व्याप्यतावच्छेदकाज्ञानेऽपि 'वह्निव्याप्यवानि'ति ज्ञानाद-

---

प्रकारतानिरूपितया आश्रयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वाऽभिन्नाऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपिता या पर्वतत्वावच्छिन्ना विशेष्यता तच्छालिनिर्णयः परामर्श इति बोधः॥ मीमांसकः शंकते-ननु इति । **नैयायिकमते**-'महानसादौ वह्निसहचरितधूमदर्शनेन 'धूमो वह्निव्याप्यः'-( यत्र धूमस्तत्र वह्नि )रिति व्याप्तेः प्रत्यक्षात्मकोऽनुभवस्ततः कालान्तरे-पर्वते धूमदर्शनम् १, इदमेव पक्षधर्मताज्ञानमुच्यते । ततो 'यत्र धूमस्तत्र वह्नि'रितिव्याप्तिस्मरणम् २ । तत एतज्ज्ञानद्वयेन 'वह्निव्याप्यधूमवान्पर्वत'-इतिपरामर्शात्मकं ज्ञानं जायते ३, अत्र वह्निव्याप्तिविशिष्टो धूमो धूमविशिष्टश्च पर्वतो भासते, अतो व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञान'मेतदुच्यते । ततः 'पर्वतो वह्निमानि'त्यनुमितिः ४ ॥ **मीमांसकमते** तु 'महानसादौ वह्निसहचरितधूमदर्शनेन 'धूमो वह्निव्याप्य'इतिव्याप्तेः प्रत्यक्षात्मकानुभवानन्तरं कालान्तरे पर्वते धूमदर्शनात्मकं पक्षधर्मताज्ञानम् १, ततो 'यत्र धूमस्तत्र वह्नि'रिति व्याप्तिस्मरणम् २,ततः परामर्शात्मकं ज्ञानं न मन्यते किन्तु तादृशज्ञानद्वयादेवानुमितिः-३, । तथा च **वह्निव्याप्यधमवान्पर्वत**'इति परामर्शज्ञानं विनापि **यत्र**=यदा'पर्वतो धूमवानि'तिपक्षधर्मतात्मक**प्रत्यक्ष**ज्ञानं, तदनन्तरं 'धूमो वह्निव्याप्य'इतिव्याप्तिस्मरणात्मकं ज्ञानं, **तत्र**=तदा, **ज्ञानद्वयादेव**=प्रत्यक्षस्मरणाभ्यामेव 'पर्वतो वह्निमानि'त्यनुमितेः, **दर्शनात्**=अनुभवसिद्धत्वात्, **व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं**=वह्निव्याप्तिविशिष्टो धूमः, धूमविशिष्टश्च पर्वतः, तथा च-वह्निव्याप्यधूमवान्पपर्वत' इतिपरामर्शज्ञानं, **न सर्वत्र**=न अनुमितित्वावच्छिन्नं प्रति अनुगतं कारणमित्यर्थः । व्यतिरेकव्यभिचारादिति भावः । ननु तर्हि कीदृशं ज्ञानं कारणमित्याकांक्षायां मीमांसकः स्वमतमाह **किन्त्विति** । 'वह्निव्याप्यो धूम'-इतिस्मरणात्मकज्ञाने व्याप्यतावच्छेदकं यद् धूमत्वं, तदेव 'धूमवान् पर्वत' इतिपक्षधर्मताज्ञाने धूमे वर्तते, तथा च व्याप्यतावच्छेदकधूमत्वप्रकारतानिरूपकं यत् पक्षधर्मताविषयकं 'धूमवान्पर्वत' इतिज्ञानं तादृशज्ञानत्वेन कारणतावच्छेदकेन रूपेणैव 'धूमवान् पर्वत'-इत्यादिज्ञानद्वयनिष्ठकारणतायाः, **आवश्यकत्वात्**=क्लृप्तनियतपूर्ववृत्तिताकत्वादित्यर्थः ॥ ननु ज्ञानद्वयस्थले परामर्शात्मकं विशिष्टज्ञानं परिकल्प्य व्यतिरेकव्यभिचारो वारणीय इत्यत **आह-तत्रेति** । ज्ञानद्वयस्य अनुमितेश्च मध्ये इत्यर्थः ॥ विशिष्टज्ञानस्य=व्याप्तिविशिष्टधूमवैशिष्ट्यावगाहिपरामर्शात्मकज्ञानस्य, कल्पने=स्वीकारे, **गौरवात्**=ज्ञानद्वयस्य विशिष्टपरामर्शाऽपेक्षया प्रथममुत्पन्नतया ज्ञानद्वयस्यैव प्रथमोपस्थितिरूपलाघवापेक्षया परामर्शस्य पश्चादुपस्थितिरूपगौरवात् परामर्शात्मकाधिककारणकल्पनागौरवाद् अनुमितेश्चतुर्थक्षणापेक्षाकल्पनागौरवाच्चेत्यर्थः ॥ नैयायिकस्तन्मतं खण्डयति-**व्याप्यतावच्छेदकाऽज्ञानेऽपीति** । यत्र पर्वते दूराद् 'अयमालोको धूमो वे'त्याकारकः सन्देहः, तत्र व्याप्यतावच्छेदकं धूमत्वं वा आलोकत्वं सन्दिग्धमेव, तथा च व्याप्यतावच्छेदकधूमत्वादिप्रकारकनिर्णयाऽभावेऽपि तादृशस्थले **वह्निव्याप्यवान्**='वह्न्यभाववदवृत्तिमान् ( अयमालोको धूमो वे ) तिसन्देहादपि ' पर्वतो वह्निमानि'त्यनुमित्युत्पत्तिर्भवति । तथा च तत्र व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानाऽभावेऽप्यनुमितेर्जायमानत्वात् कारणाऽभावे कार्यसत्त्वात्मकव्यतिरेकव्यभिचारात् तत् न सर्वत्रानुमितिम्प्रति कारणमिति भावः ॥ **ननु तत्राऽनुमिति-**

नुमित्युत्पत्तेर्लाघवाच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन हेतुत्वम्। किञ्च 'धूमवान् पर्वत'इतिज्ञानादनुमित्यापत्तिः, व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकस्य पक्षधर्मताज्ञानस्य सत्त्वात्॥ न च तदानीं गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य हेतुत्वमिति वाच्यम्। चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानादनुमितिः स्यात्॥ यदि तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारकं तत्पुरुषीयपक्षधर्मताज्ञानं

---

रूपकार्यदर्शनेन कारणानुमानाद् व्याप्यतावच्छेदकप्रकारकं 'धूमवान्पर्वत' इतिनिर्णयात्मकं ज्ञानं कल्पनीयमतो न व्यभिचार इत्यतो दूषणान्तरमाह–**लाघवाच्चेति**। व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वे अवच्छेदकस्य प्रवेशेन शरीरकृतं गौरवम्, **व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वे** तु अवच्छेदकाऽप्रवेशनिबन्धनलाघवम्॥ एवं 'वह्निव्याप्यो धूम'इतिस्मरणस्य कारणतानिर्वाहार्थं तत्र व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वं कारणतावच्छेदकं 'धूमवान् पर्वत'–इति प्रत्यक्षस्य कारणतानिर्वाहार्थं तत्र व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वमवच्छेदकमित्यवच्छेदकद्वयकल्पनमपि मीमांसकानां गौरवमित्यपि बोध्यम्॥ **ननु**–नैयायिकस्य कारणतावच्छेदकलाघवम् अस्माकन्तु परामर्शाऽकल्पनं लाघवं समानम्, एवम् अस्माकं कारणतावच्छेदके शरीरकृतं गौरवं नैयायिकस्य तु परामर्शात्मकतृतीयज्ञानकल्पनं गौरवं समानमित्यतो नैयायिकोऽन्वयव्यभिचारं दूषणान्तरमाह–**किञ्चेति**। कालान्तरे कस्यचिद्'धूमो वह्निव्याप्य'इति धूमत्वं व्याप्यतावच्छेदकग्रहविषयं,ततस्तादृशग्रहं विनाऽपि कालान्तरे मानसं'धूमवान् पर्वत'इतिपक्षधर्मताज्ञानमात्रं जातं तत्र धूमेऽपि व्याप्यतावच्छेदकस्य धूमत्वस्य सत्त्वाद् व्याप्यतावच्छेदकधूमत्वप्रकारकपक्षधर्मताज्ञानत्वेन केवल'धूमवान्पर्वत'इति ज्ञानस्यापि संग्रहात् कारणसत्त्वेन'पर्वतो वह्निमानि'त्यनुमित्यापत्तिः स्यात्, किन्तु नैव भवति,अतः कारणसत्त्वे कार्याऽभावात्मकाऽन्वयव्यभिचाराद् व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वावच्छिन्नस्य न कारणत्वं किन्तु व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वावच्छिन्नस्यैवेत्याशयः। मीमांसकः स्वमतेऽन्वयव्यभिचारं वारयति- **न च तदानीं गृह्यमाणेति**। तदानीं=अनुमित्यव्यवहितप्राक्काले, गृह्यमाणा–चक्षुरादीन्द्रियजन्यवर्तमानग्रहविषयीभूता, या व्याप्यता तदवच्छेदकं यद् धूमत्वादि तत्प्रकारकस्य तदानीन्तनपक्षधर्मताज्ञानस्यैव कारणत्वम्, तथा च निरुक्तयादृशतादृश'धूमवान्पर्वत'-इतिज्ञानस्य कारणत्वाऽभावादेव नाऽन्वयव्यभिचारः, अतो गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वावच्छिन्नस्यैव कारणत्वं न तु व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वावच्छिन्नस्येति मीमांसकाशयः॥ नैयायिकस्तत् पुनर्दूषयति–**चैत्रस्येति**। वर्तमानकाले चैत्राख्यपुरुषस्य महानसादौ 'धूमो वह्निव्याप्य'इति धूमे व्याप्तिग्रहे जाते सति तदुत्तरक्षणे मैत्राख्यपुरुषस्य 'पर्वतो धूमवानि'तिप्रत्यक्षात्मकपक्षधर्मताज्ञानात् मैत्रस्य 'पर्वतो वह्निमानि'त्यनुमित्यापत्तिः स्यात्, चैत्रगृह्यमाणव्याप्यतावच्छेदकधूमत्वप्रकारकस्य पक्षधर्मताज्ञानस्य मैत्रे सत्त्वात्। किन्तु न भवत्यनुमितिस्तथा च कारण सत्त्वेऽपि कार्याऽभावादन्वयव्यभिचाराद् गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वावच्छिन्नं न कारणमिति नैयायिकाऽभिप्रायः॥ मीमांसकोऽन्वयव्यभिचारं पुनर्वारयति-**यदि तत्पुरुषीयेति**। यस्य चैत्रस्य व्याप्तिज्ञानं तस्यैव तदानीं तथाविधपक्षधर्मताज्ञानादनुमितिरुच्यते, तथाच चैत्रात्मकतत्पुरुषसमवेतवर्तमानकालीनव्याप्तिज्ञानविषयीभूता या व्याप्यता(व्याप्तिः)तदवच्छेदकं यद्धूमत्वं तत्प्रकारकं तस्यैव तदानीन्तनं पक्षधर्मताज्ञानं तत् तस्यैवानुमितिं प्रति कारणं, नतु अन्यदीयव्याप्तिज्ञाने सति अन्यदीयपक्षधर्मत्वज्ञानमिति न पूर्वोक्तोऽन्वयव्यभिचारः, मैत्रीयपक्षधर्मताज्ञानस्य कारणत्वाऽभावात्, अतः–तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारक–तत्पुरुषीयपक्षधर्मताज्ञानत्वावच्छिन्नस्यैव

तत्पुरुषीयानुमितौ हेतुरित्युच्यते, तदाऽनन्तकार्यकारणभावः। मन्मते तु समवायसम्बधेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायसम्बन्धेनाऽनुमितिं जनयतीति नाऽनन्तकार्यकारणभावः॥ यदि तु व्याप्तिप्रकारकं ^ पक्षधर्मताज्ञानं च स्वतन्त्रं कारण- ज्ञानं
मित्युच्यते, तदा कार्यकारणभावद्वयं, वह्निव्याप्यो धूम आलोकवांश्च पर्वत' इति

तत्पुरुषानुमितिं प्रति कारणत्वमिति मोमांसकाशयः॥ नैयायिकस्तद्दूषयति—तदाऽनन्तेति। चैत्रादीनां पुरुषाणामानन्त्यात् प्रतिपुरुषं तादृशकार्यकारणभावानन्त्यप्रयुक्तगौरवापत्तिः, अतो न मीमांसकमतं समीचीनमिति भावः॥ नैयायिकः स्वमते नाऽनन्तकार्यकारणभावप्रयुक्तगौरवमिति-दर्शयति–मन्मते तु इति। यत्र आत्मनि समवायसम्बन्धेन व्याप्तिप्रकारकपक्षधर्मता(परामर्श) ज्ञानं वह्निव्याप्यधूमवानयमिति उत्पद्यते तत्रैव समवायेन अनुमितिं प्रति कारणं भवति नाऽन्यत्र, अतस्तत्पुरुषीयत्वादिप्रवेश एव नाऽपेक्ष्यतेऽतो न गौरवगन्धोऽपि, तथा च समवायावच्छिन्नव्याप्तिप्रकारकपक्षधर्मताज्ञानत्वावच्छिन्नमेव समवायावच्छिन्नाऽनुमितित्वावच्छिन्नं प्रति कारणमिति नैयायिकाऽभिप्रायः॥ मीमांसकः पुनः स्वमते तत्पुरुषीयत्वप्रवेशं विनाऽपि ज्ञानद्वयस्य कारणत्वं लाघवेन दर्शयति–यदि तु इति। समवायेन अनुमितिं प्रति व्याप्तिप्रकारकज्ञानत्वेन 'धूमो वह्निव्याप्य'इतिव्याप्तिप्रकारकं ज्ञानं, पक्षधर्मताविषयकनिश्चयत्वेन 'धूमवान्पर्वत'इतिपक्षधर्मताज्ञानं च समवायेन स्वतन्त्रं=पृथक् पृथगेव कारणं, तादृशकारणकूटसत्त्वे एवानुमितिर्भवति नाऽन्यथा, तत्र च तत्पुरुषीयत्वनिवेशगौरवं नास्ति, अतो ज्ञानद्वयमेव कारणं नतु तृतीयं परामर्शात्मकमिति मीमांसकाऽभिप्रायः॥ नैयायिकस्तद्दूषयति–तदा कार्यकारणभावद्वयमिति। समवायेन अनुमितित्वावच्छिन्नं प्रति समवायेन व्याप्तिप्रकारकज्ञानत्वावच्छिन्नं कारणमित्येकः, समवायेन अनुमितित्वावच्छिन्नं प्रति समवायेन पक्षधर्मताज्ञानत्वावच्छिन्नं च कारणमित्यपरः कार्यकारणभावः, एतत्कार्यकारणभावद्वयकल्पनं गौरवं, तदपेक्षया अस्मन्मते समवायेन व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वावच्छिन्नं समवायेन अनुमितित्वावच्छिन्नं प्रति कारणमित्येकस्यैव कार्यकारणभावस्य परं लाघवमिति नैयायिकाऽभिप्रायः॥ ननु–नैयायिकमतेऽपि विशेषणविशेष्यभावव्यत्यासेन व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन पक्षधर्मताविषयकव्याप्तिप्रकारकज्ञानत्वेन वा परामर्शस्य हेतुत्वे कारणद्वयगौरवं समानमिति चेन्न। मीमांसकमतेऽपि विशेषणविशेष्यभावव्यत्यासे सति व्याप्तिप्रकारकहेतुविशेष्यकनिश्चयत्वेन हेतुविशेष्यकव्याप्तिप्रकारकनिश्चयत्वेन व्याप्तिप्रकारकज्ञानस्य, व्याप्यतावच्छेदकप्रकारकपक्षविशेष्यकनिश्चयत्वेन पक्षविशेष्यकव्याप्यतावच्छेदकप्रकारकनिश्चयत्वेन पक्षधर्मताज्ञानस्य च कारणत्वकल्पनेन कार्यकारणभावचतुष्टयप्रयुक्तगौरवात्, मम मते तु तदपेक्षया विशेषणविशेष्यभावव्यत्यासप्रयुक्तकार्यकारणभावद्वयमपि लाघवमेव। ननु–नैयायिकमते व्याप्तिप्रकारत्व–हेतुप्रकारत्व–पक्षविशेष्यतानां त्रयाणां विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुभूतकार्यकारणभावषट्कापत्तिः, तथाहि–व्याप्तिप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षविशेष्यताशालिनिश्चयत्वेन, पक्षविशेष्यतानिरूपितहेतुप्रकारतानिरूपितव्याप्तिप्रकारताशालिनिश्चयत्वेन, व्याप्तिप्रकारतानिरूपितपक्षविशेष्यतानिरूपितहेतुप्रकारताशालिनिश्चयत्वेन, हेतुप्रकारतानिरूपितपक्षविशेष्यतानिरूपितव्याप्तिप्रकारताशालिनिश्चयत्वेन, पक्षविशेष्यतानिरूपितव्याप्तिप्रकारतानिरूपितहेतुप्रकारताशालिनिश्चयत्वेन, हेतुप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितपक्षविशेष्यताशालिनिश्चयत्वेन, रूपेण कारणत्वमित्यतो नैयायिको गौरवापेक्षयाऽपि मीमांसकमते बलवदु अन्वयव्यभिचारात्मकं दूषणमाह–वह्निव्याप्य इति। मीमांसकमते 'धूमो वह्निव्याप्य'–इतिव्याप्तिप्रकारकज्ञानस्य 'आलोकवान्पर्वत'–इतिपक्ष-

**ज्ञानादप्यनुमितिः स्यात्। इत्थं च यत्र ज्ञानद्वयं, तत्राऽपि विशिष्टज्ञानं कल्पनीयं, फलमुखगौरवस्यादोषत्वात् ॥**

**व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः ॥ ६८ ॥**

---

धर्मताज्ञानस्य च स्वतन्त्रकारणद्वयस्य सत्त्वात् 'पर्वतो वह्निमानि'त्यनुमित्यापत्तिः स्यात्, अनुमितिस्तु न भवति, अतः कारणसत्त्वेऽपि कार्याऽभावात्मकान्वयव्यभिचारवत्त्वात् नैव ज्ञानद्वयमपि स्वतन्त्रं कारणं भवितुमर्हतीति नैयायिकाभिप्रायः। ननु—समवायेन तद्धर्मावच्छिन्नलिङ्गकानुमितिं प्रति तद्धर्मावच्छिन्नविषयकव्याप्तिनिश्चयत्वावच्छिन्नस्य तद्धर्मावच्छिन्नप्रकारकपक्षविशेष्यकनिश्चयत्वावच्छिन्नस्य च समवायघटितसामानाधिकरण्यप्रत्यासत्त्या कारणत्वमिति कार्यकारणभावकल्पनेन मीमांसकमते न व्यभिचारः, नैयायिकस्य तु परामर्शस्य कल्पनात् तत्र षड्विधकार्यकारणभावकल्पनागौरवाच्च परामर्शस्य कारणत्वमेव न मन्तव्यमिति चेन्न। मीमांसकमते हेतुतावच्छेदकतद्धर्मभेदेनाऽनन्तकार्यकारणभावापत्तेः दुर्वारत्वात्। न्यायमते तु—'वह्निव्याप्यधूमवान्पर्वतः' 'वह्निव्याप्याऽऽलोकवान्पर्वतः' 'वह्निव्याप्यवान्पर्वत'—इत्यादिज्ञानसाधारणकारणत्वानुरोधेन 'साध्याऽभाववन्निरूपितवृत्तित्वाभावप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षविशेष्यताशालिज्ञानत्वेनैव कारणतायाःक्लृप्तत्वात् तत्र नोक्तषड्विधकार्यकारणभावापत्तिरूपगौरवम् ॥ **ननु** तथापि नैयायिकस्य व्याप्तिस्मरणपक्षधर्मताज्ञानद्वयस्थले परामर्शात्मकविशिष्टज्ञानकल्पनागौरवं भवत्येवेत्याशंकायां गौरवं न दोषायेत्याह—**इत्थं चेति**। न्यायप्रवर्तकगंगेशोपाध्यायानां विशिष्टपरामर्शं विना अनुमितेरेवाऽऽनुभविकत्वाऽभावेन तेषामनुभवानुरोधेन यत्र=यदा 'वह्निव्याप्यो धूमः' 'धूमवान् पर्वत'इतिज्ञानद्वयं, तत्रापि विशिष्टज्ञानं परामर्शात्मकं कल्पनीयमेव, अतएव 'वह्निव्याप्यधूमवानयमि'ति उपनयप्रयोगः, नतु 'वह्निव्याप्यो धूमः धूमवानय'मिति प्रयोगः इति। **फलं**—कार्यकारणभावग्रहः, तन्मुखं—तदधीनं, गौरवं—गौरवज्ञानं, कार्यकारणभावग्रहोत्तरमुत्पन्नस्य गौरवज्ञानस्य कारणतानिश्चयप्रतिबन्धकत्वासंभवात्। विशिष्टज्ञानत्वेन रूपेण कारणताग्रहे विशिष्टज्ञानत्वधर्मिकगौरवज्ञानं विरोधि वक्तव्यम्, विशिष्टज्ञानत्वनिष्ठगौरवं च—यत्किंचिदनुमित्यव्यवहितपूर्वकालावच्छेदेन अवश्यकल्पनीयस्वाश्रयकत्वात्मकं, स्वं गौरवं, तदाश्रयः परामर्शः, तत्कत्वं गौरवं विशिष्टज्ञानत्वे। तथा च विशिष्टज्ञानत्वेन कारणत्वे निर्णीते निर्णीतकारणत्वाऽन्यथानुपपत्त्या ज्ञानद्वयोत्तरकालीनानुमितिव्यक्तिपूर्वं विशिष्टज्ञानं कल्पनीयं, ततो गौरवज्ञानमिति कार्यकारणभावनिर्णयात्पूर्वं गौरवनिर्णयाऽभावाद् उत्तरकालीनगौरवज्ञानस्य पूर्वोत्पन्नकारणताग्रहप्रतिबन्धकत्वाऽसंभवात् तादृशगौरवं न दोष इति ध्येयम् ॥

मूले—**व्याप्तिरिति**। **साध्यं**=साधितुं योग्यो वह्न्यादिः, तदस्यास्तीति साध्यवान्—पक्षःपर्वतादिः, साध्यवतोऽन्यः—साध्यवदन्यः—वह्निमत्पर्वतादिभिन्नो जलह्रदादिः, तस्मिन् असम्बन्धः=अवृत्तित्वं—वृत्तित्वाऽभावः,—जलह्रदे वृत्तिः—मीनशैवालादिः, वृत्तित्वाभाववान् धूमादिर्हेतुरिति वह्निनिरूपितं धूमनिष्ठं **'साध्यवदन्याऽवृत्तित्व'मिति** व्याप्तिशरीरमुक्तं तदेव व्याप्तेः स्वरूपात्मकं लक्षणमत्र बोध्यम्, न तु व्याप्तौ वर्तमानं व्याप्तिभिन्नमन्यदत्र किमपि लक्षणमिति ॥ पञ्चलक्षण्यां (व्याप्तिपंचके) 'साध्याभाववदवृत्तित्वम्, साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम्, साध्यवत्प्रतियोगिकान्योन्याभावाऽसामानाधिकरण्यम्, सकलसाध्याभाववन्निष्ठाऽभावप्रतियोगित्वम्, साध्यवदन्याऽवृत्तित्वं, चेति पञ्चव्याप्तिस्वरूपाणि उक्तानि, तन्मध्यतोऽत्र पञ्चमं लक्षणं निरूपितं **बोध्यम्** ॥ सद्धेतुः,—व्याप्तेर्लक्ष्यः, असद्धेतुस्तु अलक्ष्यः। यत्र व्याप्तेः समन्वयो भवति स सद्धेतुः व्याप्यः।

व्याप्यो नाम व्याप्त्याश्रयः, तत्र व्याप्तिः केत्यत आह—व्याप्तिरिति। वह्निमान् धूमादित्यादौ साध्यो वह्निः, साध्यवान् महानसादिः, तदन्यो जलह्रदादिः, तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिंस्त-प्तायःपिण्डादौ वह्नेः सत्त्वान्नाऽतिव्याप्तिः।

अत्र येन सम्बन्धेन साध्यं तेनैव सम्बन्धेन साध्यवान् बोध्यः, अन्यथा समवा-

---

तथा च 'व्याप्यस्य पक्षवृत्तित्वधी'रिति ( ६८ पूर्वार्धे ) परामर्शलक्षणे यद् 'व्याप्यस्य'इति पदमुक्तं तेन पदेन परामर्शलक्षणानन्तरं व्याप्तिनिरूपणे प्रकृतोपपादक( प्रकृतसिद्ध्यनुकूलचिन्ताविषय ) त्वात्मकोपोद्घातसंगत्या व्याप्तिनिरूपणं स्मारयति—मुक्तावल्यां—व्याप्यो नामेति। व्याप्त्याश्र-यो यो धूमादिः तन्निष्ठा ( तत्र=व्याप्त्याश्रयघटकीभूता ) व्याप्तिः किंस्वरूपा इत्यर्थः॥ व्याप्तिः—द्विविधा,—अन्वयव्याप्तिः, व्यतिरेकव्याप्तिश्च, तत्र 'साध्याभावव्यापकीभूताभावप्रतियोगित्व'रूपां व्यति-रेकव्याप्तिं ( १४३ ) कारिकया दर्शयिष्यति। इयम् अन्वयव्याप्तिः पूर्वपक्षतया दर्शिता। व्याप्तेः समन्वयार्थं पक्षसाध्यहेतुदृष्टान्तानां सत्त्वम् आवश्यकम्, यथा—'**पर्वतो वह्निमान् धूमात्, महानसवदिति**। तत्र पर्वतः पक्षः, वह्निः साध्यः, धूमो हेतुः, महानसं दृष्टान्तम्। तत्र वह्नि-निरूपितव्याप्तेः धूमे समन्वयं करोति—**वह्निमान् धूमादित्यादाविति**। पर्वते पक्षे संयोगेन धूमो हेतुः, संयोगेन वह्निः साध्यः, संयोगेन साध्यवान्=वह्निमान् महानसादिः—पर्वतमहानसादिः, तदन्यः=वह्निमत्पर्वतमहानसादिभिन्नः, जलह्रदादिः, तदवृत्तित्वं=जलह्रदादिनिरूपिता मीनशैवा-लादिनिष्ठा या वृत्तिता तदभाववत्त्वं धूमे इति व्याप्तिः सद्धेतौ धूमे समन्विता भवतीति॥ अस-द्धेतौ व्याप्तिसमन्वयो न भवतीति दर्शयति—**धूमवान् वह्नेरिति**। 'पर्वतो धूमवान् वह्नेः महान-सवत्'—इत्यत्र वह्निः—हेतुः धूमं विहाय तप्ताऽयोगोलके अङ्गारादौ च वर्तते अतः 'साध्यवदन्यवृत्ति-तावान्=धूमवत्पर्वताद्यन्याऽयोगोलकादिवृत्तितावान् ( व्यभिचारदोषवान् ) भवति सः असद्धेतुः, तत्र व्याप्तिर्नास्ति तद्यथा—**साध्यवदन्यस्मिन्**=साध्योऽत्र धूमः, संयोगेन साध्यवान्=धूमवान्—पर्वतादिः, पर्वताद्यन्यस्मिन्=पर्वतादिभिन्ने, तप्ते अयसः लोहस्य पिण्डे गोलकादौ हेतोः वह्नेः सत्त्वात्=वृत्तित्वात्, वृत्तित्वाऽभावस्य असत्त्वात्, **नातिव्याप्तिः**=न अलक्ष्ये गमनमित्यर्थः॥

**ननु** साध्यस्य सम्बन्धस्य संयोगादेर्व्याप्तिस्वरूपे नाम्ना अनिर्देशात् पक्षे साध्यस्य वास्तविकस-म्बन्धं परित्यज्य अन्यसम्बन्धेन साध्यवत्त्वं गृहीत्वा,—यथा—'पर्वतो वह्निमान् धूमादि'त्यत्र संयोगं परित्यज्य समवायेन वह्निमान् वह्नेरवयव एव, समवायेन साध्यवदन्यः=वह्न्यवयवभिन्नः एव पर्वतः, तत्र पर्वते वृत्तिरेव धूमो न तु अवृत्तिरिति सद्धेतौ धूमे व्याप्तेरगमनं, तथा च एतादृग्यं दोषग्रस्तं व्याप्तिस्वरूपं भवितुं नार्हति इति—आशंकां वारयितुं व्याप्तिशरीरे साध्यस्य सम्बन्धो निवेशनीय इति दर्शयति—**अत्र येनेति**। **अत्र**=व्याप्तिलक्षणे, **येन**=संयोगादिसम्बन्धेन पर्वतादौ वह्न्यादिः **साध्यं**=साधनीयोऽभिप्रेतः, **तेनैव** संयोगादिसम्बन्धेन **साध्यवान्**=वह्निमान्, बोध्यः—अनुसन्धेयः, न त्वन्येन येन केनचित् सम्बन्धेनेत्यर्थः॥ पक्षे यः साध्यस्य सम्बन्धः सः साध्यतावच्छेदकसम्ब-न्धः=साध्यताव्यापकसम्बन्ध उच्यते, तद्यथा—साध्ये साध्यता स्वरूपसम्बन्धेन वर्तते, तत्र साध्ये साध्यस्य सम्बन्धः प्रतियोगिता( आधेयता )सम्बन्धेन वर्तते, तथा च 'यत्र संयोगसंसर्गकसाध्यता, तत्र प्रतियोगितासम्बन्धेन संयोगवत्त्वमिति साध्यताव्यापकः संयोगोऽत्राऽभिमतः, सर्वत्र सम्बन्ध-ज्ञानाधीनं, साध्यताज्ञानं भवति, एवमेव हेतुताज्ञानमपि हेतुसम्बन्धज्ञानाधीनं भवतीति, तत्र सर्वत्राऽ-नया रीत्याऽर्थो बोध्यः। अवच्छिन्नः=व्याप्यः युक्तः, तथा च—'**साध्यतावच्छेदकसम्बन्धावच्छि-**

**यसम्बन्धेन वह्निमान् वह्नेरवयवः, तदन्यो महानसादिः, तत्र धूमस्य विद्यमानत्वादव्याप्तिप्रसङ्गात् ॥ साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान् बोध्यः, तेन यत्किञ्चिद्वह्निमतो महानसादेर्भिन्ने पर्वतादौ धूमस्य सत्त्वेऽपि न क्षतिः ॥**

---

**न्नसाध्यवदन्यवृत्तित्वाभाववत्त्वम्'** इति लक्षणं फलितं, तथा च–साध्यतावच्छेदकसबन्धोऽत्र वह्नेः संयोगः, संयोगावच्छिन्नः ( युक्तः ) साध्यवान् पर्वतादिरेव, तदन्यजलहृदादिवृत्तिता मीनादौ, वृत्तित्वाभावस्य धूमे सत्त्वाल्लक्षणसमन्वयः । **अन्यथा**='साध्यतावच्छेदकसम्बन्धावच्छिन्न'इत्यस्य लक्षणेऽनुक्तौ, पर्वतो वह्निमान् धूमाद्–इत्यत्र समवायेन साध्य( वह्नि )वान् वह्नेरवयवः, तदन्यः=वह्न्यवयवभिन्नः, महानसादिः=पर्वतमहानसादिः, तत्र=पर्वतमहानसादौ, हेतोर्धूमस्य, विद्यमानत्वात्=वृत्तित्वात्, अवृत्तित्वाऽभावात्, **अव्याप्तिप्रसंगात्**=लक्षणस्य अगमनेन एतादृशं लक्षणमेव न भवितुमर्हतीति आक्षेपप्रसंगादित्यर्थः ॥ अव्याप्त्यभिधानमिदं यत्किंचित्सम्बन्धेन साध्यवत्तानिवेशाभिप्रायेण बोध्यम् ॥ सम्बन्धसामान्येन साध्यवत्त्वविवक्षाभिप्रायेण तु पर्वतो धूमवान् वह्निप्रकारकप्रमाविशेष्यत्वादित्यादौ सम्बन्धसामान्येन साध्यवदन्यनित्यगुणादिनिरूपितस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवृत्तित्वाभावसत्त्वादतिव्याप्तिरेवेति बोध्यम् ।

**ननु**–तथापि–'पर्वतो–वह्निमान्–धूमादि'त्यत्रैव धूमे लक्षणाऽगमनं भवति, साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नसाध्यवह्निमान् पर्वत एव ग्राह्यः, तदन्यो महानसादिर्भवति तत्र धूमस्य वृत्तित्वात्, अवृत्तित्वाऽभावात् ॥ **अतो** लक्षणे 'साध्यवान्'इति पदेन सर्वेषां साध्यवतां यथा संग्रहो भवेत् तथा अर्थः कार्यः, सचाऽर्थः **'साध्यवत्'**पदस्य निरूढलक्षणया 'साध्यवत्त्वावच्छिन्नप्रतियोगिताक'इत्यात्मकः, **'अन्य'**पदस्य–च भेदवानिति,–भेदाधिकरणमित्यर्थः। तथा च 'साध्यवत्त्व'धर्मो यावत्सु साध्य(वह्नि)वत्सु पर्वतमहानसादिषु वर्तते तादृशसाध्यवत्त्वधर्मावच्छिन्नाः( व्यवच्छेद्याः–युक्ताः )पर्वतमहानसादयस्तन्निष्ठप्रतियोगिताको यः **'साध्यवत्त्वावच्छिन्नं न'**इति भेदोऽन्योन्याभावस्तद्वान् जलहृदादिस्तत्र धूमस्याऽवृत्तित्वात् धूमे लक्षणसंगतिरित्यभिप्रायेणाह–**साध्यवदन्यश्चेति** ।'साध्यवत्'पदस्य निरूढलक्षणया साध्यवत्त्वावच्छिन्नप्रतियोगिताक इत्यर्थः, 'अन्य'पदस्य भेदवान् भेदाधिकरणमित्यर्थः, तथा च**'साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यवत्त्वावच्छिन्न**( साध्यतावच्छेदकावच्छिन्ननिष्ठावच्छेदकताक )**प्रतियोगिताकभेदाधिकरणनिरूपितवृत्तित्वाभाववत्त्वं'**व्याप्तिस्वरूपं फलितं,साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्न–साध्यवत्त्व–वह्निमत्त्वावच्छिन्नपर्वतमहानसादिप्रतियोगिताकभेदाधिकरणजलहृदादिनिरूपितमीनशैवालादिनिष्ठवृत्तित्वाऽभाववत्त्वं धूमे इति लक्षणसंगतिः॥ **तेन**='साध्यवदन्य'पदस्य 'साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरण'मित्यर्थकरणेन, यत्किंचित्पर्वतीयवह्न्यात्मकसाध्यवतः पर्वताद्भिन्ने महानसे, अथवा यत्किंचिन्महानसीयवह्न्यात्मकसाध्यवतो महानसाद् भिन्ने पर्वते **हेतोः**=धूमस्य **सत्त्वेऽपि**=वृत्तित्वादपि, अवृत्तित्वाऽभावादपि, **न क्षतिः**=न व्याप्तेरसमन्वयनिबन्धनः–'इयं न व्याप्तिर्भवितुमर्हती'त्याक्षेपप्रसंग इत्यर्थः ॥ **वस्तुतस्त्वत्र**–यत्किंचिद्वह्निमतो महानसादेर्भिन्न'इत्यस्य 'महानसादेः यत्किंचिद्वह्निमतो भिन्न'–इतियोजनया 'महानसादेर्भिन्ने–यत्किंचिद्वह्निमतो भिन्ने इत्यर्थलाभः, तथा च 'साध्यवदन्य'इत्यनेन 'साध्यवन्निष्ठप्रतियोगिताकभेदग्रहणे महानसत्वाद्यवच्छिन्नप्रतियोगिताकभेदमादाय अव्याप्तिः 'साध्यनिष्ठावच्छेदकताकप्रतियोगिताकभेद'ग्रहणे च यत्किंचिद्वह्न्यवच्छिन्नप्रतियोगिताकभेदमादाय अव्याप्तिः । तद्वारणाय साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवानित्यर्थकरणेऽपि साध्यस्यैव साध्यवत्त्वरूपतया महानसीयवह्निमद्भेदस्य तत्तद्व्यक्तिमद्भेदस्य ग्रहणवारणाऽसं-

**येन सम्बन्धेन हेतुता तेनैव सम्बन्धेन साध्यवदन्यवृत्तित्वं बोध्यं, तेन साध्यवद-**

भवः ॥ अतः 'साध्यतावच्छेदकावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदाधिकरणमित्यर्थे तात्पर्यम् । तथा च–'साध्यतावच्छेदकवह्नित्वावच्छिन्नयावद्वह्निनिष्ठात्वच्छेदक(विशेषण)ताकपर्वतमहानसादिनिष्ठ-प्रतियोगिताकभेदस्यैव ग्रहणान्न तत्राऽव्याप्तिरिति । एवमपि 'घटो द्रव्यं पृथिवीत्वादि'त्यत्र स्वरूपतो द्रव्यत्वसाध्यकस्थले साध्यतावच्छेदकाऽप्रसिद्धया तद्घटितलक्षणाऽव्याप्तिस्तथापि गुरुधर्मस्याऽवच्छेद-कत्वमंगीकृत्य 'साध्यतासमनियतधर्माऽतिरिक्तधर्मानवच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वमिति 'साध्यवदन्य'पदार्थतया तत्र लक्षणसंगमनात् ॥ 'साध्यवदन्य'स्य **परिष्कारः**–'साध्यताविशिष्टाव-च्छेदकताविशिष्टप्रतियोगिताकभेदवत्त्वम्, साध्यताविशिष्टत्वञ्च स्वनिरूपिताऽवच्छेदकताविशिष्टाऽ-न्यावच्छेदकत्वानिरूपितत्वसम्बन्धेन, अवच्छेदकतावैशिष्ट्यञ्च–स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्व-सामानाधिकरण्य–स्वाऽनवच्छेदकाऽनवच्छिन्नत्व–स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन, स्ववृत्तित्वमपि–स्वा-नवच्छेदकाऽनवच्छिन्नत्वसम्बन्धेन, अवच्छेदकतावैशिष्ट्यञ्च प्रतियोगितायां स्वनिरूपितत्व–स्वान्या-वच्छेदकत्वनिरूपितत्वोभयसम्बन्धेनेति । स्वरूपतो घटत्वविशिष्टस्य विषयितासम्बन्धेन साध्यतायां तज्ज्ञानत्वहेतौ स्वरूपतः पटत्वादिनिष्ठावच्छेदकताकावच्छेदकताकप्रतियोगिताकभेदमादायाऽव्याप्ति-वारणाय–स्वसामानाधिकरण्यप्रवेशः । तत्रैव घटत्वत्वेन घटत्वविशिष्टवद्भेदमादायाऽव्याप्तिवारणाय–स्वाऽनवच्छेदकाऽनवच्छिन्नत्वप्रवेशः । घटत्वत्वेन घटत्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञान-त्वादित्यादौ स्वरूपतो घटत्वविशिष्टवद्भेदवारणाय–स्ववृत्तित्वप्रवेशः । वह्निमान् धूमादित्यादौ विषयितया वह्नित्वविशिष्टवदन्यत्वमादायाऽव्याप्तिवारणाय स्वावच्छेदकसम्बन्धावच्छिन्नत्वप्रवेशः ॥

ननु–तथापि लक्षणे साध्यवदन्ये वृत्तिः केनापि सम्बन्धेन नोक्ता, तथा च समवायसम्बन्धेन वृत्तिमादाय–'पर्वतो वह्निमान् धूमादि'त्यत्र 'साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नसाध्यवत्त्वव-ह्निमत्त्वावच्छिन्नप्रतियोगिताकभेदस्य 'संयोगावच्छिन्नवह्निमत्त्वावच्छिन्नं न इत्याकारकस्य अधि-करणं यथा जलह्रदस्तथा धूमस्याऽवयवास्त्रसरेण्वादयो भवन्ति तेषु समवायसम्बन्धेन धूमस्य वृत्तित्वात्, अवृत्तित्वाऽभावाद्द धूमे लक्षणाऽगमनम् । अतः धूमादिः हेतुर्येन संयोगादिसम्बन्धेन अभिप्रेतस्तेन संयोगादिसम्बन्धेन साध्यवदन्ये वृत्तिता वक्तव्येत्यभिप्रायेणाह–**येन सम्बन्धेन हेतु-तेति** । हेतुः धूमो येन संयोगसम्बन्धेन अभिप्रेतस्तेनैव संयोगसम्बन्धेन 'पर्वतो वह्निमान् धूमा-दि'त्यादौ साध्यवदन्यवृत्तत्वं = वह्निमदन्यजलह्रदधूमावयवादिनिरूपितवृत्तिता मीनशैवालधूमावय-वान्तरादेर्बोध्या, तथा च–'**साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यवत्त्वावच्छिन्नप्रतियो-गिताकभेदाधिकरणनिरूपित-हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभाववत्त्वमि'ति** व्याप्तिस्वरूपं फलितम्, साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्न–साध्यवत्त्ववह्निमत्त्वावच्छिन्नपर्वत-महानसादिप्रतियोगिताकभेदाधिकरणजलह्रदधूमावयवादिनिरूपित–हेतुतावच्छेदकसंयोगसम्बन्धाव-च्छिन्न–मीनादिधूमावयवान्तरादिनिष्ठवृत्तित्वाऽभाववत्त्वं धूमे इति लक्षणसंगतिः, अवयवो धूमः अवयवेषु समवायेन वर्तते न तु संयोगेन, संयोगेन तु एकावयवेऽवयवान्तरो वाय्वादिश्च वर्तत इति । **तेन** = साध्यवदन्यनिरूपितवृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वकथनेन, साध्यवदन्यस्मिन् = वह्निमत्पर्वतादिभिन्ने धूमस्याऽवयवे त्र्यणुकादौ धूमस्य = अवयविधूमस्य हेतोः समवायेन सत्त्वे-ऽपि = वृत्तित्वेऽपि, **न क्षतिः** = न व्याप्तेरसमन्वयनिबन्धनः 'इयं न व्याप्तिर्भवितुमर्हतीत्याक्षेप-प्रसंग'इत्यर्थः ॥

ननु–तथापि साध्यवदन्याऽवृत्तित्वमित्यत्र साध्यवदन्यवृत्तित्वस्य यस्य कस्यचिदेव अभावोऽपि

**न्यस्मिन् धूमावयवे धूमस्य समवायसम्बन्धेन सत्त्वेऽपि न क्षतिः ॥ साध्यवदन्यावृत्तित्वं च। साध्यवदन्यवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः, तेन धूमवान् वह्नेरित्यत्र साध्यवदन्यजलह्रदादिवृत्तित्वाभावेऽपि नाऽतिव्याप्तिः ॥ अत्र यद्यपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात् साध्यव-**

गृहीतुं शक्यते, तथा च 'पर्वतो धूमवान् वह्नेरि'तिव्यभिचारिस्थले संयोगेन धूमवदन्यजलह्रदनिरूपितमीनमात्रनिष्ठवृत्तित्वस्याऽभावो वह्नौ वर्तते इति व्याप्तिलक्षणस्याऽसद्धेतावतिव्याप्तिः । अतः—साध्यवदन्यवृत्तित्वाऽभावः=साध्यवदन्यवृत्तितात्वावच्छिन्नप्रतियोगिताकाऽभावो ग्राह्यः, तथा च धूमवदन्यवृत्तितात्वं यथा मीनादिनिष्ठवृत्तितायां वर्तते तथा धूमवदन्यतप्तायोगोलकवृत्तिवह्निनिष्ठवृत्तितायामपि वर्तते तादृशधूमवदन्यवृत्तितात्वावच्छिन्नस्य वृत्तित्वस्य वह्नौ सत्त्वाद् वृत्तित्वाऽभावस्य असत्त्वात् न तत्र लक्षणातिव्याप्तिरित्यभिप्रायेणाह—**साध्यवदन्याऽवृत्तित्वं चेति** । साध्यवदन्यवृत्तित्वस्य अभावश्चेत्यर्थः । साध्यवदन्यवृत्तितात्वावच्छिन्ना या यावत्यः साध्यवदन्यवृत्तिताः तत्प्रतियोगिताकोऽभावो ग्राह्यः । तथा च—'**साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितात्वावच्छिन्नप्रतियोगिताकाभाववत्त्वं**' हेतौ इति व्याप्तिस्वरूपं फलितम्, साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्न—साध्यवत्त्वधूमवत्त्वावच्छिन्नपर्वतमहानसादिप्रतियोगिताकभेदाधिकरणजलह्रदतप्तायोगोलकादिनिरूपितहेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नमीनवह्न्यादिनिष्ठवृत्तितात्वावच्छिन्नवृत्तित्वस्यैव वह्नौ सत्त्वात् तादृशवृत्तित्वप्रतियोगिताकाऽभावस्य असत्त्वान्न वह्नौ व्याप्तिलक्षणस्यातिव्याप्तिरिति । **तेन**='साध्यवदन्यवृत्तित्वाभावस्य'—साध्यवदन्यवृत्तितात्वावच्छिन्नप्रतियोगिताकाभाव'—इत्यर्थकरणेन 'पर्वतो धूमवान् वह्ने'रित्यसद्धेतौ वह्नौ साध्यधूमवदन्यजलह्रदनिरूपितवृत्तित्वस्य एकस्य अभावेऽपि तादृशवृत्तितात्वावच्छिनान्तर्गतस्य अयोगोलकवह्निनिष्ठवृत्तित्वस्य अभावस्य वह्नावसत्त्वात् न व्याप्तिलक्षणस्य असद्धेतौ अतिव्याप्तिरित्यर्थः ॥ **तादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकाऽभावनिवेशेऽपि पूर्वक्षणवृत्तित्वविशिष्टतादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावमादाय उक्तातिव्याप्तितादवस्थ्यमिति** तद्वारणाय—तादृशवृत्तितात्वपर्याप्तावच्छेदकताकप्रतियोगिताकाऽभावस्यैव विवक्षणात्, उक्ताभावीयप्रतियोगितावच्छेदकतायाः पूर्वक्षणान्तर्भावेणैव पर्याप्ततया तादृशाऽभावस्य लक्षणाऽघटकत्वात् ॥

**ननु**—तथापि 'विशिष्टं शुद्धान्नातिरिच्यते' इति नियमात् द्रव्यगुणकर्मसु वर्तमाना सत्ता जातिः द्रव्यमात्रवृत्तिश्च या गुणकर्मभेदविशिष्टसत्ताजातिः सा एकैव न तु भिन्ना, तथा च 'घटः,—द्रव्यत्ववान्,—गुणकर्मभेदविशिष्टसत्तावत्त्वात्'—इत्यत्र साध्यद्रव्यत्ववद्द्रव्यान्ये गुणे कर्मणि च शुद्धसत्ताया वृत्तित्वात् शुद्धसत्तात्मक—गुणकर्मभेदविशिष्टसत्तात्मकहेतोरपि वृत्तित्वात्, वृत्तित्वाऽभाववत्त्वाभावात् तत्र सद्धेतौ व्याप्तिलक्षणस्याऽव्याप्तिः, **अतः**—साध्यवदन्यवृत्तिताऽनवच्छेदकं यत् हेतुतावच्छेदकं तद्वत्त्वमिति व्याप्तौ निवेशनीयम्, तथाच शुद्धसत्तागुणकर्मभेदविशिष्टसत्तयोरैक्येऽपि तयोर्धर्मौ भिन्नौ, सत्तायां सत्तात्वमेकम्, गुणकर्मभेदविशिष्टसत्तायां—गुणकर्मभेदः सत्तात्वं चेत्युभयमिति, द्रव्यत्वात्मकसाध्यवदन्यगुणकर्मनिरूपितसमवायावच्छिन्नवृत्तिता सत्तायां वृत्तितावच्छेदकं सत्तात्वं, वृत्तितानवच्छेदकं हेतुतावच्छेदकं गुणकर्मभेदः सत्तात्वं चेत्युभयं तद्वत्त्वस्य गुणकर्मभेदविशिष्टसत्तायां हेतौ सत्त्वात् न तत्र व्याप्तेरव्याप्तिरित्यभिप्रायेणाह—**अत्र यद्यपि द्रव्यमिति** । **अत्र**=न्यायसिद्धान्ते, **विशिष्टसत्तायाः**=गुणकर्मभेदविशिष्टसत्तायाः ( द्रव्यवृत्तिसत्तायाः ), **शुद्धसत्तायाः**—द्रव्यगुणकर्मसु वर्तमानाया विशेषणाऽनवच्छिन्नायाः सत्तायाः, **ऐक्यात्**=भेदाऽभावात्,

दन्यस्मिन् गुणादाववृत्तित्वं नाऽस्ति, तथाऽपि हेतुतावच्छेदकरूपेणाऽवृत्तित्वं वाच्यं, हेतुतावच्छेदकं तादृशवृत्तितानवच्छेदकमिति फलितोऽर्थः ॥ ६८ ॥

ननु केवलान्वयिनि ज्ञेयत्वादौ साध्ये साध्यवदन्यस्याऽप्रसिद्धत्वादव्याप्तिः, किञ्च सत्तावान् जातेरित्यादौ साध्यवदन्यस्मिन् सामान्यादौ हेतुतावच्छेदकसम्ब-

---

'घटः-द्रव्यं=द्रव्यत्ववान्, **गुणकर्मान्यत्वविशिष्टसत्त्वात्**=गुणकर्मभेदविशिष्टसत्तावत्त्वादि'ति सद्धेतौ, साध्यद्रव्यत्ववद्द्रव्यान्यस्मिन् गुणे कर्मणि च **तदवृत्तित्वं**=तस्य हेतोः गुणकर्मभेदविशिष्टसत्तात्मकस्य, अवृत्तित्वं-समवायेन वृत्तित्वाभाववत्त्वं नास्ति, किन्तु वृत्तित्वमेवाऽस्ति तथा च व्याप्तिलक्षणस्याऽव्याप्तिः **तथापि**=तद्वारणाय-हेतोःअवृत्तित्वं हेतुतावच्छेदकेन रूपेण=धर्मेण वाच्यं=वक्तव्यम्, हेतुतावच्छेदकावच्छिन्नहेतोः साध्यवदन्यस्मिन् अवृत्तित्वं वक्तव्यम्, अर्थात्-साध्यवदन्यनिरूपितवृत्तिताऽनवच्छेदकहेतुतावच्छेदकवत्त्वमिति वक्तव्यमित्यर्थः । तथा च-"**साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितानवच्छेदकहेतुतावच्छेदकधर्मवत्त्वं** हेतौ इति-व्याप्तिः फलिता, साध्यतावच्छेदकसमवायसम्बन्धावच्छिन्नसाध्यवत्त्व-द्रव्यत्ववत्त्वावच्छिन्न-प्रतियोगिताकभेदाधिकरणगुणकर्मनिरूपितहेतुतावच्छेदकसमवायसम्बन्धावच्छिन्नसत्तागुणत्वकर्मत्वनिष्ठवृत्तितावच्छेदकं सत्तात्वगुणत्वत्वकर्मत्वत्वादि तादृशवृत्तितानवच्छेदकं यद्गु गुणकर्मभेदसत्तात्वेत्युभयं हेतुतावच्छेदकं, तद्धर्मवत्त्वस्य हेतौ सत्त्वाल्लक्षणसमन्वय इति ॥ ६८ ॥

'अथवे'त्यादि(६९)सिद्धान्तलक्षणात्मकान्वयव्याप्तिमवतारयितुं दर्शितस्य 'साध्यवदन्याऽवृत्तित्व मिति'लक्षणस्य 'घटः-वाच्यत्ववान्,-ज्ञेयत्वादि'ति सद्धेतावव्याप्तिं दर्शयति-**ननु केवलान्वयिनीति**। साध्यं हेतुश्च स्वरूपसम्बन्धेन बोध्यौ । केवलान्वयित्वम्=अत्यन्ताऽभावाऽप्रतियोगित्वम्, भवति हि वाच्यत्वं साध्यं ज्ञेयत्वं च हेतुः केवलान्वयी, यतः वक्तुं योग्यं वाच्यम्=नामविषयमिति यावत्, नाम=शब्दः, स च शक्त्यात्मकवृत्त्या अर्थं बोधयति, शक्तिश्च-'अस्मात्पदात् अयम् अर्थो बोद्धव्य'इत्याकारिका ईश्वरेच्छा, इच्छाविषयाः सर्वे पदार्थाः तथा च-ईश्वरेच्छाविषयत्वमेव वाच्यत्वं तच्च सप्तपदार्थेषु वर्तते, तस्य सप्तपदार्थे कुत्राऽपि अभावो नास्तीति, अत्यन्ताऽभावाऽप्रतियोगित्वात् केवलान्वयि भवति वाच्यत्वम्, एवं ज्ञेयत्वम्=ईश्वरीयज्ञानविषयत्वम्, तदपि सप्तपदार्थेषु वर्तते, तस्य अभावः कुत्रापि नास्ति, अतः अत्यन्ताभावाऽप्रतियोगित्वात् ज्ञेयत्वं हेतुरपि केवलान्वयी भवति, तथा च-केवलान्वयिनि=अत्यन्ताभावाऽप्रतियोगिनि **ज्ञेयत्वादौ**=ज्ञेयत्वे वाच्यत्वे वा, साध्ये कृते सति हेतौ कृते सति वा, द्वयोः समानत्वात् नैकत्राऽऽग्रहः, तथा च 'घटः, वाच्यत्ववान् ज्ञेयत्वादि'त्यत्र 'घटः-ज्ञेयत्ववान्,-वाच्यत्वादि'त्यत्र च साध्यवाच्यत्ववत्सप्तपदार्थभिन्नस्यैवाऽप्रसिद्धत्वात् तन्निरूपितवृत्तिताया अप्यप्रसिद्ध्या मूलमात्रोक्तयथाश्रुतलक्षणस्यैवाऽव्याप्तिः, अतस्तादृशं व्याप्तिस्वरूपमेव भवितुं नार्हतीति भावः ॥ ननु-केवलान्वय्यनुमानमेव नांगीक्रियते, तथा च तत्राऽव्याप्त्यभिधानमसंगतम्, अथवा-केवलान्वयिनि केवलान्वयित्वग्रहदशायां 'वाच्यो न वे'ति पक्षतात्मकसंशयाऽभावादेव नानुमितिः, व्यतिरेकित्वग्रहदशायां तु भ्रमात्मकव्याप्तिज्ञानात् भ्रमात्मकानुमितिः स्यादेव, अतोऽव्याप्त्यभिधानम् असंगतम्, अतः स्थलान्तरे दोषमाह—**किं चेति**। वस्तुतस्तु-केवलान्वय्यनुमानेऽव्याप्तिमुक्त्वा अन्वयव्यतिरेकिण्यनुमानेऽव्याप्तिं दर्शयितुं परिष्कृतस्यापि लक्षणस्याऽव्याप्तिं दर्शयितुं च स्थलान्तरमाह-**किंचेति**। 'घटः-सत्तावान्,-जातिमत्त्वात्, इत्यत्र साध्यं हेतुश्च समवायेन बोध्यौ, जातिः हेतुः घटत्वद्रव्यत्वादयो ग्राह्याः, तथा च साध्यताव-

न्धेन समवायेन वृत्तेरप्रसिद्धत्वादव्याप्तिश्चात आह—

अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ।
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६९ ॥

अथवेति । हेतुमति निष्ठा=वृत्तिर्यस्य स तथा विरहः=अभावः, तथा च हेत्वधिकरणवृत्तिर्योऽभावस्तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरुच्यते ॥ अत्र यद्यपि वह्निमान् धूमादित्यादौ हेत्वधिकरणपर्वतादिवृत्त्यभावप्रतियोगित्वं

---

च्छेदकसमवायसम्बन्धावच्छिन्नसाध्यवत्त्वसत्तावत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरणसामान्यविशेषादिपदार्थनिरूपिता हेतुतावच्छेदकसमवायसम्बन्धावच्छिन्ना वृत्तितैव अप्रसिद्धा, सामान्यविशेषसमवायादौ समवायसम्बन्धेन कस्यापि पदार्थस्य अवर्तमानत्वात्, तेन तादृशवृत्तित्वाऽभावोऽपि अप्रसिद्धइति व्याप्तिलक्षणं जातौ अव्याप्तमित्यतः सिद्धान्तलक्षणमाह–अथवेत्यादिना ।

अत्र–पूर्वपक्षे–"हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नाधेयताप्रतियोगिकस्वरूपसम्बन्धेन साध्यवदन्यनिरूपितवृत्तित्वाभावो'व्याप्तिरित्युक्तौ, अथवा 'हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठावच्छेदकताप्रतियोगिकस्वरूपसम्बन्धेन साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यवत्त्वावच्छिन्नसाध्यवन्निरूपितसाध्यनिष्ठावच्छेदकताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नसाध्यनिष्ठावच्छेदकताभिन्ना या या असामानाधिकरण्यनिरूपित-न्यूनवृत्त्यन्यतरावच्छेदकतारतदभाववत्त्वमि'त्युक्तौ नोक्तदोष इति तु विभावनीयम् ॥

मूले–अथवेति–'पर्वतो वह्निमान् धूमादि'त्यत्र पर्वते हेतुः वह्निः घटाद्यभावश्च वर्तन्ते, घटाभावस्य प्रतियोगी घटो भवति अप्रतियोगी साध्यो वह्निः भवति वह्नेः धूमस्य च समाने एके अधिकरणे वृत्तित्वं वर्त्तते । तथा च मूलार्थः–हेतुमति=धूमाधिकरणे, निष्ठा=वृत्तिता यस्यैतादृशो यो विरहः=घटाभावः, तस्य अप्रतियोगि यत् साध्यं वह्निः तेन सह ऐकाधिकरण्यं=सामानाधिकरण्यं हेतोः, '**हेत्वधिकरणवृत्त्यभावाऽप्रतियोगिसाध्यसामानाधिकरण्यं** हेतौ व्याप्तिरित्यर्थः ॥ मुक्तावल्यां–**हेतुमति निष्ठा** इति । व्यापकत्वं हि–तदधिकरणवृत्त्यभावाऽप्रतियोगित्वम्, भवति च वह्नौ धूमाधिकरणपर्वतादिवृत्तिघटाद्यभावाऽप्रतियोगित्वम्, अतो वह्निर्धूमस्य व्यापकः, तथा चात्र व्याप्तौ 'हेत्वधिकरणवृत्त्यभावाऽप्रतियोगि'पर्यन्तांशः साध्ये हेतुव्यापकताबोधकः, अवशिष्टश्च 'साध्यसामानाधिकरण्यमि'त्यंशो व्याप्तिः, उभयांशयोजनाद् व्यापकव्याप्यभावगर्भितलक्षणशरीरं सम्पद्यत इति बोध्यम् ॥ 'घटः सत्तावान् जाते'रित्यत्र हेतोः जातेरधिकरणे द्रव्यगुणकर्मसु योऽभावः घटाद्यभावो नतु सत्ताऽभावः, सत्तायास्तत्र सत्त्वात्, तस्य प्रतियोगी घटादिः अप्रतियोगी साध्यं सत्ता, तादृशसाध्यनिरूपितसामानाधिकरण्यं जात्यात्मकहेतौ–इति लक्षणसमन्वयः ॥ एवं 'घटो वाच्यत्ववान् ज्ञेयत्वादि'त्यत्र ज्ञेयत्वात्मकहेत्वधिकरणसप्तपदार्थवृत्तिर्यो घटाद्यभावः, न तु वाच्यत्वाऽभावः, वाच्यत्वस्य सर्वत्र सत्त्वात्, तादृशाभावप्रतियोगिघटादिः, अप्रतियोगि साध्यं वाच्यत्वं तन्निरूपित–सामानाधिकरण्यं ज्ञेयत्वे हेतौ–इति लक्षणसमन्वयः ॥ 'पर्वतो वह्निमान् धूमादि'त्यत्र धूमात्मकहेत्वधिकरणपर्वतवृत्तिघटाभावाप्रतियोगिवह्न्यात्मकसाध्यसामानाधिकरण्यं धूमे इति लक्षणसमन्वयः ॥ 'पर्वतो धूमवान् वह्ने'रित्यसद्धेतौ तु लक्षणं न गच्छति–वह्न्यात्मकहेत्वधिकरणतप्तायोगोलकवृत्तिर्यो धूमाऽभावस्तत्प्रतियोगित्वात् धूमस्य व्यापकत्वहान्या अग्रे लक्षणाऽसंचारात् ॥

अस्याः व्याप्तेरपि 'पर्वतो वह्निमान् धूमादि'त्यत्र धूमे सद्धेतौ अव्याप्तिं शंकते–**अत्र यद्यपीति** ।

**तत्तद्वह्न्यादेरस्तीत्यव्याप्तिः ॥ न च समानाधिकरणवह्निधूमयोरेव व्याप्तिरिति वाच्यम् । तत्तद्वह्न्यादेरप्युभयाभावसत्त्वात् , एकसत्त्वेऽपि द्वयं नाऽस्तीति प्रतीतेः । गुणवान् द्रव्यत्वादित्यादावव्याप्तिश्च ॥ तथाऽपि प्रतियोगितानवच्छेदकं यत् साध्यता-**

पर्वतपक्षे संयोगेन वह्निः साध्यः, संयोगेन धूमो हेतुः, तत्र हेतुधूमाधिकरणपर्वतमहानसादौ वर्तमानो यथा घटाभावस्तथा पर्वते महानसीयवह्न्यभावः, महानसे पर्वतीयवह्न्यभावः, महानसे चत्वरीयवह्न्य भावः, चत्वरे गोष्ठीयवह्न्यभावः, गोष्ठे तापसीयवह्न्यभावः, इत्येवं तत्तद्वह्न्यभावमादाय तत्तदभाव-प्रतियोगित्वमेव तत्तद्वह्न्यादेः=पर्वतीयादिवह्न्यादेः, न तु अप्रतियोगित्वं भवति, इति व्यापकत्वहान्या लक्षणहानेः अग्रे लक्षणमेव न संचरतीति धूमेऽव्याप्तिरित्यर्थः ॥ ननु–पर्वतीयवह्नेः पर्वतीयधूमे व्याप्तिः, महानसीयवह्नेर्महानसीयधूमे व्याप्तिः–इत्येवं विशेषव्याप्तयो भवन्तु,–अतो नोक्तरीत्याऽ-व्याप्तिरित्याशंकते–न च **समानाधिकरणेति** । '**तद्धेत्वधिकरणवृत्त्यभावाऽप्रतियोगित-त्साध्यसामानाधिकरण्यं तद्धेतौ व्याप्ति**'रिति लक्षणं निर्वाच्यम् । समानम् एकम् अधिकरणं ययोस्तौ तयोः–वह्निधूमयोः, पर्वतीयवह्निधूमयोरेका व्याप्तिः महानसीयवह्निधूमयोरन्या व्याप्तिरिति, तथा च 'हेतुपर्वतीयधूमाधिकरणपर्वतवृत्तिर्यो घटाभावो महानसीयवह्न्यभावश्चत्वरीयगो-ष्ठीयादिवह्न्यभावः, तत्प्रतियोगी घटो महानसीयवह्निश्चत्वरीयगोष्ठीयादिवह्निः, तदप्रतियोगी पर्वतीयवह्निः, तत्सामानाधिकरण्यं पर्वतीयधूमे–इत्येवं लक्षणसमन्वयात् कुतोऽव्याप्ति ? रित्या-शंकितुरभिप्रायः ॥ तत्र समाधत्ते–**तत्तद्वह्न्यादेरप्युभयेति** । उक्तरीत्या विशेषवह्निधूमयो-र्व्याप्तिः स्वीकारपक्षेऽपि **तत्तद्वह्न्यादेः**=पर्वतीयवह्नेरपि पर्वतीयवह्निजलैतदुभयत्वेन धर्मेण पर्वतीयवह्निजलोभयाभावस्य पर्वते सत्त्वाद् '**एकसत्त्वेऽपि द्वयं नास्ती**'ति नियमेन पर्वते पर्व-तीयवह्निसत्त्वेऽपि वह्निजलद्वयं नास्तीति प्रतीतेः, पर्वतीयधूमात्मकहेत्वधिकरणपर्वतवृत्तिःपर्वतीय-वह्निजलोभयाभावस्तत्प्रतियोग्येव वह्निर्जलं च, तदप्रतियोगी वह्निर्न भवतीति व्यापकत्वहान्या लक्ष-णस्याऽव्याप्तिः पर्वतीयधूमेऽपि भवत्येवेति भावः ॥ विशिष्टा( महानसीयत्वविशिष्टवह्न्य )भावमादा-यापि-अव्याप्तिर्बोध्या । ननु **हेत्वधिकरणवृत्तिवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियो-गिताकाऽभावाऽप्रतियोगिसाध्यसामानाधिकरण्य**'मिति लक्षणं वक्तव्यं,व्यासज्यवृत्तिधर्मः= उभयवृत्तिधर्मः उभयत्वं, ( एकत्वावच्छिन्नप्रतियोगिताकपर्याप्तिकाऽन्यत्वं व्यासज्यवृत्तित्वम् )पर्व-तीयधूमाधिकरणे पर्वते यो वह्निजलोभयाभावस्तत्प्रतियोगिता व्यासज्यवृत्तिधर्मावच्छिन्ना भवति, न तु व्यासज्यवृत्तिधर्मानवच्छिन्ना, अतो वह्निजलोभयाभावो न व्यासज्यवृत्तिधर्मानवच्छिन्नप्रति-योगिताकः, अतः स न ग्राह्यः, किन्तु व्यासज्यवृत्तिधर्मानवच्छिन्नस्य जलत्वावच्छिन्नस्य घटत्वाव-च्छिन्नस्य वा अभावो ग्राह्यः, तथा च हेत्वधिकरणवृत्तिर्यो व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगि-ताको जलाभावो वा घटाद्यभावस्तत्प्रतियोगि जलादि तदप्रतियोगिसाध्यवह्निसामानाधिकरण्यं धूमे इति लक्षणसमन्वय इति चेत् ! तथापि स्थलान्तरेऽव्याप्तिरित्याह–**गुणवानिति** । 'घटः–गुणवान्–द्रव्यत्वात् । अत्र साध्यहेतू समवायेन बोध्यौ । तत्र हेतोरेकव्यक्तितया समानाधिकरणविशेषहेतु-साध्ययोरेव व्याप्तिरित्युक्तावपि न निस्तारः । तथाहि–द्रव्यत्वात्मकहेत्वधिकरणे रक्तघटे पीताऽभावः, पीते घटे श्यामाभावः, श्यामघटे श्वेतगुणाऽभावः, वायौ गन्धाभावः, पृथिव्यां स्नेहाभावः, इत्येवं चालनीन्यायेन तत्तद्गुणानामभावो व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकोऽपि भवति, इति तत्तदभावप्रतियोगी एव गुणः साध्यः, न त्वप्रतियोगीति व्यापकत्वहान्या तत्र द्रव्यत्वे लक्षणाऽव्या-प्तिरितिभावः ॥ **तद्रूपवान तद्रसादित्यत्र** लक्षणसमन्वयाद् असम्भवाऽभावाद् अव्याप्तिरुक्ता ॥

साध्य
वच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति वाच्यम्॥ ननु रूपत्वव्याप्यजातिमद्वान् पृथिवीत्वादित्यादौ साध्यतावच्छेदिका रूपत्वव्याप्यजातयः, तासां च शुक्लत्वादिजातीनां नीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वमस्तीत्यव्याप्तिरिति चेन्न, तत्र परम्परया रूपत्वव्याप्यजातित्वस्यैव साध्यतावच्छेदकत्वात्, न हि तादृशधर्मावच्छिन्नाभावः क्वाऽपि पृथिव्यामस्ति, रूपत्वव्याप्यजातिमान्नाऽस्तीति

---

समाधत्ते-तथापीति। लक्षणे 'अभावाऽप्रतियोगिसाध्य'मितिपदस्य 'अभावप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्य'इत्यर्थकरणात् नाऽव्याप्तिरित्यर्थः। **'हेत्वधिकरणवृत्तिव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाऽभावप्रतियोगितानवच्छेदक-साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्य'**मिति लक्षणं फलितम्। द्रव्यत्वात्मकहेत्वधिकरणे यस्य कस्यापि गुणस्य सत्त्वाद्गुणो नास्तीति गुणसामान्याभावो धर्तुं न शक्यते किन्तु पीतो नास्ति रूपं नास्ति रसो नास्तीत्यादिर्गुणविशेषाभावः, तत्प्रतियोगितावच्छेदकं पीतत्वं रूपत्वं रसत्वादि तदनवच्छेदकं साध्यतावच्छेदकं गुणत्वम्, तदवच्छिन्नं साध्यं गुणो व्यापकः तत्सामानाधिकरण्यं द्रव्यत्वे इति लक्षणसमन्वयः॥ अथ-'हेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकम्' इत्यंशं हृदि कृत्वा अव्याप्तिमाशंकते-**ननु रूपत्वेति**। रूपत्वव्याप्या जातयः शुक्लत्वनीलत्वपीतत्वरक्तत्वहरितत्वकपिशत्वचित्रत्वभेदात् सप्त साध्यतावच्छेदिकाः, तद्वन्ति शुक्लनीलपीतरक्तहरितकपिशचित्राणि सप्त रूपाणि समवायेन साध्यभूतानि तद्वान् घटादिः पक्षः, तथा च-'घटः-रूपत्वव्याप्यजातिमद्वान्,-पृथिवीत्वादि'त्यत्र पृथिवीत्वात्मकहेत्वधिकरणे नीलघटे शुक्लो नास्ति पीतघटे नीलो नास्ति रक्तघटे पीतो नास्ति इत्येवं चालनीन्यायेन सर्वेषामपि रूपाणामभावग्रहणसंभवात् सर्वा अपि रूपत्वव्याप्यशुक्लत्वादिजातयः प्रतियोगितावच्छेदिकाः, न त्वनवच्छेदिकाः, ता एव साध्यतावच्छेदिकाः इति 'हेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नत्वात्मकव्यापकताहान्या लक्षणस्य पृथिवीत्वे हेतावव्याप्तिरिति भावः॥ समाधत्ते-**तत्र परम्परयेति**। एतादृशस्थले परम्परया=स्वाश्रयसमवायेन, रूपत्वव्याप्यजातित्वस्यैव=रूपत्वव्याप्यासु शुक्लत्वनीलत्वादिजातिषु स्थितस्य जातित्वधर्मस्यैव,साध्यतावच्छेदकतया स्वीकारात्,एवं रूपत्वव्याप्यजातित्वं, तदाश्रयाः रूपत्वव्याप्यशुक्लत्वादिजातयः,तत्समवायः शुक्लादिरूपेषु साध्यभूतेषु, न तु रूपत्वव्याप्यशुक्लत्वनीलत्वादीनां साध्यतावच्छेदकतया स्वीकारः। तथा च-पृथिवीत्वहेतोरधिकरणे स्वाश्रयसमवायसम्बन्धेन रूपत्वव्याप्यजातित्ववतो यस्य कस्यापि शुक्लादिरूपस्य सत्त्वात् **क्वापि पृथिव्यां**=पृथिवीत्वाधिकरणे शुक्ले नीले वा कुत्रापि घटादौ स्वाश्रयसमवायसम्बन्धेन **तादृशधर्मावच्छिन्नाऽभावः**=रूपत्वव्याप्यजातित्वात्मकसाध्यतावच्छेदकवान्नास्तीत्यभावो धर्तुं न शक्यते, यतः, यदि नीरूपा पृथिवी स्यात् तर्हि तत्र **रूपत्वव्याप्यजातिमान्नास्तीति** बुद्धिरुत्पद्येत, न तु नीरूपा पृथिवी, यस्य कस्यचित् रूपस्य सत्त्वात्, अतस्तत्र रूपत्वव्याप्यजातिमान्नास्तीतिबुद्धयुदयोऽपि न भवति, अतस्तादृशाभावो धर्तुं न शक्यः॥ किन्तु हेत्वधिकरणे नीलघटे शुक्लत्वावच्छिन्नाभावः शुक्लघटे नीलत्वावच्छिन्नाभावः इत्यादिरेव, तत्प्रतियोगितावच्छेदिकाः समवायेन शुक्लत्वनीलत्वादयः, तत्प्रतियोगितानवच्छेदकं तु स्वाश्रयसमवायेन रूपत्वव्याप्यजातित्वं साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं पृथिवीत्वे इति लक्षणसमन्वयः॥ जातिमद्वान् पृथिवीत्वादित्युक्तौ सत्त्वगुणत्वाद्यात्मकजातीनामेव प्रतियोगिताऽनवच्छेदकत्वात्-रूपत्वव्याप्येत्युपात्तम्, व्याप्यत्वं न्यूनवृत्तित्वम्। तद्व्यक्तित्वादिहेतुकस्थले तद्व्यक्तिवृत्तिनीलरूपादिगतनीलत्वादेरेवाऽनच्छेदकत्वसंभवात् पृथिवीत्वपर्यन्तानु-

**बुद्ध्यापत्तेः॥ (एवं दण्डय्यादिसाध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकं तच्च प्रतियोगितानवच्छेदकमिति) ॥ साध्यादिभेदेन व्याप्तेर्भेदात् तादृशस्थले साध्यतावच्छेदकतावच्छेदकं प्रतियोगितावच्छेदकतानवच्छेदकमित्येव लक्षणघटकमित्यपि वदन्ति ॥**

---

धावनम् ॥ तत्र च परम्परया जातित्वस्याऽवच्छेदकत्वांगीकारात् 'घटो रूपत्वन्यूनवृत्तिजातिमानि'-त्येवानुमितिः स्वीक्रियते ॥ स्थलान्तरेऽपि परम्परासम्बन्धेन साध्यतावच्छेदकं कल्पयित्वाऽव्याप्तिं वारयति-**एवं दण्डयादिसाध्ये** इति । ( ) चिन्हान्तर्गतः पाठोऽत्र प्रक्षिप्तः, प्राचीनमुक्तावलीपुस्तके अदर्शनात् । सिद्धान्तलक्षणस्य दीधितेः पंक्तिरियं बोध्या । तत्राऽव्याप्तिदानप्रकारः– 'मठो–दण्डिमान् ,–दण्डिसंयोगादि'त्यत्र साध्यं संयोगेन, हेतुश्च समवायेन बोध्यः । तत्र दण्डिसंयोगाधिकरणसमवायानुयोगित्वसम्बन्धेन मठः तन्निष्ठोऽभावः भूतलीयतद्दण्डी नास्तीति एवं हेत्वधिकरणे भूतले मठीयदण्डी नास्तीति तदभावीया प्रतियोगिता तत्तद्दण्डिनिष्ठा, प्रतियोगितावच्छेदको दण्डः, स एव साध्यतावच्छेदकः, इत्यव्याप्तिः । स्वाश्रयाश्रयत्वात्मकपरम्परासम्बन्धेन दण्डत्वस्य साध्यतावच्छेदकत्वस्वीकारे तु,–स्वं दण्डत्वं तदाश्रयो दण्डः, तदाश्रयः पुरुषः, तथा च दण्डिसंयोगाधिकरणे स्वाश्रयाश्रयत्वसम्बन्धेन दण्डत्ववान्नास्तीति वक्तुं न शक्यते, अपि तु घटत्ववान्नास्ति दण्डवान्नास्तीत्येवमेव, तत्प्रतियोगितावच्छेदकं घटत्वं दण्डश्च, तत्प्रतियोगितानवच्छेदकं परम्परया दण्डत्वमेव, तदवच्छिन्नः परम्परया दण्डी तत्सामानाधिकरण्यस्य दण्डिसंयोगे सत्त्वात् समन्वय इति ॥ अत्रापि 'मठो दण्डत्ववानि'त्येवानुमितिः । रूपत्वव्याप्यजातेः दण्डस्य च साध्यतावच्छेदकतापक्षे 'रूपत्वव्याप्यजातिमद्वान्' 'मठो दण्डिमान्' इत्येवमेवाऽनुमितिमुपपादयतां मतमाह– **साध्यादिभेदेनेति** । साध्यतावच्छेदकविशिष्टस्य, साधनतावच्छेदकविशिष्टस्य च भेदेनेत्यर्थः, यथा 'वह्निमान् धूमादि'त्यत्र सिद्धान्तव्याप्तिर्मूलोक्तैव, 'कपिसंयोगी एतद्वृक्षत्वादि'त्यत्र प्रतियोगिवैयधिकरण्यघटिता, कालो घटवान् कालपरिमाणादित्यत्र उभयाभावघटिता, तथा **तादृशस्थले**= रूपत्वव्याप्यजातिमद्वानि'त्यत्र 'दण्डिमान्' इत्यत्र च व्याप्तिस्वरूपं **'हेत्वधिकरणवृत्त्यभावप्रतियोगितावच्छेदकतानवच्छेदकं यत् साध्यतावच्छेदकतावच्छेदकं तदवच्छिन्नावच्छिन्नसाध्यसामानाधिकरण्य**'मिति वक्तव्यम् , तथा च-घटो रूपत्वव्याप्यजातिमद्वान् पृथिवीत्वादि'त्यत्र पृथिवीत्वहेत्वधिकरणं घटः तद्वृत्त्यभावः रूपत्वव्याप्यजातिमत्तत्च्छुक्लनीलादिरूपाभावः, तत्प्रतियोगिता तत्तच्छुक्लादिनिष्ठा, प्रतियोगितावच्छेदिका रूपत्वव्याप्यशुक्लत्वनीलत्वादिजातयः, प्रतियोगितावच्छेदकतावच्छेदकं शुक्लत्वत्वं नीलत्वत्वमिति, प्रतियोगितावच्छेदकताऽनवच्छेदकं तु रूपत्वव्याप्यजातित्वमेकमेव, तदेव साध्यतावच्छेदकरूपत्वव्याप्यजातेरवच्छेदकं, तदवच्छिन्नरूपत्वव्याप्यजात्यवच्छिन्नं साध्यं रूपत्वव्याप्यजातिमत् , तत्सामानाधिकरण्यं हेताविति लक्षणसमन्वयः ॥ 'मठो दण्डिमान् दण्डिसंयोगादि'त्यत्र दण्डिसंयोगात्मकहेत्वधिकरणवृत्त्यभावीयप्रतियोगिता तत्तद्दण्डिनिष्ठा, तदवच्छेदकस्तद्दण्डः, तदवच्छेदकं तत्त्वं तद्व्यक्तित्वं, तादृशप्रतियोगितावच्छेदकताऽनवच्छेदकं तु दण्डत्वं, तदेव साध्यतावच्छेदकदण्डावच्छेदकम् , तादृशदण्डत्वावच्छिन्नदण्डावच्छिन्नदण्डिसामानाधिकरण्यं हेताविति **लक्षणसमन्वयः** ॥ 'पृथिवीत्वहेतुकस्थले साध्यतावच्छेदकधर्मिक–हेतुमन्निष्ठाऽभावप्रतियोगिताऽनवच्छेदकत्वज्ञानात् जातिमानित्येव अनुमितिः, तत्र जातिमद्वानित्यनुमित्यनङ्गीकारे बाधकाऽभावेन 'प्रतियोगितावच्छेदकतानवच्छेदकत्वादिघटितलक्षणकरणमनुचितं गौरवात् प्रयोजनाऽभावाच्चेत्यस्वरसः **'वदन्ती'**त्यनेन सूचितः ॥

हेत्वधिकरणं हेतुतावच्छेदकविशिष्टाधिकरणं वाच्यम्, तेन द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ शुद्धसत्ताधिकरणगुणादिनिष्ठाभावप्रतियोगित्वेऽपि द्रव्यत्वस्य नाऽव्याप्तिः ॥ एवं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं बोध्यं, तेन समवायेन धूमाधिकरणतदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाऽव्याप्तिः ॥

---

ननु-'घटः,-द्रव्यत्ववान्,-गुणकर्मभेदविशिष्टसत्तावत्त्वाद्', इत्यत्र समवायेन साध्यहेतुस्थले 'विशिष्टं शुद्धान्नातिरिच्यते' इति न्यायेन शुद्धसत्ता-विशिष्टसत्तयोरैक्यात् लक्षणस्थ'हेतु'पदेन शुद्धसत्तामादाय तदधिकरणगुणादिवृत्तिर्यो, द्रव्यत्वात्मकसाध्याभावस्तत्प्रतियोगितावच्छेदकमेव द्रव्यत्वत्वं तदेव साध्यतावच्छेदकं, नतु प्रतियोगिताऽनवच्छेदकमिति व्यापकत्वहान्या गुणकर्मभेदविशिष्टसत्तायां हेतौ व्याप्तेरव्याप्तिरित्यत आह-**हेत्वधिकरणमिति**। हेतुतावच्छेदकविशिष्टाधिकरणम्= हेतुतावच्छेदको यो धर्मस्तदवच्छिन्नस्य हेतोरधिकरणं 'हेत्वधिकरण'पदेन ग्राह्यमित्यर्थः। तथा च- **हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणवृत्त्यभावप्रतियोगिताऽनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यमिति**, व्याप्तिः फलिता। तेन = हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणेतिनिवेशेन, 'घटः-द्रव्यं = द्रव्यत्ववान्, गुणकर्मान्यत्वविशिष्टसत्त्वादि'त्यत्र हेतुपदेन शुद्धसत्तामादाय तदधिकरणगुणादिनिष्ठस्य द्रव्यत्वाभावस्य प्रतियोगिताया द्रव्यत्वे सत्त्वेऽपि न तत्रत्यहेताव-व्याप्तिः, यतः शुद्धसत्ता-विशिष्टसत्तयोरभिन्नत्वेऽपि सत्तात्वगुणकर्मान्यत्वविशिष्टसत्तात्वयोर्धर्मयोर्भेदात् हेतुतावच्छेदकगुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नगुणकर्मान्यत्वविशिष्टसत्ताधिकरणद्रव्यवृत्तिपटाद्यभावप्रतियोगितावच्छेदकपटत्वभिन्नं यद् द्रव्यत्वसाध्यतावच्छेदकं द्रव्यत्वत्वं तदवच्छिन्नद्रव्यत्वसामानाधिकरण्यं गुणकर्मान्यत्वविशिष्टसत्तायामिति लक्षणसमन्वयः॥ **अथ**-तथापि सामान्यधर्मावच्छिन्नाधिकरणतायां मानाऽभावेन 'वह्निमान् धूमादि'त्यत्राऽप्यव्याप्तिरिति **चेत्**!, उच्यते-यन्निरूपितनिरवच्छिन्नवृत्त्यभावप्रतियोगितानवच्छेदकं हेतुतावच्छेदकं तस्यैव हेत्वधिकरणपदार्थत्वात्॥

**नन्वेवमपि** 'पर्वतो-वह्निमान्,-धूमादि'त्यत्र समवायसम्बन्धेन धूमाधिकरणं धूमावयवस्तन्निष्ठं 'वह्निर्नास्ति'इत्यभावमादाय तत्प्रतियोगितावच्छेदकमेव वह्नित्वं न त्वनवच्छेदकमिति व्यापकत्वहान्या धूमेऽव्याप्तिरिति तद्वारणार्थमाह-**एवं हेतुतावच्छेदकसम्बन्धेनेति**। येन सम्बन्धेन हेतुः पक्षेऽभिप्रेतस्तत्सम्बन्धेन संयोगादिना हेत्वधिकरणं बोध्यम्, **हेतुतावच्छेदकावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यमिति** व्याप्तिः फलिता, **तेन**=हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणनिवेशेन, 'पर्वतो वह्निमान् धूमादि'त्यत्र समवायसम्बन्धेन धूमाधिकरणा ये धूमावयवास्तद्वृत्तिर्यो वह्न्यभावस्तत्प्रतियोगिताया वह्नौ सत्त्वेऽपि न धूमे व्याप्तेरव्याप्तिः, यतो हेतोर्धूमस्य पर्वते संयोगसम्बन्धोऽभिप्रेतः, अतो-हेतुतावच्छेदकधूमत्वावच्छिन्नहेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नहेतुधूमाधिकरणपर्वतवृत्तिघटाद्यभावप्रतियोगितावच्छेदकघटत्वादिभिन्नं यत् साध्यतावच्छेदकं वह्नित्वं तदवच्छिन्नसाध्यवह्निसामानाधिकरण्यं धूमे इति लक्षणसमन्वयः॥

**ननु**-तथापि 'वृक्षः,-कपिसंयोगी,-एतद्वृक्षत्वात्'इत्यत्र-कपिसंयोगः समवायेन साध्यः, एतद्वृक्षत्वं=तद्व्यक्तित्वं स्वरूपसम्बन्धेन हेतुस्तत्र एतद्वृक्षत्वात्मकहेत्वधिकरणमेतद्वृक्षस्तद्वृत्त्यभावो मूलावच्छेदेन 'कपिसंयोगो नास्ती'तिसाध्यस्यैवाऽभावः तत्प्रतियोगितावच्छेदकमेव कपिसंयोगत्वं,

**अभावश्च प्रतियोगिव्यधिकरणो बोध्यः, तेन कपिसंयोगीएतद्वृक्षत्वादित्यत्र मूलावच्छेदेनैतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेऽपि कपिसंयोगस्य नाऽव्याप्तिः ॥ न च प्रतियोगिव्यधिकरणत्वं यदि प्रतियोग्यनधिकरणवृत्तित्वं, तदा तथैवाऽव्याप्तिः, प्रतियोगिनः कपिसंयोगस्याऽनधिकरणे गुणादौ वर्तमानो योऽभावस्तस्यैव वृक्षे मूलावच्छेदेन सत्त्वात्। यदि तु प्रतियोग्यधिकरणावृत्तित्वं, तदा संयोगी सत्त्वादित्यादाव-**

---

न त्वनवच्छेदकमिति व्यापकत्वहान्या हेतौ लक्षणस्याऽव्याप्तिरित्यत आह–**अभावश्चेति**। हेत्वधिकरणवृत्तिर्योऽभावः स प्रतियोगिव्यधिकरणत्वेन विशेषणीयः, प्रतियोगिनो यदधिकरणं ततो वि-विरुद्धं भिन्नम् अधिकरणं यस्य अभावस्य तादृशोऽभावो वक्तव्य इत्यर्थः ॥ तथाच **'प्रतियोगिव्यधिकरण–हेतुतावच्छेदकावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणवृत्त्यभाव-प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यमिति**–लक्षणं सम्पन्नम्, **तेन**=अभावे प्रतियोगिव्यधिकरणत्वनिवेशेन, 'वृक्षः,–कपिसंयोगी,–एतद्वृक्षत्वादि'त्यत्र हेतुतावच्छेदकैतद्वृक्षत्वत्वावच्छिन्नहेतुतावच्छेदकस्वरूपसम्बन्धावच्छिन्नैतद्वृक्षत्वाधिकरणेतद्वृक्षवृत्तिर्यो मूलावच्छेदेन शाखीयकपिसंयोगाभावस्तत्प्रतियोगिताया कपिसंयोगे साध्ये सत्त्वेऽपि तत्रत्यहेतौ न लक्षणस्य अव्याप्तिः, यतः शाखामूलादिसमग्रसमुदायो वृक्षः, एकस्मिन्नेव वृक्षे शाखायां कपिसंयोगो मूले तु तदभाव इति प्रतियोगितदभावयोरेकस्मिन्वृक्षे सत्त्वात् कपिसंयोगाऽभावो न प्रतियोगिकपिसंयोगव्यधिकरणः, किन्तु वृक्षे भूतलीयघटाभाव एव घटात्मकप्रतियोगिव्यधिकरणः, तादृशघटाभावप्रतियोगिताऽनवच्छेदकं साध्यतावच्छेदकं कपिसंयोगत्वं तदवच्छिन्नकपिसंयोगसामानाधिकरण्यम् एतद्वृक्षत्वे इति लक्षणसंगतिः ॥

ननु–'प्रतियोगिव्यधिकरणत्व'मित्यस्य कोऽर्थः? यदि 'प्रतियोग्यनधिकरणवृत्तित्वम्, तदा 'वृक्षः कपिसंयोगी एतद्वृक्षत्वादि'त्यत्रैवाऽव्याप्तिरित्याशंकते–**नच प्रतियोगिव्यधिकरणत्वं यदीति**। **प्रतियोग्यनधिकरणवृत्तित्वं**=प्रतियोगिनो घटादेरनधिकरणे वृक्षे वृत्तितावान् यो घटस्याऽभावः स एव 'प्रतियोग्यनधिकरणवृत्तितावानि'त्यर्थोऽभिप्रेतस्तदा **तथैव**=कपिसंयोगाऽभावमादायैव, 'वृक्षः,–कपिसंयोगी,–एतद्वृक्षत्वा'दित्यत्र हेतावव्याप्तिः यतः–अधिकरणभेदेन अभावभेदे मानाऽभावात् शाखायां यः कपिसंयोगस्तस्यात्यन्ताभावो नित्यः एकश्च शाखां विहायान्यत्र मूले भूतलादौ गुणादौ च स एव वर्तते, तथा च–प्रतियोगिनः शाखीयकपिसंयोगस्य अनधिकरणे गुणादौ वर्तमानः अथ च हेत्वधिकरणवृक्षे मूलावच्छेदेन वृत्तिः स एव शाखीयकपिसंयोगाऽभावस्तत्प्रतियोगितावच्छेदकमेव कपिसंयोगत्वं साध्यतावच्छेदकमिति व्यापकत्वहान्या लक्षणस्य अव्याप्तिरित्यर्थः ॥ **'प्रतियोग्यनधिकरणवृत्ति–हेतुतावच्छेदकावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणवृत्त्यभावेति** पूर्ववल्लक्षणाकारः ॥ ननु–'प्रतियोगिव्यधिकरणत्वमि'त्यस्य न प्रतियोग्यनधिकरणवृत्तित्वमर्थः, किन्तु–प्रतियोग्यधिकरणाऽवृत्तित्वमित्यर्थः, तथा च नोक्ताऽव्याप्तिरित्याह–**यदि तु प्रतियोग्यधिकरणाऽवृत्तित्वमिति**। प्रतियोगिनः=घटाभावप्रतियोगिनो घटादेरधिकरणे भूतले अवर्तमान इत्यर्थः, तथाच शाखीयकपिसंयोगात्मकप्रतियोगिनोऽधिकरणे वृक्षेऽवर्तमानः तदभावो नास्तीति स न ग्राह्यः, किन्तु घटाभाव एव, तत्प्रतियोगितानवच्छेदकं कपिसंयोगत्वं तदवच्छिन्नसाध्यसामानाधिकरण्यस्य हेतौ सत्त्वाल्लक्षणसमन्वयः ॥ **'प्रतियोग्यधिकरणावृत्ति–हेतुतावच्छेदकावच्छिन्नेत्यादिलक्षणाकारः** ॥ तथापि व्यभिचारिणि अतिव्याप्तिमाह–**तदा संयोगीति**। 'द्रव्यं, संयोगवत्–सत्तावत्त्वादि'त्यत्र नवद्रव्याणि पक्षः, संयोगः समवायेन साध्यः, सम-

**तिव्याप्तिः,—सत्ताधिकरणे गुणादौ यः संयोगाभावस्तस्य प्रतियोग्यधिकरणद्रव्यवृत्तित्वादिति वाच्यम्। हेत्वधिकरणे प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य अभावस्य विवक्षितत्वात्, स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभाव इति निष्कर्षः॥**

वायेन सत्ता हेतुः, संयोगगुणस्य गुणादौ अभावात् तत्र सत्तायाः सत्त्वाद् व्यभिचारी हेतुः, तत्र—सत्तायां व्यभिचारिणि हेतौ व्याप्तिलक्षणस्य अतिव्याप्तिः, यतः **सत्ताधिकरणे**=हेत्वधिकरणे—व्यभिचारनिरूपकाधिकरणे **गुणकर्मादौ**, यः संयोगाऽऽत्मकसाध्यस्य अभावः, तस्य=साध्याभावस्य, संयोगात्मकप्रतियोगिनोऽधिकरणे **द्रव्ये वर्तमानत्वात्** संयोगाऽभावस्य प्रतियोग्यधिकरणाऽवृत्तित्वाऽभावात् साध्याभावो न लक्षणघटकः,( व्यभिचारिस्थले साध्याभाव एव लक्षणघटकतया इष्टः, स न मिलितः )किन्तु घटाभाव एव तत्प्रतियोगितानवच्छेदकं साध्यतावच्छेदकं संयोगत्वं तदवच्छिन्नसाध्यसंयोगसामानाधिकरण्यं सत्तायामतिव्याप्तिरिति॥ तदेतत्समाधत्ते-**हेत्वधिकरणे** इति। प्रतियोग्यनधिकरणवृत्तिताविशिष्टाऽभावस्य हेत्वधिकरणवृत्तितया विवक्षितत्वात् प्रतियोग्यनधिकरणवृत्तिताविशिष्टो योऽभावस्ताहृशविशिष्टाभाव एव हेत्वधिकरणाऽवच्छेदेन विवक्षित इति भावः, प्रतियोग्यनधिकरणता हेत्वधिकरणता च यत्रैकपदार्थे वर्तते तादृशैकपदार्थनिष्ठताद्दशाधिकरणताद्वयनिरूपिताधेयतावानभावोऽभिप्रेत इति हृदयम्। तथाच-'द्रव्यं,-संयोगवत्, सत्तावत्त्वादि'त्यत्र संयोगात्मकप्रतियोग्यनधिकरणगुणादिवृत्तिताविशिष्टः संयोगाऽभावो गुणादावेव स एव गुणदिवृत्तिताविशिष्टाभावो हेतु-सत्ताधिकरणगुणकर्मावच्छेदेन वर्तते इति संयोगात्मकसाध्याभावस्य गृहीतुं शक्यत्वात् तत्प्रतियोगितावच्छेदकमेव संयोगत्वं साध्यतावच्छेदकं, न तु प्रतियोगितानवच्छेदकम्, इति व्यापकत्वहान्या तत्र सत्तायां न लक्षणातिव्याप्तिरिति॥ 'वृक्षः-कपिसंयोगवान्-एतद्वृक्षत्वादि'त्यत्र साध्यस्य शाखास्थकपिसंयोगस्य मूलावच्छेदेन वृक्षे गृहीतुमेवाऽशक्यत्वात्, यतः कपिसंयोगात्मकप्रतियोग्यनधिकरणं वृक्षो न भवति किन्तु गुण एव, तथाच कपिसंयोगात्मकप्रतियोग्यनधिकरणगुणवृत्तिताविशिष्टस्य कपिसंयोगाऽभावस्य( तादृशविशिष्टाभावस्य ) एतद्वृक्षत्वाधिकरणैतद्वृक्षात्मकहेत्वधिकरणावच्छेदेन असत्त्वात्। किन्तु घटाभाव एव, स च घटात्मकप्रतियोग्यनधिकरणैतद्वृक्षवृत्तिताविशिष्टः सन् हेत्वधिकरणैतद्वृक्षवृत्तितावान् भवतीति तत्प्रतियोगिताऽनवच्छेदकसाध्यतावच्छेदककपिसंयोगत्वावच्छिन्नकपिसंयोगसामानाधिकरण्यमेतद्वृक्षत्वे इति लक्षणसमन्वयात्॥ **'प्रतियोग्यनधिकरणवृत्तिताविशिष्टनिरुक्तहेत्वधिकरणवृत्त्यभावे'**त्यादिपूर्ववल्लक्षणाकारः॥ ननु-'हेत्वधिकरणवृत्त्यभावाऽप्रतियोगिसाध्यसामानाधिकरण्य'मितिमूललक्षणे 'हेत्वधिकरणवृत्ति'पदानुपादाने शिष्टस्य 'अभावाप्रतियोगिसाध्यसामानाधिकरण्य'मित्यस्य 'घटः-सत्तावान् जाते'रित्यत्र अव्याप्तिः, अभावपदेन सामान्यविशेषसमवायादौ वर्तमानं सत्ताभावमादाय तत्प्रतियोगिनी एव सत्ता न त्वप्रतियोगिनी इति व्यापकत्वहान्या जातौ लक्षणाऽगमनात्। सा न स्यादित्येतदर्थं 'हेत्वधिकरणवृत्ती'त्युक्तम्, सत्ताभावस्तु न जात्यधिकरणद्रव्यगुणकर्मसु वृत्तिरिति स न लक्षणघटकः किन्तु घटाभावः, तदप्रतियोगिसत्तासामानाधिकरण्यं जाताविति लक्षणसंगतिः॥

अथ-'प्रतियोगिव्यधिकरणपदेन यदि **"हेत्वधिकरणावच्छेदेन प्रतियोग्यनधिकरणवृत्तित्वविशिष्टत्वमि'**ति उच्येत, तदा मूललक्षणस्थं 'हेत्वधिकरणवृत्ती'तिपदं पुनरुक्तं निरर्थकं स्यात्, यतः 'घटः सत्तावान् जाते'रित्यत्र हेतुजात्यधिकरणद्रव्यगुणकर्मावच्छेदेन वर्तमानो न सत्ताऽनधिकरणसामान्यविशेषसमवायादिवृत्तिताविशिष्टः सत्ताऽभावः, किन्तु घटाभाव एव, तत्प्रतियोगितानवच्छेदकसत्तात्वावच्छिन्नसामानाधिकरण्यात् जातौ लक्षणसमन्वयात्, तत्राऽव्याप्त्यभावाद्—

प्रतियोग्यनधिकरणत्वं च प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वाच्यम्, तेन विशिष्टसत्तावान् जातेरित्यादौ जात्यधिकरणगुणादौ विशिष्टसत्ताभावप्रतियोगिसमानाधिकरणत्वेऽपि न क्षतिः। अत्र साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यन-

---

इत्यतो निष्कर्षमाह–स्वप्रतियोग्यनधिकरणीभूतेति। अभावे प्रतियोगिव्यधिकरणत्वं नैव निवेशनीयं, किन्तु–'स्वप्रतियोग्यनधिकरणत्वं हेत्वधिकरणस्य विशेषणं कृत्वा 'प्रतियोगिव्यधिकरण-हेतुसमानाधिकरणाऽभाव'इत्यन्तांशस्य 'स्वप्रतियोग्यनधिकरण–हेत्वधिकरण–वृत्त्यभाव'इति निष्कर्षः कार्यः। न तु 'प्रतियोगिव्यधिकरण'पदमात्रस्य तथाविधोऽर्थः, तथा च 'प्रतियोगिव्यधिकरण'पदबलात् मूललक्षणस्थ'हेत्वधिकरणवृत्ति'पदबलाच्च एतन्निष्कर्षलाभात् न मूलोक्त'हेत्वधिकरणवृत्ति'-पदं व्यर्थमिति। '**स्वप्रतियोग्यनधिकरणीभूतहेतुतावच्छेदकावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणवृत्ति-वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाऽभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं** व्याप्तिरित्यर्थः फलितः॥ स्वं–लक्षणघटकाऽभावः। 'वृक्षः कपिसंयोगी, एतद्वृक्षत्वादि'त्यत्र कपिसंयोगाऽभावो न लक्षणघटकः, कपिसंयोगाऽनधिकरणीभूतस्य हेत्वधिकरणत्वाऽभावात्, किन्तु घटाभाव एवेति, लक्षणसमन्वयः। 'द्रव्यं–संयोगवत्'–सत्त्वादि'त्यत्र संयोगानधिकरणीभूतगुणादेः हेत्वधिकरणत्वात् संयोगात्मकसाध्याभाव एव लक्षणघटकः तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकमिति नातिव्याप्तिरिति बोध्यम्।

ननु–व्यभिचारिस्थले 'द्रव्यं–गुणकर्मभेदविशिष्टसत्तावत्, जातिमत्त्वादि'त्यत्र विशिष्टसत्ता-शुद्धसत्तयोरैक्यात् विशिष्टसत्ताऽभावप्रतियोगिनी विशिष्टसत्ता इव शुद्धसत्ताऽपि भवति, तथा च जात्यात्मकहेत्वधिकरणगुणादौ वर्तमानस्य विशिष्टसत्ताभावस्य प्रतियोगिनी या शुद्धसत्ता तदधिकरणमेव हेत्वधिकरणं भवतीति साध्याभावस्य लक्षणाऽघटकत्वाद्घटाभावमादाय तत्प्रतियोगितानवच्छेदकसाध्यतावच्छेदक–गुणकर्मभेदविशिष्टसत्तात्वावच्छिन्नसामानाधिकरण्यं जातावित्यतिव्याप्तिरित्यत आह–**प्रतियोग्यनधिकरणत्वं चेति**। प्रतियोगितावच्छेदको यो धर्मः तदवच्छिन्नस्य प्रतियोगिनः अनधिकरणत्वमित्यर्थः॥ "**स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणीभूतहेतुतावच्छेदकावच्छिन्ने**'त्यादिपूर्ववल्लक्षणाकारः। तेन='स्वप्रतियोग्यनधिकरण'पदस्य 'स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणा'र्थकरणेनेत्यर्थः। 'द्रव्यं गुणकर्मभेदविशिष्टसत्तावत्,–जातिमत्त्वात्'–इति व्यभिचारिहेतौ, साध्याभाववति गुणे हेतोः सत्त्वात् जात्यात्मकहेत्वधिकरणे गुणादौ यो विशिष्टसत्ताऽभावः तत्प्रतियोगि शुद्धसत्ताऽपि भवतीति सत्ताधिकरणताया गुणादौ सत्त्वेन घटाद्यभावमादायाऽतिव्याप्तावपि उक्तनिवेशात् **न क्षतिः**=न अतिव्याप्तिरित्यर्थः॥ ननु–'आत्मा,–ज्ञानवान्,–सत्त्वादि'त्यत्र समवायेन ज्ञानं साध्यम्, समवायेन सत्ता हेतुः, ज्ञानाभाववति गुणादौ सत्तायाः सत्त्वाद्व्यभिचारिहेतुः, तत्र सत्तात्मकहेत्वधिकरणं घटादिगुणादिकं तन्निष्ठोऽभावः समवायेन ज्ञानाभावः तत्प्रतियोगिनो ज्ञानस्य विषयतासम्बन्धेन घटादौ विषये सत्त्वात् ज्ञानात्मकप्रतियोग्यनधिकरणं हेत्वधिकरणं न भवतीति ज्ञानाऽभावो न लक्षणघटकः;किन्तु घटाद्यभाव एव तत्प्रतियोगितानवच्छेदकसाध्यतावच्छेदकज्ञानत्वावच्छिन्नसामानाधिकरण्यं हेतावतिव्याप्तिरित्यत आहाऽत्र **साध्यतावच्छेदकसम्बन्धेनेति**। पक्षे'साध्यतावच्छेदको यः सम्बन्धस्तेन सम्बन्धेन स्वप्रतियोगिनोऽनधिकरणं बोध्यमित्यर्थः॥ '**साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणीभूते**'त्यादिपूर्ववत्परिष्कारः॥ तेन=साध्यतावच्छेदकसम्ब-

धिकरणत्वं बोध्यम्, तेन ज्ञानवान् सत्त्वादित्यादौ सत्ताधिकरणघटादेर्विषयतया ज्ञानाधिकरणत्वेऽपि न क्षतिः। इत्थं च वह्निमान् धूमादित्यादौ धूमाधिकरणे समवायेन वह्निविरहसत्त्वेऽपि न क्षतिः ॥

ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्प्रतियोगिनोऽनधिकरणत्वं, तत्सामान्यस्य वा, यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वा, विवक्षितम्। आद्ये कपिसंयोगी एतद्वृक्षत्वादित्यादौ तथैवाव्याप्तिः, कपिसंयोगाभावप्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिकपिसंयोगोऽपि भवति तदनधिकरणं वृक्ष

---

न्धेन प्रतियोग्यनधिकरणस्य कथनेन, 'आत्मा'–ज्ञानवान्, सत्त्वादि'तिव्यभिचारिहेतौ सत्तात्मकहेत्वधिकरणघटादिगुणादीनां **विषयतया**=विषयतासम्बन्धेन ज्ञानात्मकप्रतियोग्यधिकरणत्वेन ज्ञानाऽभावस्य लक्षणाऽघटकत्वात् घटाभावमादाय तत्राऽसद्धेतावतिव्याप्तावपि, **न क्षतिः**=उक्तनिवेशात् नातिव्याप्तिः, प्रकृते साध्यतावच्छेदकसम्बन्धः समवाय एव,न तु विषयता, तेन समवायेन घटे ज्ञानाऽभावाद् घटाद्यात्मकहेत्वधिकरणं ज्ञानाभावप्रतियोगिज्ञानानधिकरणं भवतीति ज्ञानाभावस्य लक्षणघटकत्वात् तत्प्रतियोगितावच्छेदकसाध्यतावच्छेदकयोरैक्यादिति ॥ **ननु**–'प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्व'कथने सत्यपि 'आत्मा–ज्ञानवान्, सत्त्वादि'त्यत्र हेत्वधिकरणे घटादिगुणादिषु समवायेन ज्ञानाऽभावस्य यः प्रतियोगितावच्छेदकसमवायसम्बन्धस्तेन ज्ञानस्य घटादिगुणादिषु असत्त्वात् प्रतियोग्यनधिकरणहेत्वधिकरणस्य मिलितत्वात् साध्याभावस्यैव लक्षणघटकतया अतिव्याप्तिवारणं भवत्येव, तत् कथं **'प्रतियोगितावच्छेदकसम्बन्धेन'** इत्यनुक्त्वा **'साध्यतावच्छेदकसम्बन्धेने'**त्युक्तमित्यत आह–**इत्थं चेति**। साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वविवक्षणे चेत्यर्थः। 'पर्वतो वह्निमान्, धूमादित्यत्र संयोगेन धूमात्मकहेत्वधिकरणे पर्वते समवायेन वह्न्यभावमादाय तत्प्रतियोगितावच्छेदकसमवायसम्बन्धेन वह्न्यात्मकप्रतियोग्यनधिकरणं हेत्वधिकरणं पर्वतो भवतीति वह्न्यभावस्य लक्षणघटकत्वेन तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं वह्नित्वं भवेदिति व्यापकत्वहान्या अव्याप्त्यापत्तिः स्यात् तद्वारणाय–**'साध्यतावच्छेदकसम्बन्धेन'**–इत्यवश्यं वक्तव्यं भवति, तथा च साध्यतावच्छेदकसंयोगेन वह्न्यभावस्य पर्वतादावसत्त्वाद् घटाभावमादाय लक्षणसंगतिरिति भावः ॥ **न क्षतिः**=नाऽव्याप्तिः। साध्यतावच्छेदकसम्बन्धेन अग्रिमप्रतियोगिताविशेषणे अत्र च प्रतियोगितावच्छेदकसम्बन्धेन विवक्षणे सम्बन्धद्वयप्रवेशेन गौरवमपि स्यादिति बोध्यम् ॥

अथ–'प्रतियोगितावच्छेदकावच्छिन्न'पदार्थं दूषणदानाय त्रिधा विकल्पयति–**ननु–इति**। **प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्प्रतियोगिनोऽनधिकरणत्वं विवक्षितम्**=प्रतियोगितावच्छेदकधर्माश्रयस्य यत्किञ्चिदेकप्रतियोगिव्यक्तेरनधिकरणमभिप्रेतमितिप्रथमविकल्पार्थः ॥ अथवा **तत्सामान्यस्य**=प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्येत्यर्थः, प्रतियोगितावच्छेदकावच्छिन्नयावत्प्रतियोगिनामनधिकरणं विवक्षितमिति द्वितीयविकल्पार्थः ॥ अथवा–**यत्किञ्चिदिति**। बहुषु प्रतियोगितावच्छेदकेषु मध्ये यःकश्चिदेकः प्रतियोगितावच्छेदको धर्मस्तदवच्छिन्नप्रतियोगिनोऽनधिकरणं वा विवक्षितमिति तृतीयविकल्पार्थः ? आद्यपक्षे अव्याप्तिं दूषणमाह–**आद्ये इति**। वृक्षः कपिसंयोगवान्, एतद्वृक्षत्वादि'त्यत्र समवायेन साध्यं, हेतुः स्वरूपसम्बन्धेन बोध्यः। तत्र एतद्वृक्षत्वाधिकरणैतद्वृक्षे मूले कपिसंयोगाभावमादाय तत्प्रतियोगितावच्छेदककपिसंयोगत्वावच्छिन्नो यः कश्चिद् व्यक्तिविशेषो, वृक्षावृत्तिकपिसंयोगोऽपि=भूतलवृत्तिकपिसंयोगोऽपि भवति, तादृशभूतलवृत्तिकपिसं-

**इति ॥ द्वितीये तु प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः,–सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात् । नच वह्निमान् धूमादित्यादौ घटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्वतादेः, तथापि साध्यतावच्छेदकसम्बन्धेन तत्प्रतियोग्यनधिकरणत्वमस्त्येवेति कथं प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरिति वाच्यम् । घटाभावे यो वह्न्यभावस्तस्य**

---

योगाऽनधिकरणं हेत्वधिकरणं वृक्षो भवति, अतो वृक्षे भूतलीयकपिसंयोगाऽभावमादाय तत्प्रतियोगितावच्छेदकमेव कपिसंयोगत्वं साध्यतावच्छेदकम्, न त्वनवच्छेदकमिति व्यापकत्वहान्या तत्र हेतावव्याप्तिरित्यर्थः ॥ **ननु**–प्रतियोगितावच्छेदकावच्छिन्नानां यावतां प्रतियोगिनामधिकरणमत्र (द्वितीयकल्पे ) विवक्षितं, तथाच 'वृक्षः,–कपिसंयोगवान् ,–एतद्वृक्षत्वादि'त्यत्र प्रतियोगितावच्छेदककपिसंयोगत्वावच्छिन्नयावत्कपिसंयोगान्तर्गतस्य वृक्षीयकपिसंयोगस्य तु अनधिकरणं वृक्षो न भवतीति घटाभावमादाय तत्प्रतियोगितानवच्छेदककपिसंयोगत्वावच्छिन्नकपिसंयोगसामानाधिकरण्यं हेताविति नाऽव्याप्तिरित्यतो द्वितीयकल्पेऽसम्भवं दूषणमाह–**द्वितीये त्विति** । द्वितीयकल्पस्य तु सर्वत्र असम्भवः प्रतियोगिव्यधिकरणाऽभावस्यैवाऽप्रसिद्धत्वात, क्षणभेदेन वस्तुभेदात् । तद्यथा–'पर्वतो,–वह्निमान्–धूमादि'त्यत्र धूमाधिकरणे यो घटाभावो यस्मिन् क्षणे वर्तते, तद्द्वितीयक्षणे घटाभावाभावो वर्तते, तृतीयक्षणे घटाभावाभावाभावो वर्तते, अयं च घटाभावात्मकः, तृतीयाभावस्य प्रथमाऽभावात्मकत्वात्, तथाच तृतीयक्षणीयं घटाभावं हेत्वधिकरणे गृहीत्वा तत्प्रतियोगी घटो घटाभावाभावश्चेत्युभौ, प्रतियोगितावच्छेदकधर्मौ घटत्वं घटाभावाभावत्वं चेत्युभौ, तन्मध्यतो घटत्वावच्छिन्नघटात्मकप्रतियोगिनः पर्वतेऽसत्त्वेऽपि घटाभावाऽभावत्वावच्छिन्नस्य यावदन्तर्गतस्य घटाभावाभावात्मकप्रतियोगिनो द्वितीयक्षणे स्वरूपसम्बन्धेन पर्वते सत्त्वात् तृतीयक्षणीयघटाभावो न घटाभावाभावात्मकप्रतियोगिव्यधिकरणः, तथा च–स्वप्रतियोग्यनधिकरण हेत्वधिकरणमेव न प्रसिद्ध्यतीति सर्वत्र एवं कल्पनाद् असंभवः ॥ **प्रतियोगिव्यधिकरणाऽभावाऽप्रसिद्धिः**=प्रतियोग्यनधिकरणीभूतहेत्वधिकरणाऽप्रसिद्धिरित्यर्थः । **सर्वस्यैवाऽभावस्य**=सद्धेत्वधिकरणे यो योऽभावः प्राप्येत तस्य तस्य अभावस्येत्यर्थः । **पूर्वक्षणेति** । प्रथमक्षणवृत्तित्वविशिष्टो यः **स्वं**–घटाद्यभावः, **तदभावात्मकः**=घटाद्यभावाभावात्मकः–यः प्रतियोगी, **तत्समानाधिकरणत्वात्**=तादृशप्रतियोग्यधिकरणवृत्तित्वादित्यर्थः ॥ एनमसंभवं वारयितुं शंकते–**न च वह्निमानिति** । यद्यपि 'पर्वतो वह्निमान् धूमादि'त्यत्र तृतीयक्षणीयस्य घटाभावादेर्यः पूर्व(प्रथम)क्षणवृत्तित्वविशिष्टस्य **स्वस्य**=घटाभावस्य घटाभावाभावाभावात्मकस्य प्रतियोगी घटाभावाभावः तदधिकरणमेव पर्वतादिर्भवति नतु प्रतियोग्यनधिकरणं पर्वतादिर्भवति, तथापि 'साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्व'स्य लक्षणे प्राक् 'ज्ञानवान् सत्त्वादि'त्यत्रातिव्याप्तिवारणार्थं निवेशात्, अत्र **साध्यतावच्छेदकसंयोगसम्बन्धेन** घटाभावाभावात्मकप्रतियोगिनः अनधिकरणत्वं पर्वते मिलत्येव तथा च घटाभावमादाय लक्षणसमन्वयात्. **कथं**=कस्मात्, **प्रतियोगिव्यधिकरणाऽभावाऽप्रसिद्धिरिति**=प्रतियोग्यनधिकरणीभूत–हेत्वधिकरणाऽप्रसिद्धिनिबन्धन असम्भव उच्यते ? इत्यर्थः ॥ एनामाशंकां समादधानः पुनः प्रतियोगिवैयधिकरण्याऽप्रसिद्धिम् अभावाऽधिकरणकाऽभावमात्रस्य अधिकरणात्मकत्वमिति मतेन उद्भावयति–**घटाभावे य इति** । हेत्वधिकरणे पर्वते वर्तते यो घटाभावः, तत्र घटाभावे 'घटाभावे वह्निर्नास्ती'तिप्रत्ययात् वह्न्यभावो वर्तते, 'अभावाधिकरणकोऽभावोऽधिकरणस्वरूप'इतिनियमाद् वह्न्यभावो न घटाभावाद्भिन्नः किन्तु घटाभाव एव, तथा च **तस्य**=वह्न्यभावस्य, घटाभावात्मकतया घटाभावस्य

**घटाभावात्मकतया घटाभावस्य वह्निरपि प्रतियोगी तदधिकरणं च पर्वतादिरित्येवंक्रमेण प्रतियोगिव्यधिकरणस्याप्रसिद्धत्वात्। यदि च घटाभावादौ वह्न्यभावादिर्भिन्न इत्युच्यते, तदापि धूमाभाववान् वह्न्यभावादित्यादावव्याप्तिः,—तत्र साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धः तेन सम्बन्धेन सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरणस्येति॥ तृतीये तु कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः,—तत्रात्मवृत्तिः कपिसंयोगाभावाभावः कपिसंयोगस्तस्य गुणत्वात् तत्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमपि तदवच्छिन्नानधिकरणत्वं हेत्वधिकरणस्यात्मन इति॥**

**मैवम्, 'यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रति-**

---

घट इव वह्निरपि प्रतियोगी, तदधिकरणं च पर्वतः, **इत्येवंक्रमेण**=इत्येवंरीत्या, प्रतियोगिव्यधिकरणस्य अभावस्य **अप्रसिद्धत्वात्**=प्रतियोग्यनधिकरणहेत्वधिकरणाऽप्रसिद्धत्वाद् असंभवो भवत्येवेति भावः॥ **यदि चेति।** **ननु**—अभावाधिकरणकोऽभावो न अधिकरणात्मकः किन्तु भिन्न एवेति मतेन घटाभावस्य प्रतियोगी न वह्निः किन्तु घट एव, तथाच घटात्मकप्रतियोग्यनधिकरणीभूतपर्वतात्मकहेत्वधिकरणवृत्तिघटाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकवह्नित्वावच्छिन्नवह्निसामानाधिकरण्यस्य धूमे समन्वयात् न असम्भव इत्युच्यते चेत्? तथापि—द्वितीयकल्पस्य अव्याप्तिमाह—**धूमाभाववानिति।** 'ह्रदः—धूमाभाववान्, वह्न्यभावादि'त्यत्र स्वरूपसम्बन्धेन साध्यहेतू, तत्र सद्धेतावव्याप्तिः, **तत्र**=तादृशस्थले, हेत्वधिकरणे जलह्रदे पूर्वोक्तरीत्या तृतीयक्षणीयघटाभावस्य प्रतियोगी यः प्रथमक्षणवृत्तित्वविशिष्टघटाभावाभावः, तस्य साध्यतावच्छेदकस्वरूपसम्बन्धेन अधिकरणमेव हेत्वधिकरणं भवतीति 'स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणाऽभावात् तत्रत्यहेतौ व्याप्तेरव्याप्तिरिति भावः॥ **ननु**—एतदव्याप्तिपरिहाराय 'यः कश्चिद् यः प्रतियोगितावच्छेदको धर्मस्तदवच्छिन्नस्य अनधिकरणत्व'मिति तृतीयः कल्पः स्वीकार्यः, तथा च घटाभावप्रतियोगिनि घटे पूर्वक्षणीयघटाभावाभावे च वर्तमानौ यौ घटत्वं पूर्वक्षणीयघटाभावाभावत्वं च धर्मौ तन्मध्यतो यं कञ्चिद् घटत्वधर्ममादायैव तदवच्छिन्नघटानधिकरणहेत्वधिकरणवृत्तिघटाभावप्रतियोगितानवच्छेदक—धूमाभावत्वावच्छिन्नधूमाभावसामानाधिकरण्यस्य वह्न्यभावे सत्त्वाल्लक्षणसमन्वय इत्यतस्तृतीयकल्पेऽपि अव्याप्तिमाह—**तृतीये त्विति।** यः कश्चित्प्रतियोगितावच्छेदको धर्मस्तदवच्छिन्नप्रतियोग्यनधिकरणत्वकल्पे तु, 'आत्मा,—कपिसंयोगाऽभाववान्,—आत्मत्वादि'त्यत्र स्वरूपसम्बन्धेन साध्यं, समवायेन हेतुः, तत्र व्यतिरेकिसद्धेतौ, अव्याप्तिः, तथाहि—व्यापके आत्मनि द्रव्ये गुणोऽव्याप्यवृत्तिः कपिसंयोगोऽपि कपिसंयोगाऽभावोऽपि च वर्तते, तथा च—तत्र हेत्वधिकरणे आत्मनि वर्तमानः साध्याभावः कपिसंयोगाऽभावाभावः कपिसंयोगात्मकः **तस्य**=कपिसंयोगस्य, संख्यादिसामान्यगुणान्तर्गततया **गुणत्वात्**—सामान्यगुणत्वात्, गुणसामान्याभावः कपिसंयोगाऽभावश्च साध्या( कपिसंयोगाभावा )भावस्य प्रतियोगी, गुणसामान्याभावत्वं कपिसंयोगाऽभावत्वं च प्रतियोगितावच्छेदकम्, तत्र यत्किञ्चित्प्रतियोगितावच्छेदकपदेन गुणसामान्याभावत्वं गृहीत्वा तदवच्छिन्नगुणसामान्याभावानधिकरणमात्मा भवति, आत्मनि सामान्यगुणसंख्यादिसत्त्वेन गुणसामान्याभावस्य असत्त्वात्, इति गुणसामान्याभावात्मकप्रतियोग्यनधिकरणहेत्वधिकरणात्मवृत्तिकपिसंयोगाभावाभावीयप्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं कपिसंयोगाऽभावत्वमिति व्यापकत्वहान्या तत्रात्मत्वहेतावव्याप्तिरित्यर्थः॥

एतत्तृतीयपक्षमाश्रित्य समाधत्ते—**मैवमिति।** **यादृशेति**—यादृशप्रतियोगिताया अवच्छेदकेन

योगितानवच्छेदकत्वस्य विवक्षितत्वात् । ननु कालो घटवान् कालपरिमाणादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः,—हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्वेषामेवाभावानां साध्यतावच्छेदकसम्बन्धेन कालिकविशेषणतया प्रतियोग्यधिकरणत्वात् । अत्र केचित्—महाकालभेदविशिष्टघटाभावस्तत्र प्रतियोगिव्यधिकरणः,—महाकालस्य घटाधारत्वेऽपि महाकालभेदविशिष्टघटानाधारत्वात्, महाकाले महाकालभेदाभावात् ।

---

अवच्छिन्नस्य प्रतियोगिनः अनधिकरणं हेत्वधिकरणं भवति, हेत्वधिकरणवृत्त्यभावीयतादृशप्रतियोगिताया अनवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यमिति विवक्षणादित्यर्थः । 'आत्मा,—कपिसंयोगाभाववान् , आत्मत्वादि'त्यत्र 'यादृशप्रतियोगिता'पदेन गुणसामान्याभावत्वावच्छिन्नगुणसामान्याभावनिष्ठायाः प्रतियोगिताया एव ग्रहणमुचितम् , तादृशप्रतियोगितावच्छेदकं गुणसामान्याभावत्वं, तदवच्छिन्नो गुणसामान्याभावः, तस्य अनधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगिता गुणसामान्याभावनिष्ठा, तादृशप्रतियोगिताया अनवच्छेदकसाध्यतावच्छेदक—कपिसंयोगाभावत्वावच्छिन्नसाध्यसामानाधिकरण्यस्य हेतावात्मत्वे समन्वयात् । पूर्वत्र स्थलेष्वपि 'घटाभावीययोः घटनिष्ठ—पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावनिष्ठयोः प्रतियोगितयोर्मध्ये घट-वह्निनिष्ठप्रतियोगितयोर्मध्ये च घटनिष्ठप्रतियोगितामेव 'यादृशप्रतियोगिता'पदेनोपादाय लक्षणसमन्वयः कार्यः इति॥ लक्षणाकारस्तु—"**साध्यतावच्छेदकसम्बन्धावच्छिन्न—यादृशप्रतियोगितावच्छेदकावच्छिन्नाऽनधिकरण—हेतुतावच्छेदकावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरण—वृत्ति—वैशिष्ट्यव्यासज्यवृत्तिधर्माऽनवच्छिन्नतादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकाऽभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यमि**'ति फलितः ॥ प्रतियोगिताविशिष्ट—प्रतियोगिताऽनवच्छेदक—साध्यतावच्छेदकावच्छिन्नसामानाऽधिकरण्यं व्याप्तिः, वैशिष्ट्यं—च स्वतादात्म्य—स्वावच्छेदकावच्छिन्नाऽनधिकरण—हेत्वधिकरणवृत्त्यभावीयत्वोभयसम्बन्धेन इति अनुगमः ॥ तथापि अव्याप्तिं शंकते—**ननु काल इति** । घटः कालिकसम्बन्धेन साध्यः, कालपरिमाणं समवायेन हेतुः । तत्र प्रतियोगिव्यधिकरणाऽभावस्यैवाऽप्रसिद्धिः, हेत्वधिकरणस्य=कालपरिमाणाधिकरणस्य महाकालस्य कालिकेन जगतां=यावत्पदार्थानामाश्रयतया सर्वेषां समवायेन पटाद्यभावादीनां साध्यतावच्छेदककालिकसम्बन्धेन ये कालवृत्तिपटाद्यात्मकप्रतियोगिपदार्थाः तदधिकरणत्वात् महाकालस्य, प्रतियोग्यनधिकरणहेत्वधिकरणाऽप्रसिद्ध्या तत्रत्यहेतावव्याप्तिरित्यर्थः ॥ अत्र नैयायिकैकदेशिमतेन समाधत्ते—**अत्र केचिदिति** । हेत्वधिकरणं **महाकालः**, स्वरूपसम्बन्धेन महाकालभेदो यत्र भूतले वर्तते तत्रैव घटोपि संयोगेन वर्तते इति महाकालभेदविशिष्टो घटः सामानाधिकरण्यसम्बन्धेन जातः, महाकालभेदविशिष्टो घटो महाकाले न वर्तते, महाकाले महाकालभेदात्मकविशेषणाऽभावात् तद्विशिष्टघटात्मकविशेष्यस्याऽप्यभावात् महाकालभेदविशिष्टघटाभावः प्रतियोगिव्यधिकरणः, तत्प्रतियोगितावच्छेदकं महाकालभेदविशिष्टघटत्वं तदनवच्छेदकं शुद्धघटत्वं तदवच्छिन्नसाध्यसामानाधिकरण्यं कालपरिमाणे इति समन्वयः ॥

**ननु**—महाकालमात्रवृत्ति( महाकालानुयोगिकघटप्रतियोगिक )कालिकसम्बन्धेन ( विशेषसम्बन्धेन ) घटस्य साध्यताविवक्षा यदि, तदा साध्यतावच्छेदकमहाकालमात्रवृत्तिकालिकसम्बन्धेन महाकालभेदविशिष्टघटात्मकप्रतियोगिनोऽधिकरणस्यैवाऽप्रसिद्ध्या तदभावोऽप्रसिद्ध इति व्यापकत्वहान्या

**वस्तुतस्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं बोध्यम् । व्यापकसामानाधिकरण्यं च व्याप्तिः । ( यत्सम्बन्धः साध्यतावच्छेदकसम्बन्धः यद्धर्मः साध्यतावच्छेदकधर्मः । तत्र यदि यद्धर्मावच्छिन्नत्वाभावमात्रमित्युच्यते, तदा समवायेन यो वह्न्यभावस्तस्य प्रतियोगितावच्छेदकसम्बन्धः समवायस्तेन प्रतियोग्यनधिकरणपर्वतादिवृत्तिः स एव, तत्प्रतियोगितावच्छेदकं वह्नित्वमित्यव्याप्तिः स्यात् । यदि च यत्सम्बन्धावच्छिन्नत्वाभावमात्रमित्युच्यते, तदा तादृशस्य संयोगेन घटाभावस्य प्रतियोगितायां संयोगसम्बन्धावच्छिन्नत्वसत्त्वादव्याप्तिः स्यादत उभयमुपात्तम् )॥**

---

तत्र कया रीत्या लक्षणसंगतिरित्याकांक्षायां व्यापकत्वमाह–वस्तुतस्त्विति । हेत्वधिकरणे महाकाले संयोगेन घटाद्यभावमादाय **प्रतियोगितावच्छेदकसंयोगसम्बन्धेन** घटाद्यात्मकप्रतियोग्यनधिकरणीभूतं यद् हेत्वधिकरणं महाकालस्तद्वृत्तिघटाद्यभावीयप्रतियोगितात्वावच्छिन्नप्रतियोगितायां घटनिष्ठायां यत्साध्यतावच्छेदककालिकसम्बन्धावच्छिन्नत्वं नास्ति अतः, यद्घटत्वात्मकसाध्यतावच्छेदकधर्मावच्छेद्यत्वसत्त्वेऽपि 'एकसत्त्वेऽपि द्वयं नास्तीति'रीत्या उभयाऽभावसत्त्वात् , **तेन**=कालिकसम्बन्धेन घटत्वात्मकतद्धर्मावच्छिन्नो घटः तद्धेतु( तत्स्थलीयकालपरिमाणात्मकहेतु )व्यापको भवतीति ॥ व्यापकत्वं निरुच्य व्याप्तिमाह–**व्यापकेति** । तादृशव्यापकाधिकरणनिरूपितवृत्तित्वमित्यर्थः । अधिकरणतावृत्तिताघटकसम्बन्धस्तु व्यापकताघटको ग्राह्यः, तादृशव्यापकघटसामानाधिकरण्यं कालपरिमाणे इति रीत्या समन्वयः कार्यः ॥ 'यत्सम्बन्ध'पदस्यार्थमाह–**साध्यतावच्छेदकसम्बन्ध** इति । 'यद्धर्म'पदस्यार्थमाह–साध्यतावच्छेदकधर्म इति ॥ 'यत्सम्बन्धावच्छिन्नत्वो'पादानस्य फलमाह–**तत्र यदि यद्धर्मावच्छिन्नत्वाभावमात्रमुच्यते इति** । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्वाभावस्तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं,तादृशव्यापकनिरूपितं तद्धेतुनिष्ठं सामानाधिकरण्यं व्याप्तिरित्युच्यते, तदा 'पर्वतो' वह्निमान् धूमादि'त्यत्र **समवायेन** पर्वते वह्न्यभावमादाय तत्प्रतियोगितावच्छेदकसमवायसम्बन्धेन वह्न्यात्मकप्रतियोगिनोऽनधिकरणे पर्वतादौ वर्तमानस्य समवायेन वह्न्यभावस्य वह्निनिष्ठप्रतियोगितासामान्ये वह्नित्वावच्छिन्नत्वाऽभावस्याऽसत्त्वाद् व्यापकत्वहान्या लक्षणाऽव्याप्तिः स्यात् । 'यत्सम्बन्धावच्छिन्नत्वो'पादाने तु–साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वस्य तादृशप्रतियोगितायामसत्त्वेन एकसत्त्वेऽपि द्वयं नास्तीतिरीत्या उभयाभावसत्त्वात् संयोगसम्बन्धेन वह्नित्वावच्छिन्नो धूमव्यापकः, तेन व्यापकेन वह्निना सह सामानाधिकरण्यं धूमस्येति लक्षणसंगतिः ॥ 'यद्धर्मावच्छिन्नत्वो'पादानस्य फलमाह–**यदि च यत्सम्बन्धावच्छिन्नत्वाभावमात्रमुच्यते तदेति** । 'प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वाऽभावस्तत्सम्बन्धावच्छिन्नस्य तद्धेतुव्यापकत्वं, तादृशव्यापकनिरूपितं तद्धेतुनिष्ठं सामानाधिकरण्यं व्याप्ति'रित्युक्तौ, 'पर्वतो,–वह्निमान् , धूमादि'त्यत्र हेत्वधिकरणे पर्वते संयोगेन यो घटाभावः तादृशघटाभावीयप्रतियोगितासामान्ये साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वसत्त्वेन तदभावाऽसत्त्वेन साध्यस्य व्यापकत्वहान्या तत्रत्यहेतौ लक्षणाऽव्याप्तिः, 'यद्धर्मावच्छिन्नत्वो'पादाने तु साध्यतावच्छेदकवह्नित्वावच्छिन्नत्वस्य घटनिष्ठप्रतियोगितायामसत्त्वेन उभयाभावसत्त्वात् संयोगेन वह्नित्वावच्छिन्नो धूमव्यापकः, तत्सामाना-

इत्थं च कालो घटवान् कालपरिमाणादित्यादौ संयोगसम्बन्धेन घटाभावप्रतियोगिनोऽपि घटस्यानधिकरणे हेत्वधिकरणे महाकाले वर्तमानः स एव संयोगेन घटाभावः, तस्य प्रतियोगितायां कालिकसम्बन्धावच्छिन्नत्वघटत्वावच्छिन्नत्वोभयाभावसत्त्वान्नाव्याप्तिः। 'धूमवान् वह्ने'रित्यादावतिव्याप्तिवारणाय-'सामान्य'पदमुपात्तम्। ननु प्रमेयवह्निमान् धूमादित्यादौ प्रमेयवह्नित्वावच्छिन्नत्वमप्रसिद्धं गुरुधर्मस्यानवच्छेदकत्वादिति चेन्न, कम्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वावच्छिन्न-

---

धिकरणत्वं धूमे इति समन्वयः॥ 'कालो,-घटवान्,-कालपरिमाणा'दित्यत्र स्वयं लक्षणसमन्वयं दर्शयति-इत्थं चेति। संयोगेन घटाभावमादाय तत्प्रतियोगितासामान्ये साध्यतावच्छेदककालिकसम्बन्धावच्छिन्नत्वस्य असत्त्वाद् घटत्वावच्छिन्नत्वसत्त्वेऽपि उभयाभावसत्त्वेन कालिकेन घटस्य व्यापकत्वलाभेन व्याप्तेस्तत्रत्यहेतौ समन्वयः, अतो न अव्याप्तिरित्यर्थः॥ 'प्रतियोगितासामान्ये'-इत्यत्र 'सामान्य'पदप्रयोजनमाह—धूमवानिति। 'सामान्य'पदानुपादाने 'पर्वतो धूमवान् वह्ने'रित्यसद्धेतावतिव्याप्तिः स्यात्, हेत्वधिकरणपर्वततप्तायोगोलकादौ धूमाभावं समवायेन घटाद्यभावं चादाय तत्प्रतियोगितामध्यतो यत्किञ्चिद्धटनिष्ठप्रतियोगितामादाय तादृशप्रतियोगितायां संयोगावच्छिन्नत्वधूमत्वावच्छिन्नत्वोभयाऽभावसत्त्वाद् धूमे व्यापकत्वसमन्वयेन वह्नावतिव्याप्तिः। 'सामान्य'पदोपादाने तु तादृशप्रतियोगितात्वावच्छिन्ना यावत्यः प्रतियोगिता ग्राह्याः, तत्र धूमनिष्ठप्रतियोगितायां तादृशोभयसत्त्वेन तादृशोभयाभावाऽसत्त्वाद् व्यापकत्वहान्या नातिव्याप्तिरिति॥ तादृशप्रतियोगितात्वव्यापकस्तादृशोभयाभाव'इत्यत्र तात्पर्यम्॥

पूर्वोक्तानां सर्वेषां लक्षणानामव्याप्तिं शंकते-ननु प्रमेयवह्निमानिति। प्रमेयवह्नित्वं वह्नित्वाऽपेक्षया गुरुधर्मः, 'लघौ धर्मे अवच्छेदके सम्भवति सति गुरौ धर्मे अवच्छेदकत्वाऽनङ्गीकारात्' गुरुधर्मस्य अनवच्छेदकत्वात् 'पर्वतः,-प्रमेयवह्निमान्,-धूमादि'त्यत्र प्रमेयवह्नित्वावच्छिन्नत्वस्याऽप्रसिद्धतया संयोगेन घटाभावीयप्रतियोगितायां प्रमेयवह्नित्वावच्छिन्नत्वाऽभावस्याऽप्यप्रसिद्धत्वाद् उभयाभावाऽप्रसिद्ध्या व्यापकत्वहान्या तत्रत्यहेतावव्याप्तिरित्यर्थः॥ समाधत्ते-कम्बुग्रीवादिमान्नास्तीति। कम्बुग्रीवा-कपालद्वयसंयोगः 'भूतले कम्बुग्रीवादिमान्नास्ती'ति प्रतीतौ यदि कम्बुग्रीवादिमत्प्रतियोगिताकाऽभावो विषयः स्यात्, तदा यत्किञ्चिद्धटवत्यपि भूतलादौ कम्बुग्रीवादिमान्नास्तीति प्रतीतेः प्रमात्वं स्यात्, अतः तादृशप्रतीतेर्विषयः'कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावो वक्तव्यः, एवं च गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमङ्गीकर्तव्यं तथा च प्रमेयवह्निर्नास्तीत्यभावीयप्रतियोगितायां प्रमेयवह्नित्वावच्छिन्नत्वं प्रसिद्धमेव, अतो घटनिष्ठप्रतियोगितायां प्रमेयवह्नित्वावच्छिन्नत्वाऽभावोऽपि प्रसिद्धस्तथा च लक्षणसमन्वयः। प्राचीनैः गुरुधर्मे स्वरूपसम्बन्धात्मकाऽवच्छेदकताया अनङ्गीकारेऽपि विषयताविशेषात्मिकाया साध्यतावच्छेदकतायाः स्वीकारादितिभावः॥ अत्र-'गन्धवद्धटो नास्ति, पृथिवीघटो नास्ति, द्रव्यघटो नास्ति, प्रमेयघटो नास्ती'त्यादिप्रतीत्या कम्बुग्रीवादिमत्त्वस्येव गन्धवद्धटत्वादीनामप्यवच्छेदकत्वसिद्ध्या अप्रामाणिकाऽनन्ताऽभावकल्पनापत्तिभिया 'अभावे यद्धर्मविशिष्टवैशिष्ट्यमवगाहते तत्र तद्धर्मसमनियतधर्मावच्छिन्नप्रतियोगिताकत्वमि'तिनियमोऽङ्गीकार्यः, तथा च 'कम्बुग्रीवादिमान्नास्ती'त्यादिप्रतीतेः कम्बुग्रीवादिमत्त्वसमनियतघटत्वावच्छिन्नप्रतियोगिताकाऽभावे एव कम्बुग्रीवादिमत्त्वविशिष्टवैशिष्ट्यावगाहित्वं स्वीक्रियते, न तु तद्धटत्वावच्छिन्नप्रतियोगिताकाऽभावे, तद्धटत्वस्य कम्बुग्रीवादिमत्त्वसमनियतत्वाऽभावात्, तथा च 'लघुसमनियते घटत्वे अवच्छेदके संभवति गुरौ अवच्छेदकत्वाऽभावात्, गुरुधर्मस्य प्रतियोगितावच्छेदकत्वे

**प्रतियोगताविषयीकरणेन गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारादिति संक्षेपः ॥ ६९ ॥**

**सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।**
**स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥ ७० ॥**

---

प्रमाणं मृग्यमेवेत्यस्वरसाऽभिप्रायेण—**संक्षेप**—इत्युक्तम् ॥ तथा च उक्तस्थलेऽव्याप्तिर्दुर्वारेत्याशयः ॥ **किन्तु**—गुरुधर्मस्य स्वरूपसम्बन्धरूपावच्छेदकत्वविरहेऽपि 'हेतुसमानाधिकरणाऽभावप्रतियोगितावच्छेदकं यद् घटत्वं तदनतिरिक्तवृत्तित्वात्मकपारिभाषिकावच्छेदकत्वस्य कम्बुग्रीवादिमत्त्वे सत्त्वेन तद्रीत्या प्रमेयवह्नित्वस्यापि पारिभाषिकावच्छेदकत्वसिद्धया तदवच्छिन्नत्वघटितोभयाभावस्यापि सत्त्वेन 'प्रमेयवह्निमान्—धूमादि'त्यादावव्याप्त्यप्रसक्तिरिति **ध्येयम्** ॥

**अत्रेदं बोध्यम्**—अत्र व्याप्तौ व्यापकत्वं द्विविधं,—अत्यन्ताभावघटितं भेदघटितं च, तत्र आद्यं—स्वाधिकरणवृत्त्यत्यन्ताभावाऽप्रतियोगित्वम्, स्वाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकत्वरूपं तु द्वितीयम् । तत्राद्यमेव परिष्कृत्य 'हेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्य'मिति व्याप्तिरुक्ता, तत्र प्रतियोगिताऽनवच्छेदकमित्यस्य—प्रतियोगितावच्छेदकभिन्नमित्यर्थः, तत्राऽवच्छेदकता द्विविधा—स्वरूपसम्बन्धरूपा, अनतिरिक्तवृत्तित्वरूपा च, **तत्राद्या** क्वचित्प्रतियोग्यंशे प्रकारीभूतधर्मे,—यथा घटाभावीयप्रतियोगितावच्छेदकता घटत्वे, क्वचिच्च अप्रकारीभूतधर्मे,—यथा कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकता घटत्वे, 'सम्भवति लघौ धर्मे गुरौ तदभावादि'तिनियमात् । नियमो व्याप्तिः—सा च 'यो यदभावप्रतियोगितावच्छेदकत्वनिष्ठ—स्वनिष्ठापादकताकापत्तीयविशेष्यत्वसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदविशिष्टाभावकूटवान् स तदभावीयप्रतियोगितानिरूपितस्वरूपाऽवच्छेदकतावानित्याकारिका बोध्या ॥ स्वरूपसम्बन्धात्मकाऽवच्छेदकत्वाङ्गीकर्तृभिः ज्ञानभेदेन विषयताभेदमवलम्ब्य 'वह्न्यभाववान् ह्रद'—इतिनिश्चयीयप्रतिबन्धकतावच्छेदकता वह्न्यभावाद्येकदेशविषयतायामपि स्वीक्रियते ॥ **अनतिरिक्तवृत्तित्वं** च—प्रतियोगित्वाऽभाववदवृत्तित्वम्, प्रतियोगित्वाऽभावः—प्रतियोगितानिष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकः, प्रतियोगितात्वावच्छिन्नप्रतियोगिताको वा । अन्यूनाऽनतिरिक्तवृत्तित्वमपि तत्,—प्रतियोगिताव्यापकत्वे सति प्रतियोगिताव्याप्यत्वम्—इति तदर्थः । एवं प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वमपि तत् । प्रतियोगितावच्छेदकावच्छिन्नाऽभाववन्निरूपितवृत्तिताऽनवच्छेदकत्वं पारिभाषिकावच्छेदकत्वम्, प्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाऽभावप्रतियोगितानवच्छेदकमिति यावत् । परन्तु कम्बुग्रीवादिमान्नास्तीति प्रतीतिबलात् कम्बुग्रीवादिमत्त्वात्मकगुरुधर्मस्य प्रतियोगितावच्छेदकतया 'सम्भवति लघौ धर्मे गुरौ तदभावादि'त्यस्याऽप्रयोजकतया स्वरूपसम्बन्धरूपाऽवच्छेदकतापक्ष एव श्रेयान् ॥ इति ॥ ६९ ॥

पक्षतालक्षणमाह—मूले—**सिषाधयिषयेति** । सिषाधयिषा=साधयितुमिच्छा 'पर्वते वह्न्यनुमितिर्जायतामि'त्याकारिका, तया शून्या=तदभावविशिष्टा सिद्धिः='पर्वतो वह्निमानि'तिनिश्चयः, यत्र न विद्यते सः पक्षः, तत्र=पक्षे हेतोः वृत्तित्वज्ञानात्=परामर्शात्मकात् अनुमितिर्जायत इत्यर्थः । 'पर्वतो वह्निमानि'तिसिद्धिसत्त्वे अनुमितिर्निष्प्रयोजना सती नोत्पद्यते, अतः 'पर्वतो वह्निमानि'त्यनुमितौ 'पर्वतो वह्निमानि'तिप्रत्यक्षादिसिद्धिरूपसाध्यनिश्चयः प्रतिबन्धकः 'सिद्ध्यभावः करणम्, कारणीभूताऽभावप्रतियोगित्वं प्रतिबन्धकत्वम् । परन्तु सिद्धिसत्त्वे 'पर्वते वह्न्यनुमितिर्जायता'मितीच्छायां सत्याम् अनुमितिर्भवति, इति सिषाधयिषा उत्तेजिका, सा च स्वविषयानुमितिविशेष्यता

पक्षवृत्तित्वमित्यत्र पक्षत्वं किं ? तदाह–सिषाधयिषयेति । सिषाधयिषाविरहवि-शिष्टसिद्ध्यभावः पक्षता, तद्वान्पक्ष इत्यर्थः । सिषाधयिषामात्रं न पक्षता, विनापि

सम्बन्धेन पर्वते वर्तते, । उत्तेजकत्वं–प्रतिबन्धकसमानकालीनकार्यजनकत्वं, प्रतिबन्धकतावच्छेदकी-भूताऽभावप्रतियोगित्वमिति यावत्, सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता । सा च स्वप्रतियो-गिविशेष्यतासम्बन्धेन पर्वते वर्तते । प्रतिबन्धिका सिद्धिः, तदवच्छेदकोऽभावः सिषाधयिषाविरहः, तत्प्रतियोगित्वं सिषाधयिषायामिति । तथा च–'पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्न-विधेयताकाऽनुमितित्वावच्छिन्नं प्रति 'पर्वते वह्न्यनुमितिर्जायतामि'तीच्छाविरहविशिष्टपर्वतत्वावच्छि-न्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नाऽभावत्वावच्छिन्नस्य कारणत्व-मि'ति–अनुमिति–पक्षतयोः कार्यकारणभावः इति–**नवीनाः** ॥ व्याप्तिनिरूपणाऽनन्तरं पक्षतानिरूपणे अनुमितिलक्षणैककार्यकारित्वम्=एककार्यप्रयोजकत्वं संगतिः, प्रयोजकत्वञ्च–कारणकारणतावच्छेदक-साधारणं, तेनानुमितौ पक्षतायाः कारणत्वेऽपि व्याप्तेर्विषयविधया कारणतावच्छेदकत्वेऽपि च न क्षतिः । परामर्शानन्तरं च पक्षतानिरूपणे तदुपपादकत्वात्मिका उपोद्घातसंगतिरिति । तामुपोद्घातसंगतिं दर्शयितुमाह-**पक्षवृत्तित्वमिति** । पक्षवृत्तित्वं=पक्षधर्मता,–'व्याप्तिविशिष्टपक्षधर्मता'ज्ञानात्मकपरा-मर्शघटकीभूतपक्षधर्मताघटकपक्षता का इत्यर्थः । तथा च पक्षताया अनिरूपणे तदाश्रयवृत्तित्वरूपपक्ष-धर्मतानिरूपणं न संभवतीत्यतः पक्षतां निरूपयतीतिभावः ॥ **वस्तुतस्तु**–पक्षतायाः स्वातन्त्र्येणाऽ-नुमितौ हेतुत्वाद् अनुमितिलक्षणैककार्यकारित्वसंगत्या पक्षतानिरूपणमिति बोध्यम् । मूलोक्तं पक्ष-तालक्षणं स्पष्टयति–**सिषाधयिषेति** । 'पर्वते वह्न्यनुमितिर्जायतामि'तीच्छा **सिषाधयिषा**–अनु-मित्सा, तस्य **विरहो**ऽभावः, स च स्वप्रतियोग्यनुमित्साविषयानुमितिविशेष्यतासम्बन्धेन पर्वते वर्तते, सामानाधिकरण्यसम्बन्धेन सिषाधयिषाविरहविशिष्टा, **सिद्धिः**='पर्वतो वह्निमानि'तिप्रत्यक्षात्मक-साध्यनिश्चयः, स्वविशेष्यतासम्बन्धेन पर्वते वर्तते, **तादृशसिद्ध्यभावः**–स्वप्रतियोगिविशेष्यता-सम्बन्धेन पर्वते वर्तते, इति स एव पक्षता, तद्वान्=तादृशपक्षताश्रयः पर्वतः पक्ष इत्यर्थः ॥ यत्र सिद्धिः सिषाधयिषा च, तत्र विशेषणाऽभावप्रयुक्तस्य विशिष्टाभावस्य सत्त्वाद् अनुमितिर्भवति । यत्र केवलं सिषाधयिषा, तत्र उभयाऽभावप्रयुक्तस्य विशिष्टाऽभावस्य सत्त्वादनुमितिर्भवति यत्र केवलं परामर्शः, तत्र विशेष्याभावप्रयुक्तस्य विशिष्टाऽभावस्य सत्त्वादनुमितिर्भवतीति । विशेषणं–सिषाधयिषाविरहः । विशेष्यं–सिद्धिरिति **बोध्यम्** ॥ **प्राचीनाः** सिषाधयिषामात्रं पक्षता, यतो मुमुक्षोः श्रुतिशब्दाद् आत्मनि इतरभेदनिश्चयेऽपि मननात्मकानुमितीच्छया 'इतरभेदवत्तया आ-त्मनो मननं जायतामि'त्याकारिकया 'आत्मा इतरभिन्न'इति पुनः पुनरनुमितिर्जायते, तस्मात्, सिषाधयिषा एव पक्षता, अत एव 'प्रत्यक्षपरिकलितमप्यर्थम् अनुमानेन बुभुत्सन्ते तर्करसिकाः' इत्युक्तिरपि संगच्छते–इति वदन्ति, तन्मतं दूषयति–**सिषाधयिषामात्रमिति** । अनुमित्सामात्रं न पक्षतेत्यर्थः । तत्र व्यतिरेकव्यभिचारं हेतुमाह–**विनापीति** । 'गगनं मेघवत्,–घनगर्जनाद्'–इत्यत्र 'गगने मेघानुमितिर्जायतामि'तीच्छाविरहेऽपि **घनगर्जनेन** हेतुना द्रागेव गृहाभ्यन्तरस्थितस्य'गगनं मेघवदि'त्यनुमानात्=अनुमितेर्दर्शनात् तत्र तव कारणाऽभावेऽपि कार्यसत्तात्मकव्यतिरेकव्यभिचारात् । नच–अनुमितिर्जनिकेच्छैव पक्षता, सा च क्वचित्स्वनिष्ठा, सर्वत्रेश्वरनिष्ठैव, तस्यास्तदानीं सत्त्वात् नोक्तव्यभिचार इति **वाच्यम्** । तस्या नित्यत्वेन सर्वदा पक्षताप्रसंगात् सिद्धिकालेऽप्यनुमित्यापत्तेः॥ **अन्ये प्राचीनाः**–साध्यसंशयः पक्षता । साध्यनिश्चयसत्त्वे बाध( साध्याभाव )निश्चयसत्त्वे वा अनुमितेरनुत्पादात्, साध्यनिश्चयस्य बाधनिश्चयस्य वा संशयप्रतिबन्धकत्वात् संशयाऽभावे अनुमित्य-

**सिषाधयिषां घनगर्जितेन मेघानुमानात् ॥ अत एव साध्यसन्देहोऽपि न पक्षता, विनापि सन्देहं तदनुमानात् । सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येव, अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणम् । तथाच यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता, यत्र च सिषाधयिषास्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता, यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता,**

---

भावात् संशयसत्त्वे चानुमितेः सत्त्वात्, तत्र साध्यसंशयः–वह्निः पर्वते न वा, पर्वतो वह्निमान्न वा, वह्निः पर्वतनिष्ठाभावप्रतियोगी न वे'त्यादिसंशयसाधारणः 'पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबध्यः संशयः' पक्षता, प्राचीनैः समानविषयकत्वेन प्रतिबन्धकतास्वीकारात् तथा च 'साध्यवत्तानिश्चयप्रतिबध्यत्वे सति स्वनिष्ठविषयितावटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वं पक्षतासामान्यलक्षणमिति वदन्ति । तन्मतं दूषयति–**अत एवेति** । व्यतिरेकव्यभिचारात्मकवक्ष्यमाणदूषणसत्त्वादित्यर्थः । **साध्यसन्देहोऽपि**=पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबध्यः संशयः 'पर्वतो वह्निमान्नवे' 'त्यादिरूपोऽपि न पक्षतेत्यर्थः ॥ अत्र व्यतिरेकव्यभिचारं हेतुमाह–**विनापि साध्यसन्देहमिति** । 'गगनं,–मेघवत्,–घनगर्जनादि'त्यत्र 'गगनं मेघवन्नवे'त्यादिसंशयाऽभावेऽपि गृहाभ्यन्तरस्थितस्य घनगर्जनेन लिंगेनानुमित्युत्पत्तेः कारणाऽभावेऽपि कार्यसत्त्वात्मकव्यतिरेकव्यभिचारादित्यर्थः । अतो न साध्यसंशयः पक्षतेति भावः ॥ सिषाधयिषाविरहात्मकविशेषणस्य प्रयोजनमाह–**सिद्धौ सत्यापीति** । इन्द्रियजन्यं 'पर्वतो वह्निमानि'ति प्रत्यक्षं ज्ञानं सिद्धिः, तस्याः पर्वते विशेष्यताख्यविषयतासम्बन्धेन सत्त्वेऽपि, तदनन्तरं 'पर्वते वह्न्यनुमितिर्मे जायतामि'तीच्छात्मकसिषाधयिषा यत्र जाता, तत्र "सिद्ध्यभाव एव यदि पक्षता, सिद्धिश्च प्रतिबन्धिका" तदा प्रत्यक्षात्मकसिद्धेः सत्त्वादनुमितिर्न स्यात्, किन्तु भवत्येव, तथाच कारणाऽभावेऽपि कार्यसत्त्वात्मकव्यतिरेकव्यभिचारापत्तिः, तद्वारणाय सिद्धौ **सिषाधयिषाविरहविशिष्टत्वं** विशेषणं देयम्, तथा च सिषाधयिषाविरहविशिष्टसिद्धिः अनुमितिप्रतिबन्धिका, अत्र च पर्वते सिषाधयिषासत्त्वात् तदभावो देशान्तरे पर्वतादौ, तत्र च या 'पर्वतो वह्निमानि'ति काचित् सिद्धिः सैव देशान्तरीया सिषाधयिषाविरहविशिष्टा भवति, सा अत्र पर्वते नास्ति किन्तु तदभावस्य सत्त्वात् पक्षतासत्त्वेन अनुमित्युत्पत्तौ व्यतिरेकव्यभिचाराऽभावादित्यर्थः ॥ तादृशपक्षता क्वचित् विशेषणाऽभावप्रयुक्ता, क्वचिद्विशेष्याऽभावप्रयुक्ता, क्वचिदुभयाभावप्रयुक्तेति दर्शयति–**तथा च यत्रेति** । यत्र पर्वते 'पर्वतो वह्निमानि'तिसिद्धिर्नास्ति, तत्र 'पर्वते वह्न्यनुमितिर्जायतामि'तिसिषाधयिषायां **सत्याम्,** सिषाधयिषाविरहस्य विशेषणस्य सिद्ध्यात्मकविशेष्यस्य चाऽसत्त्वाद् उभयाभावप्रयुक्ता पक्षता, सिषाधयिषाविरहविशिष्टदेशान्तरीयसिद्ध्यभावस्य सत्त्वात् । एवम्–**असत्यामपि**=सिषाधयिषा तत्र पर्वते यदि नास्ति तर्हि सिषाधयिषाविरहात्मकविशेषणस्य सत्त्वेऽपि सिद्ध्यात्मकविशेष्याऽभावात् पक्षता, तत्र देशान्तरीयसिषाधयिषाविरहविशिष्टदेशान्तरीयसिद्ध्यभावस्य सत्त्वात् ॥ **यत्र च सिषाधयिषाऽस्तीति** । यत्र पर्वते 'पर्वते वह्न्यनुमितिर्जायता'मितिसिषाधयिषा जायते, तत्र **सिद्धौ सत्यां**='पर्वतो वह्निमानि'तिप्रत्यक्षसिद्धिसत्त्वे, सिषाधयिषाविरहात्मकविशेषणाऽभावप्रयुक्ता–पक्षता, तत्र सिषाधयिषाविरहविशिष्टदेशान्तरीयसिद्ध्यभावस्य सत्त्वात् । एवम् **असत्यामपि**='पर्वतो वह्निमानितिसिद्धौ असत्याम् सिषाधयिषाविरहोऽपि नास्ति सिद्धिरपि नास्तीति विशेषणविशेष्योभयाभावप्रयुक्ता पक्षता । **यत्र सिद्धिरस्तीति** । यत्र पर्वते 'पर्वतो वह्निमानि'तिसिद्धिर्वर्तते, तत्र सिषाधयिषा 'पर्वते वह्न्यनुमितिर्जायतामि'ति यदि नास्ति तदा देशान्तरीयकालान्तरीयसिषाधयिषाविरहविशिष्ट

**सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वात् ॥ ननु यत्र परामर्शानन्तरं सिद्धिस्ततः सिषाधयिषा तत्र सिषाधयिषाकाले परामर्शनाशान्नानुमितिः, यत्र सिद्धिपरामर्श-सिषाधयिषाः क्रमेण भवन्ति तत्र सिषाधयिषाकाले सिद्धेर्नाशात्प्रतिबन्धकाभावादेवा-नुमितिः, यत्र सिषाधयिषासिद्धिपरामर्शाः सन्ति तत्र परामर्शकाले सिषाधयिषैव नास्ति, एवमन्यत्रापि, सिद्धिकाले परामर्शकाले वा न सिषाधयिषा योग्यविभुवि-शेषगुणानां यौगपद्यनिषेधात्, तत्कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषण-मिति चेद्, न, यत्र 'वह्निव्याप्यधूमवान् पर्वतो वह्निमानि'ति प्रत्यक्षं स्मरणं वा ततः**

---

सिद्धिः प्रतिबन्धिका वर्तते तत्र न पक्षता, तत्र विशेषणस्य विशेष्यस्य चोभयस्य सत्त्वात् ॥ सिषा-धयिषाविरहवैशिष्ट्यं च सिद्धौ एककालावच्छेदेन एकशरीरावच्छेदेनैकात्मवृत्तित्वम्, तेन सिषाधयि-षाकालीनसिद्धेः कालिकसम्बन्धेन सिषाधयिषाविरहविशिष्टत्वेन, घटावच्छेदेनैकस्मिन्नात्मनि सिषा-धयिषाविरहविशिष्टत्वेन, वा नानुमितिहानिः, एककालंनैकशरीरावच्छेदेन एकात्मवृत्तित्वस्याऽभावा-दिति ॥ परामर्शात्मककारणसत्त्वे सिद्ध्यात्मकप्रतिबन्धकसत्त्वे यदि सिषाधयिषा स्यात्, तदैव सिषाधयिषाया उत्तेजकत्वं भवेत्, नत्वेवं भवति, नह्यात्मनो विशेषगुणा इच्छाज्ञानाद्या युग-पद्भवन्ति, अतः 'सिषाधयिषाविरहे'तिविशेषणं व्यर्थमेवेत्याशंकते–ननु **यत्र परामर्शानन्तरमिति** यत्र=प्रथमक्षणे, 'वह्निव्याप्यधूमवानयं पर्वत'इतिपरामर्शः, द्वितीयक्षणे **सिद्धिः**='पर्वतो वह्निमानि'ति-प्रत्यक्षसिद्धिः, तृतीयक्षणे 'पर्वते वह्न्यनुमितिर्मे जायतामि'ति सिषाधयिषा उत्पन्ना, तत्र=तादृशस्थले, सिषाधयिषाकाले=तृतीयक्षणे, परामर्शनाशात्=ज्ञानस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगतया परामर्शस्य नष्टत्वात्, परामर्शात्मककारणाऽभावादेव न चतुर्थक्षणेऽनुमितिरुत्पद्यते, तत्र सिद्धिरपि प्रतिबन्धक-तया विद्यते, तत्र सिषाधयिषाविरहवैशिष्ट्योपादानं निरर्थकमेवेति भावः॥ **यत्र सिद्धिपरामर्शेति।** यत्र स्थले, प्रथमक्षणे-पर्वतो वह्निमानिति प्रत्यक्षात्मकसिद्धिः, द्वितीयक्षणे–'वह्निव्याप्यधूमवानयं पर्वत'इति परामर्शः, तृतीयक्षणे 'पर्वते वह्न्यनुमितिर्मे जायतामि'तिसिषाधयिषा, इति क्रमश उत्पद्यन्ते तादृशस्थले सिषाधयिषाकाले=तृतीयक्षणे, प्रथमक्षणीयसिद्धेर्नाशात्, प्रतिबन्धिकायाः सिद्धेरेवाऽभा-वात् सिद्ध्यभावात्मककारणवशादेवानुमितिः 'पर्वतो वह्निमानि'तिभवत्येव, तथा च तत्रापि सिषाध-यिषाविरहविशिष्टत्वनिवेशनं व्यर्थमिति भावः॥ **यत्र सिषाधयिषासिद्धीति।** यादृशस्थले प्रथमक्षणे 'पर्वते वह्न्यनुमितिर्मे जायतामि'तिसिषाधयिषा, द्वितीयक्षणे 'पर्वतो वह्निमानि'तिप्रत्यक्षात्मकसिद्धिः, तृतीयक्षणे 'वह्निव्याप्यधूमवानयं पर्वत'इतिपरामर्शः, तादृशस्थले परामर्शकाले=तृतीयक्षणे सिषाध-यिषा एव नष्टा, तत्रापि उत्तेजकाऽभावात् प्रतिबन्धकसिद्धिसद्भावादेव नाऽनुमितिः, तत्रापि सिषाध-यिषाविरहवैशिष्ट्यं व्यर्थमिति भावः॥ **एवमन्यत्राऽपीति।** यत्र क्रमेण सिषाधयिषापरामर्शसिद्धयः तत्रोत्तेजकाऽभावात्प्रतिबन्धकाऽभावान्नानुमितिः। यत्र वा सिद्धिसिषाधयिषापरामर्शाः तत्र प्रतिबन्ध-काभावादेवानुमितिः। यत्र वा परामर्शसिषाधयिषासिद्धयः, तत्र परामर्शनाशादेव नानुमिति'रित्यर्थः **सिद्धिकाले इति।** इत्येवमुक्तोदाहरणेषु यथायोगं सिद्धिकालात्मकतृतीयक्षणे परामर्शकालात्मकतृती-यक्षणे वा प्रथमक्षणीया सिषाधयिषा नश्यत्येव, कुतः! योग्यविभुविशेषगुणानां यौगपद्यनिषेधात्= योग्याः प्रत्यक्षविषया ये विभूनां व्यापकात्माकाशानां विशेषगुणा ज्ञानेच्छाशब्दादयस्तेषां, यौगप-द्यस्य=एककालावच्छेदेन उत्पत्तेः निषेधात् असंभवात्, क्षणिकत्वाच्च प्रथमक्षणीयज्ञानादेस्तृतीयक्षणेऽ-सत्त्वात्। **तत्कथमिति।** तथा च सिषाधयिषाविरहवैशिष्ट्यं सिद्धेर्विशेषणं व्यर्थमिति भावः॥ समाधत्ते–**यत्र वह्निव्याप्यधूमवानिति।** यत्र प्रथमक्षणे 'वह्निव्याप्यधूमवान् पर्वतो वह्निमानि'-

**सिषाधयिषा तत्र पक्षतासंपत्तये तद्विशेषणस्यावश्यकत्वात् ॥**

**अत्रेदं बोध्यम्—यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमिति-स्तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता । तेन सिद्धिपरामर्शसत्त्वेऽपि यत्किञ्चिज्ज्ञानं जायतामितीच्छायामपि नानुमितिः । 'वह्नि-व्याप्यधूमवान् पर्वतो वह्निमानि'तिप्रत्यक्षसत्त्वे 'प्रत्यक्षातिरिक्तं ज्ञानं जायतामि'-**

---

ति प्रत्यक्षं=प्रत्यक्षसिद्ध्यात्मकपरामर्शः, स्मरणं=स्मरणसिद्ध्यात्मकपरामर्शो वा, ततः=द्वितीयक्षणे 'पर्वते वह्न्यनुमितिर्मे जायतामि'तिसिषाधयिषा, तादृशस्थलेऽनुमितिर्भवति, सा न स्यात्, प्रतिबन्धकसिद्धेः सत्त्वात् । तत्र पक्षतासम्पत्तये=अनुमित्यव्यवहितपूर्ववर्तिसिषाधयिषाक्षणे पक्षतालक्षणघटनाय, सिद्धौ सिषाधयिषाविरहविशिष्टत्वं विशेषणं देयमेव, तेन एतत्सिषाधयिषाविरहविशिष्टदेशान्तरीयसिद्ध्यभावस्य पर्वते पक्षतात्वाल्लक्षणसमन्वय इति भावः ॥ **ननु**—वह्निव्याप्यधूमवान्पर्वतो वह्निमानि'तिप्रत्यक्षानन्तरं सिषाधयिषैव न सम्भवति इष्टसाधनताज्ञानाऽभावात्, उपायेच्छां प्रति इष्टसाधनताज्ञानस्य हेतुत्वाद् इष्टसाधनताज्ञानस्य तादृशप्रत्यक्षात्पूर्वमेवोपगमे प्रत्यक्षमेव न संभवति बलवदिच्छासामग्र्या प्रतिबन्धात् प्रत्यक्षानन्तरं इष्टसाधनताज्ञानोपगमे सिषाधयिषाक्षणे प्रत्यक्षमेव न तिष्ठतीति प्रत्यक्षनाशादनुमितिरेव न स्यात् परामर्शात्मककारणाऽभावादिति चेन्न । 'प्रत्यक्ष'मित्यस्य अनुमितीष्टसाधनताविषयकप्रत्यक्षमित्यर्थः, तच्च 'वह्निव्याप्यधूमवान्पर्वतो वह्निमाननुमितिरिष्टसाधन'मितिसमूहालम्बनात्मकं, ततस्तु सिषाधयिषोदयेन तत्रानुमितिः स्यादित्याशयः ॥

अनुमितिसामान्यं प्रति सामान्यरूपेण यस्याः कस्याश्चिदपि सिषाधयिषाया उत्तेजकत्वे 'वह्निव्याप्यधूमवान् पर्वतो वह्निमा'नितिसिद्ध्यात्मकपरामर्शसत्त्वे 'यत्किञ्चिज्ज्ञानं मे जायता'मितीच्छयाऽपि 'पर्वतो वह्निमानि'त्यनुमित्यापत्तिः स्यादित्यत आह—**अत्रेदं बोध्यमिति** । **अत्र**='सिषाधयिषाविरहविशिष्टसिद्ध्यभाव'इतिलक्षणे, इदं=वक्ष्यमाणं निवेशनीयम् । तदेवाह—**यादृशेति** । ताल्लिङ्गकतत्पक्षकतत्साध्यकानुमितित्वप्रकारकेच्छात्वावच्छिन्नाऽभावोऽनुगतरूपेणैव पक्षतायां लाघवान्निवेशनीयो ननु तत्तदिच्छाव्यक्तीनामभावसमुदायइत्याशयेनैव यादृशयादृशसिषाधयिषेत्युक्तं, तथा च 'पर्वते वह्न्यनुमितिर्जायतामि'तिसिषाधयिषासत्त्वे वह्निप्रकारकसिद्धिसत्त्वे च यद्धूमलिंगिका 'पर्वतो वह्निमानि'त्यनुमितिर्जायते तादृश'पर्वते वह्न्यनुमितिर्जायतामि'तिसिषाधयिषाविरहविशिष्टायाः सिद्धेः अभाव एव धूमलिङ्गकाऽनुमितौ पक्षतेत्यर्थः । 'यादृशयादृशे'त्यस्य फलं दर्शयति—**तेनेति** । यादृशयादृशसिषाधयिषानिर्वचनेनेत्यर्थः । सिद्धिपरामर्शसत्त्वेऽपि='वह्निव्याप्यधूमवान्पर्वतो वह्निमानि'त्यादिसिद्ध्यात्मकपरामर्शसत्त्वेऽपि, 'यत्किंचिज्ज्ञानं मे जायतामि'तीच्छायामपि, तादृशेच्छाया लक्षणाऽप्रविष्टतया तदग्रहणात् कालान्तरीयदेशान्तरीय'पर्वते वह्न्यनुमितिर्जायतामि'तीच्छाया एव ग्रहणात् तदभावविशिष्टसिद्धेः प्रतिबन्धिकायाः सत्त्वात् न 'पर्वतो वह्निमानि'त्यनुमित्यापत्तिरित्यर्थः ॥ **ननु**—तल्लिंगकतत्पक्षकतत्साध्यकानुमितित्वप्रकारकेच्छात्वेन रूपेणोत्तेजकत्वे **'वह्निव्याप्यधूमवान् पर्वतो वह्निमानि'**तिप्रत्यक्षात्मकसिद्ध्यात्मकपरामर्शसत्त्वे **'प्रत्यक्षातिरिक्तं ज्ञानं जायतामि'**तीच्छाया अनुमितित्वाऽप्रकारकतया तस्या अनुत्तेजकत्वापत्त्या देशान्तरीयादि'पर्वते वह्न्यनुमितिर्जायता'मितीच्छाविरहविशिष्टपरामर्शात्मकसिद्धेः प्रतिबन्धकत्वापत्त्या तत्रानुमितिर्नोत्पद्येतेति'चेन्न । **'यादृशयादृशसिषाधयिषासत्त्व'**इत्यस्य **'यद्यदनुमित्साव्यक्तिसत्त्वे'**इत्यर्थात्, तथा च तत्र अनुमितिः स्यादेवेत्याशयेन अनुमित्सायोरतद्व्यक्तित्वेन उत्तेजकतायाः फलं दर्शयति-**'वह्निव्याप्यधूमवान् पर्वतो वह्निमानितीति** । प्रत्यक्षसत्त्वे=प्रत्यक्षात्मकसिद्ध्यात्मकपरामर्श

**तीच्छायां तु भवत्येव। एवं धूमपरामर्शसत्त्वे 'आलोकेन वह्निमनुमिनुयामि'तीच्छायामपि नानुमितिः॥**

**सिषाधयिषाविरहकाले यादृशसिद्धिसत्त्वे नानुमितिस्तादृशी सिद्धिर्विशिष्यैव तत्तदनुमितौ प्रतिबन्धिका वक्तव्या, तेन 'पर्वतस्तेजस्वी' 'पाषाणमयो वह्निमानि'-**

सत्त्वे, शाब्दसामग्र्यसत्त्वे च, वह्नेः प्रत्यक्षातिरिक्तज्ञानं जायतामितीच्छायाःसत्त्वे अनुमितेरानुभविकत्वेन तादृशेच्छाया अपि उत्तेजकत्वं भवत्येवेति तादृशानुमित्साविरहविशिष्टदेशान्तरीयादिसिद्ध्यभावस्य सत्त्वाद् अनुमितिर्निराबाधेति भावः॥ तल्लिंगकत्वप्रवेशस्य फलमाह-**एवमिति। वह्निव्याप्यधूमवान्पर्वतो वह्निमानि**'तिसिद्ध्यात्मकधूमपरामर्शसत्त्वे, तत्कालीनाया 'आलोकेन वह्निमनुमिनुयामि'तीच्छाव्यक्तेर्धूमलिंगकत्वाऽभावेन अनुत्तेजकतया **नानुमितिः**=नानुमितिसामान्यापत्तिः, तथा च प्रकृते धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावात्मककारणविरहात् धूमलिङ्गकानुमित्यनुत्पत्तिः, धूमान्यलिंगकपरामर्शविरहाच्च धूमान्यलिङ्गकानुमितेरप्यनुत्पत्तिः, विशेषसामग्री (उत्तेजकाऽनुमित्सा)सहिताया एव सामान्यसामग्र्याः( परामर्शस्य )फलोपधायकत्वेन अनुमितिविशेषोत्पादकसामग्र्यभावात् केवलालोकलिङ्गकेच्छाकालीनसिद्ध्यात्मकधूमपरामर्शात् नाऽनुमितिसामान्यापत्तिरिति भावः॥ **अत्र केचित्**-पर्वतोद्देश्यकवह्निविधेयकानुमि'तिर्जायतामित्याकारकेच्छाव्यक्तयो यावत्यस्तासां तत्तद्व्यक्तित्वेन उत्तेजकत्वे गौरवात् ताः पर्वतोद्देश्यकत्वविशिष्टवह्निविधेयकत्वप्रकारताशाल्यनुमितिगोचरेच्छात्वेनाऽनुगमय्य तेन रूपेण उत्तेजकत्वं वक्तव्यम्। एवं-पर्वतेऽनुमितिर्जायतामितीच्छाव्यक्तयो यावत्यस्तासां,-वह्न्यनुमितिर्जायतामितीच्छाव्यक्तयश्च यावत्यस्तासां च,-अनुगतेन रूपेण उत्तेजकत्वं वक्तव्यम्। अशाब्दज्ञानं जायतां, प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छानां तु तत्तद्व्यक्तित्वेन उत्तेजकत्वं वक्तव्यम्। तथाच अनुगतीकृतानामिच्छानामनुगतधर्मावच्छिन्नसमवायावच्छिन्नप्रतियोगिताकाभाववैशिष्ट्यं, अननुगतानामिच्छानां तु तत्तद्व्यक्तित्वावच्छिन्नसमवायावच्छिन्नप्रतियोगिताकाभावकूटवैशिष्ट्यं,-सिद्धौ निवेशनीयमिति वदन्ति॥ **वस्तुतस्तु**-सिद्धिकाले धूमलिंगकानुमितिः यादृशयादृशसिषाधयिषामहिम्ना जायते तादृशतादृशसिषाधयिषाव्यक्तीः प्रातिस्विकरूपेणोपादाय तत्तत्सिषाधयिषाव्यत्ययभावकूटविशिष्टसिद्ध्यभावो धूमलिंगकानुमितौ पक्षता बोध्या। 'यल्लिङ्गतावच्छेदकावच्छिन्नलिङ्गताकत्वविशिष्टानुमितिः यादृशयादृशसिषाधयिषामहिम्ना सिद्धिसत्त्वे जायते तादृशतादृशसिषाधयिषाव्यत्ययभावकूटविशिष्टसिद्ध्यभावस्तल्लिंगतावच्छेदकावच्छिन्नलिंगताकानुमितौ पक्षतेति यावदिति ध्येयम्॥

अथ-सिद्ध्यनुमित्योः प्रतिबध्यप्रतिबन्धकभावं निरूपयति-**सिषाधयिषाविरहकाले इति।** 'पर्वते वह्न्यनुमितिर्जायतामि'तीच्छाया अभावकाले, यादृशसिद्धिसत्त्वे=पर्वतत्वावच्छिन्नविशेष्यताकवह्नित्वावच्छिन्नप्रकारताकनिश्चयत्वावच्छिन्नज्ञानसत्त्वे, 'पर्वतो वह्निमानि'त्यनुमितिर्न भवति' तादृशी सिद्धिः=पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नज्ञानं, विशिष्यैव=पृथक् पृथगेव, तत्तदनुमितौ=तत्तत्पक्षसाध्यकानुमितिव्यक्तौ, प्रतिबन्धिका वक्तव्येत्यर्थः॥ पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशाल्यनुमितित्वावच्छिन्नं प्रति पर्वतपक्षकवह्निसाध्यकधूमलिंगकानुमितीच्छाविरहकालीनस्य पर्वतत्वावच्छिन्नविशेष्यतानिरूपित-वह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नस्य प्रतिबन्धकत्वं न त्वन्यप्रकारताकस्य अन्यविशेष्यताकस्य वेति यावत्॥ एतादृशप्रतिबध्यप्रतिबन्धकभावस्य फलमाह-**तेनेति।** विशिष्य प्रतिबध्यप्रतिबन्धकभावस्वीकारेणेत्यर्थः। पर्वतो वह्निमानि'त्यनुमितेः पूर्वं 'पर्वतस्तेजस्वी'ति,-

तिज्ञानसत्त्वेऽप्यनुमितेर्न विरोधः। परन्तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितिदर्शनात्, पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेव प्रतिबन्धिका । पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि ।

इदं तु बोध्यम्- यत्र'अयं पुरुषो न वे'ति संशयानन्तरं 'पुरुषत्वव्याप्यकरादि-

---

अथवा 'पाषाणमयो वह्निमानि'तिज्ञानस्य सिद्ध्यात्मकस्य सत्त्वेऽपि तेन ज्ञानेन सह 'पर्वतो वह्निमानि'त्यनुमितेः न विरोधः, तत्रैकत्र तेजस्त्वेन प्रकारकत्वात्, अन्यत्र च पाषाणमयत्वेन विशेष्यकत्वाच्चेत्यर्थः । एवं 'पर्वतस्सुन्दरवह्निमान्, सुन्दरपर्वतो वह्निमानि'ति ज्ञानयोरपि वह्नित्वपर्याप्तावच्छेदकताकप्रकारताकत्वाऽभावात् पर्वतत्वपर्याप्तावच्छेदकतानिरूपितविशेष्यताकत्वाऽभावाच्चाऽप्रतिबन्धकत्वमिति बोध्यम् ॥ ननु-एकत्र पर्वते सिद्धिसत्त्वे पर्वतत्वावच्छेदेन( सर्वपर्वतोद्देश्यिका )अनुमितिर्न स्यादित्यत आह-परन्त्विति । पक्षतावच्छेदकं यत् पर्वतत्वं तत्सामानाधिकरण्येन=तदधिकरणयत्किंचित्पर्वतवृत्तित्वेन, साध्यस्य=वह्नेः सिद्धावपि=पर्वतो वह्निमानितिनिर्णयसत्त्वेऽपि, तदवच्छेदेन=पर्वतत्वावच्छेदेन यावत्पर्वतानुद्दिश्य, सर्वेषु पर्वतेष्विति यावत्, 'पर्वतो वह्निमानि'त्यनुमितेः जायमानत्वात्, 'पक्षतावच्छेदका( पर्वतत्वा )वच्छेदेन=यावत्पर्वतवृत्तित्वेन, अनुमितिं प्रति पक्षतावच्छेदकावच्छेदेन=यावत्पर्वतवृत्तित्वेन साध्यनिर्णयः प्रतिबन्धकः, न तु पक्षतावच्छेदकसामानाधिकरण्येन=यत्किंचित्पर्वतवृत्तित्वेनेत्यर्थः । यदा सकलपर्वते वह्निरनुमातव्यस्तदा सकलपर्वतवृत्तिर्वह्निनिश्चयः प्रतिबन्धकः, ननु यत्किंचित्पर्वतवृत्तिनिश्चय इति सरलार्थः ॥ तथा च प्राचीनमते- पक्षतावच्छेदकपर्वतत्वावच्छिन्ननिखिलपर्वतनिष्ठविशेष्यतानिरूपितसंयोगसंसर्गकवह्नित्वावच्छिन्नप्रकारताशाल्यनुमितित्वावच्छिन्नं प्रति पक्षतावच्छेदकपर्वतत्वावच्छिन्ननिखिलपर्वतनिष्ठविशेष्यतानिरूपितसंयोगसंसर्गकवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयः प्रतिबन्धकः ॥ नव्यमतेतु- पक्षतावच्छेदकपर्वतत्वावच्छिन्नविशेष्यतानिरूपितपक्षतावच्छेदकव्यापकत्व- विशिष्टसंयोगपर्याप्तसांसर्गिक -विषयतानिरूपितसाध्यतावच्छेदकवह्नित्वावच्छिन्नप्रकारताशाल्यनुमितित्वावच्छिन्नं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितपर्वतत्वव्यापकत्वविशिष्टसंयोगपर्याप्तसांसर्गिकविषयतानिरूपितसाध्यताव -च्छेदकवह्नित्वावच्छिन्नप्रकारताशालिनिर्णयः प्रतिबन्धकः। एवं पक्षतावच्छेदकसामानाधिकरण्येन=पर्वतत्वाधिकरणैकपर्वतवृत्तित्वेन अनुमितिं प्रति तु सिद्धिमात्रं=पक्षतावच्छेदकावच्छेदेन सिद्धिः पक्षतावच्छेदकसामानाधिकरण्येन च सिद्धिः प्रतिबन्धिकेत्यर्थः ॥ तथा च-प्राचीनमते-पर्वतत्वावच्छिन्नयत्किंचित्पर्वताऽन्याऽवृत्तिविशेष्यतानिरूपितसंयोगसंसर्गकवह्नित्वावच्छिन्नप्रकारताशाल्यनुमितित्वावच्छिन्नं प्रति पर्वतत्वावच्छिन्नपर्वतनिष्ठविशेष्यतानिरूपितसंयोगसंसर्गकवह्नित्वावच्छिन्नप्रकारताशालिनिर्णयः प्रतिबन्धकः ॥ नवीनमते-पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगपर्याप्तसांसर्गिकविषयतानिरूपितवह्नित्वावच्छिन्नप्रकारताशाल्यनुमितित्वावच्छिन्नं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगनिष्ठसांसर्गिकविषयतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिर्णयः प्रतिबन्धक इति फलितार्थः ॥

ननु-'अयं पुरुषो न वे'ति संशयोत्तरं 'पुरुषत्वव्याप्यकरादिमानयमि'ति विशेषदर्शने पुरुषत्वविधेयकाऽनुमितिः कथं न जायते,—पुरुषत्वप्रत्यक्षसामग्र्या इव पुरुषत्वानुमितिसामग्र्या अपि सत्त्वात्, इत्याशंकायां पक्षतादिरूपकारणसत्त्वेऽपि प्रतिबन्धकान्तरसत्त्वान्नानुमितिः किन्तु प्रत्यक्षमेवेति समाधत्ते-इदन्तु बोध्यमित्यादिना। यत्र=यत्र व्यक्तौ, यद्व्यक्तिविषयक इति यावत्, 'अयं

**मानयमि'ति ज्ञानं, तत्रासत्यामनुमित्सायां पुरुषस्य प्रत्यक्षं भवति न त्वनुमिति रतोऽनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री कामिनीजिज्ञासादिवत्स्वातन्त्र्येण प्रतिबन्धिका । एवं परामर्शानन्तरं विना प्रत्यक्षेच्छां पक्षादेः प्रत्यक्षानुत्पत्तेः प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिका ॥ ७० ॥**

---

पुरुषो न वा'=पुरुषत्ववान् तदभाववान् वेति, संशयो जातः, तदनन्तरं प्रत्यक्षात्मकपरामर्शः–'पुरुषत्वव्याप्य–करादिमानय'मिति जातः, तत्र 'करादिना पुरुषत्वानुमितिर्मे जायतामिती'च्छायाम् असत्यां तु, पुरुषस्य प्रत्यक्षम् भवतीति 'अयं पुरुषत्ववानि'त्यनुमितिस्तु नैव भवतीति । **अतः**=फलानुरोधेन, अनुमित्साविरहविशिष्टा या समानविषयिणी=अन्यूनानतिरिक्तविषयिणी, परामर्शस्य ये विषयाः पुरुषत्वं तद्व्याप्यकरादयः पुरुषश्चेति त एव विषया यस्याः, एतादृशी चक्षुःसंयोगादिरूपा प्रत्यक्षज्ञानसामग्री, कामिनीजिज्ञासा यथा स्त्रीकामिनः पुरुषस्य सकलज्ञानप्रतिबन्धिका भवति, यथा मणिमन्त्रादयः स्वातन्त्र्येण प्रतिबन्धका भवन्ति, तथा स्वातन्त्र्येण=पक्षताकुक्षौ निवेशं विनैव अनुमितिं प्रति प्रतिबन्धिका कल्प्यते ! **'एतेन**–यज्ञपत्युपाध्यायोक्ता सिषाधयिषाविरहविशिष्टसिद्धिप्रत्यक्षसामग्र्योरन्यतराभावरूपपक्षता नाऽभ्युपगन्तव्येति सूचितम् ॥ प्रत्यक्षसामग्र्यां सिषाधयिषा विरहवैशिष्ट्यं–स्वाश्रयचक्षुःसंयुक्तमनःप्रतियोगिकविजातीयसंयोगघटितसामानाधिकरण्येन बोध्यम् । प्रत्यक्षसामग्र्या अनुमितिप्रतिबन्धकत्वं प्रदर्श्य अनुमितिसामग्र्या अपि क्वचित् प्रत्यक्षप्रतिबन्धकत्वं भवतीति दर्शयति- **एवं परामर्शानन्तरमिति** । 'वह्निव्याप्यधूमवान्पर्वत'इतिपरामर्शानन्तरं यदि असमानविषयिणी=न्यूनविषयिणी=पर्वतमात्रस्य प्रत्यक्षसामग्री चक्षुःसंयोगादिरूपा वर्तते, अथ च **'विनापि प्रत्यक्षेच्छां'**='पर्वतविषयकं प्रत्यक्षं मे जायतामि'तीच्छा च नास्ति, तत्र पक्षादेः= पर्वतस्य प्रत्यक्षं नोत्पद्यते, अतः–प्रत्यक्षेच्छाविरहविशिष्टा या परामर्शात्मिका अनुमितिसामग्री, सा **भिन्नविषयकप्रत्यक्षे**=परामर्शस्य ये विषयाः वह्नितद्व्याप्यधूमपर्वताः, तेभ्यो **भिन्नः**=न्यूनः अतिरिक्तो वा पर्वत एव विषयो यस्य, एतादृशप्रमात्मकप्रत्यक्षे प्रतिबन्धिका भवतीत्यर्थः ॥ प्रत्येके उभयादिसमुदायभेदसत्त्वेन प्रत्यक्षविषयस्य पर्वतस्य परामर्शविषयवह्नितद्व्याप्यधूम-पर्वतात्मकसमुदायान्तःपातित्वेऽपि पर्वते तादृशसमुदायभेदसत्त्वेन परामर्शविषयसमुदायतः प्रत्यक्षविषयपर्वतो भिन्नो भवतीति 'भिन्नविषयके'त्युक्तिः 'न्यूनविषयके'ति-वत् समीचीनैवेति बोध्यम् ॥ **पक्षादेः**– इत्यत्रादिना साध्यस्य वह्नेः ग्रहणम् , तथा च 'परामर्शसत्त्वेऽपि 'वह्नेः प्रत्यक्षं जायतामि'तीच्छाया असत्त्वे वह्निप्रत्यक्षं न भवति, वह्निः केवलः परामर्शविषयसमुदायतो भिन्नः, तद्विषयकप्रत्यक्षे प्रत्यक्षेच्छाविरहविशिष्टाया अनुमितिसामग्र्याः परामर्शात्मिकायाः प्रतिबन्धकत्वादित्यपि बोध्यम् ॥ 'वह्निव्याप्यधूमवान्पर्वत'–इतिपरामर्शानन्तरं यदि पर्वतप्रत्यक्षसामग्री चक्षुःसंयोगादिरूपा वर्तते तदा अनुमितिरेव जायते न तु प्रत्यक्षमिति अनुमितिसामग्री विभिन्नविषयकप्रत्यक्षे प्रतिबन्धिका, यदि तु प्रत्यक्षेच्छा वर्तते तदा विभिन्नविषयकप्रत्यक्षं जायते इति प्रत्यक्षेच्छाया उत्तेजकत्वं, तथा च तत्र प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री विभिन्नविषयकप्रत्यक्षे प्रतिबन्धिकेति हृदयम् ॥ **ननु**–तन्निष्ठविधेयताकाऽनुमितिं प्रति अनुमित्साविरहविशिष्टतन्निष्ठलौकिकविषयताशालिप्रत्यक्षसामग्रीत्वेन प्रतिबन्धकत्वं न संभवति, कार्याधिकरणे आत्मनि पक्षे वा सामग्रीत्वावच्छिन्नस्याऽसत्त्वादिति चेन्न । कालिकसम्बन्धेन तत्पुरुषीयतादृशानुमितिं प्रति तत्पुरुषीयतादृशप्रत्यक्षजनकसामग्रीत्वावच्छिन्नस्य कालिकसम्बन्धेनापि प्रतिबन्धकत्वसंभवान्न काऽप्यनुपपत्तिरिति ध्येयम् ॥७०॥

अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः।
कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥ ७१ ॥

हेतुप्रसङ्गाद्धेत्वाभासान्विभजते—अनैकान्त इति। तल्लक्षणं तु यद्विषयकत्वेन

---

मूले-अनैकान्त इति। एकः=साध्यमेव,—अन्तः=नियामकः=नियमस्य व्याप्त्यात्मकस्य निरूपको यस्य स एकान्तः=साध्यनिरूपितव्याप्तिमान्। न एकान्तः=अनैकान्तः,-साध्यनिरूपितव्याप्तिशून्यः,-साध्यनिरूपितव्याप्तिग्रहप्रतिबन्धकग्रहविषयविशिष्ट इत्यर्थः। व्यभिचारीति यावत्। **विरुद्धः**=विरोधः-साध्याभावव्याप्तत्वं, तद्वान् हेतुः। **असिद्धः**-असिद्धिदोषवान्, प्रमात्मकसिद्ध्यविषयो हेतुरिति यावत्, आश्रयत्व-व्याप्यत्व-पक्षवृत्तित्वादिप्रकारकाऽप्रमाविषय इति भावः। **प्रतिपक्षितः**=प्रतिपक्षः संजातः अस्येति प्रतिपक्षितः=सत्प्रतिपक्षः=सन् विद्यमानः-स्वसाध्यस्य अभावसाधकत्वेन वर्तमानः प्रतिपक्षः-शत्रुरूपो हेतुर्यस्येति यावत्, सत्प्रतिपक्षदोषवान् हेतुरित्यर्थः। **कालात्ययाऽपदिष्टः**=यस्मिन् काले पक्षे साध्यं वर्तते स साध्यस्य कालः, यस्मिन् काले साध्यं नोत्पन्नं नष्टं वा, सः साध्यकालस्य अत्ययः तथा च साध्यस्य काले अत्यये सति अपदिष्टः प्रयुक्तः यथा 'उत्पत्तिकालीनघटः,-गन्धवान् पृथिवीत्वादि'त्यादौ, स हेतुः कालात्ययापदिष्टः कालात्ययः-साध्यकालस्य बाधः, तेन अपदिष्टः-युक्त इति वा, बाधदोषवानित्यर्थः। इति पञ्चधा—हेत्वाभासाः हेतुवदाभासन्ते इति हेत्वाभासाः, असद्धेतवो भवन्तीत्यर्थः॥ मुक्तावल्यां **हेतुप्रसंगादिति**। सद्धेतुनिरूपणाऽनन्तरम् असद्धेतोः स्मरणात् तन्निरूपणे 'स्मृतस्योपेक्षाऽनर्हत्व'रूपा प्रसंगसंगतिर्दर्शिता, स्व(हेतु)निष्ठव्याप्तिपक्षधर्मताविरहवत्त्वसम्बन्धेन दुष्टहेतोः स्मरणम्, 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमितिनियमात्। वादिनो विजयलक्षणैककार्यकारित्वम् स्वोक्तहेतोस्सद्धेतुत्वप्रतिपादनेनेव परोक्तप्रतिहेतोर्दुष्टत्वप्रतिपादनेनापि कथायां वादिनो विजयात्, अनुमितिरूपतत्त्वनिर्णयात्मकैककार्यकारित्वं च संगतिरप्यत्र बोध्या। सद्धेतवः=व्याप्त्यादिविशिष्टहेतवः, ते च केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदेन बोध्याः, तत्र अन्वयव्यतिरेकिहेतुः पञ्चरूपोपपन्नः सन् स्वसाध्यं साधयितुं क्षमः, पञ्चरूपाणि-'पक्षसत्त्व,-सपक्षसत्त्व,-विपक्षाऽसत्त्वा,ऽबाधितत्वा, ऽसत्प्रतिपक्षितत्वात्मकानि। तानि धूमे विद्यन्ते। केवलान्वयिहेतुस्तु चतूरूपोपपन्न एव स्वसाध्यं साधयति, तस्य विपक्षाऽप्रसिद्धेः, विपक्षाऽसत्त्वमप्यप्रसिद्धमिति, 'घटोऽभिधेयः,-प्रमेयत्वादि'त्यत्र प्रमेयत्वहेतोर्विपक्षविरहात् विपक्षाऽसत्त्वमप्रसिद्धमिति। केवलव्यतिरेकिहेतुरपि चतूरूपोपपन्न एव स्वसाध्यं साधयति, तस्य सपक्षाऽप्रसिद्धेः सपक्षसत्त्वमप्यप्रसिद्धमिति। एतत्पञ्चरूपाणां मध्यत एकेन द्वाभ्यां त्रिभिर्वोपपन्नत्वेन ये हेतुवदाभासन्ते ते हेत्वाभासा इति कथ्यन्ते, ते च सव्यभिचारो विरुद्धः सत्प्रतिपक्षोऽसिद्धो बाधितश्चेति पञ्च। दोषा अपि व्यभिचार-विरोध-सत्प्रतिपक्षा-ऽसिद्धि-बाधाः पञ्च। तैर्दोषैर्विशिष्टा दुष्टा हेतवः। दोषाणां सामान्यलक्षणेऽभिहिते सति 'दोषवत्त्व'रूपदुष्टलक्षणस्य सुतरां लाभ इत्याशयेन दोषाणां चिन्तामणिकारोक्तं सामान्यलक्षणं दर्शयति-**यद्विषयकत्वेनेति**। तृतीयार्थः-अवच्छिन्नत्वं, यद्विषयकत्वावच्छिन्नमित्यर्थः। यद्विषयकं ज्ञानम् अनुमितिप्रतिबन्धकं भवति तत्त्वं दोषत्वमिति। यत्पदेन दोषा ग्राह्याः, तत्र **बाधस्थले** 'ह्रदो वह्निमान्,-धूमादि'त्यत्र 'ह्रदो वह्न्यभाववानि'ति बाधः, बाधविषयकं ज्ञानं 'ह्रदो वह्न्यभाववानि'ति, तत् 'ह्रदो वह्निमानि'त्यनुमितिं प्रति प्रतिबन्धकं भवति, तत्त्वं-बाधत्वं,-दोषत्वमिति। स च दोषो धूमे हेतौ-स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन वर्तते, स्वं-'ह्रदो वह्न्यभाववा'निति दोषः,

**ज्ञानस्यानुमितिविरोधित्वं तत्त्वम्।**

**तथाहि—व्यभिचारादिविषयकत्वेन ज्ञानस्यानुमितिविरोधित्वात्ते दोषाः।**

---

तद्विषयकं ज्ञानं 'वह्न्यभाववान् ह्रदो धूमश्चे'ति समूहालम्बनात्मकं, तद्विषयप्रकृतहेतुतावच्छेदक-धूमत्ववत्त्वं धूमे इति कृत्वा दोषवत्त्वात् धूमस्य दुष्टत्वमिति ॥ यत्र दोषशरीरे हेतुर्न भासते तत्र दोषविषयकं ज्ञानं हेतुमन्तर्भाव्य समूहालम्बनं ग्राह्यं, तथाकरणेनैव हेतौ दोषवत्तासम्पादनमिति बोध्यम् ॥ **सत्प्रतिपक्षस्थले**-पर्वतो वह्निमान् धूमात्,-पर्वतो वह्न्यभाववान् जलादि'त्यत्र 'साध्याभावव्याप्यवान्पक्ष'इति दोषः, तद्विषयकं ज्ञानं 'साध्याभावव्याप्यवान्पक्ष'इत्याकारकं, तत् 'साध्यवान् पक्ष'–इत्यनुमितिप्रतिबन्धकं भवति, तत्त्वं सत्प्रतिपक्षत्वं, तदाश्रयो दोषः, तद्वत्त्वं स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन, स्वं–सत्प्रतिपक्षदोषः तद्विषयकज्ञानं 'साध्या-भावव्याप्यवान्पक्ष'इत्याकारक, तद्विषयप्रकृतहेतुतावच्छेदकवत्त्वं वह्न्यभावव्याप्ये जले इति जलं सत्प्रतिपक्षितम्, धूमस्तु वह्न्यभावाऽभावव्याप्योऽपि वस्तुतो न दुष्टः, यावत्कालं दोषज्ञानं तावत्का-लमनुमितिप्रतिबन्धमात्रमिति ॥

**ननु सव्यभिचार**दोषो व्याप्तिज्ञानप्रतिबन्धको न त्वनुमितिप्रतिबन्धकः, एवं विरोधदोषः पराम-र्शप्रतिबन्धकः, असिद्धिरपि परामर्शप्रतिबन्धिका, तत्रैतल्लक्षणस्याऽव्याप्तिरिति चेन्न। 'अनुमिति'पदम् अजहत्स्वार्थलक्षणया 'अनुमितितत्कारणान्यतर'परम् कारणपदं करण–कारणसाधारणं बोध्यम्। तथा च **यद्विषयकं ज्ञानमनुमितितत्कारणान्यतरप्रतिबन्धकं तत्त्वं दोषत्व**'मित्यर्थलाभः। अस्य समन्वयं दर्शयति–**तथाहीति**। व्यभिचारादिविषयकत्वेन=व्यभिचारविरोधसत्प्रतिपक्षाऽसिद्धिबाधा-न्यतमविषयकत्वावच्छिन्नस्य ज्ञानस्य **अनुमितिविरोधित्वम्**=अनुमितितत्करणान्यतरप्रतिबन्धकत्वं भवति तत्त्वं दोषत्वमिति। **साधारणव्यभिचारस्थले** 'पर्वतो,–वह्निमान्, प्रमेयत्वादि'त्यत्र, 'साध्यवदन्यवृत्तिर्हेतु'रिति दोषः तद्विषयकं 'वह्निमदन्यवृत्तिप्रमेयत्व'मिति ज्ञानम्, वह्निमदन्याऽ-वृत्तिप्रमेयत्वमि'तिव्याप्तिज्ञानात्मककरणप्रतिबन्धकं भवति तत्त्वं साधारणव्यभिचारत्वम्, 'तादृशदोष-वत्त्वं हेतौ 'स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्व'सम्बन्धेन, स्वं–वह्निमदन्यवृत्तिप्रमेयत्वमिति दोषः, तद्विषयकं ज्ञानमपि 'वह्निमदन्यवृत्तिप्रमेयत्वमि'त्याकारकं, तद्विषयप्रकृतहेतुतावच्छेदकवत्त्वं प्रमेयत्वे इति प्रमेयत्वं साधारणव्यभिचारि ॥ **असाधारणव्यभिचारस्थले**—'शब्दः,-नित्यः,-शब्दत्वादि'त्यत्र 'साध्याऽसमानाधिकरणो हेतु'रिति दोषः, तद्विषयकं 'नित्यत्वाऽसमानाधिकरण-शब्दत्व'मितिज्ञानं 'नित्यत्वसमानाधिकरणशब्दत्वमि'तिव्याप्तिज्ञानप्रतिबन्धकं भवति, तत्त्वम् असा-धारणव्यभिचारत्वम्, तादृशदोषवत्त्वं पूर्वोक्तसम्बन्धेन, स्वं—दोषः, तद्विषयकज्ञानं 'साध्याऽसमा-नाधिकरणो हेतु'रित्याकारकं, तद्विषयप्रकृतहेतुतावच्छेदकवत्त्वं शब्दत्वे इति ॥ **अनुपसंहारि स्थले**–'सर्वम्, अभिधेयं,—प्रमेयत्वादि'त्यत्र 'अत्यन्ताभावाऽप्रतियोगिसाध्यकादि'रिति दोषः, आदिपदेन पक्षो हेतुश्च ग्राह्यौ। तादृशदोषविषयकम् 'अत्यन्ताऽभावाप्रतियोगिसाध्यमि'–तिज्ञानम्, तत् 'साध्याभावव्यापकीभूताभावप्रतियोगिहेतु' रितिव्यतिरेकव्याप्तिज्ञानप्रतिबन्धकं भवति। तत्त्वम् अनुपसंहारित्वम्। दोषवत्त्वं हेतौ पूर्वोक्तसम्बन्धेन, स्वम्–अत्यन्ताऽभावाऽप्रतियो-गिसाध्यमिति दोषः, तद्विषयकं ज्ञानमपि 'अत्यन्ताऽभावाऽप्रतियोगिसाध्यमि'ति। तद्विषयप्रकृतहेतु-तावच्छेदकवत्त्वं हेताविति ॥ **असिद्धिः अनेकधा**, तत्र **आश्रयासिद्धिस्थले** 'कांचनमयपर्वतो, वह्निमान्–,धूमादि'त्यत्र 'पक्षतावच्छेदकाऽभाववान्पक्ष' इति दोषः तद्विषयकं 'कांचनमयत्वाऽभाव-वान्पर्वत' इति ज्ञानं, 'वह्निव्याप्यधूमवत्कांचनमयपर्वत' इति परामर्शप्रतिबन्धकं भवति, तत्त्वम्

आश्रयासिद्धित्वम्, तादृशदोषवत्त्वं हेतौ पूर्वोक्तसम्बन्धेन,स्वं–'कांचनमयत्वाभाववान्पर्वत इतिदोषः, तद्विषयकं ज्ञानमपि 'कांचनमयत्वाऽभाववान्पर्वतो धूमश्चे'त्याकारकं समूहालम्बनं, तद्विषयप्रकृतहेतुतावच्छेदकवत्त्वं धूमे इति ॥ **स्वरूपाऽसिद्धिस्थले** 'ह्रदः,–द्रव्यत्ववान्,–धूमादि'त्यादौ 'हेत्वभाववान्पक्ष' इति दोषः तद्विषयकं 'धूमाभाववान्, ह्रद' इति ज्ञानं, तत् 'द्रव्यत्वव्याप्यधूमवान् ह्रद' इतिपरामर्शप्रतिबन्धकं भवति, तत्त्वं–स्वरूपाऽसिद्धित्वं दोषवत्त्वं हेतौ प्रागुक्तसम्बन्धेन, स्वं-धूमाभाववान्ह्रद'इतिदोषः, तद्विषयकं 'धूमाभाववान्ह्रद' इतिज्ञानं, तद्विषयप्रकृतहेतुतावच्छेदकवत्त्वं धूमे इति । **व्याप्यत्वासिद्धिस्थले**—'पर्वतो–वह्निमान्, नीलधूमादि'त्यत्र 'नीलधूमत्वं हेतुतानवच्छेदक'मितिदोषः, तद्विषयकं 'नीलधूमत्वं हेतुतानवच्छेदक'मितिज्ञानं 'वह्निव्याप्यनीलधूमवान्पर्वत' इतिपरामर्शप्रतिबन्धकं भवति, तत्त्वं व्याप्यत्वाऽसिद्धित्वं। तादृशदोषवत्त्वं हेतौ स्वविषयकज्ञानविषयगुरुधर्माश्रयतासम्बन्धेन, स्वं–'नीलधूमत्वं हेतुतानवच्छेदकमि'तिदोषः, तद्विषयकं ज्ञानमपि 'नीलधूमत्वं हेतुतानवच्छेदकं नीलधूमश्चे'तिसमूहालम्बनं, तद्विषयगुरुधर्माश्रयता नीलधूमे इति ॥ **अथवा**– 'पर्वतो, –धूमवान्,–वह्ने'रित्यत्र 'सोपाधिको हेतु'–रिति दोषः, हेतौ उपाधिमत्त्वं स्वव्यभिचारित्वसम्बन्धेन, तत्रोपाधिना हेतौ 'साध्याभाववद्वृत्ति'रितिव्यभिचार उद्भाव्यते, व्यभिचारज्ञानेन च 'साध्याभाववदवृत्ति'रितिव्याप्तिज्ञानंप्रतिबध्यते, तादृशदोषवत्त्वं च–स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन, स्वं'सोपाधिको हेतु'रिति दोषः तद्विषयकं सोपाधिको हेतु'रितिज्ञानं, तद्विषयप्रकृतहेतुतावच्छेदकवत्त्वं वह्नाविति ॥ **साध्याऽप्रसिद्धिस्थले**–'पर्वतः,–कांचनमयवह्निमान्,–धूमादि'त्यत्र 'साध्यतावच्छेदकाऽभाववत्साध्यमि'तिदोषः, तद्विषयकं ज्ञानं 'कांचनमयत्वाऽभाववान् वह्नि'रिति, तत् 'कांचनमयवह्निव्याप्यधूमवान्पर्वत'इतिपरामर्शं प्रतिबध्नाति, तत्त्वं साध्याऽप्रसिद्धित्वं, दोषवत्त्वं हेतौ स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन, स्वं–'साध्यतावच्छेदकाऽभाववत्साध्य'मिति दोषः, तद्विषयकं ज्ञानं 'साध्यतावच्छेदकाऽभाववत्साध्यं हेतुश्चे'तिसमूहालम्बनम्, तद्विषयप्रकृतहेतुतावच्छेदकवत्त्वं हेताविति ॥ **साधनाऽप्रसिद्धिस्थले**–' पर्वतो–वह्निमान्–कांचनमयधूमादि' त्यत्र'हेतुतावच्छेदकाऽभाववान्हेतु'रिति दोषः, तद्विषयकज्ञानं 'हेतुतावच्छेदकाऽभाववान्हेतु'रित्याकारकं, तत् 'वह्निव्याप्यकांचनमयधूमवान्पर्वत'इतिपरामर्शं प्रतिबंध्नाति, तत्त्वं साधनाऽप्रसिद्धित्वं, दोषवत्त्वं च हेतौ 'स्वविषयकज्ञानविशेष्यतासम्बन्धेन, स्वं–कांचनमयत्वाऽभाववान्धूम' इति दोषः, तद्विषयकं ज्ञानमपि 'कांचनमयत्वाऽभाववान्धूम'इति, तद्विशेष्यता धूमे इति ॥ **विरोधस्थले**'शब्दः नित्यः,–कृतकत्वादि'त्यत्र 'साध्यव्यापकीभूताऽभावप्रतियोगिहेतु'रिति दोषः, तद्विषयकं ज्ञानं'नित्यत्वव्यापकीभूताऽभावप्रतियोगिकृतकत्वमि'ति, तत् 'साध्याभावग्रहसामग्रीत्वेन रूपेण पक्षे साध्याऽभावज्ञानद्वारा अनुमितिप्रतिबन्धकम्। तत्त्वं दोषत्वं । तद्वत्त्वं–'स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन, स्वं–'साध्यप्यापकीभूताऽभावप्रतियोगिहेतु'रिति दोषः, तद्विषयकं ज्ञानमपि 'साध्यव्यापकीभूताऽभावप्रतियोगिहेतु'रिति, तद्विषयप्रकृतहेतुतावच्छेदककृतकत्वत्ववत्त्वं कृतकत्वे इति ॥ इतिरीत्याऽन्यत्राऽपि संगमनीयम्। एवम्–अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वम्, गमकतौपयिकप्रतिद्वन्द्विव्याप्तिपक्षधर्मताविरहतद्व्याप्यानामन्यतमत्वं, इत्यपि हेत्वाभाससामान्यलक्षणे बोध्ये॥

**ननु**–यद्विषयकत्वेनेत्यत्र तृतीयाऽर्थोऽवच्छेदकत्वं यदि स्वरूपसम्बन्धविशेषस्तदा 'पर्वतो वह्निमान् धूमादि'त्यादौ केवलवह्न्यभावस्य दोषत्वाऽऽपत्तिः, पर्वतविशेष्यकवह्निप्रकारकानुमितिं प्रति पर्वतविशेष्यकवह्न्यभावप्रकारकनिश्चयत्वेन प्रतिबन्धकतया । प्रतिबन्धकतावच्छेदककोटिप्रविष्टं यद्विषयकत्वं=केवलवह्न्यभावविषयकत्वं प्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरू-

**यद्विषयकत्वं च यादृशविशिष्टविषयकत्वम्, तेन बाधभ्रमस्यानुमितिविरोधित्वेऽपि न क्षतिः। तत्र पर्वतो वह्न्यभाववानिति विशिष्टस्याऽप्रसिद्धत्वान्न हेतुदोषः।**

पितत्वरूपसम्बन्धरूपावच्छेदकतावत् भवति, तत्त्वं–वह्न्यभावत्वं दोषत्वं, पूर्वोक्तसम्बन्धेन तादृशदोषवत्त्वाच्च धूमस्य दुष्टत्वापत्तिः। किञ्च–'पर्वतो वह्निमान्–धूमादि'त्यत्रैव कस्यचित्पुरुषस्य 'पर्वतो वह्निमा'निति बाधभ्रमो जातः, तत्र 'वह्न्यभाववत्पर्वत'इति बाधविषयकज्ञानं बाधभ्रमः 'पर्वतो वह्निमानि'त्यनुमितिं प्रतिबध्नाति, तत्त्वं वह्न्यभाववत्पर्वतत्वं दोषत्वं, तादृशदोषवत्त्वं पूर्वोक्तसम्बन्धेन हेताविति धूमस्य दुष्टत्वापत्तिः, अत आह–**यद्विषयकत्वं च यादृशविशिष्टविषयकत्वमिति**। यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वम्अनतिरिक्तवृत्तित्वरूपम्, यद्विषयकत्वं च यादृशविशिष्टविषयकत्वमित्यस्य–यद्रूपावच्छिन्नविषयकत्वमित्यर्थः। यद्रूपावच्छिन्नदोषनिष्ठविषयतानिरूपितविषयित्वमिति यावत्। तच्च दोषज्ञाननिष्ठम्। तथा च **ज्ञाननिष्ठ–यद्रूपावच्छिन्नविषयतानिरूपितविषयिता प्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्रूपवत्त्वं दोषत्वमिति** लक्षणार्थः फलितः। तथाच– यः पक्षः साध्याभावविशिष्टो भवति तादृशबाधस्यैव ग्रहणात्, बाधभ्रमे पर्वतस्य वह्न्यभावविशिष्टत्वाऽभावेन तस्य अग्रहणात्, तत्र 'पर्वतो वह्न्यभाववानि'तिभ्रमनिष्ठा प्रतिबन्धकता न वह्न्यभाववत्पर्वतत्वावच्छिन्नविषयकत्वावच्छिन्ना वह्न्यभाववत्पर्वतत्वावच्छिन्नविषयस्यैवाऽप्रसिद्धेः, अतस्तत्रत्यधूमस्य न दुष्टत्वापत्तिः, तत्र भ्रमे नष्टे सत्यनुमितिर्भवत्येवेति। एवं केवलवह्न्यभावविषयकत्वस्य तु प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वात् न केवलवह्न्यभावस्य दोषत्वापत्तिरतो न तत्रत्यधूमस्य दुष्टत्वापत्तिः, 'साध्याभावविशिष्टपक्षविशेष्यकविषयकत्वस्यैव प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तित्वादिति भावः। **अक्षरार्थस्तु**–यादृशविशिष्टविषयकत्वं=यद्रूपावच्छिन्नदोषनिष्ठविषयतानिरूपिता दोषज्ञाननिष्ठा विषयिता, प्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्रूपवत्त्वमिति लक्षणं पूरणीयम्। **तेन**=तादृशलक्षणार्थविवक्षणेन, **बाधभ्रमस्य**=पर्वतविशेष्यकवह्न्यभावप्रकारकबाधभ्रमस्य, अनुमितिविरोधित्वेऽपि='पर्वतो वह्निमानि'त्यनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्त्वेऽपि, न क्षतिः=न वह्न्यभाववत्पर्वतस्य दोषत्वापत्त्या धूमस्य दुष्टत्वापत्तिरित्यर्थः॥ तत्र हेतुमाह–**तत्रेत्यादि**। तत्र=पर्वतविशेष्यक-वह्न्यभावप्रकारकभ्रमस्थले, विशिष्टस्य=वह्न्यभावविशिष्टपर्वतस्य, अप्रसिद्धत्वात्, यादृशविशिष्टविषयकपदेन बाधभ्रमस्य ग्रहीतुमशक्यत्वात्, न हेतुदोषः=हेतोः दुष्टत्वं न भवति, यावत्कालं भ्रमस्तावदनुमितिप्रतिबन्धमात्रं भवति, भ्रमे नष्टे सत्यनुमितिर्भवत्येवेति।

**अत्रेदं बोध्यं–नवीनप्राचीनो**भयमते बाधो नित्यदोषः, बाधस्य नित्यत्वं–यत्र वस्तुतः साध्याभावेन विशिष्टः पक्षो वर्तते तत्रैव 'अयं बाधित'-इतिव्यवहारप्रवर्तकत्वं, न तु साध्येन विशिष्टो यत्र पक्षः तत्र भ्रमितसाध्याभाववत्पक्षमादायाऽपि, तथा सति बाधस्य अनित्यदोषत्वापत्तेः, अनित्यदोषत्वं–अविशिष्टस्थलेऽपि सद्धेतौ–'अयं दुष्टः'इतिव्यवहारप्रवर्तकत्वम्। विशिष्टाऽविशिष्टोभयस्थलीयहेतौ दुष्टताऽऽपादकत्वमिति यावत्। बाधस्तु न तथाविधोऽस्ति। अतस्तत्रत्यहेतोर्दुष्टत्वापत्तिवारणाय–यादृशविशिष्टविषयकज्ञानं लक्षणे निवेशितम्। परन्तु **प्राचीनमते** सत्प्रतिपक्षोऽनित्यदोषः, सत्प्रतिपक्षस्य अनित्यत्वं–साध्याभावव्याप्तिविशिष्टहेतुविशिष्टपक्षो यत्र (साध्याभावव्याप्यवान्पक्षः) न भवति तत्रापि साध्याऽभावव्याप्यविशिष्टहेतुमत्यपि पक्षे प्रतिहेतौ 'अयं सत्प्रतिपक्षित'इतिव्यवहारप्रवर्तकत्वम्, यथा 'यत्र पर्वते वह्निर्धूमश्च वर्तेते, तत्र 'पर्वतो वह्निमान्–धूमादि'

न च वह्न्यभावव्याप्यपाषाणमयत्ववानितिपरामर्शकाले वह्निव्याप्यधूमस्याभासत्वं न स्यात्तत्र वह्न्यभावव्याप्यवान्पक्ष इति विशिष्टस्याप्रसिद्धत्वादिति वाच्यम्, इष्टापत्तेः, अन्यथा बाधस्याप्यनित्यदोषत्वापत्तेः। तस्मात्तत्र वह्न्यभावव्याप्यपाषाणमयत्ववानितिपरामर्शकाले वह्निव्याप्यधूमस्य नाभासत्वम्, भ्रमादनुमितिप्रतिब-

---

तिसिद्धान्तिना प्रयुक्ते सति वादिना 'पर्वतो वह्न्यभाववान्–पाषाणमयत्वादि'तिप्रतिप्रयुक्तं, तत्र वह्न्यभावव्याप्यपाषाणमयत्ववत्पर्वत'इति सत्प्रतिपक्षभ्रममादायापि धूमे दुष्टताव्यवहारप्रवर्तकत्वं सत्प्रतिपक्षस्य प्राचीनैरङ्गीक्रियते इति। तत्र पर्वते पाषाणमयत्वं हेतुर्वह्न्यभावव्याप्तिविशिष्टो नास्तीति तत्र यादृशविशिष्टविषयकदोषज्ञानं-वह्न्यभावव्याप्तिविशिष्टपाषाणमयत्ववत्पर्वतविषयकदोषस्यैवाऽप्रसिद्धत्वान्न भवति, अतस्तत्र सत्प्रतिपक्षे दोषलक्षणस्याऽव्याप्तिः स्यादित्याशयेन सत्प्रतिपक्षस्याऽनित्यदोषतावादी प्राचीनः शंकते–न चेति। यत्र सिद्धान्तिनः 'पर्वतो वह्निमान् धूमादि'त्यत्र धूमहेतुना 'वह्निव्याप्यधूमवान्पर्वत'इतिपरामर्शो जातः तदानीमेव तत्र वादिनः 'वह्न्यभावव्याप्यपाषाणमयत्ववान्पर्वत'इति परामर्शभ्रमो जातस्तत्र द्वितीयपरामर्शभ्रमात्मकसत्प्रतिपक्षेण प्रथमपरामर्शविषयहेतोः धूमस्य आभासत्वं=सत्प्रतिपक्षत्वं युक्तं, तन्न स्यात्, **विशिष्टस्य**= पाषाणमयत्वे वह्न्यभावव्याप्यताविशिष्टत्वस्याऽप्रसिद्धत्वात्, 'वह्न्यभावव्याप्यपाषाणमयत्ववत्पर्वत'-इति ज्ञाननिष्ठप्रतिबन्धकताऽनतिरिक्तवृत्तियद्रूपावच्छिन्नविषयकत्वं तद्रूपस्य(वह्न्यभावव्याप्यपाषाणमयत्ववत्पर्वतत्वस्य) अप्रसिद्धतया तदाश्रयदोषस्य सुतरामप्रसिद्धत्वमिति भावः॥ सत्प्रतिपक्षस्य नित्यदोषतावादी नव्यनैयायिकः समाधत्ते–इष्टापत्तेरिति। सद्धेतूनां प्रतिपरामर्शभ्रमेऽपि न दुष्टत्वम्, अतस्तत्र दोषलक्षणाऽगमनमिष्टमेवेति भावः॥ इष्टापत्त्यनङ्गीकारे प्राचीननवीनोभयमतसाधारणं बाधकमुपन्यस्यति–अन्यथेति। प्रतिबन्धकीभूतभ्रमविषयस्यापि दोषत्वेन स्वीकारे, बाधस्यापि=पक्षे साध्याभावस्य भ्रमेण 'पर्वतो वह्न्यभाववानि'तिबाधस्यापि, अनित्यदोषतापत्तेः= अविशिष्टस्थलेऽपि सद्धेतौ 'अयं बाधित'इति व्यवहारप्रवर्तकत्वापत्तेरित्यर्थः॥ सत्प्रतिपक्षभ्रमेऽव्याप्त्यापत्तिभिया यदि यादृशविशिष्टविषयकत्वं नोच्येत किन्तु 'यद्विषयकत्वमि'त्येवोच्येत तदा बाधभ्रमेऽप्यतिव्याप्त्या बाधस्य अनित्यत्वापत्तिः स्यात्, अतः सत्प्रतिपक्षोऽपि नित्यदोषः स्वीक्रियतामिति भावः॥ **तस्मात्**=बाधस्य अनित्यदोषत्वापत्तिभिया, तत्र=धूमात्मकसद्धेतुकस्थले, वह्न्यभावव्याप्यपाषाणमयत्ववानितिपरामर्शभ्रमकाले वह्निव्याप्यधूमस्य न हेत्वाभासत्वं, किन्तु भ्रमात्=वह्न्यभावव्याप्यपाषाणमयत्ववानितिपरामर्शभ्रमात् 'पर्वतो वह्निमानि'त्यनुमितिप्रतिबन्धमात्रम्, धूमहेतुस्तु न दुष्टः=न सत्प्रतिपक्षितः। तत्र प्रतिपरामर्शभ्रमनाशे सति अनुमितिरुत्पद्यत एवेत्यर्थः॥ ननु अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकताया लक्षणघटकत्वे व्यभिचारादौ अव्याप्तिः, उदासीनेऽपि हेत्वनुल्लेखिनि धूमाऽभाववद्वृत्तित्वज्ञाने व्यभिचारत्वावच्छिन्नविषयकत्वस्य सत्त्वात् तत्र च अनुमितितत्करणान्यतरप्रतिबन्धकताया विरहेण तत्र व्यभिचारत्वावच्छिन्नविषयकत्वस्य अनुमितितत्करणान्यतरप्रतिबन्धकताऽनतिरिक्तवृत्तित्वाऽभावाद् इत्यत आह–इत्थं चेति। ज्ञाननिष्ठं यादृशविशिष्टविषयकत्वं प्रकृतानुमितितत्करणान्यतरप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशविशिष्टस्यैव दोषत्वकथनेनेत्यर्थः। साध्याभाववद्वृत्तिहेत्वादिकं=साध्याभाववति वृत्तिर्यस्य हेत्वादेः, तादृशं हेत्वादिकमेव व्यभिचारदोषः, आदिना साध्याभावविशिष्टपक्षो बाधदोषः, इत्येवं दोषा विशिष्टा ग्राह्याः। तथा च–यादृशविशिष्टपदेन व्यभिचारत्वादिविशिष्टं व्यभिचारादिकमादाय लक्षणसमन्वयो न कार्यः, किन्तु–व्यभिचारादिविशिष्टहेत्वादिकं दोषमादायैव, यथा ज्ञाननिष्ठं धूमाभाववद्वृत्तित्वविशिष्टव-

न्धमात्रं, हेतुस्तु न दुष्टः। इत्थं च साध्याभाववद्वृत्तिहेत्वादिकं दोषः । तद्वत्त्वं च हेतौ येन केनापि सम्बन्धेनेति नव्याः।

परे तु–यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्त्वं हेत्वाभासत्वम्, सत्प्रतिपक्षे विरोधिव्याप्त्यादिकमेव तथा, तद्वत्त्वं च हेतोर्ज्ञानरूपसम्बन्धेन । न चैवं

ह्निविषयकत्वं धूमाभाववद्वृत्तिवह्निरितिव्याप्तिज्ञानप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टः धूमाभाववद्वृत्तित्वविशिष्टवह्निरेव व्यभिचारदोषः, इत्येवमन्यत्राऽपि संगमनीयमिति भावः॥ ननु–व्यभिचारादिविशिष्टहेतोर्दोषत्वे तद्वत्त्वं हेतौ तादात्म्येन विवक्षणीयं, तथा च सति वह्न्यभावविशिष्टह्रदात्मकबाधस्य तादात्म्येन धूमेऽभावात् ह्रदपक्षकस्य धूमस्य दुष्टत्वं न स्यादित्यत आह–तद्वत्त्वं चेति। हेतौ तादृशविशिष्टदोषवत्त्वं च, येन केनापि सम्बन्धेन=यत्र यः सम्बन्धः प्रसिद्ध्यति तेन सम्बन्धेनेत्यर्थः। तत्र–धूमाभाववद्वृत्तिवह्नि'रितिदोषवत्त्वं तादात्म्येन वह्नौ बोध्यम्। 'वह्न्यभाववद्ध्रद'इतिबाधस्थले स्वविषयकज्ञानविषयत्वसम्बन्धेन, स्वं–वह्न्यभाववद्ध्रद'इतिदोषः, तद्विषयकज्ञानं 'वह्न्यभाववद्ध्रदो धूमश्चे'तिसमूहालम्बनं तद्विषयत्वं धूमे इति दोषवत्त्वं धूमस्य॥ वस्तुतस्तु–सर्वत्र स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन दोषवत्त्वं बोध्यम्। गुरुधर्मेण हेतुस्थले साधनाप्रसिद्धिस्थले च स्वविषयकज्ञानीयविशेष्यतादिसम्बन्धेन, इति भावः, इति नव्याः।

सत्प्रतिपक्षस्याऽनित्यदोषत्ववादिनः प्राञ्चस्तु–दुष्टानामेव हेतूनां विभजनात् तेषामेव लक्षणं वक्तव्यं, तदुपयोगितयैव दोषस्वरूपनिर्वचनं भवतीति वदन्ति, तन्मतमाह–परे त्विति। आहुरित्यनेनान्वयः॥ यद्विषयकत्वेनेति। ज्ञाननिष्ठं यद्विषयकत्वं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत् स दोषः तद्वत्त्वं दुष्टहेतुत्वमिति लक्षणार्थः। 'यादृशविशिष्टविषयकत्वं' न वक्तव्यम् , बाधभ्रमे सति सद्धेतोर्दुष्टत्वापत्तिस्तु 'अयं बाधित'इतिव्यवहाराऽभावादेव न भवतीति स्वयं वक्ष्यति॥ हेत्वाभासत्वं=हेतुवदाभासन्ते इति हेत्वाभासास्तत्त्वमिति॥ ननु स्वरूपसम्बन्धरूपावच्छेदकत्वस्य लक्षणघटकत्वे 'वह्न्यभावव्याप्यपाषाणमयत्ववत्पर्वत'इति परामर्शभ्रमस्यानुमितिप्रतिबन्धकत्वेन तन्निरूपितस्वरूपसम्बन्धरूपावच्छेदकताश्रयवह्न्यभावव्याप्त्यादेरपि दोषतया येन केनापि स्वरूपसम्बन्धादिना तद्वत्त्वमुपादाय वह्निमति पर्वते धूमस्य सद्धेतोरपि सत्प्रतिपक्षितत्वापत्तिरित्याशंकामिष्टापत्त्या परिहरति–सत्प्रतिपक्षे इति। 'पर्वतो वह्निमान् धूमात्, वह्न्यभाववान् पाषाणमयत्वात्'इत्यत्र विरोधिव्याप्तिः=साध्याभावव्याप्तिः=वह्न्यभाववदन्याऽवृत्तित्वमिति, आदिना–विरोधिपरामर्शो वा, तथा=दोष इति। एवकारेण तादृशव्याप्तिविशिष्टहेतोः, क्वचित् तादृशहेतुविशिष्टपक्षस्य च, अप्रसिद्धत्वेऽपि न क्षतिः, एकदेशस्यापि दोषत्वे बाधकाऽभावात् , सत्प्रतिपक्षस्यानित्यदोषत्वात् तत्र धूमे दुष्टत्वस्येष्टत्वाद्व इत्यर्थः सूचितः॥ ननु विरोधिव्याप्त्यात्मकदोषस्य प्रसिद्धत्वेऽपि तत्र तद्वत्त्वं धूमस्य केन सम्बन्धेनेत्याकांक्षायामाह–तद्वत्त्वं चेति। दोषवत्त्वं हेतोः ज्ञानरूपसम्बन्धेन=स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन, स्वं–वह्न्यभाववदन्याऽवृत्तित्वमितिव्याप्तिः,तद्विषयकज्ञानं 'वह्न्यभाववदन्याऽवृत्तित्वं धूमश्चे'तिसमूहालम्बनं,तद्विषयप्रकृतहेतुतावच्छेदकधूमत्ववत्त्वं धूमे इति भावः॥ नव्यनैयायिकस्तुल्ययुक्त्या बाधस्य अनित्यदोषतापत्तिं शंकते–न चेति। एवम्='लक्षणे यादृशविशिष्टविषयकत्वस्याऽनुक्तत्वे सति, स्वरूपसम्बन्धरूपाऽवच्छेदकतायाः प्रवेशे सति, एकज्ञानविषयत्वसम्बन्धेन च दोषवत्तास्वीकारे सतीत्यर्थः। 'पर्वतो वह्निमान्,–धूमादि'त्यत्र पर्वते वह्निसत्त्वेऽपि कस्यचित् जायमानस्य पक्षे=

वह्निमान् धूमादित्यादौ पक्षे बाधभ्रमस्य साध्याभावविषयकत्वेनानुमितिविरोधित्वाज्ज्ञानरूपसम्बन्धेन तद्वत्त्वस्यापि सत्त्वात्सद्धेतोरपि बाधितत्वापत्तिरिति वाच्यम्, तत्र ज्ञानस्य सम्बन्धत्वाकल्पनात्, अत्र सत्प्रतिपक्षित इति व्यवहारेण तत्कल्पनात्, तत्र बाधित इति व्यवहाराभावादित्याहुः।

अनुमितिविरोधित्वं च अनुमितितत्करणान्यतरविरोधित्वम्। तेन व्यभिचारिणि नाव्याप्तिः। दोषज्ञानं च यद्धेतुविषयकं तद्धेतुकानुमितौ प्रतिबन्धकं, तेनैकहेतौ

---

पर्वते, 'वह्न्यभाववान्पर्वत'इति बाधभ्रमस्य वह्न्यभावविषयकत्वेन 'पर्वतो वह्निमानि'त्यनुमितिप्रतिबन्धकतया वह्न्यभावस्य वह्न्यभाववत्पर्वतस्य च एकदेशस्यापि स्वरूपसम्बन्धरूपावच्छेदकताश्रयतया बाधत्वात् **तद्वत्त्वस्य**=वह्न्यभाववत्त्वस्य च'वह्न्यभाववान्पर्वतो धूमश्चे'तिस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन धूमे सत्त्वात्, **सद्धेतोः**=धूमस्यापि बाधितत्वापत्तिरिति भावः॥ प्राचीनः समाधत्ते–**तत्र ज्ञानस्येति**। **तत्र**=बाधकालीनधूमादिसद्धेतौ, **ज्ञानस्य**=स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वात्मकस्य, **सम्बन्धत्वाऽकल्पनात्**=सम्बन्धताकल्पनाया अप्रामाणिकत्वात्, धूमादिसद्धेतौ–'अयं बाधित'इत्यनुभवा( व्यवहारा )भाव एव दुष्टतायाः प्रतिबन्धक इति भावः॥

ननु–तर्हि तुल्ययुक्त्या सत्प्रतिपक्षस्थले विरोधिव्याप्तिकाले सद्धेतौ धूमेऽपि तथा सम्बन्धो न कल्पनीय इत्यत आह–**अत्र सत्प्रतिपक्षित इति**। **अत्र**=प्रतिपरामर्शकालीने धूमादिसद्धेतौ, 'अयं हेतुः सत्प्रतिपक्षित'इत्यनुभव( व्यवहार )सत्त्वेन, **तत्कल्पनात्**=स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वाख्यसम्बन्धकल्पनात्, धूमस्य सत्प्रतिपक्षितत्वं युक्तमेव, अथ **तत्र**=बाधभ्रमकालीने सद्धेतौ धूमे तु, 'अयं बाधित'इति व्यवहाराऽभावात्, प्रत्युत 'अयं न बाधितः, पुरुषस्तु भ्रान्त' इत्येव व्यवहारात् तस्य न बाधितत्वम्, अनुभवसिद्धव्यवहार एव दोषवत्तायाः सम्बन्धकल्पनाप्रयोजक इति भावः॥ अत्र=सत्प्रतिपक्षस्य बाधव्याप्यतया व्याप्यसत्त्वे व्यापकसत्त्वाऽवश्यंभावात् सद्धेतोः बाधितत्वमावश्यकमेव, यदि तथा व्यवहाराऽभावात् तस्याऽबाधितत्वमुच्यते तदा व्यापकनिवृत्त्या व्याप्यनिवृत्तेः सत्प्रतिपक्षितत्वमपि नाङ्गीकर्तव्यमेव, भ्रमादेव सत्प्रतिपक्षितत्वव्यवहारोपपत्तेरित्यस्वरसः ग्रन्थकारेण प्राचीनमते 'आहु'रित्यनेन सूचितः॥

**ज्ञाननिष्ठं 'यादृशविशिष्टविषयकत्वं प्रकृताऽनुमितिप्रतिबन्धकतानतिरिक्तवृत्तितत्त्वमिति'** नवीनाभिमतलक्षणस्य अनुमित्यप्रतिबन्धकतया व्यभिचारेऽव्याप्तिवारणाय अनुमितिपदमजहत्स्वार्थलक्षणया–अनुमिति–तत्करणान्यतरपरमाह–**अनुमितिविरोधित्वं चेति**। अनुमितिः, तत्करणं च व्याप्तिज्ञानं, एतदन्यतरनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वमित्यर्थः। तेन=एतादृशार्थकरणेन, 'पर्वतो धूमवान् वह्ने'रित्यत्र व्यभिचारिणि=धूमवदन्यवृत्तित्ववति वह्नौ, नाऽव्याप्तिः,=व्यभिचारस्य धूमवदन्याऽवृत्तित्वात्मकव्याप्तिज्ञानविरोधित्वात् तद्वत्त्वस्यैकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन वह्नौ सत्त्वादिति भावः॥ ननु–अनुमितिपदस्य तादृशान्यतरपरत्वेऽपि व्यभिचारेऽव्याप्तिः, 'पर्वतो, वह्निमान्, प्रमेयत्वादि'त्यत्र प्रमेयत्वधर्मिक–वह्निमदन्यवृत्तित्वात्मकव्यभिचारज्ञाने सत्यपि धूमलिङ्गकानुमितेर्जायमानत्वाद् अनुमितिकरणपदेन–धूमधर्मिकवह्निमदन्याऽवृत्तित्वात्मकव्याप्तिज्ञानमादाय तत्प्रति प्रमेयत्वधर्मिक–वह्निमदन्यवृत्तित्वात्मकव्यभिचारज्ञानस्य अविरोधित्वात् तत्र व्यभिचारेऽव्याप्तेः प्रमेयत्वस्य व्यभिचारित्वं न स्यादित्यत आह–**दोषज्ञानं चेति**। व्यभिचारादिदोषज्ञानं च, **यद्धेतुविषयकं**=स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वादिसम्बन्धेन यद्धेतुमाश्रित्य दोषेण जन्यते, **तद्धेतुकानुमितौ**=तल्लिङ्गकानुमिति-तत्करणान्यतरे प्रति-

व्यभिचारज्ञाने हेत्वन्तरेणानुमित्युत्पत्तेः, तदभावानवगाहित्वाच्च व्यभिचारज्ञान-

बन्धकं वक्तव्यम् । तथा च–'दोषवत्त्वावच्छेदकसम्बन्धावच्छिन्नयद्धेतुनिरूपिताधेयताव-च्छादृशविशिष्टविषयकनिश्चयत्वं प्रकृतयद्धेतुकानुमितितत्करणान्यतरनिष्ठप्रतिबध्यता-निरूपितप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्धेतुधर्मिकस्य तस्य तत्सम्बन्धेन दोषत्व'–मिति फलितोऽर्थः ॥ यथाश्रुतार्थलक्षणपरित्यागे बीजं दर्शयन् यद्धेत्वादिघटितलक्षणानुसरणस्य फलं दर्शयति–तेनेति । यद्धेत्वादिघटितलक्षणकरणेनेत्यर्थः, न क्षतिरित्यनेन अन्वयः, धूमधर्मिकव्याप्ति-ज्ञानस्याऽविरोधित्वेऽपि प्रमेयत्वधर्मिकव्यभिचारे नाऽव्याप्तिरिति भावः ॥ बीजं तु 'एकहेतौ व्यभि-चारज्ञाने हेत्वन्तरेणाऽनुमित्युत्पत्ते'रित्यनेन दर्शितम्, प्रमेयत्वहेतौ धूमव्यभिचारज्ञाने सत्यपि तदानीमेव हेत्वन्तरेण धूमेन 'पर्वतो वह्निमानि'त्यनुमितेर्जायमानत्वात् ( बीजात् ) 'हेतुविशेषम-न्तर्भाव्य प्रतिबध्यप्रतिबन्धकभावः उक्तलक्षणेऽनुसरणीय इत्याशयः । ननु–तद्धेतुविशेष्यकतद्धेतु-कव्यभिचारज्ञानस्य साक्षात तद्धेतुकाऽनुमितिं प्रत्येव प्रतिबन्धकत्वं कल्प्यताम्, अनुमितिपदस्य लक्षणाया अकल्पनेन लाघवादित्यत आह–तदभावानवगाहित्वाच्चेति । ग्राह्याऽभावानव-गाहित्वाच्चेत्यर्थः । यथा 'पक्षः साध्याऽभाववानि'तिबाधनिश्चयस्य ग्राह्याभावावगाहिनिश्चयतया साक्षादनुमितिप्रतिबन्धकता भवति । तत्र, ग्राह्यस्य–तद्ग्राह्यविषयस्य='साध्यवत्पक्ष'इत्यनु-मित्यात्मकज्ञानविषयस्य, तस्य=साध्यस्य योऽभावः वह्न्यभावस्तत्प्रकारकनिश्चयत्वेन प्रतिबन्ध-कता भवति 'ह्रदो वह्निमानि'तिग्राह्यवह्निप्रकारकनिश्चयं (अनुमितिं) प्रति 'ह्रदो वह्न्यभाववानि' तिग्राह्याभाव( वह्न्यभाव ) प्रकारकनिश्चयस्य साक्षाद्विरोधित्वानुभवात् । वह्निमदन्यवृत्तितावत्प्र-मेयत्वमित्यादिव्यभिचारनिश्चयस्तु तदभावा( ग्राह्याभावा=वह्न्यभावा )नवगाहितया साक्षात् तद्धेतुकानुमितिं प्रति न प्रतिबन्धकः, अतोऽनुमितिपदस्य अनुमितितत्करणान्यतरलक्षणापरत्वक-ल्पनमावश्यकमिति, तथा च व्यभिचारे न क्षतिः=न दोषलक्षणाऽव्याप्तिरिति भावः ॥ अत्र लक्षणे प्रकृतानुमितिप्रतिबन्धकताशून्येच्छादावपि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायाः सत्त्वेन अनतिरिक्तवृत्तित्वाऽसंभवात् असंभववारणाय–ज्ञानवृत्तित्वार्थकं 'ज्ञानस्ये'तिपदमुपात्तम् । अथ तथापि 'ह्रदो वह्निमानि'त्यनुमितिप्रतिबन्धकताशून्ये 'ह्रदो वह्निमान्नवे'तिसंशये, वह्निमान् ह्रदो वह्न्यभाववानि'तिआहार्यज्ञाने, 'ह्रदो वह्न्यभाववान्–इतीदं ज्ञानम् अप्रमा'–इत्यप्रामाण्यज्ञानाऽऽ-स्कन्दितज्ञाने च, वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायाः सत्त्वेन असंभवः, तद्वारणाय–ज्ञानपदस्य अनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयपरत्वं वक्तव्यम् । अनुमितिपदस्य अनुमिति-तत्करणाऽन्य-तरपरत्वापेक्षया लाघवात् 'साध्यव्याप्यहेतुमान्पक्षः साध्यवानि'तिसमूहालम्बनात्मकाऽनुमिति-परत्वं वक्तव्यम् । व्यभिचारादेरपि तादृशानुमितिं प्रति प्रतिबन्धकत्वात् । तथा च–'यद्रूपावच्छि-न्नविषयकाऽनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धक-ताऽनतिरिक्तवृत्ति तद्रूपावच्छिन्नत्वं दोषत्वमि'ति फलितोऽर्थः । ननु–तथापि मेयत्ववि-शिष्टव्यभिचारेऽतिव्याप्तिः, अनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दित–मेयत्वविशिष्टव्यभिचारत्वावच्छि-न्नविषयकनिश्चयत्वस्यापि प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तित्वादिति चेन्न, विशिष्टान्तरा-ऽघटितत्वेन यद्रूपस्य विशेषणीयत्वात् । अन्यद् विशिष्टं विशिष्टान्तरं तदघटितत्वात् । विशिष्टान्तरा-ऽघटितत्वं च 'स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकम् अथ च प्रकृतानुमितिनिष्ठप्रतिबध्य-तानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नाऽविषयकप्रतीति-विषयतावच्छेदकत्वमेव । तथा च 'स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकम अथ

**स्यानुमितिविरोधित्वाभावेऽपि न क्षतिरिति संक्षेपः।**
**यादृशसाध्यपक्षहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम्।**

---

च प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं स्वं तादृशस्वावच्छिन्नविषयकाऽनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्रूपवत्त्वमिति लक्षणं फलितम्। यद्रूपावच्छिन्ने लक्षणं संगमनीयं तदेव स्वपदार्थः। भवति हि व्यभिचारत्वाद्यवच्छिन्नाऽविषयकप्रतीतिविषयताऽवच्छेदकीभूता ये बाधत्वादयस्तदवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं व्यभिचारत्वादीति तदवच्छिन्ने लक्षणसंगतिः। मेयत्वविशिष्टव्यभिचारत्वादेः स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वाद्यवच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वाऽभावान्न तदवच्छिन्नेऽतिव्याप्तिः। **ननु**–तथापि बाधेऽव्याप्तिः, वह्न्यभावं धर्मितावच्छेदकीकृत्य ह्रदत्वप्रकारकज्ञाने वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वस्य 'ह्रदो वह्निमानि'त्यनुमितिप्रतिबन्धकताऽतिरिक्तवृत्तित्वाद् अत आह–**संक्षेप इति**। तद्वारणाय–"तादृशनिश्चयवृत्तित्वविशिष्ट–यद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नविषयकत्वव्यापिका या प्रकृताऽनुमितिप्रतिबन्धकता तद्रूपावच्छिन्नविशिष्टतद्रूपस्यै'व दोपलक्षणत्वात्। वह्न्यभावधर्मितावच्छेदकह्रदत्वप्रकारकज्ञाने वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविषयकत्वाऽभावेन वह्न्यभावप्रकारकह्रदत्वावच्छिन्नविशेष्यकनिश्चये एव तादृशविषयकत्वस्य सत्वेन तत्र अनुमितिप्रतिबन्धकतायाश्च सत्त्वेन तत्र तादृशविषयकत्वव्यापकतायाः सत्त्वेन वह्न्यभावत्वावच्छिन्नविशिष्टह्रदत्ववत्त्वस्य वह्न्यभाववद्ध्रदे समन्वयात्॥ एवमन्यत्राऽपि प्रकारान्तरेण दोषा वारणीया इति **'संक्षेप'** इत्यनेन सूचितम्॥

**ननु**–'निर्वह्निः पर्वतो,–वह्निमान्–धूमादि'त्यत्र निर्वह्न्यभाव(वह्नि)विशिष्टात्मकाश्रयासिद्धाव्याप्तिः, वह्न्यभावात्मकपक्षतावच्छेदकावच्छिन्नविशेष्यक–वह्निप्रकारकज्ञानस्य स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकज्ञानत्वस्वरूपोऽऽहार्यतया अनुमितिरूपत्वाऽभावेन प्रकृताऽनुमित्यप्रसिद्धेः तन्निष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य कुत्राऽप्यसत्त्वाद्–अत आह–**यादृशसाध्येति**। तद्धर्मावच्छिन्नसाध्यपक्षहेतुकानुमितीच्छया न्यायप्रयोगकरणे यद्यद्धर्मावच्छिन्ने दोषव्यवहारः सम्प्रदायसिद्धः तावदन्यान्यत्वं ( तावद्दोषभिन्नभिन्नत्वं ) तत्रत्यदोषसामान्यलक्षणमित्यर्थः। तेन 'निर्वह्निः पर्वतो–वह्निमानि'त्यनुमितेरप्रसिद्धावपि अस्मिँल्लक्षणेऽनुमितेरप्रवेशात् तदप्रसिद्धिनिबन्धना नाऽव्याप्तिः, तत्र 'साध्यतावच्छेदकमात्रावच्छिन्नसाध्यप्रकारकपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकबोधजनकप्रतिज्ञावाक्ये निर्वह्निः पर्वतो' वह्निमानि'तिप्रयुक्ते सति तत्र 'पक्षतावच्छेदकाऽभाववान्पक्ष'इति दोषव्यवहारः सम्प्रदायसिद्धो भवतीति तादृशाश्रयासिद्धिभिन्नः समग्रसंसारस्तद्भिन्नत्वम् आश्रयाऽसिद्धाविति दोषत्वमुपपन्नमिति भावः॥ नन्वेतादृशसामान्यलक्षणस्य क्वचिद्दोषद्वयसाधारण्येन क्वचिद्दोषत्रयसाधारण्येन च हेत्वाभासानां पञ्चधा विभागोऽसंगत इत्यत आह—**पञ्चत्वकथनमिति**। तत्संभवस्थलं=पञ्चहेत्वाभाससंभवस्थलं–'वायुः गन्धवान्–स्नेहादि'ति, 'कांचनमयपृथिवी–भास्वरशब्दवती–द्रवितज्ञानवत्त्वादि'त्यादि च, तत्र शब्दाभाववति आत्मनि ज्ञानस्य वृत्तित्वाद्व्यभिचारः, साध्याभावव्याप्तत्वाद् विरोधः, 'शब्दाभाववती अनाकाशत्वादि'ति प्रतिप्रयोगे सत्प्रतिपक्षः, पक्षादौ तत्तदवच्छेदकाऽभावात् पक्षाऽसिद्ध्यादयः, पक्षे हेतोरभावात्स्व-

**पञ्चत्वकथनन्तु तत्सम्भवस्थलाभिप्रायेण।**

**एवञ्च साधारणाद्यन्यतमत्वमनैकान्तिकत्वम् । साधारणः साध्यवदन्यवृत्तिः, तेन च व्याप्तिज्ञानप्रतिबन्धः क्रियते। असाधारणः साध्यासमानाधिकरणो हेतुः, तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते। ( यथा शब्दो नित्यः शब्दत्वादित्यादावसाधारण्यं, शब्दोऽनित्यः शब्दत्वादित्यादौ त्वसाधारण्यभ्रमः )। अन्ये तु**

---

रूपाऽसिद्धिः, पक्षे साध्याभावाद्बाधश्चेति ॥ तादृशे स्थले सर्वहेत्वाभाससम्भवात्पंचत्वकथनं नाऽसंगतिमिति भावः ॥ हेतुहेत्वाभासभेदः प्रपञ्च्यमानः षट्सप्ततिशत (७६००) मिति न्यायवार्तिकम् ॥

हेत्वाभासलक्षणमुक्त्वा मूले वक्ष्यमाणसाधारणादिदोषाणामपि 'आद्यः साधारणस्तु स्यादित्यादि' विभागवाक्याल्लब्धं 'साधारणाऽसाधारणाऽनुपसंहारिभिन्नभिन्नत्वं व्यभिचारत्वमिति सामान्यलक्षणमत्रैव प्रसंगात् स्फुटीकरोति-**एवं च साधारणाद्यन्यतमत्वमिति**। साधारणादोत्यादिना असाधारणाऽनुपसंहारिणोः परिग्रहः। अनैकान्तिकत्वम्=व्यभिचारत्वम्। मूलोक्तसाधारणादिलक्षणानां प्राचीनाऽनुमतत्वेन तेषां मध्ये केषाञ्चिल्लक्षणानां नवीनमतरीत्या दुष्टत्वेन तन्मते साधारणादीनां स्वयं लक्षणमाह-**साधारण** इति। 'पर्वतो वह्निमान्-प्रमेयत्वादि'त्यत्र साधारणव्यभिचारः 'साध्यवदन्यवृत्तिहेतु'रेव दोषः, साध्यं विद्यतेऽस्येति साध्यवान् पक्षः पर्वतादिः, ततोऽन्यः साध्यवदन्यो जलह्रदादिर्विपक्षः, तद्वृत्तिर्हेतुः साधारणोऽनैकान्तिक इत्यर्थः ॥ **तेन च**-साध्यवदन्यवृत्तिरूपसाधारणव्यभिचारज्ञानेन, **व्याप्तिग्रहप्रतिबन्धः**=साध्यवदन्याऽवृत्तित्वरूपव्याप्तिज्ञानस्य प्रतिबन्धः क्रियते, दोषवत्त्वं च तादात्म्येन एकज्ञानविषयत्वेन वा बोध्यम्। असाधारणव्यभिचारं लक्षयति-**असाधारण इति**। असाधारणव्यभिचारः 'साध्याऽसमानाधिकरणहेतु'रितिदोषः, 'शब्दः,-नित्यः,-शब्दत्वादि'त्यत्र नित्यत्वाऽसमानाऽधिकरणशब्दत्वं' दोषः। **तेन**='साध्याऽसमानाधिकरणहेतु'रितिदोषज्ञानेन, साध्यसामानाधिकरण्यात्मकव्याप्तिज्ञानस्य प्रतिबन्धः क्रियते, दोषवत्त्वं च तादात्म्येन एकज्ञानविषयत्वेन वा बोध्यम्। उदाहरणमाह-**यथेति**। शब्दः पक्षः, नित्यत्वं-प्रागभावध्वंसाऽप्रतियोगित्वं स्वरूपेण साध्यम्, शब्दत्वजातिः समवायेन हेतुः। न्यायमते शब्दस्य प्रागभावध्वंसप्रतियोगित्वम् अतः असाधारण्यं साध्याऽसमानाऽधिरणत्वं हेतौ भवतीति। मीमांसकास्तु ईश्वरानङ्गीकारात्, अनित्यशब्दस्य अनादित्वाऽभावाद् वेदस्य अनादितारक्षणार्थं शब्दं नित्यं मन्यन्ते, तथा च तैः 'शब्दः-अनित्यः-शब्दत्वादि'त्यत्र 'साध्याऽसमानाधिकरणहेतु'रित्यसाधारणव्यभिचारो मन्यते, नैयायिकस्तत्र भ्रान्तिमाह-**'शब्दोऽनित्यः शब्दत्वादि'त्यादौ तु असाधारण्यभ्रम** इति। 'शब्दः-अनित्यः,-कार्यत्वा'दितिकार्यत्वहेतुना शब्दस्य अनित्यत्वे निश्चिते सत्यपि, यदि कस्यचित्तत्र 'अनित्यत्वाऽसमानाधिकरणशब्दत्वमि'ति दोषज्ञानं स्यात् तर्हि सः **असाधारण्यभ्रमः**=अनित्यत्वसामानाधिकरण्यवति शब्दत्वे अनित्यत्वसामानाधिकरण्याऽभाववत्ताज्ञानं भ्रम इति बोध्यमित्यर्थः ॥ तथा च यावद्भ्रमस्तावद्व्याप्तिज्ञानप्रतिबन्धमात्रं हेतुस्तु न दुष्टः, भ्रमनाशे सति व्याप्तिज्ञानेन अनुमितिः स्यादेवेति, असाधारण्यस्यापि नित्यदोषत्वात्, 'यादृशविशिष्टविषयकनिश्चयत्वमित्यादिदोषसामान्यलक्षणस्यापि तत्राऽभावात् न दुष्टत्वमिति नव्यनैयायिकाशयः ॥ असाधारण्यस्य अनित्यदोषतावादिनः प्राचीनस्य मतमाह-**अन्ये त्विति।** वदन्तीत्यनेनान्वयः। प्राचीनानामयमाशयः-पक्षे साध्यसन्देहदशायामेव असाधारणस्य हेत्वाभासता, न तु निश्चयदशायां, तदानीं पक्षस्यैव निश्चितसाध्यवत्त्वेन सपक्षतया सपक्षव्यावृत्तत्वस्य हेतोरभावात्, अतः अनित्यदोषत्वमसाधारणस्येति। असाधारणव्यभिचारस्य लक्षणं 'सपक्षाऽवृत्ति-

**सपक्षावृत्तिरसाधारणः। सपक्षश्च निश्चितसाध्यवान्। इत्थञ्च शब्दोऽनित्यः शब्दत्वादित्यादौ यदा पक्षे साध्यनिश्चयस्तदा नासाधारण्यं,-तत्र हेतोर्निश्चयादिति वदन्ति। अनुपसंहारी चात्यन्ताभावाप्रतियोगिसाध्यकादिः, अनेन व्यतिरेकव्याप्तिज्ञानप्रतिबन्धः क्रियते॥**

**विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी, अयं साध्याभावग्रहसामग्रीत्वेन**

---

हेतुत्वमि'ति। सपक्षे=निश्चितसाध्यवति न वृत्तिर्यस्य सः सपक्षाऽवृत्तिर्हेतुः। सपक्षपदार्थमाह–**निश्चितसाध्यवानिति**। तथा च सपक्षाऽवृत्तित्वं=निश्चितसाध्यवदवृत्तित्वम्, साध्यवदवृत्तित्वं च साध्याऽसामानाधिकरण्यम्, हेतौ साध्याऽसामानाधिकरण्ये निश्चिते साध्यसामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धः फलमिति। इत्थं च=असाधारण्यघटकसपक्षत्वस्य निश्चयघटितत्वे च,'शब्दः–अनित्यः,–शब्दत्वादि'त्यत्र यदा पक्षे शब्दे साध्यस्य नित्यत्वस्य निश्चयस्तदा, तत्र=निश्चितसाध्यवति पक्षे, हेतौ=शब्दत्वस्य निश्चयात्,=साध्यसामानाधिकरण्यतया निश्चितत्वात् 'साध्याऽसमानाधिकरणत्वाऽभावात् न असाधारण्यदोष इति **वदन्ति**। एतन्मते हेतोः सपक्षाऽवृत्तित्वज्ञानस्य यथाश्रुतस्य नीलपटावृत्तित्वज्ञानस्य घटवत्ताज्ञाने इव साक्षात् साध्यसामानाधिकरण्यात्मकव्याप्तिज्ञानप्रतिबन्धकत्वाऽभावात् पक्षधर्मताज्ञानप्रतिबन्धकत्वाऽभावाद्‌ अनुमितिप्रतिबन्धकत्वाभावाच्च हेतुनिष्ठसपक्षाऽवृत्तित्वस्य न हेत्वाभासत्वं, परन्तु हेतोरसपक्षाऽवृत्तित्वज्ञाने सपक्षवृत्तित्वघटितपञ्चरूपोपपन्नत्वेन लिङ्गस्य पञ्चावयववाक्याद्‌ बोधाऽसंभवेन मानसपरामर्शाऽसंभवात् परस्यानुमितिर्न संभवतीति सपक्षवृत्तित्वज्ञानविघटकतया उपाधिवद्‌ दूषकत्वमिति **वदन्तीत्यनेन** अस्वरसः सूचितः॥ अनुपसंहारिणं लक्षयति–**अनुपसंहारीति**। व्याप्तेरुपसंहारस्थलस्य सपक्षस्य विरहाद्‌ अनुपसंहारी। 'अनुपसंहारिव्यभिचारस्य लक्षणम् 'अत्यन्ताऽभावाऽप्रतियोगिसाध्यकादिहेतुत्वमि'ति। अत्यन्ताऽभावस्य न प्रतियोगि साध्यं पक्षः स्वं हेतुश्च यस्य हेतोः सः, पक्षो वा साध्यं वा हेतुर्वा यत्र अत्यन्ताऽभावाऽप्रतियोगी (केवलान्वयी) भवेत् तत्राऽनुपसंहारिव्यभिचारो बोध्यः। यथा–'सर्वम्,–अभिधेयं,–प्रमेयत्वादि'ति, तत्र–अभिधा–ईश्वरेच्छा शक्तिः, तद्विषयत्वस्य साध्यस्य सर्वत्र सत्त्वेन, प्रमेयत्वस्य=ईश्वरीयप्रमाविषयत्वस्य च हेतोः सर्वत्र सत्त्वेन, पक्षस्यापि तादात्म्येन सर्वात्मकतया, 'अत्यन्ताऽभावाऽप्रतियोगिसाध्यकादिहेतु'रितिदोषस्तत्र वर्तते, **अनेन**='अत्यन्ताभावाऽप्रतियोगिहेतु'रितिदोषेण–'साध्याऽभावव्यापकीभूताऽभावप्रतियोगिहेतुरि'तिव्यतिरेकव्याप्तिज्ञानप्रतिबन्धः क्रियते। दोषवत्त्वं हेतौ तादात्म्येन स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन वा। वस्तुतस्तु–केवलान्वयिसाध्यकादिस्थले अन्वयव्याप्तिज्ञानादनुमितेर्जायमानत्वात् न तत्र हेत्वाभासत्वमिति बोध्यम्॥

विरुद्धं लक्षयति–**विरुद्धस्त्विति**। 'साध्यव्यापकीभूताभावप्रतियोगिहेतु'र्विरोधदोषइत्यर्थः, नव्यमते दोषलक्षणस्य हेतुघटितत्वात्, यथा–'शब्दः–नित्यः–कृतकत्वादि'त्यत्र नित्यत्वस्य व्यापको योऽभावः कृतक(कार्य)त्वाभावः, तत्प्रतियोगि कृतकत्वमिति। 'साध्याभावव्याप्तो हेतुर्विरोध'इति भावः। **अयं**=विरोधस्तु, **साध्याभावग्रहसामग्रीत्वेन**=साध्याभावज्ञानस्य (साध्याभावानुमितेः) या सामग्री 'हेतुमत्ताज्ञानसहकृता 'साध्याभावव्याप्य(समानाधिकरण)हेतु'रितिव्याप्तिज्ञानात्मिका दोषरूपा, तादृशसामग्रीत्वेन साक्षात्'शब्दः–नित्य'इत्यनुमितिं प्रति प्रतिबन्धको भवति। विरोधज्ञानस्य परामर्शप्रतिबन्धकत्वं व्याप्तिज्ञानप्रतिबन्धकत्वमपि मतभेदेन कल्प्यते इति बोध्यम्। दोषवत्त्वं च हेतौ–स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेनेति॥ ननु–सत्प्रतिपक्षवि-

**प्रतिबन्धकः। सत्प्रतिपक्षे तु प्रतिहेतुः साध्याभावसाधकः, अत्र तु एक एव हेतुरिति विशेषः। साध्याभावसाधक एव साध्यसाधकत्वेनोपन्यस्त इत्यशक्तिविशेषोपस्थापकत्वाच्च विशेषः।**

**सत्प्रतिपक्षः साध्याभावव्याप्यवान्पक्षः। अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वो-**

---

रुद्धयोरुभयोरपि साध्याभावसाधकतया भेदो न स्यात्, एवं च सति साध्याभावव्याप्तिविशिष्टहेतुरेव सत्प्रतिपक्षोऽस्तु लाघवात्, तथा च सत्प्रतिपक्षस्वीकार एवाऽनुचित इत्याशंकायामाह—**सत्प्रतिपक्षे त्विति।** प्रतिहेतुः=स्वसाध्यविरुद्ध-साध्याभावव्याप्यःस्वभिन्नहेतुः, साध्याभावसाधकः। **अत्र तु**=विरोधस्थले तु, एक एव हेतुः=साध्यसाधकतयोपन्यस्त एव हेतुः,—स्वसाध्यविरुद्ध-साध्याभावव्याप्यः स्वएवेति विशेषः=भेदः—इत्यर्थः। तथाच प्रतिहेतोः विरोधिपरामर्शद्वारैव प्रकृतानुमितिविघटकत्वात् सत्प्रतिपक्षस्य 'साध्याभावव्याप्यवत्पक्षा'त्मकत्वं भिन्नदोषत्वं च युक्तमिति भावः॥ **ननु**—साध्याभावसाधकत्वेन समानत्वेऽपि हेतुद्वये सत्प्रतिपक्षो हेत्वैक्ये तु विरुद्ध इत्युच्यते तदा तुल्यन्यायेन पक्षभेदात् साध्यभेदात् अन्वयव्याप्तिभेदादपि च एकजातीयस्यापि नानासत्प्रतिपक्षत्वापत्तिरित्यत आह—**साध्याभावसाधक एवेति।** यथा नित्यत्वाऽभावसाधकः कार्यत्वहेतुः नित्यत्वसाधकत्वेन प्रयुक्तः, **इत्यशक्तिविशेषोपस्थापकत्वाच्च**='साध्याभावव्याप्यस्यैव तव साध्यव्याप्यत्वभ्रम'इति स्थापनावादिनं प्रति भ्रमरूपाऽशक्तिविशेषसूचकत्वाच्च, विरुद्धस्थले प्रयोक्तृपुरुषनिष्ठाऽशक्तिविशेषदोषज्ञापकत्वं सत्प्रतिपक्षे तु न तथेति दोषविशेषज्ञापकत्वाऽज्ञापकत्वात्मकफलभेदात्तयोर्भेद इति। तथा च—एकजातीयस्य सत्प्रतिपक्षस्य तारतम्येन अशक्तिविशेषसूचकत्वाऽभावान्न पक्षसाध्यव्याप्त्यादिभेदेन भेदापत्तिरिति भावः॥ 'च'कारेण साध्य-तदभावोभयानुमितिप्रतिबन्धात्मकफलकत्वाऽभावादपि विरुद्धः सत्प्रतिपक्षतो भिन्न इति बोध्यम्॥

रघुनाथशिरोमणिमतेन सत्प्रतिपक्षलक्षणमाह—**साध्याभावव्याप्यवान्पक्ष इति।** यथा 'ह्रदो—वह्निमान्,—धूमात्,—ह्रदो वह्न्यभाववान्—जलादि'त्यत्र—प्रकृतहेतुकसाध्याभावः वह्न्यभावस्तद्व्याप्यजलवान् ह्रदः' एवं प्रतिहेतुकसाध्याभावः—वह्न्यभावाभावः वह्निः, तद्व्याप्यो धूमस्तद्वान् ह्रद'इति परस्परं दोषः, तत्र—'वह्न्यभावव्याप्यजलवान्ह्रद'इतिदोषेण 'ह्रदो वह्निमानि'त्यनुमितिप्रतिबन्धः, दोषवत्ता च—धूमे 'स्वविषयकसमूहालम्बनज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन। समूहालम्बनज्ञानं 'वह्न्यभावव्याप्यजलवान्ह्रदो धूमश्चे'ति। एवं 'वह्निव्याप्यधूमवान्ह्रद'इतिदोषेण 'ह्रदो वह्न्यभाववानि'त्यनुमितिप्रतिबन्धो भवति। दोषवत्ता च जले—स्वविषयकसमूहालम्बनज्ञानविषयप्रतिहेतुतावच्छेदकवत्त्वसम्बन्धेन। समूहालम्बनज्ञानं—वह्निव्याप्यधूमवद्ध्रदो जलं चे'ति॥ वस्तुतस्तु तत्र जलं न दुष्टं भ्रमे नष्टे सत्यनुमापकत्वात्॥ प्राचीनमतेन सत्प्रतिपक्षलक्षणमाह—**अगृहीतेति।** अगृहीतं=न निश्चितम् अप्रामाण्यं यत्र, तादृशं यत्—'साध्यव्याप्यवत्त्वोपस्थितिः=साध्यव्याप्य(हेतु)वानिति ज्ञानम्, तत्कालीनं यत् 'अगृहीताऽप्रामाण्यक-साध्याभावव्याप्यवत्ताज्ञानं तद्विषयो हेतुः—**तथा**=सत्प्रतिपक्ष इत्युच्यते। अगृहीताऽप्रामाण्यकवह्निव्याप्यधूमवद्ध्रदोपस्थितिकालीनाऽगृहीताप्रामाण्यक—वह्न्यभावव्याप्यजलवद्ध्रदोपस्थितिविषयजलं दोषः, एवं अगृहीताऽप्रामाण्यक — वह्न्यभावव्याप्यजलवद्ध्रदोपस्थितिकालीनाऽगृहीताऽप्रामाण्यकवह्निव्याप्यधूमवद्ध्रदोपस्थितिविषयधूमो दोषः इति॥दोषवत्त्वं च एकज्ञानविशेष्यतासम्बन्धेन॥ 'वह्निव्याप्यधूमवान् ह्रद'इतिज्ञाने यदि 'इदं ज्ञानम् अप्रमा'—इत्यप्रामाण्यग्रहः स्यात् तर्हि तस्य निर्बलतया वह्न्यभावव्याप्यजलवान्ह्रद'इतिपरामर्शेन 'ह्रदो वह्न्यभाववानि'त्यनुमितिरेव स्यात्, एवं 'वह्न्यभावव्याप्य-

**सपक्षावृत्तिरसाधारणः। सपक्षश्च निश्चितसाध्यवान्। इत्थञ्च शब्दोऽनित्यः शब्दत्वादित्यादौ यदा पक्षे साध्यनिश्चयस्तदा नासाधारण्यं,-तत्र हेतोर्निश्चयादिति वदन्ति। अनुपसंहारी चात्यन्ताभावाप्रतियोगिसाध्यकादिः, अनेन व्यतिरेकव्याप्तिज्ञानप्रतिबन्धः क्रियते॥**

**विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी, अयं साध्याभावग्रहसामग्रीत्वेन**

---

हेतुत्वमि'ति। सपक्षे=निश्चितसाध्यवति न वृत्तिर्यस्य सः सपक्षाऽवृत्तिहेतुः। सपक्षपदार्थमाह–**निश्चितसाध्यवानिति**। तथा च सपक्षाऽवृत्तित्वं=निश्चितसाध्यवदवृत्तित्वम्, साध्यवदवृत्तित्वं च साध्याऽसामानाधिकरण्यम्, हेतौ साध्याऽसामानाधिकरण्ये निश्चिते साध्यसामानाधिकरण्यरूप-व्याप्तिज्ञानप्रतिबन्धः फलमिति। इत्थं च=असाधारण्यघटकसपक्षत्वस्य निश्चयघटितत्वे च, 'शब्दः–अनित्यः,–शब्दत्वादि'त्यत्र यदा पक्षे शब्दे साध्यस्य नित्यत्वस्य निश्चयस्तदा, तत्र=निश्चितसाध्यवति पक्षे, **हेतौ**=शब्दत्वस्य निश्चयात्,=साध्यसामानाधिकरण्यतया निश्चितत्वात् 'साध्याऽसमानाधिकरणत्वाऽभावात् न असाधारण्यदोष इति **वदन्ति**। एतन्मते हेतोः सपक्षाऽवृत्तित्वज्ञानस्य यथाश्रुतस्य नीलपटावृत्तित्वज्ञानस्य घटवत्ताज्ञाने इव साक्षात् साध्यसामानाधिकरण्यात्मकव्याप्तिज्ञान-प्रतिबन्धकत्वाऽभावात् पक्षधर्मताज्ञानप्रतिबन्धकत्वाऽभावाद् अनुमितिप्रतिबन्धकत्वाभावाच्च हेतुनिष्ठसपक्षाऽवृत्तित्वस्य न हेत्वाभासत्वं, परन्तु हेतोस्सपक्षाऽवृत्तित्वज्ञाने सपक्षवृत्तित्वघटितपञ्चरूपोपपन्नत्वेन लिङ्गस्य पञ्चावयववाक्याद् बोधाऽसंभवेन मानसपरामर्शाऽसंभवात् परस्यानुमितिर्न संभवतीति सपक्षवृत्तित्वज्ञानविघटकतया उपाधिवद् दूषकत्वमिति **वदन्तीत्यनेन** अस्वरसः सूचितः॥ अनुपसंहारिणं लक्षयति–**अनुपसंहारीति**। व्याप्तेरुपसंहारस्थलस्य सपक्षस्य विरहाद् अनुपसंहारी। 'अनुपसंहारिव्यभिचारस्य लक्षणम् 'अत्यन्ताऽभावाऽप्रतियोगिसाध्यकादिहेतुत्वमि'ति। अत्यन्ताऽभावस्य न प्रतियोगि साध्यं पक्षः स्वं हेतुश्च यस्य हेतोः सः, पक्षो वा साध्यं वा हेतुर्वा यत्र अत्यन्ताऽभावाऽप्रतियोगी (केवलान्वयी) भवेत् तत्राऽनुपसंहारिव्यभिचारो बोध्यः। यथा–'सर्वम्,–अभिधेयं,–प्रमेयत्वादि'ति, तत्र–अभिधा–ईश्वरेच्छा शक्तिः, तद्विषयत्वस्य साध्यस्य सर्वत्र सत्त्वेन, प्रमेयत्वस्य=ईश्वरीयप्रमाविषयत्वस्य च हेतोः सर्वत्र सत्त्वेन, पक्षस्यापि तादात्म्येन सर्वात्मकतया, 'अत्यन्ताऽभावाऽप्रतियोगिसाध्यकादिहेतु'रितिदोषस्तत्र वर्तते, **अनेन**='अत्यन्ताभावाऽप्रतियोगिहेतु'रितिदोषेण–'साध्याऽभावव्यापकीभूताऽभावप्रतियोगिहेतुरि'तिव्यतिरेकव्याप्तिज्ञानप्रतिबन्धः क्रियते। दोषवत्त्वं हेतौ तादात्म्येन स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन वा। वस्तुतस्तु–केवलान्वयिसाध्यकादिस्थले अन्वयव्याप्तिज्ञानादनुमितेर्जायमानत्वात् न तत्र हेत्वाभासत्वमिति बोध्यम्॥

विरुद्धं लक्षयति–**विरुद्धस्त्विति**। 'साध्यव्यापकीभूताभावप्रतियोगिहेतु'र्विरोधदोषइत्यर्थः, नव्यमते दोषलक्षणस्य हेतुघटितत्वात्, यथा–'शब्दः-नित्यः–कृतकत्वादि'त्यत्र नित्यत्वस्य व्यापको योऽभावः कृतक(कार्य)त्वाभावः, तत्प्रतियोगि कृतकत्वमिति। 'साध्याभावव्याप्तो हेतुर्विरोध'इति भावः। **अयं**=विरोधस्तु, **साध्याभावग्रहसामग्रीत्वेन**=साध्याभावज्ञानस्य (साध्याभावानुमितेः) या सामग्री 'हेतुमत्ताज्ञानसहकृता 'साध्याभावव्याप्य(समानाधिकरण)हेतु'रितिव्याप्तिज्ञानात्मिका दोषरूपा, तादृशसामग्रीत्वेन साक्षात्'शब्दः–नित्य'इत्यनुमितिं प्रति प्रतिबन्धको भवति। विरोधज्ञानस्य परामर्शप्रतिबन्धकत्वं व्याप्तिज्ञानप्रतिबन्धकत्वमपि मतभेदेन कल्प्यते इति बोध्यम्। दोषवत्त्वं च हेतौ–स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेनेति॥ ननु–सत्प्रतिपक्षवि-

प्रतिबन्धकः। सत्प्रतिपक्षे तु प्रतिहेतुः साध्याभावसाधकः, अत्र तु एक एव हेतुरिति विशेषः। साध्याभावसाधक एव साध्यसाधकत्वेनोपन्यस्त इत्यशक्तिविशेषोपस्थापकत्वाच्च विशेषः।

सत्प्रतिपक्षः साध्याभावव्याप्यवान्पक्षः। अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वो-

---

रुद्धयोरुभयोरपि साध्याभावसाधकतया भेदो न स्यात्, एवं च सति साध्याभावव्याप्तिविशिष्टहेतुरेव सत्प्रतिपक्षोऽस्तु लाघवात्, तथा च सत्प्रतिपक्षस्वीकार एवाऽनुचित इत्याशंकायामाह—**सत्प्रतिपक्षे त्विति**। प्रतिहेतुः=स्वसाध्यविरुद्ध-साध्याभावव्याप्यःस्वभिन्नहेतुः, साध्याभावसाधकः। **अत्र तु**=विरोधस्थले तु, एक एव हेतुः=साध्यसाधकतयोपन्यस्त एव हेतुः,—स्वसाध्यविरुद्ध-साध्याभावव्याप्यः स्वएवेति विशेषः=भेदः—इत्यर्थः। तथाच प्रतिहेतोः विरोधिपरामर्शद्वारैव प्रकृतानुमितिविघटकत्वात् सत्प्रतिपक्षस्य 'साध्याभावव्याप्यवत्पक्षा'त्मकत्वं भिन्नदोषत्वं च युक्तमिति भावः॥ **ननु**—साध्याभावसाधकत्वेन समानत्वेऽपि हेतुद्वये सत्प्रतिपक्षो हेत्वैक्ये तु विरुद्ध इत्युच्यते तदा तुल्यन्यायेन पक्षभेदात् साध्यभेदात् अन्वयव्याप्तिभेदादपि च एकजातीयस्यापि नानासत्प्रतिपक्षत्वापत्तिरित्यत आह—**साध्याभावसाधक एवेति**। यथा नित्यत्वाऽभावसाधकः कार्यत्वहेतुः नित्यत्वसाधकत्वेन प्रयुक्तः, **इत्यशक्तिविशेषोपस्थापकत्वाच्च**='साध्याभावव्याप्यस्यैव तव साध्यव्याप्यत्वभ्रम'इति स्थापनावादिनं प्रति भ्रमरूपाऽशक्तिविशेषसूचकत्वाच्च, विरुद्धस्थले प्रयोक्तृपुरुषनिष्ठाऽशक्तिविशेषदोषज्ञापकत्वं सत्प्रतिपक्षे तु न तथेति दोषविशेषज्ञापकत्वाऽज्ञापकत्वात्मकफलभेदात्तयोर्भेद इति। तथा च—एकजातीयस्य सत्प्रतिपक्षस्य तारतम्येन अशक्तिविशेषसूचकत्वाऽभावान्न पक्षसाध्यव्याप्त्यादिभेदेन भेदापत्तिरिति भावः॥ **'च'**कारेण साध्य-तदभावोभयानुमितिप्रतिबन्धात्मकफलकत्वाऽभावादपि विरुद्धः सत्प्रतिपक्षतो भिन्न इति बोध्यम्॥

रघुनाथशिरोमणिमतेन सत्प्रतिपक्षलक्षणमाह—**साध्याभावव्याप्यवान्पक्ष इति**। यथा 'ह्रदो—वह्निमान्,—धूमात्,—ह्रदो वह्न्यभाववान्—जलादि'त्यत्र—प्रकृतहेतुकसाध्याभावः वह्न्यभावस्तद्व्याप्यजलवान् ह्रदः' एवं प्रतिहेतुकसाध्याभावः—वह्न्यभावाभावः वह्निः, तद्व्याप्यो धूमस्तद्वान् ह्रद'इति परस्परं दोषः, तत्र—'वह्न्यभावव्याप्यजलवान्ह्रद'इतिदोषेण 'ह्रदो वह्निमानि'त्यनुमितिप्रतिबन्धः, दोषवत्ता च—धूमे 'स्वविषयकसमूहालम्बनज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन। समूहालम्बनज्ञानं 'वह्न्यभावव्याप्यजलवान्ह्रदो धूमश्चे'ति। एवं 'वह्निव्याप्यधूमवान्ह्रद'इतिदोषेण 'ह्रदो वह्न्यभाववानि'त्यनुमितिप्रतिबन्धो भवति। दोषवत्ता च जले—स्वविषयकसमूहालम्बनज्ञानविषयप्रतिहेतुतावच्छेदकवत्त्वसम्बन्धेन। समूहालम्बनज्ञानं—वह्निव्याप्यधूमवद्ध्रदो जलं चे'ति॥ वस्तुतस्तु तत्र जलं न दुष्टं भ्रमे नष्टे सत्यनुमापकत्वात्॥ प्राचीनमतेन सत्प्रतिपक्षलक्षणमाह—**अगृहीतेति**। अगृहीतं=न निश्चितम् अप्रामाण्यं यत्र, तादृशं यत्—'साध्यव्याप्यवत्त्वोपस्थितिः=साध्यव्याप्य(हेतु)वानिति ज्ञानम्, तत्कालीनं यत् 'अगृहीताऽप्रामाण्यक-साध्याभावव्याप्यवत्ताज्ञानं तद्विषयो हेतुः—**तथा**=सत्प्रतिपक्ष इत्युच्यते। अगृहीताऽप्रामाण्यकवह्निव्याप्यधूमवद्ध्रदोपस्थितिकालीनाऽगृहीताप्रामाण्यक—वह्न्यभावव्याप्यजलवद्ध्रदोपस्थितिविषयजलं दोषः, एवं अगृहीताऽप्रामाण्यक – वह्न्यभावव्याप्यजलवद्ध्रदोपस्थितिकालीनाऽगृहीताऽप्रामाण्यकवह्निव्याप्यधूमवद्ध्रदोपस्थितिविषयधूमो दोषः इति॥दोषवत्त्वं च एकज्ञानविशेष्यतासम्बन्धेन॥ 'वह्निव्याप्यधूमवान् ह्रद'इतिज्ञाने यदि 'इदं ज्ञानम् अप्रमा'—इत्यप्रामाण्यग्रहः स्यात् तर्हि तस्य निर्बलतया वह्न्यभावव्याप्यजलवान्ह्रद'इतिपरामर्शेन'ह्रदो वह्न्यभाववानि'त्यनुमितिरेव स्यात्, एवं 'वह्न्यभावव्याप्य-

**पस्थितिकालीनाऽगृहीताप्रामाण्यकतदभावव्याप्यवत्त्वोपस्थितिविषयस्तथेत्यन्ये। अत्र च परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः फलम् ॥ अत्र केचित्- यथा घटाभावव्याप्यवत्ताज्ञानेऽपि घटचक्षुःसंयोगे सति घटवत्ताज्ञानं जायते; यथा च शङ्खे-सत्यपि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने;सति पित्तादिदोषे; पीतः शङ्ख**

---

जलवान्ह्रद'इति ज्ञानम् अप्रमा'इति यदि अप्रामाण्यग्रहः स्यात् तदा तस्य निर्बलतया 'वह्निव्याप्यधूमवान्ह्रद'इतिपरामर्शेन 'ह्रदो वह्निमानि'त्यनुमितिरेव स्यात्, सत्प्रतिपक्षाऽभावात् न तत्र परस्परानुमितिप्रतिबन्धात्मकं फलं भवेत्, अतः-अगृहीताऽप्रामाण्यकेति-उभयोपस्थिताबुक्तम्। साध्यव्याप्यवत्तापरामर्शशून्यकाले साध्याभावव्याप्यवत्तापरामर्शसत्त्वेऽपि सत्प्रतिपक्षव्यवहाराऽभावात्-कालीनान्तमुपस्थितिविशेषणम्। पुरुषान्तरीय-साध्यव्याप्यवत्तापरामर्शकाले स्वीयसाध्याभावव्याप्यवत्तापरामर्शसत्त्वेऽपि सत्प्रतिपक्षव्यवहाराऽभावात् उपस्थितौ-एकात्मवृत्तित्वमपि निवेशनीयम्। परामर्शद्वये एकः परामर्शः-साध्यनिरूपितव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशाली ग्राह्यः, अन्यथा वह्निव्याप्यधूमवत्ताया ह्रदेऽप्रसिद्धत्वात् तद्घटितदोषाभावेन सत्प्रतिपक्षव्यवहारो न स्यात्। अपरस्तु परामर्शः वह्न्यभावव्याप्तिविशिष्टजलविशिष्टह्रदात्मको विशिष्टविषयको ग्राह्यः। व्यत्यासेन वा तथा ग्राह्यः। अन्यथा सर्वत्र सद्धेतुस्थले अविशिष्टविषयकपरामर्शप्रसिद्धया सत्प्रतिपक्षव्यवहाराऽपत्तिः स्यादिति। प्राचीनमते सत्प्रतिपक्षस्याऽनित्यदोषतया सद्धेतावपि तदानीं सत्प्रतिपक्षव्यवहारस्य इष्टत्वे तु अपरपरामर्शोऽपि साध्याऽभावनिरूपितव्याप्तिप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयात्मको ग्राह्यः इति बोध्यम्॥ **अन्ये**-इत्यनेन एतल्लक्षणे 'वृक्षः-कपिसंयोगी एतद्वृक्षत्वात्,-वृक्षः-कपिसंयोगाऽभाववान्, एतद्वृक्षत्वादि'त्यत्रापि एकस्मिन्नेव एतद्वृक्षत्वात्मके हेतौ समन्वयेन तत्र सत्प्रतिपक्षव्यवहारापत्तिः स्यादित्यस्वरसः सूचितः। अत्र-दूषकताबीजमाह-**परस्पराऽभावव्याप्यवत्ताज्ञानादिति**। एकत्र साध्यं वह्निः, अपरत्र साध्यं वह्न्यभावः, तयोरभावः-वह्न्यभावः, वह्न्यभावाभावः(वह्निश्च), तथाच परस्परसाध्याभावव्याप्यवत्पक्षात्मकपरामर्शज्ञानात्, **परस्परानुमितिप्रतिबन्धः**=ह्रदो वह्निमान्, ह्रदो वह्न्यभाववानि'त्युभयानुमितिप्रतिबन्धः फलं बोध्यमिति॥ सत्प्रतिपक्षस्य संशयजनकत्वं दूषकताबीजं, न त्वनुमितिप्रतिबन्धकत्वं, तदभावव्याप्यवत्ताज्ञानस्य तद्वत्ताज्ञानात्मकानुमितिप्रतिबन्धकत्वे मानाऽभावादिति रत्नकोशकारमतं दूषयितुमुपन्यस्यति-**अत्र केचिदित्यादिना**। वदन्तीत्यन्वयः। तद्वत्ताज्ञानं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वे अन्वयव्यभिचारं दर्शयति-**यथेति**। यत्र भूतलेऽन्धकारादिना वस्तुव्यवधानेन वा प्रथमं 'घटाभावव्याप्यभूतलत्ववत्ता'ज्ञाने जायमाने सत्यपि तदुत्तरक्षणे एव प्रदीपादिसहकारिवशाद्द घटेन सह आलोकादिसहकृते चक्षुःसंयोगे सति 'घटवद्भूतल'-मिति प्रत्यक्षं जायते, तत्र चक्षुःसंयोगात्मको गुणः प्रबलः। तत्र 'घटाभावव्याप्यवत्ताज्ञाना'त्मककारणसत्त्वेऽपि 'घटवत्ताज्ञानाऽभावा'त्मककार्याऽभावाद्द अन्वयव्यभिचारः, अतो 'घटादिमत्ताबुद्धिं प्रति अन्धकारादिसहकृततदभावव्याप्यवत्ताबुद्धिः पृथक् प्रतिबन्धिका कल्पनीयेति भावः॥ दोषप्रबलस्थलेऽपि व्यभिचारं दर्शयति-यथा **चेति**-यत्र निर्दोषनेत्रकपुरुषस्य 'पीतत्वाऽभावव्याप्यशंखत्ववान् शंख' इतिपरामर्शे जातेऽपि स्मरणे सत्यपि तदुत्तरं तस्य पुरुषस्य नेत्रे पित्तादिदोषवशात् 'पीतत्ववान् शंख'इतिधीर्जायते, तत्र पित्तदोषः प्रबलः। तत्र 'पीतत्वाऽभावव्याप्यशंखत्ववान् शंख'इति कारणसत्त्वेपि 'पीतत्ववत्ताज्ञानाभावात्मककार्याऽभावाद्द अन्वयव्यभिचारः, अतः 'पीतत्ववत्ताबुद्धिं प्रति पीत्तादिदोषाऽसहकृततदभावव्याप्य-

इति धीर्जायते, एवं कोटिद्वयव्याप्यदर्शनेऽपि कोटिद्वयस्य प्रत्यक्षरूपः संशयो भवति, तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव । यत्र चैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्न संशयः। फलबलेन चाधिकबलसमबलभावः कल्प्यत इत्याहुः। तन्न ।तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभान-

---

वत्ताबुद्धिः पृथक् प्रतिबन्धिका कल्पनीयेति भावः ॥ उभयस्थले व्यभिचारात् तद्वत्ताबुद्धिं प्रति न तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वमिति भावः॥ ननु प्रतिबध्यप्रतिबन्धकभावविरहात् मा भवतु परस्परानुमितिप्रतिबन्धः, तथा च–निश्चयात्मिका विभिन्ना उभयविधाऽनुमितिरेव सत्प्रतिपक्षस्थले आपद्येतेत्याशंकायां स्वाभिमतां संशयाकारानुमितिं साधयितुं विशेपदर्शनस्थले (प्रत्यक्षस्थले) प्रसिद्धसंशयं दृष्टान्तयति **एवमिति**। यत्र मन्दान्धकारे स्थाणौ पुरुषे वा दृष्टे सति तत्र कोटिद्वयव्याप्यदर्शनेऽपि=स्थाणुत्वव्याप्यवक्रकोटरादिमानयम्, स्थाणुत्वाभावव्याप्यकरचरणादिमानयमिति, पुरुषत्वव्याप्यकरचरणादिमानयं पुरुषत्वाऽभावव्याप्यकोटरादिमानयमि'ति च परस्परविरोधिकोटिद्वयव्याप्यवत्ताप्रत्यक्षात्मकपरामर्शे विद्यमानेऽपि, कोटिद्वयस्य=स्थाणुत्वस्थाणुत्वाभावयोः 'स्थाणुर्न वे'ति प्रत्यक्षात्मकसंशयः, अथवा पुरुषत्व-पुरुषत्वाऽभावात्मककोटिद्वयस्य 'पुरुषो न वा' इतिप्रत्यक्षात्मकसंशयः जायते, सहकारिणः मन्दान्धकारस्य चक्षुःसंयोगस्य च समबलत्वात् ॥ न तु स्थाणुत्वकोटिनिश्चयः स्थाणुत्वाभावकोटिनिश्चयश्च पृथक् पृथक्, न च पुरुषत्वकोटिनिश्चयः पुरुषत्वाऽभावकोटिनिश्चयश्च पृथक् पृथगिति । तथा चैतादृशस्थलेऽपि–तद्वत्ताबुद्धिं प्रति साधारणधर्मदर्शनाद्यात्मकसंशयसामग्रीसहकृत-परस्परतदभावव्याप्यवत्ताबुद्धिः पृथक् प्रतिबन्धिका कल्पनीयेतिभावः **तथा**–तद्वत् सत्प्रतिपक्षस्थलेऽपि हेत्वोः समबलतया **संशयरूपा**–साध्य-तदभावप्रकारिका–'ह्रदो वह्निमान्न वा'इत्याद्यात्मिका अनुमितिर्भवत्येव । ननु प्रत्येकं निर्णायकत्वेन अवधारितात् कथं संशय इति चेन्न । प्रत्येकाद्धि ज्ञानमुत्पद्यमानम् अर्थात् संशयो, न तु प्रत्येकं संशयजनकमिति ॥ तस्मात् सत्प्रतिपक्षस्याऽनुमितिप्रतिबन्धकत्वं न विचारसहं, किन्तु संशयद्वाराऽस्य दूषकताबीजमिति भावः ॥ ननु–कोटिद्वयस्य संशयोत्पादकत्वे प्रबले एककोटिव्याप्यवत्तानिर्णये सति न्यूनबलकद्वितीयकोट्युपस्थितिर्महिम्ना तत्र संशयापत्तिरित्यत आह–**यत्र चैकेति** । सहकारिबलाद् यदि स्थाणुत्व-पुरुषत्वान्यतरात्मकभावकोटिव्याप्यवत्तानिर्णयः, तदा स बलवान्, तेन च **द्वितीयकोटिभानप्रतिबन्धात्**=स्थाणुत्वाभाव-पुरुषत्वाभावान्यतरात्मकाऽभावकोटिव्याप्यवत्ताज्ञानप्रतिबन्धात् तदभाववत्ताप्रमितिर्न जायते, किन्तु तद्वत्ताप्रमितिरेव, एवं वैपरीत्येनापि बोध्यम्। तथा च–उभयोः भावाऽभाववत्ताज्ञानयोरजायमानतया तत्र न संशयो भवति ॥ किन्तु एककोटिका स्वसामग्र्यनुरूपा प्रत्यक्षात्मिका अनुमित्याद्यात्मिका वा प्रमितिरेवेति भावः ॥ ननु अधिकन्यूनादिबलभावः केन निर्णीयते–इत्यत आह–**फलबलेनेति** । भावकोटिका यदि प्रमा भवेत् तदा भावकोटिकव्याप्यवत्ताज्ञानेऽधिकबलं कल्प्यते, अभावकोटिका यदि प्रमा जायेत तदा अभावकोटिकव्याप्यवत्ताज्ञानेऽधिकबलं कल्प्यते, यावच्च उभयप्रमे न जायेयातां तावत् उभयकोटिव्याप्यवत्ताज्ञाने समबलभावः कल्प्यते। कल्प्यते अनुमीयते-यथा 'पीतता-साक्षात्कारसामग्री,-बलवती; सत्यपि शंखे शुक्लत्वज्ञाने-'पीतः शंख इत्यनुभवात्। एवं 'स्थाणुर्वा पुरुषो वे'तिसंशयसामग्री,–समबलवती,–उभयकोट्यवगाहिज्ञानजनकत्वात्, यन्नैवं तन्नैवं यथा घटसामग्री इति भावः ॥ तदेतन्मतं खण्डयति–**तन्नेति** । **रत्नकोशकारमते**–रत्नकोशकारदर्शितरीत्या व्यभिचारात् तद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्ताबुद्धेः सामान्यतः प्रतिबन्धकत्वाऽसंभवात् व्यभिचार-वारणाय प्रत्यक्षे 'घटादिमत्ताबुद्धिं प्रति अन्धकारादिसहकृततदभावव्याप्यवत्ताबुद्धिः पृथक्

**विशेषशाब्दबोधादेरनुदयाल्लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य प्रतिबन्धकता लाघवात्, न तूपनीतभानविशेषे शाब्दबोधे च पृथक्प्रतिबन्धकता-गौरवात्। तथाच प्रतिबन्धकसत्त्वात्कथमनुमितिः ?। न हि लौकिकसन्निकर्षस्थले**

प्रतिबन्धिका' एवं–'पीतत्ववत्ताबुद्धिं प्रति पित्तादिदोषाऽसहकृततदभावव्याप्यवत्ताबुद्धिः पृथक् प्रतिबन्धिका' एवं संशयस्थलादौ 'तद्वत्ताबुद्धिं प्रति संशयसामग्रीसहकृतपरस्परतदभावव्याप्य-वत्ताबुद्धिः पृथक् प्रतिबन्धिका'कल्पनीया । किंच **तदभावव्याप्यवत्ताज्ञाने सति**=लौकिक-सन्निकर्षेण एकस्मिन्पर्वते 'वह्न्यभावव्याप्यवत्ता'ज्ञाने सति सामान्यलक्षणासन्निकर्षेण 'सर्वे पर्वता वह्न्यभाववन्त'इत्यलौकिकप्रत्यक्षम् उपनीतभानं जायते, न तु 'पर्वता वह्निमन्त'इति **तद्वत्तोप नीतभानविशेषः,** अतः "अलौकिकतद्वत्ताप्रत्यक्षं प्रति तदभावव्याप्यवत्ताबुद्धेः पृथक् प्रतिब न्धकत्वं"कल्पनीयम् । एवं प्रत्यक्षातिरिक्तज्ञानेषु मध्ये वह्न्यभावव्याप्यवत्तापरामर्शे सति 'वह्नि-मान्ह्रद' इत्याद्यनुमितेः **अनुदयात्**=अनुत्पादात् "तद्वत्तानुमितिं' प्रति तदभावव्याप्यवत्ताबुद्धिः पृथक् प्रतिबन्धिका''वक्तव्या । एवं–तदभावव्याप्यवत्ताशाब्दपरामर्शे सति तद्वत्ताशाब्दबोधस्याऽ-**नुदयात्** 'तद्वत्ताशाब्दबोधं प्रति तदभावव्याप्यवत्ताशाब्दस्य पृथक् प्रतिबन्धकत्वं' वक्तव्यम् ॥ इत्येवं सर्वत्र पृथक् पृथक् विशेषविशेषप्रतिबध्यप्रतिबन्धकभावाः रत्नकोषकारेण कल्पनीयाः, इति प्रतिबन्धककोटौ अन्धकारादिविशेषणाऽऽनन्त्यप्रयुक्तं कार्यकारणभावाऽऽनन्त्यकल्पनं महद्गौरवं भवति, तदपेक्षया प्रतिबध्यकोटावेव लौकिकसन्निकर्षाऽजन्यत्वं दोषविशेषाऽजन्यत्वं च निवेश्य 'लौकिकसन्निकर्षाऽजन्यदोषविशेषाऽजन्यतद्वत्ताबुद्धिं प्रति **तस्य**—तदभावव्याप्यवत्ताबुद्धेः प्रति-बन्धकत्वमि'ति परमोपस्थितिकृत**लाघवादे**ककार्यकारणभावः सामान्यतया उचितः। अनेनैव सर्वत्र निर्वाहात्, तथाहि–'पीतः शंख'इतिबुद्धिः दोषविशेषाऽजन्यतद्वत्ताबुद्धिर्नास्ति, इति तस्याः प्रतिबध्यकोटावप्रवेशात् तां प्रति तदभावव्याप्यवत्ताज्ञानस्याऽप्रतिबन्धकत्वेऽपि न पूर्वोक्ताऽन्वय-व्यभिचारापत्तिः। घटचक्षुःसंयोगे सति यद् घटवत्ताज्ञानं तस्य लौकिकसन्निकर्षाऽजन्यत्वाऽभावेन तस्यापि प्रतिबध्यकोटावप्रवेशात् तत्प्रति तदभावव्याप्यवत्ताज्ञानस्याऽप्रतिबन्धकत्वेऽपि न पूर्वोक्ता ऽन्वयव्यभिचारापत्तिः । 'स्थाणुर्न वे'त्यादिसंशयस्यापि लौकिकसन्निकर्षाऽजन्यत्वाभावेन तस्यापि प्रतिबध्यकोटावप्रवेशात् तत्प्रति परस्परतदभावव्याप्यवत्ताज्ञानस्याऽप्रतिबन्धकत्वेऽपि न पूर्वोक्ताऽन्वयव्यभिचारापत्तिः। 'सर्वे पर्वता वह्निमन्त'इत्यलौकिकप्रत्यक्षस्य ( उपनीतभानस्य ) लौकिकसन्निकर्षाऽजन्यादितया प्रतिबध्यकोट्यन्तर्गतत्वेन वह्न्यभावव्याप्यवत्ताज्ञानकाले न भवत्यु-त्पत्तिरिति । अतः **नतूपनीतभानविशेषे**=अलौकिकतद्वत्ताप्रत्यक्षे पृथक् प्रतिबन्धकता न कल्पनीया, एवं–तद्वत्ताशाब्दबोधस्य तद्वत्तानुमितेश्चापि लौकिकसन्निकर्षाजन्यदोषविशेषाऽ-जन्यज्ञानतया प्रतिबध्यकोट्यन्तर्गतत्वेन तदभावव्याप्यवत्ताशाब्दपरामर्शादिकाले उत्पत्तिरेव न भवतीति। अतः **शाब्दबोधे च**=तद्वत्ताशाब्दबुद्धिं प्रति तद्वत्तानुमितिं प्रति च **पृथक् प्रतिबन्धकता**=विशेषविशेषप्रतिबध्यप्रतिबन्धकभावाः न कल्पनीयाः, **गौरवात्**=उपस्थितिकृतात् प्रतिबध्यप्रतिबन्धकभावाऽऽनन्त्यप्रयुक्तगौरवादित्यर्थः ॥ **तथा च**=लाघवादेकप्रतिबध्यप्रतिबन्धक-कृते सति, अनुमितिज्ञानस्य प्रतिबध्यकोटिप्रविष्टतया सत्प्रतिपक्षस्थले **प्रतिबन्धकसत्त्वात्**=परस्प-रतदभावव्याप्यवत्तापरामर्शस्य प्रतिबन्धकस्योपस्थितत्वात्, **कथं**=किम्बलात्, तद्वत्ताऽ**नुमितिः** उत्प-द्येत ! नैवोत्पद्येतेत्यर्थः॥ संशयात्मिकाया अनुमितेरपि लौकिकसन्निकर्षाऽजन्यदोषविशेषाऽजन्यतद्वत्ता-ज्ञानत्वेन प्रतिबध्यत्वादिति भावः ॥ ननु–सत्प्रतिपक्षस्थले संशयाकारानुमितिर्जायते–इत्यनुभवादेव

प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयाकारानुमितिः प्रामाणिकी, येनानुमितिभिन्नत्वेनापि विशेषणीयम् । यत्र च कोटिद्वयव्याप्यवत्ताज्ञानं तत्रोभयत्राप्रामाण्यज्ञानात्संशयो, नान्यथा, अगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति ॥

असिद्धिस्त्वाश्रयासिद्धयाद्यन्यतमत्वम् । आश्रयासिद्धिः पक्षे पक्षतावच्छेदकस्या-

---

प्रतिबध्यकोटौ संशयाकाराऽनुमित्यन्यत्वमपि निवेश्यताम्-तथा च "लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यसंशयात्मकानुमित्यन्य-तद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्ताबुद्धेः प्रतिबन्धकत्वमि"ति प्रतिबध्यप्रतिबन्धकभावः कल्पनीयः, तेन संशयात्मकानुमितेः प्रतिबध्यकोटावप्रविष्टतया तत्र तदभावव्याप्यवत्ताबुद्धेरप्रतिबन्धकतया सत्प्रतिपक्षस्थले संशयाकाराऽनुमितिः स्यादेवेति रत्नकोशकाराशंकां समाधत्ते–नहि लौकिकेति । लौकिकसन्निकर्षचक्षुस्संयोगादिमत्स्थले भूतलादौ यथा 'घटवद्भूतल'मितिप्रत्यक्षं जायते तत् सर्वानुमतप्रामाणिकं, तद्वत् सत्प्रतिपक्षस्थले=वह्निव्याप्यधूमवान् ह्रदः वह्न्यभावव्याप्यजलवान्ह्रद इत्यादिपरामर्शकालीनह्रदे, संशयाकारा=ह्रदो वह्निमान्न वा इत्यनुमितिः नहि सर्वमतप्रामाणिकी, येन=यत्प्रामाणिकत्वबलेन, प्रतिबध्यकोटौ अनुमितिभिन्नत्वेनापि=संशयाकाराऽनुमितिभिन्नत्वेनापि, विशेषणीयं=तद्वत्ताबुद्धिर्विशेषणीया भवेत्, नैव भवेदित्यर्थः । तथा च संशयाकारानुमितेः प्रतिबध्यकोटौ तद्वत्ताज्ञानत्वेन गृहीतत्वात् सत्प्रतिपक्षस्थले परस्परतदभावव्याप्यवत्तापरामर्शात्मकप्रतिबन्धकसत्त्वात् नैवोत्पद्यते इति भावः ॥ यत्तु–'स्थाणुर्वा पुरुषो वे'ति प्रत्यक्षसंशयोदाहरणेन सत्प्रतिपक्षस्थलेऽपि संशयाकारानुमितिः स्वीकृता, तदयुक्तमित्याशयेनाह-यत्रच कोटिद्वयेति । संशयं प्रति–उभयसाधारणधर्मज्ञानम्, असाधारणधर्मज्ञानम्, विप्रतिपत्तिवाक्यजन्यकोटिद्वयज्ञानं च कारणं, विषयसंशयं प्रति ज्ञानगतप्रामाण्यसंशयः अप्रामाण्यज्ञानं... कोटिद्वयव्याप्यवत्ताज्ञानेऽप्रामाण्यज्ञानं च कारणम्, व्यापकसंशयं प्रति व्याप्यसंशयः कारणमिति । तन्मध्यतः यत्र=प्रत्यक्षस्थले, कोटिद्वयव्याप्यवत्ताज्ञानं=स्थाणुत्वव्याप्यकोटरादिमान् पुरुषत्वव्याप्यकरादिमानिति–प्रत्यक्षपरामर्शज्ञानं, तत्र उभयत्र ज्ञाने अप्रामाण्यज्ञानात्='स्थाणुत्वव्याप्यकोटरादिमानितिज्ञानमप्रमा' 'पुरुषत्वव्याप्यकरादिमानितिज्ञानमप्रमा चे'त्याकारात् कारणादेव तत्र 'स्थाणुर्वा पुरुषो वे'ति विषयसंशयो जायते, नाऽन्यथा=न तु कारणाऽभावात्=परस्परविरुद्धतदभावव्याप्यवत्ताज्ञानमात्रात् । भवति च सत्प्रतिपक्षस्थले परस्परविरुद्धतदभावव्याप्यवत्ताज्ञानद्वयमात्रं, न तु तत्रोभयत्र 'एतज् ज्ञानद्वयम् अप्रमा'इति–अप्रामाण्यज्ञानं, प्रत्यक्षविषयहेत्वादिविषयकपरामर्शे अप्रामाण्यज्ञानस्य असाधारणकारणं यो दोषः पित्तादिर्दूरत्वादिर्वा तस्य तत्राऽसत्त्वात् , तथा च कारणाऽभावात् सत्प्रतिपक्षस्थले न संशयाकारानुमितिः । किंच–'तदभावव्याप्यवत्ताज्ञाने' यदि 'इदं ज्ञानमप्रमा'इत्यप्रामाण्यग्रहः स्यात् तर्हि तत् न तद्वत्ताबुद्धिं प्रति प्रतिबन्धकं भवति, किन्तु अप्रामाण्यम् अगृहीतं यावत् तावदेव प्रतिबन्धकं भवति, तथा च–सत्प्रतिपक्षस्थले उभयकोटिकतदभावव्याप्यवत्तापरामर्शे अप्रामाण्यस्य अगृहीतत्वात् , अगृहीताऽप्रामाण्यकस्य उभयकोटिकतदभावव्याप्यवत्तापरामर्शस्य विरोधिज्ञानस्य=प्रतिबन्धकस्य सत्त्वात् तद्वत्ताकोटिघटितसंशयाकारानुमितिर्नैव भवतीति रत्नकोशकारमतमसमीचीनमिति भावः ॥

असिद्धिं लक्षयति-असिद्धिस्त्विति । आश्रयाऽसिद्धयाद्यन्यतमत्वम्=आश्रयासिद्धि–व्याप्यत्वाऽसिद्धिस्वरूपाऽसिद्धिभिन्नभिन्नत्वम् असिद्धेर्लक्षणमित्यर्थः ॥ तत्राद्यां लक्षयति–आश्रयासिद्धिरिति । पक्षे=पर्वतादौ यः पक्षतावच्छेदकधर्मस्य कांचनमयत्वादेरभावः, 'पक्षतावच्छेदकाऽभाववत्पक्षः' आश्र-

**भावः। यत्र च काञ्चनमयः पर्वतो वह्निमानिति साध्यते तत्र 'पर्वतो न काञ्चनमय'-इतिज्ञाने विद्यमाने काञ्चनमये पर्वते परामर्शप्रतिबन्धः फलम्। स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्याभावः। तत्र च ह्रदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे साध्यव्याप्यहेतुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः**

---

यासिद्धिदोष इत्यर्थः॥ तदुदाहरति–**यत्र चेति**। कांचनमयपर्वतः पक्षः, वह्निः साध्यः, धूमश्च हेतुः, कांचनमयत्वविशिष्टपर्वतत्वं पक्षतावच्छेदकत्वेनाऽभिमतं, तत्र पाषाणीयपर्वते कांचनमयत्वात्मकविशेषणाऽभावात् कांचनमयत्वविशिष्टपर्वतत्वाऽभावो वर्तते इति। तत्र **'पर्वतो न कांचनमयः'**= कांचनमयत्वविशिष्टपर्वतत्वाऽभाववान्पर्वत'इति दोषज्ञाने विद्यमाने सति **कांचनमयपर्वते**=पक्षे **परामर्शप्रतिबन्धः**='वह्निव्याप्यधूमवत्कांचनमयपर्वत'इतिपरामर्शप्रतिबन्धो भवतीति फलम्, तादृशदोषवत्त्वम् एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन, ज्ञानं तु–'पक्षतावच्छेदकाभाववत्पक्षो हेतुश्चे'तिसमूहालम्बनं ग्राह्यमिति॥ समन्वयस्तु प्राग्दर्शितः॥ स्वरूपाऽसिद्धिं लक्षयति–**स्वरूपासिद्धिस्त्विति**। **पक्षे**=ह्रदादौ, **व्याप्यत्वाभिमतस्य**=व्याप्यतयाऽभिमतस्य धूमस्य हेतोः, अभावः 'हेत्वभाववान्पक्षः'स्वरूपाऽसिद्धिदोष इत्यर्थः॥ अत्र 'हेत्वभावविशिष्टपक्षः'साध्यव्याप्यहेत्वभावविशिष्टपक्षः' वा स्वरूपासिद्धिरित्युक्तौ 'धूमाभाववान् ह्रद' इति ज्ञानेऽपि धूमांशे अधिकावगाहि'वह्निव्याप्यधूमवद्ध्रद' इति विशिष्टबुद्धेः नवीनैः स्वीकृतत्वेन तत्र, वायुर्गन्धवान्स्नेहादित्यत्र च गन्धव्याप्यस्नेहाऽभावविशिष्टवायुरूपस्वरूपाऽसिद्धौ चाऽव्याप्तिः स्यात्, अतः–**व्याप्यत्वाभिमतस्येत्युक्तम्**, तथा च 'प्रकृतसाध्यनिरूपितव्याप्तिप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षविशेष्यताशालिबुद्धिं प्रति–स्वीयव्याप्तिप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्वस्वसमानाधिकरणज्ञानीयत्वोभयसम्बन्धेन वर्तमानग्रहविशिष्टप्रकारतानिरूपितपक्षनिष्ठविशेष्यताशालिनिश्चयत्वेन भ्रमप्रमासाधारण्येन 'साध्यव्याप्यत्वप्रकारकवर्तमानग्रहविशेष्यताश्रयहेत्वभावविशिष्टपक्षस्यैव (स्वरूपाऽसिद्धेः) प्रतिबन्धकत्वमिति बोध्यम्। तदुदाहरति–**तत्र च ह्रद इति**। 'ह्रदः,–द्रव्यत्ववान्–धूमादि'त्यत्र **पक्षे**=ह्रदे, व्याप्यत्वेन अभिमतस्य **हेतोः**–धूमस्य, **अभावे ज्ञाते सति**='व्याप्यत्वाभिमताऽभाववान्पक्ष' इतिस्वरूपाऽसिद्धिदोषज्ञाने विद्यमाने सति, **पक्षे**=ह्रदे, **साध्यव्याप्यहेतुमत्ताज्ञानरूपस्य**='द्रव्यत्वव्याप्यधूमवत्पर्वत'इतिपरामर्शस्य प्रतिबन्धो भवतीति सः फलम् दोषवत्त्वम् एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन प्रागुक्तं वेदितव्यम्॥ साध्याप्रसिद्धिसाधनाप्रसिद्धिदोषयोराधिक्यं निराकरोति–**साध्याऽप्रसिद्ध्यादयस्त्विति**। साध्याप्रसिद्धिः='साध्यतावच्छेदकाऽभाववत्साध्यमि'तिदोषः, यथा 'पर्वतः कांचनमयवह्निमान्–धूमादि'त्यत्र, 'कांचनमयत्वाऽभाववान्वह्नि'रिति। एवं साधनाऽप्रसिद्धिः='हेतुतावच्छेदकाऽभाववान् हेतु'रितिदोषः, यथा 'पर्वतो–वह्निमान्–कांचनमयधूमादि'त्यत्र 'कांचनमयत्वाभाववद्धूम'इति। एतौ दोषौ **व्याप्यत्वाऽसिद्धिमध्येऽन्तर्भवतः**। 'सोपाधिको हेतुः' व्याप्यत्वासिद्धिदोषः, यथा–'पर्वतो धूमवान्–वह्ने'रित्यत्र 'सोपाधिको हेतुः' व्याप्यत्वासिद्धिः। साध्यव्यापकत्वे सति साधनाऽव्यापकत्वमुपाधिः, साध्यसमानाधिकरणात्यन्ताऽभावाऽप्रतियोगित्वम् साध्यव्यापकत्वम्, साधनवन्निष्ठाऽत्यन्ताऽभावप्रतियोगित्वम् साधनाऽव्यापकत्वम्। अत्रार्द्रेन्धनसंयोग उपाधिः, तथाहि 'यत्र धूमस्तत्रार्द्रेन्धनसंयोग'इति साध्यव्यापकत्वम्, यत्र वह्निस्तत्र आर्द्रेन्धनसंयोगो नास्तीति' अयोगोलके आर्द्रेन्धनसंयोगाऽभावाद् इति साधनाऽव्यापकत्वम्, एवं साध्यव्यापकत्वे सति साधनाऽव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः, स्वव्यभिचरितत्वसम्बन्धेन सोपाधिकत्वाद्वह्निमत्त्वं व्याप्य-

फलम्। साध्याप्रसिद्ध्यादयस्तु व्याप्यत्वासिद्धिमध्येऽन्तर्भूताः। साध्ये साध्यतावच्छेदकस्याभावः साध्याप्रसिद्धिः, एतज्ज्ञाने जाते काञ्चनमयवह्निमानित्यादौ साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम्। एवं हेतौ हेतुतावच्छेदकस्याभावः साधनाप्रसिद्धिः, यथा काञ्चनमयधूमादित्यादौ, अत्र हेतुतावच्छेदकविशिष्टहेतोर्ज्ञानाभावात्तद्धेतुकव्याप्तिज्ञानादेरभावः फलम्। एवं वह्निमान् नीलधूमादित्यादौ गुरुतया नीलधूमत्वस्य हेतुतानवच्छेदकत्वमपि व्याप्यत्वासिद्धिरित्यपि वदन्ति॥

---

त्वासिद्धम्, उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानम् उपाधेः प्रयोजनं, यथा 'वह्निः धूमव्यभिचारी,–धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात, तेन'वह्निः धूमाभाववद्वृत्ति'रितिव्यभिचारज्ञानेन 'धूमाऽभाववदवृत्तिवह्नि'रितिव्याप्तिज्ञानप्रतिबन्धो भवतीति सः फलम्। वस्तुतस्तु 'सोपाधिको हेतु'रिति दोषः, दोषवत्त्वं च हेतौ एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धनेति बोध्यम्। **प्राचीनमतेन** तु मुक्तावल्यां 'पर्वतो वह्निमान्नीलधूमादि'त्यत्र नीलधूमत्वस्य गुरुधर्मतयाऽनवच्छेदकत्वाद्व्याप्यत्वासिद्धिरुक्ता:, अतः 'अव्यभिचारविशिष्टसाध्यसामानाधिकरण्यावच्छेदकत्वाऽभावो'व्याप्यत्वासिद्धिदोषः तत्र बोध्यः, साधनाऽप्रसिद्धिस्थलेऽपि स एव। व्याप्यत्वासिद्धिरित्युपलक्षणं,–तेन व्यापकत्वाऽसिद्धिरपि दोषो बोध्यः, स च–साध्यधर्मे–व्याप्तिनिरूपकतावच्छेदकत्वाऽभावः' इति। एतदभिप्रायेण साध्याऽप्रसिद्धेः साधनाऽप्रसिद्धेश्च व्याप्यत्वाऽसिद्धावन्तर्भाव उक्तो वेदितव्यः इति भावः॥ साध्याऽप्रसिद्ध्यादय इति बहुवचनं तु सम्बन्धाऽप्रसिद्धि–प्रतियोगित्वाऽप्रसिद्धि–ज्ञानाऽप्रसिद्ध्यादिभेदेन अनन्तानाम् असिद्धीनामभिप्रायेण प्रयुक्तमिति। तच्च न्यायवार्तिके व्यधिकरणविशेषणविशेष्य–सन्दिग्धविशेषणविशेष्या—ऽसमर्थविशेषणविशेष्यादिभेदेनाऽसिद्धयोऽसंख्याता उक्ता इति प्रथमाध्याये द्वितीयाह्निके चतुर्थे सूत्रे तत्तात्पर्यं द्रष्टव्यमिति। साध्याऽप्रसिद्धिस्वयं दर्शयति–**साध्ये साध्यतावच्छेदकस्याऽभाव इति**।—'साध्यतावच्छेदकाऽभाववत्साध्यं'साध्याप्रसिद्धिदोष इत्यर्थः। 'पर्वतः–कांचनमयवह्निमान्—धूमादि'त्यत्र 'कांचनमयत्वाऽभाववद्वह्नि'रितिदोषज्ञाने जाते सति कांचनमयवह्निमानित्यत्र साध्यांशे साध्यतावच्छेदककांचनमयत्वावच्छिन्नसाध्यस्याऽप्रसिद्ध्या 'कांचनमयवह्निव्याप्यधूमवानि'तिपरामर्शप्रतिबन्धः फलं भवतीति। दोषवत्त्वम् एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन, ज्ञानं तु 'साध्यतावच्छेदकाऽभाववत्साध्यं हेतुश्चे'तिसमूहालम्बनम्॥ साधनाऽप्रसिद्धिमपि दर्शयति–**एवं हेताविति**। 'हेतुतावच्छेदकाऽभाववद्धेतु'रिति साधनाऽप्रसिद्धिदोष इत्यर्थः॥ यथा 'पर्वतो–वह्निमान्–कांचनमयधूमादि'त्यत्र 'हेतुतावच्छेदककांचनमयत्वाऽभाववद्धूम'इति दोषः, तेन हेतुतावच्छेदकविशिष्टहेतुरिति ज्ञानाऽभावाव कांचनमयहेतौ– 'हेतुतावच्छेदकावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यमितिव्याप्तिज्ञानाऽनुत्पादापरामर्शाऽभावेनअनुमितिर्न स्यादिति फलम् प्राचीनमतेन व्याप्यत्वासिद्धिमुदाहरति-**एवं वह्निमानिति**। 'पर्वतो वह्निमान्,-नीलधूमादि' त्यत्र गुरुतया=धूमत्वापेक्षया गुरुधर्मतया, नीलधूमत्वस्य हेतुतानवच्छेदकत्वमपि='हेतुतावच्छेदकाऽभाववद्गुरुधर्मः' व्याप्यत्वाऽसिद्धिदोषो बोध्यः। तज्ज्ञानेन 'वह्निव्याप्यनीलधूमवान्पर्वत'इतिपरामर्शप्रतिबन्धो भवतीति। तादृशदोषवत्त्वं हेतौ एकज्ञानविषयगुरुधर्माश्रयतासम्बन्धेन अथवा स्वविषयकज्ञानीयविशेष्यतासम्बन्धेन॥ अत्र प्राचीनमते–नीलधूमत्वाश्रययावन्निष्ठनीलधूमत्वावच्छिन्नविशेष्यताशालिव्याप्तिज्ञानरूपनीलधूमत्वावच्छेदेन व्याप्तिप्रकारकज्ञानस्यैवानुमितिकारणतया तज्ज्ञानं प्रति-

**बाधस्तु पक्षे साध्याभावादिः। एतस्यानुमितिप्रतिबन्धः फलम्। तद्धर्मिकतदभावनिश्चयो लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतज्ज्ञानमात्रे विरोधीति।**

---

निरुक्तनीलधूमत्वावच्छेदेन व्याप्त्यभाववत्ताज्ञानरूपव्याप्यत्वाऽसिद्धिज्ञानस्य ग्राह्याभावावगाहितया प्रतिबन्धकत्वेन तस्य हेत्वाभासत्वं संभवतीति प्राचीनानामाशयः। **नवीनास्तु 'वदन्ती'**त्यनेनाऽस्वरसमुद्भावयन्ति,—तद्बीजं तु—नीलधूमे व्याप्तिसत्त्वात् न व्याप्यत्वाऽसिद्धिरिति। न च तत्र व्याप्तिसत्त्वेऽपि नीलधूमत्वस्याऽनवच्छेदकतया तदवच्छेदेन व्याप्यत्वासिद्धिरेवेति वाच्यम्। अनतिरिक्तवृत्तित्वरूपस्याऽवच्छेदकस्य नीलधूमत्वेऽपि सत्त्वात्। न च स्वरूपसम्बन्धरूपाऽवच्छेदकत्वस्याऽभावात् व्याप्यत्वाऽसिद्धिरिति वाच्यम्। तथा सति 'अयं पिण्डः—'पशुमान्,—सास्नादिमत' इत्यत्रापि व्याप्यत्वाऽसिद्ध्यापत्तिः, सास्नापेक्षया गोत्वस्य लघुत्वेन सास्नादेः स्वरूपसम्बन्धरूपाऽवच्छेदकत्वाऽभावात्। तस्मात् व्यर्थविशेषणस्थले न व्याप्यत्वाऽसिद्धिर्हेत्वाभासः, किन्तु 'अधिकोक्ति' रूपनिग्रहस्थानेन पुरुषो निगृह्यते इति भावः॥ **व्यर्थविशेषणत्वघटितत्वं** चात्र—स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वम्, स्वं—नीलधूमत्वम्, तत्समानाधिकरणम् अथ च प्रकृतसाध्यवह्निव्याप्यतावच्छेदकं यद्‌ धर्मान्तरं धूमत्वं तद्घटिततया नीलधूमत्वं नीलत्वात्मकव्यर्थविशेषणघटितम्, अतो व्याप्यत्वासिद्धमिति भावः॥

बाधं लक्षयति—**बाधस्त्विति**। 'साध्याभाववान्पक्षः' बाधदोषः, साध्याभावादिरित्यादिना 'साध्यवदन्यः पक्षः, पक्षावृत्ति साध्यम्, पक्षे साध्याभावः, पक्षनिष्ठसाध्याभावः, विशिष्टसाध्ये पक्षादेर्विशेष्याभाववत्त्वादिकम् इत्यादयोऽपि बाधाकारा बोध्याः। **एतस्य**='ह्रदो वह्निमान्-धूमादि'-त्यत्र 'वह्न्यभाववद्ध्रद'इतिदोषज्ञानस्य 'ह्रदो वह्निमानि'त्यनुमितिप्रतिबन्धः फलम्॥ ननु कथमनुमितेरेव प्रतिबन्धको न तु व्याप्तिज्ञानादेरित्यत आह—**तद्धर्मिकेति**। लौकिकसन्निकर्षाऽजन्यदोषविशेषाऽजन्यतद्धर्मिकतद्वत्ताबुद्धित्वावच्छिन्नं प्रति अनाहार्योऽप्रामाण्यज्ञानाऽनास्कन्दित—तद्धर्मिकतदभाववत्तानिर्णयः प्रतिबन्धक इति' सामान्यप्रतिबध्यप्रतिबन्धकभावे बाधनिश्चयस्य प्रतिबन्धककोटौ प्रविष्टतया 'वह्न्यभाववान्ह्रद'इति बाधनिश्चयः 'वह्निमान्ह्रद'इति तद्वत्ताज्ञानात्मकप्रतिबध्यकोटिप्रविष्टानुमितिं प्रति प्रतिबन्धको भवति, न तु व्याप्तिज्ञानादिकं प्रतीति भावः॥ घटवत्यपि भूतलेऽन्धकारादिना घटाभावज्ञानानन्तरमपि प्रदीपादिसहकारिवशात् चक्षुस्संयोगात्मकलौकिकसन्निकर्षेण घटवत्ताप्रत्यक्षं जायते तत्र व्यभिचारवारणाय—लौकिकसन्निकर्षाऽजन्येति। तदिन्द्रियजन्योपनीतभानात्मकबाधनिश्चयोत्तरं तदिन्द्रियजन्यलौकिकतद्विशिष्टबुद्ध्युदयात्,—लौकिकत्वनिवेशः। पूर्वं 'पीतत्वाभाववान् शंख'इतिज्ञानसत्त्वेऽपि पीतिमादिदोषवशात् 'पीतः शंख'इति ज्ञानं जायते तत्र व्यभिचारवारणाय दोषविशेषाऽजन्येति। भ्रममात्रस्यैव बाधाऽप्रतिबध्यत्वापत्तिवारणाय—विशेषेति। पित्तमण्डुकवसाञ्जनादिदोषा विशिष्योपादेया इति॥ आहार्यं ज्ञानं—बाधकालीनेच्छाजन्यं, यथा 'वह्न्यभाववद्ध्रद' इतिबाधकाले ह्रदे वह्निज्ञानं जायतामितीच्छया जायमानं 'वह्न्यभाववद्ध्रदो वह्निमानिति, स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकज्ञानमाहार्यमिति यावत्, तादृशाहार्यज्ञानं न कस्यापि प्रतिबन्धकं भवतीति तत्र व्यभिचारवारणाय—अनाहार्येति। 'ह्रदो वह्न्यभाववानि' तिज्ञानम् अप्रमा'—इत्यप्रामाण्यज्ञानविषयं 'ह्रदो वह्न्यभाववानिति' ज्ञानं ह्रदो वह्निमानि' तिज्ञानप्रतिबन्धकं न भवति—इति तत्र व्यभिचारवारणाय—अप्रामाण्यज्ञानाऽनास्कन्दितेति—अप्रामाण्यज्ञानाऽविषय इत्यर्थः॥ संशयादेरप्यप्रतिबन्धकत्वात् तत्र व्यभिचारवारणाय निर्णय इत्युक्तम्॥ बाधसत्प्रतिपक्षौ न साक्षादनुमितिप्रतिबन्धकौ, किन्तु अनुमितिकारणं या संशयात्मिका पक्षता तत्प्रतिबन्धकौ इति प्राचीनमतं

**न तु–'संशयसाधारणं पक्षे साध्यसंसृष्टत्वज्ञानमनुमितिकारणं तद्विरोधितया च बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति'– युक्तम्, – अप्रसिद्धसाध्यकानुमित्यनापत्तेः, साध्यसंशयादिकं विनाप्यनुमित्युत्पत्तेश्च।**

**एवं साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकं,–मानाभावाद्गौरवाच्च।**

---

खण्डयितुमाह–**न त्विति**। न तु युक्तमित्यन्वयः, नच वाच्यमित्यर्थः॥ श्रुत्या आत्मनि सिषाधयिषयाऽनुमित्युत्पादनाय **संशयनिश्चयसाधारणं पक्षे** साध्यसंसर्गविषयकज्ञानम् अनुमितौ कारणम्, साध्यसंसर्गविषयकज्ञानं=पर्वतः 'संयोगेन वह्निमान्न वा' इति संशयः,–साध्याभाव-प्रकारकत्वविशिष्ट–साध्यप्रकारकज्ञानम्, तथा सिषाधयिषाकालीन–'पर्वतः संयोगेन वह्निमानि'ति निश्चयः। तथाच–'साध्याभावप्रकारकत्व–सिषाधयिषाकालीनत्वान्यतरविशिष्ट–पक्षविशेष्यकसाध्य-प्रकारकज्ञानत्वावच्छिन्नं—**साध्यसंसृष्टत्वज्ञानं** पक्षता, सा **अनुमितिकारणं, तद्विरोधितया च**=अनुमितिकारणीभूतपक्षताविरोधितया च, ह्रदपक्षकस्थले 'ह्रदो वह्न्यभाववानि'तिबाध-निश्चयस्य 'ह्रदो वह्निमान्न वे'तिसंशयविरोधितया 'ह्रदो वह्निमानि'तिनिश्चयविरोधितया च, 'वह्न्यभावव्याप्यजलवानि'त्यादिसत्प्रतिपक्षनिश्चयस्यापि 'ह्रदो वह्निमान्न वे'तिसंशयविरो-धितया 'ह्रदो वह्निमानिति'निश्चयविरोधितया च हेत्वाभासत्वम्, न तु–साक्षादनुमिति-विरोधितया बाधस्य सत्प्रतिपक्षस्य च हेत्वाभासत्वम्, तथा च प्राचीनैकदेशिमते पक्षतादूष-कताबीजं बाधसत्प्रतिपक्षयोरिति भावः॥ **तन्मतं तु न युक्तमिति**। नवीनस्तन्मतखण्डने हेतु-माह–**अप्रसिद्धेति**। न प्रसिद्धं साध्यं यस्याः, एतादृशी या अनुमितिः अगृहीतसाध्यविधेयि-केत्यर्थः। सा 'पृथिवी इतरभेदवती–इति। तत्र इतर( जलादित्रयोदश )भेदस्य कुत्राऽपि पक्षेतरेऽप्रसिद्धत्वात्, पक्षे च अनुमितिपूर्वं 'इतरभेदात्मकसाध्यसम्बन्धस्य' अज्ञातत्वात्, साध्यसंसृष्टत्व-ज्ञानात्मिकायाः पक्षतायाः कारणात्मिकाया एव तत्राऽभावात् 'कार्यम् अनुमितिर्नैवोत्पद्येत, किन्तु उत्पद्यते, अतः कारणाऽभावेऽपि कार्यसत्तात्मको व्यतिरेकव्यभिचारः, तथा च तादृशव्यभिचारात् साध्यसंसृष्टत्वात्मिका पक्षता न कारणम्, इति सुतरां तद्विरोधितया बाधसत्प्रतिपक्षयोर्न हेत्वाभास-त्वमिति॥ ननु अप्रसिद्धसाध्यिकाऽनुमितिः कुत्रापि न भवत्येवेत्यत आह–**साध्यसंशयादिकं विनाऽपीति**। साध्यसंशयं विनापि, आदिना सिषाधयिषाकालीननिश्चयं विनापि, 'गगनं मेघ-वत्,–घनगर्जनादि'त्यादौ पक्षे मेघस्य संशयनिश्चययोर्द्वयोरप्यभावेन 'गगनं मेघवदि'त्यनुमित्युत्पत्तेः तत्र अगृहीतसाध्यविधेयिकाया अनुमितेः जायमानत्वात् तत्कारणं न साध्यसंसृष्टत्वज्ञानं पक्षता, तद्विरोधितया च बाधसत्प्रतिपक्षयोर्न हेत्वाभासत्वं, किन्तु साक्षादनुमितिविरोधितयैवेति भावः॥

**अथ** पक्षविशेष्यकसाध्याभावप्रकारकज्ञाने प्रमात्वनिश्चयोऽनुमितिप्रतिबन्धकः, अतस्तादृ-शप्रमात्वमेव बाधः, न तु पक्षे साध्याभावो बाध, प्रमात्वाभावस्तु अनुमितिकारणम्। सद्धेतुस्थले बाधज्ञानस्य भ्रमत्वनियमेन तत्र प्रमात्वात्मकबाधस्याऽप्रसिद्ध्या न हेतोर्बाधितत्वमिति प्राचीनैक-देशिमतं दूषयति–**एवं साध्याभावज्ञाने** इति। 'ह्रदो वह्न्यभाववानि'तीदं ज्ञानं प्रमा'इति यत् पक्षविशेष्यकसाध्याभावप्रकारकज्ञानधर्मिकं प्रमात्वप्रकारकं ज्ञानं बाधज्ञानं तदपि न अनुमितिप्रति-बन्धकमित्यर्थः॥ तत्र हेतुमाह–**मानाऽभावादिति**। प्रमाणाऽभावादित्यर्थः। अनुमितौ विधेय-त्वया ग्राह्यत्वेनाऽभिमतस्य वह्न्यादेः यः अभावः तस्य ग्राह्याभावतया 'तद्वत्ताबुद्धिं प्रति ग्राह्याभावा-वगाहित्वेन तदभाववत्ताज्ञानात्मकबाधनिश्चयस्यैव प्रतिबन्धकत्वमि'तिप्रतिबध्यप्रतिबन्धकभावस्य साक्षाद् आनुभविकतर्कात्मकप्रमाणतया, ग्राह्याभावाऽनवगाहिनः पक्षविशेष्यकसाध्याभावज्ञानध-

**अन्यथा सत्प्रतिपक्षादावपि तदभावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः। किन्तु भ्रमत्वज्ञानानास्कन्दितबाधादिबुद्धेः प्रतिबन्धकता। तत्र भ्रमत्व-**

मिंकप्रमात्वनिश्चयस्य विरोधित्वे बाधत्वे च प्रमाणाऽभावादिति भावः॥ **ननु**–साध्याभावज्ञानसत्त्वेऽपि तत्र अप्रामाण्यग्रहकालेऽनुमितिर्जायते सा न स्यात्, अतः साध्याभावो न बाधः, किन्तु साध्याभावज्ञाने अप्रामाण्यग्रहाऽभावः ( प्रामाण्यग्रह ) एव बाधः, इत्येवं साध्याभावेऽप्रामाण्यग्रहकालीनानुमित्यन्यथाऽनुपपत्तिरेव साध्याभावज्ञानधर्मिकप्रमात्वस्य बाधत्वे प्रमाणं भवतीत्यत आह–**गौरवाच्चेति**। पक्षविशेष्यकतद्वत्ताबुद्धिं प्रति पक्षविशेष्यकसाध्याभावप्रकारकनिश्चयस्य प्रतिबन्धकत्वाऽपेक्षया पक्षविशेष्यकसाध्याभावप्रकारकज्ञानधर्मिकप्रमात्वनिश्चयस्य प्रतिबन्धकत्वे,–पक्षविशेष्यकत्वापेक्षया पक्षविशेष्यकसाध्याभावप्रकारकज्ञानविशेष्यकत्वस्य साध्याभावप्रकारकनिश्चयत्वापेक्षया साध्याभाववति साध्याभावप्रकारकत्वरूप( प्रमात्व )निश्चयत्वस्याऽतिगुरुत्वादित्यर्थः। **ननु**–साध्याभावज्ञानधर्मिकप्रमात्वनिश्चयत्वस्य गुरुत्वेऽपि लघुधर्मसमनियतत्वाऽभावात् तादृशगुरुधर्मेण प्रतिबन्धकत्वमव्याहतमित्यतः प्रतिबन्द्या अनिष्टमप्याह–**अन्यथेति**। यद्याग्रहात् गुरुधर्मस्य लघुधर्मसमनियतत्वाऽभावेनाऽवच्छेदकत्वं स्वीकृत्य साध्याभावधर्मिकप्रमात्वनिश्चयस्य प्रतिबन्धकत्वं स्वीक्रियते तर्हि सत्प्रतिपक्षस्थले विरोधस्थले च परस्परतदभावव्याप्यवत्ताज्ञाने साध्याभावव्याप्तज्ञाने च अप्रामाण्यग्रहकाले तद्वत्ताबुद्धिं प्रत्यप्रतिबन्धके सति तद्वत्ताबुद्ध्यात्मकानुमित्यापत्तिवारणाय तत्रापि तदभावव्याप्यवत्तादिज्ञानधर्मिकप्रमात्वनिश्चयत्वेन प्रतिबन्धकत्वं स्वीक्रियतामित्यापत्तिः। तथाच सति सत्प्रतिपक्षादिज्ञानधर्मिकप्रमात्वानां भिन्नभिन्नतया स्वरूपभेदात् क्वचित् फलभेदाच्च सत्प्रतिपक्षाद्यवान्तरानन्तहेत्वाभासत्वापत्तिरिति हृदयम्॥ किञ्च–साध्याभावादिज्ञानधर्मिकप्रमात्वज्ञाने यदा 'ह्रदो वह्न्यभाववानि'त्यादिज्ञानं प्रमा'–इतिज्ञानम् अप्रमा'–इति अप्रामाण्यग्रहस्तदा अनुमितिनिर्वाहाय साध्याभावादिज्ञानधर्मिकप्रमात्वनिश्चयधर्मिकप्रमात्वनिश्चयत्वेन प्रतिबन्धकत्वं स्वीकार्यम्, तत्रापि यदा 'ह्रदो वह्न्यभाववानि'त्यादिज्ञानं प्रमा'–इतिज्ञानं प्रमा'–इतिज्ञानम् अप्रमा' इति अप्रामाण्यग्रहस्तदा अनुमितिनिर्वाहाय 'साध्याभावादिज्ञानधर्मिकप्रमात्वनिश्चयधर्मिकप्रमात्वनिश्चयधर्मिकप्रमात्वनिश्चयत्वेन प्रतिबन्धकता स्वीकार्या इत्यनवस्था अपरिहार्यैवेति॥ **ननु**–'ह्रदो वह्न्यभाववानि'त्यादिज्ञानं प्रमा'–इतिज्ञाने अप्रामाण्यज्ञानकाले अनुमितिनिर्वाहाय साध्याभावादिज्ञानधर्मिकप्रमात्वनिश्चयधर्मिकप्रमात्वनिश्चयत्वेन प्रतिबन्धकता न स्वीक्रियते येनाऽनवस्था स्यात्, किन्तु 'अप्रामाण्यज्ञानाऽनास्कन्दित–साध्याभावज्ञानधर्मिकप्रमात्वनिश्चयत्वेनैव प्रतिबन्धकत्वमिति नोक्तरीत्याऽनवस्था न वा तादृशप्रमात्वानां बाधाद्यात्मकत्वे क्षतिरिति चेत्!, तर्हि तदपेक्षया परमलाघवात् अप्रामाण्यज्ञानाऽनास्कन्दितबाधनिश्चयत्वेनैव धर्मेण प्रतिबन्धकत्वमास्तां, तदनुरोधेन च बाधादेरेव दोषत्वमङ्गीक्रियतामिति स्व( नव्यनैयायिक )मतमाह–**किन्त्विति**। अवधारणार्थकस्तु शब्दः बाधबुद्धिरित्युत्तरं योज्यः। भवतु-इत्यर्थकः–किंशब्दः। भ्रमत्वज्ञानाऽनास्कन्दितबाधबुद्धिः= अप्रामाण्यज्ञानाऽविषयीभूत–तदभावप्रकारकनिर्णय एव प्रतिबन्धको भवत्वित्यर्थः। तथा च– 'अप्रामाण्यज्ञानाऽनास्कन्दित-साध्याभावादिज्ञानधर्मिकप्रमात्वनिश्चयत्वेन प्रतिबन्धकत्वं परिकल्प्य तादृशप्रमात्वानां बाधादिदोषत्वपरिकल्पनापेक्षया अप्रामाण्यज्ञानाऽनास्कन्दितसाध्याभाववत्पक्षविशेष्यकादिनिश्चयत्वेन प्रतिबन्धकत्वं परिकल्प्य साध्याभाववत्पक्षादीनामेव बाधादिस्वरूपत्वमुचितम्, तद्विषयतायाः प्रतिबन्धकतावच्छेदकत्वस्योभयवादिसिद्धत्वादिति भावः॥ **तथा** च 'साध्याभावादिज्ञानेऽप्रामाण्यग्रहकाले अप्रामाण्यज्ञानाऽनास्कन्दितबाधनिश्चयस्य प्रतिबन्धकस्याऽसत्त्वात् तत्र

शङ्काविघटनेन प्रामाण्यज्ञानं क्वचिदुपयुज्यते ।

न च बाधस्थले पक्षे हेतुसत्त्वे व्यभिचारः, पक्षे हेत्वभावे स्वरूपासिद्धिरेव दोष इति वाच्यम्, बाधज्ञानस्य व्यभिचारज्ञानादेर्भेदात् । किञ्च यत्र परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादेरकिञ्चित्करत्वाद्बाधस्यानुमितिप्रतिबन्धकत्वं वाच्यम् । एवं यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्ववत्ताज्ञानं तत्र बाधस्यैव

अनुमित्युत्पत्तिर्निराबाधेति समाधानं प्रागाशंकितस्यानुसन्धेयम् ॥ ननु–अप्रामाण्यज्ञानाभावविशिष्टस्य साध्याभावादिनिश्चयस्यैव प्रतिबन्धकत्वे 'साध्याभावधर्मिकप्रामाण्यज्ञाने सति अनुमितिप्रतिबन्धो नान्यथे'त्यनुभवसिद्धस्यापि प्रामाण्यग्रहस्य तदानीं सर्वथा वैयर्थ्यापत्तिः, तथा च सर्वत्र ज्ञानेषु प्रमात्वग्रहो निष्फल एव प्रसज्येत अप्रामाण्यज्ञानाऽनास्कन्दितज्ञानानामेव कार्यकारणप्रतिबध्यप्रतिबन्धकभावादिनिर्वाहादित्याशंकायां प्रामाण्यग्रहवैयर्थ्यमुद्धरति–**तत्र भ्रमत्वशंकेति** । तत्र 'ह्रदो वह्न्यभाववानि'त्यादिबाधज्ञानादौ यदि क्वचित् वह्नितदभावादिकोट्युपस्थित्यादिरूपकारणसमवधाने सति 'इदं ज्ञानं भ्रमो न वे'त्याशंका स्यात् ( ह्रदो वह्न्यभाववानितिज्ञानं तदभाववति तत्प्रकारकं न वा इत्याशंका भवेत् ) तर्हि तद्विघटनेन–तादृशाशंकानिवारकतया **प्रामाण्यज्ञानं**=साध्याभावज्ञानादिधर्मिकप्रमात्वज्ञानं, क्वचित्=तादृशस्थले एव, उपयुज्यते=सहकारि भवति,–इत्यर्थः ॥ तथा च तादृशोपयोगितायां नाऽनवस्था भवति, नच वैयर्थ्यं भवति ॥ अनुमितितत्कारणज्ञानाऽन्यतरं प्रति साक्षात्प्रतिबन्धकीभूतज्ञानविषयत्वाभावान्न साध्याभावादिज्ञानीयप्रमात्वं हेत्वाभास इति भावः ॥

ननु बाधः पञ्चमो दोष एव न मन्तव्यः, अन्येन दोषेण चरितार्थत्वादित्याशयवान् शंकते–**न च बाधस्थले**–इति । 'वह्निः–अनुष्णः,–द्रव्यत्वादि'तिबाधस्थले वह्न्यात्मके पक्षे यदि हेतुर्वर्तते तदा 'अनुष्णत्वात्मकसाध्यस्य अभाववति वह्नौ हेतोर्द्रव्यत्वस्य सत्त्वात् 'साध्याभाववद्वृत्तिहेतु'रिति व्यभिचारदोषो भवत्येव, यदि च पक्षे हेतुर्नास्ति यथा 'ह्रदो वह्निमान्धूमादित्यत्र, तदा स्वरूपाऽसिद्धिदोषो भवति, तथा च बाधस्थले व्यभिचारस्वरूपासिद्ध्यन्यतरसत्त्वनियमेन तज्ज्ञानादेव अनुमित्यनुत्पत्तौ बाधस्य न हेत्वाभासत्वमिति भावः ॥ समाधत्ते–**बाधज्ञानस्येति** । बाधज्ञानस्य अनुमितिप्रतिबन्धकत्वात् व्यभिचारज्ञानस्य अव्यभिचारांश( व्याप्ति )ग्रहप्रतिबन्धकत्वात् स्वरूपासिद्धिज्ञानस्य पक्षधर्मताज्ञानप्रतिबन्धकत्वाच्च त्रयाणां फलभेदात् बाधस्य हेत्वाभासत्वं व्यभिचारादिभिन्नदोषत्वं चांगीकार्यमिति भावः ॥ **ननु**–त्रयाणां फलभेदेऽपि आवश्यकव्यभिचारादिदोषविषयकज्ञानात् व्याप्त्यादिज्ञानाऽनुत्पत्तौ तादृशानुमित्यनुत्पत्तेरपि संभवात् हेतोर्दुष्टत्वसम्भवाच्च बाधस्य हेत्वाभासत्वमनावश्यकमित्यत आह–**किञ्चेति** । यत्र='अयोगोलकं-धूमवत्,–वह्ने'रित्यत्र 'धूमव्याप्यवह्निमदयोगोलकमि'तिशाब्दपरामर्शबुद्धिर्जाता ततो व्यभिचारज्ञानं विनैव 'धूमाभाववदयोगोलकमि'ति बाधबुद्धिर्जाता, तत्र=परामर्शोत्तरकालीनबाधज्ञानस्थले, **व्यभिचारज्ञानादेः**=व्यभिचारज्ञानस्य,–**आदिना**='ह्रदो वह्निमान् धूमादि'त्यत्र वह्निव्याप्यधूमवानितिशाब्दपरामर्शोत्तरं 'धूमाभाववान् ह्रद'इतिस्वरूपाऽसिद्धिज्ञानं विनैव बाधज्ञानं जातं, तत्र स्वरूपासिद्धिज्ञानस्य च,–**अकिंचित्करत्वात्**=व्याप्तिज्ञानप्रतिबन्धद्वारा परामर्शप्रतिबन्धद्वारा च अनुमित्यनुत्पादफलकत्वाऽभावात्, तत्राऽनुमित्युत्पत्तिः हेतोर्दुष्टत्वानुपपत्तिश्च स्याताम् अतो **बाधस्य**=बाधज्ञानस्य, अनुमितिप्रतिबन्धकत्वं तद्विषयदोषं बाधमादायैव च हेतोर्दुष्टत्वमुपपादनीयमिति भावः ॥ वस्तुतः सर्वत्र बाधस्थले व्यभिचारस्वरूपासिद्ध्यन्यतरनियमोऽपि नास्तीति स्थलविशेषं दर्शयति–**एवमिति** ।

**प्रतिबन्धकत्वं वाच्यम्। न च पक्षे घटे गन्धसत्त्वात्कथं बाध इति वाच्यम्, पक्षतावच्छेदकदेशकालावच्छेदेनानुमितेरनुभवसिद्धत्वादिति।**

**बाधतद्व्याप्यभिन्ना ये हेत्वाभासास्तद्व्याप्या अपि तन्मध्य एवान्तर्भवन्ति।**

---

उत्पत्तिक्षणावच्छिन्ने घटादौ=उत्पत्तिकालावच्छिन्नघटात्मकपक्षे, गन्धव्याप्यपृथिवीत्ववत्ताज्ञानं=गन्धव्याप्यपृथिवीत्वमि'त्यनेन गन्धवदन्याऽवृत्तिपृथिवीत्वमितिव्याप्तिः दर्शिता, 'पृथिवीत्ववत्ता'इत्यनेन 'पृथिवीत्ववान् घट'इतिपक्षधर्मता दर्शिता 'उत्पत्तिकालावच्छिन्नघटः, गन्धवान्,-पृथिवीत्वादि'त्यत्र स्थले पक्षे=उत्पत्तिकालावच्छिन्नघटे पृथिवीत्वं वर्ततेऽतो नास्ति स्वरूपासिद्धिः, उत्पत्तिक्षणे घटे गन्धाऽभावेपि द्वितीयक्षणे स एव घटो गन्धवान् भवति,-अतः तस्मिन्नेव घटे तद्भेदाऽभावात् गन्धवदन्यपदेन उत्पत्तिकालीनघटस्याऽग्रहणात् साध्यवदन्यवृत्तित्वात्मकव्यभिचारोऽपि नास्ति पृथिवीत्वे, तत्र बाधस्यैव='उत्पत्तिक्षणविशिष्टघटः-गन्धाभाववानि'तिबाधज्ञानस्यैव अनुमितिप्रतिबन्धकत्वं वक्तव्यम्, बाधवत्तया च हेतोर्बाधितत्वम्, अतो बाधस्यातिरिक्तदोषत्वं निराबाधमिति भावः॥ ननु-बाधोऽपि 'प्रतियोगिव्यधिकरणसाध्याभाववत्पक्ष'इत्यंगीकरणीयः, अन्यथा कपिसंयोगवतिवृक्षे कपिसंयोगाऽभाववत्ताऽपि बाधः स्यात्, तथाच पक्षे घटे द्वितीयक्षणे गन्धाधिकरणतायाः सत्त्वात् प्रतियोगिव्यधिकरणगन्धाऽभाववत्ताया अभावात् नास्त्येव बाध इत्याशंकते-**न च पक्षे घटे इति**। यत्र उत्पत्तिक्षणावच्छिन्नघटे गन्धः साध्यते तत्र घटात्मके पक्षे, द्वितीयक्षणावच्छेदेन **गन्धसत्त्वात्**=गन्धात्मकसाध्यसत्त्वात् साध्यात्मकप्रतियोगिव्यधिकरणगन्धाऽभावस्य तत्राऽसत्त्वात् कथं बाधः? अर्थात् नास्ति बाधः, अतो बाधस्य नास्त्येव हेत्वाभासत्वमित्याशंकितुरभिप्रायः॥ समाधत्ते-**पक्षतावच्छेदकेति**। यत्र देशस्य कालस्य वा स्वरूपसम्बन्धरूपपक्षतावच्छेदकत्वं, तत्र देशकालात्मकपक्षतावच्छेदकावच्छेदेन अनुमितौ साध्यस्य विधेयतायाः सर्वानुभवसिद्धत्वात् तत्र 'पक्षतावच्छेदकावच्छिन्नविशेष्यताकसाध्यतावच्छेदकावच्छिन्नप्रकारताकानुमितिं प्रति पक्षतावच्छेदकावच्छिन्नविशेष्यताकसाध्यतावच्छेदकावच्छिन्नाभावप्रकारताकबाधज्ञानस्य प्रतिबन्धकतया तद्विषयस्य प्रतियोगिवैयधिकरण्याऽघटितस्यापि साध्याभाववत्त्वस्य बाधस्याङ्गीकारात्, तथा च 'उत्पत्तिक्षणावच्छिन्नघटः गन्धवानि'त्यनुमितिविरोधिनः 'उत्पत्तिक्षणावच्छिन्नघटः गन्धाभाववानि'तिबाधज्ञानस्य विषयतया तत्र बाधो वर्तत एव, अतो हेत्वाभासान्तरत्वं तस्येति भावः॥ ननु-'उत्पत्तिक्षणावच्छिन्नघटः, गन्धवान्,-पृथिवीत्वात्, गन्धाभाववान्-गन्धविरोध्यग्निसंयोगवत्त्वात्'इति सत्प्रतिपक्षस्तत्र दोषः स्यात्, अतो बाधो निरर्थक इति चेन्न। प्रतियोगिव्यधिकरणगन्धाभावव्याप्यस्य घटेऽसम्भवात्। तथा च असंकीर्णबाधोदाहरणमिदं बोध्यमिति॥

ननु-बाधादिवत्-असाधारणत्वाऽनुपसंहारित्वसाध्यासिद्धित्वसाधनाऽसिद्धित्वादिरूपेणाऽपि प्रतिबन्धकतायाः अनुभवसिद्धत्वात् पञ्चाधिक्येन हेत्वाभासा वक्तव्याः कथं पञ्चैवेत्यत आह-**बाधतद्व्याप्येति**। बाधः साध्याभाववत्पक्षात्मकदोषः, तद्व्याप्यः सत्प्रतिपक्षः, बाधस्थले हेत्वन्तरेण साध्यसिद्ध्यर्थं प्रतिप्रयोगोऽपि कर्तुं शक्यतेऽतो बाधव्याप्यः=बाधलक्ष्यातिरिक्ताऽवृत्तिर्भवति सत्प्रतिपक्षः, **तद्भिन्नाः**=बाधसत्प्रतिपक्षभिन्ना ये **हेत्वाभासाः**=व्यभिचारिविरुद्धाऽसिद्धाः, **तद्व्याप्याः** व्यभिचारव्याप्याः-साधारणाऽसाधारणाऽनुपसंहारिणो दोषाः, विरुद्धव्याप्यौ=विधिसाधन-निषेधसाधननामानौ, असिद्धव्याप्याः-व्याप्यत्वासिद्धस्वरूपाऽसिद्धाश्रयासिद्धादयः, अपि=एतेऽवान्तरभेदास्तु, तन्मध्ये एव=स्वस्वव्यापकदोषे एव, अन्तर्भवन्ति=अन्तर्भाव्य पञ्च हेत्वाभासाः परिगणिताः, अन्यथा=अनन्तर्भूततया परिगणने तु, हेत्वाभासानामधिकसंख्याकत्वापत्तिः स्यात्, तत्र च 'ते च

अन्यथा हेत्वाभासाधिक्यप्रसङ्गात्। बाधव्याप्यसत्प्रतिपक्षो भिन्न एव, स्वतन्त्रेच्छेन मुनिना पृथगुपदेशात्। सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धक इति प्रघट्टकार्थः ॥७१॥

आद्यः साधारणस्तु स्यादसाधारणकोऽपरः ।
तथैवानुपसंहारी त्रिधाऽनैकान्तिको भवेत् ॥ ७२ ॥

---

पञ्च'इति न्यायदर्शनवात्स्यायनभाष्यविरोधापत्त्या अधिकपरिगणनस्याऽनुचितत्वादिति भावः ॥ ननु सत्प्रतिपक्षदोषः सर्वदा सर्वथा बाधस्थले एव उद्भवति सोऽपि बाधेऽन्तर्भावनीयस्तथा च 'चत्वार एव हेत्वाभासाः' इति परिगणनीयमित्यत आह–बाधव्याप्यसत्प्रतिपक्ष इति। यद्यपि सत्प्रतिपक्षस्य बाधव्याप्यतया बाधेऽन्तर्भूतत्वमुचितं, तथापि स्वतन्त्रेच्छेन=अन्येच्छाऽनधीनेच्छेन मुनिना गौतमेन न्यायसूत्रे 'सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः'(१।२।४) इति पञ्चानां पृथगुपदेशात् भिन्नत्वमेवेति बोध्यम्॥ ननु–यत्र 'साध्याभावव्याप्तो हेतुरि'तिविरोधः, यथा 'अयं पिण्डः–गोत्ववान् ,–अश्वत्वादि'ति, तत्रैव 'अयं पिण्डः–गोत्वाऽभाववान् ,–गवयत्वादि'ति प्रतिप्रयोगे सति 'साध्याभावव्याप्यवानि'तिसत्प्रतिपक्षस्तथा च सत्प्रतिपक्षव्याप्यतद्व्यक्तिविरोधेनैव तत्र 'समूहालम्बनैकज्ञानविषयत्वाख्यपरम्परासम्बन्धेन हेतोरश्वत्वादेर्दुष्टत्वनिर्वाहे सत्प्रतिपक्षो नाऽतिरिक्तहेत्वाभासोऽङ्गीकार्यः, किञ्च–पक्षे गोत्ववत्ता यदि, तदा पक्षधर्मताभङ्गः, यदि गोत्वाभाववत्ता, तदा प्रकृतसाध्यव्याप्तिभंगः, तथा च–स्वरूपासिद्धि–साधारणाऽन्यतरदोषेणैव तत्र हेतोर्दुष्टत्वोपपत्तौ सत्प्रतिपक्षो नातिरिक्तहेत्वाभासोऽङ्गीकार्य–इत्याशंकायां तत्समाधानमाह–सत्प्रतिपक्षव्याप्यस्त्विति। सत्प्रतिपक्षस्थले सत्प्रतिपक्षलक्ष्यं लक्ष्योक्त्योद्भूतः अत एव सत्प्रतिपक्षव्याप्यः=विरोधव्यक्तिविशेषः, अथवा स्वरूपाऽसिद्धिव्यक्तिविशेषः, अथवा साधारणव्यभिचारव्यक्तिविशेष इति, स तु न प्रतिबन्धकः=नाऽनुमित्यादिप्रतिबन्धको भवति तत्र। ननु कथं न प्रतिबन्धकः इति चेत्!, सत्प्रतिपक्षितत्वज्ञानाऽनन्तरं व्याप्त्यादिभङ्गज्ञानस्य जायमानत्वात् उपजीव्यत्वेन(कारणत्वेन)प्रथमोपस्थिततया सत्प्रतिपक्षस्यैव प्रतिबन्धकत्वात् विरुद्धादीनां पश्चाद्भावितया तत्राऽसंचारात् प्राथमिकाऽवश्यकानुमितिप्रतिरोधेनैव दूषकत्वात् ततः परमुखनिरीक्षकत्वेन तद्विषयविषयकस्य आभासत्वाऽयोगादिति भावः॥ ननु–साध्यतदभावयोरिव तद्व्याप्यत्वेनाऽवधारितयोर्विरोधादेकत्र न निश्चयः किन्तु संशयः, निश्चये वा अन्यतरव्याप्तिसंशय इति व्याप्यत्वासिद्धिरेव दूषणं सत्प्रतिपक्षस्थलेऽस्तु इति चेन्न। उभयोरेकत्र निश्चयाऽनन्तरमेव अन्यतरव्याप्तिसंशय इति सत्प्रतिपक्षस्य व्याप्यत्वासिद्ध्युपजीव्यतया भिन्नदोषत्वात्॥ तथा च सर्वत्र तद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्तानिर्णयात्मकसत्प्रतिपक्षस्य प्रतिबन्धकत्वे सर्वमतसिद्धे जाग्रति सति तदभावव्याप्यव्याप्यवत्ता(सत्प्रतिपक्षव्याप्यवत्ता)निर्णयस्य तत्र विरोधित्वे मानाभावात् सत्प्रतिपक्षव्याप्य-तद्व्यक्तिदोषाः न सत्प्रतिपक्षतः पृथक्प्रतिबन्धकाः, अतः सत्प्रतिपक्षो हेत्वाभासान्तरमिति भावः॥ ७१॥

मूले–सव्यभिचारं विभजते–आद्य इति। आद्यः–एकः साधारणसव्यभिचारो दोषः, अपरः=द्वितीयः असाधारणकः=असाधारणसव्यभिचारदोषः, तथैव=तथा तृतीयः–अनुपसंहारिसव्यभिचारदोषः, इत्येवम् अनैकान्तिकः=सव्यभिचारदोषः–त्रिधा भवतीत्यर्थः॥ पक्षसपक्षविपक्षसाधारणो हेतुः साधारणव्यभिचारी, पक्षमात्रस्याऽसाधारणहेतुः असाधारणव्यभिचारी, कुत्रापि व्याप्तेरुपसंहारशून्यो हेतुः अनुपसंहारिव्यभिचारी उच्यते। अनैकान्तः=एकः साध्यमेव, अन्तः=नियामकः–नियमस्य व्याप्त्यात्मकस्य निरूपको यस्य स एकान्तः, स एव ऐकान्तिकः स्वार्थे ठक्, साध्यनिरूपितव्याप्तिमा-

**सव्यभिचारं विभजते—आद्य इति ॥ त्रिधा-त्रिप्रकारः । अनैकान्तिकः=सव्यभिचारः ॥ ७२ ॥**

**यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः ।**

**यः सपक्ष इति । सपक्षविपक्षवृत्तिः साधारण इत्यर्थः । सपक्षः-निश्चितसाध्यवान् । विपक्षः-साध्यवद्भिन्नः । विरुद्धवारणाय सपक्षवृत्तित्वमुक्तम् । वस्तुतो विपक्षवृत्तित्वमेव वाच्यम्, विरुद्धस्य साधारणत्वेऽपि दूषकताबीजस्य भिन्नतया**

---

नित्यर्थः, न ऐकान्तिक इत्यनैकान्तिकः—साध्यनिरूपितव्याप्तिग्रहप्रतिबन्धकग्रहविषयविशिष्ट इत्यर्थः, व्यभिचारीति यावत् ॥ सव्यभिचारस्य **पूर्वपक्षलक्षणानि**—साध्यसंशयजनककोटिद्वयोपस्थापकपक्षधर्मताज्ञानविषयत्वे सति हेत्वभिमतत्वम्, पक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धाऽव्यावृत्तत्वम्, साध्याव्याप्यत्वे सति साध्याभावाव्याप्यहेत्वाभासत्वम्, साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वं, सपक्षविपक्षगतसर्वसपक्षविपक्षव्यावृत्तान्यतरत्वम्, पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वे सति पक्षातिरिक्तसाध्याभाववन्मात्रवृत्तिभिन्नत्वम्, पक्षवृत्तित्वे सति विरुद्धान्यत्वे सति अनुमित्यौपयिकसम्बन्धशून्यत्वम् इति ॥ **सिद्धान्तलक्षणानि**—उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं तत्त्वम्, विरुद्धान्यत्वे सति पक्षवृत्तित्वे सति अनुमितिविरोधिसम्बन्धाऽव्यावृत्तत्वं, साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वम्, वा इति बोध्यम् ॥ मुक्तावल्यां त्रिधापदार्थमाह—**त्रिप्रकार** इति । सव्यभिचारी त्रिविधः, साधारणाऽसाधारणाऽनुपसंहारिभेदात् । त्रिविधत्वं चात्र—उद्देश्यतावच्छेदकसमनियतवस्तुमदन्यसंख्यावत्त्वं, समनैयत्यं च स्वाश्रयाश्रयत्वसम्बन्धेन, स्वं त्रित्वं तदाश्रयास्त्रयः साधारणत्वादयः, तदाश्रयाः साधारणादयस्त्रयः । समनियतत्वं च व्यापकत्वे सति व्याप्यत्वम्, स्वाश्रयाश्रयत्वसम्बन्धेनेति । वस्तुमत्त्वं च स्ववृत्तित्व-स्वसमानाधिकरणस्वेतरवृत्तित्वोभयसम्बन्धेनेति, स्वं सव्यभिचारित्वं, तद्वृत्तित्वम्, अथ च सव्यभिचारित्वसमानाधिकरणस्वेतरसाधारणत्ववृत्तित्वोभयसम्बन्धेन वस्तुमत्त्वं चतुष्ट्वसंख्यायां, तदन्यत्वाभावान्न सव्यभिचारी चतुर्विध इति व्यवहारः । हेतुः स्वप्रतियोगितासम्बन्धेन बोध्यः । साधारणं लक्षयति—मूले **यः सपक्षे इति ।** यो हेतुः सपक्षे—निश्चितसाध्यवति,—विपक्षे=निश्चितसाध्याभाववति च, वर्तते, सः साधारणव्यभिचारी हेतुर्बोध्य इत्यर्थः ॥ मुक्तावल्यां स्फुटार्थमाह-**सपक्षविपक्षवृत्तिरिति ।** यथा—'पर्वतो—वह्निमान्,—प्रमेयत्वादि'त्यत्र सपक्षे महानसे विपक्षे जलह्रदादौ च वर्तते ईश्वरीयप्रमाविषयत्वं(प्रमेयत्व)मिति । सपक्षं लक्षयति—**सपक्ष** इति । निश्चितसाध्यवान्=विशेष्यताख्यविषयतासम्बन्धेन साध्यप्रकारकनिश्चयविशिष्टः सपक्षो 'यथा वह्निमन्महानसम्'—इत्यर्थः ॥ विपक्षलक्षणमाह—**विपक्षः साध्यवद्भिन्नइति ।** विशेष्यताख्यविषयतासम्बन्धेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदप्रकारकनिश्चयविशिष्टो, यथा 'वह्निमद्भिन्नजलह्रद'इत्यर्थः । विपक्षः—निश्चितसाध्याभाववानिति-पाठे तु विशेष्यताख्यविषयतासम्बन्धेन साध्याभाववत्त्वावच्छिन्नप्रतियोगिताकभेदप्रकारकनिश्चयविशिष्ट इत्यर्थः । यथा—'वह्न्यभाववान् जलह्रद' इति ॥ **विरुद्धवारणायेति ।** 'शब्दः,—नित्यः,—कृतकत्वादि'त्यत्र विरुद्धे कार्यत्वे हेतौ नित्यत्वाभाववति अनित्ये विपक्षे वर्तमानत्वादतिव्याप्तिः, तद्वारणाय-**सपक्षवृत्तित्वमिति ।** तथाच निश्चितनित्यत्ववति परमाण्वादौ कृतकत्वस्याऽसत्त्वात् वारणं बोध्यमिति ॥ 'शब्दः—गुणः—चाक्षुषत्वात्,—रूपवदित्यत्र स्वरूपाऽसिद्धेऽतिव्याप्तिवारणाय—पक्षवृत्तित्वे सती'त्यस्यापि निवेशात् ॥ लाघवमभिप्रेत्याह-**वस्तुत** इति । **'विपक्षवृत्तित्वमेव'**

तस्य पार्थक्यात्।

**यस्तूभयस्माद् व्यावृत्तः स चासाधारणो मतः ॥ ७३ ॥**

यस्तूभयस्मादिति । सपक्षविपक्षव्यावृत्त इत्यर्थः । सपक्षः-साध्यवत्तया निश्चितः । विपक्षः—साध्यशून्यतया निश्चितः । शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वस्य सन्देहस्तदा सपक्षत्वं, विपक्षत्वं च घटादीनामेव, तद्व्यावृत्तं च शब्दत्वमिति तदा तदसाधारणम् । यदा तु शब्देऽनित्यत्वनिश्चयस्तदा नासाधारणम्। इदं प्राचां मतम्। नवीनमतं तु पूर्वमुक्तम् ॥ ७३ ॥

---

असाधारणव्यभिचारस्य लक्षणं वक्तव्यम्, साध्यवद्भिन्नवृत्तित्वमेवेत्यर्थः। तथाच—'साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदप्रकारकनिश्चयविशिष्टवृत्तिहेतुः'—साधारणव्यभिचार इत्यर्थः फलितः ॥ ननु विरुद्धे स्वरूपाऽसिद्धे च हेतावतिव्याप्तिः स्थास्यत्येवेति सा कथं वारणीया ? इत्याकांक्षायांभवत्वतिव्याप्तिः, फलभेदेन तयोर्भेदादित्याह—**विरुद्धस्येति**। साधारणत्वेऽपि=एतादृशसाधारणलक्षणवत्त्वेऽपि । **दूषकताबीजस्येति** । विरुद्धज्ञानस्य सामानाधिकरण्यग्रहप्रतिबन्धकत्वं, साधारणव्यभिचारज्ञानस्य अव्यभिचारग्रहप्रतिबन्धकत्वं, स्वरूपाऽसिद्धज्ञानस्य परामर्शप्रतिबन्धकत्वमिति दूषकताबीजात्मकप्रतिबन्धकताया भिन्नतया **तस्य**=साधारणव्यभिचारस्य पार्थक्यात्—अतिरिक्तदोषत्वादित्यर्थः। साधारणस्य—अव्यभिचाराऽभाववत्तया व्याप्तिज्ञानप्रतिबन्धकत्वं बोध्यं यथा—'हेतुनिष्ठसाध्यवद्भिन्नवृत्तित्वाभावाभाववत्ताग्रहात्मकस्य साधारणव्यभिचारग्रहस्य अव्यभिचाराऽभावग्रहत्वेन रूपेण प्रतिबन्धकत्वमिति बोध्यम् ॥ साधारणव्यभिचारस्य पूर्वपक्षलक्षणानि—साध्याभाववद्गामित्वम्, साध्यवत्तदन्यवृत्तित्वम्, निश्चितसाध्यवत्तदन्यवृत्तित्वम्, सपक्षगतत्वम्, सपक्षविपक्षगतत्वम्, पक्षान्यसाध्यवत्तदन्यवृत्तित्वं, साध्यवद्वृत्तित्वे सति सर्वसाध्यवदन्यवृत्तित्वम्, इति॥ सिद्धान्तलक्षणन्तु—विपक्षवृत्तित्वम् । अत्र विपक्षत्वं साध्याभाववत्त्वं, न तु निश्चयगर्भं, तज्ज्ञानस्याऽप्रतिबन्धकत्वाव, यतः व्याप्तेर्निश्चितसाध्याभाववदवृत्तित्वाऽघटितत्वादिति ॥ **मूले-यस्तूभयस्मादिति**। यो हेतुः, उभयस्मात्—सपक्षात् विपक्षाच्च व्यावृत्तः=एतदुभयाऽवृत्तिः सः असाधारणव्यभिचारी बोध्य इत्यर्थः ॥ **मुक्तावल्याम**साधारणं लक्षयति-**सपक्षविपक्षव्यावृत्त** इति ।—'निश्चितसाध्यवद्वृत्तित्वाऽभाववत्त्वे सति निश्चितसाध्याऽभाववद्वृत्तित्वाभाववानि'ति लक्षणार्थः। अन्वयव्यतिरेकव्याप्तिशून्यत्वे सति पक्षमात्रवृत्तित्वम्—असाधारणत्वमिति फलितार्थः॥ सपक्षं निर्वक्ति-**साध्यवत्तयेति**। विशेष्यताख्यविषयतासम्बन्धेन साध्यप्रकारकनिश्चयविशिष्ट इत्यर्थः। विपक्षं निर्वक्ति-**साध्यशून्यतयेति** । साध्याभाववत्तयेत्यर्थः, तथा च विशेष्यताख्यविषयतासम्बन्धेन साध्याभावप्रकारकनिश्चयविशिष्ट इति फलितम् ॥ निश्चयघटितसपक्षत्वविपक्षत्वनिवेशस्य प्रयोजनं दर्शयितुं स्वयमुदाहरति-**शब्द** इति । शब्दः पक्षः । अनित्यत्वं-प्रागभावप्रतियोगित्वं साध्यम् । शब्दत्वं हेतुः। तत्र यदा 'शब्दः अनित्यो न वा'इतिसंशयः, तदा शब्दो न सपक्षो विपक्षो वा भवति, निश्चितसाध्यवत्त्वाभावात् निश्चितसाध्याभाववत्त्वाभावाच्च, किन्तु सपक्षो घटादिः विपक्षः परमाण्वादिरेव, तद्व्यावृत्तं=घटाद्यवृत्तित्वं परमाण्वाद्यवृत्तित्वं च शब्दत्वात्मकहेतोर्भवतीति, तत् असाधारणव्यभिचारीत्यर्थः ॥ तथाच नासंभव इति'निश्चय'पदस्य फलं बोध्यमिति भावः। यदा तु 'शब्दः-अनित्यः,-कार्यत्वात,-घटवदि'त्यनुमानान्तरेण शब्दे अनित्यत्वस्य निश्चयस्तदा तु निश्चितसाध्यवति शब्दे सपक्षे वृत्तित्वात् 'प्रागुक्तः शब्दत्वहेतुः नाऽसाधारणव्यभिचारीति । किन्तु तत्र मीमांसकानामसाधारण्यभ्रम इति बोध्यमिति भावः ॥ **इदं**=निश्चयघटिताऽसाधारणलक्षणं, प्राचां मतं=

तथैवानुपसंहारी केवलान्वयिपक्षकः ।
( पर्वतो वह्निमान् सत्त्वादिति तत्रादिमो भवेत् ॥
पृथ्वी नित्या गन्धवत्त्वादिति स्यादपरस्तथा ।
सर्वं तुच्छं प्रमेयत्वादिति तत्रान्तिमो भवेत् । )

तथैवेति । सर्वमभिधेयं प्रमेयत्वादित्यादौ सर्वस्यैव पक्षत्वात्सामानाधिकरण्यग्रहस्थलान्तराभावान्नानुमितिः । इदं तु न सम्यक्, पक्षैकदेशे सहचारग्रहेऽपि क्षतेरभावात् । अस्तु वा सहचाराग्रहः, तावताप्यज्ञानरूपासिद्धिरेव, न तु हेत्वाभा

---

असाधारणस्याऽनित्यदोषतावादिप्राचीनमतेनाऽभिहितमित्यर्थः ॥ असाधारणादीनां नित्यदोषतावादिनां नवीनानां मतं तु **पूर्वम्**–'असाधारणः–साध्याऽसमानाधिकरणो हेतु'रित्यादिना पूर्वमुक्तमेवेत्यर्थः॥ असाधारणनिश्चयस्य व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्धकत्वं बोध्यम् ॥ चिन्तामणिकारास्तु–'सर्वसपक्षव्यावृत्तत्वं' लक्षणम्, न तु विपक्षव्यावृत्तत्वमपि, व्यर्थविशेषणत्वादित्याहुः ॥७३॥

**'मूले–तथैवानुपसंहारीति** । प्राचीनमते–केवलान्वयिपक्षकत्वम्'–अनुपसंहारिणो लक्षणम् । केवलान्वयी–अत्यन्ताभावाऽप्रतियोगी पक्षो यस्य सः केवलान्वयिपक्षकः, केवलान्वयिधर्मावच्छिन्नपक्षकहेतुरिति यावत् । यथा सर्वत्वं केवलान्वयिधर्मः । पक्षता अत्र साध्यसंशयरूपा ग्राह्या । तेन 'सर्वम् अभिधेयं,–प्रमेयत्वादि'त्यत्र सर्वस्यैव पक्षत्वात् तत्र साध्यसंशये सति हेतौ साध्यसामानाधिकरण्यसंशयेन सामानाधिकरण्यग्रहस्थलान्तराऽभावात् सामानाधिकरण्यात्मकव्याप्तिनिश्चयः प्रतिबध्यते, **किंच**- तत्र यदा सिद्धिः सिषाधयिषा च तदा साध्यनिश्चयसम्भवेन सामानाधिकरण्यघटितव्याप्तिग्रहसंभवात् तस्य सद्धेतोः अलक्ष्यतया सिषाधयिषाविरहविशिष्टसिद्ध्यभावविशिष्टस्य पक्षस्य तदा केवलान्वयित्वेऽपि न तत्राऽतिव्याप्तिरिति मूलाऽभिप्रायः ॥ मुक्तावल्यामनुपसंहारिणो हेत्वाभासत्वमुपपादयति–**'सर्वमभिधेयमिति** । सर्वं पक्षः, अभिधेयं–अभिधा–ईश्वरेच्छा शक्तिः–ईश्वरेच्छाविषयत्वमिति साध्यम्, प्रमेयत्वात्–ईश्वरीयप्रमाविषयत्वादिति हेतुः ॥ तत्र सर्वत्वं धर्मः सप्तपदार्थेषु वर्ततेऽतः सः अत्यन्ताभावाऽप्रतियोगीति केवलान्वयिधर्मा–( सर्वत्वा )वच्छिन्नस्य **सर्वस्य** पक्षत्वात्=पक्षतयेत्यर्थः ॥ **सामानाधिकरण्यग्रहस्थलान्तराऽभावादिति** । सर्वत्र पक्षे साध्यसन्देहात,सपक्षविपक्षाऽप्रसिद्धेश्च साध्यहेत्वोः सामानाधिकरण्यात्मकव्याप्तिग्रहार्थं स्थलाऽनुपलम्भात् व्याप्तिग्रहात्मककारणाभावेन कार्यमनुमितिर्नैव भवतीत्यनुपसंहारिणो हेत्वाभासत्वमिति भावः ॥ नव्याः प्राचीनमतं खण्डयति–**इदं तु न सम्यगिति** । इदं=प्राचां मतम् । असम्यक्त्वे हेतुमाह–**पक्षैकदेशे इति** । सर्वस्यैकदेशे घटे, सहचारग्रहेऽपि=साध्यहेत्वोः सामानाधिकरण्यग्रहे जायमाने । **क्षतेरभावादिति** । तदानीं केवलान्वयिपक्षकत्वस्याऽनुपसंहारित्वस्य क्षतेरभावात् । तथा च–सर्वत्वावच्छेदेन पक्षे संशयसामग्रीसत्त्वेऽपि घटत्वावच्छेदेन साध्यनिश्चयोत्पादे बाधकाऽभावात् पक्षैकदेशे घटे एव 'यत्र घटे–प्रमेयत्वं तत्र अभिधेयत्वमि'ति–अभिधेयत्वसामानाधिकरण्यग्रहस्य जायमानत्वेन तत्रानुमितेर्निराबाधात्, तत्र प्राचीनोक्ताऽनुपसंहारित्वज्ञानस्य अनुमितितत्करणान्यतरप्रतिबन्धकत्वाऽभावात् तस्य न हेत्वाभासत्वं स्यादिति भावः ॥ **ननु**–प्राचीनमते समानविषयकत्वेनैव प्रतिबन्धकत्वात् सर्वत्वावच्छेदेन साध्यसंशयकालेऽपि सर्वान्तर्गतघटत्वावच्छिन्नेऽपि साध्यनिश्चयो न भवत्येवेत्यत आह–**अस्तु वेति** । सहचाराऽग्रहः=घटेऽपि साध्यहेत्वोः सामानाधिकरण्याऽग्रहः

सत्वं तस्य, तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तम्।

**यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥ ७४ ॥**
**( गोत्वादिसाध्ये हेतुर्हि यत्राश्वत्वादिको भवेत् ॥ )**

यः साध्यवतीति। एवकारेण साध्यवत्त्वावच्छेदेन हेत्वभावो बोधितः। तथा च

---

अस्तु। तावताऽपि=तथापि॥ तत्र स्थले **अज्ञानरूपाऽसिद्धिः**=व्याप्तिग्रहाऽभावात्मिका असिद्धिः–कारणासिद्धिरेव पुरुषस्य दूषणं मन्तव्यं,नतु तस्य=सहचाराऽग्रहस्य=सामानाधिकरण्याऽज्ञानस्य, सामानाधिकरण्यग्रहाविषयहेतोरितियावत्, आभासत्वं–दुष्टत्वमिति। तथाच सहचाराऽग्रहस्य स्वरूपसत एव अनुमित्यनुत्पादप्रयोजकतया तादृशान्यतरप्रतिबन्धकज्ञानविषयत्वाऽभावात् हेत्वाभासलक्षणाऽगमनान्न हेत्वाभासत्वमिति भावः॥ न च तत्र सहचाराऽग्रहप्रयोजकः संशय एव हेत्वाभास इति वाच्यम्। तस्यापि स्वरूपसत एव विरोधित्वात्। न च संशयविषयस्य साध्याभावविशिष्टपक्षादेरेव तत्र हेत्वाभासत्वमिति वाच्यम्। सर्वमभिधेयमित्यादावभिधेयत्वाभावविशिष्टपक्षाऽप्रसिद्धेः। ननु संशयविषयसाध्यादेरेव हेत्वाभासत्वमस्त्विति चेन्न। बाधभ्रमवारणाय–यादृशविशिष्टविषयकज्ञानमनुमितिप्रतिबन्धकं तस्यैव हेत्वाभासत्वेन प्राक् सिद्धान्तितत्वात्॥ ननु–तर्हि नव्यमते कीदृशम् अनुपसंहारिव्यभिचारलक्षणमत आह–**तथापिकेवलान्वयिसाध्यकत्वमिति**। केवलान्वयि=अत्यन्ताऽभावाऽप्रतियोगि,–साध्यं यस्य हेतोस्तत्त्वम्=अनुपसंहारित्वं, **उक्तम्**–"अनुपसंहारी–अत्यन्ताभावाऽप्रतियोगिसाध्यकादि"रितिग्रन्थेन पूर्वमभिहितमित्यर्थः॥ इदमुपलक्षणम्–व्यतिरेकव्याप्तिज्ञानप्रतिबन्धफलकत्वमपि–लक्षणं बोध्यम्॥ अनुपसंहारित्वनिश्चयस्य व्याप्तिसंशयोपधायकत्वेन व्याप्तिग्रहप्रतिबन्धकत्वमनुसन्धेयम्॥ **अनुपसंहारिणः पूर्वपक्ष**लक्षणानि–असत्सपक्षविपक्षत्वम्, केवलान्वयिधर्मावच्छिन्नपक्षकत्वम्, अत्यन्ताभावप्रतियोगिसाध्यकत्वे सति केवलान्वयिधर्मावच्छिन्नपक्षकत्वम्, विप्रतिपत्तिविषयमात्रवृत्तित्वम्, व्याप्तिग्रहानुकूलसहचारनिश्चयत्वावच्छिन्नविरोधिरूपवत्त्वम्, केवलान्वयिधर्मावच्छिन्नसाध्यसन्देहविषयवृत्तित्वम्, साध्यवत्तानिश्चयसामान्यविरोधिसंशयविषयवृत्तित्वं, साध्यसन्देहविषयताव्याप्यसाध्यसिद्ध्यनुकूलव्याप्तिग्रहौपयिकसत्ताकत्वम्, अथाऽनुपसंहारिसिद्धान्तलक्षणं–'व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराऽभाववत्त्वम्' 'विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्यतिरेकव्याप्तिग्रहविरोधितावच्छेदकरूपवत्त्वमिति, तादृशं रूपं साध्यादेरत्यन्ताभावाऽप्रतियोगित्वादिकमिति॥ **मूले–यः साध्यवतीति**। यो हेतुः साध्यवति=साध्याधिकरणे महानसादौ न वर्तते स हेतुर्विरुद्धो नाम उदाहृत इत्यर्थः॥ **मुक्तावल्यां**–कारिकास्थ'नैवास्ती'त्येवकारव्यावर्त्यं दर्शयति–**एवकारेणेति**। यदि साध्यवत्त्वावच्छेदेन हेत्वभावो न विवक्षितः स्यात् तदा 'यः साध्यवति नैवास्ति'इति यथाश्रुतमूलस्यार्थः 'साध्यवन्निरूपितवृत्तित्वसामान्याभाववत्त्व'मित्यात्मकं विरुद्धत्वम् असाधारणदोषात्मकं स्यादिति विरुद्धेऽतिव्याप्तिः स्यादिति भावः॥ हेत्वभावे साध्याधिकरणत्वव्यापकत्वनिवेशापेक्षया लाघवेन साध्यव्यापकत्वनिवेशाभिप्रायेण फलितार्थमाह–**तथा चेति**। साध्यस्य व्यापकीभूतो योऽभावो हेत्वभावस्तत्प्रतियोगित्वं हेताविति, **तदर्थः**=मूलस्य तात्पर्यविषयीभूतार्थः, तेनाऽसाधारणे नातिव्याप्तिरिति। स्थलं तु–'अयं पिण्डः,–गोत्ववान्,–अश्वत्वादि'ति॥ सच विरुद्धः विधिसाधने त्रिविधः–साक्षात्साध्याभावव्याप्यत्वात्, साध्यव्यापकाभावव्याप्यत्वात्, साध्यव्यापकविरुद्धोपलम्भात्, यथा–धूमवानयं योग्यधूमवत्तयाऽनुपलभ्यमानत्वात् निरग्निकत्वात् जलाशयत्वात्॥ निषेधसाधनेऽपि त्रिविधः–

साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः ॥ ७४ ॥

आश्रयासिद्धिराद्या स्यात्स्वरूपासिद्धिरप्यथ ।
व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥ ७५ ॥

असिद्धं विभजते–आश्रयासिद्धिरित्यादि ॥ ७५ ॥

पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ।

---

प्रतियोग्युपलम्भात्, साध्यव्यापकाभावोपलम्भात्, साध्यव्यापकविरुद्धोपलम्भात्,–यथा– निरग्निकोऽयम् अग्निमत्त्वात्, धूमाभावशून्यत्वात् धूमवत्त्वात्। सर्वश्चायं विशेषणद्वारापि यथा–कृष्णागुरुप्रभववह्निमानयं कटुकाऽसुरभिपाण्डुरधूमवत्त्वादिति ॥ ७४ ॥

**मूले–आश्रयाऽसिद्धिरिति ।** आश्रयासिद्धिः, आद्या–एकः दोषः, स्वरूपाऽसिद्धिः द्वितीयो दोषः, व्याप्यत्वासिद्धिः–अपरा–तृतीयो दोषः, इत्येवं त्रिविधोऽसिद्धिदोषो भवतीत्यर्थः ॥ तत्र आश्रये=साध्यहेत्वोर्धर्मिणि पक्षे पक्षतावच्छेदकस्याऽभावः, आश्रयासिद्धिः। पक्षे हेतोः अभावः–स्वरूपाऽसिद्धिः। व्याप्यत्वस्य व्याप्तेः असिद्धः हेतौ व्याप्यत्वाऽसिद्धिरिति ॥ असिद्धिसामान्यपूर्वपक्षलक्षणानि–व्याप्तिपक्षधर्मताविरहवत्त्वम्, व्याप्तिपक्षधर्मताविशिष्टाऽभाववत्त्वम्, व्याप्तिपक्षधर्मताविशिष्टज्ञानविषयाऽभावत्वम्, व्याप्तिपक्षधर्मताऽन्यतराऽभाववत्त्वम्, व्याप्तिपक्षधर्मताप्रमितिविरहवत्त्वम्, व्याप्तिप्रमितिपक्षधर्मताप्रमितिविरहान्यतरवत्त्वम्, व्याप्तिपक्षधर्मतोभयप्रकारकनिर्णयाऽभाववत्त्वम्, पक्षतावच्छेदकरूपेण पक्षे हेतुतावच्छेदकरूपेण हेतोर्यद्विशिष्टज्ञानं साध्यतावच्छेदकविशिष्टसाध्यावगाहि तद्विरोधित्वम, विशिष्टपक्षविशिष्टसाधनवैशिष्ट्यविशिष्टसाध्यग्रहाविरोधियद्व्याप्तिग्रहविरोधि तदन्यत्वे सति परामर्शविरोधित्वम् ॥ असिद्धेः **सिद्धान्तलक्षणम्**– 'साधारण्यकथिताऽसाधारण्याऽनुपसंहारित्वभिन्नं ज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकं रूपमसिद्धिः, । आश्रयाऽसिद्ध्याद्यन्यतमत्वं वा, तल्लक्षणम् ॥ ७५ ॥

**मूले–पक्षासिद्धिरिति ।** यत्रानुमानप्रयोगे 'मणिमयो गिरिः' पक्षः क्रियेत, तत्र स्थले हेतौ पक्षाऽसिद्धिदोषवत्त्वं स्यात्, यथा–'मणिमयगिरिः–वह्निमान्,–धूमादि'त्यत्र गिरौ पक्षे पक्षतावच्छेदकस्य मणिमयत्वस्याऽभावः पक्षाऽसिद्धिरिति । पक्षाऽसिद्धिपदार्थमाह–**आश्रयासिद्धिरिति ।** आश्रयतावच्छेदकरूपविशिष्टाश्रयस्याऽसिद्धिरित्यर्थः। आश्रयाऽसिद्धिनिश्चयस्य 'पक्षतावच्छेदकविशिष्टपक्षवृत्तित्वा'त्मकपक्षधर्मताज्ञानप्रतिबन्धकत्वं **दूषकताबीजं** बोध्यम्। लक्षणं तु–'ज्ञानस्य विषयतया विशिष्टपक्षग्रहविरोधितावच्छेदकं रूपमाश्रयासिद्धिरिति। पक्षतावच्छेदकाऽभाववत्पक्षकत्वमिति प्रागुक्तं वा ॥ **इदन्त्ववधातव्यम्**–न केवलं पक्षे पक्षतावच्छेदकाऽभावः आश्रयाऽसिद्धिः, अपि तु 'पक्षे पक्षतावच्छेदकविरहव्याप्यः, पक्षे पक्षतावच्छेदकवदन्योन्याभावः, पक्षे पक्षतावच्छेदकवदन्योन्याभावव्याप्यः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाभावः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाऽभावव्याप्यः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकवदन्योन्याभावः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकान्योन्याभावव्याप्यः, पक्षतावच्छेदकाभाववान्पक्षः, पक्षतावच्छेदकाऽभावव्याप्यवान्पक्षः, पक्षतावच्छेदकवदन्योन्याभाववान्पक्षः, पक्षतावच्छेदकवदन्योन्याभावव्याप्यवान्पक्षः, पक्षतावच्छेदकतावच्छेदकाभाववत्पक्षतावच्छेदकम्, पक्षतावच्छेदकतावच्छेदकाऽभावव्याप्यवत्पक्षतावच्छेदकम्, पक्षतावच्छेदकतावच्छेदकवदन्योन्याभाववत्पक्षतावच्छेदकम्,

पक्षासिद्धिरिति। आश्रयासिद्धिरित्यर्थः।

ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७६ ॥

अपरेति। स्वरूपासिद्धिरित्यर्थः ॥७६॥

व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत्।

नीलधूमादिक इति। नीलधूमत्वादिकं गुरुतया न हेतुतावच्छेदकं स्वसमाना-

---

पक्षतावच्छेदकतावच्छेदकवदन्योन्याभावव्याप्यवत्पक्षतावच्छेदकम् इत्यपि आश्रयासिद्धिः ॥ समानप्रकारकज्ञानस्यैव प्रतिबन्धकत्वमितिवादिनां नव्यानां मते तु–पक्षतावच्छेदकाभाववान् पक्षः, पक्षतावच्छेदकाभावव्याप्यवान् पक्षः, पक्षतावच्छेदकवदन्योन्याभाववान्पक्षः, पक्षतावच्छेदकवदन्योन्याभावव्याप्यवान् पक्षः–इत्यादिरेवाश्रयासिद्धिः, न तु पक्षे पक्षतावच्छेदकाभावः, तद्व्याप्यादिरपि च, तज्ज्ञानस्यानुमितितत्करणपरामर्शाऽप्रतिबन्धकतया हेत्वाभासत्वस्यैव तत्राऽभावात्॥ सर्वसाधारणाश्रयासिद्ध्यनुगतलक्षणं तु–'पक्षतावच्छेदकप्रकारकपक्षग्रहविरोधितावच्छेदकत्वम्–इति ॥ **मूले–ह्रदो–द्रव्यमिति।** ह्रदः पक्षः, द्रव्यत्वं साध्यम्, धूमो हेतुः, तत्र, अपरा=द्वितीया असिद्धिः, स्वरूपाऽसिद्धिदोष इत्यर्थः ॥ पक्षे हेतोरभावः स्वरूपाऽसिद्धिरित्यर्थः। स्वरूपाऽसिद्धिदोषस्य प्रकृतपक्षे प्रकृतहेतुमत्ताज्ञानप्रतिबन्धकत्वम्, पक्षधर्मताज्ञानप्रतिबन्धकत्वमिति लक्षणम् इति यावत्। सोयं स्वरूपाऽसिद्धः शुद्धासिद्धभागाऽसिद्धविशेषणाऽसिद्धविशेष्यासिद्धभेदेन चतुर्विधः-तत्र 'शब्दो गुणश्चाक्षुषत्वादि'त्यत्र शुद्धासिद्धः, द्वितीयस्तु 'घटपटादिकं पृथिवी,–घटत्वादि'त्यत्र, तृतीयस्तु–'वायुः–प्रत्यक्षः,–रूपवत्त्वे सति स्पर्शवत्त्वादित्यत्र, चतुर्थस्तु 'वायुः–प्रत्यक्षः,–स्पर्शवत्त्वे सति रूपवत्त्वादि'त्यत्र, एवं सम्बन्धाऽसिद्धोऽपि बोध्यः–यथा 'वायुः–द्रव्यं–संयोगेन स्पर्शवत्त्वादि'ति। सर्वत्र लक्षणनिर्माणेऽपि यदि लक्षणमव्याप्तिग्रस्तं तदा भागाऽसिद्धेऽन्तर्भवति, यदि अतिव्याप्तिग्रस्तं तदा व्याप्यत्वासिद्धेऽन्तर्भवति, यदा तु असंभवग्रस्तं तदा स्वरूपाऽसिद्धेऽन्तर्भवति ॥ एवं ज्ञानाऽनुकूलकल्पनावशात् नानाविधोऽपि भवति स्वरूपाऽसिद्धिदोषः–यथा–'साधनतावच्छेदकावच्छिन्नसाधनाभाववत्पक्षः, तादृशसाधनाभावव्याप्यवत्पक्षः, साधनवदन्योन्याभाववान्पक्षः, तादृशान्योन्याभावव्याप्यवान्पक्षः, पक्षे साधनतावच्छेदकावच्छिन्नप्रतियोगिताकसाधनाभावः, पक्षे तादृशसाधनाभावव्याप्यः, पक्षे साधनतावच्छेदकावच्छिन्नसाधनवदन्योन्याभावः, पक्षे तादृशान्योन्याभावव्याप्यश्चेति। समानप्रकारकज्ञानस्यैव प्रतिबन्धकत्ववादिनां नव्यानां मते तु–'साधनतावच्छेदकावच्छिन्नसाधनाभाववत्पक्षादिरूपः चतुर्विध एव ॥ **लक्षणं** तु–विशिष्टपक्षविशिष्टसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयवैशिष्ट्यग्रहविरोधितावच्छेदकं स्वरूपासिद्धिरिति। **वस्तुतस्तु**–पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकसाधनतावच्छेदकावच्छिन्नसाधनप्रकारकग्रहविरोधितावच्छेदकत्वं स्वरूपासिद्धत्वमिति। अगृहीताप्रामाण्यकनिश्चयनिष्ठयादृशविशिष्टनिरूपितविषयितासामान्यं तादृशग्रहविरोधिताऽनतिरिक्तवृत्ति तादृशविशिष्टत्वमिति यावत् ॥ ७६ ॥

**मूले–व्याप्यत्वाऽसिद्धिरिति।** अपरा–तृतीया, या व्याप्यत्वासिद्धिरुक्ता सा 'पर्वतो,–वह्निमान्, नीलधूमादि'त्यादौ भवतीत्यर्थः ॥ मुक्तावल्यां–**नीलधूमत्वादिकमिति।** नीलधूमत्वं प्रमेयधूमत्वादिकं धूमत्वापेक्षया गुरुशरीरतया न हेतुतावच्छेदकं भवति, किन्तु धूमत्वमेव हेतुतावच्छेदकमिति। **गुरुत्वं** च स्वविषयकग्रहत्वव्यापकव्यापकताका या संख्या तादृशसंख्यात्वावच्छि-

**धिकरण-व्याप्यतावच्छेदक-धर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात्। धूमप्रागभावत्वसङ्ग्रहाय स्वसमानाधिकरणेति॥**

त्राऽवृत्तिर्यः संख्याविभाजकीभूतो धर्मस्तद्वत्संख्यावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यप्रतीतिविषयतानवच्छेदकत्वम्, स्वं लघुधर्मः, तथा च धूमत्वविषयकग्रहत्वव्यापकता एकत्वसंख्याव्यापकत्वे एव, न तु नीलत्वधूमत्वादिगतद्वित्वादिसंख्याव्यापकत्वे, एकत्वाऽवृत्तिसंख्याविभाजकीभूतो धर्मः नीलत्वधूमत्वादिगतसमुदायत्वत्वं द्वित्वादिकं च, तद्धर्मवत्समुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यप्रतीतिविषयतानवच्छेदकत्वस्य नीलत्वधूमत्वादिमत्त्वे सत्त्वेन धूमत्वापेक्षया तस्य गुरुत्वम्। लघुत्वं च 'स्वावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतरूपवृत्तित्वम्, वृत्तित्वं च स्वविषयकग्रहत्वव्यापकव्यापकताकसंख्यात्वावच्छिन्नाऽवृत्तिसंख्याविभाजकीभूतधर्मवत्त्वसम्बन्धेन, नीलधूमत्वावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं नीलत्वधूमत्वगतद्वित्वं तद्वृत्तित्वस्य धूमत्वे सत्त्वात् धूमत्वविषयकग्रहत्वव्यापकव्यापकताकसंख्यात्वावच्छिन्नाऽवृत्तिसंख्याविभाजकीभूतं नीलत्वधूमत्वगतसमुदायत्वगतसमुदायत्वत्वं तद्वत्त्वस्य तादृशसमुदायत्वे सत्त्वेन तेन सम्बन्धेन तादृशसमुदायत्ववृत्तित्वस्य धूमत्वे सत्त्वात्। **अथवा** स्वत्वस्याऽननुगतत्वे तु—'धूमत्वनिष्ठलघुतानिरूपिताऽवधितासमनियतधर्मवत्त्वं गुरुत्वम्, लघुत्वं च—नीलधूमत्वनिष्ठगुरुतानिरूपिताऽवधितासमनियतधर्मवत्त्वम्' इति। न चाऽन्योन्याश्रयः, लघुत्वगुरुत्वयोस्तद्व्यक्तित्वेन प्रवेशात्। **यद्वा**—'इदमेतदपेक्षया गुरु लघु इतिव्यवहारसाक्षिकः सावधिकोऽखण्डधर्मविशेषो गुरुत्वलघुत्वादिकमिति बोध्यम्॥ ननु कथं न व्याप्यतावच्छेदको गुरुधर्म इत्याकांक्षायाम् उदयनाचार्यमतेन—व्यर्थत्वं दर्शयन् व्याप्यतावच्छेदकं निर्वक्ति—**स्वसमानाधिकरणेति**। स्वं—गुरुधर्मः—नीलधूमत्वं, तत्समानाधिकरणः धूमत्वं, अथ च प्रकृतसाध्यव्याप्यतावच्छेदकं धर्मान्तरं धूमत्वं तद्घटितमेव व्यर्थविशेषणघटितं नीलधूमत्वं न तु तदघटितम् अतो न नीलधूमत्वं व्याप्यतावच्छेदकमिति। स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितं यद्यत् स्वं (व्यर्थविशेषणघटितं) तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटविशिष्टधर्म एव व्याप्यतावच्छेदक इति फलितार्थः। तेन यथाश्रुते 'तद्वह्निमान् तद्धूमादि'त्यादौ तद्धूमनिष्ठतद्व्यक्तित्वस्य स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराऽप्रसिद्ध्याऽपि न तस्य व्याप्यतावच्छेदकत्वानुपपत्तिः। धूमत्वस्यापि तादृशस्वात्मकधर्मघटितत्वेन व्याप्यतावच्छेदकत्वानुपपत्तिरतोऽन्तरेति। **धूमप्रागभावत्वेति**। 'अयं,—वह्निमान्, धूमप्रागभावादि'त्यत्र प्रकृतसाध्यव्याप्यतावच्छेदकधूमत्वघटितत्वेऽपि, धूमत्वे धूमप्रागभावत्वसामानाधिकरण्याऽभावात् न व्याप्यतावच्छेदकत्वहानिर्धूमप्रागभावत्वस्येति बोध्यम्॥ द्रव्यत्वादिघटितत्ववारणाय—प्रकृतसाध्यव्याप्यतावच्छेदकेति॥ इति प्राचीनमतम्॥ **अथान्ये तु** उपाध्यभावस्य व्याप्तितया सोपाधिको हेतुर्व्याप्यत्वाऽसिद्ध इति वदन्ति। साध्यव्यापकत्वे सति साधनाऽव्यापकत्वमुपाधिः, स च चतुर्विधः—केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति। आद्यः—'पर्वतो धूमवान् वह्ने'रित्यत्र आर्द्रेन्धनसंयोगः। द्वितीयः—'वायुः—प्रत्यक्षः,—प्रत्यक्षस्पर्शाश्रयत्वादि'त्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वम्। तृतीयो यथा 'प्रागभावो—विनाशी,—जन्यत्वादि'त्यत्र जन्यत्वावच्छिन्नाऽनित्यत्वव्यापकं भावत्वम्। चतुर्थस्तु—'प्रागभावो,—विनाशी,—प्रमेयत्वादि'त्यत्र जन्यत्वावच्छिन्नाऽनित्यत्वव्यापकं भावत्वमिति॥ **अथ**—सविषयवृत्तिप्रकृतसाध्यसाधन-

विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥ ७७॥
( श्रावणत्वादितो नित्योऽनित्यस्तु कार्यतादितः ॥ )

**विरुद्धयोरिति ॥ कपिसंयोगतदभावव्याप्यवत्तापरामर्शेऽपि न सत्प्रतिपक्षित-**

---

ग्रहविरोधितानवच्छेदकप्रकृतपक्षप्रकृतसाधनवैशिष्ट्यग्रहविरोधितावच्छेदकरूपशून्यज्ञानस्य विषयो ऽसिद्धिर्व्याप्यत्वाऽसिद्धिरिति लक्षणम् । मथुरानाथस्तु—व्याप्यत्वाऽसिद्धिस्त्रिविधा—साध्यविशेषणा-सिद्धिः, साधनविशेषणासिद्धिः, व्याप्तिविरहरूपा चेति । साध्यतावच्छेदकप्रकारकसाध्यग्रहविरोधितावच्छेदकरूपं साध्यविशेषणाऽसिद्धिः । तादृशं रूपं 'साध्यतावच्छेदकाऽभाववत्साध्यम्, तादृशाभावव्याप्यवत्साध्यम्, साध्यतावच्छेदकवदन्योन्याभाववत्साध्यम्, तादृशान्योन्याभावव्याप्यवत्साध्यम्, साध्यतावच्छेदकतावच्छेदकाभाववत्साध्यतावच्छेदकम्, तादृशाभावव्याप्यवत्साध्यतावच्छेदकं, साध्यतावच्छेदकतावच्छेदकवदन्योन्याभाववत्साध्यतावच्छेदकं, तादृशान्योन्याभावव्याप्यवत्साध्यतावच्छेदकमित्यादि । भिन्नप्रकारकज्ञानस्यापि प्रतिबन्धकतानये तु 'साध्ये साध्यतावच्छेदकाऽभावः, साध्ये तादृशाभावव्याप्यः, साध्ये साध्यतावच्छेदकवदन्योन्याभावः, साध्ये तादृशान्योन्याभावव्याप्यः, साध्यतावच्छेदके साध्यतावच्छेदकतावच्छेदकाऽभावः, साध्यतावच्छेदके तादृशाऽभावव्याप्यः, साध्यतावच्छेदके साध्यतावच्छेदकतावच्छेदकवदन्योन्याभावः, साध्यतावच्छेदके तादृशान्योन्याभावव्याप्य इति । एतदसंकीर्णोदाहरणं तु 'पर्वतः—कांचनमयवह्निमान् धूमादित्यादि ॥ साधनतावच्छेदकप्रकारकसाधनग्रहविरोधितावच्छेदकरूपं साधनविशेषणाऽसिद्धिः । तादृशं रूपं—साधनतावच्छेदकाऽभाववत्साधनम् इत्यादिकम् । एतदसंकीर्णोदाहरणं—'पर्वतो वह्निमान्—कांचनमयधूमादिति । अथ उक्तभिन्नव्याप्तिविरहरूपाऽसिद्धिस्वरूपं—साध्याऽव्यभिचरितसम्बन्धित्वरूपान्वयव्याप्त्यभाववत्साधनं, तादृशव्याप्त्यभावव्याप्यवत्साधनम्, तादृशव्याप्तिमदन्योन्याभाववत्साधनम्, तादृशव्याप्तिमदन्योन्याभावव्याप्यवत्साधनम्, तादृशव्याप्तिमत्साधनाभाववत्पक्षः, तादृशव्याप्तिमत्साधनाभावव्याप्यवत्पक्षः, तादृशव्याप्तिमत्साधनवदन्योन्याभाववान्पक्षः, तादृशव्याप्तिमत्साधनवदन्योन्याभावव्याप्यवत्पक्षः, एवं साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिमत्साधनाभाववत्पक्षादि, साध्याभाववदवृत्तिसाधनाभाववत्पक्षादि, साध्यसमानाधिकरणसाधनाभाववत्पक्षादि । भिन्नप्रकारकज्ञानस्यापि प्रतिबन्धकत्वनये—'साधने तादृशान्वयव्याप्त्यभावादिरिति बोध्यम् ॥ **मूले—विरुद्धयोरिति** । विरुद्धयोः—परस्पराऽसमानाधिकरणसाध्ययोर्यौ हेतू तयोः परामर्शे=परामर्शद्वये सति, साध्यव्याप्यवान्पक्षः साध्याभावव्याप्यवान्पक्षः इति, सन् विद्यमानः प्रतिपक्षः=स्वीयसाध्याभावसाधकोऽपरहेतुः यस्य स सत्प्रतिपक्षः तस्य भावः सत्प्रतिपक्षता भवति तद्वान् सत्प्रतिपक्ष इत्यर्थः॥ 'विरुद्धयो'रितिपदस्य पदकृत्यमाह—मुक्तावल्यां—**कपिसंयोगेति** । कपिसंयोगस्याऽव्याप्यवृत्तितया कपिसंयोगस्य कपिसंयोगाभावस्य च व्याप्ये एतद्वृक्षत्वे परामर्शे सत्यपि न एतद्वृक्षत्वस्य सत्प्रतिपक्षत्वम् कपिसंयोग—तदभावयोर्विरोधाऽभावादित्यर्थः ॥ विरुद्धयोः हेत्वोः परामर्शे इति भ्रमवारणाय निष्कृष्टलक्षणं दर्शयति—**तथा च स्वसाध्येति** । स्वं—सत्प्रतिपक्षत्वेनाऽभिमतो हेतुः, तत्साध्यविरुद्धो यः साध्याभावः तद्व्याप्यवान् इति परामर्शकाले साध्यव्याप्यवानितिपरामर्शविषयो हेतुः सत्प्रतिपक्षितः । प्रकृतहेतुकसाध्यविरोधिताग्रहविषयसाध्याभावव्याप्यत्वप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयकालीनप्रकृतसाध्यव्याप्यत्वप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालि-

स्वमत उक्तं-विरुद्धयोरिति । तथाच स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषय इत्यर्थः ॥ ७७ ॥

साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः ।
उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥

साध्यशून्य इति। पक्षः-पक्षतावच्छेदकविशिष्ट इत्यर्थः। तेन घटे गन्धसत्त्वेऽपि न क्षतिः। एवं मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्रापि बोध्यम् ॥ ७८ ॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां
सिद्धान्तमुक्तावल्यामनुमानखण्डम् ॥

---

निश्चयविषयत्वं सत्प्रतिपक्षत्वमिति फलितार्थः । तेन साध्यव्याप्यहेतोः हेतुविशिष्टपक्षस्य वाऽप्रसिद्धत्वेऽपि नोक्तोभयपरामर्शाऽनुपपत्तिरिति ॥ स्थलं तु-शब्दः-नित्यः-श्रावणत्वात्,-शब्दः-अनित्यः-कार्यत्वादित्यादिकं बोध्यम् । साक्षादनुमितिप्रतिबन्धकत्वं दूपकताबीजम् । सत्प्रतिपक्षपूर्वपक्षलक्षणं-सामानबलबोधितसाध्यविपर्ययलिङ्गत्वम् । सिद्धान्तलक्षणानि-साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यलिंगत्वं तत्त्वम्, विरोधिबोधकान्यगमकतौपयिकरूपसम्पत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वं वा तत्त्वम्, विरोधिपरामर्शप्रतिरुद्धकार्यकविशिष्टपरामर्शविषयत्वम्, बाधोपस्थितिसमर्थपरामर्शकालीनसाध्यसिद्धिसमर्थपरामर्शविषयत्वं, प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वे सति प्रकृतपक्षसाध्यग्रहाविरोधिप्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिरूपोन्नायकत्वमिति ॥ ७७ ॥

**मूले-साध्यशून्य इति** । यत्र प्रयोगे साध्यशून्यः=साध्याभाववान्पक्षो भवति स बाधदोषः कथितः । 'यथा उत्पत्तिकालीनघटः,-गन्धवान्-पृथिवीत्वादि'त्यत्र । उत्पन्नं द्रव्यं क्षणं निर्गुणं निष्क्रियं च तिष्ठतीति, तत्र गन्धाभाववत्त्वात् तत्रत्यहेतुर्बाधितः इत्यर्थः । मुक्तावल्यां 'पक्ष'पदार्थमाह-**पक्षतावच्छेदकविशिष्ट** इति । पक्षस्य घटस्य अवच्छेदकोऽत्र उत्पत्तिक्षणः, तद्विशिष्टो घटः पक्ष इत्यर्थः । एतादृशार्थकरणस्य फलमाह-**तेनेति** । पक्षतावच्छेदकविशिष्टपक्षकथनेन, घटे द्वितीयक्षणे गन्धसत्त्वेऽपि, बाधस्य तत्रत्यहेतौ नाऽव्याप्तिः, पक्षतावच्छेदकोत्पत्तिकालविशिष्टघटे गन्धाभावसत्त्वादिति भावः । कालस्येव देशस्यापि पक्षतावच्छेदकत्वे बाधं दर्शयति-**एवं मूलावच्छिन्न** इति । मूलदेशावच्छिन्नवृक्षः,-पक्षः, कपिसंयोगः शाखास्थः साध्यः, एतद्वृक्षत्वं हेतुः । तत्र पक्षतावच्छेदकमूलविशिष्टवृक्षे कपिसंयोगाभावसत्त्वात् बाधो भवतीति भावः ॥ **बाधोऽयं दशविधः-धर्मिग्राहकमानबाधितं**-'घटो-व्यापकः-सत्त्वादि'तिप्रत्यक्षेण, 'परमाणवः-सावयवाः मूर्तत्वादि'त्यनुमानेन, 'मेरुः-पाषाणमयः,-पर्वतत्वादि'ति सुवर्णमयत्वबोधकागमेन । **साध्यप्रतियोगिग्राहकबाधितं** यथा-'वह्निः-अनुष्णः-कृतकत्वादि'तिप्रत्यक्षेण, शब्दोऽश्रावणो गुणत्वादित्यनुमानेन, गवयत्वं-गवयपदाऽप्रवृत्तिनिमित्तं,-जातित्वादित्युपमानेन । **साध्यग्राहकबाधितं**-'नरशिरःकपालं-शुचि-प्राण्यंगत्वादि'त्यत्रागमेन । **हेतुग्राहकबाधितं**-जलाऽनिलौ-उष्णौ, पृथिवीतो विपरीतस्पर्शवत्त्वात्,-तेजोवदितिप्रत्यक्षेण, 'मनो-विभु-ज्ञानसमवाय्याधारत्वादि'त्यनुमानेन, 'राजसूयं-ब्राह्मणकर्तव्यं,-स्वर्गसाधनत्वादग्निष्टोमवदि'ति राजसूयकर्तव्यताबोधकागमेनेति ॥ **स च**-साध्याभाववान् पक्षः, साध्यवदन्यः पक्षः, पक्षाऽवृत्ति साध्यम्, पक्षे साध्याभावः, पक्षनिष्ठसाध्याभाववत्त्वादिकम्, साध्यादेः पक्षवृत्तित्वादिकम्, साध्यवत्सामान्यादेः पक्षान्यत्वादिकम्, विशि-

ष्टसाध्ये पक्षादेर्विशिष्याभाववत्त्वादिकं,–यथामतं पक्षे साध्यवत्ताज्ञानस्य विरोधी प्रत्येकमेव बाधः ॥ **बाधपूर्वपक्षलक्षणानि**–साध्याभाववत्पक्षकत्वम्, पक्षवृत्त्यभावप्रतियोगिसाध्यकत्वम्, साध्याभाववत्पक्षवृत्तित्वम्, साध्याभावव्याप्यसामानाधिकरण्यम्। बाधसिद्धान्तलक्षणानि–पक्षे साध्याभावनिश्चयः, प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्युन्नायकत्वे सति प्रकृतपक्षप्रकृतसाध्यग्रहविरोधित्वे सति प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोधित्वमिति, साध्याभाववत्त्वप्रमाविषयपक्षकत्वम्, प्रमितसाध्याभाववत्पक्षकत्वम्, पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगित्वसाध्यकत्वमिति। **अथ–केचन**–उपाधेः साक्षादनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयत्वाभावान्न हेत्वाभासत्वमिति वदन्ति। **प्राचीनास्तु**–'साध्यवत्पक्ष'रूपासिद्धिर्हेत्वाभासान्तरमिति स्वीकुर्वन्ति। सिद्धिः=सिद्धसाधनं, तत्तु पक्षताविघटकतया आश्रयाऽसिद्धावन्तर्भवतीति केचित्। नव्यास्तु–वादिपराजयस्थानविशेषो निग्रहस्थानं सिद्धसाधनमिति वदन्ति। हेत्वाभासानां असाधकतासाधकत्वेन सदुत्तरत्वम्। जात्यादीनां चाऽसाधकतासाधारण्येन परासाधकतासाधकतया स्वव्याघातकत्वादसदुत्तरत्वम्। स्वज्ञानदशायां पक्षे साध्यप्रत्ययाऽजनकत्वम्–असाधकत्वम्। यद्वा अनुमितिप्रतिबन्धकतावच्छेदकरूपवत्त्वम्–असाधकत्वम्–तथा च–'इदानीमिदम्,–अनुमितिप्रतिबन्धकतावच्छेदकरूपवत्,–अनैकान्तिकादित्वात्, ज्ञानवदि'त्यनुमितम्। तच्च रूपं ज्ञाने विषयतया अनैकान्तिकादित्वमेव, असाधकताऽननुगमेऽपि हेत्वाभासत्वमनुगतमेव, यस्य ज्ञानमनुमितिप्रतिबन्धकं तस्य हेत्वाभासत्वादिति बोध्यम् ॥ ७८ ॥

इति श्रीमद्दार्शनिकपञ्चानन–षड्दर्शनाचार्य्य–नव्यन्यायाचार्य्य–सांख्ययोग–वेदान्त–मीमांसातीर्थ–पण्डित–"श्रीकृष्णवल्लभाचार्य्य'स्वामिनारायणविरचितायां–न्यायसिद्धान्तमुक्तावल्याः किरणावल्यामनुमानखण्डः ॥

❁ इत्यनुमानखण्डः ❁



# अथोपमानखण्डः

ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम् ॥७९॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानां तु शक्तिधीरुपमा फलम् ॥८०॥

उपमितिं व्युत्पादयति-ग्रामीणस्येति । यत्रारण्यकेन केनचिद् ग्रामीणायोक्तं 'गोसदृशो गवयपदवाच्य' इति । पश्चाच्च ग्रामीणेन क्वचिदरण्यादौ गवयो दृष्टस्तत्र गोसादृश्यदर्शनं यज्जातं तदुपमितिकरणम् । तदनन्तरं 'गोसदृशो गवयपदवाच्य'

---

मूले-ग्रामीणस्येति । प्रथमतो गवयादिकं पश्यतो ग्रामीणस्य पुरुषस्य या गवादीनां सादृश्यधीः='अयं गोसदृश'इतिगवयादिविशेष्यकगोसादृश्यप्रकारकप्रत्यक्षं स्यात्, सा धीः उपमितेः करणं मतं तार्किकाणाम् । अथ च 'गोसदृशो गवयपदवाच्य'इति अतिदेशस्य=उपदिष्टस्य वाक्यास्याऽर्थस्य स्मृतिः=स्मरणं व्यापारः=द्वारम् उच्यते । गवयादिपदानां गोसदृशारण्यकपशौ 'गवयो गवयपदवाच्य'इतिशक्तिधीः, उपमा=उपमितिप्रमा=फलमुच्यते इत्यर्थः ॥ अवसरसंगत्योपमानं निरूपयितुं मुक्तावल्यामाह-उपमितिमिति । अवसरः-प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्युपलक्षिताऽवश्यवक्तव्यत्वम् । अनुमानोपमानयोर्द्वयोरपि प्रत्यक्षोपजीवक(कार्य)त्वेऽप्यनुमानस्य बहुवादिसम्मतत्वेन निरसनीयाऽल्पवादिविप्रतिपत्तिकत्वेन सुगमतयाऽनुमान एव प्रायशो व्युत्पित्सोः प्रथमतो जिज्ञासा जायते, इत्यनुमाननिरूपणेन प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्या 'अवश्यवक्तव्यत्वमनुमानस्ये'ति अवसरसंगत्यानुमाननिरूपणाऽनन्तरमुपमाननिरूपणं युक्तमिति भावः ॥ प्रसंगसंगत्यापि उपमाननिरूपणं बोध्यम् ॥ ननु-ग्रामीणस्य गवि सास्नादीनां प्रत्यक्षं कृत्वा अरण्यगतस्य तस्य चक्षुस्सन्निकर्षादेव गोसदृशव्यक्त्यात्मकधर्मिदर्शनेन गोसादृश्यप्रकारकेदंविशेष्यकप्रत्यक्षसंभवेऽपि तदुत्तरं सादृश्यावच्छिन्नविशेष्यक-गवयपदवाच्यत्वप्रकारकस्मरणं नोत्पद्येत ?, तत्कारणस्य समानप्रकारकानुभवस्य पूर्वम् असत्त्वात्, इत्याशंकां परिहर्तुं समानप्रकारकानुभवं दर्शयति मुक्तावल्यां-यत्रेत्यादिना । यत्र=यस्मै ग्रामीणाय पुरुषाय, आरण्यकेन केनचित् पुरुषेण 'गोसदृशो गवयपदवाच्य'इत्युक्तम् । अनेन स्मरणसमानाकारः-'गवयपदवाच्यत्वप्रकारक-गोसादृश्यावच्छिन्नविशेष्यका'नुभवो दर्शितः । पश्चात्=उक्तवाक्यश्रवणजन्यवाक्यार्थानुभवोत्तरम्, ग्रामीणेन=अनुभववता तेन ग्रामीणजनेन, अरण्ये कुत्रचित् स्थले गवयपिण्डो दृष्टः, तत्र=प्रत्यक्षविषयगवयपिण्डे, गोसादृश्यदर्शनम्=यद् दर्शनविषयगवयव्यक्तित्वावच्छिन्नविशेष्यकगोसादृश्यप्रकारकप्रत्यक्षं जातं, तद् उपमितिकरणम् उपमानं प्रमाणं बोध्यम् । इदं मिश्रमतेन उक्तम् । सादृश्यं-तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्, यथा गोभिन्नत्वे सति गोगता ये भूयांसो धर्माः शृंगादयस्तद्वत्त्वं गवये गोसादृश्यम् । तदनन्तरम्=तादृशसादृश्यप्रकारकव्यक्तिविशेष्यकनिश्चयात्मकोद्बोधकजन्यं यद् 'गोसदृशो गवयपदवाच्य'इत्युपदेशवाक्यार्थानुभवसमानाकारं स्मरणं 'गोसदृशो गवयपदवाच्य'इति, तदेव व्यापारः । तदनन्तरं=स्मरणानन्तरम्, 'गवयपदवाच्यत्वप्रकारक-गवयविशेष्यक-

**इत्यतिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः। तदनन्तरं 'गवयो गवयपदवाच्य' इति ज्ञानं यज्जायते तदुपमितिः। न तु 'अयं गवयपदवाच्य' इत्युपमितिः, गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् ॥ ७९-८० ॥**

**इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यामुपमानखण्डम् ॥**

---

'गवयो गवयपदवाच्य'इति सामान्यज्ञानात्मिका गवये गवयपदशक्तिविषयकनिश्चयरूपा उपमितिरुत्पद्यते इत्यर्थः॥ ननु तत्रैकपिण्डोपस्थितेः 'अयं गवयपदवाच्य'इत्युपमितिः कथं न भवतीत्याशंकायामाह—**न त्विति**। 'अयं गवयपदवाच्य'इति—इदन्त्वावच्छिन्नविशेष्यकोपमितिज्ञानं स्वीक्रियेत तदा इदन्त्वाऽनवच्छिन्ने गवयान्तरे=देशान्तरीयकालान्तरीयगवये गवयपदवाच्यताग्रहो न स्यात्, भवति तु सर्वेषां गवयान्तरेऽपि गवयपदवाच्यताग्रहः, अतो 'गवयो गवयपदवाच्य'इत्येवोपमितिरिति भावः॥ **इदमुपलक्षणम्**—उपमानं त्रिविधम्—सादृश्यविशिष्टपिण्डदर्शनम्, असाधारणधर्मविशिष्टपिण्डदर्शनम्, वैधर्म्यविशिष्टपिण्डदर्शनं च, तत्र प्रथममुक्तं मूले। द्वितीयं यथा—'भल्लुकः कीदृगि'तिपृष्टे "पञ्चाङ्गुलिविशिष्टपादचतुष्टयसम्पन्नो लम्बनासिकालसन्मुखो दीर्घोऽनत्युच्चतरः कृष्णदीर्घरोमाकुलितशरीरो भल्लुक"इति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे तादृशाऽसाधारणधर्मादिविशिष्टं पिण्डं पश्यति, तत उपदेशवाक्यार्थस्मरणं, ततो 'भल्लुको भल्लुकपदवाच्य'इत्युपमितिर्भवतीति। तृतीयं यथा—"सिंहः कीदृगि'ति पृष्टे 'करश्रृंगपक्षखुरादिरहितशरीर'इति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे करश्रृंगादिधर्मविरुद्धधर्मविशिष्टपिण्डदर्शनं करोति, तत उपदेशवाक्यार्थस्मरणं भवति, ततः 'सिंहः सिंहपदवाच्य'इति जायते उपमितिरिति। साम्प्रदायिकास्तु—अतिदेशवाक्यार्थशाब्दबोधः करणम्, अतिदेशवाक्यार्थस्मरणं व्यापारः, सादृश्यविशिष्टपिण्डदर्शनं सहकारि, 'गवयो गवयपदवाच्य'इत्युपमितिरिति वदन्ति। उपाध्यायास्तु "सादृश्यज्ञानमात्रं करणम्, विशेषणज्ञानविधया तज्जन्यम् अतिदेशवाक्यार्थज्ञानं सादृश्यविशिष्टपिण्डदर्शनं च द्वयमेव व्यापारः, 'गवयो गवयपदवाच्य'इत्युपमिति'रिति निरूपयन्ति। अन्ये तु—वाक्यज्ञानं करणम्, वाक्यार्थानुभवो व्यापारः, 'गवयो गवयपदवाच्य'इत्युपमितिः फलमिति वदन्ति। अथ—यथा शक्तिज्ञानमुपमितिः तथा कार्यकारणभावज्ञानमप्युपमितिः,—तद्यथा—'मुद्गपर्णसदृशौषधिर्ज्वरहरे'ति वैद्यवाक्यं श्रुत्वा तदर्थबोधाऽनन्तरं 'मुद्गपर्णसादृश्यविशिष्टौषधिदर्शनेन मुद्गपर्णसादृश्यविशिष्टविशेष्यकज्वरहरत्वप्रकारकातिदेशवाक्यार्थस्मरणाऽनन्तरम् 'इयं ज्वरहरे'त्याकारक—कार्यकारणभावज्ञानमुपमितिरिति रघुनाथशिरोमणयः, एतन्मते उपमितित्वजातिमत्त्वमेव उपमितेर्लक्षणम्। अन्यमतेषु तु संज्ञासंज्ञिसम्बन्धज्ञानत्वमुपमितित्वमिति लक्षणम्। मीमांसकास्तु 'गोसदृशो गवयपदवाच्य'इत्युपमितिमङ्गीकुर्वन्ति। तन्न। 'गोसदृशो गवयपदवाच्य'इत्युपदेशवाक्यजन्यशाब्दबोधे तस्यान्तर्गतत्वेन अतिरिक्तप्रमात्वानुपपत्तेः॥ **ननु**—उपमानं न मानान्तरं, प्रत्यक्षत एव तदर्थसिद्धेरिति चेन्न। चक्षुरादिव्यापारविगमेऽपि उपमितेरुत्पादेन चाक्षुषत्वाद्यसंभवात्, न वा मानसत्वम्, मानसोत्तरम् अनुत्पद्यमानाया अपि 'उपमिनोमी'तिप्रतीतेर्विषयत्वात्। उपमित्यनन्तरं 'साक्षात्करोमी'तिप्रतीतेरनुदयेन तत्र प्रत्यक्षत्वे प्रमाणाऽभावाच्च। **ननु**—'गवयः गवयपदवाच्यः,—गोसादृश्यादि'त्यनुमानेन 'गवयपदवाच्यत्वव्याप्यगोसादृश्यवान्गवय'इतिपरामर्शोत्तरं 'गवयो गवयपदवाच्य'इत्यनुमितिरेवास्तु—इति **काणादबौद्धाः**—इति चेन्न। पदवाच्यत्वस्य सादृश्येन सह व्याप्तिज्ञानं विनापि गवयपदवाच्यत्वप्रकारक-

प्रमात्मकज्ञानस्योपमितिरूपस्याऽनुभवसिद्धत्वादुपमितिः प्रमान्तरम् ॥ ननु–'गवयपदं–गवयत्व-विशिष्टवाचकं,–अनुपपत्तिप्रतिसन्धानं विनापि वृद्धैस्तत्र प्रयुज्यमानत्वात्, यद् अनुपपत्तिप्रति-सन्धानं विना वृद्धैर्यत्र प्रयुज्यते तत् तस्य वाचकं था गोपदं गवि प्रयुज्यते न प्रयुज्यते च गोसदृशे इति यत्तद्भ्यां व्याप्त्या गवयपदस्य गवये शक्तिग्रहसंभवान्नोपमानस्य प्रमाणान्तरत्वमिति चेन्न। तत्रापि व्याप्त्याद्यप्रतिसन्धानदशायाम् 'उपमिनोमि' 'न अनुमिनोमि'इतिविलक्षणप्रतीतिसिद्धाया विलक्षणप्रतीतेरनुमितित्वाऽसंभवेन तत्करणस्यानुमानत्वाऽसंभवादिति ॥ अत एव तादृशप्रतीतेर्न शाब्दत्वम्, पदज्ञानाऽजन्यत्वात्। न स्मृतित्वम्, अननुभूतार्थस्मरणाऽसंभवादिति बोध्यम् ॥ ७९ ॥ ८० ॥

इति श्रीमद्दार्शनिकपञ्चानन–षड्दर्शनाचार्य–नव्यन्यायाचार्य–सांख्ययोगवेदान्तमीमांसातीर्थ–पण्डित 'श्रीकृष्णवल्लभाचार्य'स्वामिनारायणविरचितायां न्यायसिद्धान्त–मुक्तावल्याः किरणावल्याम्–उपमानखण्डः ॥

❀ इत्युपमानखण्डः ❀



# अथ शब्दखण्डः

पदज्ञानं तु करणं, द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं, तत्र शक्तिधीः सहकारिणी ॥ ८१ ॥

शाब्दबोधप्रकारं दर्शयति—पदज्ञानं त्विति । न तु ज्ञायमानं पदं करणं, पदाभावेऽपि मौनिश्लोकादौ शाब्दबोधात् । पदार्थधीरिति । पदजन्यपदार्थस्मरणं व्या-

---

मूले-पदज्ञानमिति । 'तु'शब्द एवकारार्थः । तत्र=शाब्दबोधे, पदज्ञानं=पदविषयकज्ञानं, तच्च पदश्रवणे सति पदस्य श्रावणप्रत्यक्षात्मकम्, पुस्तकादौ लिखित-स्मारकरेखापंक्तिदर्शने तु रेखादर्शनात्मकोद्बोधकजन्यं पदस्य स्मरणात्मकम् । तदेव करणं भवति । अथ पदार्थधीः=पदज्ञानजन्यं यत् पदार्थस्य ज्ञानं=तद्विषयकस्मरणं, तत् द्वारम्=व्यापारो भवति । अथ शाब्दबोधः=शब्दसमूहात्मकवाक्यजन्यो यो वाक्यार्थबोधः सः फलं=प्रमा उच्यते । तत्र=पदजन्यपदार्थस्मरणात्मकव्यापारे, शक्तिधीः=पदेन सह अर्थस्य सम्बन्धरूपाया वक्ष्यमाणायाः संकेताख्यायाः शक्तेः धीः, सा च शक्तिधीः "अस्मात्पदादयमर्थो बोद्धव्यः"=एतत्पदजन्यबोधविषयतावानर्थो भवतु'-इति पदप्रकारकार्थविशेष्यकेश्वरेच्छात्मकशक्तिज्ञानरूपा, अत्र स्व(पद)जन्यबोधविषयत्वं पदस्यार्थे सम्बन्धः । अथवा 'इदं पदममुमर्थं बोधयतु'=अर्थविषयकबोधजनकतावत्पदम् भवतु'-इति-अर्थप्रकारकपदविशेष्यकेश्वरेच्छात्मकशक्तिज्ञानरूपा, अत्र स्व(अर्थ)विषयकबोधजनकत्वम् अर्थस्य पदे सम्बन्धः इति । एतादृशी शक्तिधीः सहकारिणी=सहकारिकारणं भवतीत्यर्थः ॥ मुक्तावल्यां-शाब्दबोधप्रकारमिति । उपजीव्योपजीवकभावसंगतिमभिप्रेत्य शाब्दबोधप्रकारं-शाब्दप्रमातत्करणव्यापारादिसामग्रीस्वरूपं दर्शयतीत्यर्थः उपमानाऽनन्तरं शब्दनिरूपणे ज्ञानविषयीभूतशब्दस्य शाब्दप्रमितिकरणात्मकशब्दतया शब्दे 'गोसदृशो गवय'इत्याकारकसादृश्यविशिष्टपिण्डदर्शनोपजीव्यतानिरूपितोपजीवक(कार्य)त्वं नास्ति, किन्तु संज्ञासंज्ञिसम्बन्धात्मकशक्तिनिर्णयरूपोपमितिनिष्ठोपजीव्यतानिरूपितोपजीवकता शाब्दबोधे वर्तते, शब्दशक्तिनिर्णयाऽनन्तरमेव शब्दार्थोपस्थितेरनुभवात्, तथा चाऽत्र उपमितिशाब्दबोधात्मकफलयोः संगतिर्बोध्या । तस्याः फलनिष्ठत्वेऽपि 'स्वाश्रयकरणत्वा'-त्मकपरम्परासम्बन्धेन करणनिष्ठत्वात् करणयोरनन्तराभिधानप्रयोजकत्वं बोध्यम्॥ प्राचीनास्तु-अतिदेशवाक्यजन्यशाब्दबोधस्योपमानत्वात् शब्दस्य अर्थज्ञानजन्यत्वेन शब्दस्यैव प्रमाणत्वाद् उपमानशब्दयोः स्वरूपत उपजीव्योपजीवकभाव इति वदन्ति । पदज्ञानं करणम्=पदश्रवणे सति पदविषयकश्रावणप्रत्यक्षं, पुस्तकादौ लिखितस्मारकरेखानां मौनतया दर्शने तु रेखादर्शनात्मकोद्बोधकजन्यं पदस्य स्मरणात्मकं ज्ञानं करणं बोध्यम् ॥ प्राचीनास्तु ज्ञायमानपदमेव करणमिति वदन्ति तन्निषेधति-न तु ज्ञायमानमिति । वर्तमानकालीनश्रावणज्ञानविषयीभूतं पदं न करणमित्यर्थः । तत्र हेतुमाह-पदाभावेऽपीति । मौनिश्लोकादौ=मौनिकर्तृकवाक्यबोधकलोप्यादौ मौनतया वाचिते(दृष्टे) लिखितश्लोके, आदिना-द्वित्वादिबोधकाऽङ्गुल्यादिचेष्टादौ च, पदाभावेऽपि=श्रावणविषयपदाभावेऽपि,-उच्चारितपदाऽसत्त्वेऽपीति यावत्, शाब्दबोधस्य जायमानत्वात् ।

**पारः। अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः। तत्रापि वृत्त्या पदजन्यत्वं बोध्यम्। अन्यथा घटादिपदात्समवायसम्बन्धेनाऽऽकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तेः। वृत्तिश्च शक्तिलक्षणान्यतरः सम्बन्धः।**

तथा च ज्ञायमानपदात्मक–करणाऽभावेऽपि शाब्दबोधात्मककार्यजननेन व्यतिरेकव्यभिचारात् न ज्ञायमानपदं करणमिति भावः॥ **व्यापारः**=पदार्थधीः, सा च पदजन्यपदार्थस्मरणं=पदज्ञानजन्यं पदार्थस्मरणं द्वारमित्यर्थः॥ पदज्ञानजन्ये'त्यनुपादाने आपत्तिमाह–**अन्यथेति**। पदज्ञानजन्यत्वाऽनिवेशे, पदार्थज्ञानमात्रस्य व्यापारत्वे इति भावः। पदज्ञानवतः='घट'पदस्मरणवतः पुरुषस्य, प्रत्यक्षादिना=चक्षुस्संयोगेन, अनुमानेन, अन्येन, उद्बोधकेन वा, पदार्थस्य घटात्मकपार्थिववस्तुनः उपस्थितौ=ज्ञाने, स्मरणे सत्यपि, 'घट'विषयकशाब्दबोधापत्तिः स्यात्, न तु तत्र शाब्दबोधो भवति कारणं च चक्षुस्संयोगादिजन्यं पदार्थस्मरणात्मकं वर्तते, तथा च कारणे सत्यपि कार्यानुत्पादरूपोऽन्वयव्यभिचारः, अतो न पदार्थस्मरणमात्रं व्यापारः किन्तु पदज्ञानजन्यपदार्थस्मरणमिति भावः॥ ननु पदार्थज्ञानस्य व्यापारविधयैव शाब्दबोधहेतुत्वप्रतिपादनात् प्रत्यक्षादेश्च पदज्ञानाऽजन्यतया व्यापारत्वाऽसंभवादेव नाऽऽपत्तिरिति चेन्न। कालिकसम्बन्धेन पदज्ञानजन्यत्वस्य तत्र सत्त्वात्। ननु पदज्ञाननिष्ठसमवायसम्बन्धावच्छिन्नकारणतानिरूपितकार्यत्वरूपपदज्ञानजन्यत्वस्यैव निवेशेन प्रत्यक्षादेस्तादृशव्यापारत्वाऽभावान्नापत्तिरिति चेन्न। 'घटपदवदाकाशमि'त्याकारकविशिष्टवैशिष्ट्यावगाहिमानसप्रत्यक्षस्य घटपदत्वप्रकारकज्ञानजन्यतया घटपदलिंगज्ञानजन्याऽऽकाशपक्षकविभुत्वविधेयकानुमितेरपि घटपदज्ञानजन्यतया घटपदानुभवजन्यघटपदस्मृतेरपि घटपदज्ञानजन्यतया च एतेषां ज्ञानानां व्यापारत्वसंभवेन आकाशविभुत्वघटपटादीनां शाब्दबोधापत्तिवारणाय पदज्ञानजन्यत्वस्याऽऽवश्यकत्वात्। ननु पदार्थस्मृतेः साक्षात्पदज्ञानजन्यत्वविवक्षणात् पदविषयकस्मृतेश्च संस्कारद्वारा पदज्ञानजन्यत्वेन साक्षात्पदज्ञानजन्यत्वाभावात् नोक्तापत्तिरिति चेन्न। सिद्धान्ते पदज्ञानस्यापि वृत्तिज्ञानद्वारैवार्थस्मारकत्वात् साक्षात्परम्परासाधारणजन्यत्वघटितव्यापारत्वस्याऽभिप्रेतत्वात्। ननु परम्परया पदज्ञानजन्यत्वेन पदस्मृतेरपि व्यापारतया तदुत्तरं पदविषयकशाब्दबोधापत्तिरिति चेन्न। पदज्ञानजन्यत्वस्योद्बोधकविधया पदज्ञाननिष्ठकारणतानिरूपितकार्यत्वस्यैव निवेशादिति ध्येयम्॥ पदज्ञानसहकारिज्ञानविषयसम्बन्धमाह–**तत्रापीति**। पदज्ञाननिष्ठा या उद्बोधकत्वात्मकसम्बन्धिज्ञानत्वावच्छिन्ना जनकता तन्निरूपितजन्यताश्रये स्मृतावित्यर्थः। तद्घटकं पदजन्यत्वं=पदज्ञानजन्यत्वं, वृत्त्या=वृत्तिज्ञानेनेत्यर्थः, सहार्थे तृतीया, तथाच वृत्तिज्ञानसहकृतपदज्ञाननिष्ठ–सम्बन्धिज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यताश्रयपदार्थज्ञानं व्यापार इति फलितम्॥ वृत्तिज्ञानसहकृतत्वनिवेशफलं दर्शयितुमाह–**अन्यथेति**। वृत्तिज्ञानसहकृतत्वाऽनिवेशे इत्यर्थः। घटादिपदात्=घटादिपदज्ञानात्, समवायसम्बन्धेन=समवायसम्बन्धज्ञानसहकृतात्। आकाशस्य स्मरणे जाते सति आकाशविषयकस्यापि शाब्दबोधस्य आपत्तिः स्यात्, वृत्तिज्ञानसहकृतत्वनिवेशे तु वृत्तिज्ञानसहकृतघटपदज्ञानस्याकाशस्मृतावहेतुतया न आकाशादिशाब्दबोधापत्तिरिति भावः॥ ननु वृत्तिः यदि शक्तिमात्रं, तदा गंगापदस्य तीरे शक्त्यभावेन वृत्तिज्ञानसहकृतगंगापदज्ञानजन्यतीरस्मृतेरभावाद् गंगापदज्ञानात् तीरविषयकशाब्दबोधो न स्यादित्यत आह–**वृत्तिश्चेति**। वृत्तित्वं शाब्दबोधानुकूलसम्बन्धत्वम्। वृत्तिशब्दार्थः शक्तिलक्षणान्यतरसम्बन्धः=शक्तित्वलक्षणात्वान्यतरविशिष्टसम्बन्ध एव बोध्यः, तथा च वृत्तिशब्दस्य नानार्थकत्वेन तीरस्मृतेः लक्षणात्मकवृत्तिज्ञानसहकृतगंगापदज्ञानजन्यत्वाद् गंगापदात् तीरबोधो निर्वहत्येवेति भावः। ननु शक्तिज्ञानलक्षणाज्ञानान्यतरसहितपदज्ञानजन्यपदार्थस्मरणस्य शाब्दबोधं

**अत्रैव शक्तिज्ञानस्योपयोगः। पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि तत्सम्बन्धेन तत्स्मरणानुत्पत्तेः। पदज्ञानस्य हि एकसम्बधिज्ञानविधया पदार्थोपस्थापकत्वम्। शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः। सा चास्मात्पदादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा।**

---

प्रति कारणत्वे शक्तिज्ञानत्वादेरपि शाब्दबोधकारणत्वापत्तिरित्याशंकायामाह–**अत्रवेति**। पदार्थस्मृतावेव, शक्तिज्ञानस्य=शक्तिलक्षणान्यतरात्मकवृत्तिज्ञानस्य, उपयोगः=कारणत्वम्, न तु शाब्दबुद्धावपि, शाब्दबुद्धौ वृत्तिज्ञानस्याऽन्यथासिद्धत्वादिति भावः॥ ननु तर्हि पदार्थस्मृतौ कथं वृत्तिज्ञानस्य अकारणत्वं न?, इत्याकांक्षायामाह–**पूर्वमिति**। पदार्थस्मृतिपूर्वक्षणे,–पदज्ञानोत्पत्तिक्षणे इत्यर्थः, शक्तिग्रहाऽभावे=शक्तिलक्षणान्यतरवृत्तिज्ञानाऽभावे, पदज्ञानेऽपि=पदज्ञाने जातेऽपि,–स्मृतिकारणपदज्ञानसत्त्वेपि, तत्सम्बन्धेन=पदीयसम्बन्धेन=घटपदसम्बन्धितावच्छेदकघटत्वप्रकारेणेति यावत, तत्स्मरणाऽनुत्पत्तेः=घटादिस्मरणाऽनुत्पत्तेः। तथा च शक्तिलक्षणान्यतरवृत्तिज्ञानाऽभावे पदज्ञानाद्यात्मकस्मृतिसामग्रीसत्त्वेऽपि घटपदसम्बन्धितावच्छेदकघटत्वप्रकारकघटविशेष्यकस्मृत्यनुपपत्तिः स्यादतः शक्तिलक्षणान्यतरात्मकवृत्तिज्ञानस्य पदार्थस्मृतिहेतुत्वमावश्यकमिति भावः॥ ननु पदार्थस्मृत्यन्यथाऽनुपपत्त्या शक्तिलक्षणान्यतरात्मकवृत्तिज्ञानस्य कारणत्वे सिद्धे तेनैव पदज्ञानस्याऽन्यथासिद्धत्वं भवतु–इत्यत आह–**पदज्ञानस्य हीति**। पदज्ञानस्यापीत्यर्थः, एकसम्बन्धिज्ञानविधया='एकसम्बन्धिज्ञानम् अपरसम्बन्धिस्मारकं भवती'तिनियमेन पद–तदर्थयोर्द्वयोः सम्बन्धिनोर्मध्ये पदात्मकैकसम्बन्धिज्ञानविधया पदार्थात्मकाऽपरसम्बन्धिनः स्मरणजनकत्वं भवतीति, यथा हस्तिनो हस्तिपकस्य च आधाराधेयभावसम्बन्धवत्त्वेऽपि हस्तिदर्शनस्यैव हस्तिपकस्मारकत्वं भवति तथा पद-तदर्थयोः शक्तिलक्षणान्यतरसम्बन्धज्ञानसत्त्वेपि पदश्रवणाऽनन्तरमेवार्थस्मरणस्यानुभविकत्वाद् वृत्त्यात्मकसम्बन्धज्ञानस्येव सम्बन्धिज्ञानविधया पदज्ञानविधया च पदज्ञानस्यापि हेतुत्वमावश्यकमिति भावः॥ ननु शक्तिः किंस्वरूपेत्याकांक्षायां तां निरूपयति–**शक्तिश्चेति**। चकारेण लक्षणासंग्रहः, तथा च–शक्तिः लक्षणा च पद–तदर्थयोः सम्बन्धो बोध्य इत्यर्थः॥ **'संकेतो लक्षणा चार्थे पदवृत्ति'रितिशक्तिवादः'** अर्थनिरूपिता पदनिष्ठा या वृत्तिः सा शक्तिः लक्षणा चेत्यर्थः। अर्थानुयोगिकपदप्रतियोगिकपदानुयोगिकार्थप्रतियोगिकयोः शाब्दबोधौपयिकज्ञानविषयसम्बन्धयोः शक्तिलक्षणान्यतरपदव्यवहार्यतेति भावः॥ वृत्तिलक्षणं तु–पदार्थस्मृत्यनुकूलत्वे सति पदपदार्थसम्बन्धत्वम् पदार्थस्मृत्यनुकूलत्वानुपादाने'घट'पद–'कम्बुग्रीवादिमदा'त्मकार्थयोः पृथिव्यादौ यः कालिकसम्बन्धस्तत्रातिव्याप्तिः, 'पदार्थस्मृत्यनुकूलत्वो'पादाने तु वृत्त्यात्मकसम्बन्धातिरिक्ता ये कालिकादिसम्बन्धास्ते न शाब्दबोधजनकपदार्थस्मरणानुकूला इति तद्वारणम्। अर्थस्मृत्यनुकूलत्वस्य अदृष्टादौ सत्त्वादतिव्याप्तिः, तद्वारणाय–पदपदार्थसम्बन्ध इति। अदृष्टादिकं न पदपदार्थसम्बन्ध इति तद्वारणम्॥ मीमांसकैरीश्वरानङ्गीकाराद् ईश्वरेच्छाया अप्यसंभवात् पदगता शक्तिः वह्निगतदाहजनकशक्तिरिव अभिधारूपवृत्तिग्राहकः संकेतः पदार्थान्तरमित्यभ्युपगम्यते, तन्मतं निरसितुं शक्तिं क्लृप्तपदार्थे गुणेऽन्तर्भावयति–**सा चेति**। शक्तिश्च ईश्वरेच्छारूपैव, नातिरिक्तपदार्थः गौरवादिति भावः॥ इच्छा द्वेधा–पदप्रकारकार्थविशेष्यिका,'अर्थप्रकारकपदविशेष्यिका च, तत्राद्येच्छाया आकारमाह–**'अस्मात्पदादयमर्थो बोद्धव्य'** इति। अस्माद् घटपदाद् अयं पृथुबुध्नोदराद्यात्मको जात्याकृतिविशिष्टव्यक्तिरूपोऽर्थो ज्ञातव्य इत्यर्थः। तत्र–अस्मादि'तोद'मर्थस्य 'पद'शब्दार्थैकदेशेन पदेन सहाऽभेदेनाऽन्वयः, पदादित्यस्य पदज्ञानादित्यर्थः, पञ्चम्या जन्यत्वमर्थः, तस्य बोद्धव्यैकदेशे बोधेऽन्वयः, कर्मणि विहितस्य 'तव्यत्'प्रत्ययस्य विषयत्वमर्थः, तथा च 'एतत्पदजन्यबोधविषयता-

वानयमर्थो भवतु'—इत्याकारिका पदप्रकारिकाऽर्थविशेष्यिकेश्वरेच्छा शक्तिः। 'एतत्पदनिष्ठप्रकारता-निरूपित—'जन्यत्व'निष्ठप्रकारतानिरूपित'बोध'निष्ठप्रकारतानिरूपित'विषयत्व'निष्ठप्रकारतानिरूपितवि-शेष्यताश्रयोऽर्थ'—इति बोधः। स्व( पद )जन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यता-वत्त्वं'पदस्यार्थे सम्बन्धः॥ अर्थप्रकारकपदविशेष्यिका इच्छा तु—'इदं पदममुमर्थं बोधयत्वि'ति। 'एतदर्थविषयकबोधजनकतावदिदं पदं भवतु'—इत्यकारिका अर्थप्रकारकपदविशेष्यिकेश्वरेच्छा, एतदर्थनिष्ठप्रकारतानिरूपितविषयित्वनिष्ठप्रकारतानिरूपितबोधनिष्ठप्रकारतानिरूपितजनकत्वनिष्ठप्रका-रतानिरूपितविशेष्यताश्रयः पदमि'ति बोधः॥ 'पदं गां वक्ति, पदेन गौरुच्यते'—इत्यादौ 'अस्मात्पदादयमर्थो बोद्धव्य' इतीच्छायाः संकेतरूपत्वे बोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयवि-शेष्यत्वं वच्यादिधात्वर्थः, तत्र 'पदं गां वक्ती'त्यत्र तादृशविशेष्यतायाः परम्परया निरूपक-प्रकारताश्रयत्वात्मककर्तृत्वं कर्त्राख्यातेन बोध्यते, तच्च स्वरूपेण पदेऽन्वेति। 'गामि'त्यत्र द्वितीयार्थो वृत्तित्वं। तथा च—गोनिष्ठा या बोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यता तादृशविशेष्यतानिष्ठविशेष्यतानिरूपित— निरूपितत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितप्रकारत्व-निष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितविषयत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितबोधत्वावच्छि-न्नप्रकारत्वावच्छिन्नविशेष्यतानिरूपितजन्यत्वसम्बन्धावच्छिन्नप्रकारताश्रयतावद्गोपदमिति बोधः। तादृशाश्रयान्तोऽत्र कर्त्राख्यातार्थः। 'पदेन गौरुच्यते'—इत्यत्र तु—तादृशविशेष्यतायाः आश्रय-त्वसम्बन्धेनार्थेऽन्वयः, गोपदेनेत्यत्र तृतीयार्थः आधेयत्वम्, तथा च—गोपदजन्यबोधविषयत्वनिष्ठप्रकार-तानिरूपितेश्वरेच्छीयविशेष्यताश्रयतावान् गौरिति बोधः॥ अथ—पदं, गां वक्ति, पदेन गौरुच्यते—इत्यादौ 'इदं पदममुमर्थं बोधयतु'—इतीश्वरेच्छायाः संकेतरूपत्वे तु—बोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वं धात्वर्थः। 'पदं गां वक्ती'त्यत्र धात्वर्थीभूततादृशविशेष्यतायाः आश्रयत्वसम्बन्धेन पदेऽन्वयः, तथा च 'गोविषयकबोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यताश्रयो गोपदमि'ति बोधः। 'गोपदेन गौरुच्यते'—इत्यत्र तृतीयार्थः आधेयत्वम्, तत्र निरूपितत्वसम्बन्धेन पदस्यान्वयः, आधेयतायाश्च धात्वर्थे विशेष्यत्वेऽन्वयः, तथा च 'गोपदनिष्ठा (गोपदनिरूपिताधेयतावती)या बोधजन-कत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यता तादृशविशेष्यतानिष्ठविशेष्यतानिरूपित—निरूपितत्व-निष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपित— प्रकारत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितजनकत्व-निष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपित—बोधत्वावच्छिन्नप्रकारत्वावच्छिन्नविशेष्यतानिरूपितविषयित्व-सम्बन्धावच्छिन्नप्रकारताश्रयो गौरि'तिबोधः इति। तादृशाश्रयान्तः कर्माख्यातार्थः इति बोध्यम्। 'जात्याकृतिव्यक्तयः पदार्थ'इतिसूत्रेण घटघटत्वसंसर्गाणां घटपदशक्तिमत्त्वं दर्शितम्, अत एव 'वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वं प्रवृत्तिनिमित्तलक्षणमुपपद्यते, शब्दा-श्रयत्वेऽतिव्याप्तिवारणाय—वाच्यत्वे सतीति। अवयवसंयोगात्मकाकृतिवारणाय—वाच्यवृत्तित्वे सतीति। स्थूलघन्यतिव्याप्तिवारणाय—वाच्योपस्थितिप्रकारत्वमिति। इच्छीयविशेष्यता घटे घटत्वे समवाये च वर्तते, तत्र 'आश्रयत्वसम्बन्धावच्छिन्नघटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयवि-शेष्यता घटे, अवच्छेदकत्वसम्बन्धावच्छिन्नघटपदजन्यबोधविषयत्वनिष्ठप्रकारकतानिरूपितेश्वरेच्छीय-विशेष्यता घटत्वे, अवच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नघटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपि-तेश्वरेच्छीयविशेष्यता समवाये, वर्तते। आकारस्तु 'घटो घटपदजन्यबोधविषयो भवतु, घटत्वं घटपदजन्य-बोधविषयतावच्छेदकं भवतु, समवायः घटपदजन्यबोधविषयतावच्छेदकतावच्छेदको भवत्विति। अत्र—तत्पदज्ञानजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वस्यैव तत्पद-

**आधुनिके नाम्नि शक्तिरस्त्येव-'एकादशेऽहनि पिता नाम कुर्यात्' इतीश्वरेच्छायाः सत्त्वात्। आधुनिकसङ्केतिते तु न शक्तिरिति सम्प्रदायः। नव्यास्तु ईश्वरेच्छा न शक्तिः, किन्त्विच्छैव, तेनाधुनिकसङ्केतितेऽपि शक्तिरस्त्येवेत्याहुः। शक्ति-**

शक्यत्वाद्‌ईश्वरेच्छाया ऐक्येऽपि न घटपदात् पटबोधापत्तिः न वा गंगापदात् तीरबोधापत्तिः, पटरूपेऽर्थे घटपदज्ञानजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वात्मकस्य घटपदशक्यत्वस्य विरहात्। तीरात्मकेऽर्थे च-गंगापदज्ञानजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपित विशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वात्मकस्य गंगापदशक्यत्वस्य अभावाच्चेति ॥ यद्यपि निरुक्तविशेष्यतासम्बन्धेन ईश्वरेच्छावत्त्वस्येव ईश्वरज्ञानवत्त्वस्य ईश्वरकृतिमत्त्वस्यापि च तत्पदशक्यत्वं निर्वक्तुं शक्यं, तथा च ईश्वरज्ञानप्रयत्नयोरपि शक्तित्वापत्तिः, तथापि-अनादितात्पर्यज्ञानस्यैव हेतुत्वानुरोधेन ईश्वरेच्छाया एव तादृशाकारत्वस्य क्लृप्ततया तस्या एव शक्तिरूपतास्वीकारात्, ईश्वरज्ञानप्रयत्नयोस्तु तादृशाकारत्वे प्रमाणाभावेनाऽक्लृप्ततया ईश्वरज्ञानकृत्योः शक्तित्वाऽसंभवात् ॥

ननु-एकादशे दिवसे पित्रुच्चरितनाम्नः पुत्रे शक्तिर्न स्यात्, तत्रेश्वरेच्छाया अभावादित्याशंकां परिहर्तुं तत्रापि ईश्वरेच्छासत्त्वं दर्शयति-आधुनिके इति। आधुनिकैः पित्रादिभिः एकादशे दिवसे उच्चारिते नाम्नि अपि ईश्वरेच्छात्मिका शक्तिरस्त्येवेत्यर्थः ॥ ईश्वरेच्छासत्त्वबोधिकां श्रुतिमाह-'एकादशेऽहनि पिता(पुत्रस्य)नाम कुर्यादि'ति। एकादशाहकालीन-पुत्रबोधकनामत्वावच्छिन्नोच्चारणकर्ता पिता इति श्रुतिवाक्यार्थः। तथा च तत्र चैत्रपदत्वादिना पुत्रे भगवदिच्छारूपशक्त्यभावेऽपि 'एकादशाहकालीनपित्रुच्चारितशब्दजबोधविषयः पित्रादिसंकेतितविषयः( पुत्रः )भवतु'इत्याकारकभगवदिच्छाया एकादशाहकालीनपितृकर्तृकोच्चारणजन्यनामत्वात्मकसामान्यरूपेण पुत्रे उक्तश्रुत्या सत्त्वप्रतिपादनात् पुत्रस्य तादृशपित्रुचरितपदशक्यत्वमस्त्येवेति भावः ॥ ननु-'यूस्त्र्याख्यौ नदी' 'इको गुणवृद्धी'इत्यादौ आधुनिक( वैयाकरणादि )मात्रसंकेतित-नदी-वृद्धयादिपदानां शक्तिर्न स्यात् तत्र 'नदी'पदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छाया वैयाकरणाद्यभिमतार्थे अभावात्,-इत्याशंक्य इष्टापत्त्या परिहरति-आधुनिकसंकेतिते त्विति। आधुनिकमात्रसंकेतित'नदी-वृद्धयादि'पदे तु न शक्तिः=न ईश्वरेच्छाऽङ्गीक्रियते इत्यर्थः। तर्हि नद्यादिपदात् कथं शाब्दबोध इतिचेत् ?, शक्तिभ्रमादेवेति गृहाणेति-साम्प्रदायिका वदन्ति ॥ नव्यास्तु-ईश्वरेच्छायाः शक्तित्वे नदीवृद्धयादिपदात् बोधो न स्यादत ईश्वरेच्छा न शक्तिः, किन्तु-इच्छैव शक्तिः, सा च वेदे ईश्वरेच्छात्मिका, आधुनिकसंकेतिते नाम्नि तु संकेतकर्तुरेवेच्छा शक्तिर्वर्तते इति सर्वत्र शाब्दबोधनिर्वाहो भवतीत्याहुः ॥ नवीनमतेऽपभ्रंशात्मकगगर्यादिपदेऽपि 'इदं पदममुमर्थं बोधयत्वि'त्याधुनिकेच्छात्मकशक्तेरसत्त्वादभ्रान्तस्यापि तत्पदाच्छाब्दबोधापत्तिः स्यादि'त्यस्वरसः 'आहु'रित्यनेन दर्शितः, वस्तुतस्तु-'नापभ्रंशितवै'इति-श्रुत्या 'साधूनेव प्रयुञ्जीत'-इतिव्याकरणेन च अपभ्रंशशब्दानां प्रयोगनिषेधस्य, साधुशब्दप्रयोगे च फलातिशयस्य दर्शितत्वाद्, गगर्याद्यपभ्रंशादिशब्दव्यावृत्ता शक्तिः 'अस्मात्साधुशब्दादयमर्थो बोद्धव्य'इतीच्छैव वक्तव्या, एवं च 'गगर्यादिशब्दादयमर्थो बोद्धव्य'-इतीच्छासत्त्वेऽपि 'साधुपदज्ञानजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन 'गगर्यादिशब्दादयमर्थो बोद्धव्य'इतीच्छायाः कुत्राऽप्यवर्तमानतया न तस्याः शक्त्यात्मकत्वं किन्तु गगर्यादिशब्दानां साधुपदत्वभ्रान्तिमतः पुरुषस्य साधुपदज्ञानघटितविशेष्यतासम्बन्धेन निरुक्तेच्छावत्त्वभ्रमरूपशक्तिभ्रमसंभवात् तस्यैव गगर्यादिशब्दाच्छाब्दबोधो नान्यस्येति-नवीनमतमेव युक्तमिति बोध्यम् ॥ ननु शक्तिग्रह एव न संभवति प्रमाणाऽभावादित्याशंकां प्रमाणप्रदर्शनेन परिहरति-

ग्रहस्तु व्याकरणादितः। तथाहि—"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यव-हारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥" धातुप्र-कृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति। क्वचित्सति बाधके त्यज्यते। यथा

---

शक्तिग्रहस्त्विति। व्याकरणोपमानादीनां शक्तिग्राहकत्वे आचार्योक्तिं प्रमाणयति—तथाहीति। व्याकरणम्=अष्टप्रस्थानमिन्द्रादिप्रणीतं शब्दशास्त्रम्, उपमानं=सादृश्यज्ञानात्मकप्रमाणम्, कोशः=अमरकोशनिघण्ट्वादिः, आप्तवाक्यं=प्रयोगहेतुभूतयथार्थज्ञानवत्पुरुषोच्चरितवाक्यम्, व्यवहारः=शब्दप्रयोगः, प्रयोज्यवृद्धमुद्दिश्य उत्तमवृद्धादिकृतो 'गामानये'त्यादिरूपः, चेष्टाद्यात्मकश्च, वाक्यस्य शेषः=प्रकृतवाक्यातिरिक्ते वाक्ये प्रकृतवाक्यार्थबोधोपयोगी पदकदम्बोऽर्थवादाद्यात्मकः, विवृतिः=विवरणम्—पर्यायादिकम्, सिद्धपदस्य सान्निध्यं=प्रसिद्धपदस्य सन्निधिः। एतान्यष्टौ शक्तिज्ञानस्य प्रयोजकानि भवन्तीति वृद्धा मन्यन्ते। तानि क्रमशःप्रदर्श्यन्ते—धातुप्रकृतीति। 'भू'सत्तायाम्, 'अत' सातत्यगमने, डुपचष्पाके, इत्यादिव्याकरणात् भ्वादिधातूनां सत्ताद्यर्थे शक्तिः। व्याकरणे रामादिप्रकृतेः अमुकार्थे शक्तिरित्यदर्शितप्रायत्वात् धातुरूपप्रकृतिरित्यर्थो बोध्यः, अथवा प्रकृतिपदं पाचकादिप्रातिपदिके लाक्षणिकं, पचधातोः पाचकार्थत्वस्य तदुत्तरकृत्प्रत्ययस्य कर्तृत्वार्थकत्वस्य च तत्र प्रतिपादनेन व्याकरणाच्छक्तिग्रहः। तत्र गवादिप्रधानप्रतिपादकानां तु कोशादेव शक्तिग्रहः। अथवा—'प्रकृति'पदं निपातरूपमभिप्रेत्य प्रयुक्तम्, यथा 'विपूयविनीयजित्या मुञ्जकल्कहलिषु' (३।१।११७) इतिसूत्रे विपूय=मुञ्जतृणे, विनीय=कल्के पापे, यजित्या—कर्षितव्ये अर्थे निपात्यन्ते, इति। वस्तुतस्तु—'स्वम्—अज्ञातिधनाख्यायाम्'—'अन्तरं बहिर्योगोपसंव्यानयोः' इत्यादौ नियतार्थे शक्तिमत्स्वाऽन्तरादिपदमुद्दिश्यैव संज्ञादिविधानाद् अन्यथाऽनुपपत्त्या प्रकृतीनां स्वार्थे शक्तिग्रहो व्याकरणेऽपि भवतीति बोध्यम्। गुरुमुखादाप्तवाक्यात् तु प्रकृतेः स्वार्थे शक्तिग्रहःसर्वसम्मत इति॥ 'वर्तमाने लट्'—इत्यत्र लट्प्रत्ययानां वर्तमानरूपार्थे शक्तिग्रहः। 'लः कर्मणि च भावे चाकर्मकेभ्यः' इत्यादिव्याकरणबलाद् आख्यातस्य 'ति'प्रभृतेः कर्तरि शक्तिग्रहः। विभक्तीनाम् आश्रयाद्यर्थे शक्तिग्रहः 'आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा। यथायथं विभक्त्यर्थाःसुपां कर्मेति भाष्यतः' इत्यादिना बोध्यते। तत्र द्वितीयातृतीयासप्तमीनामाश्रयोऽर्थः, क्रियाजन्यफलाश्रयः कर्म इत्यत्र द्वितीयायाः, धात्वर्थव्यापाराश्रयः कर्ता इत्यत्र कर्तरि तृतीयायाः, 'आधारोऽधिकरणम्'—इत्येन सप्तम्या आश्रयोऽर्थो बोध्यते' 'ध्रुवमपायेऽपादानम्'—इत्यनेन पञ्चम्या अवधौ, 'कर्मणा यमभिप्रैति स सम्प्रदानमि'त्यनेन चतुर्थ्याः उद्देश्ये सम्प्रदाने, 'षष्ठी शेषे' इत्यनेन षष्ठ्याः सम्बन्धे, शक्तिग्रहः। अथवा षण्णां विभक्तीनां शक्तिरेवार्थ इति। स्वादिप्रत्ययानामेकत्वादौ शक्तिग्रहः। आदिना—समासादिवृत्तीनां संग्रहः, तेषामपि प्रातिपदिकत्वेन तत्राऽपि वैयाकरणैः शक्तेरंगीकारात्॥ शक्तिग्रहः=अर्थविशेषे शक्तिग्रहः, व्याकरणात्=सूत्रवृत्तिवार्तिकाद्यात्मकात् शब्दशास्त्रम्, भवति=जायते इत्यर्थः॥ नैयायिकस्तत्र व्याकरणशक्तेरपवादस्थलं दर्शयितुमाह—क्वचिदिति। कुत्रचित् स्थले, बाधके सति=गौरवादिदोषे बाधके विद्यमाने सति, त्यज्यते=व्याकरणाद् गृहीता अपि शक्तिस्त्यज्यते इत्यर्थः॥ तदुदाहरणेन स्पष्टीकर्तुमाह—यथेति। व्याकरणमधीयन्ते विदन्ति वा वैयाकरणास्तैः, 'चैत्रः पचती'त्यादिवाक्ये, आख्यातस्य='तिबा'दिप्रत्ययस्य, कर्तरि=कर्तृरूपेऽर्थे शक्तिरुच्यते इत्यर्थः। अयं भावः—'लः कर्मणि च भावे चाऽकर्मकेभ्यः'—इतिसूत्रे 'कर्तरि कृदि'तिसूत्रस्थं 'कर्तरी'तिपदमनुवर्तते, तथा च 'सकर्मकेभ्यो धातुभ्यो लकाराः कर्तृवाचकाः कर्मवाचकाः स्युरित्यर्थः, सकर्मकधातुसमभिव्याहृतयगाद्यनुत्तरलकाराः कर्तृवाचकाः

वैयाकरणैराख्यातस्य कर्तरि शक्तिरुच्यते। चैत्रः पचतीत्यादौ कर्त्रा सह चैत्रस्याभेदान्वयः। तच्च गौरवात्त्यज्यते। किन्तु कृतौ शक्तिर्लाघवात्। कृतिश्चैत्रादौ प्रकारी-

---

सकर्मकधातुसमभिव्याहृतयगाद्युत्तरलकाराः कर्मवाचका इति फलितार्थः। एवम्-'अकर्मकेभ्यो धातुभ्यो लकाराः कर्तृवाचकाः भाववाचका भवन्तीत्यर्थः, मात्रवाचकत्वमित्यस्य निरर्थकत्वमित्यर्थः, तथा च 'अकर्मकधातुसमभिव्याहृतयगाद्यनुत्तरलकाराः कर्तृवाचकाः अकर्मकधातुसमभिव्याहृतयगाद्युत्तरलकारा निरर्थका' इति फलितार्थः। उदाहरणानि-'चैत्रस्तण्डुलं पचति', 'चैत्रेण तण्डुलः पच्यते'-इत्यादीनि, 'चैत्रस्तिष्ठति, चैत्रेण स्थीयते, इत्यादीनि च। तत्र 'पचती'त्यत्र तिबः शप्प्रत्ययसमभिव्याहृतत्वेन यगादिसमभिव्याहृतत्वाभावात् कर्त्रर्थकत्वम्, 'पच्यते'-इत्यादौ तिबः यक्समभिव्याहृतत्वेन कर्मवाचकत्वम्। 'तिष्ठती'त्यत्र तिबः शप्प्रत्ययसमभिव्याहृतत्वेन यगाद्यसमभिव्याहृततया कर्तृवाचकत्वम्, 'स्थीयते'इत्यत्र तिबः यक्समभिव्याहृतत्वेन निरर्थकत्वम्। आख्यातार्थकर्तृकर्मणोः प्रथमान्तार्थेन सह अभेदेन अन्वयं कृत्वा धात्वर्थमुख्यविशेष्यतया शाब्दबोधो भवति,-'चैत्रस्तण्डुलं पचति, चैत्रेण तण्डुलः पच्यते,-इति कर्त्राख्यातस्थले कर्माख्यातस्थले च 'तण्डुलकर्मकश्चैत्रकर्तृकः पाक'इति बोधः। तत्रापि 'चैत्रस्तण्डुलं पचती'त्यत्र-चैत्राऽभिन्नैकत्वावच्छिन्नाश्रयवृत्तिः तण्डुलनिष्ठविक्लित्यनुकूलो वर्तमानकालिको व्यापार इति बोधः। 'चैत्रेण तण्डुलः पच्यते'इत्यत्र-चैत्राऽभिन्नकर्तृवृत्तिवर्तमानकालिकव्यापारजन्यतण्डुलाभिन्नैकत्वावच्छिन्नाश्रयवृत्तिविक्लित्तिरितिबोध इति॥ 'चैत्रस्तिष्ठति, चैत्रेण स्थीयते,-इति कर्त्राख्यातस्थले भावाख्यातस्थले च 'चैत्रकर्तृका स्थिति'रिति बोध इति॥ एतमर्थं संक्षेपेणाह-'चैत्रः पचती'-त्यादाविति। तण्डुलमित्यध्याहार्यं, द्वितीयार्थः कर्मता, पचधात्वर्थः पाकः, तिप्रत्ययार्थः कर्ता संख्या कालश्च, कर्तुः चैत्रेण सहाऽभेदेनाऽन्वयः, तथा च-'पाककर्त्रभिन्नैकत्ववच्चैत्र'इति बोधः। एकत्वसंख्याश्रयचैत्राऽभिन्नकर्तृवृत्तिवर्तमानकालिकः पाकानुकूलो व्यापार इति यावत्, वैयाकरणैर्धात्वर्थविशेष्यकबोधाङ्गीकारात्॥ नैयायिकस्तन्मतं खण्डयति-तच्चेति। आख्यातस्य कर्तरि शक्तिरित्येतत्, **गौरवात् त्यज्यते**=कर्तृत्वं हि कृतिमत्त्वं, तथा च कृतिमतः शक्यत्वे, कृतिः शक्यतावच्छेदिका प्रतिकर्तृ भिन्ना भिन्ना-इति शक्यतावच्छेदकधर्माणामानन्त्यमेव उपस्थितिकृतगौरवमिति भावः। **किन्तु-लाघवात्**=नानाकृतिष्वनुगतायाः कृतित्वजातेः किञ्चिद्विशेषितायाः शक्यतावच्छेदकत्वे उपस्थितिकृतलाघवात्, **कृतौ**=कर्तृनिष्ठे प्रयत्ने, आख्यातस्य शक्तिः स्वीकार्येत्यर्थः। जातेरेव स्वरूपतो भानाऽभ्युपगमेन कृतेः स्वरूपतः शक्यतावच्छेदकत्वाऽसंभवात् कृतित्वविशिष्टाऽनन्तकृतीनां शक्यतावच्छेदकत्वे परमगौरवमिति भावः॥ **नवीनैर्वैयाकरणैस्तु**-आश्रयमात्रे एव कर्तृकर्माख्यातयोः शक्तिः स्वीक्रियते, कृत्यादिव्यापारफलयोर्धातुनैव लाभात्, आश्रयत्वं च-अखण्डोपाधिरिति तन्मते न गौरवम्। तन्न। 'लः कर्तरी'त्यादिमूलसूत्रविरोधात्। न च 'कर्तरी'त्यस्य आश्रय एवार्थ इतिवाच्यम्। तथा सति 'स्वतन्त्रः कर्ते'तिसूत्रकृतपरिभाषाया वैयर्थ्यापत्तेः, स्वशास्त्रे यत्र कर्तृपदप्रयोगस्तत्रायमर्थ इति ज्ञापयितुमेव परिभाषादरात्। स्वातन्त्र्यं च-कारकान्तरव्यापारानधीनव्यापारवत्त्वं, तच्चातिगुरुभूतमेव। किञ्च-आश्रयत्वस्य अखण्डोपाधिरूपत्वे मानाभावात्, आधारतारूपस्य तस्य स्वरूपसम्बन्धरूपत्वेनाऽननुगतत्वाच्च॥ ननु कृतेराख्यातार्थत्वे प्रथमान्तार्थेन सहाऽभेदेनाऽन्वयो बाध्येतेत्यत आह-**कृतिश्चेति**। शाब्दबोधे कृतिः **चैत्रादौ प्रकारीभूय** भासते=चैत्रादिनिष्ठविशेष्यतानिरूपित-प्रकारतात्वावच्छिन्नविषयतावती भवतीत्यर्थः, तथा च न्यायमते धात्वर्थविशेष्यकशाब्दबोधस्य सर्वत्राऽनभ्युपगमेन प्रथमान्तार्थमुख्य-

**भूय भासते। न च कर्तुरनभिधानाच्चैत्रादिपदानन्तरं तृतीया स्यादिति वाच्यम्, कर्तृसंख्यानभिधानस्य तत्र तन्त्रत्वात्। संख्याभिधानयोग्यश्च कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः। कर्मत्वादीत्यस्येतरविशेषणत्वेन तात्पर्याविषयत्वमर्थः, तेन**

---

विशेष्यकशाब्दबोधस्यैवाऽभ्युपगमात्–'तण्डुलकर्मकपाकानुकूलवर्तमानकालीनकृतिमानेकत्वावच्छिन्नश्चैत्र'इति–कृतिप्रकारकचैत्रादिविशेष्यकबोधो भेदसम्बन्धेन भवति न त्वभेदेन, 'चैत्रेण तण्डुलः पच्यते'इत्यत्र 'चैत्रवृत्तिकृतिजन्यव्यापारजन्यविक्लित्त्याश्रय पकत्वावच्छिन्नस्तण्डुल'इति बोधः इति ॥ वैयाकरणः शंकते–**न च कर्तुरिति**। 'अनभिहिते' (२।३।१) इत्यधिकारसूत्रोत्तरपठितेन 'कर्तृकरणयोस्तृतीया' (२।३।१८) इत्यनुशासनेन अनभिहिते कर्तरि तृतीयाविधानात् न्यायमते कर्माख्यातेन कृतेरेवाऽभिहितत्वेन कर्तुः अनभिधानात्=आख्यातवाच्यत्वाऽभावात् 'चैत्रः पचती'त्यादौ वक्तव्ये कर्तृबोधार्थं तृतीयापत्त्या 'चैत्रेण पचती'त्येव प्रयोगः स्यात् न तु 'चैत्रः पचती'ति प्रयोग इति भावः॥ नैयायिकस्तत्समाधत्ते–**कर्तृसंख्येति**। **तत्र**=तृतीयायाम्, **कर्तृसंख्यानभिधानस्य**=आख्यातपदप्रयोज्यकर्तृभूतचैत्रादिविशेष्यकसंख्याप्रकारकबोधाऽभावस्य, **तन्त्रत्वात्**=प्रयोजकत्वादित्यर्थः॥ 'लः कर्मणि चे'त्यादिसूत्रे अनुवृत्त–सप्तम्यन्तकर्तृपदस्य कर्तृसंख्यायां लाक्षणिकतया कर्तृसंख्यावाचकलकारः इत्यर्थः। तद्रीत्या'अनभिहिते'–इतिसूत्रस्य 'आख्यातेन कर्तृगतसंख्यायाम् अनभिहितायामि'त्यर्थकतया, तादृशसंख्याबोधार्थं 'कर्तृकरणयोरतृतीया'–इति सूत्रेण तृतीया विधेया, 'प्रकृते 'चैत्रः पचती'त्यत्र च आख्यातेन 'ति'प्रत्ययेन कर्तृगतैकत्वादिसंख्याभिधानात् तादृशाधिकारीयतृतीयाविधायकसूत्रस्याऽप्रवृत्त्या 'चैत्रः पचतो'ति प्रयोग एव साधुः, न तु 'चैत्रेण पचती'ति भावः॥ ननु–कर्तृसंख्याभिधाने (उक्ते कर्तरि) किं प्रयोजकमित्याकांक्षायां तत्प्रयोजकं दर्शयति–**संख्याभिधानयोग्यश्चेति**। संख्याभिधानविशेष्यः=आख्यातार्थसंख्याप्रकारकशाब्दबोधविशेष्यः इत्यर्थः, उक्तकर्ता इति यावत्। तादृशः स एव भवति यः–**कर्मत्वाद्यनवरुद्धः**=कर्मत्वकरणत्वादिधर्मानवच्छिन्नः, 'कर्मत्वादिविशेषणत्वेन तात्पर्याऽविषय इति यावत्, **प्रथमान्तपदोपस्थाप्यः**=प्रथमाविभक्त्यन्तपदेन स्मृतिविषयतां गमितो भवतीत्यर्थः। तथा च–संख्याभिधानयोग्यत्वं (उक्तकर्तृत्वं) प्रति कर्मत्वकरणत्वादिविशेषणत्वेन तात्पर्याऽविषयत्वे सति प्रथमान्तपदज्ञानजन्यस्मृतिविषयत्वं प्रयोजकं भवतीति 'चैत्रः पचती'त्यत्र चैत्रे कर्मत्वादिविशेषणत्वतात्पर्याऽविषयत्वसहकृत–प्रथमान्तपदज्ञानजन्यस्मृतिविषयत्वस्य सत्त्वाद् उक्तकर्तृत्वं (अभिहितकर्तृत्वं) भवत्येवेति न तत्र तृतीयापत्तिरिति भावः। तत्र च 'आख्यातार्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति कर्मत्वादिविशेषणत्वतात्पर्यज्ञानाऽसहकृत–प्रथमान्तपदनिरूपितवृत्तिज्ञानजन्योपस्थितेः विशेष्यतासम्बन्धेन कारणत्वात् तादृशकारणस्य कर्त्राख्यात–स्थले कर्तर्येव सत्त्वेन कर्तर्येव उक्तविशेष्यतासम्बन्धेन 'तण्डुलकर्मकपाकानुकूलकृतिमदेकत्ववाँश्चैत्र'इतिशाब्दबोधो जायते इत्यपि बोध्यम्॥ 'चैत्रः तण्डुलः पचति' 'चैत्रः काष्ठः पचती'त्यादौ कर्मत्वकरणत्वादिलाक्षणिकप्रथमान्तपदोपस्थाप्य–तण्डुलकाष्ठादेः तादृशसंख्यान्वयवारणाय–कर्मत्वाद्यनवरुद्धत्वविशेषणम्। कर्मत्वाद्यनवरुद्धत्वस्य यथाश्रुतार्थकत्वे तत्रैव स्थले तण्डुलकाष्ठादेः शाब्दबोधात्पूर्वं शाब्दबोधीयकर्मत्वादिनिरूपितविशेषणत्वशून्यत्वात् तादृशसंख्यान्वयवारणाय–कर्मत्वादिविशेषणत्वेन तात्पर्याऽविषयत्वमित्यर्थानुसरणम्। ननु–कर्मत्वादिविशेषणत्वेन तात्पर्याऽविषयत्वार्थकरणेऽपि 'चैत्र इव मैत्रो गच्छती'त्यत्र चैत्रस्य इवार्थसादृश्ये एव विशेषणत्वेऽपि कारकविभक्त्यर्थकर्मत्वादिविशेषणत्वेन तात्पर्याविषयत्वात् आख्यातार्थ–संख्याया मैत्रे इव चैत्रेऽपि अन्वयः स्यादित्यत आह–

**कर्मत्वाद्यीत्यस्येति ।** कर्मत्वाद्यनवरुद्धदलस्य 'इतरविशेषणत्वेन तात्पर्याऽविषयत्वमि'त्यर्थो बोध्यः, तत्र 'कर्मत्व'पदम् 'इतर'परम् , 'अनवरुद्ध'पदं च-विशेषणत्वेन तात्पर्याऽविषयत्व'परमिति । **तेन**='कर्मत्वाद्यनवरुद्ध'दलस्य 'इतरविशेषणत्वेन तात्पर्याऽविषयत्वा'र्थकरणेन, 'चैत्र इव मैत्रो गच्छती'त्यादौ इतरपदग्राह्यं यद् इवार्थसादृश्यं तत्र चैत्रस्य निरूपितत्वसम्बन्धेन विशेषणतया इतरविशेषणत्वेन तात्पर्याऽविषयत्वाऽभावात् न चैत्रे संख्यान्वयापत्तिरिति भावः ॥ तत्र 'चैत्र-निरूपितसादृश्यवद्गमनानुकूलवर्तमानकालीनकृत्याश्रय एकत्वविशिष्टो मैत्र' इति बोधः ॥ **ननु**–तथापि-'चैत्र एव पचती'त्यत्र विशेष्यसंगतैवकारस्य अन्ययोगव्यवच्छेदोऽर्थः, चैत्रान्यस्मिन् पाककर्तृत्वयोगो व्यवच्छिद्यते, तत्रान्यस्मिन्योगे व्यवच्छेदे च पृथगेवैवकारस्य शक्तिः, अन्यरूपोऽर्थस्तु चैत्रांशे विशेष्यविधया भासते, सम्बन्धरूपयोगे एव आख्यातार्थकृतेः प्रतियोगित्वेन अन्वयः, तादृशयोगस्याऽभावरूपव्यवच्छेदे प्रतियोगिविधयान्वयः। अभावश्च अन्यस्मिन् प्रकारविधया भासते । तथा च 'चैत्रः पाकानुकूलकृतिमान् चैत्रभिन्नः पाकानुकूलकृतिसम्बन्धाभाववानि'त्याकारकशाब्द-बोधो(चैत्रेतराऽवृत्तिपाककृतिमांश्चैत्र)इति भवति । तत्रैवकारार्थैकदेशे भेदे इतरस्मिन् विशेषणत्वेन तात्पर्यविषयत्वात् चैत्रे संख्यान्वयो न स्यादिति चेन्न । 'इतरविशेषणत्वतात्पर्याऽविषय'इत्यस्य 'प्रतियोगित्वसम्बन्धानवच्छिन्नविशेषणत्वतात्पर्याऽविषय'इत्यर्थकत्वात् । चैत्रस्य एवकारार्थघटकभेदे प्रतियोगित्वसम्बन्धेन विशेषणत्वात् प्रतियोगित्वसम्बन्धानवच्छिन्नविशेषणत्वतात्पर्याऽविषयतावत्त्वस्य चैत्रे सत्त्वात न चैत्रे संख्यान्वयाऽनुपपत्तिरिति ॥ एवकाराऽतिरिक्तविशेषणत्वेन तात्पर्याऽविषयत्वं कर्मत्वाद्यनवरुद्धत्वमिति संक्षिप्तार्थः। **एवकारार्थस्त्रिविधः**-अन्ययोगव्यवच्छेदः, अयोगव्यवच्छेदः, अत्यन्ताऽयोगव्यवच्छेदश्चेति । आद्यस्तु दर्शितः। विशेषणसंगतैवकारस्य अयोगव्यवच्छेदोऽर्थः–यथा 'शङ्खः–पाण्डुर एव'–इत्यत्र शङ्खे पाण्डुराऽयोगो व्यवच्छिद्यते। क्रियासंगतैवकारस्य अत्यन्ताऽयोगव्यवच्छेदोऽर्थः यथा 'नीलं सरोजं भवत्येवे'त्यत्र सरोजे नीलभवनस्याऽत्यन्तायोगो व्यवच्छिद्यते न त्वयोगो व्यवच्छिद्यते कुत्रचित्सरोजे नीलत्वाऽसम्बन्धस्यापि सत्त्वादिति, अत्र अयोगे अत्यन्तत्वस्य सरोजनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपस्य व्यवच्छेदः अत्यन्ताऽयोगव्यवच्छेदपदार्थो बोध्यः इति **ध्येयम्** ॥ **ननु**–तथापि 'चैत्रः चैत्रं पश्यति'–इत्यादौ चैत्रस्य आधेयतया द्वितीयार्थे कर्मत्वे विशेषणत्वेन प्रतियोगित्वसम्बन्धाऽनवच्छिन्नविशेषणत्वतात्पर्यविषयत्वात् 'चैत्रवृत्तिचक्षुस्संयोगजन्यज्ञानाश्रयएकत्ववांश्चैत्र'इति बोधे चैत्रे संख्यान्वयो न स्यादिति चेन्न । मुख्यविशेष्यत्वेन तात्पर्याऽविषयत्वे सति इत्यस्यापि निवेशात् , तथा च 'मुख्यविशेष्यत्वेन तात्पर्याविषयत्वविशिष्टं यत् प्रतियोगितासम्बन्धानवच्छिन्नविशेषणत्वेन तात्पर्यविषयत्वं तदभावः संख्यान्वये नियामकः इति फलितम् , प्रकृते चैत्रे प्रतियोगितासम्बन्धानवच्छिन्नविशेषणतया तात्पर्यविषयत्वं मुख्यविशेष्यत्वेन तात्पर्याऽविषयत्वविशिष्टं नास्तीति तदभावसत्त्वात् संख्यान्वयोपपत्तिरिति भावः ॥ 'कर्मत्वाद्यनवरुद्धत्व'मित्यस्य तात्पर्यघटितार्थकथनं शाब्दबोधसामान्ये तात्पर्यज्ञानस्य हेतुत्वमिति प्राचीनमतानुसारेण। यदि तु नानार्थकसैन्धवादिपदात् कचिल्लवणस्यैव कचिदश्वस्यैव बोध इति नियमनिर्वाहाय तादृशस्थले एव तात्पर्यज्ञानस्य हेतुत्वं न तु सर्वत्र, एकार्थकपदस्थले तद्धेतुत्वकल्पने बीजाभावादित्युच्यते, 'तदा चैत्र इव मैत्रो गच्छती'त्यादौ चैत्रादेरिवार्थे यदा न विशेषणत्वे तात्पर्यं तदा चैत्रादावपि संख्यान्वयापत्तिरिति, तद्वारणाय 'विशेषणतामात्रप्रयोजकप्रथमान्ततत्तत्पदानुपस्थाप्यत्व'मेव कर्मत्वाद्यनवरुद्धत्वमित्यस्यार्थः, चैत्रस्य इवार्थसादृश्ये विशेषणतामात्रप्रयोजकप्रथमान्तचैत्रपदोपस्थाप्यत्वात् न तत्र संख्यान्वयापत्तिः ॥ **वस्तुतस्तु**–"प्रतियोगित्वसम्बन्धाऽनवच्छिन्नतन्निष्ठप्रका-

**चैत्र इव मैत्रो गच्छतीत्यादौ न चैत्रे संख्यान्वयः। यत्र कर्मादौ न विशेषणत्वे तात्पर्यं तद्वारणाय प्रथमान्तेति। यद्वा धात्वर्थातिरिक्ताविशेषणत्वं प्रथमदलार्थः। तेन चैत्र इव मैत्रो गच्छतीत्यत्र चैत्रादेर्वारणम्। स्तोकं पचतीत्यादौ स्तोकादेर्वारणाय च द्वितीयदलम्। तस्य द्वितीयान्तपदोपस्थाप्यत्वाद्वारणमिति।**

---

रताशालिशाब्दबोधत्वावच्छिन्नजन्यतानिरूपितज्ञाननिष्ठजनकतानिरूपितविषयतासम्बन्धावच्छिन्ना-वच्छेदकताशून्यप्रकृतवाक्यजन्यशाब्दबोधजनकतावच्छेदकाकांक्षादिमत्पदोपस्थाप्यत्वमेव नवीनप्राचीनोभयमतसाधारणं 'कर्मत्वाद्यनवरुद्धत्वं वक्तव्यम्' "चैत्र इव मैत्रो गच्छती'त्यत्र प्रतियोगित्वसम्बन्धानवच्छिन्नचैत्रनिष्ठप्रकारताशालि'चैत्रसदृश'इतिबोधत्वावच्छिन्नजन्यतानिरूपित'चैत्र'पदज्ञाननिष्ठजनकतानिरूपितविषयतासम्बन्धावच्छिन्न'चैत्र'पदनिष्ठावच्छेदकताशून्यं प्रकृतवाक्यजन्यशाब्दबोधजनकतावच्छेदकाकांक्षादिमत्पदं 'मैत्र'इति तदुपस्थाप्यत्वस्य तत्रैव सत्त्वात् मैत्रे संख्यान्वयः, नतु चैत्रे इति ॥ 'चैत्रः पचती'त्यत्र प्रकृतवाक्यजन्यशाब्दबोधजनकतावच्छेदकाकांक्षादिमच्चैत्रपदोपस्थाप्यत्वस्य चैत्रे सत्त्वात् तत्र संख्यान्वयः सुघटः। उदासीनप्रथमान्ततण्डुलपदे 'तण्डुलं पचती'तिस्ववाक्यघटकाख्यातार्थसंख्यान्वयापत्तिवारणाय शाब्दबोधे प्रकृतवाक्यजन्यत्वनिवेशः। 'चैत्र एव पचती'त्यत्र चैत्रे संख्यान्वयोपपत्तये प्रतियोगित्वसम्बन्धानवच्छिन्नत्वनिवेशः॥ चैत्रश्चैत्रं पश्यती'त्यत्र तादृशावच्छेदकताशून्यप्रकृतवाक्यघटकं प्रथमान्तचैत्रपदमेवेति तत्र संख्यान्वयोपपत्तिरिति, 'चैत्रेण स्थीयते'इत्यत्र भावाख्यातस्थले स्थाधातोः तादृशपदत्वात् तदुपस्थाप्यस्थितौ संख्यान्वयापत्तिवारणाय द्वितीयदलम् ॥ इति सूक्ष्ममीक्षणीयम् ॥ प्राचीनमतेन–द्वियीयदलप्रयोजनमाह–**यत्र कर्मादाविति**। 'चैत्रस्तण्डुलं पचती'त्यत्र, **कर्मादौ**=प्रथमान्तपदाऽसमभिव्याहृतकर्माख्यातपदवाच्यकर्मत्वे, **न विशेषणत्वे तात्पर्यम्**=प्रतियोगित्वसम्बन्धाऽनवच्छिन्नविशेषणत्वतात्पर्येणाऽनुच्चरितपदप्रतिपाद्यत्वम्, **तद्वारणाय**=तादृशपदप्रतिपाद्यकर्मत्वे आख्यातार्थसंख्यान्वयापत्तिवारणाय–'प्रथमान्तपदोपस्थाप्यत्वमिति दलमुपात्तम्। तथा च 'तण्डुल'मित्यस्य प्रथमान्तपदोपस्थाप्यत्वाऽभावात् तत्र न संख्यान्वयापत्तिः, 'चैत्रेण पच्यते, तण्डुलं पचती'त्यादिप्रथमान्तपदाऽसमभिव्याहृतकर्मकर्त्राख्यातस्थले चैत्रकर्तृकपाकजन्यं कर्मत्वं' 'तण्डुलकर्मकपाकाऽनुकूला कृति'रित्याकारककर्मत्वकर्तृत्वमुख्यविशेष्यकबोधस्यैवानुभवसिद्धतया तादृशबोधतात्पर्येण प्रथमान्तपदाऽसमभिव्याहृतानां तेषां वाक्यानामुच्चारितत्वाच्च प्रतियोगित्वसम्बन्धानवच्छिन्नविशेषणत्वतात्पर्येणाऽनुच्चरितं तादृशवाक्यघटककर्माख्यातादिपदमेव, तत्प्रतिपाद्यत्वस्य कर्मत्वादौ सत्त्वात तत्र संख्यान्वयापत्तिवारणाय–प्रथमान्तपदोपस्थाप्यत्वं सार्थकमिति भावः॥ अथ वैयाकरणमते 'भावप्रधानमाख्यातमि'तिनियमानुरोधेन सर्वत्रैव धात्वर्थे कर्तुर्विशेषणभावः, अतः कर्तुः विशेषणत्वतात्पर्याऽविषयत्वं नैव संगच्छते, तथा च सर्वत्र कर्तरि संख्यान्वयाऽनुपपत्तिः स्यादित्यतो वैयाकरणमतसाधारणं संख्याभिधानयोग्यत्वं निर्वक्तुं प्रकारान्तरेण **'कर्मत्वाद्यनवरुद्धत्व'**मितिप्रथमदलस्यार्थमाह–**यद्वा धात्वर्थाऽतिरिक्ताऽविशेषणत्वं प्रथमदलार्थ इति**। धात्वर्थातिरिक्तनिरूपितप्रतियोगित्वसम्बन्धाऽनवच्छिन्नविशेषणत्वतात्पर्येणाऽनुच्चरितपदप्रतिपाद्यत्वमिति 'कर्मत्वाद्यनवरुद्ध'इतिदलस्यार्थ इत्यर्थः। तत्फलमाह–**तेनेति**। धात्वर्थातिरिक्ताऽविशेषणत्वार्थकरणेनेत्यर्थः। 'चैत्र इव मैत्रो गच्छती' 'त्यत्र चैत्रादेः सादृश्ये विशेषणत्वेन तात्पर्यविषयत्वात् चैत्रादौ' आख्यातार्थसंख्यान्वयवारणमिति भावः॥ 'प्रथमान्तपदोपस्थाप्य'इतिपदसार्थक्यमाह–**'स्तोकमिति**। क्रियाविशेषणीभूतानां स्तोकादिपदार्थानां धात्वर्थाऽतिरिक्ताऽविशेषणत्वस्य स्वतःसंभवात् तत्राऽपि

एवं व्यापारेऽपि न शक्तिर्गौरवात्। रथो गच्छतीत्यादौ तु व्यापारे आश्रयत्वे वा

आख्यातार्थसंख्यान्वयापत्त्या 'स्तोके पचतः स्तोकानि पचन्ति'–इतिप्रयोगापत्तिः स्यादिति तद्वारणाय प्रथमान्तपदोपस्थाप्यत्वमिति, तथा च 'क्रियाविशेषणानां कर्मत्वं नपुंसकलिंगता चे'त्यनुशासनबलात् **तस्य**=स्तोकादेः–**द्वितीयान्तपदोपस्थाप्यत्वाद् वारणम्**=स्तोकादौ संख्यान्वयापत्तिवारणमिति भावः ॥ आदिना 'मृदु पचती'त्यादौ मृदुत्वादेः परिग्रहः ॥ **इदं तु बोध्यम्**–नैयायिकमते 'लः कर्मणी'त्यादिसूत्रेऽनुवृत्तसप्तम्यन्तकर्तृपदस्य कर्तृत्वं लाक्षणिकमेव, एवं 'कर्मणि द्वितीया, 'कर्तृकरणयोस्तृतीया, इतिसूत्रघटकसप्तम्यन्तकर्मकर्त्रादिपदानामपि कर्मत्वं कर्तृत्वं च लाक्षणिकमेव, ग्रामं गच्छतीत्यादौ द्वितीयादिना कर्मत्वादिबोधनात्, तथा च–'सकर्मकधातुसमभिव्याहृतयगाद्यनुत्तरलकाराः कर्तृत्ववाचकाः, सकर्मकधातुसमभिव्याहृतयगाद्युत्तरलकाराः कर्मत्ववाचकाः, एवम्–अकर्मकधातुसमभिव्याहृतयगाद्यनुत्तरलकाराः कर्तृत्ववाचकाः, अकर्मकधातुसमभिव्याहृतयगाद्युत्तरलकारा निरर्थका'इति सूत्रार्थः पर्यवसितः। एवं च 'चैत्रः पचती'त्यादावाख्यातेन कर्तृत्वबोधनाद् 'अनभिहित'–इत्यधिकारीय'कर्तृकरणयोस्तृतीये'तिसूत्रस्याऽप्रवृत्त्या चैत्रपदोत्तरं न तृतीया। इत्थं च–प्रथमान्तपदसमभिव्याहारज्ञाने सति आख्यातार्थभावनाप्रकारकशाब्दबोधः प्रथमान्तपदसमभिव्याहारज्ञानाऽभावे सति तु भावनामुख्यविशेष्यकशाब्दबोध एवेति।

**मीमांसकाः**–लकारसामान्यस्य न कृतौ शक्तिः, रथो गच्छतीत्यादौ रथे कृत्यभावेन आख्यातस्य व्यापारे लक्षणापत्तेः, किन्तु व्यापारमात्रे शक्तिः, रथो गच्छतीत्यादौ गमनानुकूलव्यापारस्य रथे सत्त्वेन शक्त्यैव बोधोपपत्तिरिति वदन्ति, तन्मतं खण्डयति–**एवं व्यापारेऽपीति**। अपिना कर्ता समुच्चीयते, तथा च लकारसामान्यवाच्यो यथा कर्ता न भवति तथा व्यापारोऽपि न भवतीत्यर्थः ॥ तत्र हेतुमाह–**गौरवादिति**। तज्जन्यत्वे सति तज्जन्यजनकत्वं हि व्यापारत्वमिति,–यथा कृतीनां नानात्वेन शक्यतावच्छेदकत्वे गौरवं तथा जन्यत्वघटितव्यापारत्वस्यापि शक्यतावच्छेदकत्वे कृतित्वापेक्षया गौरवमिति भावः। यद्यपि–व्यापारत्वं क्रियात्वमेव नतु जन्यत्वघटितद्वारत्वात्मकं, तस्याऽत्राऽप्रकृतत्वात् तथापि 'क्रियात्वं हि–संयोगभिन्नत्वे सति संयोगाऽसमवायिकारणत्वं, तच्च भेदघटिततया असमवायिकारणत्वादिघटिततया च महद्गुरु भवतीति ॥ ननु रथनिष्ठगमनानुकूलव्यापारः तक्षकादिकर्तृकविलक्षणसंयोगोऽपि भवति, तथाच व्यापारत्वं न निरुक्तरीत्या संयोगभेदादिघटितं किन्तु 'अयं धात्वर्थो व्यापार'इतिप्रतीतिविषयत्वमेवेति चेत्! प्रतीतिविषयत्वस्य विषयभेदेन भिन्नत्वात् महद्गौरवमपरिहार्यमेव, वैयाकरणभूषणसारे तु–'व्यापारस्तु भावनाभिधा साध्यत्वेनाऽभिधीयमाना क्रिये'ति। तथाच–'पदान्तरसमभिव्याहाराऽप्रयोज्यसाध्यत्वप्रकारकाऽभिधानविषयत्वं व्यापारत्वम्, तादृशसाध्यत्वप्रकारकप्रतीतिविषयत्वमिति यावत्, तत्रापि प्रतीतिभेदप्रयुक्तगौरवमनिवार्यमेवेति बोध्यम् ॥ ननु तर्हि 'रथो गच्छतीत्यादौ कथमन्वयबोधः इत्यत आह–'**रथो गच्छती'तीति**। तत्र तु व्यापारे आख्यातस्य निरूढा लक्षणा, गमनानुकूलकृतेः मुख्यार्थस्य रथे अन्वयाऽनुपपत्त्यात्मकहेतोः सत्त्वात्, तथा च 'गमनानुकूलव्यापारवान् रथ'इत्येव बोधः ॥ ननु रथनिष्ठगमनानुकूलव्यापारः तक्षकादिकर्तृकविलक्षणसंयोग एव, स च गमनशून्यकालेऽप्यस्तीति तदापि रथो गच्छतीति प्रयोगापत्तेः वारणाय अनुकूलतासम्बन्धेन गमनविशिष्टविलक्षणसंयोगवत्त्वमेव तादृशप्रयोगनियामकं वक्तव्यं, एवं च अनुकूलतासम्बन्धेन गमनविशिष्टव्यापारस्यैव निरूपितत्वसम्बन्धेन गमनविशिष्टाश्रयत्वस्यैव नियामकत्वस्वीकारेणापि तदानीं तादृशप्रयोगापत्तिवारणं भवत्येवेत्यतः आश्रयत्वे आख्यातस्य लक्षणा स्वीकार्या नतु व्यापारे, अयुक्तत्वात् गौरवाच्चेति चिन्ताम-

लक्षणा। जानातीत्यादौ आश्रयत्वे, नश्यतीत्यादौ प्रतियोगित्वे निरूढलक्षणा। उपमानाद्यथा शक्तिग्रहस्तथोक्तम्। एवं कोशादपि शक्तिग्रहः। सति बाधके क्वचित्त्य-

---

णिकारमतानुसारेणाह–आश्रयत्वे वा–इति। लक्षणा=निरूढलक्षणा। तथा च 'गमनानुकूलव्यापाराश्रयतावान् रथ' इति 'रथो गच्छती'त्यत्र बोधः। ननु कृतौ शक्तिकल्पनम्, व्यापारादौ च लक्षणाकल्पनमित्येतदपि कल्पनागौरवमेवेति चेत्!, ईदृशगौरवस्य फलमुखत्वेनाऽदोषात्॥ ननु–आख्यातस्य कृतौ शक्तिमत्त्वे 'चैत्रो जानाती'त्यत्र कथं बोधः, यतो हि प्रथमं सर्वो जनः जानाति, तत इच्छति, ततश्च यतते, इति नियमात् ज्ञानकाले यत्नाऽभावेन ज्ञानाऽनुकूलकृतेश्चैत्रादौ बाधादित्याकांक्षायां तत्र लक्षणामाह–जानातीत्यादाविति। 'चैत्रो घटं जानाती'त्यत्राख्यातस्य आश्रयत्वे निरूढलक्षणा स्वीक्रियते, तथा च 'घटविषयकज्ञानाश्रयतावानेकत्ववांश्चैत्र' इति बोधः। मीमांसकास्तु–जानातीत्यत्र ज्ञाततावच्छिन्नं ज्ञानं धात्वर्थः, आख्यातार्थः भावना–उत्पादना, तथाच ज्ञातताश्रयज्ञानोत्पादनावानित्यर्थः इति वदन्ति। आदिना–'चैत्रो घटमिच्छति'–इत्यत्र इच्छाकाले यत्नाऽभावात् आख्यतस्य आश्रयत्वे लक्षणा तथा च 'घटविषयकेच्छाश्रयतावानेकत्ववांश्चैत्र' इति बोधः॥ एवम् 'चैत्रो यतते'–इत्यत्र यत्नानुकूलयत्नस्याऽभावात् आश्रयत्वे आख्यातस्य लक्षणा तथाच 'यत्नाश्रयतावानेकत्ववांश्चैत्र' इतिबोधः॥ ननु 'घटो नश्यती'त्यादौ घटे नाशानुकूलयत्नस्यैव बाधात् कथमन्वयबोध इत्याकांक्षायामाह–'नश्यती'त्यादौ प्रतियोगित्वे निरूढलक्षणेति। तत्र आख्यातस्य प्रतियोगित्वे अनादितात्पर्यवती लक्षणेत्यर्थः। तथाच 'नाशप्रतियोगितावानेकत्ववान्घट' इतिबोधः। आदिना–'ध्वंसते'–इतिपरिग्रहः। तत्र 'ध्वंसप्रतियोगितावानेकत्वाश्रयो घट' इति बोधः॥ इदन्तु बोध्यम्–'चैत्रः तण्डुलं पचती'त्यत्र कर्मत्वं द्वितीयार्थः, तत्र तण्डुलस्याधेयतयाऽन्वयः, कर्मत्वस्य पाके, पाकस्याख्यातार्थकृतौ, कृतेश्चैत्रे, इति तण्डुलकर्मकपाकानुकूलकृतिमांश्चैत्र इतिबोधः॥ 'चैत्रेण तण्डुलः पच्यते' इत्यत्र कृतिस्तृतीयार्थः, तत्र आधेयतया चैत्रस्यान्वयः, कृतेः धात्वर्थपाके, पाकस्य आत्मनेपदार्थफले, फलस्य आश्रयतासम्बन्धेन तण्डुले'–इति चैत्रवृत्तिकृतिजन्यपाकजन्यफलाश्रयस्तण्डुल इति बोध इति॥ एवं कर्तरि कर्मणि च विहितानां तिबादिप्रत्ययानां कर्तृत्वकर्मत्वाद्यर्थकत्वेऽपि 'कर्तरि कृदि'तिसूत्रेण 'कर्तरि भावकर्मणो'रित्यधिकृत्य पठित'पचो व' इति सूत्रेण कर्मणि च विहितानां कृत्प्रत्ययानां कर्त्राद्यर्थकत्वमेव न कर्तृत्वाद्यर्थकत्वम्, तथाच सति 'चैत्रः पक्ता' 'तण्डुलः पक्वः' इत्यादौ पच्धातूत्तरश्रूयमाण'तृच्प्रत्यय'व'प्रत्ययादीनां कर्तृत्वाद्यर्थकत्वेन तादृशकर्तृत्वादेश्चैत्रादिपदार्थेन सहाऽभेदेनाऽन्वयस्य बाधितत्वात् भेदेन अन्वयप्रसक्तया 'नामार्थयोर्भेदेनाऽन्वयबोधस्याऽव्युत्पन्नत्वादि'तिव्युत्पत्तिविरोधापत्तेः, कर्त्राद्यर्थकत्वे तु कर्त्रादश्चैत्रादिना अभेदेनाऽन्वयसंभवान्न व्युत्पत्तिविरोध इति बोध्यम्॥ अथ रत्नकोशकारः–आख्यातस्य न यत्ने न वा व्यापारे शक्तिः, किन्तु भावनाऽपरपर्यायायाम् उत्पादनायाम्, तेन सर्वत्र चेतनाचेतनकर्तृके प्रयोगे आख्यातार्थे धात्वर्थोत्पादकत्वम्, 'ओदनं पचति रथो गच्छति' इति मुख्या एव प्रयोगाः इति न तत्र लक्षणाकल्पनम्। पचति–इत्यत्र पाकमुत्पादयति, गच्छतीत्यत्र गमनमुत्पादयति, यतते–इत्यत्र यत्नमुत्पादयति,–इत्याद्यर्थात्। उत्पादयतीत्यत्र तु आख्यातस्य आश्रयार्थतास्वीकारात् इति–मन्यते। तदपि न रमणीयम्। उत्पादकत्वस्य उत्पत्तिजनकत्वरूपस्य तत्र जनकत्वात्मककारणतायाः अनन्यथासिद्धनियतपूर्ववर्तित्वादिघटितत्वेन गौरवात्॥ तस्य अखण्डोपाधित्वे तु मानाऽभावादिति बोध्यम्॥ उपमानाद्यथेति। उपमानं प्रमाणं यत् 'गोनिरूपितगवयनिष्ठसादृश्यप्रत्यक्षम्, तस्मात् 'गवयो गवयपदवाच्य' इति शक्तिग्रहो भवति'–इति प्रागेवोप-

ज्यते। यथा नीलादिपदानां नीलरूपादौ नीलादिविशिष्टे च शक्तिः कोशेन व्युत्पादिता, तथापि लाघवान्नीलादावेव शक्तिः। नीलादिविशिष्टे तु लक्षणेति। एवमाप्तवाक्यादपि। यथा 'कोकिलः पिकपदवाच्य' इत्यादिशब्दात्पिकादिपदानां कोकिले शक्तिग्रहः। एवं व्यवहारादपि। यथा प्रयोजकवृद्धेन घटमानयेत्युक्तम्, तच्छ्रुत्वा

---

मानखण्डेऽभिहितमित्यर्थः॥ इदं तु बोध्यम्–वैयाकरणाः धात्वर्थमुख्यविशेष्यकशाब्दबोधं मन्यन्ते यथा 'पश्य मृगो धावती'त्यादौ मृगकर्तृकधावनकर्मकं प्रेरणाविषयीभूतं त्वत्कर्तृकं दर्शनमिति, एवं 'पचति भवती'त्यादौ पचिक्रियाकर्तृका सत्तेत्यादिबोधः॥ मीमांसकास्तु–आख्यातार्थमुख्यविशेष्यकशाब्दबोधं मन्यन्ते–यथा 'देवदत्त ओदनं पचती'त्यत्र–पाककरणिका ओदनभाव्यिका देवदत्तकृति'रिति-बोधः॥ नैयायिकास्तु प्रथमान्तमुख्यविशेष्यकशाब्दबोधं मन्यन्ते– चैत्रः तण्डुलं पचती त्यत्र तण्डुलनिष्ठपाकानुकूलकृतिमाँश्चैत्र'इति॥ शाब्दबोधः द्विविधः–क्वचिद्भेदान्वयेन 'यथा चैत्रस्य धनम्'–इत्यादौ चैत्रनिष्ठस्वामितानिरूपकं धनमिति। अभेदेन तु समानविभक्तिक'नीलो घट'इत्यादिपदस्थले नीलाऽभिन्नघट इति। अधिकं तु व्युत्पत्तिवादेऽध्येतव्यम्॥ एवं कोशादपीति। स्वसमानार्थबोधकशब्दसमूहात्मकात् अमरसिंहादिकोशात् 'पिताम्बरोऽच्युतः शार्ङ्गी'त्यत्र पिताम्बरादिशब्दस्य श्रीकृष्णपरमात्मनि शक्तिग्रहः। सोऽपि क्वचित् गौरवाद्यात्मके बाधके सति त्यज्यते=कोशीयशक्तिग्रहस्य परित्यागो युज्यते इत्यर्थः॥ तादृशस्थलमुदाहरति–यथेति। शुक्लनीलपीतादिपदानां शुक्लनीलपीतादिरूपे तथा शुक्लनीलपीतादिविशिष्टघटादौ च शक्तिः कोशेन='गुणे शुक्लादयः पुंसि गुणि लिङ्गास्तु तद्वती'ति अमरसिंहकृतनामलिंगानुशासनेन,व्युत्पादिता। गुणवाचकशुक्लादिशब्दानां पुल्लिंगत्वस्य गुणि( घटादि )वाचकशुक्लादिशब्दानां गुणिलिंगत्वस्य च प्रतिपादनद्वारा गुणवाचकत्वगुणिवाचकत्वयोरपि प्रतिपादनादिति भावः॥ ननु गुणवाचकशुक्लादिशब्दानां पुल्लिङ्गत्वे 'शुक्लं रूप'मिति प्रयोगाऽनुपपत्तिः 'शुक्लो रूप'मितिप्रयोगापत्तिरिति चेन्न। 'गुणे शुक्लादय'इत्यत्र गुणशब्दस्य विशेष्यार्थकतया गुणिशब्दस्य विशेषणार्थकतया च विशेष्यवाचकशुक्लादिशब्दाः पुंसि विशेषणवाचकशुक्लादिशब्दाः गुणिलिङ्गा इत्यर्थस्य लाभात्। तथा च 'शुक्लं रूप'मि यत्र शुक्लशब्दविशेषणवाचकतया नपुंसकलिंगत्वं निराबाधमिति॥ तथापीति। उक्तकोशेन गुणे गुणवति च शक्तिप्रतिपादनेऽपि लाघवादिति। नीलादिमतां शक्यत्वे शक्यतावच्छेदकं नीलादिमत्त्वं= नीलादय एवेति ते अनन्ता इति महद्गौरवं, तदपेक्षया नीलादीनामेव शक्यत्वे नीलत्वादिकं स्वरूपतः शक्यतावच्छेदकं स्यादिति तत् शरीरकृतमुपस्थितिकृतं च परं लाघवं भवतीति नीलादिशब्दानां नीलाद्यर्थे एव शक्तिः, नीलादिविशिष्टघटादौ तु नीलादिपदानामजहत्स्वार्थलक्षणैवेति भावः॥ ननु–'नीलो घट' इत्यादौ 'गुणवचनान्मतुपो लुगिष्टः' इति गुणवाचकनीलादिशब्दान्मतुपः तदस्याऽस्तीत्यर्थे विहितस्य लोपे व्याकरणप्रणेतृभिरिष्ट इत्यर्थकेन व्याकरणेन नीलादिपदोत्तरं लुप्तमतुपैव स्मारितवैशिष्ट्यं विषयीकृत्यैव विशिष्टार्थबोधसंभवे नीलादिपदानां नीलादिविशिष्टे लक्षणाकल्पनमयुक्तमिति चेन्न। अस्मृतमतुप्प्रत्ययस्य तादृशवाक्येन शाब्दबोधाऽनापत्त्या लक्षणाया आवश्यकत्वात्। सर्वत्रैव शाब्दबोधात्पूर्वं लुप्तमतुबर्थकप्रत्ययकल्पनामपेक्ष्य लक्षणाकल्पनस्य ज्यायस्त्वात्॥ एवमाप्तवाक्यादपीति। प्रयोगहेतुभूतयथार्थज्ञानवान् आप्तः, तदुच्चरितवाक्यश्रवणादपि शक्तिग्रहो भवति,यथा'कोकिलः पिकपदवाच्य'इत्याप्तवाक्येन'पिक'पदस्यार्थमजानानस्य बालस्य 'पिक'पदस्य कोकिलात्मकेऽर्थे शक्तिग्रहो भवतीति॥ एवं व्यवहारादपीति। व्यवहारः 'घटमानये'त्यादिशब्दप्रयोगात्मकत्वेनाऽपि गोपदार्थमजानानस्य बालस्य शक्तिग्रहो

**प्रयोज्यवृद्धेन घट आनीतः, तदवधार्य पार्श्वस्थो बालो घटानयनरूपं कार्यं घटमानयेति शब्दप्रयोज्यमित्यवधारयति। ततश्च घटं नय गां बधानेत्यादिवाक्यादावापो-**

भवति, यथा 'प्रयोजकवृद्धेन=उपदेष्टृवृद्धेन गुर्वादिना 'घटम् आनय'–इति प्रयोज्यवृद्धाय शिष्यादये उक्तम्, तद्वाक्यं श्रुत्वा प्रयोज्यवृद्धेन शिष्यादिना घटः आनीतः=समीपदेशं प्रापितः। तत्र **पार्श्वस्थः**=समीपस्थः, **बालः**=घटादिपदानां घटाद्यर्थेऽगृहीतशक्तिको जनः, **तदवधार्य**=प्रयोजकवृद्धोच्चरितवाक्यं श्रुत्वा प्रयोज्यवृद्धस्य गमनं दृष्ट्वा घटानयनं च दृष्ट्वेत्यर्थः। तादृशं **घटानयनरूपकार्यम्**=तादृशप्रयोज्यवृद्धसमवेतप्रयत्नसाध्यघटानयनक्रिया, **घटमानयेतिशब्दप्रयोज्यम्**=प्रयोजकवृद्धोच्चरित'घटमानये'तिपदज्ञानजन्यशाब्दबोधजन्येति, अवधारयति=अनुमिनोति। तत्र क्रमः–घटानयनक्रियया प्रवृत्त्यनुमानम्–"घटानयनक्रिया,–प्रयत्नपूर्विका,–विलक्षणक्रियात्वात्, स्वीयक्रियावदिति। प्रवृत्त्या च शाब्दबोधानुमानम्–यथा"घटानयनविषयकप्रवृत्तिः,–घटानयनविषयकज्ञानजन्या,–तद्गोचरप्रवृत्तित्वात्, या यद्गोचरा प्रवृत्तिः सा तद्गोचरज्ञानजन्या, स्वीयस्तन्यपानप्रवृत्तिवदि'त्यनुमानेन घटानयनविषयकज्ञान(शाब्दबोध)मनुमाय, ततः "घटानयनगोचरज्ञानम्,–'घटमानये'तिवाक्यजन्यम्,–तदन्वयव्यतिरेकानुविधायित्वात्, यद् यदन्वयव्यतिरेकानुविधायि तत् तज्जन्यं यथा तन्त्वन्वयव्यतिरेकानुविधायी पटः,–इत्येवम् आनयनक्रियान्विते घटपदार्थे शक्तिं विनिश्चिनोति। इत्येवं क्रियान्वितघटादौ शक्तिग्रहानन्तरम् 'घटं नय, गाम् बधान''गां विसृजे'त्यादि–प्रयोजकवृद्धवाक्यत्, आवापः–कस्यचित्पदस्य संगृहः, उद्वापः–कस्यचित्पदस्य त्यागः ताभ्यां, घटगवादिपदानां **कार्यान्वितघटादौ**=क्रियान्वितघटगवाद्यर्थे शक्तिं गृह्णाति–अनुमिनोति॥ सामान्यतः–अनुमानाकारस्तु–'घटानयनकार्यम्,–घटमानयेति शब्दप्रयोज्यम्,–तादृशशब्दश्रवणशून्यकालीनप्रवृत्त्यविषयत्वे सति प्रवृत्तिविषयत्वादि'ति।–एवं तत्तद्धेतुना"घटनयनं 'घटं–नये'तिशब्दप्रयोज्यम्, "गोबन्धनं 'गां बधाने'तिशब्दप्रयोज्यं" "गोविसर्जनं 'गां विसृजे'तिशब्दप्रयोज्यमि"त्येवमनुमिनोतीति भावः॥ **प्राभाकरमीमांसका** हि–घटादिपदानां क्रियान्वितघटादौ शक्तिं मन्यन्ते,–इतितन्मतं पूर्वपक्षयितुं 'कार्यान्वितघटादौ शक्तिं गृह्णाती'त्युक्तम्। मीमांसकमते हि शक्तिर्द्विविधा–स्मारिका आनुभाविकी च, तत्र घटादिपदानां स्मारिका शक्तिः लाघवात् घटत्वादिजातावेव, यत्र च शक्यतावच्छेदकं नाना यथा पशुपदशक्यतावच्छेदकं लोमलांगुलादि, यत्र वा शक्यतावच्छेदकं गुरु यथा लिंगाख्यातपदशक्यतावच्छेदकं कृतिसाध्यत्वम्, तत्र व्यक्तावेव शक्तिरिति, सा च स्मृतिद्वारा ज्ञाता सती शाब्दबोधोपयोगिनी भवतीति। अथ आनुभाविकी शक्तिः क्रियान्वितघटादौ, सा च क्रियान्वितघटादिशाब्दबोधत्वावच्छिन्नकार्यतानिरूपित(इच्छाज्ञाननिष्ठ)कारणतानिरूपितविषयतासम्बन्धावच्छिन्नावच्छेदकरूपा इच्छैव, न त्वीश्वरेच्छारूपा–ईश्वरानङ्गीकारात, सेयं स्वरूपसती उपयुज्यते न तु ज्ञाता सतीति, अत एव घटादिपदात् क्रियान्वितघटाद्यर्थगोचरशाब्दबोधो निराबाधः, तथा च 'क्रियान्वितघटादिगोचरशाब्दबोधत्वावच्छिन्नं प्रति घटपदत्वादिना प्रयोजकत्वे प्राप्ते सति सामान्यतः–'क्रियान्वितार्थविषयकशाब्दबोधत्वावच्छिन्नं प्रति पदत्वेन प्रयोजकत्वं प्राप्तम्, तत्र घटादिपदानां साक्षात् क्रियान्वितार्थगोचरशाब्दबोधप्रयोजकत्वम्, धातुपदानां तु क्रियाया आनयनादेः क्रियान्वितघटाद्यन्वितत्वेन परम्परया कार्यान्वितार्थगोचरशाब्दबोधप्रयोजकत्वमिति। तत्र पदात् क्रियान्वितार्थगोचरशाब्दबोधे जननीये क्रियान्वितार्थविषयकशाब्दबोधत्वव्यापकीभूतकार्यताविषयकशाब्दत्वावच्छिन्नजनककार्यतावाचकलिङादिपदात्मकसामग्री अपेक्षिता। तथा च तादृशसामग्र्याः कोशादावभावात् कथं कोशादितः

द्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति। इत्थं च भूतले नीलो घट इत्यादिवाक्यान्न शाब्दबोधः। घटादिपदानां कार्यान्वितघटादिबोधे सामर्थ्यावधारणात् कार्यताबोधं प्रति च लिङादीनां सामर्थ्यात्तदभावान्न शाब्दबोध इति केचित्।

तन्न, प्रथमतः कार्यान्वितघटादौ शक्त्यवधारणेऽपि लाघवेन पश्चात्तस्य परित्यागौचित्यात्। अत एव–चैत्र! पुत्रस्ते जातः, कन्या ते गर्भिणी जाता–इत्यादौ मुखप्र-

---

शक्तिग्रहः स्यात्, न स्यादेवेति मन्यन्ते। तन्मतं दूषयितुं तन्मतसिद्धमर्थमुपन्यस्यति–इत्थं चेत्यादिना केचिदित्यन्तेन। इत्थं च=पदानां क्रियान्वितार्थगोचरशाब्दबोधसामान्यं प्रति प्रयोजकत्वे सिद्धे सति, क्रियान्वितशाब्दत्वव्यापकं यत् कार्यताविषयकशाब्दत्वं तदवच्छिन्नशाब्दप्रयोजककार्यतावाचक'लिङा'दिपदशून्यात् 'भूतले नीलो घट'इत्यादिवाक्यघटक'घटा'दिशब्दात् 'भूतलनिरूपिताधेयतावन्नीलाऽभिन्नघट'इति शाब्दबोधो नोत्पत्तुमर्हतीत्यर्थः। ननु कथं न शाब्दबोध इत्याकांक्षायां तत्र कारणाभावमुपपादयति–**घटादिपदानामिति**। पूर्वोक्तयुक्त्या घटादिपदानां क्रियान्वितघटाद्यर्थविषयकशाब्दबोधे सामर्थ्यावधारणात्=प्रयोजकत्वानुमितत्वात्, तत्र च क्रियान्वितशाब्दत्वव्यापकं यत् कार्यताविषयकशाब्दत्वं तदवच्छिन्नबोधं प्रति **लिङादीनां**=लिङ्लोट्तव्यादीनां सामर्थ्यात्=प्रयोजकत्वात्, तदभावाच='भूतले नीलो घट' इत्यादौ तादृशलिङाद्यभावाच्च कार्यताविषयकशाब्दबोधत्वात्मकव्याप्यधर्मावच्छिन्नाऽनुपपत्तौ सत्यां क्रियान्वितघटादिविषयकशाब्दत्वात्मकव्याप्यधर्मावच्छिन्नः शाब्दबोधो नैव भवतीति, कार्यतावाचिपदनिराकांक्षे प्रसिद्धार्थके सिद्धपदे शक्तिग्रहो नैव भवतीति, अत एव 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्'(मीमांसा-१।२।१)इत्यादिसूत्रैः सिद्धार्थप्रतिपादकतया अर्थवादानाम् अप्रामाण्यमाशंक्य विधिवाक्यैः सहैकवाक्यतया प्रामाण्यमवधारितम्, इति **प्राभाकरा** वदन्तीति॥

तन्मतं खण्डयति नैयायिकः–**तन्नेति**। घटादिपदानां प्रथमतः=प्रथमव्यवहारात् क्रियान्वितघटादौ शक्त्यवधारणेऽपि=शक्तिग्रहानुमितावपि। **लाघवेन**=क्रियान्वितघटत्वाद्यपेक्षया घटत्वादेरेव शक्यतावच्छेदकत्वे शरीरकृतलाघवेन, अनन्यलभ्यस्यैव शब्दार्थतया कार्यत्वं लिङादिलभ्यं तदाश्रयस्तु धातुलभ्यः अन्वयश्च संसर्गमर्यादया भासते इतिज्ञानसहकृतमनसा च, **पश्चात्**=कार्यान्वितघटादौ शक्तिग्रहानुमित्युत्तरम्, **तस्य**=क्रियान्वितघटत्वे घटादिपदशक्यतावच्छेदकत्वस्य, परित्यागौचित्यात् तादृशलाघवज्ञानादिसहकृतमनसा 'घटादिपदं घटादिमात्रशक्तमि'ति–अप्रामाण्यज्ञानाऽनास्कन्दितमानसप्रत्यक्षबलात् 'घटादिपदं क्रियान्वितघटादिशक्तमि'ति पूर्वानुमितावप्रामाण्यग्रहसंभवात् न कार्यान्वितघटत्वं शक्यतावच्छेदकम्, किन्तु घटत्वमेव। तथा च सिद्धार्थपदानामपि जात्याकृतिविशिष्टस्वार्थे शक्तिग्रहः आवश्यक इति भावः॥ पदानां क्रियाऽनन्विते स्वार्थे शक्तिग्रहे लौकिकमतिप्रसिद्धव्यवहारमपि उदाहरति–**अत एवेति**। व्यवहारेण घटादिपदानां केवलघटत्वावच्छिन्ने शक्तिस्वीकारादेवेत्यर्थः॥ कश्चिन्मध्यस्थः–अनुमायेत्याद्यन्वयः। 'चैत्र! पुत्रस्ते जातः' 'कन्या ते गर्भिणी जाता'–इत्याद्याप्तवाक्ये श्रुते सति, चैत्रस्य मुखप्रसादमुखमालिन्याभ्यां=मुखविकासमुखधूसरत्वाभ्याम्, सुखदुःखे=पुत्रस्य निरयत्रायकत्वात् तज्जन्यं सुखं, कन्यागर्भे च तदीयपातादिकलंकजन्यदुःखम्, च अनुमाय=चैत्रः, सुखवान्,–प्रसन्नमुखयुक्तत्वात्, चैत्रः,–दुःखवान्–मलिनमुखयुक्तत्वात् (चैत्रात्मनि हेतुः विलक्षणसंयोगेन, मुखावच्छिन्नशरीरावच्छेद्यत्वसम्बन्धेन वा बोध्यः) इत्यनुमानं कृत्वा, ततः तत्कारणत्वेन=सुखदुःखकारणत्वेन, **परिशेषाद्**=परिशेषानुमानेन, यथा 'चैत्रसमवेतसुखदुःखे,–असाधारणकारणजन्ये, जन्यगुणत्वादि'त्यनुमानेन

**सादसुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्कारणत्वेन परिशेषाच्छाब्दबोधं निर्णीय तद्धेतुतया तं शब्दमवधारयति। तथाच व्यभिचारात्कार्यान्विते न शक्तिः। न च तत्र तं पश्येत्यादि शब्दान्तरमध्याहार्यं, मानाभावात्। चैत्र! पुत्रस्ते जातो मृत-**

---

असाधारणकारणजन्यत्वे सिद्धे, 'चैत्रसमवेतसुखं,–न चन्दनवनितादिसम्बन्धाऽसाधारणकारणकम्, तत्सम्बन्धशून्यकालीनोत्पत्तिमत्त्वात्, 'चैत्रसमवेतदुःखं,–न कण्टकादिसम्बन्धाऽसाधारणकारणकम्,–तत्सम्बन्धशून्यकालीनोत्पत्तिमत्त्वात्, इत्यनुमानाभ्यां तादृशशाब्दबोधेतराऽसाधारणकारणकत्वा-भावसिद्धौ सत्यां ततः परिशेषेण 'चैत्रीयं तदानींतनं सुखं दुःखं वा,–'चैत्र! पुत्रस्ते जातः, कन्या ते गर्भिणी जाता'इतिवाक्यज्ञानाधीनशाब्दबोधाऽसाधारणकारणकम्, तदितराऽसाधारणकारणकत्वाऽ-भावे सति तदसाधारणकारणकत्वात्'–इत्यनुमानेन तादृशसुखदुःखयोः हेतुं **शाब्दबोधं** निर्णीय अनुमाय, **तद्धेतुतया**=तादृशशाब्दबोधहेतुतया, **तं शब्दं**='चैत्र! पुत्रस्ते जातः, कन्या ते गर्भिणी जाता'इति वाक्यम्, **अवधारयति**=उक्तरीत्या अनुमिनोतीत्यर्थः। **तथा च**=तादृशवाक्यस्य शाब्दबोधप्रयोजकत्वसिद्धौ च सत्याम्। पूर्वोक्तरीत्या प्राभाकरमतसिद्धकार्यान्वितशाब्दत्वव्या-पकीभूतकार्यताविषयकशाब्दत्वावच्छिन्नजनककार्यतावाचकलिङादिपदाभावेऽपि शाब्दबोधजननाद् **व्यतिरेकव्यभिचारात्**,–न घटादिपदानां क्रियान्वितस्वार्थे शक्तिः, किन्तु केवलस्वार्थे शक्तिः, तथा च कार्यताविषयकशाब्दत्वस्य कार्यान्वितविषयकशाब्दत्वव्यापकत्वेऽपि केवलशाब्दत्वव्यापकत्वे प्रामाणाऽभावेन केवलशाब्दत्वावच्छिन्नं प्रति तादृशलिङादीनामकारणत्वादेव नोक्तव्यभिचार इति भावः॥ **ननु**–तादृशस्थलेऽपि कार्यतावाचकं लोट्–आदि अध्याहार्यम्, अतो नोक्तव्यभिचार इत्यत आह–**न चेति**। न च अध्याहार्यमित्यन्वयः। 'चैत्र! पुत्रस्ते जात'–इत्यादि वाक्ये 'तं पश्य' 'तां पश्य'(तं=पुत्रम्, तां=कन्याम्)इत्यादि **शब्दान्तरम्**–उक्तवाक्यप्रयोक्त्रनुचरित वाक्यम्, न च **अध्याहार्यम्**=न उक्तवाक्यघटकतयाऽनुसन्धेयमित्यर्थः। तत्र हेतुमाह–**मानाऽ-भावादिति**। चैत्र! पुत्रस्ते जात'इत्यादिवाक्ये अश्रुत—तं पश्ये'त्यादिवाक्यानुसन्धानानन्तरमेव शाब्दबोधो न त्वन्यथेति नियमे प्रमाणाऽनुपलम्भादित्यर्थः॥ नियमाऽभ्युपगमपक्षेऽपि व्यभिचार-माह–**'चैत्र! पुत्रस्ते जातो मृतश्चे'त्यादौ तदभावाच** 'तं पश्ये'त्याद्यध्याहाराऽसंभवाच्चेत्यर्थः। प्राणसंयोगादिविशिष्टपिण्डस्य स्वीयक्षेत्रीययोनिजस्य स्वसजातीयस्यैव पुत्रत्वेन, तस्य मरणे सति दर्शनाऽसंभवात् कार्यताबोधकलोडन्तदृशधातुपदाध्याहारासंभवात्। कारणाऽभावेऽपि तत्र पुत्रा-दिशाब्दबोधोत्पत्तेर्व्यतिरेकव्यभिचारात् न कार्यान्विते पदानां शक्तिरिति भावः॥ किञ्च–सर्वथा कार्यान्विते एव शक्तिमङ्गीकुर्वतां प्राभाकराणां "ब्राह्मणो न हन्तव्य"इत्यादिवाक्येभ्यो निवृत्त्युपदे-शाऽनुपपत्तिप्रसंगोऽनिवार्यः स्यात्, तत्र हननक्रियानिवृत्तेरेवोपदेशात् तत्र हननस्य 'अभावो-नञर्थः', तव्यादिप्रत्ययार्थश्च इष्टसाधनत्वम्, इष्टमत्र नरकदुःखाभावः, तत्र हनने दुःखसाधनत्वधिया पुरुषो निवर्तते, नहि तत्र नियोगः कश्चिदस्ति, नहि तत्र हननस्य अभावात्मिका क्रिया निवृत्तिरू-पाऽस्ति, अभावत्वेन क्रियात्वाऽभावात्। तत्र तादृशनिवृत्त्युपदेशाऽनुपपत्तिवारणार्थं नञादिपदानां क्रियानन्विते स्वार्थे शक्तिग्रहोऽवश्यं मन्तव्यः, अन्यथा व्यतिरेकव्यभिचारो दुरुद्धर एव स्यादिति। **अथ भट्टाः**–शाब्दबोधे पदानुपस्थितार्थभानोपगमे 'घटोऽस्ती'त्यादौ पटविषयकशाब्दबोधापत्त्या पदादुपस्थितार्थ एव शाब्दबोधे भासते इति नियमः स्वीकार्यः, तथा च पदार्थद्वयसंसर्गस्य पदानु-पस्थाप्यत्वे तादृशनियमभङ्गः स्यात्, अतः इतरान्विते पदानां शक्तिः, तत्र च इतरत्=पदार्थान्तरं, तदन्विते=तत्प्रतियोगिकसंसर्गविशिष्टे,–घटादौ घटादिपदानां शक्तिरित्यर्थः॥ तत्र इतरस्य कार्य-

**श्वेत्यादौ तदभावाच्च । इत्थञ्च लाघवादन्वितघटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयति । एवं वाक्यशेषादपि शक्तिग्रहः । यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशेषे आर्याणां प्रयोगः कङ्गौ च म्लेच्छानाम् । तत्र हि "यदान्या**

तादेः पदान्तरादेव लाभात् न तदन्तर्भावेण घटादिपदानां शक्तिरुपेयते, किन्तु—इतरप्रतियोगिकत्वोपलक्षित—तत्तत्संसर्गविशिष्टघटादावेवेति स्वीकुर्वन्ति, तदेतन्मतनिराकरणव्याजेन नैयायिकः स्वमतमुपसंहरति—**इत्थं चेति** । समभिव्याहृतपदार्थान्वितघटत्वादेः घटादिपदशक्यतावच्छेदकत्वे गौरवादिदोषादेव, तद्वद् अन्वितघटत्वादेः घटादिपदशक्यतावच्छेदकत्वे गौरवादिदोषात्तदपेक्षया घटत्वादेरेव शक्यतावच्छेदकत्वे लाघवाद् अन्वितघटेऽपि घटपदस्य शक्तिं त्यक्त्वा घटमात्रेऽर्थे **शक्तिमवधारयति**=लाघवज्ञानसहकृतात्'घटपदम्,—घटत्वमात्रावच्छिन्नशक्तम्,—अनुपपत्तिप्रतिसन्धानादिकं विना केवलघटबोधतात्पर्येण वृद्धोच्चरितत्वादि'त्यनुमानात् अप्रामाण्यज्ञानाऽनास्कन्दित'घटपदं—घटत्वमात्रावच्छिन्नशक्तमि'त्यनुमितिमान् तादृशमानसप्रत्यक्षवान्वा भवतीत्यर्थः । तथा च 'घटादिपदम् अन्वितघटादिशक्त'मित्यनुमित्युत्तरम् 'अन्वितघटत्वं गुरु'इतिगौरवज्ञाने सति तादृशगुरुधर्मावच्छिन्नाऽन्वितघटादिशक्तत्वप्रकारकघटादिपदविशेष्यकानुमितावप्रामाण्यग्रहसंभवेन अप्रामाणिकतया अन्वितघटत्वादिगुरुधर्मावच्छिन्ने शक्तिर्न स्वीकार्येति । संसर्गस्याकांक्षालभ्यत्वादिति भावः ॥ किंच तत्तच्छक्तपदज्ञानजन्या या पदार्थोपस्थितिस्तज्जन्यतत्तदर्थविषयकशाब्दबोधरूप एकः कार्यकारणभावः, तत्तल्लाक्षणिकपदज्ञानजन्या या पदार्थोपस्थितिस्तज्जन्यतत्तदर्थविषयकशाब्दबोधरूपोऽपरः, तादृशोभयविधशाब्दबोधं प्रति च वृत्तिज्ञानाऽधीनतदुपस्थितित्वेनाऽनुगतैककार्यकारणभावस्तु शक्तिलक्षणोभयसाधारणस्य लघुभूतस्याऽनुगतस्य वृत्तित्वस्य दुर्वचत्वान्न संभवति, किन्तु परस्परजन्ये व्यभिचारवारणाय तत्तच्छक्तपदज्ञानजन्यतत्तदुपस्थित्यव्यवहितोत्तरजायमानतत्तद्विषयकशाब्दबोधत्वावच्छिन्नं प्रति तत्तच्छक्तपदज्ञानजन्यतत्तदुपस्थितित्वावच्छिन्नं कारणम् , एवं तत्तल्लाक्षणिकपदज्ञानजन्यतत्तदुपस्थित्यव्यवहितोत्तरजायमानतत्तद्विषयकशाब्दबोधत्वावच्छिन्नं प्रति तत्तल्लाक्षणिकपदज्ञानजन्यतत्तदुपस्थितित्वावच्छिन्नं कारणम् । एवं च वृत्तिज्ञानाऽधीनोपस्थितेः शाब्दबुद्धिं प्रति कारणत्वमेवाऽलीकं, यं कार्यकारणभावमवलम्ब्य मीमांसकमते "अन्वयांशे शक्तिं विना अन्वयस्य शाब्दबोधे भानानुपपत्तिरूपापत्तिभिया अन्वयांशे शक्तिकल्पनं युक्तं भवेद, अतोऽन्वयांऽशे शक्तिकल्पनं न न्याय्यमिति बोध्यम् । एतेन 'अन्विते शक्ति'रिति वेदान्तिनोऽपि प्रत्युक्ता वेदितव्याः॥ **एवं वाक्यशेषादपीति** । अवशिष्टवाक्यजन्यशाब्दबोधादपि प्रयोजकात् प्रकृतवाक्यस्थपदानां स्वार्थे शक्तिग्रहो भवतीत्यर्थः ॥ शक्तिग्रहप्रकारमाह—**यथेति** । 'यवमय'इति विकारार्थे मयट्, 'चरुः=तदाख्यपात्रस्थं देवदेयं हविः, तथा च 'यवविकारीभूतचरुभवनमिष्टसाधनमि'तिशाब्दबोधः, तत्र भूधातूत्तरलट्प्रत्ययेनेष्टसाधनत्वबोधनात् । तत्र श्रुतौ यवपदस्य 'यत्रान्ये'त्यादिवाक्यशेषात् दीर्घशूके=यवे शक्तिर्निर्णीयते—इत्यन्वयः ॥ मध्यस्थस्य यवपदस्य अर्थद्वये शक्तिमत्तासन्देहजनकौ व्यवहारावाह—**दीर्घशूकविशेषे आर्याणामिति** । आर्याणां याजकद्विजानां यवपदस्य दीर्घशूकविशेषे=यवे, प्रयोगः—शब्दव्यवहारः, शक्त्या बोधतात्पर्येण उच्चारणम् भवति, अथ च म्लेच्छानां=अपशब्दभाषिणां यावनादीनां तु कङ्गौ=प्रियङ्गुतण्डुले प्रयोगो भवतीति,ताभ्यां व्यवहाराभ्यां मध्यस्थस्य यवपदस्य कुत्रार्थे शक्तिरिति सन्देहो जायते इत्यर्थः ॥ ततः येन वाक्यशेषेण अन्यतरेऽर्थे शक्तिनिर्णयो भवति तद्वाक्यं शेषं दर्शयितुमाह—**तत्र हीति**। दीर्घशूकविशेष—प्रियङ्गुतण्डुलयोरर्थयोर्मध्ये इत्यर्थः ॥ श्रुतिरूपं वाक्यशेषमाह—**'यदान्येत्यादि** । यदा वसन्ते, अन्याः=दीर्घशूकविशेषभिन्नाः ओषधयः=सस्यादयः, म्लायन्ते=

ओषध्यो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति" ["वसन्ते सर्वसस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः"]। इति वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते, कङ्गौ तु शक्तिभ्रमात्प्रयोगो नानाशक्तिकल्पने गौरवात्। हर्यादिपदे तु विनिगमकाभावान्नानाशक्तिकल्पनम्।

एवं विवरणादपि शक्तिग्रहः। विवरणं तु तत्समानार्थकपदान्तरेण तदर्थकथनम्,

---

म्लानवत्यो=वृद्धिशून्या विपर्णा शुष्काश्च भवन्ति, अथ=तदा, एते=दीर्घशूकविशेषाः, मोदमानाः=वृद्धिमन्तः सपर्णा हरितार्द्राश्च, तिष्ठन्ति-वर्तन्ते, ते यवा इति शेषः॥ अस्माद्वाक्यशेषात् दीर्घशूकेऽर्थे शक्तिर्निर्णीयते यवपदस्येत्यर्थः। अथ स्मृतिवाक्यशेषमाह-**वसन्ते इति**। वसन्तर्तौ दीर्घशूकभिन्नानां सर्वसस्यानां पत्राणां शातनं=म्लानता पतनं वा, जायते, अथ च यवाः=दीर्घशूकाः, कणिशशालिनः=बीजवन्तः सन्तः, मोदमानाश्च=वृद्धिमन्तः सपर्णाः हरितश्च तिष्ठन्तीति'-वाक्यशेषात् जन्यं यत् शाब्दबोधात्मकं इतरसस्यव्यावर्तकधर्मज्ञानं तस्मात् तटस्थेन यवपदस्य दीर्घशूके=यवे एव शक्तिर्निर्णीयते=अप्रामाण्यज्ञानाऽनास्कन्दितमानसप्रत्यक्षविषयीक्रियते 'दीर्घशूकविशेषो यवपदवाच्य इत्यर्थः॥ अतः **शक्तिभ्रमात् तु**='यवपदजन्यबोधविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यत्वाऽभाववति कङ्गुरूपेऽर्थे तादृशविशेष्यताप्रकारक यवपदात् कङ्गुरूपोऽर्थो बोद्धव्य'इति शक्तिभ्रमादेव, कङ्गौ=प्रियङ्गुतण्डुले, प्रयोगो म्लेच्छानां बोध्य इत्यर्थः॥ निर्णीतं चेदं मीमांसकैः **'सन्दिग्धेषु वाक्यशेषादि'ति(१।४।२९)जैमिनीयसूत्रेण**। प्रथमाध्यायतृतीयपादे च 'आर्यम्लेच्छप्रसिद्ध्यधिकरणे( ८।९ )सूत्रयोः न्यायमालाविस्तरे च **"यवादिशब्दाः किं द्व्यर्थाः, नो वा,ऽऽर्यम्लेच्छसाम्यतः। दीर्घशूकप्रियङ्ग्वाद्याः, द्वयेऽप्यर्था विकल्पिताः॥ 'यत्रान्या' इति शास्त्रस्था प्रसिद्धिस्तु बलीयसी। शास्त्रीयधर्मे तेनाऽत्र, प्रियङ्ग्वादि न गृह्यते"** इत्यादिना यवपदस्य दीर्घशूके शक्तिर्निर्णीतेति॥ ननु यवपदस्य नानाशक्तिमत्तया दीर्घशूके इव प्रियङ्गुतण्डुलेऽपि शक्तिस्वीकारान्न म्लेच्छानां शक्तिभ्रमः इत्यत आह-**नानाशक्तीति**। एकपदस्य विभिन्ना शक्तिरितिकल्पने, गौरवात्=दीर्घशूकत्व-प्रियङ्गुतण्डुलत्वादिनानाशक्यतावच्छेदककल्पनागौरवादित्यर्थः॥ ननु कथं तर्हि हरि-प्रभृतिपदानां वानरत्व-सिंहत्वे-श्वत्वादिनानाधर्मावच्छिन्नेऽर्थे नानाशक्तिकल्पनं स्वीक्रियते इत्यत आह-**हर्यादिपदे'त्विति**। हर्यादिपदे तु विनिगमकस्य=एकत्रैवार्थे शक्तिर्नाऽन्यत्रेति युक्त्यात्मकप्रयोजकस्य, अभावादेव, नानाशक्तिकल्पनम्=शक्यतावच्छेदकभेदेन विभिन्नार्थे शक्तिकल्पनं 'यमाऽनिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु'इत्यमरकोशात् युक्तं भवतीत्यर्थः। यवपदस्य तु प्रियङ्गुतण्डुले शक्तिग्राहकप्रमाणाऽभावेन दीर्घशूके तु वाक्यशेषात्मकप्रमाणसत्त्वेन दीर्घशूके एव शक्तिकल्पनम्, न तु प्रियङ्गुतण्डुले इति भावः॥

**एवं विवरणादपीति**। वक्ष्यमाणरीत्या विव्रीयमाणपदादपि शक्तिग्रहो भवतीत्यर्थः॥ विवरणपदार्थमाह-**विवरणं त्विति**। पदस्य विवरणं त्वित्यर्थः। तत्समानार्थकपदान्तरेण=तत्पद( घट ) शक्यतावच्छेदका( घटत्वा )वच्छिन्नार्थशक्तं यत्पदान्तरं( कलश )इति तेन,तादृशसमानार्थकपदान्तरज्ञानजन्यमिति यावत्, तदर्थकथनम्=तत्पद( घट )शक्यतावच्छेदकावच्छिन्नार्थविषयकज्ञानानुकूलोच्चारणम्। घटपदसमानार्थकघटपदे घटपदविवरणतावारणाय-पदान्तरेणेत्युक्तम्। अङ्गुलिद्वयनिर्देशजन्यद्वित्वविषयकप्रतिपत्तेर्विवरणतावारणाय पदान्तरेणेत्यस्य-तत्पदभिन्नपदज्ञानजन्यत्वमित्यर्थं उक्तं बोध्यः। तत्पदभिन्नत्वं च-तत्पदघटकतावच्छेदकवर्णत्वव्याप्यजात्यवच्छिन्नानुपूर्व्यनाश्रयत्वम्, तेना

यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणाद्घटपदस्य कलशे शक्तिग्रहः। एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्प्यते॥ एवं प्रसिद्धपदस्य सान्निध्यादपि शक्तिग्रहः। यथा इह सहकारतरौ मधुरं पिको रौती-

एकघटपदभिन्नत्वस्य अपरघटपदे सत्त्वेऽपि न तस्य विवरणत्वापत्तिः, तत्र घत्वात्वटत्वात्वव्याप्यघटत्वजात्यवच्छिन्न–घकाराऽव्यवहितोत्तराऽकाराऽव्यवहितोत्तरटकाराऽव्यवहितोत्तराऽत्वात्मकानुपूर्व्यनाश्रयत्वाऽभावात्॥ अत्र घटपदस्य घटे शक्तिम् अजानतः पुरुषस्यैव कृते घटपदविवरणत्वं कलशपदे बोध्यम्, तस्य कलशपदश्रवणाधीनघटपदार्थबोधात्। कलशघटोभयपदयोः घटे शक्तिं जानतस्तु तयोर्नैकमपि विवरणं भवतीति बोध्यम्॥ विवरणस्थलमुदाहरति–**यथेति**–'घटोऽस्ति'इतिवाक्यघटकस्य घटपदस्य 'कलशोऽस्ती'तिवाक्यघटकेन 'कलश'पदात्मकविवरणेन, विव्रियमाण–कलशपदज्ञानेनेति यावत्, कलशे–कलशरूपेऽर्थे, घटपदस्य शक्तिग्रहो भवतीत्यर्थः॥ नाम्नो विवरणमुदाहृत्य पूर्वं लाघवात् यत्नार्थकतयाऽभिहितस्याऽप्याख्यातस्येदानीं विवरणेनापि यत्नार्थकत्वं दर्शयति–**एवं पचतीत्यस्येति**। 'पचती'तिवाक्यघटकस्य पचधातोः आख्यातस्य च, 'पाकं करोती'त्यनेन विवरणात्= 'पाकं करोती'तिरूपेण विव्रियमाणत्वात्। तत्र पाकपदेन पच्धातोः विक्लित्तिरूपाऽर्थकत्वं, अथ च कृञ्धातुना आख्यातस्य 'ति'प्रत्ययस्य यत्नार्थकत्वं=कृत्यर्थकत्वं, कल्प्यतेऽनुमीयते इत्यर्थः। यथा पच्धातोः पाकत्वावच्छिन्ने शक्तिम् अजानतः पाकपदस्य पाकत्वावच्छिन्ने शक्तिं च जानतः पुंसः पच्धातुशक्यतावच्छेदकपाकत्वावच्छिन्नशक्त–'पाकं करोती'–तिविवरणघटकपाकपदश्रवणाधीनपाकत्वावच्छिन्नविषयकबोधात् पच्धातोः पाकत्वावच्छिन्ने शक्तिग्रहः, तथैव आख्यातस्य यत्नत्वावच्छिन्ने शक्तिम् अजानतः कृञ्धातोः यत्नत्वावच्छिन्ने शक्तिं च जानतः पुंसः पचतीतिवाक्योच्चारणोत्तरकालीनोच्चारणजन्य'पाकं करोती'ति वाक्यघटककृञ्पदश्रवणजन्ययत्नत्वावच्छिन्नबोधात् आख्यातस्य यत्नत्वावच्छिन्ने शक्तिग्रहइति दृष्टान्तदार्ष्टान्तभावाऽभिप्रायेण शक्तिग्रहार्थं पचतीत्यस्य पाकं करोतीतिविवरणमुक्तं बोध्यम्। तथाच–अनुमानाकारः– 'आख्यातपदम्,–यत्नत्वावच्छिन्नशक्तम्,–यत्नत्वावच्छिन्नशक्ततिङन्तकृञ्धातुप्रतिपादितार्थप्रतिपादकत्वात्,–यद्धर्मावच्छिन्नशक्तपदप्रतिपादितार्थप्रतिपादकं भवति तत्तद्धर्मावच्छिन्नशक्तं, पाकपदेन विवृतपच्धातुवदि'तियत्तद्भ्यां व्याप्त्या पच्धातुदृष्टान्तेन आख्यातपदस्य यत्नत्वावच्छिन्नशक्तत्वानुमितिः भवति। अथवा पचतीति वाक्यश्रवणानन्तरं तद्घटकाख्यातस्य यत्नत्वावच्छिन्ने शक्तेरगृहीतत्वात् अनुत्पन्नशाब्दबोधस्य पुंसः अनन्तरोच्चरित–'पाकं करोती'तिवाक्यघटककृञ्धातोः यत्नत्वावच्छिन्ने शक्तेर्गृहीततया तादृशवाक्यश्रवणोत्तरकालीनशाब्दबोधवतः पुंसः पच्धातुस्थाने पाकपदम् आख्यातस्थाने कृञ्धातुश्च प्रयुक्त इति–औचित्याऽवर्जनीयमानसज्ञानसंभवेन तादृशज्ञानसहकृतमनस्सन्निकर्षात् आख्यातपदं यत्नत्वावच्छिन्नशक्तमित्यप्रामाण्यज्ञानाऽनास्कन्दितमानसप्रत्यक्षं वा निरङ्कुशं भवतीति भावः॥ **एवं प्रसिद्धपदस्येति**। कोकिलादिनिष्ठाऽसाधारणधर्मात्मकप्रसिद्धार्थवाचकपदस्य, सान्निध्यात्=सहोच्चरितत्वज्ञानादपि अप्रसिद्धपदस्य पिकादिपदस्य निरुक्ताऽसाधारणधर्मे शक्तिग्रहस्तटस्थस्य भवतीत्यर्थः। तादृशस्थलमुदाहरति–**यथेति**। 'इह सहकारतरौ मधुरं पिको रौती'तिवाक्ये सप्तम्यर्थः अवच्छेद्यत्वम्, तस्य रुधात्वर्थध्वनावन्वयः, माधुर्यं पञ्चमादिस्वरत्वरूपं 'पिकः कूजति पंचममि'तिकोशात्, तथा च–एतत्सहकारतर्ववच्छेद्य–मधुराऽभिन्नशब्दानुकूलकृतिमान् पिक इति बोधः। तत्र उक्तकोशात् 'मधुर'पदस्य पञ्चमादिस्वरात्मकप्रसिद्धार्थकस्य सहकारपदस्य च प्रसिद्धार्थकस्य सान्निध्येन पिकपदस्य कोकिलात्मकेऽर्थे शक्तिम्

**त्यादौ पिकपदस्य कोकिले शक्तिग्रह इति ॥**

**तत्र जातावेव शक्तिर्न तु व्यक्तौ व्यभिचारादानन्त्याच्च । व्यक्तिं विना जातिभा-**

अजानतोऽपि पुंसः कोकिले शक्तिग्रहो भवतीत्यर्थः ॥ तत्र मधुरमितिपदेन काकादौ शक्तिग्रहभ्रमवारणम्, सहकारतरौ इत्यनेन मधुरगायकविशेषे शक्तिग्रहभ्रमवारणम् । प्रसिद्धार्थकपदसमभिव्याहारः अनुमानविधया शक्तिग्राहकः, उक्तवाक्यात् 'एतदाम्रवृक्षे मधुररावकर्ता,–पिकपदवाच्य'इति शक्तिग्रहो भवतीति । पिकपदस्य पूर्वं शक्तिग्रहाऽभावात् कोकिलदर्शनाऽनन्तरं–'कोकिलः,–पिकपदवाच्यः,–सहकारतरौ मधुररावकर्तृत्वादि'त्यनुमानात् शक्तिग्रहो बोध्यः । अथवा निरुक्तवाक्यजन्यबोधोत्तरम् 'एतादृश-सहकारवृक्षावच्छेद्यमाधुर्यावच्छिन्नशब्दात्मकाऽसाधारणधर्मविशिष्टः कोकिल एव नान्य' इतिमानसिकनिश्चयसंभवेन तादृशनिश्चयसहकृतमनस्सन्निकर्षात् 'कोकिल एव पिकपदवाच्य'इति–अप्रामाण्यज्ञानाऽनास्कन्दितमानसप्रत्यक्षं भवतीति, भावः इति **शक्तिग्रहोपायनिरूपणम् ॥**

अथ प्रसंगसंगत्या जात्याकृतिविशिष्टव्यक्तौ शक्तिव्यवस्थापनार्थं जातिमात्रशक्तिवादिमीमांसकमतं निरसितुं तत्रेत्यादिना **केचिदि**'त्यन्तेन तन्मतमुपन्यस्यति–**तत्र जातावेवेति** । जातिविशिष्टे शक्तिस्वीकारे जातावपि शक्तिग्रहस्याऽऽवश्यकत्वम्, 'नाऽगृहीतविशेषणा बुद्धिर्विशिष्टेपूपजायते'इति न्यायात्, अगृहीतम् अविषयीकृतं विशेषणं ययेति व्युत्पत्त्या विशेषणाऽविषयिणी बुद्धिर्विशिष्टेषु नोपजायते–विशिष्टविषयिणी न भवतीति तदर्थः । किञ्च–'विशेष्यं नाऽभिधा गच्छेत् क्षीणशक्तिर्विशेषणे'–इतितन्मतात्, अभिधा–शक्तिः, विशेष्यं=धर्मिणं, न गच्छेत्=बोधयितुं न समर्था भवति कुतः ? इत्याकांक्षायां–यतः 'क्षीणशक्तिरिति । यतः विशेषणं प्राप्य पदशक्तिः, क्षीणशक्तिः=क्षीणसामर्थ्या, भवतीत्यर्थः । तथा च विशेषणशक्तात् पदादेव विशिष्टविषयकशाब्दबोधोपपत्तौ विशेष्यांशे व्यक्तौ बीजाऽभावात् निष्प्रयोजनत्वाच्च न शक्तिग्रहः, किन्तु जातावेव शक्तिग्रहो भवतीति मीमांसकाऽभिप्रायः ॥ जात्याकृतिविशिष्टव्यक्तौ शक्तिरिति न्यायमतेऽपि किं यस्यां कस्यांचिद्व्यक्तौ शक्तिः सर्वासु वेति विकल्प्य आद्ये दोषमाह–**नतु व्यक्तौ, व्यभिचारादिति** । यत्किंचिद्व्यक्तौ शक्तिस्वीकारपक्षे तद्विषयकशाब्दबोधं प्रति तद्धर्मिकशक्तिज्ञानमेव हेतुर्वक्तव्यम्, अन्यथा घटादिपदात् पटादिशाब्दबोधापत्तेः, तथा च एकघटव्यक्तावेव घटपदशक्तिस्वीकारे घटान्तरविषयकशाब्दबोधोत्पत्त्या 'कारणाऽभावेऽपि कार्यसत्तात्मक'व्यतिरेकव्यभिचारः इति भावः ॥ सर्वासु व्यक्तिषु शक्तिस्वीकारपक्षे निरुक्तव्यभिचारवारणात् द्वितीयपक्षे दूषणान्तरमाह–**आनन्त्याच्चेति** । व्यक्तीनामानन्त्येन शक्तीनामानन्त्यमिति भावः । ननु–ईश्वरेच्छात्मकशक्तेरेकत्वात् न आनन्त्यदोषसंगतिरिति चेन्न । विषयभेदेन विषयताया भेदात् अनन्तव्यक्तिगतेश्वरेच्छाविषयताया आनन्त्यमिति दूषणं बोध्यम्, मीमांसकमते तु जातौ शक्तिस्वीकारे न इच्छाविषयताया आनन्त्यं जातेरेकत्वादिति भावः ॥ ननु 'घटपदं घटत्वे शक्तमि'ति शक्तिग्रहे कम्बुग्रीवादिमद्व्यक्तेर्बोध एव विलुप्येतेत्याशंकायामाह–**व्यक्तिं विनेति** । स्वरूपतो जातिप्रकारकव्यक्तिविशेष्यकशाब्दबोधं प्रति जातिविषयकशक्तिज्ञानत्वेन हेतुत्वात् शाब्दबोधे व्यक्तिं विना=व्यक्तिमविषयीकृत्य, जातिभानस्य=स्वरूपतो जातिविषयकत्वस्य असंभवात्, तत्र व्यक्त्यविषयकस्वरूपतो जातिनिष्ठविषयताशालिबोधौपयिकसामग्र्यभावादितिभावः । तथाच व्यक्तेरपि अन्यथाऽनुपपत्त्या शाब्दबोधे भानमिति केचित्–मीमांसका वदन्ती'ति ननु–स्वरूपतो जातिप्रकारकव्यक्तिविशेष्यकशाब्दबोधं प्रति व्यक्तिविषयकशक्तिज्ञानत्वेन हेतुत्वमपि शक्यते वक्तुम्, अतो जातिविशिष्टव्यक्तौ शक्तिः स्वीक्रियतामिति चेन्न । अनन्तशक्तिविषयत्वकल्पनागौरवभियः

**नस्यासम्भवाद्व्यक्तेरपि भानमिति केचित्। तन्न, शक्तिं विना व्यक्तिभानानुपपत्तेः। न च व्यक्तौ लक्षणा, अनुपपत्तिप्रतिसन्धानं विनापि व्यक्तिबोधात्। न च व्यक्ति-**

---

व्यक्तिशक्तिस्वीकाराऽनुचितत्वात् व्यक्तिशक्तिज्ञानस्य तादृशशाब्दबोधहेतुत्वकल्पनस्याऽनौचित्यादिति हृदयम् ॥ नैयायिकस्तन्मतं खण्डयति–**तन्न शक्तिं विनेति**। व्यक्तौ शक्त्यस्वीकारे व्यक्तेः शाब्दबोधविषयत्वाऽनुपपत्तिरित्यर्थः। 'घटमानये'त्यादिवाक्यज्ञानाधीनशाब्दबोधे पटादेरपि विषयत्वापत्तिवारणाय तत्तदर्थविषयकशाब्दबोधं प्रति वृत्तिज्ञानसहकृत–तत्तदर्थविषयकपदज्ञानजन्यपदार्थोपस्थितेः हेतुत्वेन जातिपदयोरेव सम्बन्धग्रहेण पदरूपैकसम्बन्धिज्ञानात् जातिरूपसम्बन्ध्यन्तरस्यैव स्मरणसम्भवात् नतु व्यक्तेरिति पदजन्यव्यक्तिस्मरणाऽभावेन व्यक्तिशाब्दबोधाऽनिर्वाहात् व्यक्तौ शक्तिरावश्यकीति भावः। **अथ केचन कुब्जशक्तिवादिनस्तु**-घटादिपदानां घटत्वे घटे च शक्तिः, तत्र घटत्वे शक्तिर्ज्ञाता सती उपयुज्यते, घटे तु कुब्जा सती उपयुज्यते, घटत्वादिजातिशक्तेर्ज्ञातत्वं च–शाब्दबोधजनक–पदार्थस्मरण–निरूपितशक्तिज्ञाननिष्ठकारणता–निरूपितविषयतासम्बन्धावच्छिन्नशक्तिनिष्ठावच्छेदकतायां घटत्वादिजातिविषयकत्वावच्छिन्नत्वमेव, तादृशशक्तिनिष्ठावच्छेदकतायां च घटादिव्यक्तिविषयकत्वानवच्छिन्नत्वमेव शक्तेर्व्यक्त्यंशे कुब्जत्वम्, शक्तिग्रहस्य घटपदनिरूपितघटत्वविषयकशक्तिमान् घट'इत्याकारः, एतादृशशक्तिज्ञाने घटत्वविषयकत्वेन शक्तेर्विषयत्वात् घटत्वांशे शक्तेर्ज्ञातत्वम्, घटविषयकत्वेन शक्तेरविषयत्वात् घटांशे कुब्जत्वम्, तथा च घटविशेष्यकघटपदनिरूपितघटत्वविषयकशक्तिप्रकारकज्ञानसहकृतघटपदज्ञानात् कारणतावच्छेदककोटौ घटविषयकत्वनिवेशेन घटत्वस्येव घटस्यापि स्मरणसंभवात् घटपदान्न घटविषयकशाब्दबोधाऽनुपपत्तिरित्याहुः। **तन्न**। घटत्वप्रकारकघटविशेष्यकस्मृतौ घटत्वावच्छिन्नविशेष्यतानिरूपितघटत्वविषयकत्वावच्छिन्नघटपदनिरूपितशक्तिनिष्ठप्रकारताशालिज्ञानत्वेन न हेतुत्वं कारणतावच्छेदककोटौ घटत्वविषयकत्वनिवेशे गौरवात् प्रयोजनाऽभावाच्च, किन्तु 'घटो घटपदशक्य'इतिघटत्वावच्छिन्नविशेष्यतानिरूपितघटपदनिरूपितशक्तिनिष्ठप्रकारताशालिज्ञानत्वेनैव हेतुत्वं लाघवात् तावतैव घटत्वप्रकारकघटविशेष्यकस्मरणसंभवात्। तथा च सति निरुक्तशक्तिनिष्ठावच्छेदकतायां घटत्वादिजातिविषयकत्वावच्छिन्नत्वे प्रमाणाभावेन शक्तेर्ज्ञातात्वकुब्जत्वयोरप्यप्रामाणिकत्वाच्चेति **ध्येयम्**।

मीमांसकाः 'घटादिपदानां न व्यक्तौ शक्तिः, किन्तु लक्षणैव, शक्तिलक्षणयोर्द्वयोरपि वृत्तित्वात् वृत्तिज्ञानसहकृतपदज्ञानजन्यव्यक्तिस्मृतिसंभवेन व्यक्तेश्शाब्दबोधविषयत्वसंभवादिति मन्यन्ते तन्मतं निषेधति–**न च व्यक्तौ लक्षणेति**। घटादिपदस्य घटादिव्यक्तौ स्वारसिकलक्षणा नैव स्वीकर्तुं शक्यते मीमांसकेनेत्यर्थः ॥ तत्र व्यतिरेकव्यभिचारमाह–**अनुपपत्तिप्रतिसन्धानं विनाऽपीति**। अन्वयाऽनुपपत्तिज्ञानं विनापि व्यक्तेः शाब्दबोधादित्यर्थः ॥ 'घटमानये'त्यादौ घटत्वजातेरानयनाऽन्वयाऽनुपपत्त्या घटपदस्य घटे लक्षणास्वीकारेऽपि 'घटोऽस्ती'त्यादौ घटत्वजातेरस्तित्वाद्यन्वयाऽनुपपत्तेर्लक्षणाबीजस्याऽभावेन अन्वयाऽनुपपत्तिरूपकारणाऽभावेऽपि घटव्यक्तिबोधात्मककार्यसत्त्वेन व्यतिरेकव्यभिचारात् व्यक्तौ लक्षणायाः स्वीकर्तुमशक्यत्वादिति भावः ॥ मीमांसकाः–अन्वयाऽनुपपत्तिमेव लक्षणाबीजं वदन्ति, न तात्पर्याऽनुपपत्तिमपि, तन्मते वेदस्याऽपौरुषेयतया ईश्वरानङ्गीकारेण तदिच्छारूपतात्पर्यस्याऽभावात्। अन्ये तु घटादि, पदानां न व्यक्तौ लक्षणा युगपद्वृत्तिद्वयविरोधात्, सकृदुच्चारितशब्दः सकृदेवार्थं गमयतीति न्यायाच्च-किन्तु प्रथमं घटपदश्रवणात् शक्तिज्ञानसहकृतात् घटत्वोपस्थितौ तत्र समभिव्याहृताऽऽनयनाद्यन्वयाऽनुपपत्तिप्रतिसन्धानानन्तरं पुनः स्मृतघटपदाल्लक्षणाज्ञानसहकृताज्जायमानव्यक्तिस्मृत्यैव व्यक्ति-

**शक्तावानन्त्यम्, सकलव्यक्तावेकस्या एव शक्तेः स्वीकारात्। न चाननुगमः, गोत्वादेरेवानुगमकत्वात्। किञ्च गौः शक्येति शक्तिग्रहो यदि तदा व्यक्तौ शक्तिः। यदि तु गोत्वं शक्यमिति शक्तिग्रहस्तदा गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात्, समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मृणं शाब्दबोधं प्रति च हेतुत्वात्। किञ्च**

---

विषयकशाब्दबोध इति वदन्ति। तन्न। सति तात्पर्ये 'गङ्गायां मत्स्यघोषौ स्त' इतिवाक्यघटकगङ्गापदश्रवणात् शक्तिज्ञानलक्षणाज्ञानसहकृतात् शक्यार्थप्रवाह–लक्ष्यार्थतीरोभयविषयकस्मरणेन प्रवाहतीरोभयविषयकशाब्दबोधस्य सर्वानुभवसिद्धतया सर्वत्र युगपद्वृत्तिद्वयविरोधे मानाऽभावात्, उक्तन्यायस्य तु तात्पर्याऽभावस्थले प्रवृत्तिस्वीकारात्। तथा च तन्मतेऽपि मूलाऽभिप्रेतव्यतिरेकव्यभिचारान्न व्यक्तौ शक्तिरिति **बोध्यम्।** ननु व्यक्तिशक्तिपक्षे व्यक्तेरानन्त्यप्रयुक्तं शक्तिविषयताया अपि आनन्त्यमिति गौरवमिति दूषणमुद्धरति नैयायिकः–**न च व्यक्तिशक्तावानन्त्यमिति।** यत् शक्तिविषयतानामनन्ततया उपस्थितिकृतगौरवं तन्न स्यादिति भावः॥ ननु कथं न आनन्त्यमित्याकांक्षायां तत्र हेतुमाह–**सकलेति।** सकलासु कालान्तरीणदेशान्तरीणादिघटादिव्यक्तिषु, एकस्याः=नित्यैकस्याः, एव ईश्वरेच्छात्मिकायाः शक्तेः विषयतासम्बन्धेन स्वीकारात्, नानाविधविषयतात्मकसम्बन्धाऽऽनन्त्यं तु न दोषायेति भावः॥ **ननु**–गोविषयकशाब्दबोधे अनन्तगोव्यक्तिविषयकशक्तिज्ञानस्य कारणत्वे तत्र विषयतासम्बन्धेन आनन्त्यदोषविशिष्ट–गोव्यक्तीनामवच्छेदकतैव न स्यात् तथा च अवच्छेदकाऽप्रसिद्ध्या विषयतासम्बन्धेन तदवच्छिन्नशक्तिज्ञानस्य कारणत्वमेव न सिद्ध्येत्, **किंच**–गोव्यक्तीनामनेकत्वेन एकगोव्यक्तिविशेष्यकशक्तिज्ञानस्य अपरगोस्मरणपूर्वम् अवर्तमानत्वेन अपरगोव्यक्तिविशेष्यकशक्तिज्ञानस्य एतद्गोस्मरणपूर्वम् अवर्तमानत्वेन परस्परं व्यभिचारितया गोपदार्थविषयकस्मरणसामान्यं प्रति गोविशेष्यकशक्तिज्ञानस्य अनुगतकारणत्वानुपपत्तिरित्याशंकां परिहरति–**न च अननुगम** इति। न गोविषयकशक्तिज्ञानस्य कारणत्वाऽसिद्धिः, न च अनुगतकारणत्वाऽनुपपत्तिश्चेत्यर्थः। तत्र हेतुमाह–**गोत्वादेरेवानुगमकत्वादिति।** शक्तिज्ञाननिष्ठकारणतायां स्वावच्छिन्नविषयकत्वसम्बन्धेन गोत्वमेवाऽवच्छेदकं, तस्यैव अनुगतकारणतोपपादकत्वादित्यर्थः। 'गोत्वप्रकारकगोविशेष्यकस्मृतिं प्रति गोत्वावच्छिन्नविशेष्यताशालिशक्तिज्ञानस्य कारणतया तस्य सर्वत्र सत्त्वान्न पूर्वोक्तकारणत्वाऽसिद्धिर्न चाऽननुगतकारणत्वानुपपत्तिरिति भावः॥ इत्येवं व्यक्तिशक्तिं प्रसाध्य मीमांसकमतसिद्धजातिशक्तिं निरसितुं प्रथमं जातिशक्तिग्रहस्वरूपं विकल्प्य दूषयति–**किञ्चेति।** 'गौर्गोपदशक्या' किं वा 'गोत्वं गोपदशक्य'मिति शक्तिग्रहविकल्पमध्ये मीमांसकैः कः पक्षोऽभिमतः?, यदि 'गौः गोपदशक्या'–इति शक्तिग्रहः, तदा व्यक्तावेव शक्तिः सिद्धा, एतादृशं 'गौः शक्या'–इतिविशिष्टं शक्तिज्ञानं मीमांसकैः अन्यथाख्यात्य(भ्रमा)नङ्गीकारेण प्रमात्मकमेव वक्तव्यम्, प्रमायाश्च वस्तुसाधकत्वेन व्यक्तावेव शक्तिसिद्धिरिति भावः॥ द्वितीयपक्षं दूषयति–**यदि त्विति।** 'गोत्वं गोपदशक्यमि'ति यदि शक्तिग्रहो मन्यते तदा तादृश'गोत्वविशेष्यकशक्तिज्ञानस्य गोत्वविशेष्यकस्मरणं प्रत्येव कारणत्वेन गोत्वप्रकारकगोविशेष्यकस्मरणं प्रति तु अकारणत्वेन एतादृशगोत्वविशेष्यकशक्तिज्ञानेन गोत्वप्रकारक गोविशेष्यकपदार्थस्मरणं नोत्पद्येत तदभावे च गोत्वप्रकारकगोविशेष्यकशाब्दबोधोऽपि 'गौ'रिति पदान्नोत्पद्येतेत्यर्थः॥ तत्र हेतुमाह–**समानप्रकारकत्वेनेति।** समानप्रकारताकसमानविशेष्यताकशक्तिज्ञानस्य समानप्रकारताकसमानविशेष्यताकपदार्थस्मरणं प्रति हेतुत्वात्, इत्येकोऽर्थः, समानप्रकारताकसमानविशेष्यताकपदार्थस्मरणस्य च समानप्रकारताकसमानविशेष्यताकशाब्दबोधं प्रति

**गोत्वे यदि शक्तिस्तदा गोत्वत्वं शक्यतावच्छेदकं वाच्यम्, गोत्वत्वं तु गवेतरासमवेतत्वे सति सकलगोसमवेतत्वम्, तथाच गोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात्त-**

---

हेतुत्वात् इत्यपरोऽर्थः। तेन **'अत्रैव शक्तिज्ञानस्योपयोग'** इति पूर्वग्रन्थेन ( पदार्थस्मरणं प्रत्येव शक्तिज्ञानस्य कारणत्वं न तु शाब्दबोधे इत्यभिप्रायकेण ) सह न विरोध इति बोध्यम्। तथा च गोत्वनिष्ठप्रकारतानिरूपितगोनिष्ठविशेष्यताशालि'गौ'रितिस्मृतित्वावच्छिन्नं प्रति गोत्वनिष्ठप्रकारतानिरूपितगोनिष्ठविशेष्यताशालि'गोपदात् गौर्बोद्धव्ये'तिशक्तिज्ञानस्यैव कारणत्वेन तादृश कारणस्य तत्राऽसत्त्वेन तादृशस्मरणं नोत्पद्येत, तादृशस्मरणाऽभावेन च तादृशशाब्दबोधोऽपि नोत्पद्येत, निरवच्छिन्नगोत्वनिष्ठविशेष्यताशालि'गोपदात् गोत्वं बोद्धव्यमि'तिज्ञानस्य निरुक्तस्मरणेऽकारणत्वात्—'तस्य कारणतावादिमीमांसकमते तु व्यतिरेकव्यभिचाराद्, अतः गोत्वप्रकारकगोविशेष्यक'गोपदात् गौः बोद्धव्ये'तिशक्तिज्ञानस्यैव कारणत्वं वक्तव्यमिति भावः॥ न च 'गोपदं गोत्वशक्तमि'त्येतादृशशक्तिज्ञानस्य शक्यंशे गोत्वप्रकारकतया तद्बलात् गोत्वप्रकारकस्मृत्युत्पत्तौ ततस्तत्प्रकारकशाब्दबोधोत्पत्तौ च बाधकाभाव इति वाच्यम्। पदविशेष्यकशक्तिज्ञाने येन सम्बन्धेन येन रूपेण यस्य प्रकारत्वं तद्बलात् तेन सम्बन्धेन तेन रूपेण तत्प्रकारकतद्विशेष्यकस्मृतेरेवाऽभ्युपगमात्, एवं च 'गोत्वपदं गोत्वशक्तमि'ति शक्तिज्ञानादिव 'गोपदं गोत्वशक्तमि'तिशक्तिज्ञानादपि स्वरूपसम्बन्धेन गोत्वत्वप्रकारकगोत्वविशेष्यकस्मृतेरेवाङ्गीकरणीयत्वात् 'गोपदं गोत्वशक्तमि'तिशक्तिज्ञानात् स्वरूपतो गोत्वप्रकारकगोविशेष्यकस्मरणाऽनुपपत्तेर्दुर्वारत्वात् ततः स्वरूपतो गोत्वप्रकारकगोविशेष्यकशाब्दबोधानुपपत्तेः सुतरां दुर्वारत्वमिति ध्येयम्॥ ननु—गोपदशक्तिज्ञानं न 'गोत्वं गोपदशक्यमि'त्याकारकम्, येन स्वरूपतो गोत्वप्रकारकस्मरणाद्यनुपपत्तिः स्यात्, किन्तु गोपदविशेष्यकं शक्तिसम्बन्धेन स्वरूपतो गोत्वप्रकारकं 'गोपदं गौ'रित्याकारकमेव, समवायेनेव शक्तिसम्बन्धेनापि स्वरूपतो जातेर्भानस्वीकारात्। तदेव च 'गोपदं न गौ'रितिविपरीतज्ञानप्रतिबध्यं भवति अतः तदेव कारणं सत् स्वरूपतो गोत्वप्रकारकगोविशेष्यकस्मरणं जनयिष्यति, स्मरणेन च स्वरूपतो गोत्वप्रकारकगोविशेष्यकशाब्दबोधोऽपि उत्पत्स्यते इत्यतो दूषणान्तरमाह—**किंच गोत्वे यदि शक्तिरिति।** मीमांसकमते शक्तिसम्बन्धेन 'गोपदं गौ'रितिज्ञानघटकीभूता सम्बन्धात्मिका शक्तिः पदविशेष्यिकैव भवतीति नियमाऽभावात् यदा 'गोपदात् गोत्वं बोद्धव्यमि'त्याकाराऽभिमता तदा तत्र गोपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यतायाः गोत्वनिष्ठायाः निरवच्छिन्नत्वे शक्यतावच्छेदकत्वाऽनिर्णयेन पटत्वादिना गवादेरपि गोपदशक्यत्वापत्तिः स्यादतः निरुक्तेच्छीयविशेष्यताया गोपदशक्यतात्मिकाया अवच्छेदकं किमपि वक्तव्यम्, तदेव शक्यतावच्छेदकं भवेत्, तद्यदि गोत्वे गोत्वत्वरूपं शक्यतावच्छेदकम् अन्यूनाऽनतिरिक्तवृत्तित्वाद् वक्तव्यम्, तदा तद् **गोत्वत्वं तु**—न तद्व्यक्तित्वरूपं संभवति तस्य गोत्वभिन्नेऽपि सत्त्वेनाऽव्यावर्तकत्वात्, यदि गोत्वमात्रनिष्ठतद्व्यक्तित्वमुच्यते, तदा गोत्वमात्रनिष्ठत्वं नाम—गवेतराऽसमवेतत्वविशिष्टसकलगोसमवेतत्वविशिष्टत्वम्, तदा—तादृश'गवेतराऽसमवेतत्वविशिष्टसकलगोसमवेतत्वविशिष्टतद्व्यक्तित्वाऽपेक्षया लाघवेन **'गवेतराऽसमवेतत्वे सति सकलगोसमवेतत्वात्मकं** गोत्वत्वमेव शक्यतावच्छेदकं स्वीकर्तव्यम्, **तथाच सति गोव्यक्तीनां** सकलानां शक्यतावच्छेदकतादृशगोत्वत्वशरीरे विशेषणतया प्रवेशात्, **तव**=मीमांसकस्यैव, अनिवार्यगौरवदोषः। न्यायनये अनेकव्यक्तिशक्तिकल्पनायां मीमांसकनये शक्यतावच्छेदकेऽनेकव्यक्तिप्रवेशे समाने गौरवेऽपि मीमांसकनये गुरुधर्मस्य गवेतराऽसमवेतत्वविशिष्टसकलगोसमवेतत्वात्मकस्य शक्यतावच्छेदकत्वकल्पनमिति गौरवमधिकमिति भावः॥ **वस्तु-**

**वैव गौरवम्। तस्मात्तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यतीति ॥**

**तत्तु** मीमांसकमते–निरवच्छिन्नत्वसावच्छिन्नत्वाभ्यां शक्तेर्द्वैविध्यकल्पनं क्वचित् जातौ क्वचिच्च व्यक्तौ शक्तिकल्पनं तत्र तत्र भिन्नभिन्नशक्यतावच्छेदककल्पनं शक्तेरतिरिक्तपदार्थत्वकल्पनं च दोषः। न्यायमते तु तत्पदजन्यबोधविषयकेश्वरेच्छाविशेष्यतावच्छेदकस्यानुगतस्य शक्यतावच्छेदकतानिर्णयः जात्याकृतिविशिष्टव्यक्तावेव शक्तिनिर्णयः इत्यादिर्गुण इति बोध्यम् ॥ एवं मीमांसकमतं निराकृत्य नैयायिकः स्वमतमुपसंहरति–**तस्मादिति**। गौरवाद्युक्तदोषेण जातिशक्तिस्वीकाराऽनौचित्यादित्यर्थः ॥ केवलायां जातौ अवयवसंयोगात्मकाकृतौ व्यक्तौ वा शक्तिस्वीकारे गोत्वघटत्वादितत्तज्जाति–सास्नादिमत्त्वकम्बुग्रीवादिमत्त्वादितत्तदाकृतिविशिष्ट-गोघटादितत्तद्व्यक्तिबोधाऽनुपपत्त्या, तादृशजात्याकृतिविशिष्टव्यक्तिबोधनिर्वाहाय, **कल्प्यमाना**=सर्वानुमता, **शक्तिः**= 'गोपदात् सास्नादिमत्त्वविशिष्टगौर्बोद्धव्या' 'घटपदात् कम्बुग्रीवादिमत्त्वविशिष्टघटो बोद्धव्य'इत्याकारिकेच्छात्मकशक्तिः, तत्तज्जात्याकृतिविशिष्टव्यक्तावेव विश्राम्यति–स्थास्यतीत्यर्थः ॥ तत्र अवयवसंयोगात्मकाकृतेः शक्यत्वेऽपि न जातिवत् शक्यतावच्छेदकत्वम्, सामानाधिकरण्यस्य शक्यतावच्छेदकसम्बन्धत्वकल्पने गौरवात्, नानासंयोगव्यक्तीनाम् अवच्छेदकत्वकल्पनापेक्षया जातेस्तत्कल्पने शरीरादिकृतलाघवादिति। अत्र सास्नादिमत्त्वगोत्वगवान्यतममविषयीकृत्य गवादिपदात् शाब्दबोधाऽनुदयात् त्रिष्वेव पृथक् शक्तिरिति 'जात्याकृतिव्यक्तयः पदार्थ'इति ( न्या० २।२।६५ ) सूत्रे एकवचनोपादानेन दर्शितमिति प्राचः। **नव्यास्तु**–अवयवसंयोगाऽनुपस्थितावपि गवादिपदात् गोत्वविशिष्टव्यक्तेर्बोधात् जातिविशिष्टव्यक्तौ पृथक् शक्तिः, आकृतौ च पृथक् शक्तिः, व्युत्पत्तिवैचित्र्येण आकृतिव्यक्त्योरप्यन्वये आकांक्षाकल्पनेन परस्परमन्वयबोधो निराबाधः,'पदार्थः'इतिसौत्रमेकवचनं तु जातिव्यक्त्योरैकशक्तिलाभार्येति **वदन्ति** ॥ **अथ** तच्छब्दस्य वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितघटत्वाद्यवच्छिन्ने शक्तिः। **इदमेतदोः** वक्तृप्रत्यक्षबुद्धिविषयतावच्छेदकघटत्वाद्यवच्छिन्ने शक्तिः, 'अयं घट'इत्यादौ तु एतद्देशकालवृत्तित्वमेव वक्तुः प्रत्यक्षविषयतावच्छेदकम्। **अदसः**–वक्तृपरोक्षबुद्धिविषयतावच्छेदकघटत्वाद्यवच्छिन्ने शक्तिः। उक्तं च–'इदमः प्रत्यक्षगतं, समीपतरवर्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टं, तदिति परोक्षे विजानीयादि'ति ॥ **किम्पदस्य** अनिर्धारितविशेषे जिज्ञासाविषयत्वविशिष्टे शक्तिः,'को घट'इत्यत्र घटो मदीयजिज्ञासाविषय इति बोधः ॥ **सर्वपदस्य** व्यापकत्वविशिष्टे शक्तिः, उद्देश्यतावच्छेदकनिरूपिते विधेयतावच्छेदकनिष्ठे व्यापकत्वे तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वात्मके शक्तिरित्यर्थः, 'सर्वे घटा रूपवन्त' इत्यत्र घटत्वसमानाधिकरणाऽभावप्रतियोगितानवच्छेदकरूपत्ववद्रूपवन्त घटा'इति बोधः ॥ **त्वम्**–पदस्य ( युष्मत्पदस्य )तत्कालीनसम्बोध्ये शक्तिः, तत्कालीनसम्बोध्यतावच्छेदकं च चैत्रत्वादिकमेव ॥ **अहम्पदस्य**(अस्मत्पदस्य)तत्कालीनस्वतन्त्रोच्चारयितरि शक्तिः, तादृशोच्चारयितृतावच्छेदकं चैत्रत्वादिशक्यतावच्छेदकम्। स्वातन्त्र्योक्त्या च "मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः" इति महीषासुरवधार्थमुक्ते देवीवाक्ये मयेत्यनेन देव्या बोधः न तु कवेरिति बोध्यम्। **स्व-निजादि**-शब्दानां समभिव्याहृतपदोपस्थाप्ये शक्तिः, समभिव्याहारश्चात्रैकवाक्यघटकत्वम् ॥ **एवशब्दस्य** कैवल्यविशिष्टे शक्तिः, कैवल्यं च सजातीयद्वितीयराहित्यम्। **धेनुपदस्य** धानकर्मत्वगोत्वोभयविशिष्टैकधर्मिणि शक्तिः। **पुष्पवन्तपदस्य** सूर्यत्वचन्द्रत्वरूपनानाधर्मविशिष्टनानाधर्मिषु शक्तिः। तत्र शक्तेरैक्यान्न नानार्थता। **हर्यादिपदानां तु** यमत्ववानरत्वादिविभिन्नधर्मविशिष्टेषु विभिन्नव्य-

**शक्तं पदम्, तच्चतुर्विधम्–क्वचिद्यौगिकं, क्वचिद्रूढं, क्वचिद्योगरूढं, क्वचिद्यौगिकरूढम्, तथाहि—यत्रावयवार्थं एव बुध्यते तद्यौगिकम्, यथा पाचकादिपदम्। यत्रावयवशक्तिनिरपेक्षया समुदायशक्त्या बुध्यते तद्रूढम्, यथा गोमण्डलादिपदम्।**

---

क्तिषु विभिन्ना शक्तिरिति बोध्यम् ॥ अधिकं तु शक्तिवादेऽध्येतव्यम्। 'पदज्ञानं तु करणमि'त्यत्र किं पदं कतिविधं चेत्याकांक्षायां पदनिरूपणे प्राप्ते, तत्र वैयाकरणप्रभृतयः पदानामिव वाक्यस्यापि शक्तिमङ्गीकुर्वन्तीति तन्मतं निराकुर्वन्नाह–**शक्तं पदमिति**। पदमेव शक्तं नतु वाक्यमित्यर्थः। अनेन पदस्य 'शक्तत्वमिति'–लक्षणमपि दर्शितम्, शक्तिनिरूपकत्वं पदत्वमिति यावत्। ननु सुप्तिङन्तत्वं पदत्वमिति, तदभावकालेऽपि प्रकृतेः स्वार्थबोधकत्वस्यानुभविकत्वात्। पदं विभजते–**तच्चतुर्विधमित्यादिना**। तत्र क्वचित्=किंचित्पदं, यौगिकम्=शास्त्रकल्पिताऽवयवार्थनिरूपिता शक्तिर्योगः, तन्निरूपकं पदम् यौगिकमित्यर्थः। क्वचिद्रूढम्=किंचित्पदं रूढं=शास्त्रकल्पिताऽवयवार्थभानाऽभावे समुदायार्थनिरूपितशक्तिः रूढिः, तन्निरूपकं पदं रूढमित्यर्थः। क्वचिद्योगरूढम्=किंचित्पदं योगरूढं=शास्त्रकल्पिताऽवयवार्थाऽन्वितविशेष्यभूताऽर्थनिरूपिता शक्तिः योगरूढिः, तन्निरूपकं पदं योगरूढमित्यर्थः॥ क्वचित् यौगिकरूढम्=शास्त्रकल्पिताऽवयवार्थसमुदायार्थयोः स्वतन्त्रशक्तिः यौगिकरूढिः, तन्निरूपकं पदं यौगिकरूढमित्यर्थः॥ तान्युदाहरति–**तथाहीत्यादिना**। यत्र=यादृशपदे, यादृशपदघटक इति यावत्, तथाच यादृशपदघटकाऽवयवप्रतिपाद्यार्थ एव, बुध्यते=प्रमितिविषयतावान् भवति, तादृशपदघटितशक्ततावच्छेदकताशून्यसमुदायत्वं यौगिकत्वम्, यथा पाचकादिपदम्='पाचक' इत्यत्र 'पच्'–इत्येकः प्रकृतिरूपोऽवयवः, 'ण्वुल्'इत्यपरः प्रत्ययरूपोऽवयवः, उभयावयवार्थः–पाककर्ता इति बुध्यते। आदिना याजकादिपदानि बोध्यानीति॥ तच्च यौगिकं त्रिविधम्–समासः, तद्धितान्तं, कृदन्तं चेति। द्वन्द्वोऽपि समासः यौगिक एव, ब्राह्मणी श्वश्रूः शूद्रेत्यादौ ङीबादेः स्त्रीत्ववाचित्वे तादृशं नाम यौगिकमेवेति बोध्यम्॥ अन्ये तु–यादृशानुपूर्व्यवच्छिन्नं स्वघटकाऽवयवमात्रलभ्ययादृशविशिष्टार्थविषयकशाब्दं प्रति विषयतया जनकतावच्छेदकं भवति तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे यौगिकत्वमिति लक्षणार्थम् परिष्कुर्वन्ति। अपरे तु–स्मृतिनिष्ठकार्यतानिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासम्बन्धावच्छिन्ना( पदनिष्ठा )वच्छेदकताशून्यशक्तिनिरूपकतावच्छेदकसमुदायत्वं यौगिकत्वमिति वदन्ति। इतरे तु–पदान्तरसमभिव्याहारज्ञानाभावप्रयुक्तशाब्दबोधसमर्थपदनिष्ठभेदप्रतियोगितावच्छेदकत्वाभाव-शक्ततावच्छेदकत्वाभावोभयविशिष्टसमुदायत्वं यौगिकत्वमिति वदन्ति। वस्तुतस्तु–पदघटितशक्ततावच्छेदकताशून्यसमुदायत्ववत्त्वमेव यौगिकत्वं मूलकाराऽभिप्रेतं बोध्यम्॥ रूढं लक्षयति–**यत्रावयवशक्तीति**। यत्र=यादृशपदे, यादृशपदघटकाऽवयवशक्त्यप्रयोज्य–समुदायशक्तिप्रयोज्याऽनुभवविषयतावान् अर्थो भवति तादृशपदाघटितशक्ततावच्छेदकसमुदायत्ववत्त्वं रूढत्वमिति फलितोऽर्थः। वस्तुतस्तु–पदाऽघटितशक्ततावच्छेदकसमुदायत्ववत्त्वं रूढत्वमिति लक्षणं बोध्यम्। योगरूढपदेऽतिव्याप्तिवारणाय–पदाऽघटितत्वं समुदायत्वविशेषणम्। अपभ्रंशशब्दसमुदायेऽतिव्याप्तिवारणाय शक्ततावच्छेदकत्वं समुदायत्वविशेषणम्॥ तदुदाहरति–**यथा गोमण्डलादिपदमिति**। यथा गोपदेन प्रकृतिप्रत्ययसमुदायरूपेण रूढ्या अवयवसंस्थानविशिष्टगोत्वावच्छिन्नगोरूपोऽर्थो बुध्यते, नतु 'गमेर्डोः'( उ० २ )इतिपाणिनीयानुशासनात् 'गच्छतीति गौ'रित्येवं व्युत्पत्तिलभ्यगमनकर्तृत्वरूपाऽवयवार्थो बुध्यते। एवं 'मण्डलपदेनापि'रूढ्या सूर्यादिरोधकः–कुण्डलाकारपरिधिर्बुध्यते, नतु 'मण्डं लाती'ति व्युत्पत्त्या ओदनमण्डादानकर्तृत्वरूपाऽवयवार्थो बुध्यते॥ मण्डपेति पाठे तु.

**यत्र तु अवयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम्, यथा पङ्कजादिपदम्। तथाहि—पङ्कजपदमवयवशक्त्या पङ्कजनिकर्तृरूपमर्थं बोधयति, समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति। न च केवलयाऽवयवशक्त्या कुमुदे प्रयोगः स्यादिति**

'मण्डप'पदेन रूढ्या वितानस्य बोधो जायते, नतु 'मण्डं पाती'तिव्युत्पत्त्या मण्डपानकर्तृत्वबोध इति॥ तच्च रूढं नाम त्रिधा कथ्यते–नैमित्तिकं पारिभाषिकम् औपाधिकं चेति। अथवा-'जाति-द्रव्य-गुण-स्पन्दैर्धर्मैः संकेतवत्तया चतुर्धा रूढं कथ्यते-गोगवयादीनां गोत्वादिजात्या, पश्वाद्यादीनां लांगूलधनादिद्रव्येण, धन्यपिशुनादीनां पुण्यद्वेषादिगुणेन, चल-चपलादीनां कर्मणा,–अवच्छिन्नशक्तिमत्त्वात् चातुर्विध्यं रूढानामिति बोध्यम्। **अन्ये**–तल्लक्षणं तु–'यादृशानुपूर्वी यादृशार्थबोधजनकत्वप्रकारकेच्छाविषयतावच्छेदिका, योगरूढभिन्नत्वे सति तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे रूढत्वमिति परिष्कुर्वन्ति। **अपरे** तु–रूढ्यर्थतावच्छेदकधर्मावच्छिन्नविषयताशालिशाब्दनिष्ठकार्यतानिरूपितस्मृतिरूपव्यापारसम्बन्धावच्छिन्नज्ञाननिष्ठकारणतानिरूपितविषयतासम्बन्धावच्छिन्नपदनिष्ठावच्छेदकतावच्छेदकं रूढ्यर्थतावच्छेदकधर्मान्यधर्मावच्छिन्नविषयताशालिशाब्दनिष्ठकार्यतानिरूपितस्मृतिरूपव्यापारसम्बन्धावच्छिन्नज्ञाननिष्ठकारणतानिरूपितविषयतासम्बन्धावच्छिन्नाऽवच्छेदकताश्रयपदाऽघटितं च यत्समुदायत्वं तद्वत्त्वं रूढत्वमिति परिष्कुर्वन्ति॥ योगरूढं लक्षयति–**यत्रत्विति**। यादृशपदघटकाऽवयवशक्तिसमानाधिकरणसमुदायशक्तिप्रयोज्यानुभवविषयतावान् अर्थो भवति तादृशपदघटितसमुदायत्ववत्त्वं योगरूढत्वमिति लक्षणं बोध्यम्॥ तदुदाहरति–**यथा पंकजादिपदमिति**। पंकजपदे योगरूढत्वमुपपादयति–**तथाहीत्यादिना**। 'पंकज'पदं 'पंकात् जायते' इत्याकारकाऽवयवशक्त्या, पंकजनिकर्तृत्वरूपम्=पंकप्रयोज्यजन्मानुकूलकृतिमत्त्वमिति अर्थम् बोधयति, अथ च 'पंकजमि'ति–समुदायशक्त्या=रूढ्या तु–अवयवसंस्थानविशिष्ट-पद्मत्वावच्छिन्नपद्मं बोधयतीत्यर्थः॥ ननु केवलाऽवयवशक्त्या कुमुदं मण्डुकं वा कथं न बोधयति! इत्याशंकते–**न चेति**। केवलया=समुदायशक्त्यसहकृतया, अवयवशक्त्या–'पंकाज्जायते'–इति व्युत्पत्त्या तत्र–'पंकजनी'ति-रूपाऽवयवशक्त्या, कुमुदे=चन्द्रपद्मे, मण्डुके वा, प्रयोगः=शब्दव्यवहारः, स्यात्, कुमुदादेर्बोधः स्यादिति यावदित्यर्थः॥ उद्भिदपदस्य यागविशेषे रूढिज्ञानकालेऽपि खनित्रादौ तात्पर्यज्ञानसत्त्वे केवलावयवशक्तिज्ञानजन्योर्ध्वभेदनकर्तृत्वप्रकारकशाब्दबोधविषयत्ववत् पंकजपदस्यापि पद्मे रूढिज्ञानकाले कुमुदे मण्डुकेऽपि वा अवयवशक्तिज्ञानप्रयोज्यपङ्कजनिकर्तृत्वप्रकारकशाब्दबोधविषयत्वापत्तिरिति भावः॥ प्राचीनमतेन समाधत्ते–**रूढिज्ञानस्येति**। समुदायशक्तिप्रकारकज्ञानस्य, केवलयौगिकार्थबुद्धौ=रूढ्यर्थतावच्छेदकावच्छिन्नविशेष्यत्वाऽनिरूपितरूढ्यर्थतावच्छेदकसमानाधिकरणाऽवयवार्थतावच्छेदकावच्छिन्नविषयताशालिशाब्दबोधं प्रति स्वनिरूपितप्रकारताश्रयाभाववत्त्वसम्बन्धेन कुमुदे मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वात्। स्वं–रूढिज्ञानम्, तन्निरूपितप्रकारताश्रया रूढिः तदभाववत्त्वं कुमुदेऽर्थे–इति कुमुदे शाब्दबोधं प्रतिबध्नातीति प्राचीनाः वदन्ति॥ यौगिकरूढस्य उद्भिदपदस्य तु यागविशेषे रूढिज्ञानकाले स्वनिरूपितप्रकारताश्रयाभाववत्त्वसम्बन्धेन रूढिज्ञानस्य खनित्रादौ सत्त्वेऽपि खनित्रत्वस्य रूढ्यर्थतावच्छेदकत्वाऽभावात् खनित्रनिष्ठशाब्दबोधस्य रूढ्यर्थतावच्छेदकसमानाधिकरणाऽवयवार्थतावच्छेदकावच्छिन्नविषयताशालिशाब्दबोधत्वाऽभावान्न प्रतिबन्धकत्वमिति बोध्यम्॥ **गंगेशोपाध्यायास्तु**–अवयवार्थशाब्दबोधं प्रति कारणज्ञानं यद् अवयवशक्तिज्ञानं तत्प्रति अविरोधित्वाद् ग्राह्याभावाद्यनवगाहित्वाच्च रूढिज्ञानस्य अवयवार्थशाब्दबोधं प्रति प्रतिबन्धकत्वमेव न संभवतीत्यतः प्राचीनमतं निर्युक्ति-

**वाच्यम्, रूढिज्ञानस्य केवलयौगिकार्थबुद्धौ प्रतिबन्धकत्वादिति प्राञ्चः। वस्तुतस्तु समुदायशक्त्युपस्थितपद्मेऽवयवार्थपङ्कजनिकर्तुरन्वयो भवति सान्निध्यात्॥ यत्र तु रूढ्यर्थस्य बाधः प्रतिसन्धीयते तत्र लक्षणया कुमुदादेर्बोधः। यत्र तु कुमुदत्वेन**

---

कम्। किन्तु "व्यक्तिवचनानां सन्निहितविशेषपरत्वमि"तिनियमात्=घटपटादिसन्निहितव्यक्तितात्पर्येण प्रयुक्तानां पदानाम् अव्यवहितोपस्थितव्यक्तिविशेषतात्पर्यकत्वमिति तदर्थाद् योगरूढस्थले पंकजपदस्य पद्मतात्पर्येण प्रयुक्तत्वाद्रूढ्या प्रथमोपस्थितार्थः पद्ममेव पंकजनिकर्तृतया योगशक्तिज्ञानजन्योपस्थितिविषयो भवति न तु कुमुदादि,–प्रथमाऽनुपस्थितत्वात् इति वदन्ति, तन्मतेनाह–**वस्तुतस्त्विति**। समुदायशक्त्युपस्थितपद्मे=रूढिज्ञानजन्यस्मृतिविषयपद्मे एव। अवयवार्थपंकजनिकर्तुः=योगशक्तिज्ञानजन्यस्मृतिविषय-पंकजनिकर्तृत्वावच्छिन्नस्य । अन्वयो भवति=तादात्म्यसम्बन्धेन'पंकजनिकर्त्रभिन्नपद्ममि'तिशाब्दबोधो जायते इत्यर्थ ॥ अत्र हेतुमाह–**सान्निध्यादिति**। रूढ्यर्थस्य प्राथमिकोपस्थितिविषयत्वादित्यर्थः। सान्निध्यादित्यनेन 'व्यक्तिवचनानां सन्निहितविशेषपरत्वमि'तिन्यायः सूचितः। तथाच पद्मव्यक्तितात्पर्येण प्रयुक्तस्य पंकजपदस्य रूढ्या प्रथमोपस्थितपद्मविशेषपरत्वेन अवयवशक्त्या अनन्तरोपस्थितस्य पंकजनिकर्तुः रूढ्यर्थे पद्मेऽभेदान्वयबोधे योग्यतादिसामग्रीसत्त्वात् भवति रूढ्यर्थे एव योगार्थाऽन्वयो, न तु योगार्थे रूढ्यर्थान्वयः, प्रथमाऽनुपस्थिततया निर्बलत्वात्, न वा केवलयोगार्थबोधः, तत्र तात्पर्याऽभावादिति भावः॥ ननु–यत्र 'कुमुद'तात्पर्येणैव 'अत्र पंकजमस्ती'ति प्रयुज्यते तत्र रूढ्यर्थपद्मस्य एतद्देशवृत्तिताया बाधप्रतिसन्धानेन तस्य शाब्दबोधाऽसंभवाद् अवयवशक्तिमात्रेण कुमुदबोधोऽनिवार्य इति तत्र पंकजपदस्य यौगिकत्वापत्तिस्तस्मात् रूढिज्ञानं प्रतिबन्धकं वाच्यमित्यत आह–**यत्र त्विति**। यत्र=यादृशे 'कुमुदतात्पर्येणैव 'अत्र पंकजमस्ती'तिप्रयुक्ते वाक्ये पंकजपदे, रूढ्यर्थस्य=पद्मात्मकार्थस्य, बाधः=समभिव्याहृतपदार्थेन एतद्देशवृत्तित्वेन सह अन्वयानुपपत्तिरूपो बाधः, यद्वा रूढिशक्त्याश्रयपदस्य समभिव्याहृतपदार्थेन सह तात्पर्याऽनुपपत्तिरूपो बाधः, प्रतिसन्धीयते=निर्णीयते, तत्र=तादृशवाक्यघटकपंकजपदे, कुमुदत्वेन रूपेण च बोधे तात्पर्यसत्त्वात्, लक्षणया=जहल्लक्षणया वृत्त्या, कुमुदादेः कुमुदत्वप्रकारकशाब्दबोधः, यदि तु–पंकजनिकर्तृकुमुदत्वेन रूपेण कुमुदे तात्पर्यं तदा अजहल्लक्षणया कुमुदस्य बोध इति 'पंकज'पदम् एतादृशस्थले लाक्षणिकं नतु यौगिकमिति भावः। आदिना मण्डुकतात्पर्येण पंकजपदव्यवहारे तु लक्षणया मण्डुकत्वेन रूपेण बोध इत्यर्थः॥ तत्राऽवयवशक्त्या कुमुदस्य बोधवारणाय रूढिज्ञानस्य प्रतिबन्धकत्वकल्पनापेक्षया लक्षणाकल्पनाया लाघवादितिभावः॥ एवं यत्र न रूढ्यर्थबाधप्रतिसन्धानं किन्तु कारणान्तरस्यरूढ्यर्थस्मरणादेर्विरहस्तत्रापि लक्षणया कुमुदस्य बोधः-इति बोध्यम्॥ ननु यादृश'अत्र पंकजमस्ती'तिवाक्यघटकपंकजपदस्य कुमुदत्वेन रूपेण बोधे न तात्पर्यं रूढ्यर्थपद्मे च एतद्देशवृत्तित्वान्वयस्य बाधस्तत्र पंकजपदेन अवयवशक्त्या कुमुदबोधापत्तिरिति पंकजपदस्य यौगिकत्वापत्तिरित्याशंकामिष्टापत्त्या परिहरति–**यत्र तु कुमुदत्वेनेति**। यत्र तु=यादृशवाक्यघटकपंकजपदे, कुमुदत्वेन रूपेण=धर्मेण, बोधे न तात्पर्यंज्ञानम्=कुमुदत्वावच्छिन्नविषयकबोधेच्छयोच्चरितत्वज्ञानाऽभावः, अथ च पद्मस्य=रूढ्यर्थस्य पद्मत्वावच्छिन्नस्य, बाधः=समभिव्याहृतपदार्थेन एतद्देशवृत्तित्वादिना सह अन्वयानुपपत्त्यात्मको बाधः। तत्र=तादृशवाक्यघटकपंकजपदे, पंकजनिकर्तृत्वेन रूपेण तात्पर्यसत्त्वे इति शेषः, अवयवशक्तिमात्रेण=पंकाज्जायते इत्यवयवशक्तिज्ञानेनैव पंकजनिकर्तृत्वप्रकारक–कुमुदविशेष्यकस्मरणे सति पंकजनिकर्तृत्वप्रकारककुमुदविशेष्यकशाब्दबोधस्य

रूपेण बोधे न तात्पर्यज्ञानं पद्मत्वस्य च बाधस्तत्रावयवशक्तिमात्रेण निर्वाह इत्य न्याहुः॥ यत्र तु स्थलपद्मादाववयवार्थबाधस्तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः। यदि तु स्थलपद्मं विजातीयमेव तदा लक्षणयैवेति॥ यत्र तु यौगिकार्थ-

निर्वाहो भवतीति एतादृशस्थले पंकजपदं यौगिकमिति भावः॥ इत्येवं सर्वत्र निर्वाहसंभवे रूढि-ज्ञानस्य मणिमन्त्रादिन्यायेन केवलयोगशक्तिजन्यशाब्दबोधप्रतिबन्धकत्वकल्पनमनुचितमित्याशयः॥ 'अत्र "यत्र कुमुदत्वेन बोधे तात्पर्याभावः पद्मे च अन्वयाऽनुपपत्तिस्तत्र अन्वयाऽनुपपत्त्यात्मकबीज-बलादेव पुनः स्मृतपंकजपदेन लक्षणया पंकजनिकर्तृत्वाऽपेक्षया शीघ्रोपस्थितकुमुत्वप्रकारकस्मरण-शाब्दबोधयोरुपपत्त्यौचित्ये पंकजपदस्य यौगिकत्वकल्पनम् अनुचितमित्यस्वरसः 'आहु'रित्यनेन सूचितः"॥ ननु–यत्र स्थलपद्म-चित्रितपद्माद्यभिप्रायेण 'अत्र पंकजमस्ती'तिप्रयुक्तं तत्र स्थलपद्म-चित्रितपद्मादौ पंकजनिकर्तृरूपाऽवयवार्थस्याऽभेदेन अन्वयाऽनुपपत्तेर्नाऽवयवार्थबोधः, न वा रूढय-र्थकमलबोधोऽपि भविष्यति, कमले तात्पर्याऽभावात्, तत्र का गतिरित्याकांक्षायामाह–**यत्र स्थलपद्मादाविति**। स्थलपद्मम्=भाषायां( गुलाब )पुष्पम्, आदिना कुड्यादावालेखितर-ङ्गपद्मम्, तथाच यत्राऽवयवशक्त्यनाश्रयपद्मत्वप्रकारकबोधतात्पर्येण प्रयुक्तपंकजपदाऽभिप्रेतस्थल-पद्मचित्रितरङ्गपद्मादौ, अवयवार्थस्य=पंकजनिकर्त्रात्मकस्य, बाधः=अन्वयाऽनुपपत्तिप्रतिसन्धानं भवति, तत्र पद्मत्वजातेः कमलस्थलपद्म( गुलाब )पुष्पादिसामान्यधर्मत्वपक्षे 'अत्र पंकजमस्ती'-तिवाक्ये, पंकजपदस्य "पंकजपदेन पद्मत्वेन स्थलपद्मादिबोधो जायतामि'तितात्पर्येण प्रयुक्तत्वात्, **समुदायशक्त्या**=रूढिशक्तिज्ञानजन्यपद्मत्वप्रकारकस्मृत्या, **पद्मत्वेन रूपेण**=पद्मत्वप्रकारक-शाब्दबोधो जायते, तादृशस्थले पंकजपदं रूढमुच्यते इति भावः॥ यदि तु पद्मत्वं न स्थलपद्मे चित्रितपद्मे वा वर्तते, कमलतः स्थलपद्मादेर्विजातीयत्वात्, तदा तु गत्यन्तरमाह–**यदि त्विति**। स्थलपद्मं–भाषायां गुलाबपुष्पं, कमलतो विजातीयमेव=पद्मत्वानवच्छिन्नमेव स्वीक्रियते, तदा तु उक्त-वाक्यघटकपंकजपदेन **लक्षणया**=अजहत्स्वार्थलक्षणया, स्थलपद्मस्य बोधो मन्तव्य इति, तत्र तात्प-र्याऽनुपपत्तिप्रयोज्याऽजहत्स्वार्थलक्षणया पंकजपदेन पद्मसादृश्यप्रकारकस्थलपद्मविशेष्यकस्मरणे सति पद्मसादृश्यप्रकारकस्थलपद्मविशेष्यकबोधः 'अत्र पद्मसदृशस्थलपद्ममस्ती'ति जायते, तत्र पंकजपदं लाक्षणिकमेवेति भावः॥ तद् योगरूढं–समासात्मकं कृष्णसर्पादि, तद्धिताक्तं च वासुदेवादीति द्विधा बोध्यम्, कृदन्तं पंकजादिकमपि समासान्तर्भूतमेव बोध्यम्॥ लक्षणं तु–यादृशानु-पूर्वी स्वाश्रयशक्ययादृशार्थधर्मिकस्वाश्रयावयववृत्त्युपस्थाप्ययादृशार्थप्रकारकान्वयबोधजनकतावच्छेदिका तादृशानुपूर्वीमन्नाम तादृशार्थघटिततादृशार्थे योगरूढमिति। अथवा–रूढिशक्तिनिरूपकतावच्छेदकं रूढिशक्तिसमानाधिकरणशक्तिनिरूपकपदघटितं रूढिशक्यतावच्छेदकसमानाधिकरणधर्मावच्छिन्नश-क्तपदघटितं वा यत्समुदायत्वं तद्वत्त्वं योगरूढत्वमिति। यौगिकरूढेऽतिव्याप्तिवारणाय–सामानाधि-करण्यनिवेश इति॥ यौगिकरूढपदलक्षणमाह–**यत्र तु यौगिककार्थरूढ्यर्थयोरिति**। यत्र=यादृशवाक्यघटकपदेन, यौगिकार्थरूढ्यर्थयोः=योगार्थस्य रूढ्यर्थस्य च, स्वातन्त्र्येण=तादात्म्याऽनव-गाहितया, बोधः=शाब्दबोधो भवति, तत्पदं यौगिकरूढमित्यर्थः। लक्षणं तु–'रूढिनिरूपकतावच्छे-दकरूढ्यर्थतावच्छेदकाऽसमानाधिकरणधर्मावच्छिन्नशक्तपदघटितसमुदायत्ववत्त्व'मिति। पंकजादिप-देऽतिव्याप्तिवारणाय–रूढ्यर्थतावच्छेदकाऽसमानाधिकरणधर्मावच्छिन्नशक्तत्वं पदविशेषणम्, यौगिक-पाचकादिपदेऽतिव्याप्तिनिरासाय–रूढिनिरूपकतावच्छेदकत्वं समुदायत्वविशेषणम्, रूढगवादिपदेऽ-तिव्याप्तिनिरासाय–तादृशपदघटितत्वं समुदायत्वविशेषणम्। अपरे तु–रूढिशक्यतावच्छेदकावच्छिन्न

रूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढम्, यथोद्भिदादिपदम्। तत्र हि उद्भेदनकर्ता तरुगुल्मादिर्बुध्यते यागविशेषोऽपीति ॥ ८१ ॥

लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः।

लक्षणेति। गङ्गायां घोष इत्यदौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्या-

---

विषयताशालिशाब्दबोधनिष्ठकार्यतानिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासम्बन्धावच्छिन्नावच्छेदकतावच्छेदकं रूढिशक्यतावच्छेदकाऽसामानाधिकरणधर्मावच्छिन्नविषयताशालिशाब्दबोधनिष्ठकार्यतानिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासम्बन्धावच्छिन्नाऽवच्छेदकताश्रयपदघटितं च यत्समुदायत्वं तद्रत्वं यौगिकरूढत्वमिति वदन्ति। यौगिकरूढमुदाहरति–यथा–उद्भिदादिपदमिति। तत्र=उद्भित्पदे उत्-ऊर्ध्वं भिनत्तीति व्युत्पत्तेः अवयवशक्तिज्ञानमात्रेण ऊर्ध्वभेदनकर्तृत्वप्रकारकस्मरणे सति उद्भेदनकर्ता=उद्भेदनकर्तृत्वविशिष्टतरुः, उद्भेदनकर्तृत्वविशिष्टगुल्मः, आदिना उद्भेदनकर्तृत्वविशिष्टलता इत्यादिर्बुध्यते, अथ च समुदायशक्तिज्ञानमात्रेण 'उद्भिदा यजेत पशुकाम'इति श्रुतौ उद्भिन्नामकयागस्मरणे सति उद्भिन्नामकयागो बुध्यते इत्यर्थः।। अपिना–महारजतादिपदानां ग्रहः, तच्च कदाचित् महच्च तद्रजतं चेति व्युत्पत्त्या बृहद्रजतं, कदाचिद्रूढ्या कांचनमभिधत्ते, न तु जात्वपि रजताऽभिन्नकांचनम्, अयोग्यत्वादिति। केचित्तु मण्डपपदं यौगिकरूढं–मण्डं पिवतीति व्युत्पत्त्या कदाचित् मण्डपानकर्तारं, कदाचिच्च रूढ्या गृहवितानम् अभिधत्ते इति वदन्ति॥ एवं 'कुंकुमा–गुरु-कस्तुरी–कक्कोलैर्यक्षकर्दम'इतिकोशस्थं यक्षकर्दमपदं कदाचिद्रु रूढ्यर्थं कदाचिच्च यक्षाणां कर्दम इति व्युत्पत्त्या योगार्थं बोधयन्तीति वदन्तीति॥ ८१॥

एवं शक्त्यात्मिकां वृत्तिं निरूप्येदानीं लक्षणां निरूपयति–मूले लक्षणेति। शक्यसम्बन्धत्वं लक्षणायाः लक्षणम्, शक्यस्य=शक्त्योपस्थापितस्यार्थस्य, सम्बन्धः=यः कश्चित्-सामीप्य–सादृश्यादिः यथायोग्यं सम्बन्धः स एव लक्षणा इत्यर्थः। यादृशानुपूर्व्यवच्छिन्नं नाम, यद्धर्मविशिष्टयन्निरूपितशक्तिशून्यत्वे सति यद्धर्मविशिष्टयन्निरूपितसम्बन्धवन्निरूपितशक्तिनिरूपकं तद्धर्मप्रकारकतद्विशेष्यकबोधे तादृशानुपूर्व्यवच्छिन्नं नाम लक्षकमिति लक्षणार्थः॥ शक्यपरम्परासम्बन्धो लक्षणा इति संक्षिप्तार्थः। प्राञ्चः अन्वयाऽनुपपत्तिः तात्पर्याऽनुपपत्तिश्च लक्षणाबीजे, यत्र परस्परपदार्थयोः अन्वयो नोपपद्यते तत्रैकतरपदस्य लक्षणा उद्भाव्यते, एवं यत्रार्थे वक्तुस्तात्पर्यं न भवति तत्र लक्षणा उद्भाव्यते–इति वदन्ति। नव्यास्तु तात्पर्यानुपपत्तिमेव सर्वत्रानुगतं बीजं वदन्तीत्यभिप्रायेणाह–तात्पर्यानुपपत्तित इति। यत्रार्थे वक्तुरिच्छात्मकतात्पर्यं न उपपद्यते तत्रार्थे तात्पर्याऽनुपपत्तितः बीजात् लक्षणयाऽन्योऽर्थो बोधितो भवतीति भावः॥ मुक्तावलीग्रन्थकारेण लक्षणा द्विविधा स्वीकृता–जहत्स्वार्था अजहत्स्वार्था च, जहतीति जहति, जहति स्वानि( पदानि )यं, सः=जहत्स्वः, जहत्स्वः अर्थो यस्यां सा–इति व्युत्पत्त्या शक्यार्थसम्बन्धिमात्रबोधजनिकेति। एवं न जहतीति अजहति, अजहति स्वानि यं सः, तादृशोऽर्थो यस्यां से'ति व्युत्पत्त्या शक्यार्थलक्ष्यार्थोभयविषयकबोधजनिकेति॥ एवमन्ये नैयायिका वेदान्तिनश्च तृतीयां जहदजहल्लक्षणां स्वीकुर्वन्ति, जहति च अजहति च–जहदजहति, जहदजहति स्वानि यं सः, तादृशोऽर्थो यस्यां सेति व्युत्पत्त्या शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधजनिकेति, एतदुदाहरणं तु 'सोऽयं देवदत्त'इति, तत्र परोक्षत्वरूपतत्तांशस्य सन्निकृष्टत्वरूपेदन्त्वांशे देवदत्तेऽन्वयाऽनुपपत्तेः तत्तांशस्य हानमिदन्तांशस्य अहानमिति जहदजहल्लक्षणया शुद्धदेवदत्तस्य बोध इति॥ तत्र जहत्स्वार्थलक्षणामुदाहरति–मुक्तावल्यां–गङ्गायां घोष इति। अत्र गङ्गापदस्य

**न्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा यत्र प्रतिसन्धीयते तत्र लक्षणया तीरस्य बोध इति। सा च शक्यसम्बन्धरूपा। तथाहि-प्रवाहरूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात्तीरस्य स्मरणम्। ततः शाब्दबोधः। परन्तु यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा यष्टीः प्रवेशयेत्यत्र लक्षणा न स्यात्, यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात्। तेन यष्टिप्रवेशे भोजनतात्पर्यानुपपत्त्या यष्टिधरेषु लक्षणा। एवं काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य दध्युपघातके लक्षणा, सर्वतो दधिरक्षायास्तात्पर्यविषयत्वात्।**

---

शक्यार्थो भगीरथरथखातावच्छिन्नजलप्रवाहविशेषः, तत्र **घोष**पदशक्यार्थस्य आभीरपल्लीरूपस्य अन्वयाऽनुपपत्तिर्भवति, नहि जलप्रवाहे आभीरपल्लीसम्बन्धः संयोगादिः आधाराधेयभावादिर्वा संभवति, तथा सति प्रवहणापत्तेः, अतः यत्र=यदा, अन्वयानुपपत्तिरूपं बीजं, प्रवाहार्थे गङ्गापदस्य तात्पर्याऽनुपपत्तिरूपं बीजं वा, प्रतिसन्धीयते=ज्ञायते, तत्र=तदा, लक्षणया=पुनस्स्मृतगङ्गापदेन लक्षणाज्ञानजन्येन तीरत्वप्रकारकस्मरणेन, तीरस्य बोधः=तीरत्वावच्छिन्नविषयकबोधः 'तीरवृत्तिघोष' इतिबोधो जायते इत्यर्थः। लक्षणायाः सामान्यलक्षणमाह-**सा च शक्यसम्बन्ध इति**। शक्यार्थसम्बन्धत्वमेव लक्षणात्वमित्यर्थः॥ तच्छक्तिशून्यत्वे सति तत्सम्बन्धिशक्तत्वमिति यावत्॥ लक्षणं समन्वयन्नुदाहृतस्थले उपपादयति-**तथाहीति**। 'गङ्गायां घोष'इत्यत्र गङ्गापदशक्यार्थप्रवाहसामीप्यात्मकसम्बन्धस्य लक्षणात्मकस्य, तीरे=तीरत्वावच्छिन्ने, गृहीतत्वात्=ज्ञातत्वात्, तीरस्य स्मरणम्=तीरत्वावच्छिन्नविषयकस्मृतिर्जायते, ततः=स्मरणाऽनन्तरम्, शाब्दबोधः=तीरत्वावच्छिन्नविषयकबोधो जायते इत्यर्थः॥ अन्वयाऽनुपपत्तेर्लक्षणाबीजत्वं निराकरोति-**परन्त्विति**। यदि अन्वयानुपपत्तिर्लक्षणाबीजं स्यात् तदा यष्टिधरबोधतात्पर्येण प्रयुक्त'यष्टीः प्रवेशये'तिवाक्यघटकयष्टिपदस्य यष्टिधरे लक्षणा=दण्डसंयोगानुयोगित्वात्मिका, न स्यात्, भवति च तत्र लक्षणा, बीजं चान्वयाऽनुपपत्तिरूपं नास्ति यष्टिपदार्थे दण्डे प्रवेशान्वयस्य=गृहप्रवेशसंसर्गस्य, अनुपपत्तेरभावात्-उपपन्नत्वात्, तथाच कारणाऽभावे कार्यसत्तात्मकव्यतिरेकव्यभिचाराद् अन्वयानुपपत्तिर्न लक्षणाबीजमिति भावः। तेन=तात्पर्यानुपपत्तेर्लक्षणाबीजत्वस्वीकारेण, यष्टिप्रवेशे, भोजनतात्पर्याऽनुपपत्त्या=यष्टिप्रवेशस्य भोजनतात्पर्यविषयत्वाभावाद् भोक्तृणां प्रवेशस्यैव तात्पर्यविषयत्वात् भोजनतात्पर्यविषयत्वानुपपत्तिप्रतिसन्धानेन यष्टीरितिपदस्य यष्टिधरेषु लक्षणा-अजहत्स्वार्थलक्षणा बोध्येति भावः॥ अत्र 'यष्टयो गृहं प्रविशन्ति ताः प्रेरय'-इत्यर्थबोधतात्पर्येण 'यष्टीर्गृहं प्रवेशये'ति गृहमध्याहृत्य प्रयोगः, तत्र संयोगजनकव्यापारकर्तृत्वनिर्वाहकव्यापारः ण्यन्तधात्वर्थः, तद्घटकसंयोगे द्वितीयान्तगृहपदार्थगृहवृत्तित्वस्यान्वयः, तादृशधात्वर्थघटककर्तृत्वे द्वितीयान्तयष्टिपदार्थवृत्तित्वस्याऽन्वयः, अत एव साक्षाद्धात्वर्थतावच्छेदकफलशालित्वाद् यष्टिपदार्थस्य मुख्यकर्मत्वं लोट्पदार्थः कृतिः, तथा च गृहवृत्तिसंयोगजनकव्यापारानुकूलयष्टिपदार्थवृत्तिकर्तृत्वनिर्वाहानुकूलव्यापारानुकूलकृतिमाँस्त्वमिति शाब्दबोधलाभ इति॥ अजहत्स्वार्थलक्षणामुदाहरति-**एवं काकेभ्य इति**। 'काकेभ्यो दधि रक्ष्यतामि'तिवाक्यघटककाकपदस्य, दध्युपघातके=दधिनाशकत्वावच्छिन्ने अजहत्स्वार्थलक्षणा काकवदनिष्टकारकत्वसम्बन्धात्मिका भवति, तत्र सर्वतः=दध्युपघातकेभ्यः सर्वेभ्यः, दधिरक्षायाः=दधिनिष्ठायाः नाशाऽप्रतियोगितायाः, तात्पर्यविषयत्वात=वक्तुरिच्छाविषयत्वात्, तादृशतात्पर्यस्य काकपदशक्यार्थे काकेऽनुपपत्त्या तात्पर्याऽनुपपत्त्यात्मकबीजाल्लक्षणा उद्भाव्यते इत्यर्थः॥ काकेभ्य इति पञ्चम्या जन्यत्वमर्थः, व्यापारो नाशाऽनुत्पत्तिश्च धात्वर्थः, एकपदार्थयोरपि व्युत्पत्तिवैचित्र्येण विशेषणविशेष्यभावेनाऽन्वयः, तथाच-'दध्युपघातकजन्यनाशोत्पत्तिप्रतियोगिकत्वत्कर्तृकव्यापारप्रयोज्याऽभावा-

एवं छत्रिणो यान्तीत्यादौ छत्रिपदस्यैकसार्थवाहित्वे लक्षणा। इयमेवाजहत्स्वार्था लक्षणेत्युच्यते। एकसार्थवाहित्वेन रूपेण छत्रितदन्ययोर्बोधात्॥ यदि चान्वयानुप-

धिकरणं दधीति शाब्दबोधः॥ अजहत्स्वार्थाया उदाहरणान्तरमाह–**एवं छत्रिणो यान्ती'**त्यादा-**विति**। छत्र्यछत्रिषु गच्छत्सु छत्रिणां बाहुल्येन छत्रिणो यान्तीत्यच्छत्रिषु यानकर्तृत्वाऽनुपपत्त्या 'छत्रि'पदस्य छत्र्यछत्र्युभयसाधारणे एकसार्थवाहित्वे=एकसार्थवाहित्वविशिष्टे अजहत्स्वार्थलक्षणा =छत्रिघटितत्वसम्बन्धाश्रिमिका उद्भाव्यते, तथा च 'यानानुकूलकृतिमन्त एकसार्थवाहा'इत्य-न्वयबोधः। इयमेव=शक्याऽशक्योभयधर्मावच्छिन्नलक्षणैव, अजहत्स्वार्थलक्षणा=अजहति स्वानि पदानि यं सः, तादृशोऽर्थो यस्यां से'तिव्युत्पत्त्या–शक्यार्थलक्ष्यार्थोभयविषयकबोधजनिका उच्यते इत्यर्थः॥ ननु कथमियमजहत्स्वार्था उच्यते–इत्याकांक्षायामाह–**एकसार्थवाहित्वेऽपि**। छत्रिपदेन लक्षणया छत्र्यछत्रिसाधारणेन एकसार्थवाहित्वेन धर्मेण, छत्रितदन्ययोर्बोधात्=छत्र्यछत्रिणां शाब्दबोधविषयत्वादित्यर्थः॥ ननु–छत्रिपदस्य छत्रमस्यास्तीत्यर्थे छत्रपदोत्तरं तद्धितेनिप्रत्ययेनैव निष्पन्नतया प्रकृतिप्रत्ययसमुदायरूपत्वेन वाक्यत्वात् वाक्ये शक्तिविरहेण लक्षणाया अप्यसंभवइति चेन्न। वैयाकरणैः राजपुरुषादिसमासस्य राजस्वत्ववत्पुरुषे, पाचकछत्र्यादिपदस्य पाककर्तृच्छत्रसम्ब-न्ध्यादौ शक्तेरंगीकारेण तत्र वाक्ये लक्षणावत्त्वे बाधकाऽभावादितिमतेनेदं छत्रिपदलक्षणाभिधानं बोध्यम्। प्राञ्चस्तु–वाक्यस्य लक्षणाविरहेऽपि स्वबोध्यसम्बन्धरूपलक्षणावादिमतमाश्रित्य छत्रिपदस्य लक्षणाऽङ्गीकार इत्याहुः। नव्यास्तु–छत्रपदस्य एकसार्थवाहित्वे लक्षणा, मतुबः सम्बन्धी अर्थः, तथा च एकसार्थवन्तो यान्तीत्यर्थः, एकसार्थवाहित्वं च–छत्र्यादिघटितसमूहत्वम् इत्याहुः॥ अन्ये तु–मत्वर्थेन्प्रत्ययस्यैव छत्र्यादिघटितसमूहत्वावच्छिन्ने लक्षणा, छत्रपदं तात्पर्यग्राहकम् इति वदन्ति। इतरे तु–छत्रिपदस्य छत्रविशिष्टत्वावच्छिन्ने यौगिकत्वं, राजत्वावच्छिन्ने रूढत्वमिति–योगरूढत्वं मन्यन्ते॥ ननु–सर्वत्र तात्पर्याऽनुपपत्तेर्लक्षणाबीजत्वे मानाऽभावः, तात्पर्याऽनुपपत्तिज्ञानस्य तदर्थ-प्रतीतीच्छयोच्चरितत्वघटिततया गौरवात्, किन्तु यत्र अन्वयाऽनुपपत्तिप्रतिसन्धानाऽभावस्तत्रैव अनायत्या तात्पर्याऽनुपपत्तिप्रतिसन्धानस्य लक्षणाग्राहकत्वम्, न च परस्परव्यभिचार इति वाच्यम्, अव्यवहितोत्तरत्वनिवेशेनैव तद्वारणात्, एकत्र एकस्यैव कारणत्वेन व्यवस्थानात्, तथा च 'गंगायां घोष'इत्यत्र तीरत्वावच्छिन्नलक्षणाग्रहं प्रति गङ्गापदशक्ये घोषाधारत्वमनुपपन्न-मित्यन्वयाऽनुपपत्तिज्ञानस्यैव हेतुत्वमिति–प्राचां मतं सिंहगुहावलोकनन्यायेन खण्डयति–**यदि चाऽन्वयाऽनुपपत्तिरिति**। अयं भावः–भवति हि अनुभवानुसारिणी व्यवस्था, अनुभवश्च–यदा 'गङ्गापदं तीरप्रतीतीच्छयोच्चरितं तदा तीरे लाक्षणिकं, घोषपदं तु तदानीम् आभीरपल्ल्यां शक्तम्, तेन 'गंगायां घोष'इत्यत्र 'तीरवृत्त्याभीरपल्ली'ति बोधो जायते, अथ यदा 'घोषपदं मत्स्य-प्रतीतीच्छयोच्चरितं तदा मत्स्ये लाक्षणिकं, गंगापदन्तु तदानीं जलप्रवाहे शक्तम्, तेन जलप्रवाह-वृत्तिमत्स्य'–इति बोधो जायते, एतादृशानुभवादयं नियमः निर्गलितः–"यत्र वाक्ये यत्पदं येन वक्त्रा यदर्थप्रतीतीच्छयोच्चरितं तत्र वाक्ये तत्पदं तदर्थे लाक्षणिकं नान्यत्र वाक्ये'इति, स च तात्प-र्याऽनुपपत्तेर्लक्षणाबीजत्वे सुरक्षितो भवति, अन्वयाऽनुपपत्तेर्लक्षणाबीजत्वे तु भज्यते, तद्यथा— प्रथमं वक्त्रा 'गंगायां घोष'इतिवाक्यं तीरवृत्त्याभीरपल्लीबोधतात्पर्येण प्रयुक्तम्, तत्र श्रोतुः द्वयोः जलप्रवाहाऽऽभीरपल्ल्योरर्थयोरन्वयाऽनुपपत्त्या गंगायास्तीरे लक्षणोत्तरं शाब्दबोधे 'तीरवृत्त्याभीर-पल्ली'तिजनिते सति पुनस्तेनैव वक्त्रा 'गङ्गायां घोष'इति वाक्यान्तरं 'प्रवाहवृत्तिमत्स्य'इतिबोधता-त्पर्येण प्रयुक्तम्, तस्यैव श्रोतुस्तत्र पुनः प्राक्संस्कारबलाद् अन्वयाऽनुपपत्तिस्मरणेनैव गङ्गायास्तीरे

पत्तिर्लक्षणाबीजं स्यात्, तदा क्वचिद्गङ्गापदस्य तीरे, क्वचिद्घोषपदस्य मत्स्यादौ, लक्षणेति नियमो न स्यात्।

इदन्तु बोध्यम्। शक्यार्थसम्बन्धो यदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन

---

लक्षणया 'तीरवृत्त्याभीरपल्ली'त्येव बोधो जन्येत, यदि तात्पर्याऽनुपपत्तिर्लक्षणाबीजं स्यात्, तथा चात्र 'येन वक्त्रा 'गङ्गायां घोष'इति वाक्ये यत् घोषपदं मत्स्यतात्पर्येण प्रयुक्तं तदानीं तद्वाक्ये घोषपदं मत्स्ये लाक्षणिकमि'ति नियमो व्यभिचरितः, पुनर्वक्त्रभिप्रेतबोधोऽपि नोपपन्न इति। यदि तु तात्पर्याऽनुपपत्तिर्लक्षणाबीजं स्यात् तदा घोषपदे विना लक्षणां मत्स्यार्थात्मकतात्पर्यार्थभानाऽसंभवात्। तात्पर्याऽनुपपत्त्या मत्स्ये लक्षणयैव मत्स्यार्थलाभेन 'प्रवाहे मत्स्य'इति बोधः उपपद्येत। एवं–वैपरीत्येनाऽपि ऊह्यम्–तद्यथा–प्रथमं वक्त्रा 'गङ्गायां घोष'इतिवाक्यं 'प्रवाहे मत्स्य'इत्यर्थप्रतीतीच्छयोच्चरितं, तच्छ्रुत्वा प्रवाहे आभीरपल्ल्या अन्वयाऽनुपपत्त्या घोषपदस्य मत्स्ये लक्षणां कृत्वा 'प्रवाहे मत्स्य'इति बोधः श्रोतुर्जनितः, ततः तेनैव वक्त्रा पुनः 'गङ्गायां घोष'इतिवाक्यान्तरं तीरतात्पर्येण प्रयुक्तं, तत्र पुनः स्तेनैव श्रोत्रा प्राक् संस्कारबलात् पूर्ववदेवाऽन्वयाऽनुपपत्त्या घोषपदस्य मत्स्यार्थे लक्षणां कृत्वा 'प्रवाहे मत्स्य'इत्येव शाब्दबोध उद्भावितः, तत्रापि "यत् यदा येन वक्त्रा तीरार्थप्रतीतीच्छयोच्चरितं तत् गंगापदं तदानीं तीरार्थे लाक्षणिकमि"तिनियमभंगो जातः, तात्पर्याऽनुपपत्तेर्लक्षणाबीजत्वे तु गंगापदस्य तीरतात्पर्यं लक्षणां विना नोपपद्यते इति तीरतात्पर्याऽनुपपत्त्या गंगापदस्य तीरे लक्षणां कृत्वा स एव श्रोता तत्र 'तीरवृत्त्याभीरपल्लीति' शाब्दबोधं विन्दते। तथा च क्वचित्=तीरवृत्तिर्घोषइति बोधतात्पर्येण पुनरुच्चारित'गंगायां घोष' इति वाक्ये, गंगापदस्य तीरे लक्षणेति नियमोऽन्वयाऽनुपपत्तेः लक्षणाबीजत्वे भज्येतेत्यर्थः, एवं क्वचित्=प्रवाहे मत्स्य–इतिबोधतात्पर्येण पुनरुच्चारित'गंगायां घोष'इतिवाक्ये, घोषपदस्य मत्स्ये, आदिना कच्छपे लक्षणेति, नियमोऽन्वयाऽनुपपत्तेः लक्षणाबीजत्वे भज्येतेत्यर्थः॥ तत्र तत्र प्राक्संस्कारानुसारेण अन्वयानुपपत्तिसत्त्वेऽपि वक्त्रभिप्रेतशाब्दबोधः तात्पर्यानुपपत्त्यैव लक्षणायां जायमानायां सत्याम् उपपद्यते इति तात्पर्याऽनुपपत्तिरेव लक्षणाबीजं न त्वन्वयाऽनुपपत्तिरिति॥ अन्ये तु–तत्र अन्वयानुपपत्तिर्नास्ति अथ च शाब्दबोधो जायते–इति व्यतिरेकव्यभिचारं संगमयन्ति, तत्तु अनवबोधप्रयुक्तं भ्रमप्रयुक्तं वा व्याख्यानं, बोध्यम्। यष्टीः प्रवेशय इत्यत्रैव व्यतिरेकव्यभिचारस्य दत्तत्वात्। अत्र तु 'यत्र अन्वयाऽनुपपत्तिप्रतिसन्धानाभावस्तत्रैव अनायत्या तात्पर्याऽनुपपत्तिप्रतिसन्धानस्य लक्षणाग्राहकत्वमि'त्याशंकायाः समाधानग्रन्थत्वाद् अन्वयाऽनुपपत्तिप्रतिसन्धानस्थलेऽपि तात्पर्याऽनुपपत्त्या लक्षणाबीजत्वं वज्रलेप इति प्रदर्शनप्रयासादिति **ध्येयम्**॥ तात्पर्याऽनुपपत्तिर्नाम पदविशेष्यक–स्वशक्यार्थबोधेच्छाप्रयोज्योच्चरितत्वाभावनिर्णयः, स च लक्षणाबीजं नाम लक्षणाज्ञानं प्रति हेतुज्ञानविधया प्रयोजकं, तद्यथा–'गंगादिपदं, तीरादिलक्षकम्, स्वशक्यार्थविषयकबोधेच्छाप्रयोज्योच्चारणविषयत्वाभाववत्त्वे सति बोधजनकत्वादि'ति।

ननु–लक्षणाज्ञानस्य पदार्थस्मारकत्वे 'तत्पदलक्ष्यतावच्छेदकप्रकारकस्मृतिं प्रति तत्पदलक्ष्यतावच्छेदकावच्छिन्नविशेष्यकतत्पदनिरूपितलक्षणाज्ञानस्य हेतुत्वमि'तिकार्यकारणभावः, एवं च सति तीरत्वस्येव गङ्गातीरत्वस्यापि गंगापदलक्ष्यतावच्छेदकतया गंगापदलक्ष्यतावच्छेदकगङ्गातीरत्वावच्छिन्नविशेष्यकगंगापदलक्षणाज्ञानात् केवलतीरत्वप्रकारकस्मरणापत्तिः, तादृशस्मरणात् केवलतीरत्वप्रकारकशाब्दबोधापत्तिश्चेत्याशंकां लक्ष्यतावच्छेदकविशेषधर्मघटितरूपेण लक्षणाज्ञानस्य कारणत्वोक्त्या परिहरति—**इदं तु बोध्यमित्यादिना**। इदं वक्ष्यमाणं बोध्यमित्यर्थः। तदेवाह–

**तीरबोधः। यदि तु गङ्गातीरत्वेन रूपेण गृहीतस्तदा तेनैव रूपेण स्मरणम्। अत एव लक्ष्यतावच्छेदके न लक्षणा,-तत्प्रकारकबोधस्य तत्र लक्षणां विनाप्युपपत्तेः।**

**शक्यार्थसम्बन्ध इति।** शक्यार्थसम्बन्धः=लक्षणा, यदि=यदा, तीरत्वेन रूपेण गृहीतः=तीरत्वावच्छिन्न(तीर)विशेष्यकज्ञानीयप्रकारतावान्, लक्षणाज्ञानं यदा तीरत्वावच्छिन्नविशेष्यकमिति यावत्। तदा=तदुत्तरक्षणे, तीरत्वेन रूपेण=तीरबोधः तीरत्वावच्छिन्नतीरविशेष्यकस्मरणे सति तीरत्वावच्छिन्नतीरविशेष्यकः, शाब्दबोधो भवतीत्यर्थः, तथा च 'गङ्गापदलक्ष्यतावच्छेदकतीरत्वावच्छिन्नविशेष्यक-गङ्गापदनिरूपितलक्षणाज्ञानस्य गंगापदलक्ष्यतावच्छेदकतीरत्वप्रकारकस्मरणं प्रत्येव कारणत्वमि'ति कार्यकारणभावात् न गंगातीरत्वावच्छिन्नविशेष्यकलक्षणाज्ञानात् शुद्धतीरत्वप्रकारकस्मरणाद्यापत्तिरिति ॥ **यदि तु**=यदा तु, लक्षणाज्ञानं गंगातीरत्वावच्छिन्नविशेष्यकम्, तदा=तादृशलक्षणाज्ञानोत्तरक्षणे, **तेनैव रूपेण स्मरणम्**=गंगातीरत्वप्रकारकस्मरणे सति, गंगातीरत्वावच्छिन्नविशेष्यकः शाब्दबोधो जायते इत्यर्थः, तथा च-'गंगापदलक्ष्यतावच्छेदकगंगातीरत्वावच्छिन्नविशेष्यक-गंगापदनिरूपितलक्षणाज्ञानस्य गंगापदलक्ष्यतावच्छेदकगंगातीरत्वप्रकारकस्मरणं प्रत्येव कारणत्वमि'तिकार्यकारणभावात् न केवलतीरत्वावच्छिन्नविशेष्यकलक्षणाज्ञानात् गंगातीरत्वप्रकारकस्मरणाद्यापत्तिरिति भावः॥ अत्र गंगापदस्य तीरत्वावच्छिन्ने यदा लक्षणा सा जहत्स्वार्था, यदा तु गंगातीरत्वावच्छिन्ने, तदा सा अजहत्स्वार्था इति **प्राचीनाः॥ नव्यास्तु**-लक्ष्यनिष्ठविषयत्वानिरूपितं यत् शक्यनिष्ठविषयत्वं तदनिरूपकशाब्दबोधप्रयोजकलक्षणात्वं जहत्स्वार्थलक्षणात्वमिति निर्वचनात् उभयपक्षेऽपि जहत्स्वार्थत्वं मन्यन्ते। अन्ये तु-समभिव्याहृतपदार्थनिष्ठविषयत्वाऽनिरूपिता या शक्यार्थनिष्ठविषयता तन्निरूपकशाब्दबोधप्रयोजकलक्षणात्वमेव जहत्स्वार्थत्वमिति निर्वचनेन समभिव्याहृतसप्तम्यर्थाऽऽधेयतानिष्ठविषयत्वाऽनिरूपिता या गंगातीरत्वावच्छिन्नलक्षणाज्ञानाधीनशाब्दबोधीयगंगानिष्ठविषयता तन्निरूपकशाब्दबोधप्रयोजकत्वात् उभयपक्षेऽपि जहत्स्वार्थत्वं मन्यन्ते। वस्तुतस्तु-शक्यसाधारणधर्मानवच्छिन्नलक्षणात्वं जहत्स्वार्थलक्षणात्वमिति गंगातीरत्वस्य प्रवाहसाधारणधर्मत्वाऽभावेन उभयपक्षेऽपि जहत्स्वार्थत्वं निराबाधमिति, एवं 'यष्टीः प्रवेशय' 'मञ्चाः क्रोशन्ती'त्यादावपि यष्टिधरत्वमञ्चस्थत्वादिना बोधे अजहत्स्वार्थैवेति ध्येयम्॥ **ननु**-यथा 'जात्याकृतिव्यक्तयः पदार्थ'इतिन्यायसूत्रे 'पदार्थ'इत्येकवचनेन जाता-वाकृतौ व्यक्तौ च पृथक् शक्तिं केचन प्राचः कल्पयन्ति तथा लक्षणाऽपि लक्ष्यतावच्छेदकेऽपि कल्पनीयेत्याशंकायां तदुभयमतं खण्डयितुं प्रथमं लक्ष्यतावच्छेदके लक्षणां खण्डयति-- **अत एवेत्यादिना।** अत एव=तद्धर्म( तीरत्वा )वच्छिन्न( तीर )विशेष्यकलक्षणाज्ञानस्य तद्धर्म(तीरत्व)प्रकारकस्मरणं प्रति स्मरणस्य च तद्धर्म(तीरत्व)प्रकारकशाब्दबोधं प्रति कारणत्वमित्यादिकार्यकारणभावादेवेत्यर्थः, वृत्तिज्ञान-पदार्थस्मरण-पदार्थशाब्दबोधानां समानप्रकारकत्वेन कार्यकारणभावस्वीकारादेवेति यावत्। लक्ष्यतावच्छेदके=लक्ष्यतावच्छेदकतीरत्वादौ, न लक्षणा=प्रवाहसमीपसमवायात्मिका लक्षणा न स्वीकरणीया, निष्प्रयोजनत्वादित्यर्थः। ननु कथं निष्प्रयोजनत्वमित्यत आह-**तत्प्रकारकबोधस्येति।** 'गंगायां घोष' इत्यत्र तीरत्वादिधर्मप्रकारकतीरविशेष्यकस्य 'तीर'मितिबोधस्य तु लक्ष्यतावच्छेदके तीरत्वे तीरसमीपसमवायात्मिकां लक्षणां विनाऽपि, **उपपत्तेः**=निर्वाहादित्यर्थः। तथा च यथा नव्यमते जात्याकृतिविशिष्टव्यक्तौ या शक्तिः तस्याः घटादिपदजन्यबोधविषयत्वप्रकारतानिरूपितैच्छीयविशेष्यतावच्छेदकत्वसम्बन्धेन घटत्वे वर्तते नतु तादृशविशेष्यतासम्बन्धेन स्वतन्त्रा काचिच्छक्तिः, तथैव प्रवाहसमीपत्वात्मिका तीरनिष्ठा लक्षणा स्वाश्रयाऽवच्छेदकतासम्बन्धेन(स्वं-प्रवाहसमीपत्वं, तदाश्रयस्तीरः, तदवच्छेदकं तीरत्वमिति)तीरत्वे वर्तते, न तु स्वतन्त्रा

**परन्तु एवं क्रमेण शक्यतावच्छेदकेऽपि शक्तिर्न स्यात्, तत्प्रकारकशक्यार्थस्मरणं प्रति तत्पदस्य सामर्थ्यमित्यस्य सुवचत्वादिति विभावनीयम् ॥ यत्र तु शक्यार्थस्य**

काचित् प्रवाहसमीपसमवेतत्वात्मिका लक्षणा कल्पनीया, यतः तीरार्थलक्षणाज्ञानस्य तीरत्वावच्छिन्नविशेष्यकलक्षणाज्ञानत्वेन तीरत्वावच्छिन्नविशेष्यकस्मरणं प्रति कारणत्वात् तीरीय-प्रवाहसमीपत्वात्मकलक्षणाज्ञानेनैव तीरत्वप्रकारेण तीरस्य स्मरणे सति तीरत्वप्रकारेण तीरस्य शाब्दबोधस्य जायमानत्वात् तत्र तीरत्वस्य सुतरां प्रकारतया बोधात्, **जातौ पृथच्छक्तिवादिप्राचीनमतं च न साधु** इति भावः ॥ न च अपदार्थतीरत्वादेः शाब्दबोधविषयत्वे उदासीनपटादीनामपि तत्र शाब्दबोधविषयत्वापत्तिरिति वाच्यम् । पदजन्यप्रतीत्यविषयत्वस्यैव अपदार्थत्वात्' तीरत्वस्य अपदार्थत्वाऽभावात् ॥ यद्वा वृत्तिशून्यत्वम् अपदार्थत्वम्, तीरत्वे तु अवच्छेदकतासम्बन्धेन वृत्तिमत्त्वान्नाऽपदार्थत्वमिति बोध्यम् ॥ **ननु**-हर्यादिपदस्य नानाशक्यतावच्छेदककत्वेन हरिपदशक्यतावच्छेदकवानरत्वावच्छिन्नविशेष्यकहरिपदनिरूपितशक्तिज्ञानात् कृष्णत्वावच्छिन्नप्रकारकस्मृत्याद्यापत्तिवारणाय 'तन्निष्ठतत्पदशक्यतावच्छेदकावच्छिन्नविशेष्यकतत्पदनिरूपितज्ञानस्य तन्निष्ठतत्पदशक्यतावच्छेदकप्रकारकस्मृतिं प्रति कारणत्वमि'ति शक्यतावच्छेदकविशेषधर्मघटितरूपेण शक्तिज्ञानस्य कारणत्वनियमाङ्गीकारे सति प्रवाहत्वघटत्वादिजातेः प्रकारविधयैव स्मरणे शाब्दबोधे च भानसंभवात् जात्याकृतिविशिष्टतयाऽपि व्यक्तौ शक्तिस्वीकारो नव्यानामपि अश्रद्धेय इति-आशंकाम् इष्टापत्त्या परिहर्तुम् आह-**परन्त्वेवं क्रमेणेति** । लक्ष्यतावच्छेदकतीरत्वादिविशेषधर्मघटितरूपेण लक्षणाज्ञानस्य कारणत्वे सति लक्ष्यतावच्छेदके पृथक् लक्षणाकल्पनं निरर्थकमिवेतिरीत्येत्यर्थः । शक्यतावच्छेदकेऽपि=विशेषधर्मघटितरूपेण शक्तिज्ञानस्यापि कारणत्वे सति शक्यतावच्छेदके पृथक् शक्ति-कल्पनं न स्यात=मा भूदित्यर्थः ॥ तत्र हेतुमाह-**तत्प्रकारकेति** । प्रवाहत्वादिप्रकारकस्मरणं प्रति शाब्दबोधं च प्रति, तत्पदस्य-गङ्गादिपदस्य, सामर्थ्यम्=शक्त्यादिज्ञानद्वारा प्रयोजकत्वमि'ति विशेषधर्मघटितशक्तिज्ञानत्वेन कारणतायाः सुवचत्वात्=सुयुक्तिकतया ग्राह्यत्वात् तद्बलेन शक्यतावच्छेदकस्य प्रकारतयैव बोधसंभवात् तत्र स्वतन्त्रा शक्तिर्न कल्पनीया, तथा च जात्याकृतिविशिष्टव्यक्तावपि शक्तिकल्पनं निरर्थकं, केवलायां व्यक्तावेव शक्तिकल्पनं न्याय्यमिति नवीनतरमतं विभावनीयम्=परिशीलनीयमिति भावः ॥ **जात्याकृतिविशिष्टव्यक्तौ शक्तिवादिनस्तु**-"शक्यतावच्छेदके शक्त्यस्वीकारे पृथिवीपदात् कदाचिद् अष्टद्रव्यातिरिक्तद्रव्यत्वेन कदाचिद् गन्धवत्त्वेन कदाचित् पृथिवीत्वेन च शाब्दबोधापत्तिः, 'पृथिवी-पृथिवीपदशक्ये'तिवत् 'अष्टद्रव्याऽतिरिक्तद्रव्यं,-गन्धवद् वा,-पृथिवीपदशक्यमि'त्याकारकस्य शक्तिज्ञानस्य संभवात्, 'तीरं,-गङ्गातीरं-वा, प्रवाहसंयोगवदि'ति लक्षणाग्रहेण शक्तिग्रहस्य तुल्ययोगक्षेमत्वात्, तथा च लक्षणया यत्किञ्चिदेकधर्मावच्छिन्नविषयक एव शाब्दबोध इति यथा न नियमस्तथा शक्यार्थबोधेऽपि नियमो न स्यात्, शक्यतावच्छेदके शक्तिस्वीकारे तु पृथिवीपदात् पृथिवीत्वेनैव शाब्दबोध इति नियम उपपद्यते, पृथिवीपदस्य पृथिवीत्वपृथिव्योरेव शक्ततया शक्त्या शक्यार्थस्यैव शाब्दबोधे भानमिति नियमेन च तदुपपादनसंभवात् तत्र धर्मितावच्छेदके शक्यतावच्छेदकत्वावगाहिज्ञानं शाब्दबोधहेतुरुपेयते, शक्यतावच्छेदकं च सर्वत्र लघ्वन्यूनानतिरिक्तवृत्तिरेव धर्मः इति । अथ लक्षणया लक्ष्यस्यापि शाब्दबोधे भानोपगमेन लक्षणया कदाचित् तीरत्वेन कदाचिद् गङ्गातीरत्वेन शाब्दबोधो भवत्येवेति लक्ष्यतावच्छेदके लक्षणास्वीकारस्य न किमपि प्रयोजनं पश्याम इति"-**अभिप्रायः** ॥ अथ लक्षितेन लक्ष्यते-ज्ञायतेऽननेति व्युत्पत्त्या लक्षितपदवाच्यत्वं लक्षितलक्षणापदार्थः, सा च न शक्तिः, न वा लक्षणा, किन्तु वृत्त्यन्तरमिति प्राचीनैकदेशिमतं निरसितुं लक्षितलक्षणायाः अपि अतिरिक्तलक्ष-

परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणेत्युच्यते। यथा द्विरेफादिपदात् रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायते इति तत्र

---

णात्वं व्यवस्थापयति–**यत्र तु शक्यार्थस्येति**। यत्र तु=यादृशे द्विरेफपदे, शक्यार्थस्य=रेफद्वयस्य परम्परासम्बन्धरूपा=स्वघटितपदवाच्यत्वात्मिका, या लक्षणा सा 'लक्षितलक्षणा' इति व्यवह्रियते इत्यर्थः॥ स्वं–द्विरेफपदशक्यार्थः रेफद्वयम्, तद्घटितपदं भ्रमर इति, तद्वाच्यत्वं मधुपे इति, 'द्विरेफो रौती'त्यत्र द्विरेफस्य शब्दकर्तृत्वान्वयाऽनुपपत्त्या तात्पर्याऽनुपपत्त्या वा लक्षितलक्षणया मधुपो बुध्यते इति तदुपपादयति–**यथेति**। 'द्विरेफो रौती'तिवाक्यघटक-द्विरेफपदे द्विरेफपदशक्यस्य रेफद्वयस्य सम्बन्धः=घटितत्वात्मकः, भ्रमरपदे ज्ञायते=भ्रमरपदनिष्ठः अनुभूयते, भ्रमरपदस्य च=द्विरेफपदवाच्यरेफद्वयघटितभ्रमरपदस्य, सम्बन्धः=वाच्यत्वात्मकः, भ्रमरे=भ्रमरनिष्ठः अनुभूयते, तत्र=तादृशे द्विरेफपदे, लक्षितलक्षणेत्युच्यते=लक्षितलक्षणापदार्थ इति व्यवह्रियते इत्यर्थः॥ **न च** 'द्वौ रेफौ यत्रे'तिव्युत्पत्त्या अवयवशक्त्या द्विरेफपदेन स्वशक्यरेफद्वयसम्बन्धि–भ्रमरपदस्य स्मरणं भवति, तेन च स्मरणात्मकपदज्ञानेन शक्तिज्ञानसहकृतभ्रमरपदार्थस्मृत्या भ्रमरबोधो भवतीति रीत्या शक्त्यैव शाब्दबोधनिर्वाहेऽलं द्विरेफस्य भ्रमरे परम्परासम्बन्धात्मकलक्षणया, एवं च लक्षितेन=द्विरेफपदलक्षितेन,–भ्रमरपदेन, लक्षणा=शाब्दबोधरूपं ज्ञानं,–इति–लक्षितलक्षणाशब्दाऽर्थोऽप्यस्त्विति वाच्यम्। तथा सति 'द्विरेफमानये'त्यत्र कर्मत्वादौ भ्रमरपदार्थाऽन्वयाऽनुपपत्तेः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात्, तत्र च द्विरेफपदेन लक्षणयोपस्थापितं भ्रमरपदमेव न तु तदर्थ, इति कथं तत्र विभक्त्यर्थकर्मत्वान्वय,–इत्यनुपपत्तिः स्यात्, अतः शक्यस्य रेफद्वयस्य स्वघटितपदवाच्यत्वात्मकपरम्परासम्बन्धात्मिकया लक्षितलक्षणया द्विरेफपदात् भ्रमरोपस्थित्यर्थं लक्षितलक्षणास्वीकारस्याऽऽवश्यकत्वादिति ध्येयम्॥ **तथा च**–लक्षणा द्विविधा–केवललक्षणा लक्षितलक्षणा चेति। केवललक्षणाऽपि जहत्स्वार्था अजहत्स्वार्था चेति द्विधा, जहदजहत्स्वार्थाऽपीति **केचित्**। **अथाऽन्या** अपि लक्षणाः भवन्ति,–यथा–गौणी, सा च सादृश्यविशिष्टे लक्षणा,–द्वेधा,–एका–इदमादिपदविशेष्यवाचकपदसमानविभक्तिकपदनिष्ठा, यथा—'सिंहोऽयमि'त्यत्र सिंहसादृश्यबोधिका, सेयं साध्यवसानिकेत्युच्यते, तत्र लक्ष्यमाणगुणः विलक्षणपराक्रमक्रूरतादिस्तदाश्रयत्वात्मकसम्बन्धात्मिका। द्वितीया तु—'इदमादिपदभिन्नविशेष्यवाचकपदसमानविभक्तिकपदनिष्ठा, यथा–'अग्निर्माणवक'इत्यत्र शुचित्वादिगुणसदृशगुणवत्त्वबोधिकेति॥ **काचित्तु**–लक्ष्यतावच्छेदकीभूततत्तद्रूपेण पूर्वपूर्वप्रत्याय्यकत्वात **निरूढा**, यथा–आरुण्यादिप्रकारेण तदाश्रयद्रव्यानुभावकत्वात् 'अरुणया गवा सोमं क्रीणाती'त्यत्र अरुणादिपदस्य॥ **आलङ्कारिकाः**–पुनरेवमाहुः–'तीरे घोष' इति प्रयोगे स्वाधीने सम्भवत्यपि 'गङ्गायां घोष' इति अनन्वितप्रयोगकरणं शैत्यपावनत्वादिव्यञ्जनार्थम्, तत्र गङ्गापदे जहल्लक्षणया तीरबोधे सत्यपि शैत्यपावनादिप्रतीत्यर्थं '**व्यञ्जना**'नाम्नी वृत्तिरवश्यं मन्तव्या, सा च **शब्दशक्तिमूला, अर्थशक्तिमूला** च, शब्दस्य गङ्गापदस्य प्रवाहे या शक्तिः सैव मूलं यस्याः सा, अर्थस्य=तात्पर्यविषयीभूतार्थस्य या तात्पर्यविशेषबोधकतारूपा शक्तिः सैव मूलं यस्याः सा इति। नैयायिकास्तु–**तत्र** शब्दशक्तिमूला क्वचित् शक्तावन्तर्भवति, यतः व्यञ्जके पदे नानार्थबोधकत्वं यदि, तदा तत्र 'दूरस्था भूधरा रम्या' इत्यत्र भूधरपदेन शैलानामिव नृपतीनामपि शक्त्यैव बोधो निर्वहेत् अतो व्यञ्जना शक्त्यन्तर्भूता, कदाचित्तु क्लृप्तलक्षणायामन्तर्भवति–यथा 'गङ्गायां घोष'इत्यत्र शैत्यपावनत्वादिविशिष्टतीरप्रतीतिर्जहल्लक्षणयैव निर्वहतीति। **अथ**–'गच्छ गच्छसि चेत्! कान्त! पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद् यत्र गतो भवानि'

**लक्षितलक्षणा। किन्तु लाक्षणिकं पदं नानुभावकम्। लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम्,-शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितस्वशक्यार्थशाब्द-**

त्यत्र-हे प्रिय! भवद्गमनोत्तरं मम प्राणवियोगो भविष्यत्यतो न गन्तव्यमि'त्याद्यर्था व्यज्यन्ते, इह जन्मपदस्य गमनाऽभावे शक्तिः, न तु जन्मपदशक्यमरणसम्बन्धमादाय गमनाऽभावे लक्षणा; अतात्पर्यार्थत्वात्, इति या **अर्थशक्तिमूला**-व्यञ्जना साऽपि, 'इयं-मदीयगमनोत्तरकालीनप्राणवियोगवती,-विलक्षणशब्दप्रयोक्तृत्वात्-यन्नैवं तन्नैवं यथा-गच्छ गच्छसि चेत्! कान्त! मा विशंकस्व मत्कृते। त्वयाऽर्जितानि भोग्यानि भोक्ष्येऽहं भाग्यशालिनी'त्युच्चारयित्री स्त्री'इत्येवं व्यञ्जनासम्पादनीयार्थस्याऽनुमानेनैव लाभात् सा अन्यथासिद्धेति **ध्येयम्**॥ ननु सर्वत्र शाब्दबोधे पदज्ञानस्य असाधारणकारणत्वात्, तत् पदज्ञानं किं शक्तपदज्ञानम् उत लक्षकपदज्ञानम्, किं वोभयपदज्ञानमित्याकांक्षायाम् तच्छक्तपदज्ञानमेव तच्छाब्दबोधे करणं न तु लक्षकपदज्ञानमिति प्राचीनमतं दर्शयति-**किन्तु लाक्षणिकमिति**। लाक्षणिकं पदं=तीराद्यर्थविषयकलाक्षणिकगङ्गापदज्ञानं, नाऽनुभावकम्=न तीराद्यर्थविषयकशाब्दबोधात्मकानुभवं प्रति असाधारणकारणमित्यर्थः॥ तथा च लाक्षणिके पदे स्मारिका शक्तिरेव न आनुभाविकीति भावः॥ ननु-तर्हि लाक्षणिकगङ्गापदात् कथं तीराद्यर्थविषयकशाब्दबोधः स्यादित्यत आह-**लाक्षणिकार्थस्येति**। लक्षणाज्ञानाधीनस्मृतिविषयस्य पदार्थस्य, शाब्दबोधे तु, **पदान्तरम्**=घोषादिरूपं पदम्, समभिव्याहृतशक्तपदज्ञानमिति यावत्, कारणम्=असाधारणकारणम् भवति। तथा च-तल्लाक्षणिकपदसमभिव्याहृतशक्तपदज्ञानं तत्स्मारितलक्ष्यार्थविषयकशाब्दबोधजनकमिति 'गंगायां घोष'इत्यत्र तीरे लाक्षणिकसप्तम्यन्तगंगापदसमभिव्याहृताऽऽभीरपल्लीशक्त-घोषपदज्ञानं लाक्षणिकगंगापदज्ञानस्मारिततीरात्मकार्थबोधजनकं भवतीति न लाक्षणिकार्थबोधाऽनुपपत्तिरिति भावः॥ ननु 'कुमतिः पशु'रित्यत्र 'कुत्सिता मतिर्यस्ये'ति बहुव्रीहावुत्तरपदस्य कुत्सितज्ञानवति लाक्षणिकतया पूर्वपदस्य तात्पर्यग्राहकतया निरर्थकतया कुमतौ पुरुषे पशुत्वस्य बाधितत्वेन पशुपदस्यापि पशुसदृशे लाक्षणिकतया तादृशोभयपदलाक्षणिकवाक्ये कस्यापि शक्तपदत्वाऽभावात् तत्र शाब्दबोधो न स्यादिति चेत्!, इष्टापत्तेः॥ ननु-तथापि 'कुमतिः पशुः घटश्चे'तिवाक्याच्छाब्दबोधापत्तिः स्यात्, तत्र लाक्षणिकपशुपदसमभिव्याहृतशक्तघटपदज्ञानस्य सत्त्वादित्यतः उक्तकार्यकारणभावं परिष्करोति **शक्तिलक्षणान्यतरेति**। शक्त्या लक्षणया वा उपस्थितो यः इतरपदार्थस्तीरादिः तदन्वितो यः स्व( घोषपद )शक्यार्थ आभीरपल्ल्यादिः तादृशतीराद्यन्विताऽऽभीरपल्ल्यादिविषयकशाब्दबोधं प्रति, पदानां-तदर्थशक्तघोषादिपदज्ञानस्य, सामर्थ्यावधारणात्=कारणत्वस्य निश्चितत्वादिति शब्दार्थः॥ तथा च-'शक्तिज्ञानसहकृतपदज्ञानजन्योपस्थितिविषयार्थ--लक्षणाज्ञानसहकृतपदज्ञानजन्योपस्थितिविषयाऽर्थाऽन्यतरनिष्ठविषयतानिरूपिततदर्थविषयताशालिशाब्दबोधं प्रति तदर्थशक्तपदज्ञानसामान्यस्य कारणत्वमिति'फलितोऽर्थः। 'कुमतिः पशुः घटश्चे'ति वाक्ये तु कुमतिपदेन पशुपदेन वा लक्षणयोपस्थापिते कुत्सितज्ञानवति पुरुषे, पशुसदृशे वा अर्थे घटपदशक्यार्थान्वयाऽभावात् घटपदार्थनिष्ठविषयतायाः उक्तान्यतरनिष्ठविषयतानिरूपितत्वाऽभावात्, कुमतिपश्वादिपदार्थलाक्षणिकपदार्थद्वयविषयतानां परस्परनिरूप्यनिरूपकभावेऽपि तादृशविषयताश्रयार्थशक्तपदज्ञानात्मककारणाऽभावात् न तादृशवाक्याच्छाब्दबोध इति भावः॥ अथ-नव्यास्तु-'कुमतिः पशु'रित्यादिसर्वलाक्षणिकस्थले शाब्दबोधस्यानुभवसिद्धतया लाक्षणिकपदेऽप्यानुभाविकी शक्तिरवश्यमङ्गीकरणीयेति वदन्ति॥ उक्तं च शब्दशक्तिप्रकाशिकायां-'न च शक्तपदस्यैव स्वसाकांक्षपदान्तरोपस्थाप्याऽर्थान्वितस्वार्थधर्मिकान्वयबोधं प्रति हेतुत्वादन्वयबुद्धौ लक्ष्यार्थस्याऽप्रवेशः;

**बोधं प्रति पदानां सामर्थ्यावधारणात् ॥ वाक्ये तु शक्तेरभावाच्छक्यसम्बन्धरूपा लक्षणापि नास्ति । यत्र तु गभीरायां नद्यां घोष इत्युक्तं तत्र नदीपदस्य नदीतीरे लक्षणा । गभीरपदार्थस्य नद्या सहाभेदेनान्वयः, क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात् । यदि तत्रैकदेशान्वयो न स्वीक्रियते तदा नदीपदस्य गभीरनदीतीरे लक्षणा गभीरपदं तात्पर्यग्राहकम् ॥**

---

'कुन्ताः प्रविशन्ती'त्यादौ लक्ष्यस्य कुन्तधरादेः अन्वयविशेष्यत्वानुपपत्तेः । कुमतिः पशुरित्यादौ लक्ष्यार्थयोर्मिथोऽन्वयबोधस्याऽप्यानुभविकत्वाच्च, तस्याच्छक्तेरिव भक्तेरपि ज्ञानमानुभावकं भवत्येव, कार्यतावच्छेदकस्य संकोचाच्च(अव्यवहितोत्तरत्वसम्बन्धेन शक्तिप्रकारकपदज्ञानविशिष्टान्वयबोधं प्रति शक्तत्वेन पदज्ञानस्य, एवं लक्षणाप्रकारकपदज्ञानविशिष्टान्वयबोधं प्रति लक्षकत्वेन पदज्ञानस्य च हेतुत्वेन )व्यभिचाराऽसंभवादिति' ॥ अथ–मीमांसकाः–'ननु वाक्यमपि लक्षकं भवत्येव, कथमन्यथा चित्रगुसमुदायस्य लक्षणया चित्रगोस्वामिनां बोधः, कथं वा 'गभीरायां नद्यां घोष'इत्यादौ गभीरनदीतीरस्य बोधः, न हि तत्र नदीपदं तीरलक्षकं, गभीरायामित्यस्याऽनन्वयापत्तेः, गभीरनदीतीरस्य गभीरत्वाऽभावात्, नापि गभीरपदं गभीरनदीतीरलक्षकम्, नद्यामित्यस्य अनन्वयापत्तेः, गभीरनदीतीरस्य नदीत्वाभावात् 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने'ति नियमात् तस्माद्वाक्यमेव तत्र गभीरनदीतीरलक्षकमिति मीमांसकमतं खण्डयति–**वाक्ये त्विति**। असमस्तपदसमूहात्मके वाक्ये शक्तेः केनाऽप्यनभ्युपगमात्, समस्तवाक्ये तु शक्तेः वैयाकरणाऽभिमतत्वेऽपि अग्रे दूषणीयत्वाच्च वाक्यमात्रे शक्तौ प्रमाणाऽभावात्, वाक्यशक्तेरप्रसिद्धया शक्यसम्बन्धरूपा लक्षणाऽप्यप्रसिद्धा–इत्यर्थः॥'गभीरायां नद्यां घोष'इत्यत्र पदार्थैकदेशेऽन्वयमभ्युपगम्य पदलक्षणया शाब्दबोधम् उपपादयति–**यत्र त्विति** । यदा तु असमस्तं 'गभीरायां नद्यां घोष'इतिवाक्यमुच्चारितं, तत्र=तद्वाक्यघटकनदीपदस्य 'नदीतीरे'ऽर्थे लक्षणा–अजहत्स्वार्था मन्तव्या, गभीरपदार्थस्य=गाम्भीर्यविशिष्टस्य, लाक्षणिकनदीपदार्थैकदेशेन नद्या सह अभेदेन अन्वयः, समासभिन्नस्थले नामार्थयोरभेदेनाऽन्वये नाम्नोः समानविभक्तिकत्वस्य तन्त्रत्वात् तथा च–गाम्भीर्यविशिष्टाऽभिन्नप्रवाहसमीपतीरवृत्त्याभीरपल्ली'ति बोधः ॥ व्युत्पत्तिवैचित्र्येणैकदेशान्वयः स्वीकार्यं इति दर्शयति–**क्वचिदिति** । 'चैत्रस्य गुरुकुलम्' 'शरैः शातितपत्र'इत्यादौ, **एकदेशान्वयस्य**=गुरुकुलपदार्थैकदेशे गुरुत्वे, शातितपत्रपदार्थैकदेशे शातनक्रियायां चैत्रनिरूपितत्वस्य शरकरणत्वस्य चान्वयस्य, स्वीकृतत्वात्=सर्वानुमतत्वात्, तथा च पदभेदेन व्युत्पत्तिवैचित्र्यात्( आकांक्षाभेदात् )'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने'तिव्युत्पत्तौ मानाभावादिति भावः ॥ किञ्च–गभीरायां नद्यामिति विभक्त्यन्तभागस्य तादृक्तीरलक्षकत्वे घोषादाधेयत्वेन तदन्वयाऽनुपपत्तिः, समासादन्यत्र नामार्थयोर्भेदान्वयस्याऽव्युत्पन्नत्वादित्यपि बोध्यम् ॥ ननु–निरुक्तरीत्या एकदेशान्वयस्वीकारे 'ऋद्धस्य राजमातङ्गा'इत्यत्र राजपदलक्ष्यैकदेशराशि ऋद्धपदोत्तरं श्रूयमाणषष्ठ्यर्थाऽभेदान्वये सति 'ऋद्धाऽभिन्नराजसम्बन्धिमातङ्गा' इति बोधे तादृशवाक्यस्य प्रामाण्यापत्तिः स्यात् तद्वारणाय–ससम्बन्धिकातिरिक्तपदस्थले 'पदार्थः पदार्थेनैवान्वेति न तु पदार्थैकदेशेने'तिव्युत्पत्तिरङ्गीकार्या, तथा च 'गभीरायां नद्यां घोष'इत्यत्र नदीपदस्य ससम्बन्धिकत्वाऽभावात् तदर्थैकदेशनद्या सह गभीरपदार्थस्य गाम्भीर्यविशिष्टस्याऽभेदेनाऽन्वयबोधाऽसंभवात् पदलक्षणया न निर्वाहः, तत्र वाक्ये एव लक्षणा स्वीकार्येति मीमांसकाऽऽशंकां प्रकारान्तरेण वारयति–**यदि तत्रैकदेशान्वय इति** । तत्र='गभीरायां नद्यां घोष'इत्यादौ, एकदेशान्वयो न स्वीक्रियते=नदीपदार्थैकदेशनद्या सह गभीरपदार्थान्वयो न स्वीकर्तुं शक्यते इति यदि विभाव्यते, तदा 'गभी-

**बहुव्रीहावप्येवम्। तत्र हि चित्रगुपदादौ यद्येकदेशान्वयः स्वीक्रियते तदा गोपदस्य गोस्वामिनि लक्षणा, गवि चित्राभेदान्वयः, यदि तत्रैकदेशान्वयो न स्वीक्रि-**

रायां नद्यां घोष' इत्यत्र नदीपदस्य गभीरनदीतीरात्मके समुदितेऽर्थेऽजहत्स्वार्थलक्षणा, गभीरपदं च तात्पर्यग्राहकम्='नदीपदं गभीरनदीतीरविषयकबोधजनकं भवत्वि'तिवक्त्रिच्छारूपतात्पर्यग्राहकमिति स्वीकार्यम्। तथा च 'पदार्थः पदार्थेनैवे'त्यादिनियमाङ्गीकारपक्षेऽपि तत्र पदलक्षणयैव निर्वाहात् वाक्ये लक्षणा नाङ्गीकार्येति भावः॥ **ननु**–विनिगमनाविरहेण गभीरपदस्य गभीरनदीतीरे लक्षणा नदीपदं तात्पर्यग्राहकं भवत्विति चेन्न। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः,–विशेषणविभक्तेः सर्वत्र निरर्थकत्वाच्च,-घोषपदेन गभीरायामित्यस्याऽनासन्नत्वाच्च,-'गभीरनद्यां घोष' इतिसमासे लाक्षणिकगभीरपदार्थे सप्तम्यर्थान्वयाऽभावाच्च,–सर्वत्र उत्तरपदलक्षणाया एव युक्तत्वादिति ध्येयम्॥ **मीमांसकैकदेशिनस्तु**–शक्यसम्बन्धत्वं न लक्षणाया लक्षणम्, येन वाक्ये शक्त्यभावप्रयुक्तशक्यसम्बन्धात्मकलक्षणानुपपत्तिः स्यात्, किन्तु स्वबोध्यसम्बन्धत्वमेव लक्षणात्वम्, स्वं=क्वचित्पदं, क्वचित्तु वाक्यम्, 'गंगायां घोष' इत्यत्र गंगापदबोध्यप्रवाहसम्बन्धस्तीरे लक्षणा, 'गभीरायां नद्यां घोष' इत्यत्र 'गभीरायां नद्यामि'ति सप्तम्यन्तपदद्वयघटितसमुदायात्मकबोध्यायाः गभीराऽभिन्ननद्यास्सामीप्यादिसम्बन्धस्तीरे लक्षणा, 'चित्रगु'रितिसमासवाक्ये 'एकदेशविकृतमनन्यवद्भवती'तिन्यायेन 'चित्रा गौ' रितिवाक्यस्यापि सत्त्वेन तद्बोध्यचित्राऽभिन्नगोसम्बन्धस्य चित्रगोस्वामिनि सत्वात् लक्षणोपपत्तिरिति क्रमेण वाक्यलक्षणयैव निर्वाहे तादृशसमुदायघटकैकदेशस्य लक्षणाकल्पनम् अपरपदस्य तात्पर्यग्राहकत्वकल्पनमनुचितमेवेति **वदन्ति। तन्न।** स्वबोध्यत्वं न स्वनिष्ठबोधकतानिरूपितबोध्यत्वं, मौनिश्लोकादौ पदाभावेन स्वबोध्यत्वाऽप्रसिद्धेः। न वा–स्वविषयकज्ञानजन्यज्ञानविषयत्वम्, गंगायामिति सप्तम्यन्तज्ञानेनापि प्रवाहोपस्थितिसंभवेन तत्सम्बन्धितीरे सप्तम्यन्तस्यापि लाक्षणिकत्वापत्तेः, न च–यादृशानुपूर्व्यवच्छिन्नस्य लक्षकत्वमभिप्रेतं तादृशानुपूर्व्यवच्छिन्नज्ञाननिष्ठजनकतानिरूपितजन्यताशालिबोधविषयसम्बन्ध एव तादृशानुपूर्व्यवच्छिन्नस्य लक्षणेति वाच्यम्। अपभ्रंशशब्दत्वावच्छिन्नविषयकज्ञानस्याऽपि शक्तिभ्रमसहकृतस्यार्थस्मारकतया तादृशार्थसम्बन्धिनि लाक्षणिकत्वापत्त्या वृत्तिमत्त्वेन साधुत्वापत्तेः, यदि च 'यादृशानुपूर्व्यवच्छिन्नस्य लक्षकत्वमभिप्रेतं तादृशानुपूर्व्यवच्छिन्नशक्तिप्रमाजन्यबोधविषयसम्बन्धस्तदानुपूर्व्यवच्छिन्नस्य लक्षणेति उच्यते, तथासति–वाक्ये शक्त्यभावेन शक्तिप्रमासहकृतवाक्यत्वावच्छिन्नविषयताशालिज्ञानजन्यबोधाऽप्रसिद्ध्या तादृशबोधविषयसम्बन्धात्मकलक्षणाया अप्रसिद्धेर्दुर्वारत्वमिति, तस्मात् पदे एव शक्यसम्बन्धरूपा लक्षणा लाघवात्, न तु वाक्ये इति **ध्येयम्॥**

**अथ**-बहुव्रीह्यादिसमस्तवाक्यानां क्रमेण पदलक्षणयाऽभिमतशाब्दबोधोपपत्तिं दर्शयति–**बहुव्रीहावप्येवमिति।** 'शेषो बहुव्रीहि'रित्यधिकारविहितत्वं,–नियमतः समासप्रयुक्तलाक्षणिकोत्तरपदकसमासत्वं वा–बहुव्रीहित्वम्, तादृशबहुव्रीहौ, **एवम्**=पदलक्षणया शाब्दबोधनिर्वाहः॥ तदेवोपपादयति–**तत्र हीति।** बहुव्रीहिसमासात्मके चित्रगुपदादौ=चित्रा गावो यस्येति विग्रहके–चित्रगुरितिवाक्ये, **यदि**='शरैः शातितपत्र' इत्यादावेकदेशान्वयस्य सर्वानुमतत्वात् 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने'ति नियमे मानाऽभावेन एकदेशान्वयः स्वीक्रियते तदा, गोपदस्य गोस्वामिनि लक्षणा=अजहत्स्वार्थलक्षणा, लाक्षणिकार्थैकदेशे गवि चित्रपदार्थस्याऽभेदेनान्वयः, तथा च–चित्राऽभिन्नगोस्वामिगोप' इति बोधः॥ **यदि तत्रैकदेशान्वयो न स्वीक्रियते**='ऋद्धस्य राजमतङ्गा'–इतिवाक्यस्य साधुत्वापत्तिवारणाय ससम्बन्धिकातिरिक्तपदस्थले 'पदार्थः पदार्थेनान्वेती'त्यादिव्यु

यते, तदा गोपदस्य चित्रगोस्वामिनि लक्षणा, चित्रपदं तात्पर्यग्राहकम्। एवमारूढवानरो वृक्ष इत्यत्र वानरपदस्य वानरारोहणकर्मणि लक्षणा, आरूढपदं तात्पर्यग्राहकम्। एवमन्यत्रापि बोध्यम्।

तत्पुरुषे तु पूर्वपदे लक्षणा। तथाहि–राजपुरुष इत्यादौ राजपदार्थेन पुरुषपदार्थस्य साक्षान्नान्वयो,–निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात्,अन्य-

---

तपत्त्यङ्गीकारेण ससम्बन्धिकपदस्थले यदि एकदेशान्वयो नाङ्गीक्रियते तदा, गोपदस्य चित्रगोस्वामिनि लक्षणा,–अजहल्लक्षणा, चित्रपदं तु–'गोपदं चित्रगोस्वामिविषयकबोधजनकं भवत्वि'तितात्पर्यग्राहकम् बोध्यम्। तत्र–'चित्राऽभिन्नगोस्वामिगोप'इति बोधः॥ षष्ठीवहुव्रीहिस्थलीयप्रणाल्या द्वितीयाबहुव्रीहिस्थलेऽपि शाब्दबोधमुपपादयति–'एवमारूढवानरो वृक्ष'इति। आरूढो वानरो यमिति–'आरूढवानरः वृक्ष'इतिवाक्यघटकवानरपदस्य वानरारोहणकर्मणि अजहत्स्वार्थलक्षणा, आरूढपदं तु–'वानरपदं–वानरारोहणविषयकबोधजनकं भवत्वि'तितात्पर्यग्राहकं स्वीकार्यं, तथा च 'स्वकर्मकारोहणकर्तृवानरसम्बन्धी वृक्ष'इति बोधः। आरूढो वानरो यम्'–इति विग्रहवाक्येन यत्कर्मकारोहणकर्ता वानर इति बोधात् बहुव्रीहिसमासे विग्रहवाक्यात् यादृशविशेषणविशेष्यभावापन्नार्थबोधो भवति समासवाक्यात्–तद्विपरीतविशेषणविशेष्यभावापन्नार्थबोध इति नियमेन वानरकर्तृकारोहणकर्मवृक्षइतिबोधस्योपगन्तव्यतया वानरपदस्य वानरकर्तृके लक्षणां स्वीकृत्य आरूढपदस्यारोहणकर्मणि लक्षणास्वीकारे पदद्वये लक्षणापत्तिः उत्तरपदार्थप्राधान्यनियमस्य भंगापत्तिश्च स्यादतः बहुव्रीहावुत्तरपदे एव लक्षणा पूर्वपदं च तात्पर्यग्राहकमिति बोध्यमित्याशयेनाह–एवमन्यत्रापीति। 'पीतपयस्कं पात्र'मित्यत्र पीतं पयो येनेतिरीत्या स्वकरणकपानकर्मजलसम्बन्धित्वेन पात्रम्, 'पक्वतण्डुलश्चैत्र'इत्यत्र पक्वस्तण्डुलो येनेति दिशा स्वकर्तृकपाककर्मतण्डुलसम्बन्धित्वेन चैत्रं, 'दत्तदक्षिणो द्विज'इत्यत्र दत्ता दक्षिणा यस्मै इति क्रमेण स्वसम्प्रदानकदानकर्मदक्षिणासम्बन्धित्वेन द्विजं, 'पतितपत्रस्तरु'रित्यत्र पतितं पत्रं यस्मादितिविग्रहेण स्वापादानकपतनाश्रयपत्रसम्बन्धित्वेन तरुम्, 'रक्तपटः काय'इत्यत्र रक्तः पटो यत्रेति व्युत्पत्त्या रक्ताऽभिन्नस्ववृत्तिपटसम्बन्धित्वेन कायम्, एवं 'वाणच्छिन्नकरो नर'इत्यत्र बाणेन छिन्नकरो येन यस्य वेति विग्रहेण बाणकरणकस्वकर्तृकच्छिदाकर्म-करसम्बन्धित्वादिना नरादिकं,–बहुव्रीहिर्बोधयतीति बोध्यम्।

तत्पुरुषे समासेऽपि लक्षणाप्रकारं दर्शयितुमाह–तत्पुरुषे त्विति। 'तत्पुरुष'इत्यधिकारविहितत्वम्,समासप्रयुक्तलक्षणाशून्योत्तरनामपदकत्वे सति लुप्तद्वितीयादिविभक्तिकपूर्वपदकसमासत्वं, यदर्थगतेन सुवर्थेन विशिष्टस्य यदर्थस्याऽन्वयबोधं प्रति यः समासः स्वरूपयोग्यः स तदर्थस्य तदर्थे तत्पुरुष,–इति वा लक्षणं बोध्यम्। तादृशतत्पुरुषसमासे तु पूर्वपदे लक्षणाऽङ्गीक्रियते इत्यर्थः॥ तदुपपादयति–तथाहीति। राज्ञः पुरुषः 'राजपुरुष' इत्यत्र राजपदार्थेन राज्ञा सह पुरुषपदार्थस्य पुंसः,साक्षात्=विभक्त्यर्थम् अद्वारीकृत्य,भेदसम्बन्धेन अन्वयबोधो न संभवतीत्यर्थः। 'भूतले घट'इत्यादौ सप्तम्यर्थाधेयत्वद्वारा भूतलस्य घटेऽन्वयात् साक्षादित्युक्तम्॥ तत्र बाधकमाह–निपातेति। निपातमिति अव्ययोपलक्षकम्, तेन चन्द्र इवेत्यादौ इवार्थसादृश्ये चन्द्रस्य प्रतियोगितयाऽन्वयोपपत्तिः। नामार्थश्च नामार्थश्च नामार्थौ, अव्ययनिपातातिरिक्तौ च तौ नामार्थौ च तयोः, भेदेन=तादात्म्यातिरिक्तेन संयोगसमवायस्वरूपकालिकप्रतियोगित्वादिभेदसम्बन्धेन, अन्वयस्य=अन्वयबोधस्य, अव्युत्पन्नत्वात् असिद्धत्वादित्यर्थः। तथा च विभक्त्यर्थातिरिक्तभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन निपातातिरिक्तनामार्थनिष्ठशाब्दबोधं प्रति नामपदनिरूपितवृत्तिज्ञान-

**था राजा पुरुष इत्यत्रापि तथान्वयबोधः स्यात्। 'घटो न पट' इत्यादौ घटपटाभ्यां नञः साक्षादेवान्वयान्निपातातिरिक्तेति। नीलो घट इत्यादौ नामार्थयोरभेदसम्बन्धेनान्वयाद् भेदेनेति। न च राजपुरुष इत्यादौ लुप्तविभक्तेः स्मरणं कल्प्यमिति वाच्यम्, अस्मृतविभक्तेरपि ततो बोधोदयात्। तस्माद्राजपदादौ राजसम्बन्धिनि लक्षणा, तस्य च पुरुषेण सहाभेदान्वयः।**

---

जन्योपस्थितेर्विशेष्यतासम्बन्धेन प्रतिबन्धकत्वमिति–अव्युत्पन्नत्वादित्यन्तग्रन्थेन फलितम्, 'राजपुरुष'इत्यत्र षष्ठीविभक्त्यर्थस्वत्वातिरिक्तसम्बन्धेन राजप्रकारतानिरूपितविशेष्यतासम्बन्धेन पुरुषे शाब्दबोधं प्रति राजपदनिरूपितलक्षणाज्ञानाधीनार्थोपस्थितेः विशेष्यतासम्बन्धेन पुरुषे प्रतिबन्धकत्वात् न विभक्त्यर्थमद्वारीकृत्याऽन्वयबोधः इति भावः॥ तादृशप्रतिबध्यप्रतिबन्धकभावाऽनङ्गीकारे बाधकमाह–**अन्यथेति**। अव्ययनिपातातिरिक्तनामार्थयोरपि भेदेन अन्वयबोधस्वीकारे इत्यर्थः। उक्तप्रतिबध्यप्रतिबन्धकभावाऽनङ्गीकारे इति यावत्। राजापुरुष'इत्यत्र राजपदपुरुषपदाभ्यां, तथा–='राजनिरूपितस्वत्ववान्पुरुष'इति स्वत्वसम्बन्धेन राजप्रकारकपुरुषविशेष्यकान्वयबोधापत्तिः स्यादित्यर्थः॥ अतः उक्तनियमलभ्यः तादृशप्रतिबध्यप्रतिबन्धकभावः आवश्यक इतिभावः॥ उक्तनियमे 'निपातातिरिक्त'पदव्यावृत्तिमाह–**घटो नेति**। निपातातिरिक्तत्वानुपादाने'नामार्थयोर्भेदेनाऽन्वयबोधस्याऽव्युत्पन्नत्वादिति नियमोऽवशिष्यते, तथा च 'घटो न पट' इत्यत्र पटस्य प्रतियोगितात्मकभेदसम्बन्धेन नञर्थे भेदे,–भेदस्य च स्वरूपात्मकभेदसम्बन्धेन घटेऽन्वयो भवतीति–पटप्रतियोगिकभेदवान्घट इति बोधो भवति, स न स्यात्, निपातातिरिक्तेत्युपादाने तु नञ्निपातो वर्तते इति तत्र साक्षाद्भेदसम्बन्धेनाऽन्वयबोधो निराबाध इति भावः॥ 'भेदेने'तिपदव्यावृत्तिमाह–**'नीलो घट' इति**। भेदेनेत्यनुपादाने निपातातिरिक्तनामार्थयोः नीलत्वविशिष्टघटयोः अभेदसम्बन्धेनापि अन्वयस्य अव्युत्पन्नत्वापत्त्या तत्र नीलाऽभिन्नघट इति अन्वयबोधो न स्यात्, अतः भेदेनेति, तथा च भेदसम्बन्धेन तत्रान्वयबोधो न भवति, अभेदेन तु भवत्येवेति भावः॥ ननु राजपुरुष इत्यादौ प्रकारान्तरेण शाब्दबोधनिर्वाहात् राजपदस्य लक्षणा नांगीकार्येत्याशयेनाशंकते–**न च राजपुरुष इत्यादाविति**। राजपुरुषइतिवाक्ये राजपदोत्तरं या षष्ठी लुप्ता तस्याः राजपदसमभिव्याहृतत्वेन स्मरणं कल्प्यताम्, तथा च स्मृतविभक्त्यर्थस्वत्वद्वारा राजपदार्थपुरुषपदार्थयोरन्वयबोधात् नोक्तनियमभङ्गो न वा पूर्वपदलक्षणाप्रयास इति भावः॥ तत्समाधत्ते–**अस्मृतविभक्तेरपीति**। षष्ठीलोपम् अजानतः पुरुषस्यापि तादृशवाक्यश्रवणाधीनशाब्दबोधोत्पत्तेः स्मरणकल्पना व्यभिचारिणीति, 'समृद्धं ग्रामगत'इत्यत्र समृद्धग्रामयोरभेदान्वयधीप्रसंगश्च स्यादतः पूर्वपदे लक्षणाकल्पनं ध्रुवमेवेति भावः॥ उपसंहरति–**तस्मादिति**। राजपदशक्यार्थस्य पुरुषपदार्थेन सह साक्षाद्भेदसम्बन्धेनाऽन्वयाऽसंभवात, 'राजपुरुष'इत्यादौ राजपदस्य, राजसम्बन्धिनि=राजस्वत्वविशिष्टे, निरूढालक्षणा आवश्यकी, तस्य=राजपदलक्ष्यार्थराजसम्बन्धिनश्च, पुरुषपदार्थेन सह अभेदेनान्वयः, तथा च–'राजसम्बन्ध्यभिन्नपुरुष' इति बोधः सम्पद्यत इति भावः॥ ननु राजपुरुष इत्यादौ पुरुषपदं 'राजसम्बन्धिपुरुषलाक्षणिकं राजपदं तात्पर्यग्राहकमिति कथं न स्वीक्रियते इति चेन्न। पूर्वपदस्य सम्बन्धिनि लाक्षणिकत्वस्वीकारेणैवाऽभिमतशाब्दबोधोपपत्तेः, संभवति सार्थकत्वे निरर्थकत्वकल्पनाया अन्याय्यत्वादिति न्यायेन तत्पुरुषे पूर्वपदस्य तात्पर्यग्राहकत्वस्वीकाराऽनौचित्यादिति **ध्येयम्**। ननु 'अभेदे कर्मधारय' इत्यनुशासनेन राजपुरुष इत्यस्य कर्मधारयत्वापत्तिरिति चेन्न। सामानार्थकपदद्वयघटितविग्रहबोध्यसमासस्यैव कर्मधारयत्वस्वीकारात, 'अभेदे कर्मधारय'इत्यस्य एकधर्मिनिष्ठ-

द्वन्द्वे तु धवखदिरौ छिन्धीत्यादौ धवः खदिरश्च विभक्त्यर्थद्वित्वप्रकारेण बुध्यते

वृत्तिनिरूपके पदे सति तादृशपदद्वयसमासः कर्मधारय इत्यर्थकतया—'एकधर्मिनिष्ठवृत्तिनिरूपकपदद्वयघटितविग्रहबोध्यसमासत्वं कर्मधारयत्वमिति लाभात् ॥ ननु—राजपुरुष इत्यत्र राजपदस्य राजसम्बन्धिनि लक्षणाङ्गीकारे राज्ञः पुरुष इत्यस्य विग्रहत्वानुपपत्तिः, समाससमानार्थकसमासारम्भकवाक्यस्यैव विग्रहत्वादिति चेन्न । समासजन्यशाब्दबोधसमानविषयकशाब्दबोधजनकसमासारम्भकवाक्यस्यैव विग्रहत्वनिर्वचनात् ॥ परे तु—राजपुरुष इत्यादितत्पुरुषे न लक्षणा, किन्तु 'पुरुषविशेष्यकस्वत्वसंसर्गकराजप्रकारकशाब्दबोधं प्रति राजपदाऽव्यवहितोत्तरपुरुषपदत्वात्मकानुपूर्वीज्ञानस्य कारणत्वमि'ति नियमेन स्वत्वादिसंसर्गेणैव राज्ञः पुरुषादावन्वयबोधस्वीकारात्, अन्यथा "दर्शते राजमातङ्गास्तस्यैवामी तुरङ्गमाः। चैत्रो ग्रामगतस्तत्र मैत्रः किं कुरुतेऽधुना" इत्यत्र तच्छब्देन लक्ष्यार्थैकदेशस्य राज्ञः परामर्शो न स्यात्, तत्पदेन पूर्ववाक्यस्थपदार्थस्यैव परामर्शो न तु एकदेशस्य तादृशपदार्थतावच्छेदकस्यापीति नियमाद् इत्याहुः । तन्न । तच्छब्दस्य बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नशक्तत्वसिद्धान्तेन सति तात्पर्ये पदार्थैकदेशराज्ञोऽपि तच्छब्देन परामर्शे बाधकाऽभावात्। राजसम्बन्धिनि राजपदस्य स्वारसिकलक्षणाग्रहदशायां तादृशलाक्षणिकराजपदघटित'राजपुरुष'इतिकर्मधारयात् 'राजसम्बन्ध्यभिन्नः पुरुष'इत्यादिबोधस्य सर्वानुमततया तादृशानुपूर्वीज्ञानस्य द्विविधशाब्दबोधहेतुताकल्पने गौरवाच्चेतिध्येयम् ॥ एवम्—ग्रामगत' इत्यत्र ग्रामं गत इति विग्रहेण ग्रामपदस्य ग्रामकर्मत्वे, 'चैत्रनीतः'—इत्यत्र चैत्रेण नीत इति विग्रहेण चैत्रपदस्य चैत्रकर्तृत्वे, 'ब्राह्मणदत्तः'—इत्यत्र ब्राह्मणाय दत्त इति विग्रहेण ब्राह्मणपदस्य ब्राह्मणसम्प्रदानकत्वे' 'वृक्षपतितः'इत्यत्र वृक्षात् पतित इति विग्रहेण वृक्षपदस्य वृक्षाऽवधित्वे, 'चैत्रधन'मित्यत्र चैत्रस्य धनमितिविग्रहेण चैत्रपदस्य चैत्रस्वत्वे, 'गृहस्थित'इत्यत्र गृहे स्थित इतिव्युत्पत्या गृहपदस्य गृहाधेयत्वे तत्पुरुषे लक्षणा बोध्येति ।

इतरेतरद्वन्द्वसमासे सहवृत्तित्वात्मके मुख्ये साहित्ये एकक्रियान्वयित्वात्मके गौणे साहित्ये वा लक्षणावादिमीमांसकमतं कटाक्षयन् इतरेतरद्वन्द्वे लक्षणां निषेधति—द्वन्द्वे त्विति। स्वघटकयद्यन्नामोपस्थाप्ययदर्थप्रकारकान्वयबोधं प्रति यादृशानुपूर्वीप्रकारकनिश्चयत्वेन हेतुत्वं तादृशानुपूर्वीमत्समासत्वं तत्तदर्थबोधे द्वन्द्वत्वमिति लक्षणम् । द्वन्द्वो द्वेधा—इतरेतरद्वन्द्वः समाहारद्वन्द्वश्च, तत्र—एकवचनाऽन्यसुबाकांक्षसमासत्वम् इतरेतरद्वन्द्वत्वम्, एकवचनाऽन्यसुबाकांक्षाशून्यसमासत्वं समाहारद्वन्द्वत्वम् ॥ 'धवखदिरौ छिन्धि'इतीतरेतरद्वन्द्वे धवखदिरपदाभ्यां धवखदिरौ विभक्त्यर्थौ यत् द्वित्वं कर्मत्वं च तत्र प्रकारतया बुध्येते इत्यर्थः, तथा च—'धवखदिरद्वयकर्मकछेदनानुकूलव्यापारानुकूलकृतिमाँस्त्वमि'तिबोधः लक्षणां विनैव सम्पद्यते, अतः तत्र=इतरेतरद्वन्द्वे, न साहित्ये लक्षणेत्यर्थः ॥ **मीमांसकः**—'धवखदिरावित्यत्र धवत्वं खदिरत्वं च प्रत्येकं न उद्देश्यतावच्छेदकं(द्विवचनार्थद्वित्वविशेष्यतावच्छेदकं), सुपाम् उद्देश्यतावच्छेदकव्याप्यसंख्याबोधकत्वनियमात्, अन्यथा 'आकाशौ'इत्यादिवाक्यस्यापि प्रामाण्यापत्तेः, एवं च प्रकृते धवद्वयनिष्ठद्वित्वखदिरद्वयनिष्ठद्वित्वयोरेव प्रत्येकं धवत्वखदिरत्वव्याप्यत्वेन धवद्वयखदिरद्वयबोधापत्तेः, अतः खदिरपदस्य सहवृत्तिधवखदिरे अजहत्स्वार्थलक्षणा, धवपदं तु 'खदिरपदं सहवृत्तिधवखदिरं बोधयत्वि'तितात्पर्यग्राहकम्। एवं च सहवृत्तित्वात्मकसाहित्यस्यैवोद्देश्यतावच्छेदकतया तादृशसाहित्यव्याप्यत्वं न धवद्वयवृत्तिद्वित्वस्य न वा खदिरद्वयवृत्तिद्वित्वस्य, अपि तु धवखदिरोभयवृत्तिद्वित्वस्यैवेति न धवद्वयबोधापत्तिर्न वा खदिरद्वयबोधापत्तिः, न वा धवखदिरोभयबोधानुपपत्तिः, सहवृत्तिधवखदिरद्वयकर्मकछेदनानुकूलव्यापा रा-

**तत्र न लक्षणा। न च साहित्ये लक्षणेति वाच्यम्, साहित्यशून्ययोरपि द्वन्द्वदर्शनात्, न चैकक्रियान्वयित्वरूपं साहित्यमस्तीति वाच्यम्। क्रियाभेदेऽपि धवखदिरौ पश्य छिन्धीत्यादिदर्शनात्, साहित्यस्याननुभवाच्च। अत एव, राजपुरोहितौ**

नुकूलकृतिमाँस्त्वमिति बोधात्,—इति शंकते—**न च साहित्ये लक्षणेति**। साहित्ये=साहित्याश्रये, साहित्याश्रयधवखदिरे इति यावत्, खदिरपदस्य अजहत्स्वार्थलक्षणा स्वीकार्येत्यर्थः। ननु साहित्यं कीदृशम्, सहवृत्तित्वरूपम् एकक्रियान्वयित्वरूपं वा, इति विकल्प्य आद्यं दूषयति—**साहित्यशून्ययोरपीति**। सामानाधिकरण्यशून्यधवखदिरोभयबोधतात्पर्येणोच्चरितधवखदिरपदयोरपि, द्वन्द्वसमासानुभूयमानत्वात्, तत्र साहित्यस्य बाधितत्वात् एवं घटत्वपटत्वे गोत्वाश्वत्वे इत्येतयोरपि साहित्यशून्ययोः द्वन्द्वदर्शनात् न साहित्याश्रये लक्षणेति भावः। ननु एकक्रियान्वयित्वरूपं गौणं साहित्यं तत्र वर्तते एवेति द्वितीयपक्षं शंकते—**न चैकक्रियेति**। एकच्छेदनत्वादिजातीयक्रियान्वयित्वात्मकं साहित्यं धवखदिरयोर्वर्तते, 'घटत्वपटत्वे विरुध्येते' इत्यादौ विरोधत्वात्मकैकजातीयविरोधनात्मकक्रियान्वयित्वरूपसाहित्यं वर्ततेऽतस्तादृशसाहित्याश्रयधवखदिरे खदिरपदलक्षणायां न बाधकमिति भावः॥ समाधत्ते—**क्रियाभेदेऽपीति**। धवदर्शनखदिरच्छेदनतात्पर्येण प्रयुक्ते धवखदिरौ पश्य छिन्धि' इति वाक्ये एकजातीयक्रियान्वयित्वशून्यधवादिबोधतात्पर्येणोच्चारितधवखदिरयोरपि द्वन्द्वदर्शनात् नैकजातीयक्रियान्वयित्वरूपं साहित्यं तत्र वर्ततेऽतः साहित्ये न लक्षणेत्यर्थः॥ ननु एकक्रियान्वयित्वरूपं न साहित्यं ब्रूमः, किन्तु—एकशाब्दबोधीयक्रियान्वयित्वरूपम्, एवं च 'धवखदिरौ पश्य छिन्धि'इत्यत्र धवविषयकदर्शनाश्रयः खदिरकर्मकच्छेदनानुकूलकृतिमाँश्चेत्याकारकशाब्दबोधस्य जायमानतया एतादृशे साहित्ये लक्षणा निराबाधा इत्यत आह—**साहित्यस्याऽननुभवादिति**। साहित्यस्य=एकशाब्दबोधीयक्रियान्वयित्वात्मकसाहित्यस्य प्रकारतया शाब्दबोधेऽविषयत्वात्,=एकशाब्दबोधीयक्रियान्वितधवविषयकदर्शनाश्रयः तादृशखदिरकर्मकच्छेदनानुकूलकृतिमाँश्चेति'शाब्दबोधस्याऽजायमानत्वादित्यर्थः। तथाच एतादृशसाहित्यप्रकारेण धवखदिरस्मरणशाब्दबोधापत्तिः, धवत्वादिप्रकारेण धवादिशाब्दबोधाऽनुपपत्तिश्च स्यादिति भावः। किञ्च—एकक्रियाविषयतानिरूपितसंसर्गतानिरूपितशाब्दबोधविषयत्वरूपं साहित्यं न शाब्दबोधविषयः स्वस्मिन् स्वविषयकत्वस्याऽननुभवात्। यदि तु एककालवृत्तित्वं साहित्यमुच्यते, तर्हि तस्यापि शाब्दबोधविषयत्वाऽननुभवः। यदि तु अपेक्षाबुद्धिविषयत्वं साहित्यं, तदपि न, बोधे तस्य प्रकारतयाऽननुभवात् इति ध्येयम्॥ 'आकाशावि'तिवाक्यस्य प्रामाण्यापत्तिवारणं तु—सुपां प्रकृत्यर्थपर्याप्तसंख्याबोधकत्वं,—प्रकृततात्पर्यविषयताशून्याऽवृत्तिसंख्याबोधकत्वं वे'तिनियमस्वीकारेणैव भवति, एवं च धवखदिरावित्यत्र धवद्वयादिगतद्वित्वस्य धवखदिरोभयात्मकप्रकृत्यर्थपर्याप्तत्वाऽभावेन न धवद्वयादिबोधापत्तिः, धवखदिरोभयगतद्वित्वस्य तु प्रकृत्यर्थपर्याप्तत्वात् न धवखदिरोभयबोधानुपपत्तिरिति ध्येयम्॥ यत्र लक्षणा नास्ति तत्रेतरेतरद्वन्द्वस्य आश्रयणेन इतरेतरद्वन्द्वे लक्षणाऽभावं दृढयति—**अत एवेति**। इतरेतरद्वन्द्वे साहित्यस्याऽननुभवादेव,'राजपुरोहितौ सायुज्यकामौ यजेयातामि'तिश्रुतिघटके राजपुरोहिताविति समासे तत्पुरुषापेक्षया लक्षणाऽनाश्रयणलाघवात् राज्ञः पुरोहितस्य च द्वन्द्वः अङ्गीक्रियते इत्यर्थः। तत्र—पुरोहितश्च पुरोहितश्च पुरोहितौ, राज्ञः पुरोहितौ राजपुरोहितौ—इति षष्ठीतत्पुरुषो वा, राजा च पुरोहितश्च राजपुरोहिताविति द्वन्द्वो वा, इति सन्दिह्य, अनन्तरं तत्पुरुषपक्षे राजसम्बन्धिनि लक्षणापत्त्या इतरेतरद्वन्द्वएव अङ्गीकृतः, यदि इतरेतरद्वन्द्वेऽपि साहित्याश्रये लक्षणा तर्हि तत्पुरुषतुल्यतया तत्पुरुषोपेक्षायांबीजाऽभावात् तत्सिद्धान्तविरोधापत्तेरिति भावः॥ उक्तं च जैमिनीयन्यायमालायाम्—**"सायुज्यकामौ**

**सायुज्यकामौ यजेयाताम्' इत्यत्र लक्षणाभावाद् द्वन्द्व आश्रीयते। तस्मात्साहित्यादिकं नार्थः, किन्तु वास्तवभेदो यत्र तत्र द्वन्द्वः। न च नीलघटयोरभेद इत्यादौ कथमिति वाच्यम्, तत्र नीलपदस्य नीलत्वे घटपदस्य घटत्वे लक्षणा। अभेद इत्यस्य चाश्रयाभेद इत्यर्थः॥**

---

यजतोऽनेन राजपुरोहितौ। राज्ञः पुरोहितौ राज्ञोस्तौ वा राजात्मकावुभौ॥ द्वयोर्द्वन्द्वसमासो वा तुल्यत्वायाऽग्रिमो द्वयोः। सिद्ध्यै द्वितीयो राजोक्तिसार्थत्वाय तृतीयकः॥ अब्याहृत्यै चतुर्थः स्यात् वचनाद्भिन्नकल्पना। तनूनपान्नराशंसौ विकल्प्येते समत्वतः॥ इति॥ स्वमतमुपसंहरति–तस्मादिति। साहित्यस्याऽननुभवात्, निरुक्तश्रुतिघटकराजपुरोहितावित्यस्य इतरेतरद्वन्द्वत्वसिद्धान्तविरोधापत्तेश्च, साहित्यं–'सहवृत्तित्वरूपं मुख्यं, आदिना एकक्रियान्वयित्वात्मकं गौणं साहित्यं, नार्थः=न द्वन्द्वलक्ष्यतावच्छेदकपदार्थ इत्यर्थः॥ ननु तर्हि "साहित्ये द्विवचनबहुवचने द्वन्द्वसमासो वे"त्यनुशासनस्य का गतिरिति चेन्न। शाब्दबोधोत्तरकालीनमानसप्रत्यक्षविषयं यदर्थसाहित्यं भवति तत्र द्विवचनबहुवचने द्वन्द्वसमासो वेति तदर्थात्॥ ननु तर्हि द्वन्द्वात् पूर्वं साहित्यभानाऽभानात् साहित्यस्य द्वन्द्वे प्रयोजकत्वमेव न भवतीति प्रयोजकान्तरं किञ्चिद्वक्तव्यं यद्बलात् द्वन्द्वो यदभावे तु न द्वन्द्व किन्तु कर्मधारयादि इत्याकांक्षायां द्वन्द्वप्रयोजकमाह–**किन्तु वास्तवभेदो यत्रेति**। वास्तवभेदः=समासघटकपदार्थयोरन्यतरप्रतियोगिकभेदो, यत्र=यादृशान्यतरपदार्थे प्रसिद्ध उपलभ्येत, तत्र=तादृशान्यतरपदार्थे, द्वन्द्वसमासो भवतीति। यादृशपदद्वयवृत्तिमत्पदार्थयोः परस्परभेदे तात्पर्यविषये सति ये पदे प्रयुज्येते, तादृशपदयोर्द्वन्द्व इत्यर्थः। 'चार्थे द्वन्द्व' (२।२।२९) इतिसूत्रं, तत्र चकारस्य समुच्चयाऽन्वाचयेतरेतरसमाहाराश्चत्वारोऽर्थाः, घटं पटं चानयेत्यत्र चार्थः समुच्चयः, तत्र घटपटयोः आनयनक्रियान्वयित्वेन सापेक्षत्वान्न समासः, भिक्षामट गां चानये'त्यत्र चार्थोऽन्वाचयः, अत्रापि भिक्षागवोः सापेक्षत्वादसामर्थ्यादेव न समासः, रामश्च लक्ष्मणश्च रामलक्ष्मणौ, अहिश्च नकुलश्च अहिनकुलमितीतरेतरसमाहारयोरेव यत्र चार्थत्वं तत्रैव समास इति, यत्र पदार्थयोर्भेदः तत्रैव चकारः प्रयुज्यते इति समुच्चयाऽन्वाचयेतरेतरसमाहारेषु चार्थो भेद एव, एतस्मिन् भेदे समस्यमानपदार्थयोर्वस्तुतो वर्तमाने सति द्वन्द्वसमासो भवतीति सूत्रार्थः। इतरेतरसमाहारयोरविलम्बेन पदार्थद्वयोपस्थापकत्व-युगपत्समभिव्याहृतक्रियान्वयित्वबोधो-भयतात्पर्येणोच्चरितत्वरूपसामर्थ्यवत्त्वात् द्वन्द्वसमासः स्वीकार्यः, तथा च तत्र 'चकारार्थस्य भेदव्याप्यत्वात् पदार्थभेदस्यैव द्वन्द्वप्रवृत्तिनियामकत्वात् न साहित्याभावप्रयुक्तद्वन्द्वानुपपत्तिरिति। न तु पदभेदः द्वन्द्वप्रयोजकः, नीलोत्पलमित्यत्र द्वन्द्वप्रसंगादिति ध्येयम्॥ ननु–'नीलघटयोरभेद'इतिवाक्ये पदार्थभेदाऽभावात् नीलश्च घटश्च नीलघटौ तयोरिति द्वन्द्वो न स्यादित्याशंकते–**न च 'नीलघटयोरभेद'इत्यादाविति**। 'नीलघटयोरभेद'इतिवाक्ये, आदिना प्रमाणप्रमेयसंशयादिन्यायादिमसूत्रे प्रमाणस्य प्रमेयाऽभिन्नत्वेन तत्रापि, कथं=केन प्रयोजकेन, द्वन्द्व आश्रीयते, तथा च तत्र पदार्थयोर्भेदाऽभावेऽपि द्वन्द्वो भवतीति न द्वन्द्वं प्रति पदार्थयोर्भेदस्य प्रायोजकत्वमित्याशंकितुरभिप्रायः॥ 'नीलघटयोः कथं द्वन्द्व इत्येवशंकाया उचितत्वेन 'अभेद'इति पदस्योपादानन्तु भेदाभावं स्फुटीकरणाय बोध्यम्॥ समाधत्ते–**तत्रेति**। नीलघटयोर्द्वन्द्वसमासात्प्राक् असमस्तस्य केवलस्य नीलपदस्य नीलत्वे=नीलरूपे लक्षणा, घटपदस्य च घटत्वे जातौ लक्षणा, तयोः लाक्षणिकपदार्थयोः भेदसत्त्वात् प्रयोजकलाभेन ततस्तत्र द्वन्द्वसमासानुसरणात् न द्वन्द्वानुपपत्तिः, न वा द्वन्द्वोत्तरं तत्र लक्षणापत्तिः। 'अभेद'पदस्य च

सामाहारद्वन्द्वे तु यदि समाहारोऽप्यनुभूयत इत्युच्यते, तदाऽहिनकुलमित्यादौ परपदेऽहिनकुलसमाहारे लक्षणा, पूर्वपदं तु तात्पर्यग्राहकम्। न च भेरीमृदङ्गं वाद-

आश्रयाऽभेदइति लक्ष्यार्थः =प्रयोक्तृतात्पर्यविषयार्थः, तथा च 'नीलत्वघटयोः आश्रयाऽभेदइति बोधः वस्तुतस्तु–आश्रयाऽभेदे लक्षणाऽपेक्षया समानव्यक्तिसमवेतत्वे लक्षणा उचिता, तथा च 'नीलत्वघटत्वे समानव्यक्तिसमवेते'इति बोध इति नवीनाः ॥ एवं प्रमाणप्रमेयादिसूत्रेऽपि प्रमाणत्वप्रमेयत्वादौ द्वन्द्वात्पूर्वं लक्षणया 'पदार्थ'इत्यस्य पदार्थतावच्छेदके लक्षणया तत्राऽपि न द्वन्द्वोत्तरं लक्षणापत्तिः, न वा शाब्दबोधाऽनुपपत्तिरिति॥ **अत्रेदं बोध्यम्**–"पदार्थभेद इत्यत्र पदार्थत्वं पदजन्यप्रतीतिविषयत्वम्, तच्च पदार्थे पदार्थतावच्छेदके च, अतः क्वचित् पदार्थभेदात् क्वचित्तु पदार्थतावच्छेदकभेदात् द्वन्द्वः, प्रकृते च नीलत्वघटत्वयोः पदार्थतावच्छेदकयोर्भेदात् द्वन्द्वः 'घटा'इत्यादौ घटश्च घटश्च घटश्चेति पदार्थभेदात् द्वन्द्व इति ॥ अन्ये तु पदार्थ-तदवच्छेदकयोरन्यतरभेदस्य प्रयोजकत्वापेक्षया–पदार्थतावच्छेदकभेदस्यैव द्वन्द्वप्रयोजकत्वं वक्तव्यम्। न चैवं सति 'घटा'इत्यादौ पदार्थतावच्छेदकभेदाऽभावेन द्वन्द्वस्याऽप्रसक्त्या तदपवादक'सरूपैकशेषो न स्यादिति वाच्यम्, इष्टापत्तेः, बहुवचनान्तघटशब्देनैव बहुघटबोधसंभवात्। न च–एकघटशब्देन अनेकघटबोधो न भवति, 'सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति'न्यायादितिवाच्यम्, उक्तन्याये सकृदर्थं गमयतीत्यत्र सकृच्छब्दस्य बोधे विशेषणतया 'सकृदुच्चरितः शब्दः एकवृत्त्या शाब्दबोधं जनयती'त्यर्थ-लाभात् उक्तव्युत्पत्तौ विरोधाऽभावात्। 'सरूपैकशेष'विधेस्तु हरीत्यादिपदे सूर्यत्वसिंहत्वादिपदार्थतावच्छेदकभेदेन द्वन्द्वप्रसक्त्या तत्रैव तदपवादकतया सार्थकत्वात् न निर्विषयत्वमिति–वदन्ति। एतन्मते क्वचित्पदार्थभेदस्य क्वचित्पदार्थतावच्छेदकभेदस्य द्वन्द्वप्रयोजकत्वेऽनुभवसिद्धे सत्यपि तत्र भेदशब्दस्य पदार्थतावच्छेदकभेदमात्रपरताकल्पनं, तथा सति सर्वत्र प्राप्तसरूपैकशेषविधेः नानार्थकहर्यादिमात्रपरताकल्पनं च गौरवमिति **बोध्यम्** ॥

अथ समाहारद्वन्द्वे प्राचीनमते समाहारस्याऽनुभवसिद्धत्वात् समाहारे लक्षणाऽङ्गीक्रियते, नवीनमते तु समाहारस्य तत्राऽननुभवात् न समाहारे लक्षणा, इतिमतद्वयोर्मध्ये प्रथमं प्राचीनमतेन समाहारद्वन्द्वे लक्षणां दर्शयितुमाह–**समाहारद्वन्द्वे त्विति**। एकवचनाऽन्यन्तुवाकांक्षाशून्यसमासत्वं समाहारद्वन्द्वत्वम्, यथा पाणिपादम्, हस्त्यश्वम्, अहिनकुलमित्यादौ। अहिश्च नकुलश्चैतयोः समाहारः अहिनकुलम्, समाहारश्च–अपेक्षाबुद्धिविशेषविषयता। एतत्समासे यदि 'अहिनकुलयोः समाहारः 'श्रोतुरनुभवविषयो भवति, तदा=समाहारस्यानुभवसिद्धत्वपक्षे, अहिनकुलमित्यादौ=अहिनकुलम्, हस्त्यश्वम्, पाणिपादमित्यादौ, परपदे=उत्तरपदे, नकुले अहिनकुलसमाहारे, अश्वे हस्त्यश्वसमाहारे, पादे पाणिपादसमाहारे, अजहत्स्वार्थलक्षणा बहुव्रीहौसमासे इव अङ्गीकर्तव्या, पूर्वपदं तु–तात्पर्यग्राहकम्=अहिपदं "नकुलपदम् अहिनकुलसमाहारं बोधयतु" हस्तिपदं "अश्वपदं हस्त्यश्वसमाहारं बोधयतु" पाणिपदं "पादपदं पाणिपादसमाहारं बोधयतु" इत्येवं वक्तुस्तात्पर्यग्राहकं बोध्यमित्यर्थः तथा च–'अपेक्षाबुद्धिविशेषविषयत्वात्मकम्–अहिनकुलवृत्तिद्वित्वमिति बोधः। वस्तुतस्तु–अहित्वनकुलत्वाभ्यामेव अहिनकुलमात्रप्रतीतेः नोत्तरपदे समाहारलक्षणा, नवा वैयाकरणमतसिद्धा शक्तिरित्यभिप्रायेणोक्तं 'यदि' समाहार इति। पूर्वपदलक्षणां परिकल्प्य उत्तरपदस्य तात्पर्यग्राहकत्वे तु 'प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामि'ति व्युत्पत्तिविरोधापत्तेः, उत्तरपदस्यैव लक्षणा युक्ता इत्यभिप्रायेण '**पूर्वपदं त्वि**'त्युक्तम् ॥ समाहारद्वन्द्वे समाहारे लक्षणया समाहारद्वन्द्ववाक्यस्याऽप्रामाण्यं शंकते–न च **भेरीमृदंगमिति**। भेरी च मृदंगश्चैतयोः समाहारः

**येत्यत्र कथं समाहारस्यान्वयः, अपेक्षाबुद्धिविशेषरूपस्य तस्य वादनासम्भवादिति वाच्यम्, परम्परासम्बन्धेन तदन्वयात्। एवं पञ्चमूलीत्यादावपि। परे तु अहिनकुलमित्यादौ अहिर्नकुलश्च बुध्यते, प्रत्येकमेकत्वान्वयः, समाहारसंज्ञा च यत्रैकत्वं**

---

भेरीमृदंगम्, तत्र मृदंगपदस्य भेरीमृदंगसमाहारे अजहत्स्वार्थलक्षणा, भेरीपदं तु "मृदंगपदं भेरीमृदंगसमाहारं बोधयतु' इतितात्पर्यग्राहकम्। तथा च भेरीमृदङ्गसमाहारं वादय' इति वाक्यार्थः सम्पादनीयः, तत्र वादनेन सह समाहारस्य कथमन्वयः स्यात्, यतः समाहारोऽत्र द्वित्वमेव, तच्च द्रव्यगुणकर्मादिद्वन्द्वसाधारणम्—अपेक्षाबुद्धिविशेषविषयतारूपम्, वादनं च—अभिघाताख्यसंयोगावच्छिन्नक्रिया, तथा च—भेरीमृदंगनिष्ठाऽपेक्षाबुद्धिविशेषविषयत्वात्मकस्य भेरीमृदङ्गसमाहारस्य अभिघाताख्यसंयोगावच्छिन्नक्रियात्मक-वादनकर्मत्वाऽन्वयाऽसंभवात् तादृशबाधितार्थकवाक्यस्याऽप्रमाण्यापत्तिः, अतः समाहारे लक्षणा नाङ्गीकार्येत्याशंकितुरभिप्रायः॥ प्राचीनः समाधत्ते-**परम्परासम्बन्धेनेति**। स्वा(वादनकर्मता)श्रय(भेरीमृदंगद्रव्य)वृत्ति(द्वित्व)तासम्बन्धेन, तदन्वयात् =वादनकर्मतायाः अपेक्षाबुद्धिविशेषविषयतायाम् अन्वयात्, तथा च अबाधितार्थतया न अप्रामाण्यापत्तिरतो न लक्षणाऽनुपपत्तिरपीति भावः॥ तथा च-'भेरीमृदंगनिष्ठाऽपेक्षाबुद्धिविशेषविषयत्ववृत्ति यत् स्वाश्रयवृत्तित्वसम्बन्धावच्छिन्नकर्मत्वं तन्निरूपकसंयोगावच्छिन्न क्रियानुकूलकृतिमाँस्त्वमि'ति बोधः॥ उक्तं लक्षणानियमं द्विगवर्थसमाहारस्थलेऽपि दर्शयति-**एवमिति**। पञ्चानां मूलानां समाहारः पञ्चमूली। अत्र 'तद्धितोत्तरपदसमाहारे च' (२।१।५१) इत्यनेन समासः, 'संख्यापूर्वो द्विगुः' (२।१।५२) इत्यनेन द्विगुसंज्ञा, 'अकारान्तरोत्तरपदो द्विगुः स्त्रियामिष्टः' (वा-२।४।१७) इत्यनेन स्त्रीलिङ्गत्वं चेति॥ अत्र पञ्चमूलसमाहारे उत्तरपदस्य मूलपदस्यैव अजहत्स्वार्थलक्षणा, पञ्चपदं तु 'मूलपदं पञ्चमूलसमाहारं बोधयत्वि'ति वक्तृतात्पर्यग्राहकम्, तथा च 'पञ्चमूलसमाहार' इति बोधः॥ आदिना पञ्चपूली पञ्चवटी, पञ्चपात्रम्, इत्यादिग्रहणम्। तत्र पूलपदस्य पञ्चपूलसमाहारे, पात्रपदस्य पंचपात्रसमाहारे, वटपदस्य पञ्चवटसमाहारे लक्षणा, पंचपदानि तु तात्पर्यग्राहकाणीति बोध्यम्॥ अथ नवीनमतेन समाहारे लक्षणाऽभावं व्युत्पादयति-**परेत्विति**। समाहारद्वन्द्वस्थलेसमाहारस्य अनुभवाऽविषयत्ववादिनवीनास्तु,अहिनकुलं भेरीमृदंगमित्यादौ अहिनकुलपदाभ्यां भेरीमृदंगपदाभ्यां च अहिः नकुलश्च भेरी मृदंगश्च, बुद्धयते = शाब्दबोधविषयो भवति, न तु समाहारोऽपीति, अतः समाहारे न लक्षणेत्याशयः॥ ननु तर्हि एकवचनार्थैकत्वस्य कान्वयः, अहिनकुलयोरेकत्वाऽभावात्, मम प्राचीनस्य मते तु अहिनकुलसमाहारस्य एकत्वात् एकत्वान्वयः सुकर इत्यत आह-**प्रत्येकमिति**। मम नवीनस्य मते अहिनकुलात्मकप्रकृत्यर्थप्रत्येकव्यक्तौ एकत्वस्याऽन्वयो निराबाधः, अतः समाहारस्याऽननुभवात् प्रयोजनाऽभावाच्च समाहारे लक्षणांगीकारो व्यर्थ इति भावः॥ ननु तर्हि समाहारबोधकसमासत्वात्मकयोगार्थकस्य समाहारस्य अभावात् कथं समाहारसंज्ञेत्यत आह-**समाहारसंज्ञा चेति**। यत्र "प्राणितूर्यसेनाङ्गानामि"ति सूत्रेण "येषां च विरोधः शाश्वतिकः" इति सूत्रेण च, द्वन्द्वः एकवत्स्यादित्यर्थकेन एकत्वमुक्तम्=एकवद्भावः विहितः, तथा "स नपुंसकमि"तिसूत्रेण-समाहारे द्विगुश्च नपुंसकः स्यादित्यर्थकेन नपुंसकभावो विहितः, तत्रैव= तादृशद्वन्द्वे एव,समाहारसंज्ञा भवतीत्यर्थः। तथा च नवीनमते समाहारसंज्ञा नान्वर्था किन्तु नदीवृद्धयादिसंज्ञावत् पारिभाषिक्येवेति भावः॥ प्राचीनमते तु पाणिपादम् अहिनकुलम् इत्यादौ समाहारस्याऽनुभवसिद्धत्वेन समाहारस्य एकत्वादेव समासस्याप्येकवचनान्तत्वप्राप्तेरेकवचनान्तत्वविधायक 'प्राणितूर्ये'त्यादि 'येषांचे'त्यादिसूत्रद्वयस्य तु प्राण्यङ्गादीनां समाहारद्वन्द्व एव न तु इतरेतरयोग इति

नपुंसकत्वं च 'प्राणितूर्ये'त्यादिसूत्रेणोक्तं तत्रैव, अन्यत्रैकवचनमसाध्वित्याहुः।

पितरौ श्वशुरावित्यादौ पितृपदे जनकदम्पत्योः, श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा। एवमन्यत्रापि। घटा इत्यादौ न लक्षणा,—घटत्वेन रूपेण नानाघटोपस्थितिसम्भवात्।

कर्मधारयस्थले तु, नीलोत्पलमित्यादावभेदसम्बन्धेन नीलपदार्थं उत्पलपदार्थे

---

नियमलाभः एव सार्थक्यं, अतः समाहारसंज्ञा प्राचीनमते अन्वर्थेति बोध्यम्॥ अथ नवीनमते तु समाहारसंज्ञाकरणम् एकवचनान्तत्वनपुंसकलिङ्गत्वयोः साधुत्वरक्षणार्थमेवेति सिद्धान्तं 'यत्र न समाहारसंज्ञा तत्र नैकवचनं नपुंसकत्वं च साधु'—इति व्यतिरेकमुखेन उपपादयति—**अन्यत्रेति**। समाहारसंज्ञारहितद्वन्द्वे धवखदिरावित्यादौ, एकवचनान्तत्वं नपुंसकत्वं च, न साधु=न व्याकरणशिक्षितमित्यर्थः॥ 'आहु'रित्यनेन नव्यमते समाहारसंज्ञायाः पारिभाषिकत्वस्वीकारकल्पनं पद्धतिविरुद्धमिति अस्वरस उद्भावितः॥ नन्वेकशेषस्थले एकपदस्य एकत्रैव वृत्त्या कथं शेषान्यपदार्थानां बोध इत्याकांक्षायाम् तत्र लक्षणया बोधं दर्शयति—**पितराविति**। 'चैत्रस्य पितरौ'इतिवाक्यघटके माता च पिता च पितरावित्येकशेषस्थले जनकदम्पत्योर्बोधतात्पर्योच्चारिते पितरावित्यत्र तु एकस्य चैत्रस्य पितृद्वयाऽसंभवेन पितृपदस्य जनकदम्पत्योः=उत्पादकमातृपित्रोः, अजहत्स्वार्थलक्षणा तथा च—'चैत्रनिष्ठजन्यतानिरूपितजनकतावद्द्वित्वाश्रयदम्पती'ति बोधः। एवं चैत्रस्य श्वशुरौ—इत्यत्र श्वश्रूच श्वशुरश्च 'श्वशुरावि'ति विरूपैकशेषे श्वशुरपदस्य स्त्रीजनकदम्पत्योः=स्वभार्योत्पादकमातृपित्रोः अजहत्स्वार्थलक्षणा, तथा च—'चैत्रनिष्ठपतित्वनिरूपितपत्नीत्ववत्स्त्रीनिष्ठजन्यतानिरूपितजनकतावद्द्वित्वाश्रयदम्पतीतिबोधः। आदिपदेन—स्वसृभ्रात्रुभयबोधतात्पर्येणोच्चरितभ्रातरावित्यत्र स्वसृभ्रात्रोरजहल्लक्षणा, दुहितृपुत्रोभयबोधतात्पर्येणोच्चरित—पुत्रावित्यत्र दुहितृपुत्रयोर्लक्षणा। अन्यत्रैकशेषस्थलेऽपि लक्षणामाह—**एवमन्यत्राऽपीति**। 'पुमान् स्त्रिये'त्यनेन यत्रैकशेषस्तत्र 'ब्राह्मणावानय शिवौ नमस्कुर्याद्'इत्यादौ ब्राह्मणीब्राह्मणोभयबोधतात्पर्येणोच्चरितब्राह्मणावितिब्राह्मणपदे शिवाशिवोभयबोधतात्पर्येणोच्चरितशिवाविति शिवपदे च ब्राह्मणीब्राह्मणयोः शिवाशिवयोः लक्षणेत्यर्थः॥ प्राचीनास्तु विरूपैकशेषस्थले लुप्तस्य मातृपदादेः स्मरणात् मात्रादेरवगमः, तदस्मरतस्तु पितृपदे जनकशरीरत्वेन लक्षणया मातापित्रोरवगतिरिति वदन्ति। कौमारास्तु( कलापव्याकरणकारास्तु )मात्रा पितुर्द्वन्द्वे मातापितृभ्यां मातरपितराभ्यामिति प्रयोगद्वयीदर्शनात् चैत्रस्य पितरावित्यत्र नैकशेषः, परन्तु पुष्पवन्तादिपदवत् मातृत्वपितृत्वाभ्यां विभिन्नरूपाभ्यामेकशक्तिमदेव नियतवचनाकांक्षं पितृपदं प्रकृत्यन्तरं, एवं श्वश्रू च श्वशुरश्चेत्यर्थे श्वशुरौ, इत्यत्र श्वशुरपदमपि श्वश्र्वा श्वशुरस्य द्वन्द्वे श्वश्रूश्वशुरावित्येव प्रयोगादित्याहुः'॥ अथ—सरूपैकशेषे लक्षणां विनैव बोधमुपपादयति—**घटा इति**। घटश्च घटश्च घटश्च 'घटाः'—इति बहुवचनान्तघटादिपदे लक्षणा नाङ्गीकार्या, यतः तत्र अनेकघटबोधतात्पर्यज्ञानसहितेन शक्तिज्ञानसहितेन घटपदज्ञानेन घटत्वेन धर्मेण अनेकघटोपस्थितौ बाधकाऽभावात् घटत्वावच्छिन्नाऽनेकघटबोधसंभवादित्यर्थः॥

अथ कर्मधारयसमासे विनैव लक्षणां बोधो भवतीति दर्शयति—**कर्मधारयस्थलेत्विति**। अव्यवहितोत्तरत्वसम्बन्धेन यन्नामविशिष्टयन्नामत्वं तादात्म्यसम्बन्धावच्छिन्नतन्नामार्थप्रकारतानिरूपिततन्नामार्थविशेष्यताशालियादृशशाब्दबोधं प्रति स्वरूपयोग्यतावच्छेदकं भवति तादात्म्येन तादृशबोधे तयोः कर्मधारयसमासत्वमिति लक्षणम्। अन्ये तु—तत्पुरुषत्वे सति समस्यमानपदार्थाऽभेदबोधकविग्रहत्वं कर्मधारयत्वम्। बहुव्रीहिवारणाय—सत्यन्तम्। राजपुरुषादितत्पुरुषवारणाय विशेष्यदलम् इति

**प्रकारः। तत्र च न लक्षणा। अत एव 'निषादस्थपतिं याजयेत्' इत्यत्र न तत्पुरुषो लक्षणापत्तेः, किन्तु कर्मधारयो लक्षणाभावात्। न च निषादस्य सङ्करजातिविशेषस्य वेदानधिकाराद्याजनासम्भव इति वाच्यम्, निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनात्। लाघवेन मुख्यार्थस्यान्वये तदनुपपत्त्या तत्कल्पनायाःफलमुखगौरवतयाऽदोषत्वादिति।**

लक्षयन्ति ॥ उदाहरति–**नीलोत्पलमिति**। नीलपदं गुणिवाचकं, नीलं च तदुत्पलं च नीलोत्पलमिति–अभिन्नकर्मधारयघटकनीलपदार्थः=अभेदसम्बन्धेन=तादात्म्येन, उत्पलपदार्थे प्रकारः सन् शाब्दबोधे भासते,–तथा च–अभेदसम्बन्धावच्छिन्ननीलनिष्ठप्रकारतानिरूपितविशेष्यतावदुत्पलमिति बोधः। **तत्र च**=तादृशकर्मधारये तु, उत्तरपदे पूर्वपदे वा न निरूढा लक्षणेत्यर्थः अन्ये तु–असमस्तनीलपदस्य नीलत्वविशिष्टे लक्षणा, ततः कर्मधारयः, तत्र नीलपदार्थस्य अभेदेन उत्पलपदार्थेऽन्वयबोधो भवतीति, तथा च कर्मधारयसमासप्रयुक्ता न तत्र लक्षणा इति वदन्ति, बोधस्तु नीलत्वविशिष्टाभिनोत्पलमिति ॥ श्रुतिदृष्टान्तेन कर्मधारये लक्षणाऽभावं दृढयति–**अत एवेति**। कर्मधारये समासप्रयुक्तलक्षणाऽनङ्गीकारादेवेत्यर्थः। **'वास्तुमयं रौद्रं चरुं निर्वपेदिति** प्रकृत्य श्रूयते 'एतया निषादस्थपतिं याजयेदि'ति, तत्र रौद्रेष्टौ यागकर्तृत्वं 'निषादानां स्थपति'रिति विग्रहेण निषादः स्थपतिर्यस्येति विग्रहेण वा कस्यचित् त्रैवर्णिकस्य, 'निषादश्चासौ स्थपतिश्चे'तिविग्रहेण संव्यवहार्यसंकरजातीयस्य वा, इति सन्देहे, संकरजातीयस्य शूद्रतया वेदानधिकारेण षष्ठीतत्पुरुषस्यौचित्येन त्रैवर्गिकस्यैव यागकर्तृत्वमिति पूर्वपक्षे, तादृशतत्पुरुषे निषादपदस्य निषादसम्बन्धिनि लाक्षणिकत्वे गौरवात्, लाघवेन कर्मधारयस्यैवौचित्येन संकरजातीयविशेषस्य यागकर्तृत्वमिति सिद्धान्तः, स निषादः आचार्योपदेशात्प्राप्तस्वविद्यया रौद्रं यागं कुर्यादिति तात्पर्यम्। तथा च तत्र लक्षणापत्तिभिया न षष्ठीतत्पुरुषः स्वीकृतः, पूर्वपदे निरूढलक्षणापत्तेः, न वा बहुव्रीहिः स्वीकृतः, उत्तरपदे निरूढलक्षणापत्तेः, **किन्तु कर्मधारय** एव स्वीकृतः, तत्र पूर्वोत्तरपदयोरन्यतरे समासप्रयुक्तलक्षणाऽभावादित्यर्थः ॥ तत्पुरुषे तत्र लक्षणास्वीकार आवश्यक इति शंकते–**न च निषादस्येति**। निषादस्य संकरजातीयतया 'न स्त्रीशूद्रौ वेदमधीयातामि'तिश्रुत्या 'शूद्रवत् वर्णसंकरा'इतिनिर्णयसिन्धुवचनप्रयुक्तवर्णसंकराणां शूद्राणां च वेदोच्चारणकर्तृत्वनिषेधप्रतिपादनेन तत्प्रयुक्तयाजकत्वाऽसंभवात् त्रैवर्णिकस्य लाभार्थं तत्पुरुषो बहुव्रीहिर्वाऽङ्गीकार्यः, तेन पूर्वोत्तरयोरन्यतरपदे लक्षणाकल्पनं कर्तव्यमेवेत्याशंकितुरभिप्रायः ॥ समाधत्ते–**निषादस्येति**। निषादजातीयस्य संव्यवहार्यसंकरस्यापि तदीययाजनाद्यर्थं विद्याप्रयुक्तेः=वेदे विहिताया विद्यायाः अध्ययनेऽधिकारिताप्राप्तेः, तत एव=निषादस्य वेदविहिततदीयविद्याध्ययनपूर्वकयागकर्तृत्वप्रापितः एव, कल्पनात्=यागकर्तृत्वं विद्याध्ययनं विनाऽनुपपद्यमानं सत् तदीयवेदविद्याध्ययनं कल्पयतीत्यर्थः ॥ ननु कर्मधारयमाश्रित्य निषादस्य यागाधिकारकल्पनं वेदविद्याधिकारकल्पकमिति गौरवात् कर्मधारय एव नाश्रयणीय इत्यत आह–**लाघवेनेति**। तत्पुरुषे बहुव्रीहौ वा लक्षणाकल्पनापेक्षया, कर्मधारये लक्षणाया अभावप्रयुक्तलाघवेनेत्यर्थः। मुख्यार्थस्य=निषादात्मकस्थपतिरूपमुख्यार्थेन सह याजनात्मकमुख्यार्थस्य उक्तश्रुतौ अन्वये कर्तव्ये सति, निषादे विना विद्यां तदनुपपत्त्या=यागकर्तृत्वान्वयाऽनुपपत्त्या, तत्कल्पनायाः=यागोपयुक्तवेदाध्ययनकल्पनायाः, फलमुखगौरवतया=फलं–निषादस्य यागकर्तृत्वसिद्धिः, तन्मुखं–तत्प्रयुक्तं, यद् वेदाध्ययनकल्पनात्मकं गौरवं तस्य भावस्तया, अदोषत्वात्=तादृशगौरवस्य यागकर्तृत्वविघटकत्वाऽभावादित्यर्थः। ननु तत्पुरुषादौ तत्र श्रुतौ लक्षणाकल्पनमपि न गौरवम्, शक्यसम्बन्धात्मकलक्षणायाः सर्वत्र क्लृप्तत्वा-

**उपकुम्भमर्धपिप्पलीत्यादौ परपदे तत्सम्बन्धिनि लक्षणा, पूर्वपदार्थप्रधानतया चान्वयबोध इति। इत्थञ्च समासे न क्वापि शक्तिः,–पदशक्त्यैव निर्वाहादिति॥**

दिति चेन्न। शक्त्यैव शाब्दबोधनिर्वाहापेक्षया लक्षणया तन्निर्वाहे गौरवादिति॥ ननु न स्त्रीशूद्रौ वेदमधीयातामि'तिश्रुतेः अप्रामाण्यापत्तिरिति चेन्न। अध्ययनस्य 'निषादस्थपतिं याजयेदिति'विशेषविधानप्राप्तविद्याध्ययनातिरिक्ताध्ययनपरत्वेन निषादस्य श्रुतिबोधितयागकर्तृत्वनिर्वाहकयागोपयुक्ताध्ययनप्राप्त्या तदितराऽध्ययनाऽप्राप्त्या च तदतिरिक्ताध्ययननिषेधलाभात् शूद्रान्तरस्य तु अध्ययनलेशस्याऽप्यप्राप्तत्वेन अध्ययनसामान्यनिषेधलाभात्, नोक्तश्रुतेरप्रामाण्यापत्तिरिति भावः॥ अव्ययीभावसमासे पूर्वपदार्थप्रधाने तत्पुरुषे च पूर्वपदे लक्षणया शाब्दबोधो निर्वहतीति दर्शयति–**उपकुम्भमर्धपिप्पलीत्यादाविति।** 'अव्ययीभाव'इत्यधिकारविहितत्वम्, नियमतः पूर्वपदार्थविशेष्यकबोधजनकसमासत्वं, यादृशानुपूर्वी स्वघटकोत्तरपदप्रतिपाद्ययादृशार्थनिष्ठप्रकारतानिरूपित–यादृशार्थविशेष्यताकबोधजनकतावच्छेदिका अव्ययपूर्वभागकत्वे सति स्त्रीपुल्लिङ्गकार्यविधुरत्वे च सति तादृशानुपूर्वीमत्समासत्वं तादृशार्थान्वितातादृशार्थस्य बोधनेऽव्ययीभावत्वमिति वा लक्षणम्। अव्ययीभावस्य नित्यसमासत्वम्, तच्च–अविग्रहत्वं, स्वाऽघटकपदघटितविग्रहकत्वं वा। उपकुम्भमित्यत्र–कुम्भस्य समीपमिति अस्वपदविग्रहः, उपकुम्भमितिसमासे परपदे=कुम्भपदे, तत्सम्बन्धिनि=कुम्भसम्बन्धिनि, निरूढा लक्षणा, पूर्वपदार्थप्रधानतया=उपपदार्थसमीपविशेष्यतया च, अन्वयबोधः=अभेदेन कुम्भसम्बन्धिनोऽन्वयबोधः 'कुम्भसम्बन्ध्यभिन्नसमीपमि'ति शाब्दबोधो भवति। केचित्तु–उपपदार्थः सामीप्यं न तु समीपम्, उपपदात्मकनिपातार्थे सामीप्ये च कुम्भपदशक्यार्थकुम्भस्य निरूपितत्वसम्बन्धेनाऽन्वयः तथा च 'निरूपितत्वसम्बन्धावच्छिन्नकुम्भविशिष्टसामीप्यमितिबोधः, यद्वा कुम्भपदस्य कुम्भनिरूपितत्वे लक्षणा, तथा च 'कुम्भनिरूपितत्वविशिष्टसामीप्यमि'तिबोध इति वदन्ति। तन्न, समीपविशेष्यताकबोधस्य सर्वानुभवसिद्धस्याऽपलापाऽऽपत्तेः॥ **परे तु**–उपपदार्थैकदेशे सामीप्ये कुम्भपदार्थस्य कुम्भसम्बन्धिनः अभेदेनाऽन्वयात् 'कुम्भसम्बन्ध्य(निरूपिताऽ)भिन्नसामीप्यवदि'ति बोध इति निरूपयन्ति। **तन्न**। उपपदस्य ससम्बन्धिकत्वे प्रमाणाऽभावेन ससम्बन्धिकस्थलाऽतिरिक्तस्थले तत्र 'पदार्थः पदार्थेनैवान्वेति न तु पदार्थैकदेशेने'तिव्युत्पत्तिविरोधापत्तेः, कुम्भनिरूपिताऽभिन्नसामीप्यनिष्ठप्रकारतानिरूपितविशेष्यतायाः निरवच्छिन्नत्वेन निर्धर्मितावच्छेदककशाब्दबोधस्याऽलीकत्वाच्च॥ **अन्येतु**–कुम्भपदस्य कुम्भसमीपे लक्षणा, उपपदं तु 'कुम्भपदं कुम्भसमीपं बोधयत्वि'ति तात्पर्यग्राहकं, तथा च 'कुम्भसमीप'मिति बोध इति वदन्ति। तन्न। एकवचनाऽनुपस्थितिकाले तत्र द्वितीयपदार्थाऽनन्वितपदार्थमात्रशाब्दबोधस्यापलापापत्तेरितिध्येयम्॥ **अथ**–पिप्पल्याः अर्धमिति–**अर्धपिप्पलीति**तत्पुरुषे पिप्पलीपदस्य पिप्पलीसम्बन्धिनि निरूढा लक्षणा, अर्धपदार्थविशेष्यकशाब्दबोधः 'पिप्पलीसम्बन्ध्यभिन्नमर्धमि'ति भवति॥ एवम्–अर्धशरीरमित्यत्र शरीरसम्बन्धिनि शरीरस्य लक्षणा, शरीरसम्बन्ध्यभिन्नमर्धमिति बोधः॥ अत्र प्राक् 'राजपुरुष'इत्याद्युत्तरपदप्रधानतत्पुरुषे पूर्वपदे लक्षणा दर्शिता, इदानीं तु अर्धपिप्पलीति पूर्वपदप्रधानतत्पुरुषे उत्तरपदे लक्षणा दर्शितेति न पुनरुक्तता, न वा प्रकरणं विहाय असंगतिकं निरूपणम्, अव्ययीभावेन सह 'उपसर्जनस्य प्राक् प्रयोगसाम्यात् तदधीनस्मरणेन सप्रसंगनिरूपणादिति ध्येयम्॥ **अथ**–'राजपुरुष'इत्यादिसमाससामान्ये राजपुरुषादिरूपविशिष्टार्थे व्याकरणमात्रग्राह्यशक्त्यैव विशिष्टार्थबोधसंभवे समासस्थलीयशाब्दबोधे लक्षणाज्ञानस्य न हेतुत्वमिति समासे पदलक्षणा नांगीकर्तव्येति वैयाकरणमतं दूषयितुमाह **इत्थं चेति।** समासघटकपदे लक्षणया शक्त्या वा सामासिकशाब्दबोधनिर्वाहादेव, क्वापि समासे=

**आसत्तियोग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते ॥ ८२ ॥**

**कारणं,**

आसत्तिरिति । आसत्तिज्ञानं योग्यताज्ञानमाकाङ्क्षाज्ञानं तात्पर्यज्ञानं च शाब्दबोधे कारणम् ।

**सन्निधानं तु पदस्यासत्तिरुच्यते ।**

तत्रासत्तिपदार्थमाह–सन्निधानं त्विति । [अन्वयप्रतियोग्यनुयोगिपदयोरव्यव-

---

कुत्रचिदपि समस्तवाक्ये, समासत्वावच्छेदेनेति यावत् । न शक्तिरस्ति, अत एव च न शक्यसम्बन्धरूपा लक्षणाऽप्यस्तीति भावः ॥ तत्र हेतुमाह-**पदशक्त्यैवेति** । क्लृप्तसमासघटकपदनिष्ठशक्तिलक्षणाभ्यामेव अभिमतशाब्दबोधनिर्वाहादित्यर्थः ॥ वैयाकरणमते–समासघटकपदानां समासे चोभयत्र शक्तेः लक्षणायाश्च क्लृप्ततया उभयमतसिद्धसमासघटकपदे एव शक्त्या लक्षणया च शाब्दबोधनिर्वाहे समाससामान्येऽतिरिक्तशक्त्यंगीकरणं तल्लक्षणांगीकरणं च निरर्थकतयाऽप्रामाणिकमिति भावः ॥

अथ–एतावता–'शाब्दसामान्यं प्रति वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिद्वारा पदज्ञानस्य कारणत्वमित्यायातम्, तथा च 'गिरिर्भुक्तमग्निमान् देवदत्तेन' 'वह्निना सिञ्चति' 'घटः कर्मत्वमानयनं कृतिः' इत्यादौ वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिद्वारा पदज्ञानात्मकस्य कारणस्य सत्त्वेऽपि शाब्दबोधानुदयाद् अन्वयव्यभिचारः, इत्येतद्वारणाय–आसत्तियोग्यताकांक्षातात्पर्यज्ञानानां सहकारिकारणतां दर्शयति–**मूले–आसत्तीति** । आसत्तिश्च योग्यता च आकांक्षा च तात्पर्यं चेति द्वन्द्वः, तेषां ज्ञानमिति षष्ठीतत्पुरुषः, द्वन्द्वान्ते श्रूयमाणपदस्य प्रत्येकेऽभिसम्बन्धात् ज्ञानपदस्य प्रत्येकमन्वयेन आसत्तिज्ञानं योग्यताज्ञानम् आकांक्षाज्ञानं तात्पर्यज्ञानं च शाब्दबोधे सहकारि कारणमिष्यते इत्यर्थलाभः । 'आसत्तिर्योग्यते'तिसविसर्गपाठस्त्वप्रामाणिकः, स्वरूपसत्त्यासत्तेः 'गिरिर्भुक्तमग्निमान् देवदत्तेने'त्यत्र सत्त्वेऽपि शाब्दबोधाऽभावात् अकारणत्वात् ॥ स्वरूपसत्त्या आसत्तेः कारणताभ्रमवारणायैव मुक्तावल्यामाह–आसत्तिज्ञानमिति । **आसत्तिः–पदसमूहनिष्ठा,**–सा च 'अव्यवधानेन पदोच्चारणप्रयुक्तसन्निधिरूपा, शाब्दबोधानुकूलपदविशिष्टपदत्वात्मकानुपूर्वीरूपेति यावत्, वैशिष्ट्यं च–स्वाऽव्यवहितपूर्वत्व-स्वाऽव्यवहितोत्तरत्वान्यतररूपेण बोध्यम् । तज्ज्ञानं शाब्दबोधे कारणम् ॥ **एवं योग्यता–**अर्थनिष्ठा, सा च 'एकपदार्थेऽपरपदार्थवत्त्वरूपा, तज्ज्ञानं शाब्दबोधे कारणम् ॥ **एवम् आकांक्षा**–पदनिष्ठा, सा च 'पदस्य यत्पदविरहप्रयोज्यशाब्दबोधजनकत्वाभाववत्त्वं तत्पदे तत्पदवत्त्वरूपा, प्रकृतिप्रत्यययोः साकांक्षत्वात्, पदवत्ता च अव्यवहितोत्तरत्वाऽव्यवहितपूर्वत्वान्यतरसम्बन्धेन, तज्ज्ञानं शाब्दबोधे कारणम् । **तात्पर्यम्**–शब्दनिष्ठम्, तत्प्रतीतीच्छयोच्चरितत्वरूपम्, तज्ज्ञानं शाब्दबोधे हेतुरित्यर्थः ॥८२॥

आसत्तिपदार्थमाह–मूले–**सन्निधानं त्विति** । पदस्य=पदानां, सन्निधानम्=अव्यवधानम् आसत्तिरुच्यते इत्यर्थः ॥ मुक्तावल्याम्–**आसत्तिपदार्थमाहेति** । आसत्तिस्वरूपमाहेत्यर्थः ॥ प्राचीनाः 'सन्निधानं तु पदस्यासत्तिरुच्यते' इतिमूलं 'ययोः पदयोः परस्परमन्वयबोधजनकत्वे तात्पर्यं तयोः पदयोः अव्यवधानम् आसत्तिः, तस्याः स्वरूपसत्त्याः शाब्दबोधकारणत्वे 'गिरिर्भुक्तमग्निमान् देवदत्तेने'त्यादौ गिरिपदाग्निमत्पदयोरव्यवधानभ्रमात् शाब्दबोधस्यानुभवसिद्धस्याऽपलापापत्तिः स्यात्, तस्मात् भ्रमप्रमासाधारणं तादृशपदयोरव्यवधानज्ञानमेव शाब्दबोधहेतुतयोपगन्तव्यमिति

**धानमासत्तिः, तज्ज्ञानं शाब्दबोधे कारणम्, क्वचिद्व्यवहितेप्यव्यवधानभ्रमाच्छा-ब्दबोधादिति केचित्।**

**वस्तुतस्तु अव्यवधानज्ञानस्यानपेक्षितत्वात्] यत्पदार्थेन यत्पदार्थस्यान्वयोऽपे-**

वदन्ति,–इत्येतन्मतेन लक्षणमाह–**अन्वयेति**। अन्वयः=शाब्दबोधविषयीभूतः संसर्गः, यथा 'गाम् आनये'त्यत्र द्वितीयान्तगोपदार्थस्य आनयपदार्थेन सह निरूपकत्वसंसर्गः, तत्प्रतियोगि गोकर्मत्वं तदनुयोगि आनयनम्, तादृशार्थबोधकपदयोः द्वितीयान्तगोपदानयपदयो अव्यवधानं=अविलम्बः, आसत्तिपदार्थः, तज्ज्ञानम्='गाम्पदम् आनयपदाऽव्यवहितपूर्वम्'–आनयपदं गोपदाव्यवहितोत्तरं वा इति आसत्तिज्ञानं भ्रमप्रमासाधारणं, शाब्दबोधे=गोकर्मतानिरूपकाऽऽनयनानुकूलकृतिमांस्त्वमि'तिबोधे, सहकारिकारणं भवतीत्यर्थः॥ भ्रमप्रमासाधारणासत्तिज्ञानस्य शाब्दबोधकारणत्वं व्युत्पादयति–**क्वचिदिति**। 'नीलं कपालं द्रव्यं वस्त्रमि'त्यादौ 'कपालं द्रव्यं नीलं च वस्त्र'मिति वक्तुस्तात्पर्येऽपि कस्यचिद्‌ व्यवहितेऽपि नीले द्रव्ये च अव्यवधानभ्रमो जातः, तस्य 'नीलाऽभिन्नद्रव्यं कपालं वस्त्रं चे'ति प्रमात्मकशाब्दबोधस्य जायमानत्वादित्यर्थः॥ **केचित्**–प्राचीनाः आहुः॥ तदेतत्–प्राचीनमतं नवीनैकदेशिनो न सहन्ते–पदद्वयेनापि अव्यवधानेन पदार्थद्वयोपस्थितिसत्त्वे पदाऽव्यवधानज्ञानं विनाऽपि शाब्दबोधस्यानुभवसिद्धत्वात्, तथा च उक्तासत्तिज्ञानस्य हेतुता व्यभिचरिता, अतो नोक्ताऽऽसत्तिज्ञानं हेतुः, किन्तु पदद्वयोपस्थित्योरव्यवधानात्मिका आसत्तिः स्वरूपसत्येव शाब्दबोधकारणम्, 'गिरिर्भुक्तमग्निमान् देवदत्तेने'त्यत्र गिरिरग्निमत्पदोपस्थित्योरव्यवधानेन जायमानत्वे तु तत्र शाब्दबोधः नाऽनुपपन्न इत्यभिप्रायेण प्राचीनमतं खण्डयितुं नवीनैकदेशिमतमाह–**वस्तुतस्त्विति**। अव्यवधानज्ञानस्य=प्राचीनोक्ताऽऽसत्तिज्ञानस्य, अनपेक्षितत्वात्=सर्वत्र शाब्दबोधात्पूर्वम् अपेक्षितत्वे मानाऽभावात्, न प्राचीनमतम् आसत्तिज्ञानं हेतुः, किन्तु 'यत्पदार्थेन सह यत्पदार्थस्याऽन्वयः शाब्दबोधविषयतयाऽभिमतः तादृशपदद्वयादिजन्योपस्थितिद्वयाऽव्यवधानमेव हेतुरितिवदन्ति। अथाऽन्ये तु–'उक्तं प्राचीनमतसिद्धासत्तिज्ञानं न कारणम्, अनपेक्षितत्वात्, नवीनैकदेशिमतोक्ता निरुक्तोपस्थितिद्वयाऽव्यवधानात्मिकाऽऽसत्तिः स्वरूपसत्यपि न कारणं, कल्पनागौरवात्, पदज्ञानजन्यपदार्थोपस्थितेः क्लृप्तकारणतया पदज्ञानजन्यपदार्थस्मरणमेवाऽऽसत्तिः, नान्या, सैव कारणमिति वदन्ति। तदेतन्मतत्रयस्यापि खण्डनाय नवीनमतेनाऽऽसत्तिलक्षणं तत्स्मरणस्य शाब्दबोधहेतुत्वं च दर्शयति–**यत्पदार्थेनेति**। येन द्वितीयान्तगोपदार्थेन गोकर्मत्वेन सह यस्य तिङन्तानयपदार्थस्य, अन्वयः=निरूपकत्वसंसर्गः, शाब्दबोधविषयतयाऽपेक्षितः=तात्पर्यविषयतयाऽभिमतः, तयोः=द्वितीयान्तगोपद-तिङन्ताऽऽनयपदयोः,–पदनिष्ठम् अव्यवधानेन=अव्यवधानमेव,–अव्यवहितोत्तरत्वाऽव्यवहितपूर्वत्वान्यतरमेवेति यावत्,–आसत्तिः, तस्य उपस्थितिः=स्मरणम्, शाब्दबोधे हेतुरित्यर्थः॥ तात्पर्यविषयतत्तत्पदार्थान्वयबोधजनकपदज्ञानीयविषयतासम्बन्धावच्छिन्नाऽवच्छेदकताश्रयपदनिष्ठाऽव्यवहितत्वस्मरणस्य स्वविषयावच्छिन्नपदज्ञानजन्यपदार्थस्मरणीयविशेष्यतासम्बन्धेन विशेष्यतासम्बन्धावच्छिन्नशाब्दबोधे कारणत्वमिति फलितोऽर्थः॥ तथा च प्राचीनमतं यत् पदनिष्ठाऽव्यवहितत्वज्ञानसामान्यं, तन्न आसत्तिज्ञानम् अव्यवहितत्वविशिष्टपदश्रावणोत्तरं पदनिष्ठाऽव्यवहितत्वस्मरणस्यैव शाब्दबोधे उपयोगात्, नवा नवीनैकदेशिमतं पदोपस्थितिद्वयनिष्ठाऽव्यवहितत्वात्मिका आसत्तिः, कल्पनागौरवात्, शरीरगौरवाच्च, नापि पदज्ञानजन्यपदार्थोपस्थितिरेवासत्तिज्ञानम्, पदार्थोपस्थित्यव्यवहितत्वप्रयोजकतयाऽवश्याऽपेक्षणीयस्य पदनिष्ठाऽव्यवहितत्वस्याऽपलापापत्तेरिति भावः॥ अथ आसत्तिलक्षणे पदार्थान्वयबोधजनकत्व-

क्षितस्तयोरव्यवधानेनोपस्थितिः शाब्दबोधे कारणम् । तेन गिरिर्भुक्तमग्निमान्देवदत्तेनेत्यादौ न शाब्दबोधः । नीलो घटो द्रव्यं पट इत्यादावासत्तिभ्रमाच्छाब्दबोधः । आसत्तिभ्रमाच्छाब्दभ्रमाभावेऽपि न क्षतिः । ननु यत्र च्छत्री कुण्डली वासस्वी देवदत्त इत्याद्युक्तं तत्रोत्तरपदस्मरणेन पूर्वपदस्मरणस्य नाशादव्यवधानेन तदुत्तरप-

निवेशस्य फलमाह-तेनेति । तेन=निरुक्तान्वयबोधजनकपदज्ञाननिवेशेनेत्यर्थः ॥ 'गिरिर्भुक्तमग्निमान्देवदत्तेने'तिवाक्यं 'गिरिरग्निमान्' 'देवदत्तेन भुक्त'मिति पृथगन्वयबोधेच्छयोच्चरितं, तत्र गिरिरग्निमत्पदार्थान्वयबोधजनकपदज्ञानविषयपदनिष्ठाऽव्यवधानस्मरणाऽभावात् न भवति 'अग्निमदभिन्नगिरि'ति शाब्दबोधः । 'गिरिर्भुक्तमि'तिपदयोरव्यवधानसत्त्वेऽपि तयोः तात्पर्यविषयाऽन्वयबोधप्रयोजकज्ञानविषयत्वाऽभावात् न तन्निष्ठाऽव्यवधानस्याऽऽसत्तित्वम्, नवा 'गिरिर्भुक्तमि'त्यत्र समानलिङ्गकवृत्तितयाऽव्यवधानत्वश्रावणदोषविरहेण अनुभवभ्रमाऽभावात् आसत्तिस्मरणभ्रमोऽपि, इति आसत्तिप्रकारकभ्रमादपि न शाब्दबोधस्तत्रेति भावः ॥ अथ-स्थलान्तरे आसत्तित्वप्रकारकभ्रमादपि शाब्दबोधं दर्शयति-**नीलो घटो द्रव्यं पट'** इति । 'घटो द्रव्यं,-नीलः पटः'-इति-अन्वयबोधतात्पर्येणोच्चरितवाक्ये नीलपटयोस्तात्पर्यविषयाऽन्वयबोधप्रयोजकज्ञानविषयत्वसत्त्वेऽपि तन्निष्ठाऽव्यवधानत्वाऽभावान्न भवति शाब्दबोधः, नीलपदघटपदयोरव्यवधानसत्त्वेऽपि तयोः तात्पर्याऽविषयान्वयबोधप्रयोजकज्ञानविषयत्वाऽभावात् न तन्निष्ठाऽव्यवधानस्याऽऽसत्तित्वं, तथापि सामानलिङ्गकवृत्तितयाऽव्यवधानत्वश्रावणदोषस्य कारणस्य 'नीलो घटः' इत्यत्र सत्त्वात् आसत्तित्वभ्रमः=अन्यस्थलीय'नीलाऽभिन्नघट'बोधतात्पर्योच्चरितवाक्यघटकनीलपदघटपदगताऽव्यवधानत्वस्य अभाववति 'नीलो घटो द्रव्यं पट'इतिवाक्यघटकनीलपदघटपदनिष्ठव्यवधाने तादृशान्यस्थलीयनिरुक्ताऽव्यवधानत्ववत्त्वभ्रमो जायते, तेन तादृशासत्तित्वप्रकारकाऽऽसत्तिविशेष्यकभ्रमेण 'नीलाऽभिन्नघट' इतिशाब्दबोधो जायते इत्यर्थः ॥ 'आसत्तिभ्रमात् शाब्दबोधोऽपि भ्रमात्मक' इति प्राचीनमतं निरसितुमाह-**आसत्तिभ्रमादिति** । आसत्तिभ्रमेणापि जायमानशाब्दबोधस्तु न भ्रमात्मकः, किन्तु प्रमात्मक एव, आसत्तिभ्रमस्य शाब्दभ्रमेऽप्रयोजकत्वात्, योग्यताभ्रमस्यैव शाब्दभ्रमप्रयोजकत्वात्, 'नीलो घटो द्रव्यं पट' इतिवाक्यघटकनीलपदघटपदाभ्यामासत्तिभ्रमादपि घटपदार्थे नीलपदार्थवत्त्वात्मकयोग्यताज्ञानस्य प्रमात्वेन जायमानशाब्दबोधस्य भ्रमत्वाऽभावे न क्षतिः=न काचिदापत्तिरित्यर्थः ॥ न च-तादृशाऽऽसत्तेः श्लोकघटकपदेष्वभावेन अभ्रान्तस्य तत्र शाब्दबोधानुपपत्तिरिति वाच्यम् । ।इष्टापत्तेः । श्लोकेभ्यो योजनावाक्यादेवाऽभिमतशाब्दबोधस्वीकारात् । मौनिश्लोकादावपि तत्तत्पदाऽव्यवधानस्मरणात् शाब्दबोधः सम्पद्यत एवेत्यवधेयम् ॥ अथ-चतुःपञ्चविशेषणविशिष्टविशेष्ये प्रथमविशेषणाऽव्यवधानत्वाऽभावात् शाब्दबोधकाले च प्रथमद्वितीयविशेषणपदनिष्ठासत्तिज्ञानस्य क्षणिकस्य नाशात् कारणाऽभावेन शाब्दबोधाऽनुपपत्तिरित्याशंकते-**ननु यत्रेति** । यत्र=यादृशबोधे तात्पर्येण, 'छत्री कुण्डली वासस्वी देवदत्त' इत्यनेकविशेषणवाचकपदघटितवाक्यं प्रयुक्तम्, तत्र=तादृशशाब्दबोधाऽव्यवहितप्राक्क्षणे, उत्तरपदस्मरणेन=इनिप्रत्ययान्तकुण्डलपदस्मरणेन, पूर्वपदस्मरणस्य=मतुबन्तच्छत्रपदस्मरणस्य, नाशात्=योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिगुणनाश्यत्वनियमेन अवश्यं नाशात्, अव्यवधानेन=निरुक्ताऽऽसत्तिमत्तया, तदुत्तरपदस्मरणाऽसम्भवः=सर्वविशेषणानामुत्तरस्थं यद्दु देवदत्तात्मकविशेष्यपदं तस्य प्रथमपदेन सह आसत्त्यभावात्, तत्स्मरणस्य च असंभवात्, छत्रिपद-देवदत्तपदाऽव्यवधानस्मरणाऽभावादिति यावत्, तथा च 'छत्रवदाद्यभिन्नदेवदत्त'इत्यादिबोधो न स्यादिति व्यभिचारान्नोक्तासत्तिस्मरणं कारणमिति भावः ॥ तदेवमाशंक्य

**दस्मरणासम्भव इति चेद्-न, प्रत्येकपदानुभवजन्यसंस्कारैश्चरमस्य तावत्पदविषयकस्मरणस्याव्यवधानेनोत्पत्तेः। नानासन्निकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि सम्भवात्। तावत्पदसंस्कारसहितचरमवर्णज्ञानस्योद्बोधकत्वात्, कथमन्यथा नानावर्णैरेकपदस्मरणम्। परन्तु तावत्पदार्थानां स्मरणादेकदैव खले कपोतन्यायेन तावत्पदार्थानां क्रियाकारकभावेनान्वयरूपः शाब्दबोधो भवतीति केचित्-**

---

'परेत्वित्यादिना सिद्धान्तेन समाधास्यन्, प्रथमं 'तात्पर्यविषयाऽन्वयबोधजनकज्ञानविषयपदद्वयादिजन्योपस्थितिद्वयाद्यव्यवधानमेवाऽऽसत्तिरि'तिवादिनः नवीनैकदेशिनः मतेन समाधत्ते-**प्रत्येकपदेति**। तत्तच्छत्रिकुण्डलीतिप्रत्येकपदश्रावणानुभवजन्यप्रत्येकपदविषयकसंस्कारैः चरमपदस्मरणकालपर्यन्तस्थायिभिः, चरमस्य=चरमदेवदत्तपदश्रावणोत्तरकालीनस्य, तावत्पदविषयकस्मरणस्य=यावद्विशेषणविशेष्यपदसमुदायविषयकस्य युगपदेकस्मरणस्य, अव्यवधानेन=अभेदेन, उत्पत्तेः=जननादित्यर्थः॥ तथा च-नवीनैकदेशिमते पदार्थोपस्थितीनामव्यवधानस्याऽऽसत्तितया 'छत्री कुण्डली वासस्वी देवदत्तः' इत्यत्र प्रत्येकविशेषणपदार्थोपस्थितेः देवदत्तपदार्थेन सहाऽव्यवधानत्वाऽभावेऽपि उत्तरपदादिस्मरणेन पूर्वपदादिस्मरणनाशसंभवेऽपि, प्रथमतः पदश्रवणानुक्रमेण तदर्थश्रावणानुभवजयावत्संस्कारैः विशेष्यपदार्थश्रावणोत्तरतदीयसंस्कारेण सहभावापन्नैः यावद्विशेषणविशिष्टविशेष्यपदार्थस्मरणस्यैकस्य जननात् तादृशपदार्थस्मरणस्य अव्यवधानत्वेन=अभेदात्मकेनाऽव्यवधानत्वेन आसत्तिरूपेण कारणेन यावत्पदार्थविषयकशाब्दबोधस्य जननात् नाऽऽसत्तेरकारणत्वं कल्पनीयमितिभावः॥ एतदु दृष्टान्तेनोपपादयति-**नानासन्निकर्षैरिति**। यथैकस्मिन्नेव काले घटचक्षुस्संयोग-पटचक्षुस्संयोगाभ्यामेकं 'घटपटावि'ति समूहालम्बनात्मकं प्रत्यक्षं जायते, तथा तत्तत्पदादिविषयकसंस्काराणां भिन्नविषयकत्वांशेऽजनकत्वेऽपि तत्रत्ययावत्संस्कारैः यावत्पदार्थविषयकसमूहालम्बनात्मकैकस्मृतेर्जननेऽपि बाधकाभावादित्यर्थः॥ ननूद्बोधकाऽभावात् नानासंस्कारैः कथमेकस्मरणमेकदा जन्यते इत्याकांक्षायामाह-**तावत्पदेति**। यावन्ति वाक्यघटकपदानि तावतां पदानां श्रावणार्थबोधजन्यैः संस्कारैः सह समवायघटितसामानाधिकरण्येनात्मनि जायमानं यत् चरमवर्णज्ञानम्=अन्तिमदेवदत्तपदश्रावणानुभवः स एव स्वसंस्कारमादधन्पूर्वसंस्कारांश्चोद्बोधयन् यावत्समुदायविषयकमेकं स्मरणं जनयतीति अन्तिमपदानुभव एवं तादृशस्थले उद्बोधक इत्यर्थः॥ अन्तिमपदस्योद्बोधकत्वम् अन्तिमवर्णस्योद्बोधकत्वापादनेन दृढयति-**कथमन्यथेति**। अन्यथा=यदि अन्तिमवर्णादेरुद्बोकत्वं न स्यात् तदा, 'यज्ञदत्ता'दिपदेऽपि य ज्ञ-द-त्-त-प्रभृतिनानावर्णश्रावणानुभवजप्रत्येकसंस्कारैः, अन्तिमवर्णश्रावणकालेऽनुद्बुद्धैः कथमेकं यावद्वर्णानुपूर्व्यवच्छिन्नयज्ञदत्तपदार्थस्मरणं स्यात्! तथा च सर्वत्र शाब्दबोधानुपपत्तिः। अतः चरमवर्णश्रावणस्य तत्र पूर्वपूर्ववर्णश्रावणानुभवजसंस्काराणामुद्बोधकत्वं मन्तव्यमेव, एवं वाक्येऽपि चरमपदश्रावणस्योद्बोधकत्वमिति, आशुतरविनाशिनीनां पदजन्यपदार्थोपस्थितीनां मेलनाऽसंभवात् सर्वत्र शाब्दबोधे पदज्ञानजन्यपदार्थोपस्थितिः समूहालम्बनात्मिकैव( अव्यवहिता=अभिन्ना ) कारणमितिभावः। एवं च सति सर्वत्र युगपदेव सकलपदार्थानां 'विशेष्ये विशेषणमि'तिन्यायेन शाब्दबोधस्य विशिष्टबोधात्मकत्वमेव न तु 'विशिष्टस्य वैशिष्ट्यमिति'रीत्या विशिष्टवैशिष्ट्यावगाहिबोधरूपत्वं पूर्वं विशेषणतावच्छेदकप्रकारकनिर्णयाऽभावादितिएकदेशिमतं दर्शयति-**परन्त्विति**। तावत्पदार्थानां स्मरणात्=वाक्यघटकयावत्पदार्थविषयकैकस्मरणात्, एकस्मिन् काले वक्ष्यमाण'खले कपोतन्यायरीत्या'तावत्पदार्थानां=समूहालम्बनस्मृतिविषयतावत्पदार्थानाम्, क्रियाकारकभावेन=क्रियापदार्थकारकपदार्थसमूहालम्बनभावेन, अन्वयरूपः=पदार्थानां संसर्गवि-

"वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति। तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति॥" परे तु-"यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते। तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते॥" तथाच खण्डवाक्यार्थबोधानन्तरं तथैव पदार्थस्मृत्या महावाक्यार्थबोध इत्याहुः।

एतेन तावद्वर्णाभिव्यङ्ग्यः पदस्फोटोऽपि निरस्तः। तत्तद्वर्णसंस्कारसहितचरम-

---

पयकः, शाब्दबोधो भवतीति केचित्=एकदेशिनः आहुरित्यर्थः॥ तत्र उदयनाचार्योक्तं खलेकपोतन्यायम् प्रमाणमाह-वृद्धा इति। अत्र कपोतपदेन सह वृद्धपदस्य पदद्वयव्यवधानं युवपदव्यवधानं शिशुपदस्य त्वव्यवधानं दृष्टान्ततयोपादेयम्, एवं कपोतानां युगपत्पतनमपि युगपत्संस्कारोद्बोधने दृष्टान्ततयोपादेयम्। 'वृद्धयुवशिशुकपोताः' एककालावच्छेद्यखलवृत्तिसंयोगजनकक्रियानुकूलयत्नवन्तः, तथैव=वृद्धयुवशिशुकपोतानाम् एककालावच्छेदेन खलपतनवत्, सर्वे पदार्थाः=पदद्वयादिव्यवहितपदोपस्थापिताः एकपदमात्रेण व्यवहितपदोपस्थापिताः अव्यवहितपदोपस्थापिताश्च पदार्थाः, परस्परेण=विशेषणविशेष्यभावेन, अभेदे तृतीया, तस्य अन्वयपदार्थैकदेशे विषयतायामन्वयः। युगपत्=अव्यवहितशाब्दबोधोत्पत्तिसमये, अन्वयिनो भवन्ति=शाब्दबोधनिरूपितविषयतावन्तो भवन्तीत्यर्थः॥ एतन्मते नानापदविषयकैकस्मरणकल्पनं चरमवर्णज्ञानस्य तदुद्बोधकताकल्पनं नानापदार्थविषयकैकस्मरणकल्पनं च गौरवमिति अस्वरसो बोध्यः॥ अथ-नवीनमतेन 'छत्री कुण्डली वासस्वी देवदत्त'इत्यत्र आशंकिताऽऽसत्त्यभावस्य काणादसूत्रीयप्रशस्तपादभाष्यकारवचनेन समाधानमाह-परे त्विति। 'यत् यदाकांक्षितं यद्योग्यं यत्सन्निधानं प्रपद्यते, तेन तेनाऽन्वितः स्वार्थः पदैरेवाऽवगम्यते' इति योजना। 'यत्(अम्)पदं यत्पद(घट)साकांक्षं यत्पदार्थाऽबाधितार्थकत्वरूपयोग्यतावत् यत्पदनिरूपिताऽऽसत्तिमत् प्रतिपद्यते ज्ञायते। एतेन खण्डवाक्यार्थबोधजनकाकांक्षादिज्ञानसम्पत्तिर्दर्शिता। तेन अन्वितः=तत्पदार्था(घटरूपार्था)न्वयविशिष्टः, स्वार्थः=अम्पदार्थः कर्मत्वं, पदैरेव=घटपदाऽम्पदाभ्यामेव, प्रथमं खण्डवाक्यार्थतया, अवगम्यते=जायते। यथा 'घटम्'-इति वाक्यात् 'घटीयं कर्मत्वम्' इत्येवम्। इत्येतद्विशेषणतावच्छेदकप्रकारकनिश्चयानन्तरं विशिष्टवैशिष्ट्यावगाही महावाक्यार्थबोधो जायते इति॥ 'तेन तेन'इति द्विरुच्चारणं 'धवखदिरौ छिन्धि'इत्यादिस्थलाभिप्रायेण॥ एवं प्रमाणमुपन्यस्य सिद्धान्तमुत्तरमाह-तथा चेति। प्रशस्तपादाचार्यवचनात्, युक्त्या च, 'छत्री कुण्डली वासस्वो देवदत्त'इति सर्वत्र वाक्यश्रवणोत्तरं योजनावाक्यैः आसत्त्यादिस्मरणेन 'छत्री'पदेन-'अधिकरणत्वं छत्रनिष्ठाधेयतानिरूपितम्, इत्यादिप्रत्येकखण्डबोधानन्तरम्, किंवा 'छत्रवदभिन्नदेवदत्तः' कुण्डलवदभिन्नदेवदत्तः' इत्येवंखण्डबोधानन्तरं, तथैव=तत्क्रमानुसारेण जायमानया, पदार्थस्मृत्या विशिष्टवैशिष्ट्यावगाहिमहावाक्यार्थबोधः'छत्रवत्कुण्डलवद्वासोवदभिन्नदेवदत्त'इति बोधः भवतीति न पदनिष्ठाऽव्यवधानात्मकाऽऽसत्त्यप्रसिद्धिनिबन्धनशाब्दबोधानुपपत्तिरिति ध्येयम्॥

अथ वैयाकरणमतं निराकरोति-एतेनेति। एतेन=पूर्ववर्णानुभवजनितचरमवर्णानुभवरूपोद्बोधकोद्बोधितचरमवर्णानुभवजनितसंस्कारेणैव क्रमिकवर्णविशिष्टपदस्मरणस्योपपादितत्वेन, तावद्वर्णाऽभिव्यङ्ग्यः=एकस्मिन्पदे यावन्तो वर्णास्तावद्भिर्वर्णैः अभिव्यङ्ग्यः=प्रकाश्यः=बोध्यः=वर्णानां वाचकत्वाऽनुपपत्त्या ऊहनीय इति यावत्। यथा-वर्णाः किं प्रत्येकं सम्भूय वा वाचकाः?, आद्ये-एकेनैव वर्णेन बोधात् अन्येषां निरर्थकत्वम्, द्वितीये-उत्पत्तिपक्षे युगपद्वर्णानामुत्पत्त्यभावात् समुदायानुपपत्तेः, अभिव्यक्तिपक्षे क्रमाभिव्यक्तेः अनुभवात् समुदायाऽसिद्धेः, अतः वर्णव्यतिरिक्तः

**वर्णोपलम्भेन तद्व्यञ्जकेनैवोपपत्तेरिति।**

**इदन्तु बोध्यम्। यत्र द्वारमित्युक्तं तत्र पिधेहीत्यादिपदस्य ज्ञानादेव बोधो, न तु पिधानादिरूपार्थज्ञानात्, पदजन्यतत्तत्पदार्थोपस्थितेस्तत्तच्छाब्दबोधे हेतु**

---

चरमवर्णानुभवे सति तावद्वर्णाभिव्यङ्ग्यः स्फोट एव वर्णेषु पदेषु वाक्येषु च वाचको मन्तव्यः इति॥ एतादृशः=पदस्फोटः=स्फुटति-अभिव्यक्तीभवत्यर्थोऽस्मादिति व्युत्पत्त्या अर्थवाचकत्वं=अर्थप्रकाशकत्वं =अर्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वं,-स्फोटत्वमिति, तादृशः वर्णस्फोटः पदस्फोटश्च, अपिना अन्येऽपि षट्स्फोटाः, यथा वाक्यस्फोटः, अखण्डपदवाक्यस्फोटौ, वर्णपदवाक्यभेदेन त्रयो जातिस्फोटाः इति वैयाकरणसिद्धान्तसिद्धाः। तत्र साधुशब्दे 'पचति' 'राम'—इत्यादिप्रयुज्यमानेऽन्तर्गताः तिव्वि-सर्गादीनामेव वर्णानां वाचकत्वात् स्फोटत्त्वं सिद्धम्, एवं वर्णानां वाचकत्वात् वर्णसमभिव्याहाररूपपदस्य वाचकता सिद्ध्यतीति पदे स्फोटत्त्वं सिद्धम्, पदैः पदार्थबोधवत् वाक्येन वाक्यार्थबोध इति पदार्थशक्तिः पदेष्विवेति वाक्यार्थशक्तिः वाक्येऽप्यभ्युपेयेति पदस्फोटवाक्यस्फोटौ सिद्धौ, पदस्य वाक्यस्य चाखण्डत्वात् 'तदेवेदं पदं तदेवेदं वाक्यं सोऽयं गकार'-इतिप्रतीत्या अखण्ड स्फोटः सिद्धः, पदादेरखण्डत्वेऽपि शास्त्रस्य पंचकोशादिवत् प्रकृतिप्रत्ययाभ्यां व्युत्पादनमात्रोपायत्वात् नाऽप्रामाण्यप्रसंगः। एवं वर्णानां वाचकत्वाऽपेक्षया लाघवेन जातेरेव वाचकत्वाद् जातावपि स्फोटः सिद्धः, स च स्फोटो ब्रह्मैव, नातिरिक्तः पदार्थः, तस्यैकत्वेऽपि तत्तद्वर्णाऽभिव्यक्तिस्तत्तदर्थोपस्थापिका भवतीति न घटपदोच्चारणदशायां पटाद्युपस्थित्यापत्तिः, पदस्फोटवाक्यस्फोटादीनां भेदव्यवहारस्तु पदाभिव्यक्तिवाक्याभिव्यक्तिभेदनिबन्धनः इति वैयाकरणमतम्। **स च स्फोटः निरस्तः**=अन्यथासिद्धतया खण्डितो वेदितव्य इत्यर्थः। **तद्यथा**-वैयाकरणानां हि 'पचति' 'रामः' इत्यादिषु यदर्थवाचकतया तिबि विसर्गादौ च स्फोटः स्वीक्रियते तदर्थस्य व्याकरणाद्युपपादितेच्छात्मकशक्त्यैव बोधसंभवेन अन्यथासिद्धस्य बोधप्रयोजकशक्तिमत्तयाऽतिरिक्तस्फोटस्य कल्पनाया अन्याय्यत्वं गौरवं च। एवं घटादिपदादौ स्फोटस्य चरमवर्णाभिव्यङ्ग्यत्वे अकारेणैव घटवाचकत्वनिर्वाहे घादिवर्णत्रयवैयर्थ्यं प्रसज्येत, तादृशपूर्वपूर्ववर्णोच्चारणवैयर्थ्यापत्तिवारणाय-पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णश्रावणस्य स्फोटव्यञ्जकत्वं वैयाकरणैः स्वीकारात्, तत्र **तत्तद्वर्णसंस्कारसहितचरमवर्णोपलम्भेन**=पूर्वपूर्ववर्णानुभव-(श्रावण)जनितसंस्कारसहितचरमवर्णानुभवे(श्रावणे)नैव, तद्व्यञ्जकेन=वैयाकरणाभिमतस्फोटव्यञ्जकस्थाने नैयायिकैः तावद्वर्णसंस्कारोद्बोधकेन स्वीकृतेन, तेनैव समूहालम्बनस्मरणे सति शाब्दबोधोपपत्तौ उभयमतसिद्धात् अनुभवोद्बोध्यसंस्कारात् अधिकं पुनः स्फोटकल्पनं वैयाकरणस्य स्फुटगौरवमेव। एवं वाक्यस्फोटादयोऽपि निरर्थकतया नांगीकर्तव्या इति भावः।

**अथ-प्राभाकराः**-'यत्किंचित्पदजन्यपदार्थोपस्थितिसत्त्वे अर्थस्मरणसमूहात् शाब्दबोधो जायते, तथा च-अवान्तरवाक्यार्थबोधपूर्वकमहावाक्यार्थबोधे अवान्तरवाक्यार्थस्मरणं कारणम्, न तु समूहालम्बनस्मरणम्, न वा पदजन्यपदार्थस्मरणं कारणम्, लाघवेन पदार्थस्मरणस्यैव कारणत्वात्, अतः 'द्वार'मित्यादौ न 'पिधेही'तिपदाध्याहारः, किन्तु अर्थाध्याहार एवेति वदन्ति, तन्मतं निरसितुमाह-**इदं तु बोध्यमिति**। इदं वक्ष्यमाणं शाब्दसामग्रीघटकत्वेन स्वीकार्यमित्यर्थः॥ तदेवाह-**यत्रेति**। यदा शाब्दबोधविषयत्वादृशार्थतात्पर्येण 'द्वारमि'तिवाक्यमुच्चारित, तदा तादृशतात्पर्यार्थविषयकः, 'पिधेही'त्यध्याहृतपदज्ञानादेव पिधानार्थस्मृतिसत्त्वे 'द्वारकर्मकपिधानानुकूलकृतिमाँस्त्वमि'तिबोधो जायते, न तु अध्याहृतस्य पिधानार्थस्य स्मृतिमात्रादित्यर्थः॥ ननु कथम्

त्वात्' । किञ्च क्रियाकर्मपदानां तेन तेनैव पदेन सहाऽऽकांक्षितत्वात्, तेन क्रियापदं विना कथं शाब्दबोधः स्यात् । तथा पुष्पेभ्य इत्यादौ स्पृहयतीत्यादिपदाध्याहारं विना चतुर्थ्यनुपपत्तेः पदाध्याहार आवश्यकः ॥

पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ॥ ८३ ॥

अध्याहृतपिधानस्मरणं न हेतुरित्यतआह-पदजन्येति । केवलपदार्थस्मृतित्वेन शाब्दबोधहेतुत्वे प्रत्यक्षादिना उपस्थितानां तत्तत्पदार्थानां पदज्ञानं विनैव शाब्दबोधापत्तिः स्यादतः-'वृत्तिज्ञानसहकृत-तत्तत्पदज्ञानजन्यतत्तत्पदार्थस्मृतित्वेनैव तत्तदर्थशाब्दबोधकारणत्वस्य सिद्धान्तितत्वादित्यर्थः ॥ ननु-तात्पर्यज्ञानस्यापि शाब्दबोधहेतुत्वोपगमेन वक्तुरिच्छाया एव तात्पर्यरूपत्वात् किञ्चित्पदस्याऽप्यनुच्चारणे वक्तुरिच्छाविषयत्वरूपतात्पर्यविषयत्वनिश्चयाऽसंभवात् 'द्वारमि'त्युच्चारणे सति वक्तुस्तात्पर्यं ज्ञात्वा अर्थाध्याहारेण बोधोपपत्तिः, प्रत्यक्षादिना च न अतात्पर्यार्थपटादेः शाब्दबोधापत्तिरित्यत आह-किञ्चेति । लोडन्ताऽऽनयनादिक्रियापदानां द्वितीयान्तघटादिकर्मपदानाम् आनयन-पदेनैव सह द्वितीयान्तघटपदस्य द्वितीयान्तघटपदेनैव सह आङ्पूर्वकनयपदस्य आकांक्षितत्वात्=पदस्य यत्पदविरहप्रयोज्यशाब्दबोधजनकत्वाभाववत्त्वं तत्पदे तत्पदवत्त्वात्मकाऽऽकांक्षावत्त्वात्, तेन =साकांक्षपदानामेव शाब्दबोधे कारणत्वात्, अन्यथा 'घटः कर्मत्वमानयनं कृति'रित्यादेरपि शाब्द-बोधापत्तेः, अतः द्वारमित्यत्र पिधेहीति-अपीत्युपसर्गसमभिव्याहृतधाधातुपदं विना कथं द्वितीयान्त-द्वारपदमात्रेण शाब्दबोधः स्यात् , अतः पिधेहीतिपदाध्याहार आवश्यक इत्यर्थः ॥ पिधेहीत्यत्र 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो'रित्यनुशासनेन उपसर्गयोः अवाऽप्योः अल्लोपं=अतः=अकारस्य लोपं भागुरिनामकः ऋषिः वष्टि-इच्छतीत्यपेः अकारलोपो बोध्यः ॥ ननु-घटः कर्मत्वमानयनं कृति'रितिवाक्यात् शाब्दबोधापत्तिवारणाय अभिमतशाब्दबोधौपयिकाऽऽकांक्षादिमत्किञ्चित्पदज्ञानत्वेन कारणत्वं स्वीक्रियते, तावतैव प्रथमान्तघटपदादेः आकांक्षितपदत्वाऽभावेन शाब्दबोधवारण-संभवात् । न च 'घटम् आनयनं कृतिः' 'घटः कर्मत्वं आनये'ति वा वाक्यात् शाब्दबोधापत्तिरिति वाच्यम् । इष्टापत्तेः, प्रत्यक्षानुमानादिना घटाद्युपस्थितेरिव अनाकांक्षितपदज्ञानजन्यार्थोपस्थितेरपि शाब्दबोधहेतुत्वस्वीकारात् अतो दूषणान्तरमाह-तथा पुष्पेभ्य इति । कर्मान्तपुष्पपदोत्तरं यदि 'स्पृहयती'तिक्रियापदं नाध्याह्रियेत तदा 'पुष्पेभ्य'इति कर्मपदोत्तरं चतुर्थी विभक्तिः 'स्पृहेरिप्सित' (१।४।३६)इति सूत्रेण स्पृहार्थकधातुयोगे ईप्सितः सम्प्रदानसंज्ञः स्यादित्यर्थकेन स्पृहयतिपदयोगे एव स्मृता न तु तदर्थज्ञानयोगे, इति क्रियापदाध्याहारं विना सा नोपपद्येत । आदिना 'शत्रवे क्रुध्यति वञ्चकाय द्रुह्यती'त्यादौ 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप'इति सूत्रेण क्रोधाद्यर्थकधातूनां योगे सति विधीयमाना चतुर्थी क्रुधादिपदाध्याहारं विना नोपपद्येतेति पदाध्याहारः अवश्यं स्वीकार्यः, तथा च पदजन्यपदार्थोपस्थितिरेव शाब्दबोधहेतुः, न तु पदार्थोपस्थितिमात्रं विनापि वाक्यं प्रत्यक्षादिनोप-स्थितोदासीनपटादेरपि स्मरणापत्तेः, शाब्दबोधौपयिकाकांक्षादिमत्किञ्चित्पदज्ञानत्वेन कारणत्वे अनेक-पदघटितवाक्ये विनिगमनाविरहप्रयुक्ताऽनन्तकार्यकारणभावापत्तेरिति भावः ॥ योग्यतां दर्शयति-मूले-पदार्थे तत्रेति । 'तत्र' पदमपि पदार्थे इत्यर्थकम् , तथा च पदार्थे पदार्थे तद्वत्ता=पदार्थवत्ता, पूर्वपदार्थे परपदार्थवत्ता परपदार्थे पूर्वपदार्थवत्ता वा योग्यता इत्यर्थः,-एकपदार्थानुयोगिकाऽपरपदा-र्थप्रतियोगिकसम्बन्धो योग्यतेति यावत् । यथा 'पयसा सिञ्चती'त्यत्र सेचनपदार्थे पयःकरणकत्वात्म-कार्थवत्ताऽव्यवहितोत्तरत्वेन वर्तते इति योग्यतावत्त्वात् 'पयःकरणकसेचनानुकूलव्यापारानुकूलकृति-मानिति बोधो जायते इति भावः ॥ मुक्तावल्यां योग्यतां निर्वक्तीति । योग्यतां निरूपयती-

योग्यतां निर्वक्ति—पदार्थे इत्यादिना। एकपदार्थेऽपरपदार्थसम्बन्धो योग्यतेत्यर्थः। तज्ज्ञानाभावाच्च वह्निना सिञ्चतीत्यादौ न शाब्दबोधः। नन्वेतस्या योग्यताया ज्ञानं शाब्दबोधात्प्राक्सर्वत्र न सम्भवति, वाक्यार्थस्यापूर्वत्वादिति चेद्, न,—तत्तत्पदार्थस्मरणे सति क्वचित्संशयरूपस्य क्वचिन्निश्चयरूपस्य योग्यताज्ञानस्य

---

त्यर्थः॥ 'पदार्थे तत्र तद्वत्ते'तिमूलेन स्वस्मिन् स्ववत्त्वं योग्यता लभ्यते तज्ज्ञानस्य प्रकृताऽनुपयोगाव् तदर्थमाह—एकपदार्थे इति। प्रकृतवाक्यघटकैकपदार्थे प्रकृतवाक्यघटकापरपदार्थस्य यः प्रयोक्तृतात्पर्यविषयसंसर्गः स एव योग्यतेत्यर्थः। तज्ज्ञानं संशयनिश्चयोभयसाधारणं संशयनिश्चयसाधारणशाब्दबोधं प्रति कारणमिति बोध्यम् 'घटमानये'त्यत्र द्वितीयान्तघटपदार्थेन घटकर्मत्वेन सह लोडन्तानयनपदार्थस्य निरूपकत्वसंसर्गो योग्यता। अथ 'अर्थबाधाऽभावो योग्यते'ति **नवीनमते** तु स्वरूपसती एव योग्यता शाब्दबोधे हेतुरिति बोध्यम्॥ योग्यताज्ञानस्य हेतुत्वानङ्गीकारे बाधकमाह—**तज्ज्ञानाऽभावाच्चेति**। 'वह्निना सिञ्चती'त्यत्र सेचने वह्निकरणकत्वस्य योग्यताया अभावात् **तज्ज्ञानाऽभावाच्च**=योग्यताज्ञानाऽभावेन, न शाब्दबोधो भवतीत्यर्थः॥ योग्यताज्ञानस्य अकारणत्वे तु तत्रापि 'वह्निकरणकसेचनानुकूलकृतिमानि'तिशाब्दबोधापत्तिः, योग्यताज्ञानातिरिक्तसकलसामग्रीसत्त्वादिति भावः॥ **अथ**—मीमांसकाः 'अगृहीतार्थगन्तृत्वं प्रमाणत्वम्, पदार्थान्वयबोध एव च शाब्दबोधः 'पूर्वमनधिगतसंसर्गाधिगन्तृ(बोधकरण)तयैव पदज्ञाने करणत्वमुपपद्यते, तथा च पदार्थान्वयात्मकयोग्यताज्ञानस्य शाब्दबोधात्प्राक् सर्वत्र सत्त्वे योग्यताज्ञानाधिगतस्य योग्यतात्मकसंसर्गस्य शाब्दबोधकरणत्वेन पदज्ञानस्य प्रमाणत्वाऽनुपपत्त्या शाब्दबोधस्य प्रमात्वमेव नोपपद्येतेत्यतः योग्यताज्ञानं कारणं न मन्तव्यमित्याशयेनाऽऽशंकन्ते—**नन्वेतस्या इति**। तत्तद्वाक्यघटकैकपदार्थीयाऽपरपदार्थनिष्ठतात्पर्यविषयसंसर्गात्मिकाया योग्यताया ज्ञानं तत्तच्छाब्दबोधाऽव्यवहितप्राक्क्षणावच्छेदेन, सर्वत्र=सर्वत्रैव,—प्रकृतवाक्यजन्यशाब्दबोधस्य विषयतया यावत्स्वधिकरणेषु अन्वयेषु, समवायेन यावत्स्वधिकरणेषु प्रमातृषु वा, न संभवति=नैव भवितुं योग्यमित्यर्थः। तत्र हेतुमाह—**वाक्यार्थस्येति**। वाक्यघटकपदार्थान्वयस्य, अपूर्वत्वात=पूर्वम् अनिश्चितत्वेन मीमांसकमते स्वीकारादित्यर्थः, अनधिगतार्थगन्तृत्वं प्रमाणत्वमिति सिद्धान्तेन पदार्थानामन्वयो योग्यतात्मको योग्यताज्ञानविषयतया शाब्दबोधात्पूर्वं नैवाङ्गीकर्तव्यः, तथा सति योग्यताज्ञानेनाऽधिगतस्य तस्य पुनः शाब्दबोधात्मकाऽधिगमजनकतया पदज्ञाने प्रमाणत्वाऽभावेन शाब्दबोधस्य प्रमात्वाऽनुपपत्तिः स्यात् अतः योग्यताज्ञानं न कारणमिति भावः॥ समाधत्ते—**तत्तपदार्थेति**। प्रकृतवाक्यघटकतत्तत्पदविषयकवृत्तिज्ञानसहकृतपदज्ञानजन्यतत्तत्पदार्थविषयकस्मरणे जायमाने सति, पदार्थानां अन्वयविशेषाऽदर्शनसहकृतपदार्थकोटिद्वयोपस्थित्या, **क्वचित्**='नीलो घटो द्रव्यं पट'इत्यादौ नीलपदार्थघटपदार्थान्वये, संशयरूपस्य='प्रथमान्तघटपदार्थे प्रथमान्तनीलपदार्थान्वयो न वा'—इति संशयात्मकस्य योग्यताज्ञानस्य, अथ च **कचित्**='घटमानये'त्यादौ तु लोडन्तानयनपदार्थे द्वितीयान्तघटपदार्थान्वयस्य निरूपितत्वस्य निश्चयात्मकस्यैव योग्यताज्ञानस्य **संभवात्**=अवश्यं जायमानत्वात्, अतः योग्यताज्ञानं संशयनिश्चयसाधारणम् अवश्यं शाब्दबोधे कारणमिति मन्तव्यम्। अनधिगतगन्तृत्वं च न प्रमाणत्वं, किन्तु प्रमाऽसाधारणकारणत्वं प्रमाणत्वं, प्रमात्वं च तद्वति तत्प्रकारकत्वमिति नाऽस्मन्मते प्रमात्वानुपपत्तिरिति भावः॥ **वस्तुतस्तु**—योग्यताज्ञानस्य संशयनिश्चयसाधारणरूपेण योग्यताज्ञानत्वेन कारणत्वांगोकाराद्‌ योग्यतानिश्चयत्वेन कारणत्वानङ्गीकाराद्‌ अधिगतपदस्य च निश्चयार्थत्वात् अन्वयबोधस्य अनधिगताधिगन्तृप्रमाणजन्यत्वोपपत्त्या न तन्मतेऽपि प्रमात्वाऽ-

**सम्भवात्। नव्यास्तु योग्यताज्ञानं न शाब्दबोधे कारणम्। वह्निना सिञ्चतीत्यादौ सेके वह्निकरणकत्वाभावरूपायोग्यतानिश्चयेन प्रतिबन्धान्न शाब्दबोधः। तदभावनिश्चयस्य लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतज्ज्ञानमात्रे प्रतिबन्धकत्वाच्छाब्दबोधं प्रत्यपि प्रतिबन्धकत्वं सिद्धम्। योग्यताज्ञानविलम्बाच्च शाब्दबोधविलम्बोऽसिद्ध इत्याहुः ॥ ८२ ॥ ८३ ॥**

---

नुपपत्तिरिति ध्येयम् ॥ अथ–गंगेशोपाध्यायमतमाह–**नव्यास्त्विति**। योग्यताज्ञानत्वावच्छिन्नं न तत्तद्वाक्यजन्यशाब्दबोधसामान्यनिरूपितकारणत्वावच्छिन्नम्, तादृशकारणताग्राहकप्रमाणाऽभावात्, एवं सत्यपि 'वह्निना सिञ्चती'त्यत्र न शाब्दबोधापत्तिः, अयोग्यतानिश्चयाऽभावस्य शाब्दबोधहेतुत्वस्वीकारात्, अयोग्यतानिश्चयस्य च प्रतिबन्धकत्वस्वीकारात्, तथा च 'वह्निना सिञ्चती'ति वाक्यघटकपदार्थे **सेके**=सेकविशेष्यकस्य वह्निकरणकत्वाऽभावप्रकारकस्य च निश्चयस्य अयोग्यतानिश्चयात्मकस्य प्रतिबन्धकस्य सत्त्वात्, न वह्निकरणकसेचनानुकूलकृतिमानि'तिबोधो जायते, इत्यर्थः॥

ननु अयोग्यतानिश्चयाऽभावाऽपेक्षया योग्यतानिश्चयस्य लाघवात् कारणत्वं योग्यतानिश्चयाऽभावस्य च प्रतिबन्धकत्वं स्वीकार्यमित्यत आह–**तदभावनिश्चयस्येति**। हेत्वाभासप्रकरणे रत्नकोशकारमतनिरूपणाऽवसरे हि–लौकिकसन्निकर्षाऽजन्यदोषविशेषाऽजन्यतद्धर्मिकतद्वत्ताज्ञानमात्रं प्रति अनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दिततद्धर्मिकतदभाववत्तानिश्चयस्य प्रतिबन्धकत्वं लाघवात् सिद्धान्तितं, तथा च 'वह्निकरणकसेकानुकूलकृतिमा'नि'तिशाब्दबोधस्य, लौकिकसन्निकर्षाऽजन्यत्वात् दोषविशेषाऽजन्यत्वात् सेकधर्मिकवह्निकरणकत्वान्वयवत्ताज्ञानमात्रान्तर्गतत्वेन उपादातुं शक्यत्वात् सेकधर्मिकवह्निकरणकत्वान्वयप्रकारकशाब्दबोधात्मकतादृशज्ञानं प्रति 'सेकः वह्निकरणकत्वान्वयाऽभाववानि'त्याकारकस्य सेकधर्मिकवह्निकरणकत्वान्वयाऽभाववत्तानिश्चयस्य (अयोग्यतानिश्चयस्य) अनाहार्यस्य=स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकज्ञानभिन्नस्य वा बाधकालीनेच्छाजन्यज्ञानभिन्नस्य,—"सेकः वह्निकरणकत्वान्वयाऽभाववानि'तिज्ञानम् अप्रमा"इत्यप्रामाण्यज्ञानाऽविषयस्य तस्य (अयोग्यतानिश्चयस्य) बाधनिश्चयविधया प्रतिबन्धकत्वं सिद्धमेवाऽस्तीति तेनैव तत्र शाब्दबोधापत्तिवारणे निर्वहति सति तद्वारणार्थं पुनः योग्यताज्ञानस्य कारणताकल्पनं त्वधिकगौरवमेव भवतीति न योग्यताज्ञानं कारणं कल्पनीयम्, अयोग्यतानिश्चयाऽभावस्तु प्रतिबन्धकाऽभावविधया कारणं स्वभावत एवाऽऽयातीति न तदर्थं कल्पनाप्रयास इति भावः॥ लौकिकसन्निकर्षजन्य 'पीतः शंख'इतिज्ञानस्य 'पीतो न शंख'-इतिनिश्चये सत्यपि जायमानत्वात् व्यभिचारवारणाय प्रतिबध्यकोटौ–लौकिकसन्निकर्षाऽजन्येति। मण्डुकवसाऽञ्जनदोषवशाज्जन्यस्य रज्जौ सर्पज्ञानस्य 'नायं सर्प'इतिनिश्चयसत्त्वेऽपि जायमानत्वात् व्यभिचारवारणाय प्रतिबध्यकोटौ–दोषविशेषाऽजन्य इति। ह्रदो वह्निमानितिज्ञानं प्रति 'वह्न्यभाववान् ह्रदो वह्निमानिति'–आहार्यज्ञानस्य अप्रतिबन्धकत्वात् प्रतिबन्धककोटौ–अनाहार्येति। ह्रदो वह्निमान् इति ज्ञानं प्रति 'ह्रदो वह्न्यभाववानितिज्ञानमप्रमे'त्यप्रामाण्यज्ञानविषयज्ञानस्याऽप्रतिबन्धकत्वात् प्रतिबन्धककोटौ–अप्रामाण्यज्ञानाऽनास्कन्दितेति॥ ननु–योग्यताज्ञानस्याऽकारणत्वे यत्र न बाधनिश्चयो न वा योग्यताज्ञानं तत्रापि बाधनिश्चयाभावमात्रेण शाब्दबोधापत्तिः स्यादिति तद्वारणाय योग्यताज्ञानस्य कारणत्वं योग्यताज्ञानाऽभावस्य च शाब्दबोधाऽभावप्रयोजकत्वं वक्तव्यम्, तथा च नोक्तस्थले शाब्दबोधापत्तिः, किन्तु यावत्कालं योग्यताज्ञानं नोत्पद्यते तावत्कालं शाब्दबोधोऽपि नोत्पद्यते–इति व्यवस्था स्यादित्याशंकायामाह–**योग्यताज्ञानविलम्बाच्चेति**। उक्त-

यत्पदेन विना यस्याननुभावकता भवेत्।
आकांक्षा,

आकाङ्क्षां निर्वक्ति–यत्पदेनेति। येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं

---

स्थले अयोग्यताज्ञानाऽभावात्मकेन बाधनिश्चयाभावेन शाब्दबोधापत्तिस्तु इष्टापत्तिरेव स्वीक्रियते,बाधनिश्चयाभावस्य तद्वत्ताबुद्धिं प्रति क्लृप्तकारणत्वात्, योग्यताज्ञानस्य तु अतिरिक्तकारणताकल्पने गौरवात् कारणत्वमेवाऽन्यथासिद्धं, तेन योग्यताज्ञानाऽभावस्य शाब्दबोधाऽभावप्रयोजकत्वमपि असंभवि, तथा च योग्यताज्ञानविलम्बात् शाब्दबोधविलम्बोऽपि, असिद्धः=अप्रामाणिक एव, किन्तु यत्र यथार्थबाधनिश्चयस्तत्र सर्वथैव शाब्दबोधाऽभावः, यत्र तु बाधनिश्चयभ्रमस्तत्र यावत्कालं भ्रमस्तावत्कालं शाब्दबोधो विलम्बते इति, सर्वथैव योग्यताज्ञानस्य न कारणत्वं तदभावस्य च न प्रतिबन्धकत्वमिति भावः ॥ 'आहु'रित्यनेन 'सर्वानुभवसिद्धयोग्यताज्ञानस्य कारणत्वखण्डनमनुचितमेवेति–अस्वरसः सूचितः ॥ अन्ये तु–आहुरित्यस्वरसबीजं तु–'यद्विषयकमनुमित्यादिकं न जातं शाब्दबोध एव जातः तद्विशिष्टबुद्धौ अयोग्यताज्ञानाऽभावत्वाऽपेक्षया लाघवेन योग्यताज्ञानत्वेनैव हेतुतासिद्धिः, एवञ्च 'यद्विशेषयो'रितिन्यायेन शाब्दसामान्ये योग्यताज्ञानत्वेन हेतुतासिद्धिर्दुर्वारैवेत्याहुः ॥ अपरे तु–बाधनिश्चयाऽभावविषया अयोग्यताज्ञानाऽभावे कारणताक्लृप्तत्वानुभवे विवाद एवेत्यस्वरसम् 'आहु'रित्यनेन वर्णयन्तीति बोध्यम् ॥ ८३ ॥

आकांक्षां निरूपयति–मूले–यत्पदेनेति। यत्पदेन विना=अम्–पदेन विना, यस्य=यद्घटपदस्य, अननुभावकता=शाब्दबोधात्मकानुभवाऽजनकता भवेत्, तस्मिन् अम्पदे घटपदवत्त्वं, घटपदे वा अम्पदवत्त्वम् आकांक्षेत्यर्थः ॥ अन्ये तु–एकपदार्थज्ञाने तदर्थान्वययोग्याऽपरपदार्थस्य यज्ज्ञानं तद्विषयिणीच्छा–आकांक्षेति वदन्ति ॥ 'यत्पदेने'त्यादिमूलेन 'यत्पदाऽभावप्रयुक्ते यत्पदनिष्ठशाब्दबोधजनकत्वाभावः तत्पदाऽभाव एवाकांक्षा इत्यर्थो लभ्यते, तदनुपपन्नम्, तस्य स्वरूपसदुपयोगित्वेऽपि 'आकांक्षाज्ञानस्य कारणत्वं' पूर्वमुक्तमित्यनेन सह विरोधापत्तेः, आकांक्षाया अभावात्मकत्वे उत्थितोत्थाप्याकांक्षयोः उत्कर्षाऽपकर्षौ न स्याताम् अभावे उत्कर्षाऽपकर्षाऽभावादित्यादिना दोषप्रदर्शनपूर्वकाकांक्षायाः अभावात्मकतानिरासकचिन्तामणिग्रन्थविरोधापत्तेश्च, अतो मुक्तावल्यां मूलमन्यथा व्याचष्टे–येन पदेनेति। येन पदेन विना=यत्पदाऽभावप्रयुक्तं, यत्पदस्य अन्वयबोधाऽजनकत्वं तत्पदसमभिव्याहृततत्पदत्वमाकांक्षेत्यर्थः, यथा 'राज्ञः पुरुष'इत्यादौ पुरुषपदाऽभावप्रयुक्तं षष्ठ्यन्तराजपदस्य अन्वयबोधाऽसमर्थत्वम्, अत;–राजपदसमभिव्याहृतपुरुषपदत्वम्–आकांक्षा ॥ 'घटमि'त्यत्र घटपदस्य अम्पदाऽभावप्रयुक्तमन्वयबोधाऽसमर्थत्वम्, अतः घटपदसमभिव्याहृताऽम्पदत्वम् आकांक्षा। प्रयुक्तत्वं नाम 'कारणाऽभावात् कार्योऽभाव'इत्याकारकप्रतीतिबोधकः स्वरूपसम्बन्धविशेष इति। अननुभावकत्वं तादृशसम्बन्धार्थद्योतकमित्यर्थः ॥ तात्पर्यविषयशाब्दबोधविषयतत्तदर्थविषयकस्मृतिनिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासम्बन्धावच्छिन्नाऽवच्छेदकताश्रयपदद्वयान्यतरनिरूपिततादृशपदद्वयान्यतरनिष्ठनियतानुपूर्व्याश्रयत्वं तादृशशाब्दबोधौपयिकाऽऽकाङ्क्षा–इति फलितोऽर्थः ॥ 'घटं नये'त्यादौ 'घटकर्मकनयनानुकूलकृतिमानि'तितात्पर्यविषयशाब्दबोधविषयपदार्थस्मरणनिरूपितकारणताश्रयपदज्ञानीयविषयतावच्छेदकताश्रयं यद् द्वितीयान्तघटपदतिङन्तनीङ्धातुपदद्वयं तयोर्मध्ये तिङन्तनीङ्धातोः द्वितीयान्तघटपदोच्चारणोत्तरकालीनोच्चरितत्वरूपनियतानुपूर्व्याश्रयत्वाद् द्वितीयान्तघटपदस्य च तिङन्तनीङ्धतुपदोच्चारणपूर्वकालीनोच्चरितत्वात्मकनियतानुपूर्व्याश्रयत्वात् परस्परं

तेन पदेन सह तस्याकांक्षेत्यर्थः। क्रियापदं विना कारकपदं नान्वयबोधं जनयतीति तेन तस्याकाङ्क्षा। वस्तुतस्तु क्रियाकारकपदानां सन्निधानमासत्त्या चरितार्थम्। परन्तु घटकर्मताबोधं प्रति घटपदोत्तरद्वितीयारूपाकाङ्क्षाज्ञानं कारणम्, तेन घटः

---

तयोः साकांक्षत्वमिति समन्वयः॥ तदेवोपपादयति-क्रियापदं विनेति। तिङन्तनीङ्पदं विना, कारकपदं=कर्मतान्तादिपदं घटमिति 'घटकर्मतानिरूपकनयनानुकूलकृतिमाँस्त्वमि'ति-अन्वयबोधं न जनयतीति, तेन=क्रियापदेन सह कर्मादिपदस्य,-अव्यवहितोत्तरत्वाऽव्यवहित-पूर्वत्वान्यतरसम्बन्धेन तत्पदवत्त्वमाकांक्षेत्यर्थः॥ अथ-'घटं नय'इत्यादौ एकपदेऽपरपदवत्त्वम् अव्यवहितोत्तरपूर्वान्यतरपदवत्त्वमेव, तत्राऽव्यवधानांशस्याऽऽसत्त्यैव लाभः, आसत्तेः पदाऽव्यव-धानात्मकतायाः पूर्वं निरूपितत्वात्, उत्तरत्वादिकं तु अनियतत्वेन नाऽपेक्षितमेव 'घटं नय-नय घटमि'तिरीतिद्वयेनाऽपि अन्वयबोधात्, तथा च-क्रियाकारकपदयोरासत्त्या चरितार्थत्वात् तत्राऽऽ-कांक्षा नास्त्येवे'ति क्रियाकारकपदयोः साकांक्षत्वं नोपपद्येतेत्याशंकामिष्टापत्त्या परिहरति-वस्तु-तस्त्विति। तिङन्तनीङ्धात्वादिपदद्वितीयान्तघटादिपदानां, सन्निधानम्=अव्यवहितोत्तरत्वाऽव्य-वहितपूर्वत्वान्यतरवत्त्वम्, आसत्त्या चरितार्थम्=आसत्त्यभिन्नं सदेव शाब्दबोधं जनयतीति आसत्त्यैव कृतकृत्यं भवतीति आकांक्षा तत्र नैव मन्तव्येति भावः॥ नन्वेवं सति व्यभिचाराद् आकांक्षाज्ञानस्य शाब्दसामान्ये कारणत्वाऽनुपपत्तिरित्यत आह-परन्त्विति। 'घटम्' इत्यत्र आधे-यतासम्बन्धेन घटप्रकारककर्मताविशेष्यक'घटनिष्ठकर्मत्वमि'तिबोधं प्रति, घटपदोत्तरद्वितीयारूपा-कांक्षाज्ञानम्=अव्यवहितोत्तरत्वसम्बन्धेन अम्पदे घटपदवत्त्वं घटपदे वाऽव्यवहितपूर्वत्वसम्बन्धेना-ऽम्पदवत्त्वमेवाकांक्षा तज्ज्ञानं=स्मरणम् कारणमित्यर्थः। एवं 'नय'इत्यत्रापि 'नयनप्रकारककृतिविशे-ष्यक 'नयनानुकूलकृतिमानि'तिशाब्दबोधं प्रति अव्यवहितोत्तरत्वसम्बन्धेन लोट्पदे नीङ्पदवत्त्वं नीङ्पदेऽव्यवहितपूर्वत्वसम्बन्धेन वा लोट्पदवत्त्वमाकांक्षा तज्ज्ञानं कारणमिति बोध्यम्॥ तथा च घटकर्मकनयनानुकूलकृतिमानितिशाब्दत्वव्यापकं यद् घटनिष्ठकर्मताविशेष्यकशाब्दत्वं नयनानुकूल-कृतिविशेष्यकशाब्दत्वं च तदवच्छिन्नं प्रति आकांक्षाज्ञानस्य कारणत्वेन, आकांक्षाज्ञानशून्यकाले तु तादृशव्यापकधर्मावच्छिन्नबोधाऽनुत्पत्त्या विशिष्टशाब्दत्वात्मकव्याप्यधर्मावच्छिन्नस्याऽप्यनुत्पादात् व्यभिचाराऽप्रसक्तेः आकांक्षाज्ञानस्य व्यापकधर्मावच्छिन्नोत्पादकसामग्रीरूपस्य व्याप्यधर्मावच्छिन्नं प्रति नियतपूर्ववृत्तित्वस्य(कारणतायाः)निराबाधत्वात्। किन्तु प्रयोजनाऽभावाद्व्याप्यधर्मावच्छिन्नं प्रति आकांक्षाज्ञानस्य कारणत्वं पृथक्त्वेन नांगीक्रियते एवेति भावः॥ ननु तत्तद्व्यापकधर्मावच्छिन्नं प्रत्यपि आसत्त्या चरितार्थत्वात् आकांक्षाज्ञानस्य कारणत्वं निरर्थकमित्याशंकां परिहरति-तेनेति। तत्तद्व्यापकधर्मावच्छिन्नं प्रति आकांक्षाज्ञानस्य हेतुत्वेनेत्यर्थः॥ 'घटमानये'तिवाक्यस्थाने प्रयुक्तात् 'घटः कर्मत्वम् आनयनं कृति'रितिवाक्यात् 'आधेयतासम्बन्धेन घटप्रकारककर्मताविशेष्यकः अनु-कूलतासम्बन्धेन च आनयनप्रकारककृतिविशेष्यकः शाब्दबोधो न जायते, व्यापकशाब्दबोधद्वया-भावात् तयोर्विशिष्टात्मकव्याप्यशाब्दबोधोपि 'घटकर्मतानिरूपकाऽऽनयनानुकूलकृतिमानि'ति न जायते इत्यर्थः॥ 'घटम्'इतिस्थाने प्रयुक्ते 'घटः कर्मत्वम्' इत्यत्र 'कर्मत्वं घट' इत्यपि वक्तुं शक्य-त्वात् तत्र अविपरीते विपरीते वा प्रयोगे आसत्तियोग्यतासत्त्वेऽपि अविपरीतो विपरीतो वा शाब्द-बोधो न भवति, आकांक्षाऽभावात्, यतस्तत्र 'कर्मत्वं घट'इत्यत्र आकांक्षा नास्त्येव, अम्पदे घटपदोत्त-रत्वस्यैवाऽऽकांक्षात्वात्, अन्यथा 'अम् घट' इत्यपि प्रयोगः शुद्ध आपद्येतेति व्यापकधर्माव-च्छिन्ने खण्डबोधे आकांक्षाज्ञानस्य कारणत्वं सार्थकमेवेति भावः॥ एवं 'राजपुरुष'इत्यादिसमास-

कर्मत्वमानयनं कृतिरित्यादौ न शाब्दबोधः। अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ तु पुत्रेण सह राजपदस्य तात्पर्यग्रहसत्त्वात्तेनैवान्वयबोधः। पुरुषेण सह तात्पर्यग्रहे तु तेन सहान्वयबोधः स्यादेव॥

स्थलेऽपि अभेदेन राजसम्बन्धिप्रकारकपुरुषविशेष्यकशाब्दबोधं प्रति पुरुषपदे अव्यवहितोत्तरत्वेन राजपदवत्त्वमेव आकांक्षा तज्ज्ञानं कारणम्, तेन 'राजपुरुष'इतिवाक्यादिव 'राजा पुरुष'इति। वाक्यान्न शाब्दबोधः, 'राजा पुरुष' इतिवत् 'पुरुष राजा' इत्यपि वक्तुं शक्यत्वेन तत्र निरुक्ताकांक्षाविरहात् इत्यपि बोध्यम्॥ ननु-असमस्तवाक्यघटकसुबन्ततिङन्तादिपदानामासत्त्या शाब्दबोधः प्रकृतिप्रत्ययानां तु आकांक्षयेति व्यवस्थायाम् 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामि'ति वाक्यं 'अयं राज्ञः पुत्रः एति, पुरुषोऽपसार्यतामि'त्यन्वयबोधतात्पर्येण प्रयुक्तं तत्र षष्ठ्यन्तराजपदस्य पुरुषेण सहापि आसत्तिसत्त्वात् तात्पर्यसत्त्वाच्च 'अयं पुत्रः एति, राज्ञः पुरुषोऽपसार्यताम्, इत्यप्यन्वयबोधापत्तिः स्यात्, तत्र आकांक्षाया अनपेक्षितत्वस्य पूर्वमुक्तत्वादित्याशंकायामाह-**अयमेतीत्यादि**। 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामि'तिवाक्ये, पुत्रेण सह राजपदस्य=पुत्रपदसहकृतराजपदस्य, तात्पर्यग्रहसत्त्वात्=भेदसंसर्गेण राजसम्बन्धप्रकारकपुत्रविशेष्यकप्रतीतीच्छयोच्चरितत्वात्मकतात्पर्यप्रकारकनिश्चयसत्त्वात्, तेनैव=पुत्रपदार्थेनैव सह, षष्ठ्यन्तराजपदार्थस्य राजसम्बन्धस्य अन्वयबोधः 'राजसम्बन्धाश्रयपुत्र'इत्येवं बोधो भवति। यदि तु 'पुरुषेण सह राज्ञः-पदस्य' भेदसंसर्गेण राजसम्बन्धप्रकारकपुरुषविशेष्यकप्रतीतीच्छयोच्चरितत्वात्मकतात्पर्यप्रकारकनिश्चयः, तदा तु **तेन** सह=पुरुषपदार्थेन सह 'राजसम्बन्धाश्रयपुरुष'इति बोधः जायते इत्यर्थः। तथा च येन सह यस्य तात्पर्यज्ञानं तेन सह तस्य अन्वयबोधो भवतीति, तत्रापि राजसम्बन्धिप्रकारकपुत्रविशेष्यकशाब्दत्वस्य राजसम्बन्धप्रकारकपुरुषविशेष्यकशाब्दत्वस्य वा व्यापकं यत् निरूपितत्वसम्बन्धेन राजप्रकारकसम्बन्धविशेष्यकशाब्दत्वं तदवच्छिन्नं प्रति राजपदोत्तरङस्पदत्वात्मकाऽऽकांक्षाज्ञानस्य कारणतया व्याप्यधर्मावच्छिन्नोत्पत्तेः पूर्वमपि नियमेन सत्त्वेऽपि आसत्तिज्ञानस्य योग्यताज्ञानस्यापि च सत्त्वेऽपि शाब्दबोधे तात्पर्यज्ञानस्यापि कारणत्वेन यादृशशाब्दबोधौपयिकतात्पर्यज्ञानं भवेत् तादृशशाब्दबोधो भवति नान्यादृश इति,-न आकांक्षाज्ञानस्य कारणत्वानुपपत्तिः न वा अतात्पर्यकाऽन्वयबोधापत्तिरिति भावः॥ यदि च 'अयं राज्ञः पुत्र एति राज्ञः पुरुषोऽपसार्यताम्'इत्येवमुभयत्र तात्पर्यसत्त्वे तूभयबोधो भवत्येवेति **ध्येयम्**। ननु-तदानीम् उभयबोधस्वीकारे 'एकत्र विशेषणस्याऽन्यत्र साक्षाद्विशेषणत्वाऽसंभवादि'तिनियमभङ्गप्रसंग इति चेन्न। नियमे 'असति तात्पर्य'इत्यस्यापि निवेशात्॥ अत्रेदं बोध्यम्-तच्छाब्दविषयार्थस्मृतिकारणज्ञानविषयपदद्वयाऽन्यतरनिष्ठतादृशपदद्वयाऽन्यतरनिरूपितनियतानुपूर्वी तच्छाब्दबोधप्रयोजकाकांक्षा, तज्ज्ञानं च तच्छाब्दबोधे कारणमित्यत्र 'येन पदेनेत्यादिग्रन्थस्याशयः इति विश्वनाथनिगूढाभिप्रायः॥ **परेतु**-'येन पदेन विना यत्पदस्याऽननुभावकता भवेदि'त्यन्तं परिचायकमात्रं न त्वाकांक्षाकुक्षिप्रविष्टम्, लक्षणं तु 'तत्पदस्य तत्पदवत्त्वमात्र'मित्याहुः। **अपरे तु**-'अनाकांक्षत्वज्ञानं प्रतिबन्धकं, तदभावः कारणम्, न त्वाकांक्षाज्ञानम्, आकांक्षाज्ञानविलम्बेन शाब्दबोधविलम्ब इति वदन्ति॥ तत्तु ग्राह्याभावाद्यनवगाहित्वात् अयुक्तमेव, **वस्तुतस्तु**-अकांक्षालक्षणे तत्पदं-तत्पदज्ञानपरं मोनिश्लोकानुरोधात्, अत एव अध्याहृतपदेनाऽप्याकांक्षानिर्वाहः। अध्याहारश्च-अश्रुतपदानाम् अनुसन्धानम्, अत एव सर्वापेक्षया तस्य जघन्यत्वम्। तत्र स्वस्थानस्थितस्य पुनरनुसन्धानम् आवृत्तिः, नेदीयस्थानान्तरस्थितस्य अनुसन्धानम् अनुषङ्गः, दवीयस्थानान्तरस्थितस्यानुसन्धानम् अनुवृत्तिरिति, इयं च त्रिधा-सिंहाव-

वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥ ८४ ॥

तात्पर्यं निर्वक्ति-वक्तुरिच्छेति। यदि तात्पर्यज्ञानं कारणं न स्यात्तदा सैन्धवमानयेत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोध इति न स्यात्। न च तात्पर्यग्राहकप्रकरणादीनां शाब्दबोधे कारणत्वमस्त्विति वाच्यम्, तेषामननुगमात्; तात्पर्यज्ञानज-

---

लोकित-मण्डुकप्लुति-गंगास्रोतोवदिति। सिंहः स्वगृहान्निर्गत्य दूरं गत्वा यथा पुनः परावृत्य स्वगृहं पश्यति, तद्वदुत्तरत्र केषुचिद्वाक्येषु पूर्वतनपदस्यान्वयो नास्ति, क्वचिदुत्तरवाक्ये पूर्वतनपदस्याऽन्वयः सा सिंहावलोकनता। उत्तरवाक्येषु एकत्र पूर्वपदस्याऽन्वयः एकत्र च नाऽन्वयः पुनर्वाक्यान्तरे च तदन्वयः तत्र मण्डुकप्लुतिः। उत्तरवाक्येषु क्रमेण सर्वत्र पूर्वपदान्वयो गङ्गास्रोतः इति **बोध्यम्** ॥ **इत्याकांक्षा** ॥

मूले तात्पर्यं निरूपयति-**वक्तुरिच्छेति**। 'एतत्पदादेतदर्थो भवतु'इतिप्रयोक्तृसमवेता इच्छा-तात्पर्यमित्यर्थः। उच्चरितत्वसम्बन्धेन इच्छाप्रकारकं तादृशेच्छयोच्चरितत्वप्रकारकं वा पदविशेष्यकं श्रोतृनिष्ठज्ञानं शाब्दबोधकारणमित्यर्थः ॥ न तु-तात्पर्यमित्यस्य तदर्थपरस्य-तदर्थस्मारकस्य पदस्य भावस्तात्पर्यमिति व्युत्पत्त्या तदर्थस्मारकत्वं तात्पर्यम्, लवणाश्वोभयस्मारकत्वस्य सैन्धवपदनिष्ठस्य अभिमतार्थबोधकत्वाऽभावात्, तस्मात् तात्पर्यपदं लक्षणया वक्तुरिच्छापरमेव न तु श्रोत्रिच्छापरमपीति **बोध्यम्**। एतादृशतात्पर्यज्ञानस्याऽकारणत्वे बाधकमाह-**मुक्तावल्यां-यदीत्यादिना**। यदि तत्प्रतीतीच्छयोच्चरितत्वरूपस्य तात्पर्यस्य ज्ञानं शाब्दबोधे कारणं न स्यात् तदा, 'सैन्धवमानये'त्यादिनानार्थशक्तिकपदघटितवाक्यात्, **क्वचित्**=अश्वतात्पर्यग्राहक-प्रयाणप्रकरणे सति अश्वस्य, **क्वचित्**=लवणतात्पर्यग्राहकभोजनप्रकरणे सति, लवणस्यैव बोध इति नियमो न स्यादित्यर्थः। एवम् अश्वलवणबोधौपयिकसामग्र्याः अविशिष्टत्वात् सर्वदा अश्वलवणयोर्बोधः स्यात्, एकसामग्र्याः अपरबोधप्रतिबन्धकत्वे तु शाब्दबोध एव विलुप्येत, तस्मात् तात्पर्यज्ञानस्य हेतुत्वमावश्यकमितिभावः ॥ **प्रकरणादिकं** तात्पर्यग्राहकम्, भोजनप्रकरणं यथा 'सैन्धवमानये'त्यत्र--लवणार्थोच्चरितत्वात्मकतात्पर्यग्राहकम्, आदिपदेन विशेषण-संयोगविभागसाहचर्याऽऽभिमुख्यचेष्टादीनामपि तात्पर्यग्राहकत्वं बोध्यम् 'सकेसरो गर्जनघोषकारी मृगाधिराजो हरिरेत्यतस्तादि'त्यत्र सकेसरत्वादि**विशेषण**त्रयं हरिपदस्य सिंहे तात्पर्यग्राहकम्। 'घटोऽपसारणीय'इत्यत्र समीपस्थघटे तात्पर्यग्रहः **संयोगात्**=सामीप्यात्। 'घटमत्रानये'त्यत्र घटपदस्य दूरस्थघटे तात्पर्यग्रहो **वियोगात्**=दूरत्वात्। 'घटं पटश्चानये'त्यादौ घटपटपदयोः एकदेशवृत्तिघटपटयोस्तात्पर्यग्रहः-**साचर्यात्**। एवम्-'मूर्तिं ध्यायेते'त्यत्र मूर्तिपदस्य सन्मुखमूर्तौ तात्पर्यग्रहः आभिमुख्याद् भवति। हस्तं प्रसार्य'मह्यं देही'तिवाक्योच्चारिते सति मह्यंपदस्य मद्धस्ततात्पर्यग्रहः चेष्टया भवतीत्येवं बोध्यम् ॥ प्रकरणादेः-'इदं सैन्धवादिपदम्,-लवणादिबोधेच्छयोच्चरितम्,-भोजनादिप्रकरणोक्तत्वादि'त्येवं लिङ्गविधया तात्पर्यग्रहजनकत्वं बोध्यम् ॥ **ननु**-एतेषां प्रकरणादीनां तात्पर्यग्राहकत्वाऽपेक्षया शाब्दबोधं प्रति साक्षादेव कारणत्वं भवतु तात्पर्यज्ञानस्य तु कारणत्वमेव न कल्पनीयमित्याशंकते-न च **तात्पर्येति**। तात्पर्यग्रहे लिङ्गविधया हेतूनां प्रकरण-विशेषण-योग-वियोग-साहचर्या-ऽऽभिमुख्य-चेष्टादीनामेव साक्षात् शाब्दबोधे कारणत्वमस्तु न तु तात्पर्यज्ञानं पृथक् कारणं कल्पनीयं गौरवादिति भावः ॥ समाधत्ते-**तेषामिति**। तेषां प्रकरणादीनाम्, अननुगमात्=सर्वसाधारणाऽनुगताऽन्यूनाऽनतिप्रसक्तकारणतावच्छेदकावच्छिन्नत्वाऽभावादित्यर्थः। तथा च-तात्पर्यग्राहकेषु सर्वेषु अनतिप्रसक्तैकधर्माऽभावात् प्रातिस्विकरूपेण व्यभिचारित्वाच्च तेषां न शाब्दहेतुत्वासंभ-

नकत्वेन तेषामनुगमे तु तात्पर्यज्ञानमेव लाघवात्कारणमस्तु। इत्थं च वेदस्थलेऽपि तात्पर्यज्ञानार्थमीश्वरः कल्प्यते। न च तत्राध्यापकतात्पर्यज्ञानं कारणमिति वाच्यम्, सर्गादावध्यापकाभावात्। न च प्रलय एव नास्ति कुतः सर्गादिरिति वाच्यम्, प्रलयस्यागमेषु प्रतिपाद्यत्वात्। इत्थं च शुकवाक्येऽपि ईश्वरीयतात्पर्यज्ञानं कारणम्।

---

व इति भावः॥ ननु–तात्पर्यज्ञानजनकत्वं प्रकरणादीनामनुगतोऽन्यूनाऽनतिप्रसक्तो धर्मः स्वीकरणीयः तदवच्छिन्नतया तेषां कारणत्वं युक्तमित्याशंक्य समाधत्ते–**तात्पर्यज्ञानजनकत्वेनेति**। तात्पर्यज्ञानजनकत्वावच्छिन्नतया तेषामनुगतकारणत्वमपि न संभवति,जनकतायाः प्रतिव्यक्तिभिन्नत्वेन गौरवात्॥ ननु–जनकतासम्बन्धेन तात्पर्यज्ञानवत्त्वमेव तर्हि कारणं भवत्वित्याशंकायामाह–**तात्पर्यज्ञानमेवेति**। प्रकरणादीनां तात्पर्यज्ञानत्वावच्छिन्नवत्त्वात्मकगुरुधर्मेण कारणत्वापेक्षया तात्पर्यज्ञानत्वेन तात्पर्यज्ञानस्यैव कारणत्वे लाघवात्–अवच्छेदकलाघवात् तात्पर्यज्ञानस्यैव, कारणत्वं युक्तमिति भावः॥ अनीश्वरवादिमीमांसकमतखण्डनायाह–**इत्थं चेति**। उक्तलाघवबलेन शाब्दसामान्यं प्रति तदर्थप्रतीतीच्छयोच्चरितत्वात्मकतात्पर्यज्ञानसामान्यस्य कारणत्वसिद्धौ सत्यामित्यर्थः। वेदस्थलेऽपि=वेदवाक्याधीनशाब्दबोधस्थलेऽपि, तात्पर्यज्ञानार्थम्=तदर्थप्रतीतीच्छयोच्चरितत्वात्मकतात्पर्यज्ञानत्वावच्छिन्नात्मककारणसम्पत्त्यर्थम्, ईश्वरः=सर्वार्थदर्शी परमात्मा, कल्प्यते=अनुमीयते,–यथा–'वेदवाक्याधीनशाब्दबोधः,–तदर्थतात्पर्यज्ञानजन्यः,–शाब्दत्वात्, –सैन्धवमानयेत्यादिवाक्याधीनशाब्दवदि'त्यनुमानात् तात्पर्यज्ञानसिद्धौ, जीवसिद्धमुक्तादीनां बाधाद् यस्य तादृशतात्पर्यज्ञानं स ईश्वरः सिद्ध एवेति भावः॥ ननु–वैदिकवाक्यबोधे अध्यापकस्य तात्पर्यज्ञानं कारणं भवतु, इति तदर्थं नेश्वरः कल्पनीय इत्याशंकते–**न च तत्रेति**। तत्र=वैदिकवाक्यजशाब्दबोधे, अध्यापकस्य=गुरोः, तात्पर्यज्ञानम्–'अस्मात् पदाद् अयमर्थबोधो भवत्वि'त्यादिरूपतात्पर्यज्ञानमेव कारणं भवत्वित्यर्थः॥समाधत्ते–**सर्गादावेति**। सर्गस्यादिरिति व्युत्पत्त्या सृष्ट्यव्यवहितप्राक्काले, जन्यद्रव्यसामान्याभावात्मकखण्डप्रलयसत्त्वात् तदानीम् ईश्वरातिरिक्ताऽध्यापकस्यैवाऽभावात् तदतिरिक्ताध्यापकतात्पर्यं न संभवतीति तात्पर्यार्थमीश्वरःसिद्ध एवेति भावः॥ननु–प्रलय एव नास्तीति शंकते–**न चेति**। जन्यद्रव्याऽनधिकरणात्मकखण्डप्रलय एव अप्रसिद्धः, तथा च सर्गस्यादेरेवाऽप्रसिद्धत्वात्, सर्वदा सर्गसत्त्वात्, तत्र तत्र विद्यमानाध्यापकतात्पर्येण निर्वाहे ईश्वरकल्पना व्यर्थैवेति भावः॥ समाधत्ते–**प्रलयस्येति**। खण्डप्रलयस्य आगमेषु शास्त्रेषु 'धाता यथापूर्वम् अकल्पयत्', 'नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्न चान्यदि'त्याद्यागमप्रतिपाद्यत्वात्, तथा च सर्गीयप्राथमिकपुरुषसमवेतवेदवाक्याधीनशाब्दबोधं प्रति हेतुतात्पर्यज्ञानवत्तया पुरुषान्तराऽप्रसक्त्या तादृशतात्पर्यज्ञानवत्तयेश्वरसिद्धिर्निराबाधेति भावः॥ सर्वभावकार्यानधिकरणकालात्मके महाप्रलये तु विवादात् तस्य आगमप्रतिपाद्यत्वं नास्त्येवेति बोध्यम्॥ संवादिशुकवाक्याधीनशाब्दकारणज्ञानतात्पर्यवत्तयाऽपीश्वरसिद्धिमाह–**इत्थंचेति**। शाब्दसामान्यं प्रति तात्पर्यज्ञानत्वेन कारणतासिद्धौ सत्यामित्यर्थः॥ शुकवाक्येऽपि=संवादि यत् शुकादि–सर्वभूतप्राणिमात्रोच्चारितस्वस्वभाषावाक्यं तदधीनशाब्दबोधस्तत्रापि, ईश्वरतात्पर्यज्ञानम्='एतादृशशुकाद्युदीरितवाक्याद् एतदर्थबोधो भवत्वि'ति–तद्भाषाप्रवर्तकेश्वरतात्पर्यज्ञानमेव कारणम्, इतरेषां वक्तुमशक्यत्वादिति भावः॥ ननु–शाब्दत्वावच्छिन्नान्तर्गत–विफलप्रवृत्तिजनक( विसंवादि )शुकादिवाक्यबोधं प्रति कस्याऽपि तात्पर्यज्ञानस्य कारणत्वाऽभावात् व्यतिरेकव्यभिचारः, नहि तत्रान्यपुरुषीयतात्पर्यज्ञानस्य कारणत्वं संभवति विनिगमनाविरहेण निर्णेतुमशक्यत्वात्, विसंवादित्वेन चेश्वरतात्पर्यस्याऽसंभवात्, अतः

**विसंवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्यज्ञानं कारणम्। अन्ये तु नानार्थादौ क्वचिदेव तात्पर्यज्ञानं कारणम्। तथाच शुकवाक्ये विनैव तात्पर्यज्ञानं शाब्दबोधः, वेदे त्वनादिमीमांसापरिशोधिततर्कैरर्थावधारणमित्याहुः॥ ८४॥**

**इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां शब्दखण्डं समाप्तम्।**

---

न तात्पर्यज्ञानं कारणमित्याशंकां समाधत्ते–**विसंवादीति**। विसंवादिशुकवाक्ये तु=विफलप्रवृत्तिजनक–शुकोदीरितवाक्याधीनशाब्दबोधेऽपि, शिक्षयितुरेव=शुकस्य वाक्योच्चारणसामर्थ्यसम्पादकपुरुषस्यैव, 'शुकोच्चारित–'सीताराम'शब्दात् सीतारामबोधो भवत्वि'तितात्पर्यज्ञानं कारणम्, सीतारामशब्दादिना शुकस्य बोधाऽभावात् विसंवादित्वं तस्य घटते इति बोध्यम्। तथा च तत्रापि तात्पर्यज्ञानत्वेन हेतुतायाः सत्त्वान्नोक्तव्यभिचारः, अतो न तात्पर्यज्ञानस्य कारणत्वानुपपत्तिरिति भावः॥ अथ–शाब्दसामान्ये तात्पर्यज्ञानं न हेतुः, पदजन्यपदार्थोपस्थित्यादिकारणसामग्रीसत्त्वे तात्पर्यज्ञानविलम्बेन शाब्दविलम्बस्याऽननुभवात्। किन्तु नानार्थक–'सैन्धवमानये'त्यादिवाक्ये लवणतात्पर्येणोच्चारिते अश्वबोधवारणाय तात्पर्यज्ञानं कारणं क्वचिद् वक्तव्यम्–इतिवदतां गंगेशोपाध्यायानां मतमाह–**अन्ये त्विति**। नानार्थादौ=गृहीतनानार्थकपदघटितवाक्याधीनशाब्दबोधे, आदिना–गृहीतैकार्थशक्तिक-गृहीताऽपरार्थलक्षणाकपदघटितवाक्याधीनशाब्दबोधे च, क्वचिदेव=तत्रापि आवश्यकस्थलविशेषे एव, तात्पर्यज्ञानं कारणत्वेन स्वीकार्यमित्यर्थः॥ यथा लवणतात्पर्येणोक्तं 'सैन्धवमानये'त्यत्र तात्पर्यज्ञानं कारणम्, 'सैन्धवः प्रमेयः–इत्यत्र तु सैन्धवार्थानां प्रमाविषयत्वबोधे ह्यन्यभावात् न तात्पर्यज्ञानं कारणम्, एवं 'गंगायां घोष'इत्यत्राऽन्वयाऽनुपपत्त्या लक्षणाज्ञानाधीनपदज्ञानजन्यपदार्थस्मृत्या गंगातीरवृत्त्याभीरपल्लीतिबोधात् न तात्पर्यज्ञानं कारणम्। 'गंगायां घोषमत्स्यावि'तिवाक्ये तु गंगापदं प्रवाहतीरोभयबोधतात्पर्येणोच्चरितमिति तात्पर्यज्ञानसहकृतशक्तिलक्षणाज्ञानाभ्यां जायमानप्रवाहतीरस्मृत्या 'प्रवाहवृत्तिर्मत्स्यस्तीरवृत्तिर्घोष'इतिशाब्दबोधो भवतीति भावः॥ अतः शुकादिवाक्ये तु निष्प्रयोजनत्वात् सर्वथैव तात्पर्यज्ञानस्य कारणता नास्तीत्याह–**तथा चेति**। तथा च=प्रयोजनाऽभावादेव, शुकवाक्ये=संवाद्यसंवाद्युभयसाधारणशुकसामान्योच्चरितवाक्ये, तात्पर्यज्ञानं विनैव=तदर्थप्रतीतीच्छयोच्चरितत्वरूपतात्पर्यज्ञानं विनैव, तादृशवाक्याधीनशाब्दबोधो भवतीत्यर्थः। तथाच शाब्दसामान्ये तात्पर्यज्ञानस्य हेतुत्वे मानाभावेन संवादिशुकवाक्याऽधीनशाब्दबोधेऽपि तात्पर्यज्ञानस्य कारणत्वाऽप्रसक्त्या तद्धेतुतात्पर्यज्ञानवत्त्वयेश्वरकल्पनम् अनुचितमिति भावः॥ ननु–ईश्वराऽभावे वेदवाक्ये 'व्रीहीन् अवहन्ती'त्यत्र बहुत्वावच्छिन्नव्रीहौ द्वितीयाबहुवचनान्तव्रीहिपदस्य 'कपिञ्जलान् आलभेते'त्यत्र त्रित्वावच्छिन्न–कपिञ्जले द्वितीयाबहुवचनान्तकपिञ्जलपदस्य कस्यापि तात्पर्यज्ञानाऽभावात् बोधकता न स्यादित्याशंकायामाह–**वेदे त्विति**। वेदवाक्यघटकपदानां तु। अनादिमीमांसापरिशोधिततर्कैः=अनादीनां गौतमजैमिन्यादीनां महर्षीणां मीमांसाः–अबाधितत्वेन निर्णिताः तर्काः–लाघव–विपक्षाऽबाधकग्रहाद्यात्मकाः,–तैः सहकृतपदैः,–पदज्ञानैरेवार्थस्मरणे सति **अर्थावधारणम्**='व्रीहीनवहन्ती'तिश्रुतिघटकबहुवचनस्य त्रित्वार्थकव्रीहित्रयाणामवहननप्रथा तावन्मात्रस्य पुरोडाशचरुसाधकत्वाऽभावेन यागाऽनुपयुक्तत्वात्मकबाधकसत्त्वात् लाघवस्याऽकिंचित्करत्वेन त्रित्वार्थकत्वाऽसंभवात् पुरोडाशाद्युपयोगिनो यावन्तो व्रीहयः तावन्मात्रवृत्ति(बहुत्व)संख्यार्थकत्वम्। कपिञ्जलपदोत्तरबहुवचनस्य तु त्रित्वार्थकत्वे बाधकाऽभावेन बाधकाऽभावविशिष्ट-

२३

लाघवसत्त्वात् तत्र कारणसामग्र्या त्रित्वसंख्यार्थकत्वमिति, इत्येवं निर्वाहे वेदे तात्पर्यज्ञानार्थमीश्वरकल्पनमन्याय्यम्, किन्तु–क्षित्यंकुरादिकर्तृत्वेनेश्वरसिद्धिरुपपादितैवेत्याहुः। आहुरित्यनेन अस्वरसः सूचितः। तद्बीजन्तु–यादृशशाब्दबोधरतात्पर्यज्ञानं विना नोत्पद्यते तच्छाब्दव्यक्तिं प्रति तत्तत्तात्पर्यव्यक्तेर्विशिष्य कारणताकल्पनम् अननुगमप्रयुक्तगौरवमेवेत्यन्ये। अपरे तु–तद्बीजन्तु–गृहीतनानार्थवृत्तिकपदजन्याऽनुभवत्वाऽपक्षेया लाघवेन पदजन्यानुभवत्वस्यैव तात्पर्यज्ञानजन्यतावच्छेदकत्वमुचितमित्याहुः॥ वस्तुतस्तु–या भाषा द्व्यधिकपञ्चाद्यक्षरान्वितस्फुटा यथा मानुषदेवादीनां, तत्र प्रतिपुरुषस्य कृते विनाऽर्थबोधेच्छां वाक्योच्चारणाऽप्रवृत्तेः सर्वानुभवसिद्धत्वात् वाक्यबोधे सर्वत्र तात्पर्यज्ञानस्य कारणताऽप्रत्यूहैव,वेदवाक्यानामपि अमुकार्थे तात्पर्यनिर्णयार्थमेव गौतमजैमिन्यादितर्कोणां प्रवृत्तेस्तत्रेश्वरतात्पर्यस्याऽऽवश्यकत्वात्। वानरगोशुकादीनां तु भाषायां किल्‌किल्–भौं,–चिकुचिका'दिकाऽत्यल्पाऽक्षरान्वितशब्दप्रयोगात् तेषां तु वाक्ये तात्पर्यम् अनिवार्यम्, अन्यथा समानानुपूर्वीमत्तया प्रतीयमानेन तदीयवाक्येन बहुविधा प्रवृत्तिस्तेषां नोपपद्येतेति सर्वत्र तात्पर्यज्ञानस्य कारणत्वं सध्रीचीनमिति ध्येयम्॥

॥ इति–श्रीमद्दार्शनिकपञ्चानन–षड्दर्शनाचार्य–नव्यन्यायाचार्य–सांख्ययोगवेदान्तमीमांसातीर्थ,–पण्डित'श्रीकृष्णवल्लभाऽऽचार्य'स्वामिनारायणविरचितायां न्यायसिद्धान्तमुक्तावल्याः किरणावल्यां शब्दखण्डः॥



# अथ स्मृतिनिरूपणम्

पूर्वमनुभवस्मरणभेदाद् बुद्धेर्द्वैविध्यमुक्तम्। तत्रानुभवप्रकारा दर्शिताः, स्मरणन्तु सुगमतया न दर्शितम्। तत्र हि पूर्वानुभवः कारणम्। अत्र केचित्-'अनुभवत्वेन

ननु-अनुभवभेदा एतावत्पर्यन्तं निरूपिताः, स्मरणं तु कारिकायां कथं नोक्तमित्याशंकायामाह-पूर्वमिति। 'बुद्धिस्तु द्विविधा मता, अनुभूतिः स्मृतिश्च स्या'(५१)दितिकारिकया अनुभवत्वावच्छिन्नस्मृतित्वावच्छिन्नभेदाद् बुद्धेः-ज्ञानस्य द्वैविध्यमुक्तम्, तत्र प्रत्यक्षानुमित्युपमितिशाब्दात्मका अनुभवभेदा दुरूहत्वात् कारिकाभिः एतावत्पर्यन्तं निरूपिताः, एकं स्मरणं तु सुगमतया=अदुरूहत्वेन शक्यज्ञानतया, तत्र उत्कटजिज्ञासाऽभावात् न कारिकया निरूपितम्, परन्तु-अवसरसङ्गत्या मुक्तावल्यामिदानीं निरूप्यते इत्यर्थः॥ प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्युपलक्षितेऽनन्तरवक्तव्यत्वम् अवसरः, अनुभवनिरूपणाऽनन्तराभिधानप्रयोजकीभूता जिज्ञासा 'अनन्तरवक्तव्यं किमि'त्याकारिकैव,तज्जनकम्-अनन्तरवक्तव्यत्वज्ञानम्, तद्विषयः-अनन्तरवक्तव्यत्वमेवेति, तस्य स्मरणे सत्त्वात् अवसरसंगत्या स्मरणनिरूपणमिति बोध्यम्॥ अथ-स्मृतित्वं यदि अनुभवभिन्नज्ञानत्वं तदा अनुभवत्वस्य स्मृतिभिन्नज्ञानत्वस्य क्लृप्तत्वात् अन्योन्याश्रयापत्तिः,यदि संस्कारजन्यज्ञानत्वं, तदा प्रत्यभिज्ञायामतिव्याप्तिः, यदि मात्रपदनिवेशस्तदा संस्कारेतराऽजन्यसंस्कारजन्यज्ञानत्वं गौरवग्रस्तम्, अतः स्मृतित्वं जातिरेवेति तत्र प्रमाणं दर्शयितुं स्मृत्यनुभवयोः कार्यकारणभावमाह-तत्र हीति। तत्र हि=स्मरणे हि, पूर्वानुभवः=पूर्वश्चासौ अनुभवः, पूर्वकालोत्पन्नोऽनुभवः कारणं, नतु समानोत्तरकालीनाऽनुभव इत्यर्थः॥ पूर्वपदं स्मृतिसमानोत्तरकालीनेतराऽनुभवपरिचायकं न तु लक्षणप्रविष्टम्। तथा च-स्मृतित्वावच्छिन्नं प्रति स्वसमानविषयकाऽनुभवत्वावच्छिन्नः कारणमिति कार्यकारणभावः फलितः, संस्कारस्तु द्वारम्, यथा 'घट'-इतिस्मृतित्वावच्छिन्नं प्रति 'घट'इति संस्कारद्वारकम् 'घट' इत्यनुभवत्वावच्छिन्नम् कारणमिति॥ वस्तुतस्तु—तद्धर्मावच्छिन्नतद्विषयकस्मृतित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्नतत्प्रकारकनिश्चयत्वेन हेतुत्वम् तादृशहेतुतानिर्वाहकतया व्यापारीभूतसंस्कारः कल्प्यते, व्यापारेण व्यापारिणोऽन्यथासिद्धत्वाऽभावात् संस्कारेण अनुभवस्याऽन्यथासिद्धत्वमपि नाऽऽशंकनीयमिति बोध्यम्॥ निरुक्तकार्यकारणभावे सिद्धे सति'समानविषयकाऽनुभवजन्यतावच्छेदकतया स्मृतित्वजातिः सिद्ध्यति, अनुमानं यथा 'समवायघटितसमानाधिकरण्यसम्बन्धावच्छिन्नतद्धर्मावच्छिन्नतद्विषयकानुभवनिष्ठकारणतानिरूपितस्मृतिनिष्ठकार्यताकिञ्चिद्धर्मावच्छिन्ना, कार्यतात्वात्, निरवच्छिन्नकार्यताया असंभवादिति। अत्र यत् कार्यतावच्छेदकं तदेव स्मृतित्वं जातिरिति। ननु-निरुक्तानुभवजन्यतावच्छेदकतया स्मृतित्वसाधने प्रत्यभिज्ञाया अपि संस्कारकार्यतया पूर्वानुभवजन्यत्वेन तस्या अपि स्मृतित्वापत्तिरिति चेन्न। संस्कारस्य स्मृतिजनकत्वेनैव सिद्ध्या प्रत्यभिज्ञां प्रति तस्य 'अन्यं प्रती'त्यादितृतीयान्यथासिद्ध्याक्रान्तत्वेनाऽकारणत्वात्॥ यद्यपि 'स्मरामी'तिप्रतीत्यैव स्मृतित्वजातिसिद्धिः संभवति, तथापि स्वात्मपरात्मसाधारणस्मृतिविषयकतादृशप्रतीतेः प्रमाणाऽभावात्, अनुमानेन तत्सिद्धिरिति बोध्यम्॥ अन्ये तु-स्मृतिपदशक्यतावच्छेदकतया स्मृतित्वजातिसिद्धिरिति वदन्ति। तन्न। शक्यतावच्छेदकतासाधकव्यवहारे एव विप्रतिपत्तेः। सर्वत्र तेनैव निर्वाहे तत्साधकानाम् अनुमानादीनां वैयर्थ्यापत्तेश्च॥

**न कारणत्वं, किन्तु ज्ञानत्वेनैव, अन्यथा स्मरणानन्तरं स्मरणं न स्यात्,-समानप्रकारकस्मरणेन पूर्वसंस्कारस्य विनष्टत्वात्। मन्मते तु तेनैव स्मरणेन संस्कारान्तरद्वारा स्मरणान्तरं जन्यत इत्याहुः। तन्न,-यत्र समूहालम्बनोत्तरं घटपटादीनां**

नच-'स्मृतिपदशक्यता,-किञ्चिद्धर्मावच्छिन्ना,-शक्यतात्वात्,-घटपदशक्यतावदि'त्यनुमानेन शक्यतावच्छेदकतया स्मृतित्वजातिसिद्धिरिति वाच्यम्। अनुभवजन्यज्ञानत्वरूपधर्मान्तरमादायाऽर्थान्तरात्। शक्यतावच्छेदकतायाश्च तत्तत्पदजन्यबोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावच्छेदकत्वरूपत्वेन विषयतात्वेन तस्य गुरुधर्मेऽपि संभवात् तदनुपपत्तेरिति ध्येयम्॥ अथ-स्मृतित्वावच्छिन्नं प्रति ज्ञानत्वावच्छिन्नं कारणमितिवादिनव्यैकदेशिनो मतं खण्डनाय उपन्यस्यति **अत्र केचिदिति**। नवीनैकदेशिनः 'स्मृतित्वावच्छिन्नकार्यतानिरूपितकारणता न अनुभवत्वावच्छिन्ना, किन्तु ज्ञानत्वावच्छिन्नैवेत्यर्थः। स्मृतित्वावच्छिन्नकार्यतानिरूपितज्ञानत्वावच्छिन्ननिष्ठकारणतानङ्गीकारे व्यतिरेकव्यभिचारमाह-**अन्यथेति**। अनुभवत्वावच्छिन्नस्यैव स्मृतित्वावच्छिन्नं प्रति कारणत्वे इत्यर्थः॥ स्मरणोत्तरं संस्कारेण पुनः स्मरणं, तेन पुनः संस्कारद्वारा स्मरणम्, इत्येवं यत् स्मरणोत्तरमुत्पद्यमानं स्मरणं तन्नोत्पद्येत, किन्तु उत्पद्यते,तदानीमनुभवस्य नष्टत्वात् अनुभवत्वावच्छिन्नकारणाऽभावेऽपि स्मृतिरूपकार्यसत्तात्मको व्यतिरेकव्यभिचारः, अतो नाऽनुभवत्वेन कारणत्वम्। मम तु ज्ञानत्वेन कारणत्वे ज्ञानत्वावच्छिन्नस्मरणस्य तत्र सत्त्वान्नोक्तव्यभिचार इति भावः॥ ननु-अनुभवनिष्ठं स्मृतिकारणत्वं स्वजन्यव्यापार-स्वसमवायान्यतरसम्बन्धेन वक्तव्यम्, तथा च अनुभवनाशेऽपि अनुभवजन्यसंस्कारात्मकव्यापारसत्त्वात् तद्द्वारककारणत्वमनुभवस्य निराबाधम्, तथा च न स्मृत्यनुपपत्तिरतो नोक्तव्यभिचारइत्याशंकायामाह-**समानप्रकारकस्मरणेनेति**। तद्धर्मप्रकारकतद्धर्मिविशेष्यकानुभवेन तद्धर्मप्रकारकतद्धर्मिविशेष्यको यः संस्कारो जनितः सोऽपि तज्जन्यतद्धर्मप्रकारकतद्धर्मिविशेष्यकस्मरणेन फलेन नाश्यो भवतीति तदानीं संस्काराभावात् स्वजन्यव्यापारवत्तासम्बन्धेनापि न अनुभवस्य कारणतोपपत्तिः, व्यतिरेकव्यभिचारतादवस्थ्यादित्यर्थः॥ स्वमतेन स्मृतिमुपपादयति **मन्मते तु इति**। ज्ञानत्वावच्छिन्नस्य कारणतावादिनो मम मते **तु,तेनैव-स्मरणेन**=येन स्मरणेन अनुभवजन्यसंस्कारो विनाशितस्तेनैव अनुभवजन्यसंस्कारजन्यस्मरणेन ज्ञानत्वावच्छिन्नतया कारणताऽऽक्रान्तेन, **संस्काराऽन्तरद्वारा**=तद्धर्मप्रकारकतद्धर्मिविशेष्यकः ( समानप्रकारकः ) संस्कारः पुनः उत्पाद्यते, तादृशसंस्कारद्वारा, **स्मरणान्तरम्**=तद्धर्मप्रकारकतद्धर्मिविशेष्यकस्मरणान्तरम् उत्पद्यते इति, नोक्तव्यभिचारः, अतो ज्ञानत्वेन कारणता वक्तव्येति भावः॥ यत्र प्रथमदिने घटानुभवः, द्वितीयदिने घटस्मरणम्, तृतीयदिने पुनः घटस्मरणम्, तत्र द्वितीयदिनोत्पन्नस्मरणेन संस्कारस्य नाशात् तृतीयदिनोत्पत्स्यमानस्मरणाऽव्यवहितपूर्वक्षणे समवाय-संस्कारान्यतरसम्बन्धेन पूर्वानुभवस्याऽविद्यमानत्वात् तत्स्मरणाऽनुपपत्तिवारणाय-द्वितीयदिनोत्पन्नघटस्मृतेः संस्कारं जनयित्वा तद्द्वारा कारणत्वमुपपद्यते-इति तादृशस्मृत्युपपत्त्यर्थं-संस्कारान्तरद्वारा इत्युक्तमिति बोध्यम्॥ अनुभवत्वावच्छिन्नकारणतावादिनव्यः तदेतन्मतं निषेधति-**तन्नेति**। फलस्य न संस्कारनाशकत्वं किन्तु चरमफलस्य कालस्य रोगस्य वा संस्कारनाशकत्वेन संस्कारस्य चिरस्थायित्वं दर्शयन् सन् संस्कारद्वारा अनुभवस्यैव कारणत्वं दृढयितुमाह-**यत्र समूहालम्बनोत्तरमिति**। यत्र भूतलादौ घटपटफलपत्राणां नानाधर्म्यवगाह्यात्मकसमूहालम्बनप्रत्यक्षाद्यात्मकैकानुभवाऽनन्तरं तत्संस्कारैः क्रमेण घटपटफलपत्राणां स्मरणम्, अजनिष्ट=उत्पादयितुमारब्धम्,द्वयोस्त्रयाणां वा स्मरणमुत्पन्नं तत्र प्रथमस्य स्मरणंविनष्टम्,चतुर्थस्मरण-

क्रमेण स्मरणमजनिष्ट सकलविषयकस्मरणं तु नाभूत्, तत्र फलस्य संस्कारनाशकत्वाभावात्कालस्य रोगस्य चरमफलस्य वा संस्कारनाशकत्वं वाच्यम्, तथा च न क्रमिकस्मरणानुपपत्तिः। न च पुनःपुनः स्मरणाद् दृढतरसंस्कारानुपपत्तिरिति वाच्यम्, झटित्युद्बोधकसमवधानस्य दार्ढ्यपदार्थत्वात्। न च विनिगमनाविरहादेव ज्ञान-

---

काले द्वितीयस्य स्मरणं विनष्टं भवतीति सकलघटपटफलपत्रविषयकस्मरणं नाऽभूत्=कदाचिदप्येककालवृत्तितया न भवति, तत्र संस्कारस्य नाशः फलेन न भवति, संस्कारनाशत्वावच्छिन्नं प्रति स्वसमानविषयकस्वजन्यस्मरणस्यैव हेतुत्वात्, क्रमिकस्मरणस्य समूहालम्बनानुभवजन्यसंस्कारसमानाऽविषयकत्वात्। तथा च तत्र दीर्घकालस्य दीर्घरोगस्य चरमफलात्मकस्मरणस्य वा संस्कारनाशकत्वं वक्तव्यम्, न तु अचरमफलस्य संस्कारनाशकत्वम्, तथा च स्मरणोत्तरसंस्कारोत्तरस्मरणेत्येवं क्रमिकस्मरणं प्रत्यपि संस्कारस्यैकस्यैव चिरस्थायिनः सत्त्वात् तादृशसंस्कारद्वारा अनुभवत्वावच्छिन्नस्य कारणत्वं निराबाधमिति न ज्ञानत्वावच्छिन्नस्य कारणत्वं कल्पनीयमिति भावः॥ भावकार्यतया संस्कारस्य समूहालम्बनस्थलीयस्य नाशनियमात् तत्र कालस्य कालत्वेन नाशकत्वे संस्कारोत्पत्तिक्षणे नाशं प्रति प्रतियोगिरूपकारणस्य कालात्मककारणस्य च सत्त्वेन सर्वसंस्काराणां द्वितीयक्षणे एव विनाशापत्तिः स्यात्, तद्व्यक्तित्वेन कालस्य नाशकत्वे तु तद्व्यक्तिभेदेन कार्यकारणभावाऽऽनन्त्यगौरवं स्यादतः—रोगस्येत्युक्तम्। दीर्घरोगस्यापि दीर्घरोगत्वेन संस्कारनाशकत्वे स्वनान्तरीयकसंस्काराणां क्षणिकत्वापत्तिः, तद्व्यक्तित्वेन नाशकत्वे गौरवम्, अरोगिजनसंस्काराणां नित्यतापत्तिश्च स्यादतः उक्तम्—चरमफलस्येति। समूहालम्बनानुभवोत्तरक्रमिकस्मरणे फलस्य नाशकत्वाऽसंभवादुक्तं—चरमेति। ननु—चरमफलस्य नाशकारणतावच्छेदकस्याऽननुगतत्वात् न नाशकत्वमिति चेन्न। 'संस्कारनाशकारणता,—किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्' इत्यनेन चरमफले किञ्चिद्धर्मस्य नाशकतावच्छेदकस्य वैजात्यरूपस्य साधनीयत्वात्॥ शंकते—नचेति। एकसंस्कारात् अनेकस्मरणानामुत्पत्तौ संस्कारस्य ह्रासात् नाशः स्यादेव न तु दार्ढ्यमित्याशंकितुरभिप्रायः। तथा च एकस्यैव संस्कारस्य नानास्मृतिकारणतास्वीकारे अनुभवजसंस्कारोत्तरस्मरणेन यद्दृढसंस्कारान्तरं जन्यते,तज्जस्मरणेन पुनर्दृढतरसंस्कारान्तरं जन्यते,तज्जस्मरणेन पुनर्दृढतमसंस्कारान्तरं जन्यते, दृढत्वादिकं तु जातिरूपं नाना, इति यद् दृढादिसंस्कारं प्रति स्मृतीनां कारणत्वं सर्वसम्मतं तद्भज्येत इति भावः॥ समाधत्ते झटिति। दार्ढ्यं न जातिरूपं तत्तदुत्पन्नसंस्कारावच्छेदकं, किन्तु—झटिति=एककालावच्छेदेन, उद्बोधकसमवधानम्=उद्बोधकसम्बन्धः, स च चिरस्थे विद्यमानसंस्कारे पुनः पुनः स्मरणेन सम्पद्यते, उद्बोधकसम्बन्धावच्छिन्नसंस्कारात् पुनः स्मरणम्, तेन च पुनः उद्बोधकसम्बन्धान्तरम्, तदवच्छिन्नदृढतरसंस्कारात् पुनः स्मरणम् इत्येवमेव संस्कारस्य दार्ढ्यसंभवात्, न स्मृतीनां दृढादिसंस्कारादिकारणतां कल्पयित्वा ज्ञानत्वेन स्मृत्यन्तरं प्रति कारणता कल्पनीयेति भावः॥ केचित् पूर्वानुभवस्य स्मृतिकारणत्वे आन्तरालिकस्मृतिभ्यो दृढदृढतरादिसंस्कारान्तरोत्पादनेऽपि न किञ्चिद्बाधकम्, तत्र पूर्वसंस्कारनाशाऽनभ्युपगमात्, तस्यैव फलोपधायकत्वात्, चरमफलस्य तन्नाशकत्वोपगमादिति वदन्ति। तन्न। फलानुपधायकत्वेन निरर्थकदृढतरादिसंस्कारकल्पनायाः प्रयासमात्रत्वात्॥ अन्ये तु—आन्तरालिकस्मरणात्पूर्वसंस्कारविनाशेऽपि न क्षतिः, अनुभवप्रयोज्यसंस्कारेणैव कार्योत्पत्तिसंभवादित्याहुः॥ ननु—अनुभवत्वेनैव कारणत्वं न तु ज्ञानत्वेनेति पक्षसाधकयुक्त्यात्मकविनिगमनाऽभावात् ज्ञानत्वेनापि पूर्वानुभवस्य स्मरणानां च कारणत्वमपि वक्तव्यमित्याशंकते—न च विनिगमनाविरहेति। क्वचित्—स्मरणेन

त्वेनापि जनकत्वं स्यादिति वाच्यम्, विशेषधर्मेण व्यभिचारज्ञाने सामान्यधर्मेणान्यथासिद्धत्वात्। कथमन्यथा दण्डस्य भ्रमिद्वारा द्रव्यत्वेन रूपेण न कारणत्वम्। न चान्तरालिकस्मरणानां संस्कारनाशकत्वसंशयाद्व्यभिचारसंशय इति वाच्यम्। अनन्तसंस्कारतन्नाशकल्पनापेक्षया चरमस्मरणस्यैव लाघवात्संस्कारनाशकत्वकल्पनेन व्यभिचारसंशयाभावात् ॥ इति स्मृतिनिरूपणम् ॥

दृढसंस्कारस्तेन स्मरणं ततो दृढतरसंस्कारान्तरमित्यप्यनुभवबलात् स्मृतीनां ज्ञानत्वेन तत्र कारणत्वस्याऽवश्यकत्वादिति भावः ॥ समाधत्ते—**विशेषधर्मेणेति**। क्वचित् स्मरणेन दृढसंस्कारस्तेन स्मरणमित्यनुभवस्याऽप्रामाणिकत्वात्, पूर्वानुभवस्यैव फलोपधायकतास्वीकारेण दृढतरादिसंस्कारान्तराणामनावश्यकत्वम्, तथा च स्मृतीनां कारणत्वाऽभावाद् अनुभवत्वेनैव विशेषधर्मेण=व्याप्यधर्मेण कारणत्वकल्पने कुत्रापि व्यतिरेकादिव्यभिचाराऽभावात् तेन सामान्यधर्मज्ञानत्वावच्छिन्नतया स्मृतिकारणत्वम् अन्यथासिद्धमित्यर्थः॥ उक्तार्थं दृढयति—**कथमन्यथेति**। विशेषधर्मेण कारणत्वे व्यभिचाराद्यभावेऽपि तद्विहाय यदि सामान्यधर्मेण कारणत्वमुपेयते—तदा घटत्वावच्छिन्नं प्रति दण्डत्वेन कारणत्वेऽव्यभिचरितत्वेऽपि तद्विहाय कथं द्रव्यत्वेन कारणत्वं नांगीकृतम्, तस्मात् सामान्यधर्मेण कारणत्वं विशेषधर्मेण कारणत्वेन अन्यथासिद्धं भवतीति भावः ॥ ननु—समानप्रकारकस्मरणस्य संस्कारनाशकत्वं निर्विवादम्, आनुभविकत्वात्, तथा च "समानप्रकारकस्मरणेन पूर्वसंस्कारस्य विनष्टत्वात्"इति मतेन—'आन्तरालिकस्मरणानां संस्कारनाशकत्वकोटिर्लभ्यते, एवं "यत्र समूहालम्बनोत्तरं घटपटादीनां क्रमेण स्मरणमजनिष्ट"इति युक्त्या 'आन्तरालिकस्मरणानां संस्कारनाशकत्वाऽभावकोटिर्लभ्यते, तथा च "आन्तरालिकस्मरणानां संस्कारनाशकत्वं न वे'ति विप्रतिपत्तिवाक्यजन्यकोटिद्वयज्ञानात्मककारणसत्त्वेन 'आन्तरालिकस्मरणानि संस्कारनाशकत्ववन्ति संस्कारनाशकत्वाऽभाववन्ति वा'इति संशयः व्याप्यसंशयः उत्पद्यते—"स्मृतिकारणत्वम्,—अनुभवत्वावच्छिन्नत्ववत्,—युक्त्या आन्तरालिकस्मरणानां संस्कारनाशकत्वाऽभावादि"त्यनुमाने पक्षे हेतोः स्वाश्रयकारणतात्वसम्बन्धेन वर्तमानस्य व्याप्यत्वात् हेतुविषयकसंशयस्य व्याप्यसंशयत्वादिति शंकते—न **चान्तरालिकस्मरणानामिति**। अन्तरालिकस्मरणानाम्=अनुभवचरमस्मरणमध्यभाविनां स्मरणानामित्यर्थः। संस्कारनाशकत्वसंशयात्=संस्कारनाशकतावत्त्वं न वेति व्याप्यसंशयादित्यर्थः॥ एतादृशव्याप्यसंशयात् व्यापक(साध्य)संशयः "स्मृतिकारणत्वम् अनुभवत्वावच्छिन्नत्ववन्न वा"इति उत्पद्यते, अयमेवात्र व्यभिचारसंशयात्मको भवति, यतः 'कारणाऽभावे सति कार्यसत्ता'(स्वाऽभाववद्वृत्तिकार्यकत्वं स्वस्मिन्)व्यतिरेकव्यभिचारः, व्यभिचारसंशयस्फुटाकारस्तु—'अनुभवनिष्ठा स्मृतिकारणता—अनुभवत्वावच्छिन्नाऽभाववद्वृत्तिकार्य(स्मृति)ताकत्ववती न वे'ति,—इत्यभिप्रायेणाऽऽह—**व्यभिचारसंशय** इति। कार्यकारणभावभंजको यो व्यतिरेकव्यभिचारस्तत्प्रकारकसंशय उत्पद्यते इत्यर्थः॥ तथा च व्यभिचारनिश्चयस्येव व्यभिचारसंशयस्यापि कारणताविघटकत्वात् अनुभवत्वावच्छिन्नस्य न स्मृतिकारणत्वमिति आशंकितुरभिप्रायः॥ समाधत्ते—**अनन्तसंस्कारेति**। अनन्ताः संस्कारास्तन्नाशाश्च याभ्यः कल्पनाभ्य इति व्युत्पत्त्या आन्तरालिकस्मरणानाम् अनन्तसंस्कारतन्नाशकल्पनापेक्षयेत्यर्थः, चारमस्मरणस्यैव संस्कारनाशकत्वकल्पने लाघवात् तादृशलाघवज्ञानसहकृतेन 'युक्त्या आन्तरालिकस्मरणानां संस्कारनाशकत्वाऽभावादि'तिहेतुना बलवत्कोट्यात्मकेन निर्बला 'आन्तरालिकस्मरणानां संस्कारनाशकत्वमिति'कोटिर्निरुध्यते, इत्येवं व्याप्यसंशयाऽभावात् व्यापकसंशयोऽपि व्यभिचारसंशयात्मको नोत्पद्यते, तथा च सति

'स्मृतिकारणत्वम्–अनुभवत्वावच्छिन्नत्ववदि'त्यनुमितिर्निराबाधेति–अनुभवत्वावच्छिन्नस्यैव स्मृतिं प्रति कारणत्वं सधीचीनमिति भावः ॥ **इदमपि बोध्यम्।** ज्ञानत्वेन स्मृतिकारणत्वे उपेक्षात्मकज्ञानात् स्मृत्यनुत्पत्तेस्तत्र व्यभिचारवारणाय–उपेक्षानात्मकज्ञानत्वेन कारणता वक्तव्या, तत्र उपेक्षात्वं न जातिः प्रत्यक्षत्वादिना सांकर्यात्, उपेक्षात्वाऽभाववति निर्विकल्पके प्रत्यक्षत्वं, तदभाववत्यनुमितौ उपेक्षात्वं, द्वयोः सविकल्पके समावेशात्, न वा उपाधिः, अनुगतधर्माऽभावात्, तथा च तत्तद्व्यक्तित्वावच्छिन्नोपेक्षाभेदकूटानां कारणतावच्छेदककोटौ निवेशे महागौरवम् ॥ **किञ्च**–ज्ञानत्वेन कारणत्वेन चरमस्मृत्यनन्तरमपि स्मृत्यापत्तिरित्यपि बोध्यम् ॥ **अथ**–स्मृतिलक्षणं 'संस्कारमात्रजन्यत्वे सति ज्ञानत्वमि'त्युक्तं ग्रन्थान्तरे, भावनाख्यः संस्कारः। संस्कारध्वंसेऽतिव्याप्तिवारणाय–ज्ञानमिति। घटादिप्रत्यक्षेऽतिव्याप्तिवारणाय–संस्कारजन्यमिति। प्रत्यभिज्ञायामतिव्याप्तिवारणाय–मात्रेति। न चैवं सति असम्भवः, स्मृतेः कालादिजन्यत्वादितिवाच्यम्। संस्कारजन्यत्वे सतीन्द्रियार्थसंन्निकर्षाऽजन्यार्थकत्वादिति बोध्यम् ॥ पूरोवर्तिनि पूर्वदृष्टस्याऽभेदावगाहिज्ञानं 'सोऽयं देवदत्त'इति प्रत्यभिज्ञा, सा संस्कारेन्द्रियसन्निकर्षाभ्यामुत्पद्यते, तत्तांशे संस्कारो हेतुः इदन्त्वांशे इन्द्रियार्थसन्निकर्ष इति ॥ स्मृतिः यथार्थानुभवजन्या यथार्था, अयथार्थानुभवजन्या अयथार्था बोध्या। तत्र आत्ममनःसंयोगोऽसमवायिकारणम्। सुस्मूर्षादयस्तु निमित्तानि। "प्रणिधाननिबन्धाऽभ्यास-लिङ्ग-लक्षण-सादृश्य-परिग्रहाऽऽश्रयाश्रितसम्बन्धाऽऽनन्तर्य-वियोगैककार्य-विरोधाऽतिशय-प्राप्ति-व्यवधान-सुख दुःखेच्छा-द्वेष-भया-ऽर्थित्व-क्रिया-राग-धर्माऽधर्मनिमित्तेभ्यः"स्मृतिरुत्पद्यते इति प्रशस्तपादभाष्यम् ॥ अथ स्वप्नज्ञानम् मानसज्ञानं, न तु स्मरणात्मकम्। भेदात्। तथाहि–"वातपित्तश्लेष्मणां दोषात् स्वप्नो भवति, तथैव आत्ममनसोः संयोग-विशेषात् संस्काराच्च भवति। वातदोषात् खल्वयं सुप्त आकाशे विचरति वसुन्धरां पर्यटति व्याघ्रादिभ्यो वा बिभेति। पित्तदोषात् प्रविशत्यग्निम् आलिंगति ज्वालां कांचनपर्वतविद्युत्स्फुरणादिकं चोपलभते। श्लेष्मदोषात् संतरति सरितम् अर्णवं च पश्यति धारासम्पातं शिलोच्चयं च राजतमिति। संस्कारोऽप्यत्र हेतुः, न ह्यन्धः स्वप्नेषु किंचित्पश्यति। सोऽयं स्वप्नो न स्मृतिरि"तिप्रशस्तपादभाष्यात् ॥ अथ स्वप्नान्तिकमपि ज्ञानमुत्पद्यते, तत्तु स्मृत्यात्मकमेव, यथा "स्वप्नस्याऽन्तिकं स्वप्नान्तिकम्, तदेतःसौपुप्तं विज्ञानम्, इदं स्वप्नावस्थाजातानुभवजनितसंस्कारेण जायते स्मृत्यात्मकं, न तु मानसमिति विशेषः"इति भाष्यविवृती। **केचित्तु**—स्वप्नमध्ये यत्प्रमाभूतं तत् स्वप्नान्तिकं यथा 'शय्यायां शयानोऽस्मी'त्यादिकमिति वदन्तीति–**ध्येयम्** ॥

इति श्रीमद्दार्शनिकपञ्चानन–षड्दर्शनाचार्य्य–नव्यन्यायाचार्य्य–सांख्ययोगवेदान्त-मीमांसातीर्थ,–पण्डित "श्रीकृष्णवल्लभाचार्य्य"स्वामिनारायणविरचितायां न्यायसिद्धान्तमुक्तावल्याः किरणावल्यां स्मृतिनिरूपणम् ॥

---

# अथ मनोनिरूपणम्

**साक्षात्कारे सुखादीनां करणं मन उच्यते ।**

**इदानीं क्रमप्राप्तं मनो निरूपयितुमाह-साक्षात्कार इति । एतेन मनसि प्रमाणं दर्शितम् । तथाहि-सुखसाक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वात् चाक्षुपसाक्षात्कारवदित्यनुमानेन मनसः करणत्वसिद्धिः । न चैवं दुःखादिसाक्षात्काराणामपि करणान्तराणि स्युरिति वाच्यम्, लाघवादेकस्यैव ताद्दशसकलसाक्षात्कारकरणतया**

---

नवमं द्रव्यं मनो निरूपयति-मूले-**साक्षात्कारे** इति । सुखदुःखेच्छाद्वेपादीनां, साक्षात्कारे= प्रत्यक्षे,करणं=साधनम्,मनः-,इति-सुखादिसाक्षात्कारकरणत्वे सति इन्द्रियत्वं मनसो लक्षणमुच्यते इत्यर्थः। चक्षुरादावतिव्याप्तिवारणाय-सत्यन्तम् । प्राचीननये आत्ममनस्संयोगवारणाय-इन्द्रियत्वम् । चक्षुरादिवारणाय-सुखेति । अथवा-इन्द्रियत्वाद्यपेक्षया-'स्पर्शरहितत्वे सति क्रियावत्त्व'मिति मनसो लघुलक्षणं बोध्यम् । वाय्वादिवारणाय-स्पर्शरहितत्वम्, आकाशादिवारणाय-क्रियावत्त्वमिति । मनस्त्वं जातिः । मनसामनेकत्वं प्रत्यात्मनियतत्वं । सर्वात्मनामेकस्य मनसः स्वीकारे एकस्य ज्ञानकालेऽपरस्य तदनुपपत्तेरिति बोध्यम् ॥ मनोनिरूपणे प्रसंगसंगतिं दर्शयितुं मुक्तावल्यामाह-**इदानीमिति** । आत्मनिरूपणाऽनन्तरमित्यर्थः । **क्रमप्राप्तम्**='क्षित्यप्तेजोमरु'दित्यादिविभागवाक्यघटकाऽऽत्मपदजन्यपदार्थोपस्थित्यव्यवहितोत्तरोपस्थितिविषय(मनः)त्वप्रकारकशिष्यज्ञानविषयतया, तज्ज्ञानजन्यजिज्ञासाधीनं मनोनिरूपणमित्यर्थः ॥ निरूपणं=प्रतिपत्त्यनुकूलव्यापार इति । तथा च **क्रमप्राप्तेः** 'उपोद्घातादिपथकभिन्नसंगतिरूपे 'प्रसंगेऽन्तर्भाव इति बोध्यम् ॥ **एतेन**=मनसः 'सुखादिसाक्षात्कारकरणत्वकथनेन । मनसि=नवमे द्रव्ये । प्रमाणम्=अनुमानं, दर्शितम् । मनसोऽतीन्द्रियत्वेन प्रत्यक्षाऽप्रवृत्तेरिति भावः ॥ अनुमानं दर्शयति-**तथाहीति** । सुखसाक्षात्कारः पक्षः, अत्र साक्षात्कारमात्रस्य पक्षत्वे सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे चाक्षुपादिसाक्षात्कारे चक्षुरादिकरणकत्वसिद्धया सिद्धसाधनम्,-अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे तु ईश्वरप्रत्यक्षे बाध इति तद्वारणाय **सुखपदोपादानम्** । तथा च-सामानाधिकरण्येनैव साध्यसिद्धेरुद्देश्यता, सुखसाक्षात्कारस्य जन्यसाक्षात्कारतया तत्र निरुक्तबाधाऽभावात् । कुत्रापि सुखसाक्षात्कारेऽनुमानात् पूर्वं सकरणकत्वाऽसिद्धया न सिद्धसाधनमिति ध्येयम् ॥ **'सकरणकत्वं'** करणजन्यत्वं साध्यम् । तत्र यत् करणं तदेव मन इति भावः । करणपदार्थे नित्यत्वं लाघवज्ञानसहकारेण, अष्टद्रव्यातिरिक्तद्रव्यत्वं च इतरविशेषबाधसहकारेण भासते इति ध्येयम् ॥ **जन्यसाक्षात्कारत्वादिति**=जन्यप्रत्यक्षत्वादित्यर्थको हेतुः । ईश्वरप्रत्यक्षे व्यभिचारवारणाय-**जन्येति** । प्रागभावादौ व्यभिचारवारणाय-साक्षात्कारेति । चाक्षुपसाक्षात्कारवदिति दृष्टान्तम् । इति-निरुक्तानुमानेन, **मनसःकरणत्वसिद्धिः**=करणतया मनसः सिद्धिरित्यर्थः॥ शंकते-**न चैवमिति** । एवम्=उक्तानुमानरीत्या । दुःखादिसाक्षात्काराणामपि='दुःखसाक्षात्कारः,-सकरणकः-जन्यसाक्षात्कारत्वादि'त्येवमनुमानैःदुःखेच्छाद्वेषादीनामपि साक्षात्कारकरणतया मनसोऽतिरिक्तानि कानिचित् आन्तरिककरणानि चित्ताहंकारादीनि सिद्धानि भविष्यन्तीत्यर्थः॥ समाधत्ते-**लाघवादिति** । कल्पना(उपस्थितिकृत) लाघवात्, एकस्य मनस एव ताद्दशसुखदुःखेच्छाद्वेषादीनां साक्षात्कारकरणतया सिद्धेः=,सकल-

सिद्धेः। एवं सुखादीनामसमवायिकारणसंयोगाश्रयतया मनसः सिद्धिर्बोद्धव्या।

अयौगपद्याज्ज्ञानानां तस्याऽणुत्वमिहेष्यते ॥८५॥

तत्र मनसोऽणुत्वे प्रमाणमाह-अयौगपद्यादिति। ज्ञानानां-चाक्षुषरासनादीनाम्, अयौगपद्यम्-एककालोत्पत्तिर्नास्तीत्यनुभवसिद्धम्। तत्र नानेन्द्रियाणां सत्यपि विषयसन्निधाने यत्सम्बन्धादेकेनेन्द्रियेण ज्ञानं जन्यते, यदसम्बन्धाच्च परैर्ज्ञानं नोत्पाद्यते, तन्मनसो विभुत्वे चाऽसन्निधानं न सम्भवतीति न विभु मनः। न च

---

साक्षात्कारनिर्वाहात् करणान्तरकल्पनं व्यर्थमेवेत्यर्थः॥ तथा च चित्तमिति मनःपर्याय एव, अहंकारो बुद्धिरिति ज्ञानपर्यायावेवेतिभावः। ननु-चक्षुस्त्वगाद्यतिरिक्ताऽक्लृप्तमनःकल्पनमपेक्ष्य अतिलाघवात् त्वगिन्द्रियस्यैव सुखादिसाक्षात्कारकारणत्वं कल्प्यतामिति चेन्न। त्वङ्मनःसंयोगस्य ज्ञानसामान्यहेतुतावादिमते स्वस्य स्वेन सह संयोगाऽसंभवात्॥ ननु-तर्हि प्राणस्यैव सुखादिसाक्षात्कारकरणत्वं कल्प्यतामिति चेन्न। सुषुप्त्यवच्छेदेन ज्ञानोत्पत्त्यापत्तेः॥ प्रयोगस्तु-"सुखादिसाक्षात्कारः,-त्वगिन्द्रियप्राणाद्यतिरिक्तकरणजन्यः,-त्वगिन्द्रियाद्यन्वयव्यतिरेकाऽननुविधायित्वादिति॥ ननु सुषुप्त्यभावविशिष्टात्मनः करणत्वमादाय पूर्वोक्तानुमानेऽर्थान्तरम्-अतः प्रकारान्तरेण सिद्धिम् आह-**एवमिति**। 'सुखदुःखाद्यसमवायिकारणसंयोगः,-क्वचिदाश्रितः,-द्विष्ठगुणत्वात्, विभागवदि'त्यनुमानेन, संयोगाश्रयः एक आत्मा, द्वितीयं तु मन एवेति मनः सिद्ध्यतीति भावः॥

-मूले-**अयोगपद्यादिति**। ज्ञानानां=चाक्षुषरासनादिप्रत्यक्षाणाम्, अयौगपद्यात्=एककालोत्पत्तिकत्वाऽभावात्, तस्य=मनसः, अणुत्वम्=अणुपरिमाणवत्त्वम्, इह=न्यायमते, इष्यते=स्वीक्रियते इत्यर्थः॥ ननु निदाघे जलनिमग्नस्य जनस्य सर्वाङ्गीयशैत्यानुभवस्याऽनुभवसिद्धतया तत्करणं मनः महत्परिमाणवत् किंवा मध्यमपरिमाणवत् स्वीकार्यं, न त्वणुपरिमाणकमित्यतो **मुक्तावल्याम् आह-तत्रेति**। मनोनिरूपणे मनसः अणुत्वे प्रमाणम्=मनोनिष्ठाऽणुत्वविषयकप्रमात्वप्रयोजकं करणम् अनुमानमाहेत्यर्थः॥ मनोनिरूपणघटकमनोनिष्ठाणुत्वविषयकप्रमाकरणप्रतिपत्त्यनुकूलव्यापारवानिति तु वाक्यार्थः॥ मूलस्थ'ज्ञानानामि'त्यनेन ज्ञानमात्रसंग्रहात् मानसज्ञानद्वयस्याऽयौगपद्यं सन्दिग्धमिति तेन हेतुनाऽणुत्वसिद्ध्यनुपपत्तिरित्यतस्तदर्थमाह-**चाक्षुषरासनादीनामिति**। आदिना स्पार्शनश्रोत्रजघ्राणजज्ञानानां संग्रहः। यौगपद्यपदार्थं स्फुटयति-**एककालोत्पत्तिरिति**। सा च-स्वाधिकरणक्षणध्वंसाऽनधिकरणस्वाधिकरणक्षणसम्बन्धात्मिका बोध्या। **अनुभवसिद्धमिति**। मौननृत्यादौ चाक्षुषमात्रस्य, गीते श्रावणमात्रस्य, मृदुशय्यादौ स्पार्शनमात्रस्य, अत्युत्कटसुरभिगन्धे घ्राणजमात्रस्य, उत्कटमधुररसादौ रासनमात्रस्य, भक्तयातुरस्य भगवच्छृंगारपरिभावनादिस्थले मानसभगवन्मात्रप्रत्यक्षस्यैवोत्पत्तेः सर्वानुभवसिद्धत्वात्॥ **तत्र**=तादृशस्थले। नानेन्द्रियाणाम्=तत्तत्पुरुषीयाऽनेकेन्द्रियाणाम्। विषयसन्निधाने सत्यपि=विषयसन्निकर्षे सत्यपि, यत्सम्बन्धात्=यत्संयोगात्=मनस्संयोगात्, एकेन केनचित् चक्षुषा इन्द्रियेण, चाक्षुषात्मकं ज्ञानं जन्यते=उत्पाद्यते, यदसम्बन्धाच्च,=मनसः असंयोगाच्च,परैः=घ्राणादिभिः, घ्राणजादिज्ञानं नोत्पाद्यते, तत्=तादृशं ज्ञानानुत्पादकम्, असन्निधानम्=असंयोगः, मनसो विभुत्वे=महत्परिमाणवत्त्वे शरीरसममध्यमपरिमाणवत्त्वे वा न संभवति,सर्वंभूतंसंयोगस्यैव विभुत्वपदार्थत्वात्,अतो न विभु मनः, नापि मध्यमपरिमाणवदपीत्यर्थः। **अनुमानं** यथा"चाक्षुषाश्रयकालः,-स्वपूर्वक्षणावच्छेदेन चक्षुरितरेन्द्रियाऽसंयुक्तस्वमनस्कः, चक्षुरितरेन्द्रियजज्ञानाऽनाश्रयत्वात्, सुषुप्तिक्षणवदि'त्येवं मन-

**तदानीमदृष्टविशेषोद्बोधकविलम्बादेव तज्ज्ञानविलम्ब इति वाच्यम्, तथा सति चक्षुरादीनामप्यकल्पनापत्तेः। न च दीर्घशष्कुलीभक्षणादौ नानावधानभाजां च कथमेकदाऽनेकेन्द्रियजन्यं ज्ञानमिति वाच्यम्, मनसोऽतिलाघवात् झटिति नानेन्द्रियसम्बन्धान्नानाज्ञानोत्पत्त्या उत्पलशतपत्रभेदादिव यौगपद्यप्रत्ययस्य भ्रान्तत्वात्। न च मनसः सङ्कोचविकासशालित्वादुभयोपपत्तिरस्त्विति वाच्यम्, नाना-**

---

सि स्वपूर्वक्षणावच्छेदेन चक्षुरितरेन्द्रियसंयुक्तत्वाऽभावं साधयित्वा, ततः "मनः-विभुत्वाऽभाववत्, शरीरपरिमाणवत्त्वाऽभाववद्वा, पूर्वक्षणावच्छेदेन चक्षुरितरेन्द्रियसंयुक्तत्वाऽभाववत्त्वात्, तद्घटवदि"त्यनेन विभुत्वाऽभावे शरीरपरिमाणवत्त्वाऽभावे च साधिते सति, ततः "मनः,-अणुपरिमाणवत्,-विभुभिन्नत्वे सति शरीरपरिमाणवद्भिन्नत्वे च सति नित्यपरिमाणाश्रयत्वात्, परमाणुवदि"त्यनुमानेन अणुत्वं साधनीयम्। 'मनसि-'नित्यपरिमाणवत्त्वं तु नित्यद्रव्यत्वेन साधनीयम्-'मनः-नित्यपरिमाणवत्,-नित्यद्रव्यत्वात् परमाणुवदिति। मनसो नित्यत्वद्रव्यत्वे तु लाघवज्ञानसहकारेण 'सुखसाक्षात्कारः,-सकरणकः, इत्यनुमितावेव भासेते इति ध्येयम्॥ मनसो विभुत्ववादी मीमांसकः शंकते-न च **तदानीमिति**। **तदानीं**=चाक्षुषाश्रयकालपूर्वक्षणावच्छेदेन, इन्द्रियान्तरघ्राणादिसंयुक्तमनःसत्त्वेऽपि घ्राणजादिज्ञाने उद्बोधकं=उत्तेजकं,-सहकारि, यत् अदृष्टविशेषः,-धर्मादिः, तस्य निमित्तकारणात्मकसामग्रीविशेषस्य विलम्बादेव=कारणतयाऽनुपस्थानात्, तज्ज्ञानविलम्बः=घ्राणजादिज्ञानाऽनुत्पत्तिः, इत्येवम् विभुना मनसा सह यावदिन्द्रियसंयोगसत्त्वेऽपि धर्मादिनिमित्तविलम्बेन तत्तज्ज्ञानविलम्बं स्वीकृत्य व्यवस्थोपपत्तेः मनसः अणुत्वं न मन्तव्यमित्यभिप्रायः॥ समाधत्ते-**तथा सतीति**। अदृष्टविशेषविलम्बेन घ्राणादिजन्यज्ञानविलम्बस्वीकारे तु, तथैव रीत्या अदृष्टेनैव चाक्षुषादिज्ञानानां क्रमादिव्यवस्थोपपत्तौ चक्षुरादीन्द्रियं व्यर्थमेवेति चक्षुरादीनां स्वीकारोऽपि न कल्पनीय इत्यापत्तिः स्यात् एवेत्यर्थः। एवम् अदृष्टस्य विभिन्नतया प्रयोजकत्वेनाऽनन्ताऽदृष्टकल्पनं गौरवम्। अतः मनसोऽणुत्वमेव स्वीकार्यम्, तथा च-तत्संयोगतदभावाभ्यामेव ज्ञानोत्पादाऽनुत्पादनिर्वाहाद् उद्बोधकाऽकल्पनमेव लाघवमिति भावः॥ **ननु**-द्वित्रिच्छिन्नसर्पादौ कथमेकदा खण्डत्रयेऽपि कम्पनं, अतस्तत्र खण्डत्रयेऽपि मनोयोगः स्वीकार्यः, तथा च मनसो विभुत्वमिति चेन्न। प्राणयोगात् तत्र कम्पनात्। शंकते-**न चेति**। दीर्घशष्कुलीभक्षणादौ=बृहत्स्थालीसमानविस्तृतशष्कुल्याः भक्षणसमये, नानावधानभाजां=युगपन्नानाज्ञानोत्पादनशक्तिमतां पुरुषविशेषाणां-शतवेधादिकवीनाम्, मनसोऽणुत्वे, कथं=केन प्रयोजकेन, एकदा=एककालावच्छेदेन, अनेकानि यानि चक्षुर्घ्राणरसनात्वगादीन्द्रियाणि तज्जन्यानि चाक्षुषघ्राणजरासनस्पार्शनानि ज्ञानानि उत्पद्यन्ते, अतोऽनुभवबलात् मनसो विभुत्वं कल्पनीयमित्याशयः। समाधत्ते-**मनसोऽतिलाघवादिति**। मनसोऽणुत्वेऽपि, अतिलाघवात्=वेगप्रकर्षवत्त्वात्, झटिति=अविलम्बेन, नानेन्द्रियैः=क्रमशः चक्षुर्घ्राणरसनात्वगादिभिः सह संयोगात्, नानाविधानि क्रमशः चाक्षुषघ्राणजरासनस्पार्शनादीनि उत्पद्यन्ते इत्यर्थः॥ तथा च तत्रत्यचाक्षुषादिज्ञानेषु एककालिकत्वप्रत्ययो भ्रान्तिरिति दृष्टान्तेन दर्शयति-**उत्पलेति**। कमलदलशतानां पुटबद्धानां यथा सूच्यादिना भेदने सूचीप्रवेशः क्रमश एव जायते परन्तु वेगवत्तया एककालावच्छेदेन शतपत्रभेदनप्रत्ययो भ्रान्तिरेव तथा क्रमशो जायमानानामपि चाक्षुषादीनाम् एककालिकत्वं भ्रान्तिरेव=एककालोत्पत्तिकत्वाऽभाववत्सु एककालोत्पत्तिकत्वप्रकारकत्वादिति भावः॥ भ्रान्तिजनकदोषस्तु-अव्यवहितकालोत्पत्तिकत्वात्मकएव बोध्यः॥ अथ सांख्यः शंकते-**न च मनस इति**। प्रधानतो

वयवतन्नाशादिकल्पने गौरवाल्लाघवान्निरवयवस्याणुरूपस्यैव मनसः कल्पनादिति संक्षेपः ॥ ८५ ॥ इति मनोनिरूपणम् ॥

इति द्रव्यपदार्थो व्याख्यातः ।

---

बुद्धिस्ततोऽहंकारस्ततो मन उत्पद्यते इति, तच्च संकोचविकासधर्मवत्त्वात् कचित् अणु कचित्तु महत्, तथा च मनसः संकोचसमये एकेन्द्रियसम्बन्धाद्व एकमेव ज्ञानम्, विकाससमये तु नानेन्द्रियैः सम्बन्धात् युगपत् नानेन्द्रियजज्ञानानीत्येवम् उभयथाऽप्युपपत्तिनिर्वाहात् संकोचविकासशाल्येव मनो मन्तव्यमिति भावः ॥ समाधत्ते-नानावयवेति । संकोचः-अवयवविभागः, विकासः-अवयवसंयोगः, तथा च वारंवारं नानाऽवयववत्त्वं तन्नाशे सति नाशप्रतियोगित्वं पुनः उत्पत्तिमत्त्वमित्येवं कल्पने तु गौरवात्, तदपेक्षया नानावयवतन्नाशाद्यकल्पनात्मकलाघवेन निरवयवम् नित्यम् अणुपरिमाणवच्च मनः कल्पनीयमित्यर्थः ॥ ननु-नानेन्द्रियैर्मनसः सन्निकर्षकाले चाक्षुषाद्युत्पत्तिकाले रासनाद्यनुत्पादस्य रासनादिकं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकतयैवोपपत्तेर्मनसो विभुत्वे बाधकाऽभाव इति चेन्न । तथा प्रतिबध्यप्रतिबन्धकभावकल्पने गौरवात् । ननु त्वङ्मनोयोगस्य ज्ञानमात्रहेतुत्वात् चाक्षुषसामग्रीकाले स्पार्शनसामग्र्याः नियमतः सत्त्वात् स्पार्शनापत्तिर्मनसोऽणुत्वपक्षे दुर्वारेति चेन्न । अनन्यगत्या स्पार्शनं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकत्वस्वीकारात्, एवमपि रासनप्रत्यक्षे चाक्षुषसामग्रीप्रतिबन्धकत्वाऽकल्पनप्रयुक्तलाघवस्याणुत्वपक्षे निष्प्रत्यूहत्वात् ॥ किञ्च-मनसो विभुत्वे तत्र क्रियाऽभावेन संयोगाऽनुपपत्तिः, नित्यसंयोगस्य तु सार्वदिकतया सुषुप्तावपि विषयावभासप्रसंग इत्यपि बोध्यम् ॥ अथ नव्यास्तु-भौतिका एव परमाणवो मनांसि, अनन्तधर्मिणाम् अतिरिक्तायाश्च जातेः कल्पनाऽपेक्षया क्लृप्तानामेव धर्मिणां तद्रूपेण हेतुत्वस्य युक्तत्वात्, ज्ञानक्रमनियमस्तु अदृष्टादिबलादुपपद्यते इति वदन्ति । तन्न । तेषां पार्थिवत्वे जलीयत्वे वा विनिगमनाऽभावात्, उभयकल्पने तु जातिसांकर्यात्, मनांसि परमाणव इत्यननुभवादित्यभिप्रायेण 'संक्षेप'इत्युक्तमिति ध्येयम् ॥ ८५ ॥

॥ इतिद्रव्यपदार्थो व्याख्यातः ॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य्य,-नव्यन्यायाचार्य्य,-सांख्ययोगवेदान्तमीमांसातीर्थ,-पण्डित"श्रीकृष्णवल्लभाचार्य्य'स्वामिनारायणविरचितायां न्यायसिद्धान्तमुक्तावल्याः किरणावल्यां मनोनिरूपणम् ॥



# अथ गुणनिरूपणप्रकरणम्

**अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः ।**

द्रव्यं निरूप्य गुणान्निरूपयति–अथेत्यादिना। गुणत्वजातौ किं मानमिति चेत्, इदम्–'द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा,–किञ्चिद्धर्मावच्छिन्ना,–निरव-

---

मूले–**अथेति**। अथ–द्रव्यनिरूपणाऽनन्तरम्, गुणाः–द्रव्याश्रिताः निर्गुणाः निष्क्रियाश्च ज्ञेया इत्यर्थः। द्रव्यमाश्रित्य तिष्ठन्तीति-द्रव्यसमवेतत्वमर्थः। निः न सन्ति गुणा यत्रेति–गुणाऽनधिकरणत्वमर्थः। निः–नास्ति क्रिया यत्रेति–क्रियाऽनधिकरणत्वमर्थो बोध्यः। एतत्रयमपि प्रत्येकं लक्षणं निर्दोषतया मुक्तावल्यामुपपादयिष्यतीति बोध्यम्। **अथ** द्रव्यनिरूपणाऽनन्तरं गुणनिरूपणे संगतिं दर्शयितुम् अथशब्दार्थमाह–मुक्तावल्यां–**द्रव्यं निरूप्येति**। द्रव्यनिरूपणानन्तरमित्यर्थः। गुणान्निरूपयति=गुणानां विशिष्य साधर्म्यवैधर्म्ये वक्तुमादौ गुणसामान्यलक्षणमाहेत्यर्थः॥ तथा च–'द्रव्यं गुणस्तथा कर्मे'तिविभागवाक्याद् द्रव्यस्यैव प्रथममुपस्थितत्वेन तत्रैवादौ जिज्ञासा जायते इति तन्निरूपणेन तन्निवृत्तौ सत्याम् अनन्तरं किं वक्तव्यमित्यवश्यवक्तव्यत्वात्मकाऽवसरसंगतया गुणनिरूपणं क्रियते इति भावः॥ द्रव्यविषयकज्ञानानुकूलव्यापारध्वंसकालीन-गुणत्वावच्छिन्नविषयकज्ञानानुकूलकृतिमान् ग्रन्थकार इति वाक्यार्थः॥ अत्र द्रव्यकर्मभिन्नत्वे सति समवायेन जातिमत्त्वं गुणलक्षणं बोध्यम्। द्रव्यकर्मवारणाय सत्यन्तम्। सामान्यादिवारणाय–जातिमत्त्वमिति। प्रागभावे कालिकेन जातिमत्त्वमादायाऽतिव्याप्तिवारणाय-समवायेनेति। वस्तुतस्तु–भेदघटितलक्षणस्य गुरुतया–'गुणत्वजातिमत्त्वं' लघुलक्षणं बोध्यम्। समवायेन गुणत्वजातिमत्त्वमिति तदर्थः॥ नचैवं लक्षणलक्ष्यतावच्छेदकयोरैक्यापत्तिरिति वाच्यम्। स्वार्थानुमाने तदैक्यस्याऽकिञ्चित्करत्वात्। यद्यपि परार्थानुमानस्थले लक्षणलक्ष्यतावच्छेदकयोरैक्ये सति 'शाब्दबोधद्वारा पञ्चावयववाक्यस्य यत् परार्थानुमितिप्रयोजकत्वं'तन्नोपपद्येत, यतः गुणः–स्वेतरभिन्नः,–गुणत्वादि'त्याकारकगुणपक्षकेतरभेदानुमापक-गुणत्वस्य लक्षणत्वे उपनयात् पक्षधर्मतामात्रबोधवादिमते 'गुणत्ववान् गुण'–इत्याकारकशाब्दबोधस्याऽव्युत्पन्नतया पञ्चावयववाक्याधीनशाब्दबोध एव न स्यात्, तथा च उपनयाऽनुत्थानप्रसंगापत्तिः स्यात्, तथापि–उपनयात् पक्षधर्मतामात्रभानवादिमते न एतल्लक्षणम्, अपि तु उपनयात् 'साध्यव्याप्यहेतोः पक्षे'बोधवादिमते एवैतल्लक्षणम्, 'दण्डवान् रक्तदण्डवानि'त्याकारकबोधस्य सर्वानुभवसिद्धतया 'इतरभेदव्याप्यगुणत्ववान्गुण'इति बोधस्य सर्वसम्मतत्वादिति ध्येयम्। कर्मान्यत्वे सति द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं वा गुणसामान्यलक्षणं बोध्यम्॥ असमवेताऽसमवेत-नित्यसमवेतसत्तासाक्षाद्व्याप्यजातिः गुणत्वम्॥ गुणत्वजातिमत्त्वलक्षणं तदैव संभवति यदि गुणत्वजातिः काचित् सिद्ध्यतीति तत्र प्रमाणं पृच्छति–**गुणत्वजातौ किं मानमिति**। उत्तरयति–**इदमिति**। एतन्निदर्श्यमानम् अनुमानमित्यर्थः॥ यद्यपि प्रत्यक्षमेव प्रमाणं गुणत्वजाताविति शक्यते वक्तुं, तथापि पामराणां जलद्रवत्वादौ प्रत्यक्षतो गुणत्वाग्रहात् पामराणामपि चतुर्विंशतिगुणेषु गुणत्वजातिसिद्ध्यर्थम् अनुमानप्रमाणप्रदर्शनमिति हृदयम्॥ अनुमानाकारमाह–**द्रव्यकर्मभिन्ने इति**। द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा,–इतिपक्षः–द्रव्यत्वावच्छिन्नभेदकर्मत्वावच्छिन्नभेदोभयविशिष्टो यो जातिमत्पदार्थः तन्निष्ठा या कारणता सा, तादृशभेदद्वयविशिष्टसामान्यवन्निष्ठकारणता-

**च्छिन्नकारणताया असम्भवात्। न हि रूपत्वादिकं सत्ता वा तत्रावच्छेदिका, न्यूनाधिकदेशवृत्तित्वात्। अतश्चतुर्विंशत्यनुगतं किञ्चिद्वाच्यं, तदेव गुणत्वमिति॥**

त्वेन धर्मेण पक्षीभूता बोध्या। अर्थान्तरतावारणाय–पक्षे भिन्नान्तम्। विशेषादौ स्वरूपाऽसिद्धिवारणाय–समान्यवतीति।

ननु–केयं कारणता, असमवायिकारणता, निमित्तकारणता वा, नाद्या–आत्मगुणेष्वभावात्, न द्वितीया, सर्वसाधारणतादृशकारणताया अप्रसिद्धत्वात्, एवं–रूपादिशब्दान्तगुणसाधारणकारणताया अप्रसिद्धत्वात् कथं तादृशकारणतात्वेन रूपेण पक्षत्वमिति चेत्।, अत्र **प्राञ्चः**–प्रत्येकं प्रसिद्धा याः आत्मगुणान्यगुणनिष्ठा असमवायिकारणताः तावदन्यतमत्वेन पक्षत्वमित्याहुः॥ **अन्ये तु**–वाच्यतासम्बन्धेन व्यवहारं प्रति अन्वयव्यतिरेकाभ्यां व्यवहर्तव्यस्य हेतुतया 'वाच्यत्वसम्बन्धावच्छिन्ना या 'गुण'इतिशब्दनिष्ठा कार्यता तन्निरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतायाः एव रूपादिशब्दान्तवृत्तेः प्रसिद्धत्वान्न पक्षाऽसिद्धिः। अथवा–'स्वानुकूलकृतिमत्त्वसम्बन्धेन व्यवहारं प्रति समवायसम्बन्धेन व्यवहर्तव्यज्ञानस्य हेतुतया 'गुण'इति शब्दनिष्ठा या स्वानुकूलकृतिमत्त्वसम्बन्धावच्छिन्नकार्यता तन्निरूपितसमवायसम्बन्धावच्छिन्नज्ञाननिष्ठकारणतानिरूपितविषयतासम्बन्धावच्छिन्नाऽवच्छेदकताया एव रूपादिशब्दान्तवृत्तेः प्रसिद्धत्वात् तादृशाऽवच्छेदकताया एव पक्षत्वसम्भवात् न प्रक्षाऽप्रसिद्धिरित्याहुः॥ ज्ञायमानलिङ्गस्यानुमितिकारणतावाद्याचार्यमतावलम्बिनस्तु–'द्रव्यम्–इतरभिन्नं,–गुणवत्त्वाद्'–इत्यत्र द्रव्यत्वावच्छेदेनेतरभेदविधेयकानुमितौ रूपादिशब्दान्तगुणानां लिंगविधया हेतुत्वात् तस्याः प्रसिद्धत्वेन तस्याः पक्षत्वमाहुः॥ **अपरे तु**–लिंगज्ञानस्य हेतुत्वात् निरुक्तानुमितिनिरूपितलिङ्गज्ञाननिष्ठकारणतानिरूपितविषयतासम्बन्धावच्छिन्नाऽवच्छेदकतायाः चतुर्विंशतिगुणवृत्तेः प्रसिद्धतया प्रतिज्ञावाक्यघटककारणत्वशब्दस्य प्रयोजकत्वपरतया निरुक्तकारणतावच्छेदकताया अपि कारणत्वशब्दार्थत्वेन तस्या एव पक्षत्वमित्याहुः॥ **दीधितिकारास्तु**–गुणपदशक्यतावच्छेदकतया गुणत्वजातिसिद्धिरिति वदन्ति। **वस्तुतस्तु**–गुणत्वविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति गुणत्वप्रकारकनिश्चयत्वेन, गुणत्वप्रकारकबुद्धित्वावच्छिन्नं प्रति गुणत्वज्ञानत्वेन वा हेतुतायाः सकलनैयायिकाभिमततया तादृशकारणतैव पक्षः इति बोध्यम्॥ साध्यमाह–**किञ्चिद्धर्मावच्छिना**–इति। किंचिद्धर्मावच्छिन्नत्वं साध्यमित्यर्थः। अत्र यः कश्चिद्धर्मः स एव गुणत्वजातिरिति भावः॥ 'कारणतात्वादि'तिहेतुः पूरणीयः॥ याया कारणता सासा किंचिद्धर्मावच्छिन्ना यथा दण्डनिष्ठा घटकारणता दण्डत्वावच्छिन्नेति अन्वयिदृष्टान्तो बोध्यः॥ ननु–निरवच्छिन्नपदार्थानामपि कारणतासंभवात् निरुक्तहेतुर्व्यभिचारीत्याशंकायामाह–**निरवच्छिन्नेति**। कारणतायाः निरवच्छिन्नत्वस्य असंभवात्। पदार्थनिष्ठकारणता कदाचिदपि निरवच्छिन्नतया नैव प्रसिद्ध्यतीति भावः॥ ननु तथापि रूपत्वं सत्ता वा गुणनिष्ठकारणतावच्छेदिका सिद्ध्येदित्यत आह–**नहीति**। रूपत्वरसत्वादिकस्य न्यूनवृत्तिधर्मत्वात् सत्तायाश्च अधिकदेशवृत्तिधर्मत्वाद् रूपत्वं सत्ता वा गुणनिष्ठकारणतावच्छेदकतया न सिद्ध्यतीत्यर्थः॥ न्यूनदेशवृत्तित्वं स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणाऽभावप्रतियोगित्वम्, अधिकदेशवृत्तित्वं–स्वसमानाधिकरणाऽभावाऽप्रतियोगित्वे सति स्वाऽनधिकरणवृत्तित्वम्॥ उपसंहरति–**अतः इति**। रूपत्वसत्तादिक्लृप्तधर्माणामवच्छेदकत्वाऽसंभवादित्यर्थः। कारिकोक्तरूपादिशब्दान्तचतुर्विंशतिगुणेष्वनुगत'गुण' इति धीजनकं किंचित् अवच्छेदकम् अन्यूनाऽनतिरिक्तवृत्ति वक्तव्यम्, स एव धर्मो गुणत्वपदवाच्यः इत्यर्थः॥

द्रव्याश्रिता इति ॥ यद्यपि द्रव्याश्रितत्वं न लक्षणं कर्मादावतिव्याप्तेः, तथापि द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं तदर्थः, भवति हि गुणत्वं द्रव्यत्वव्यापकतावच्छेदकं तद्वत्ता च गुणानामिति । द्रव्यत्वं कर्मत्वं वा न द्रव्यत्वव्यापकतावच्छेदकं, गगनादौ द्रव्यकर्मणोरभावात्, द्रव्यत्वत्वं सामान्यत्वादिकं वा न जातिरिति तद्व्युदासः ॥ निर्गुणा इति ॥ यद्यपि निर्गुणत्वं कर्मादावप्यस्ति, तथापि सामान्यवत्त्वे सति कर्मान्यत्वे च सति निर्गुणत्वं बोध्यम् । जात्यादीनां न सामान्यवत्त्वं,

---

'द्रव्याश्रिता' इति मूलोक्तं न लक्षणपरमित्याह–यद्यपीति । द्रव्याश्रितत्वं=द्रव्यसमवेतत्वम्, तच्च कर्मणि अतिव्याप्तत्वाल्लक्षणं व्यावर्तकं न संभवतीत्यर्थः ॥ तथापि तस्य लक्षणपरत्वे तु परिष्कारमाह–द्रव्यत्वेति । द्रव्ये द्रव्यत्वजातेर्व्यापका गुणाः, व्यापकतावच्छेदिका अथ च सत्ताभिन्ना जातिः गुणत्वं तद्वत्त्वं गुणेष्वेवेति एतादृशं लक्षणं संभवतीत्यर्थः ॥ लक्ष्ये लक्षणसत्त्वं प्रतिपादयति–भवति हीति । द्रव्यत्वव्यापकत्वं–द्रव्यत्वसमानाधिकरणाऽभावाऽप्रतियोगित्वम्, द्रव्ये द्रव्यत्वं गुणः सत्तावत्पदार्थश्च वर्तन्ते इति द्रव्यत्वसमानाधिकरणोऽभावो न गुणस्य सत्तावत्पदार्थस्य वा किन्तु विशेषत्वादिधर्माणामेव, तत्प्रतियोगितानवच्छेदकं गुणत्वं सत्ता च, तत्रापि सत्ताभिन्नं तु गुणत्वमेवेति तद्वत्त्वं गुणे समन्वितमित्यर्थः ॥ 'द्रव्यत्वव्यापकतावच्छेदक'पदकृत्यमाह–द्रव्यत्वं कर्मत्वं वेति । गगने काले दिशि आत्मनि च समवायेन द्रव्यस्य कर्मणश्चाऽभावाद् द्रव्यत्वाधिकरणगगनादिद्रव्यवृत्त्यभावप्रतियोगितावच्छेदकत्वाद् द्रव्यत्वं कर्मत्वं च न द्रव्यत्वव्यापकतावच्छेदकमिति द्रव्यत्वं कर्मत्वं वाऽऽदाय द्रव्ये कर्मणि वा नातिव्याप्तिरित्यर्थः । द्रव्यत्वव्यापकतावच्छेदकेत्यनुपादाने तु–सत्ताभिन्नजातिं द्रव्यत्वं कर्मत्वं चादाय द्रव्ये कर्मणि चाऽतिव्याप्तिः स्यादिति भावः ॥ सत्ताजातिमादाय द्रव्यादावतिव्याप्तिवारणाय–सत्ताभिन्नेति । जतिपदकृत्यमाह–द्रव्यत्वत्वमिति । जातिपदानुपादाने द्रव्यत्वव्यापकं द्रव्यत्वं सत्तात्मकसामान्यं च भवतीति व्यापकतावच्छेदकं द्रव्यत्वत्वं सत्तात्वात्मकसामान्यत्वं च तद्वत्त्वस्य द्रव्यत्वे सत्तात्मकसामान्ये चाऽतिव्याप्तिरतः जातीति । तयोर्जातित्वाऽभावाद्वारणमित्यर्थः ॥ वस्तुतस्तु–गगनवृत्तिसमवेतसत्ताभिन्नजातिमत्त्वं लक्षणं फलितमिति बोध्यम् । 'निर्गुणा' इतिपदं व्याख्यातुमाह—यद्यपीति । निर्गुणत्वम्=गुणाऽनधिकरणत्वं, तच्च कर्मसामान्यविशेषादावतिव्याप्तत्वान्न लक्षणं भवितुमर्हति । यदि च लक्षणत्वेनाऽभिप्रेतं तदा अतिव्याप्त्यादिवारकविशेषणानि प्रक्षिप्य लक्षणं वक्तव्यमित्येतत् स्वयमुपन्यस्यति–तथापीति । सामान्यवत्त्वे सति=जात्यधिकरणत्वे सति, कर्मान्यत्वे च सति=कर्मभिन्नत्वे सति, निर्गुणत्वं=गुणाऽनधिकरणत्वमिति लक्षणं बोध्यमित्यर्थः॥ तत्र पदकृत्यमाह–जात्यादीनामिति । सामान्यविशेषसमवायाऽभावानां–'कर्मान्यत्वे सति निर्गुणत्वात्' तत्राऽतिव्याप्तिवारणाय–सामान्यवत्त्वे सतीति निवेशात् तेषां सामान्यवत्त्वाऽभावान्नातिव्याप्तिरिति भावः ॥ एवं कर्मणः 'सामान्यवत्त्वे सति निर्गुणत्वात्' तत्रातिव्याप्तिवारणाय–कर्मान्यत्वे सतीति निवेशात् कर्मणः कर्मान्यत्वाऽभावान्नातिव्याप्तिरिति भावः । एवं–द्रव्यस्य 'सामान्यवत्त्वे सति कर्मान्यत्वात्, तत्रातिव्याप्तिवारणाय निर्गुणत्वमिति निवेशात् द्रव्यस्य निर्गुणत्वाऽभावात् नाऽतिव्याप्तिरिति भावः ॥ वस्तुतस्तु–गुणवदवृत्तिः कर्माऽवृत्तिर्यः समवायेन तद्वत्त्वं गुणसामान्यलक्षणं बोध्यम् ॥ निर्गुणत्वशब्दार्थस्तु–सम्बन्धविशिष्टप्रतियोगिताकाऽभाववत्त्वं, वैशिष्ट्यं च–स्वावच्छिन्नगुणवन्निष्ठाऽभावीयप्रतियोगिताऽनवच्छेदकपदार्थविभाजकोपाध्यवच्छिन्नत्व=स्वावच्छिन्नत्वोभयसम्बन्धेन । द्रव्यत्वाद्यन्यतमत्वं च पदार्थविभाजकोपाधित्वम् ॥ अथवा गुणसमवायिकारणत्वाऽभाववत्त्वमेव निर्गुणत्वमिति बोध्यम् ॥ 'नि-

कर्मणो न कर्मान्यत्वं, द्रव्यस्य न निर्गुणत्वमिति तत्र नातिव्याप्तिः। 'निष्क्रिया' इति स्वरूपकथनं, न तु लक्षणं, गगनादावतिव्याप्तेः॥

रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम्॥ ८६॥
द्रवत्वस्नेहवेगाश्च मता मूर्तगुणा अमी।

रूपमिति॥ वेगा इति॥ वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः॥ मूर्तगुणा इति॥

---

ष्क्रिया' इतिमूलस्य क्रियाऽनधिकरणत्वार्थकस्य गगनादावतिव्याप्तत्वात् न लक्षणपरत्वमित्याह–**निष्क्रिया इतीति**। स्वरूपकथनं=वस्तुतो गुणे क्रिया नास्तीति स्फुटप्रतिपत्त्यर्थमित्यर्थः॥ लक्षणत्वे दोषमाह–**गगनादाविति**। वस्तुतो निष्क्रियशब्दस्य गगनादावतिव्याप्तिवारणाय–कर्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वपरतया साधर्म्यनिरूपणे स्वीकृतत्वात्–'कर्माऽवृत्ति–कर्मवद्वृत्ति–पदार्थविभाजकोपाधिप्रतियोगिकसमवायानुयोगित्वमिति लक्षणस्य निर्दुष्टस्य संभवात् लक्षणमेवैतादृशमितिबोध्यम्॥ निष्क्रियत्वशब्दार्थस्तु–विभागवाक्यजन्यबोधीयप्रकारताविशिष्टप्रतियोगिताकाऽभाववत्त्वं, प्रकारतावैशिष्ट्यं च–स्वविशिष्टकर्मवन्निरूपितवृत्तित्वनिष्ठत्वसम्बन्धेन, स्ववैशिष्ट्यं च कर्मवन्निरूपितवृत्तितायां स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वसामानाधिकरण्योभयसम्बन्धेनेति बोध्यम्। तथा च निरुक्तरीत्या लक्षणत्रयमपि गुणानां साधर्म्यं बोध्यमिति।

मूले–**रूपं रस इति**। रूप–रस–स्पर्श–गन्ध–परत्वा–ऽपरत्व–द्रवत्व–स्नेह–वेग–स्थितिस्थापका गुणाः मूर्तद्रव्यस्य गुणा मता इत्यर्थः। तथा च–तेषां–मूर्तगुणत्वं साधर्म्यं बोध्यमिति भावः॥ मूर्तत्वं क्रियावत्त्वं,–तानि पृथिव्यप्तेजोवायुमनांसि, तद्गुणत्वमित्यर्थः॥ मूले स्थितिस्थापकस्याऽनुक्तत्वात् तं संगृहीतुमाह–**वेगेनेति**। तथा च–वेगपदं–वेगस्थितिस्थापकोभयलाक्षणिकमिति तेन तदुभयं ग्राह्यमितिभावः॥ ननु मूर्तत्वम् अणुपरिमाणवत्त्वं क्रियावत्त्वं वा, तथा च- पृथिव्यप्तेजोवायुमनआत्मकमूर्तपदार्थवृत्तित्वविशिष्टगुणत्वमिति लक्षणार्थस्य संख्यादावतिव्याप्तिः, तद्वारणाय यदि मूर्तत्वव्याप्यतावच्छेदकपरिमाणाऽवृत्तिगुणवृत्तिजातिमत्त्वरूपं, तदा गौरवमतो **मुक्तावल्यामाह–अमूर्तेषु न वर्तन्ते इत्यर्थ इति**। तथा च अमूर्ताऽवृत्तिगुणत्वं साधर्म्यमित्यर्थः॥ तदर्थश्च–मूर्तत्वाऽभावसमानाधिकरणपरिमाणाऽन्यतराऽवृत्तिगुणवृत्तिजातिमत्त्वं, स्वसमनाधिकरणपरिमाणान्यतरवृत्तित्वसम्बन्धेन मूर्तत्वाऽभावविशिष्टान्यगुणवृत्तिजातिमत्त्वं वेति। गुणविभाजकरूपत्वादिजातिमादाय संस्कारविभाजकवेगत्वस्थितिस्थापकत्वजातिमादाय च, सर्वत्र लक्षणसमन्वयो बोध्यः। जातौ अवृत्तित्वान्तविशेषणेन आत्मविशेषगुणानां शब्दस्य संख्यादीनां च वारणम्। गुणवृत्तित्वविशेषणेन कर्मणो द्रव्यस्य च व्युदासः। समवायेन तादृशधर्मस्य लक्षणतालाभाय जातिग्रहणम्। घटादिगतैकत्ववृत्त्येकत्वत्वजातेः मूर्तत्वाऽभावसमानाधिकरणगगनैकत्ववृत्तिजातित्वाद्व घटगतैकत्वे नाऽतिव्याप्तिरिति ध्येयम्॥ यद्वा अमूर्तावृत्तिगुणत्वस्य घटमात्रवृत्त्येकत्वादावतिव्याप्तिवारणाय–अमूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वम्, अथवा मूर्तत्वव्याप्यतावच्छेदकगुणवृत्तिजातिमत्त्वमिति निर्वचनीयम्। तत्र–'अमूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वमित्यस्य 'अमूर्तनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तितानिरूपित–समवायसम्बन्धावच्छिन्ननिरवच्छिन्नाऽवच्छेदकताविशिष्टा या गुणवृत्तिभेदप्रतियोगितानिरूपिताऽवच्छेदकता, तद्विशिष्टप्रतियोगिताकाऽभाववद्गुणत्वमिति निष्कर्षार्थः। 'मूर्तत्वव्याप्यतावच्छेदकेत्यादेस्तु–मूर्तवृत्तिभेदप्रतियोगितावच्छेदकत्वे सति मूर्तवृत्तितावच्छेदको यो गुणविभाजकोपाधिस्तद्वत्त्वमिति निष्कृष्टार्थः॥ मूर्तत्वं त्विह–परिच्छिन्नप-

**अमूर्तेषु न वर्तन्त इत्यर्थः। लक्षणं तु तावदन्यान्यत्वम्। एवमग्रेऽपि॥**

**धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च ॥८७॥**
**एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः।**

**अमूर्तगुणा इति॥ मूर्तेषु न वर्तन्त इत्यर्थः॥**

**संख्यादयो विभागान्ता उभयेषां गुणा मताः ॥८८॥**

**उभयेषामिति॥ मूर्तामूर्तगुणा इत्यर्थः॥ ८६॥ ८७॥ ८८॥**

---

रिमाणवत्त्वमेव बोध्यमिति ॥ रूपरसस्पर्शगन्धपरत्वाऽपरत्वद्रवत्वस्नेहवेगस्थितिस्थापकानां—मूर्तगुणत्वं(अमूर्ताऽवृत्तिगुणत्वं)साधर्म्यमुक्तम्, तादृशसाधर्म्यावच्छिन्नगुणानां लक्षणं तु—तावद्गुणाऽन्याऽन्यत्वं वक्तव्यमित्याह—**लक्षणन्त्विति**। यावन्तः रूपादयो दश मूर्तगुणास्तावत्त्वावच्छिन्नप्रतियोगिताकभेदावच्छिन्न(मूर्तेतरगुणादिसकल)प्रतियोगिताकभेदवत्त्वमिति (मूर्तगुणेषु) लक्षणार्थ इत्यर्थः॥ प्रदर्शितप्रकारं वक्ष्यमाणग्रन्थेऽप्यतिदिशति—**एवमग्रेऽपीति**। अग्रे निर्दिश्यमानानामपि साधर्म्यवद्गुणानां **'तावदन्यान्यत्वमि'ति** लक्षणम् ऊहनीयमिति भावः॥

मूले—**धर्माऽधर्माविति**। धर्माऽधर्म-भावना-शब्द-बुद्धि-सुखदुःखे-च्छा-द्वेष-यत्ना एते दश अमूर्तवृत्तिगुणा विद्वद्भिः कीर्तिता इत्यर्थः। अमूर्तत्वं—परममहत्परिमाणवत्त्वमेव, आकाशकालदिगात्मानो मूर्ताः इति॥ **ननु**—अमूर्तवृत्तित्वविशिष्टगुणत्वं गगनादिगतैकत्वेऽतिव्याप्तम्, यदि च—मूर्तत्वाऽभावव्याप्यतावच्छेदकमहत्त्वाऽवृत्तिजातिमत्त्वम् अमूर्तवृत्तिगुणत्वं तदा गौरवम्, अतो **मुक्तावल्यां** तदर्थमाह—**मूर्तेषु न वर्तन्ते इति**। मूर्ताऽवृत्तिगुणत्वमित्यर्थः। मूर्तत्वसमानाधिकरण-महत्त्वान्यतराऽवृत्तिगुणवृत्तजातिमत्त्वं, स्वसमानाधिकरण-महत्त्वा-न्यतरसमवेतत्वसम्बन्धेन मूर्तत्वविशिष्टान्यगुणवृत्तिजातिमत्त्वं वा तत्फलितार्थः, तेन गगनादिगतैकत्वादौ नातिव्याप्तिः। अथवा—मूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वस्य, मूर्तत्वाऽभावव्याप्यतावच्छेदकपरिमाणाऽवृत्तिजातिमत्त्वस्य वा विवक्षितत्वात। वस्तुतस्तु—अमूर्तद्रव्यत्वव्याप्यतावच्छेदकत्वमेव अमूर्तगुणत्वं विवक्षितम्। उत्पन्नविनष्टद्रव्यानङ्गीकारान्न तमादाय रूपादावतिव्याप्तिः। भेदस्य व्याप्यवृत्तित्वादेव च नोत्पत्तिक्षणावच्छिन्नघटादिकमादाय रूपादावतिव्याप्तिः उत्पन्नविनष्टद्रव्यांगीकारे तु—अमूर्तत्वं परममहत्परिमाणरूपमेव ग्राह्यमिति॥ **एवं**—धर्माऽधर्मादिदशाऽमूर्तगुणत्वावच्छिन्नप्रतियोगिताकभेदावच्छिन्नप्रतियोगिताकभेदवत्त्वम् अमूर्तगुणानां लक्षणमपि बोध्यम्॥

मूले—**संख्यादय इति**। संख्यापरिमाणपृथक्त्वसंयोगविभागाः, उभयेषां=मूर्तद्रव्याऽमूर्तद्रव्योभयेषां गुणा बोध्या इत्यर्थः। तथा च संख्यादिविभागान्तपञ्चगुणानां मूर्ताऽमूर्तोभयवृत्तिगुणत्वं साधर्म्यमित्यर्थः॥ ननु मूर्ताऽमूर्तोभयवृत्तिगुणत्वं घटादिगतैकत्वेऽव्याप्तम्, यदि च—उभयवृत्तितावच्छेदकगुणविभाजकधर्मवत्त्वमुच्यते तदा रूपादावतिव्याप्तिः, अतो मुक्तावल्याम्—उभयपदार्थमाह—**मर्ताऽमूर्तेति**। मूर्ताऽमूर्तगुणत्वं च—स्वसमानाधिकरणसमवेतत्वस्वाऽभावसमानाधिकरणसमवेतत्वोभयसम्बन्धेन मूर्तत्वविशिष्टवेगाऽवृत्तिजातिमत्त्वं, स्ववृत्तिसमवेतत्वसम्बन्धेन कालविशिष्टरूपाऽवृत्तिजातिमत्त्वं वा बोध्यम्, तेन घटगतैकत्वे गगनगतैकत्वे च नाऽव्याप्तिः। अथवा—कालवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वं, द्रव्यत्वसमव्यापकतावच्छेदकजातिमत्त्वं वा मूर्ताऽमूर्तगुणत्वमिति बोध्यम्॥ लक्षणं तु—"संख्यापरिमाणपृथक्त्वसंयोभगविागभिन्नभिन्नत्वमिति बोध्यम्॥८६॥८७॥८८॥

संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा ।
द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥ ८९ ॥

अनेकाश्रिता इति ॥ संयोगविभागद्वित्वादीनि द्विवृत्तीनि । त्रित्वचतुष्ट्वादिकं त्रिचतुरादिवृत्तीति बोध्यम् ॥ ८९ ॥

अतः शेषगुणाः सर्वे मता एकैकवृत्तयः ।

अत इति ॥ रूपरसगन्धस्पर्शैकत्वपरिमाणैकपृथक्त्वपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दा इत्यर्थः ॥

---

मूले–संयोगश्चेति । संयोगो विभागो द्वित्वत्रित्वादिसंख्याः, तद्वत्=द्वित्वादीव, द्विपृथक्त्वत्रिपृथक्त्वादयश्च, एतेषाम् अनेकाश्रितगुणत्वं साधर्म्यमित्यर्थः ॥ ननु–अनेकपदस्य बहुत्वविशिष्टार्थकतया संयोगादेः बहुवृत्तित्वाऽभावाद् अव्याप्तिरतः–अनेकाश्रितशब्दार्थमाह–मुक्तावल्यां–संयोगविभागद्वित्वादीनि द्विवृत्तीनीति । पदार्थद्वयवृत्तीनि संयोगादीनि बोध्यानीत्यर्थः । तथा च एकत्वभिन्नसंख्याविशिष्टवृत्तिगुणत्वं साधर्म्यमिति भावः ॥ एवं त्रित्वचतुष्ट्वादिसंख्यास्तु त्रिचतुर्वृत्तितया बोध्याः ॥ एवं 'घटाद् दण्डपटौ पृथगि'तिप्रतीतेः द्वयोः पृथक्त्वं द्विपृथक्त्वं त्रयाणां पृथक्त्वं त्रिपृथक्त्वम् इत्यादीन्यपि द्वित्रिपदार्थवृत्तितया बोध्यानि, एवं पञ्चत्वं शतत्वं, सहस्रत्वं, पञ्चपृथक्त्वं, शतपृथक्त्वं सहस्रपृथक्त्वादीन्यपि–अनेकाश्रितगुणत्ववन्ति बोध्यानि । एवं च–'व्यक्तिद्वयनिरूपितगुणवृत्तिसमवायसम्बन्धावच्छिन्नाधेयतावद्गुणत्वं, स्वसमवेतत्वस्वान्यनिरूपितगुणनिष्ठसमवेतत्वोभयसम्बन्धेन किञ्चिद्विशिष्टगुणत्वं वाऽनेकाश्रितगुणत्वमिति तदर्थो बोध्यः । यद्वा–स्वाश्रयप्रतियोगिताकान्योन्याभावसमानाधिकरणगुणत्वमित्यर्थ इति तत्साधर्म्यम् ॥ लक्षणं तु—संयोगविभागद्वित्वादिद्विपृथक्त्वादिभिन्नभिन्नत्वमिति बोध्यमिति ॥ ८९ ॥

मूले–अत इति । अतः–एभ्यः,–संयोगविभाग–द्वित्वादिद्विपृथक्त्वादिभ्यः, शेषगुणाः=अवशिष्टगुणाः, ते एकैकस्मिन् पदार्थे वृत्तयो बोध्याः ॥ तान् गुणान् परिगणयति–मुक्तावल्यां–रूपरसेत्यादिना शब्दा इत्यन्तेन । एकैकवृत्तित्वं च स्वसमानाधिकरणाऽन्योन्याभावप्रतियोगितानवच्छेदकैकत्वकत्वं, स्वाश्रयाऽन्योन्याऽभाव-व्यापकाऽत्यन्ताऽभावप्रतियोगित्वं वा बोध्यम् । अथवा–स्वसमवेतत्वस्वभिन्नसमवेतत्वैतदुभयसम्बन्धेन किञ्चिद्विशिष्टं यद् यत् तत्तद्व्यक्तिभेदकूटवत्त्वगुणत्वाधिकरणत्वोभयमेकैकवृत्तित्वमिति बोध्यम् । यद्वा–स्वसमवेतत्व-स्वभिन्नसमवेतत्वान्यत्व-स्ववृत्तिगुणत्वैतत्त्रितयसम्बन्धेन किञ्चिद्विशिष्टत्वम् एकैकवृत्तित्वं बोध्यम् । अत्र संयोगादिवारणाय–स्वभिन्नसमवेतत्वान्यत्वस्य संसर्गकोटौ प्रवेशः। कर्मादिवारणाय–स्ववृत्तिगुणत्वस्य तत्कोटौ प्रवेशः । स्ववृत्तित्वं कालिकेन बोध्यम्, तेन गुणत्वस्य समवायसम्बन्धेन यत्किंचिद्द्रव्यवृत्तित्वाऽभावेऽपि न क्षतिः । गुणत्ववत्त्वं च समवायेन विवक्षितम्, तेन कर्मत्वादेः कालिकेन गुणत्ववत्त्वेऽपि नातिव्याप्तिः, उभयसम्बन्धेन किञ्चिद्विशिष्टत्वस्य लक्षणत्वे रूपादिव्यक्तेरपि यत्किंचित्स्वभिन्नतद्घटसमवेतत्वेन तदन्यत्वाऽभावात् तादृशोभयसम्बन्धेन सुतरां किञ्चिद्विशिष्टत्वस्याऽप्रसिद्धत्वाद् असंभवापत्तेः, स्वसमवेतत्वघटितैतत्त्रितयसम्बन्धेन किञ्चिद्विशिष्टत्वस्य लक्षणत्वे तु तद्रूपादिव्यक्तेरपि स्वपदार्थद्वयक्तिसमवेतत्वं तदन्यव्यक्तिसमवेतत्वाऽभावेन तदन्यत्वसत्त्वात् तद्घटितत्रितयसम्बन्धेन किञ्चिद्विशिष्टत्वात्मकलक्षणसत्त्वेनाऽसंभवाऽभावदिति ध्येयम् ॥ इत्येवम् एकैकवृत्तिगुणत्वं साधर्म्यम् ।

बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥ ९० ॥
अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः ।

बुद्ध्यादीति ॥ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना इत्यर्थः । स्पर्शान्ताः–रूपरसगन्धस्पर्शा इत्यर्थः । द्रवो–द्रवत्वम् । वैशेषिकाः–विशेषा एव वैशेषिकाः, स्वार्थे ठक् । विशेषगुणा इत्यर्थः ॥

---

लक्षणं तु एकैकवृत्तिगुणत्वावच्छिन्नतादृशरूपादिशब्दान्तगुणभिन्नभिन्नत्वमिति बोध्यमिति भावः ॥

मूले–बुद्ध्यादिषट्कमिति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः षट्, स्पर्शान्ताः=रूपरसगन्धस्पर्शाश्चत्वारः, स्नेहः, सांसिद्धिकद्रवत्वम्, अदृष्टं=धर्माऽधर्मौ, भावनात्मकसंस्कारः, शब्दश्चैते, वैशेषिका गुणाः=विशेषगुणत्वमेषां साधर्म्यमित्यर्थः ॥ मुक्तावल्यां स्वार्थे ठगिति । 'विनयादिभ्यष्ठगि'ति सूत्रेण विनयाद्याकृतिगणान्तर्गतत्वेन अभिमत'विशेष'शब्दोत्तरमपि स्वार्थक'ठक्'प्रत्ययसंभवात्, तथा च "ठस्येकः" (७।३।५०) इत्यनुशासनबलेन इकादेशे "किति चे" ७।२।११८) त्यनेन आद्यस्याऽचो वृद्धौ 'वैशेषिक'इति सिद्धम् । अत्र इतरव्यवच्छेदरूपविशेषपदार्थस्य वक्तव्यत्वाद् वैशेषिकस्य गुणा इति तत्पुरुषाश्रयणे 'वैशेषिकगुणा' इति भवति न तु वैशेषिका गुणा इति । तथापि विशेषशब्दस्यैवात्र व्यवच्छेदके लाक्षणिकत्वेन करणसाधनत्वेन वा कथंचित् मूलं संगमनीयम् । वस्तुतस्तु विशेषो–व्यवच्छेदः प्रयोजनं येषान्ते वैशेषिका इत्येव रूपं साधनीयम् । तत्र ठकोऽसम्भवेऽपि 'प्रयोजनम्' (५।१।१०९) इत्यनुशासनबलेन ठञः प्राप्तौ तत्रैकादेशे 'तद्धितेष्वचामादेः'( ७।२।११७ )इत्यनेनाऽऽद्यस्याऽचो वृद्धिसंभवादिति ध्येयम् ॥

अथ–विशेषगुणत्वं स्वाश्रयसमानाधिकरणयत्किञ्चिज्जातिव्यापकतावच्छेदिका या स्वाश्रयसमानाधिकरणद्रव्यविभाजकोपाधिमदितरभेदव्याप्यतावच्छेदिका गुणत्वव्याप्या जातिस्तद्वत्त्वमेव बोध्यम् । स्वाश्रयसमानाधिकरणीभूता या रजतोपष्टम्भकपार्थिवभागवृत्तिवैजात्यरूपा, लोहोपष्टम्भकपार्थिवभागवृत्तिवैजात्यरूपा, सुवर्णोपष्टम्भकपार्थिवभागवृत्तिवैजात्यरूपा, मरकतोपष्टम्भकपार्थिवभागवृत्तिवैजात्यरूपा, माणिक्यवृत्तिवैजात्यरूपा, कपिशमात्रवर्णविजातीयवस्तुमात्रवृत्तिवैजात्यरूपा, केवलचित्रवर्णविजातीयवस्तुमात्रनिष्ठवैजात्यरूपा वा या जातिस्तद्व्यापकतावच्छेदकीभूताः स्वाश्रयसमानाधिकरणपृथिवीत्वरूपद्रव्यविभाजकोपाधिमदितरभेदव्याप्यतावच्छेदिकाः पार्थिवशुक्लगतवैजात्य–नीलत्व–पीतत्व–हरितत्व–रक्तत्व–कपिशत्व–चित्रत्वरूपा जातयस्तद्वत्त्वस्य पार्थिवरूपेषु, जलीयादौ च तादृशविलक्षणाऽभास्वरशुक्लत्व–भास्वरशुक्लत्वरूपजातिमादाय, रसे निरुक्तदिशैव, गन्धे गन्धत्वमादाय, पार्थिवमात्रवृत्त्यनुष्णाशीतत्व–जलतेजोवृत्तिवृत्तिशीतत्वोष्णत्व—वायुवृत्तिवृत्तिविजातीयाऽनुष्णाशीतत्वरूपजातीरादाय पार्थिवजलीयतैजसवायवीयस्पर्शेषु, अनयैव दिशा चान्यत्रापि लक्षणसमन्वयात् । अथवा–लाघवेन 'भावनाऽन्यो यो वायुवृत्तिवृत्तिस्पर्शाऽवृत्तिधर्मसमवायी, तदन्यत्वे सति गुरुत्वाजलद्रवत्वाऽन्यगुणत्वम्, वायुवृत्तयः–स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वसंस्काराः तद्वृत्तयः स्पर्शाऽवृत्तयश्च धर्माः संख्यात्वादयः, तत्समवायिनः संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वसंस्काराः, समवायिनि भावनान्यत्वविशेषणात् भावनाभिन्नः संस्कारो ग्राह्यः, तदन्यत्वमेतद्व्यतिरिक्तेषु रूपादिष्विति समन्वयः ॥ अत्र जात्यादावतिव्याप्तिवारणाय विशेष्यम् । गुरुत्वनैमित्तिकद्रवत्वयोर्वारणाय–गुरुत्वेत्यादि । सांसिद्धिकद्रवत्वसंग्रहाय–अजलेति । संयोगादिवारणाय–सत्यन्तम् । भावनायामव्याप्तिवारणाय–आद्यमन्यान्तं

संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा ॥ ९१ ॥
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः ।

**संख्येति ॥ संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानीत्यर्थः ॥**

सत्यन्तघटकसमवायिविशेषणम् । सत्तादिकमादाय असम्भववारणाय–स्पर्शसंग्रहाय च–स्पर्शाऽवृत्तीति ॥ **अथवा**–तेजस्संयोगजन्यशब्दान्यतरवृत्तिद्रवत्वाऽवृत्तिजातिजलत्वात्मत्वान्यतरव्याप्यतावच्छेदकजात्योरन्यतरवत्त्वं, तादृशद्रवत्वाऽवृत्तिजाति–स्वव्याप्यतावच्छेदकत्वसम्बन्धेन जलत्वविशिष्टजाति–तादृशसम्बन्धेनात्मत्वविशिष्टजातीनामन्यतमवत्त्वं, मनोवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकतावच्छेदकगुरुत्वाऽवृत्तिगुणविभाजकजातिसांसिद्धिकत्वभावनात्वान्यतमवत्त्वं वा विशेषगुणत्वम् । आद्ये स्पर्शान्तानां शब्दस्य च संग्रहाय प्रथमजातौ तादृशान्यतरवृत्तित्वविशेषणम् । नैमित्तिकद्रवत्ववारणाय गुणत्वादिकमादायाऽतिव्याप्तिवारणाय च तत्रैव द्रवत्वाऽवृत्तित्वविशेषणम् । स्नेहसांसिद्धिकद्रवत्वयोः संग्रहाय द्वितीयजातौ जलत्वव्याप्यतावच्छेदकत्वविशेषणम् । बुद्धयादिभावनान्तानां संग्रहाय–तत्रैवात्मत्वव्याप्यतावच्छेदकत्वविशेषणम् । अनुगमाय जलत्वात्मत्वान्यतरत्वेन निवेशः ॥ द्वितीयेऽपि विशेषणानां प्रयोजनमुक्तप्रायम् । तृतीयेतु–संख्यादावतिव्याप्तिवारणाय–अवच्छेदकान्तं जातिविशेषणम् । गुरुत्वादावतिव्याप्तिवारणाय जातौ गुरुत्वाऽवृत्तित्वम् । कालिकपरत्वादावतिव्याप्तिवारणाय गुणविभाजकत्वम्, सांसिद्धिकद्रवत्वभावनयोः संग्रहाय अन्यतमत्वेन त्रयाणां निवेश इति ॥ **अथवा** द्रव्यविभाजकोपाधिद्वयसमानाधिकरणाऽवृत्तिद्रव्यकर्माऽवृत्तिजातिमत्त्वं विशेषगुणत्वम् । पृथिवीत्वजलत्वाद्यात्मकं यत् द्रव्यविभाजकोपाधिद्वयं प्रत्येकं तत्समानाधिकरणा द्वित्व–पृथक्त्वसंयोगादयस्तद्वृत्तिः द्रव्यकर्माऽवृत्तिश्च या रूपादिकतिपयगुणेषु जातिः तादृशजातिमद्गुणत्वमित्यर्थः । रूपादिषु चतुर्षु तादृशरूपत्वादिकं, सांसिद्धिकद्रवत्वे च द्रवत्वत्वाऽवान्तरजातिम्, स्नेहादिषु दशसु स्नेहत्वादिकम्, भावनायां संस्कारत्वाऽवान्तरजातिम्, चाऽऽदाय लक्षणसमन्वयः । द्रव्यविभाजकोपाधिद्वयेत्यनुपादाने समानाधिकरणरसादौ रसत्वादेरवृत्तित्वविरहात् असंभवः स्यात् । द्रव्यविभाजकेत्यनुपादाने शुक्लत्वपटत्वात्मकोपाधिद्वयसमानाधिकरणे शुक्ले रूपत्वादेरवृत्तित्वविरहात् अव्याप्तिः स्यात् । जातिपदानुपादाने पृथिवीत्वजलत्वसमानाधिकरणपृथिवीजलसंयोगाऽवृत्ति–घटपटसंयोगगत–तद्व्यक्तित्वमादाय–तत्संयोगेऽतिव्याप्तिः स्यात् ॥ नन्विदं लक्षणम् एकत्वादिष्वतिव्याप्तमिति चेन्न । एकत्वत्वभिन्नत्वेनापि जातेर्विशेषणीयत्वात् ॥ **अथवा** पृथिवीवृत्तिवृत्ति–जलवृत्तिवृत्तीतरसंयोगाऽवृत्तिगुणत्वव्याप्यजातिमत्त्वं विशेषगुणत्वम् । **वस्तुतस्तु**–कालदिङ्मनोवृत्तिताऽनवच्छेदकजातिमद्गुणत्वं विशेषगुणत्वमिति बोध्यम् ॥ लक्षणं तु रूपादि( विशेषगुण )भिन्नभिन्नत्वमिति बोध्यम् ॥

मूले–संख्यादिरपरत्वान्त इति । संख्या आदौ यस्य अपरत्वं चाऽन्ते यस्य, तादृशाः–संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वानि । असांसिद्धिको द्रवः=नैमित्तिकद्रवत्वम्, गुरुत्वं वेगःस्थितिस्थापकश्च एतेषां, सामान्यगुणत्वं साधर्म्यमित्यर्थः ॥ 'गुरुत्ववेगौ'इति मूलस्थवेगपदस्य भावनान्यसंस्कारपरत्वात्–वेगपदेन स्थितिस्थापकस्यापि परिग्रहः ॥ अत्र सामान्यं नाम अनुगतो धर्मः, स च विशेषगुणभिन्नगुणानां साधारणो विशेषगुणान्यत्वात्मक एव, तथा च 'निरुक्तविशेषगुणान्यगुणत्वं सामान्यगुणानां लक्षणमितिपर्यवसन्नम् । **वस्तुतस्तु**–रूपस्पर्शान्यत्वे सति द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकसंयोगविभागवेगद्रवत्वाऽवृत्तिजातिशून्यगुणत्वं–सामान्यगुणत्वम् ।

संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥ ९२ ॥
एते तु द्वीन्द्रियग्राह्याः,

द्वीन्द्रियेति ॥ चक्षुपा त्वचापि ग्रहणयोग्यत्वात् ॥

अथ स्पर्शान्तशब्दकाः ।
बाह्यैकैकेन्द्रियग्राह्याः,

द्रव्यविभाजकोपाधिः पृथिवीत्वादिः तद्व्याप्यतावच्छेदकं च गन्धत्वादि तच्छून्यत्वस्य संख्यादौ सत्त्वाल्लक्षणसमन्वयः ॥ जलीयशुक्लरूपे वायोरनुष्णाशीतस्पर्शे चाऽतिव्याप्तिवारणाय–रूपस्पर्शान्यत्वे सतीति। कर्मादौ अतिव्याप्तिवारणाय–गुणत्वमिति। पृथिवीत्वादिव्याप्यतावच्छेदकतत्तत्संख्यात्वादिशून्यत्वस्य तत्तत्संख्यायामभावात्–अव्याप्तिवारणाय–जातिपदम्। शब्दविशेषजनकतावच्छेदकजात्यवच्छिन्नकठिनावयवद्रव्यविभागे, तेजोवेगातिशये, अत्यन्ताग्निसंयोगनाश्यतावच्छेदकवैजात्यावच्छिन्नघृतादिवृत्तिद्रवत्वे,–चाऽव्याप्तिवारणाय–संयोगविभागवेगद्रवत्वाऽवृत्तीति जातिविशेषणम् ॥ द्रव्यविभाजकतावच्छेदकोपाधेश्च तत्तद्व्यक्तित्वेन व्यापकत्वं बोध्यम्। तादृशोपाधित्वेन व्यापकत्वे तु संख्यात्वादेरपि तादृशजातित्वाद् असंभवापत्तेरिति ॥ **अथवा**–सामान्यगुणत्वं–स्वसमवेतसमवेतत्वसम्बन्धेन मनोविशिष्टभावनाव्यक्त्यसमवेतजाति–गुरुत्वनैमित्तिकद्रवत्वस्थितिस्थापकान्यतमसमवेतसांसिद्धिकद्रवत्वभावनाऽन्यतराऽसमवेतजात्योरन्यतरवत्त्वम्। संख्याद्यपरत्वान्तानां वेगस्य च संग्रहायाऽन्यतरघटकतया प्राथमिकजात्यन्तनिवेशः। भावनावारणाय–गुणत्वादिकमादाय अतिव्याप्तिवारणाय च प्राथमिकजातौ भावनाव्यक्त्यवृत्तित्वविशेषणम्। गुरुत्वादिसंग्रहाय अन्यतरघटकतया द्वितीयजात्यन्तनिवेशः। सांसिद्धिकद्रवत्वादौ अतिव्याप्तिवारणाय गुणत्वादिकमादाय च तद्वारणाय तादृशजातौ अन्यतराऽसमवेतत्वविशेषणमिति ध्येयम् ॥ लक्षणं–संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वनैमित्तिकद्रवत्वगुरुत्ववेगस्थितिस्थापकभिन्नभिन्नत्वमिति बोध्यम् ॥

**मूले–संख्यादिरपरत्वान्तो द्रवत्वमिति।** संख्या आदौ यस्य, अपरत्वम् अन्ते यस्य, संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वानि, द्रवत्वं, स्नेहः, चकारेण वेगो ग्राह्यः। एतेषां गुणानां द्वीन्द्रियग्राह्यत्वं साधर्म्यमित्यर्थः ॥ द्वीन्द्रियं–चक्षुः त्वक् च। तथा च चाक्षुषत्वाचोभयप्रत्यक्षविषयत्वं संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वद्रवत्वस्नेहवेगानां साधर्म्यमित्यर्थः ॥ **ननु**–द्वीन्द्रियग्राह्यत्वं रूपादावतिव्याप्तं, तेषां मनसाऽपि ग्राह्यत्वात्, रूपादीनां च चक्षुर्द्वयग्राह्यत्वात्। एवं प्रभाभित्तिसंयोगस्य चक्षुर्मात्रग्राह्यत्वात् तत्राऽव्याप्तिः परमाणुसंख्यादीनाम् अतीन्द्रियत्वात् तत्राऽप्यव्याप्तिरित्यतो मुक्तावल्यामाह––**चक्षुषा त्वचाऽपि ग्रहणयोग्यत्वादिति**। चक्षुस्त्वगुभयेन्द्रियग्राह्यतावच्छेदकजातिमत्त्वमित्यर्थः। संयोगत्वस्य संख्यात्वादेश्चोभयग्राह्यतावच्छेदकजातितया तद्वत्त्वस्य प्रभाभित्तिसंयोगे परमाणुसंख्यादौ च सत्त्वान्नाऽव्याप्तिः, रूपादौ च नातिव्याप्तिरिति ॥ **तथा च**–चाक्षुषनिरूपितलौकिकविषयत्वस्पार्शननिरूपितलौकिकविषयत्वोभयविशिष्ट-भावनाव्यक्त्यवृत्ति-गुणवृत्ति-जातिमत्त्वं साधर्म्यं फलितम्। रूपादावतिव्याप्तिवारणाय जातौ उभयविशिष्टत्वनिवेशः। संस्कारत्वगुणत्वादिजातिमादाय भावनादावतिव्याप्तिवारणाय जातौ भावनाव्यक्त्यवृत्तित्वनिवेशः। द्रव्यकर्मणोरतिव्याप्तिवारणाय तत्रैव गुणवृत्तित्वनिवेशः ॥ लक्षणं–'संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहवेगभिन्नभिन्नत्वमिति बोध्यम् ॥

**मूले–अथेति।** स्पर्शः अन्ते यस्य,–रूपरसगन्धस्पर्शाः, शब्दश्च, एतेषां, बाह्यानि यानि–

बाह्येति ॥ रूपादीनां चक्षुरादिग्राह्यत्वात् ॥

गुरुत्वादृष्टभावनाः ॥ ९३ ॥

अतीन्द्रियाः,

अतीन्द्रिया इति ॥ लौकिकप्रत्यक्षाविषयजातिमन्त इत्यर्थः ॥

विभूनां तु ये स्युर्वैशेषिका गुणाः ।

अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥ ९४ ॥

---

चक्षूरसनाघ्राणत्वक्कर्णानि इन्द्रियाणि, तदेकैकेन्द्रियग्राह्यत्वं साधर्म्यमित्यर्थः ॥ ननु–बाह्यैकैकेन्द्रियग्राह्यत्वं संख्यादावतिव्याप्तं, तेषामुभयग्राह्यत्वेऽप्येकग्राह्यत्वाऽनपायात् । न च इन्द्रियद्वयजन्यप्रत्यक्षाऽविषयत्वमेव वक्तव्यमतो नोक्तदोष इति वाच्यम् । प्रभाभित्तिसंयोगेऽतिव्याप्तेर्दुर्वारत्वादिति चेन्न । चक्षुस्त्वगुभयाऽग्राह्य-बहिरिन्द्रियग्राह्य-परिमाणाऽन्यगुणसमवेतजातिमत्त्वमिति तदर्थत्वात् । संख्यात्वादिवारणाय जातौ चक्षुस्त्वगुभयाऽग्राह्यत्वम् । ज्ञानत्वादिवारणाय–जातौ बहिरिन्द्रियग्राह्यत्वम् । सुवर्णत्वादिवारणाय–जातौ गुणसमवेतत्वम् । त्रसरेणुपरिमाणेऽतिव्याप्तिवारणाय–परिमाणाऽन्येति गुणविशेषणम् । तादृशगुणे कालिकेन वृत्तिजातिमत्त्वस्य कालेऽपि सत्त्वात् तद्वारणाय–समवेतेति । जातिपदं–समवेतधर्मपरमिति बोध्यम् ॥ तादृशजातिमत्त्वस्य परमाणुरूपादावपि सत्त्वात्–लक्षणसमन्वयात् ॥ अथवा–बाह्यैकैकेन्द्रियमात्रग्राह्यत्वं नाम–चाक्षुषनिरूपितलौकिकविषयत्वस्पार्शननिरूपितलौकिकविषयत्वोभयशून्यमानसाऽनिरूपितलौकिकविषयताश्रयमहत्त्वाऽवृत्तिगुणवृत्तिजातिमत्त्वमिति । संख्यात्वादिकमादाय संख्यादावतिव्याप्तिवारणाय जातौ तादृशोभयशून्यत्वविशेषणम् । गुरुत्वत्वधर्मत्वादिजातिमादाय अतिव्याप्तिवारणाय तत्रैव मानसानिरूपितलौकिकविषयताश्रयत्वविशेषणम् । त्रसरेणुमहत्त्वसमवेताऽपकर्षात्मकतादृशजातिमादाय अतिव्याप्तिवारणाय तत्रैव महत्त्वाऽवृत्तित्वविशेषणम् । प्रभात्वरूपतादृशजातिमादाय अतिव्याप्तिवारणाय तत्रैव गुणवृत्तित्वविशेषणम् । जातिघटितलक्षणकरणात् नाऽतीन्द्रियरूपादावव्याप्तिः ॥ मुक्तावल्यां–"रूपादीनां चक्षुरादिग्राह्यत्वादि"त्यनेन निरुक्तरीत्या जातिघटितमेव साधर्म्यं बोध्यमित्यर्थः । लक्षणं–रूपरसगन्धस्पर्शशब्दभिन्नभिन्नत्वमिति बोध्यम् ॥

मूले गुरुत्वादृष्टभावनाः ॥९३॥ अतीन्द्रियाः इति । गुरुत्वम् अदृष्टं=धर्माधर्मौ, भावनापदस्य स्थितिस्थापकाणुत्वोभयलक्षकत्वात् , भावनास्थितिस्थापकाऽणुत्वानि, एतेषाम् अतीन्द्रियत्वं साधर्म्यमित्यर्थः ॥ अत्राऽतीन्द्रियत्वं यदि–प्रत्यक्षाविषयत्वम्, तदा जगन्मात्रस्य ईश्वरप्रत्यक्षविषयत्वेन योगिप्रत्यक्षविषयत्वेन च तदभावाऽप्रसिद्धिनिबन्धनाऽसंभवः । यदि च प्रत्यक्षनिरूपितलौकिकविषयताशून्यत्वं,तदा परमाणुरूपादावतिव्याप्तिरित्यत आहमुक्तावल्यां–लौकिकेति । 'साक्षात्कारनिरूपितलौकिकविषयताशून्यगुणवृत्तिजातिमत्त्वं तदर्थः । वायुत्वमनस्त्वादिजातिमादायाऽतिव्याप्तिवारणाय जातौ गुणवृत्तित्वविशेषणम् । आत्ममनःसंयोगस्य वैजात्यपुरस्कारेण हेतुत्वपक्षे संयोगाऽवृत्तित्वमपि जातिविशेषणं वक्तव्यमिति ॥ अथवा–लौकिकसाक्षात्कारविषयगुणत्वन्यूनवृत्तिसंस्कारत्वान्यधर्मसमवाय्यन्यगुणत्वं साधर्म्यम् । सत्तादिकमादायाऽसंभववारणाय गुणत्वन्यूनवृत्तीति । जात्यादावतिव्याप्तिवारणाय गुणपदम् ॥ वस्तुतस्तु विषयतासम्बन्धावच्छिन्नप्रत्यक्षत्वावच्छिन्नप्रतिबध्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रतिबन्धकतावद्गुणत्वमेवैतेषां साधर्म्यं बोध्यमिति । लक्षणं–गुरुत्वधर्माधर्मभावनास्थितिस्थापकाऽणुपरिमाणभिन्नभिन्नत्वमिति बोध्यम् ॥

मूले–विभूनां त्विति । विभूनाम्–आकाशात्मनां ये वैशेषिकाः गुणाः स्युः—शब्दबुद्धिसु-

**विभूनामिति ॥ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा इत्यर्थः ॥ अकारणेति ॥ कारणगुणेन कार्ये ये गुणा उत्पाद्यन्ते ते कारणगुणपूर्वका रूपादयो वक्ष्यन्ते, बुद्ध्यादयस्तु न तादृशाः, आत्मादेः कारणाभावात् ॥ ९०... ९४ ॥**

अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम् ।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ९५ ॥
स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः ।

**अपाकजास्त्विति ॥ पाकजरूपादीनां कारणगुणपूर्वकत्वाभावात् अपाकजा इत्युक्तम् । तथाविधम्-अपाकजम् । तथैकत्वमपि बोध्यम् ॥**

---

खदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मभावनात्मकाः, एतेषाम्—अकारणगुणोत्पन्नत्वं साधर्म्यम् । कारणगुणैः =समवायिकारणसमवेतगुणैः उत्पन्नत्वं कारणगुणोत्पन्नत्वं, न कारणगुणोत्पन्नत्वम् अकारणगुणोत्पन्नत्वमित्यर्थः ॥ यथा पटस्य समवायिकारणं तन्तुः तन्तुरूपादिभ्यः पटरूपादीनि उत्पद्यन्ते, एते पटरूपादयः तन्तुरूपपूर्वका उच्यन्ते, आकाशस्य आत्मनश्च नित्यपदार्थस्य समवायिकारणमेव नास्तीति कारणगुणजन्यगुणवत्त्वमपि नास्ति, किन्तु कारणगुणजन्यगुणवद्भिन्नत्वमस्तीति तयोर्गुणेषु कारणगुणपूर्वकभिन्नगुणत्वं साधर्म्यं सूपपद्यते इति बोध्यम् ॥ **मुक्तावल्यां** विभूनां गुणान् परिगणयति—**बुद्धि······शब्दा इति** ॥ 'अकारणगुणोत्पन्ना'इत्यत्र 'न कारणम् अकारणम् , तस्य गुणा'इति भ्रमनिरासाय आह—**कारणगुणेनेति** । समवायिकारणसमवेतगुणेनेत्यर्थः । कार्ये= समवेतद्रव्ये, ये गुणा रूपादय उत्पद्यन्ते ते, कारणगुणपूर्वकाः=समवायिकारणनिष्ठगुणजन्यगुणाः, रूपादयः उच्यन्ते, बुद्ध्यादिशब्दान्ता उपरि दर्शिता गुणास्तु न तादृशाः=न कारणगुणपूर्वकाः,आत्मन आकाशस्य च समवायिकारणादेरेवाऽभावात् । अतः 'स्वाश्रयसमवायिसमवेतगुणाऽजन्यगुणत्वम्— अकारणगुणपूर्वकगुणत्वम् आकाशात्मगुणानां साधर्म्यमित्यर्थः परिघटितः ॥ नित्यरूपे जन्येऽपि च पाकजादौ अवयवाऽवयविनोर्द्वित्वद्विपृथक्त्वाऽतिरिक्तद्वित्वपृथक्त्वादौ कर्मजन्यसंयोगविभागवेगेषु पाकजद्रवत्वे च अतिव्याप्तिवारणाय—अकारणगुणोत्पन्नमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं वक्तव्यम् । भावनात्वसंग्रहाय गुणत्वसाक्षाद्व्याप्यत्वं संस्कारत्वान्यगणत्वव्याप्याऽव्याप्यत्वे सति गुणत्वव्याप्यत्वात्मकं बोध्यम् । परत्वाऽपरत्वयोरतिव्याप्तिवारणाय—परत्वाऽपरत्वाऽवृत्तित्वेन जातिविशेषणीयेति ॥ **वस्तुतस्तु**—कारणगुणोत्पन्नवृत्तिभावनाऽवृत्तिजातिशून्यगुणत्वमेव साधर्म्यं सम्यक् ॥ अन्ये तु स्वाश्रयसमवायिसमवायित्वसम्बन्धेन स्वविशिष्टकिञ्चित्सम्बद्धं यद्यत् स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटविशिष्टपरिमाणाऽवृत्तिगुणवृत्तिजातिमत्त्वं साधर्म्यम् । अपरे तु—समवायघटितसामानाधिकरण्येन क्रियाविशिष्टाऽसमवेतमहत्त्वाऽवृत्तिगुणवृत्तिजातिमत्त्वं साधर्म्यं वदन्तीति बोध्यम् ॥ लक्षणं—बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दभिन्नभिन्नत्वमिति बोध्यम् ॥ ॥ ९०······९४ ॥

मूले—**अपाकजास्त्विति** । अपाकजाः=पाको विलक्षणतेजस्संयोगः तदजन्याः ये, स्पर्शान्ताः= रूपरसगन्धस्पर्शाः, तथाविधम्=अपाकजं=सांसिद्धिकं द्रवत्वम् , चकारेण एकत्वम् , स्नेहः, वेगः, गुरुत्वम् , एकपृथक्त्वम् , परिमाणं, स्थितिस्थापकः, इत्येतेषां गुणानां कारणगुणजन्यत्वं साधर्म्यमित्यर्थः ॥ रूपादौ लक्ष्ये अपाकजपदसार्थक्यमाह—**मुक्तावल्यां पाकजरूपादीनामिति** । अवयविनि घटादावेव अग्निसंयोगजन्यरूपादीनां कारणगुणपूर्वकत्वं नैवास्तीति तत्राऽव्याप्तिः स्यात्सा

संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥ ९६ ॥

संयोगश्चेति ॥ कर्मजन्यत्वं यद्यपि न साधर्म्यं घटादावतिव्याप्तेः, संयोगजसंयोगेऽव्याप्तेश्च, तथापि कर्मजन्यवृत्तिगुणत्वव्याप्यजातिमत्त्वं बोध्यम्। एवमन्यत्राप्यूह्यम् ९६॥

स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके ।

भवेदसमवायित्वम्,

स्पर्शान्तेति ॥ एकपृथक्त्वमित्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयादेकत्वं पृथक्त्वं च

---

धर्म्यस्येति तद्वारणाय अपाकजरूपादय एव लक्ष्या इति दर्शितम् इति भावः॥ अपाकजमिति । सांसिद्धिकद्रवत्वमित्यर्थः ॥ तथैकत्वमपीति । श्लोकोक्त चकारेणैकत्वमपि लक्ष्यान्तर्भावनीयमित्यर्थः ॥ अथ कारणगुणजन्यत्वं 'समवायघटितसामानाधिकरण्यसम्बन्धावच्छिन्नकारणतानिरूपितकार्यतासमानाधिकरणपाकजन्यतावच्छेदकवैजात्याभावविशिष्ट–भावनाव्यक्तयवृत्ति-जातिमत्त्वात्मकं परिष्कृतं साधर्म्यं बोध्यम्। नित्यरूपादेः तादृशरूपत्वादिजातिमत्त्वात् कर्मजवेगस्य तादृशवेगत्वजातिमत्त्वात् लक्षणसमन्वयः ॥ पाकजरूपादावतिव्याप्तिवारणाय जातौ पाकजन्यतावच्छेदकवैजात्याऽभावविशिष्टत्वविशेषणम्। वैशिष्ट्यं च–दैशिकविशेषणतासमवायोभयघटितसामानाधिकरण्येन बोध्यम्। संस्कारत्वजातिमादाय भावनायाम् अतिव्याप्तिवारणाय जातौ भावनाव्यक्तयवृत्तित्वविशेषणम् ॥ अन्ये तु–स्वाश्रयसमवायिमात्रसमवेतस्वसजातीयगुणजन्यवृत्तिभावनावृत्त्यन्य-संख्यात्वपृथक्त्वातिरिक्तजातिमत्त्वं साधर्म्यं वदन्ति ॥ लक्षणम्–अपाकजरूपरसगन्धस्पर्शसांसिद्धिकद्रवत्वस्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणस्थितिस्थापकभिन्नभिन्नत्वमिति बोध्यम् ॥ अथ–पाकजरूपरसगन्धस्पर्शपाकजद्रवत्वद्वित्वादिद्विपृथक्त्वादिसंयोगविभागपरत्वाऽपरत्वानां कारणगुणपूर्वकत्वाऽकारणगुणपूर्वकत्वोभयाऽभाववद्गुणत्वं साधर्म्यमिति बोध्यम् ॥

मूले-संयोगश्चेति । संयोगविभागवेगानां कर्मजत्वं साधर्म्यमित्यर्थः ॥ ननु कर्मजन्यत्वं तेषां न साधर्म्यमित्याशंकते-मुक्तावल्यां-कर्मजन्यत्वं यद्यपीति । भ्रमणात्मकक्रियाजत्वं घटेऽतिव्याप्तमित्यर्थः। ननु-समवायसम्बन्धावच्छिन्नक्रियानिष्ठकारणतानिरूपितसमवायसम्बन्धावच्छिन्नकार्यत्वमिति साधर्म्यं वक्तव्यं, तथा च चक्रभ्रम्यादिजन्यघटादिनिष्ठकार्यतायां समवायसम्बन्धावच्छिन्नत्वाऽभावात् अतिव्याप्तिवारणात् इत्यत आह-संयोगजसंयोगेऽव्याप्तेश्चेति । संयोगजसंयोगे= अवयवादिसंयोगजन्येऽवयविसंयोगे, एवं विभागजविभागे, वेगजवेगे च अव्याप्तिरित्यर्थः ॥ तद्वारणाय परिष्कारमाह-तथापीति । कर्मजन्ये संयोगे विभागे वेगे च वर्तमाना या गुणत्वव्याप्या संयोगत्वं विभागत्वं वेगत्वं जातिस्तद्वत्त्वस्य तत्र समन्वयात् । तथा च-समवायसम्बन्धावच्छिन्नक्रियानिष्ठकारणतानिरूपितसमवायसम्बन्धावच्छिन्नकार्यतासमानाधिकरणभावनाव्यक्तयवृत्तिजातिमत्त्वमिति फलितं साधर्म्यं बोध्यम् । अवयवक्रियाजन्याऽवयविक्रियायामतिव्याप्तिवारणाय कारणतायां समवायसम्बन्धावच्छिन्नत्वनिवेशः । सत्तागुणत्वमादाय अतिव्याप्तिवारणाय-'गुणत्वव्याप्ये'तिपदार्थः भावनाव्यक्त्यवृत्तित्वेन निवेशितः ॥ एवमिति । कर्मजत्वसाधर्म्यमिव, अन्यत्र=उत्तरसाधर्म्येऽपि, दोषवारणाय जातिघटितसाधर्म्यमूह्यमित्यर्थः ॥९५-९६॥

मूले-स्पर्शान्तेति । रूपरसगन्धाऽनुष्णस्पर्शपरिमाणैकत्वैकपृथक्त्वस्नेहशब्दानाम् असमवायिकारणत्वं साधर्म्यमित्यर्थः ॥ मुक्तावल्याम् एकपृथक्त्वपदेन एकत्वम् एकपृथक्त्वं च गृहीतुमाह-एकपृथक्त्वमित्यत्रेति। पृथक्त्वपदेनेति। पृथक्त्वपदस्यैकपृथक्त्वे लक्षणेति बोध्यम् ॥ साधर्म्य-

**ग्राह्यम् । पृथक्त्वपदेन चैकपृथक्त्वम् ॥ भवेदसमवायित्वमिति ॥ घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति । एवं कपालादिपरिमाणादीनां घटादिपरिमाणाद्यसमवायिकारणत्वम् । शब्दस्यापि द्वितीयशब्दं प्रति । एवं स्थितिस्थापकैकपृथक्त्वयोरपि ज्ञेयम् ॥**

---

मुपपादयति–**घटादीति** । घटात्मकाऽवयविस्थरूपरसस्पर्शगन्धान् प्रति कपालात्मकाऽवयवस्थरूपरसस्पर्शगन्धाः असमवायिकारणानि, घटपरिमाणं प्रति कपालपरिमाणम् असमवायिकारणम्, उत्तरोत्तरशब्दं प्रति पूर्वपूर्वशब्दः असमवायिकारणं, एवं कटस्थस्थितिस्थापकयत्नं प्रति शलाकापट्टीस्थस्थितिस्थापकयत्नः असमवायिकारणम्, अवयव्येकपृथक्त्वं प्रति अवयवैकपृथक्त्वम् असमवायिकारणम् बोध्यम् ॥ तथा च–निमित्तकारणताशून्यत्वे सति समवायसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्व–समवायसम्बन्धावच्छिन्नकार्यतानिरूपितस्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नकारणत्वाऽन्यतरवत्त्वं तेषां साधर्म्यमितिबोध्यम् । ननु प्राचां मते प्राकजरूपादौ, उभयमते च चरमाऽवयविरूपादौ, अन्त्यशब्दे चाऽव्याप्तिः, अतिव्याप्तिश्चात्मविशेषगुणेष्विति चेन्न । तादृशकारणत्वान्यतरसमानाधिकरणा स्वसमवायिसंयुक्तसमवेतत्वसमानाधिकरणकालिकसम्बन्धाऽनवच्छिन्नप्रत्यक्षत्वाऽसमानाधिकरणकार्यतानिरूपितकारणताश्रयीभूतं यद्यत् स्वं तावदन्यतमाऽसमवेतद्वित्वद्विपृथक्त्वान्यतराऽसमवेतात्मविशेषगुणान्यतमाऽसमवेता च या जातिस्तादृशजातिमत्त्वस्य विवक्षितत्वात् । रूपत्वरसत्वगन्धत्वानुष्णाशीतत्वपरिमाणत्वैकत्वैकपृथक्त्वत्वस्नेहत्वशब्दत्वस्थितिस्थापकत्वात्मकजातीरादाय लक्षणसमन्वयात् । जातौ प्राथमिकान्यतमाऽसमवेतत्वविशेषणाद् उष्णस्पर्शादौ नातिव्याप्तिः । रूपादीनां कालिकेन कार्यमात्रकारणत्वात् तावदन्यतमत्वाश्रयत्वेन, रूपत्वादीनां तावदन्यतमाऽसमवेतत्वाऽभावाद् असंभववारणाय–अन्यतमकोटिप्रविष्टकार्यतायां–कालिकसम्बन्धाऽनवच्छिन्नत्वनिवेशः ॥ विषयविधया समवायेन च प्रत्यक्षकारणस्य रूपादेः तादृशान्यतमत्वाश्रयत्वाद् असंभववारणाय अन्यतमकोटिप्रविष्टकार्यतायां प्रत्यक्षत्वाऽसमानाधिकरणत्वनिवेशः । संख्यात्वपृथक्त्वादिकमादाय द्वित्वद्विपृथक्त्वादावतिव्याप्तिवारणाय जातौ द्वित्वद्विपृथक्त्वान्यतराऽसमवेतत्वनिवेशः । ज्ञानादिष्वतिव्याप्तिवारणाय–जातौ द्वितीयान्यतमाऽसमवेतत्वनिवेशः । **अथवा**–कारणतावच्छेदकसम्बन्धेन स्वाधिकरणे एव कार्यतावच्छेदकसम्बन्धेन वर्तमानं यत् कार्यं तन्निरूपितनिमित्तकारणताशून्यत्वे सति तस्याऽसमवायिकारणत्वं तत्त्वम् ॥ 'कार्यताविशिष्टत्वमि'ति यावत् । वैशिष्टं च–स्वविशिष्टनिमित्तकारणताशून्यत्व–स्वनिरूपितत्वाऽसमवायिकारणतावत्त्वोभयसम्बन्धेन, वैशिष्ट्यं स्वनिरूपितत्व–स्ववृत्तित्वोभयसम्बन्धेन, स्ववृत्तित्वं च–स्वसमानाधिकरणोभयाऽवृत्तिधर्मावच्छिन्नस्वावच्छेदकसम्बन्धावच्छिन्नाधेयताकूटविशिष्टत्वसम्बन्धेन । वैशिष्ट्यं च–स्वानिरूपकाधिकरणानिरूपिताधेयतावत्त्वसम्बन्धेन । आधेयतावत्ता च स्वावच्छेदकधर्मसामानाधिकरण्य–स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन । तद्वृत्तिगुणत्वव्याप्यव्याप्यजातिमत्त्वम् असमवायिकारणत्वम् । तथाहि–रूपरसगन्धानुष्णस्पर्शेषु प्रत्येकं रूपत्वरसत्वाद्यवच्छिन्नकार्यताः आदाय लक्षणसमन्वयः । एकत्वैकपृथक्त्वयोरपि एकत्वत्वैकपृथक्त्वत्वावच्छिन्नकार्यतामादाय लक्षणसमन्वयः । **अथवा**–उभयाऽवृत्तिकार्यनिरूपितनिमित्तकारणत्वरहितत्वे सति उभयाऽवृत्तिकार्यनिरूपिताऽसमवायिकारणत्वमेव साधर्म्यम् । स्नेहस्योभयाऽवृत्तिकार्यनिरूपितनिमित्तकारणत्वविरहात् लक्षणसमन्वयात् ॥ **अथवा**–यत्किंचित्कार्यतावच्छेदकावच्छिन्नाधिकरणनिष्ठाऽभावीयकारणतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकनिमित्तकारणतावच्छेदकरहितत्वे सति तादृशयत्किंचिदसमवायिकारणतावच्छेद-

अथ वैशेषिके गुणे ॥ ९७ ॥

आत्मनः स्यान्निमित्तत्वम्,

निमित्तत्वमिति ॥ बुद्धयादीनामिच्छादिनिमित्तत्वादिति भावः ॥

उष्णस्पर्शगुरुत्वयोः ।

वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥ ९८ ॥

द्विधैव कारणत्वं स्याद्,

द्विधैवेति ॥ असमवायिकारणत्वं निमित्तकारणत्वं च । तथाहि--उष्णस्पर्श उष्णस्पर्शस्यासमवायिकारणं, पाकजे निमित्तम् । गुरुत्वं गुरुत्वपतनयोरसमवायिकारणम्, अभिघाते निमित्तम् । वेगो वेगस्पन्दनयोरसमवायी, अभिघाते निमित्तम् ।

---

कधर्मवत्त्वमेव साधर्म्यम् ॥ लक्षणं–रूपरसगन्धाऽनुष्णस्पर्शपरिमाणैकत्वैकपृथक्त्वस्नेहशब्दभिन्नभिन्नत्वमिति बोध्यम् ॥

मूले–अथेति । आत्मनः वैशेषिके गुणे=बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मभावनात्मकगुणानां निमित्तकारणत्वं साधर्म्यमित्यर्थः ॥ "वैशेषिके गुणे आत्मनो निमित्तकारणत्व'मिति भ्रमवारणाय मुक्तावल्यामाह–बुद्धयादीनामिति । प्रवृत्तिं प्रति इच्छा निमित्तकारणम्, इच्छां प्रति ज्ञानं निमित्तकारणम्, सुखं प्रति धर्मः, दुःखं प्रति अधर्मः, इत्येवं निमित्तत्वं बोध्यमित्यर्थः ॥ निमित्तकारणत्वं च – यत्किञ्चित्कार्यतानिरूपितसमवायसम्बन्धावच्छिन्न-निमित्तकारणतावत्त्वं बोध्यम् । द्रव्ये स्वध्वंसप्रत्यक्षयोः स्वस्य तादात्म्येन कारणतया नातिप्रसंगः । ईश्वरगुणानामपि तत्समानाधिकरणसंयोगविभागादिषु समवायेन निमित्तकारणतया लक्षणसंगतिः ॥ वस्तुतस्तु–असमवायिकारणताशून्यत्वे सति समवायविषयित्वान्यतरसम्बन्धावच्छिन्नकारणतावत्त्वमिति साधर्म्यं बोध्यम् । योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यतया तन्नाशकतामादाय सर्वत्र लक्षणसमन्वयात् । अथवा–ज्ञानादिनिष्ठसमवायसम्बन्धावच्छिन्नकार्यतानिरूपितसंयोगाऽवृत्तिसमवायसम्बन्धावच्छिन्नकारणत्व–ज्ञानादिनिष्ठसमवायसम्बन्धावच्छिन्नकारणतानिरूपितसमवायसम्बन्धावच्छिन्नकार्यतान्यतरवत्त्वं साधर्म्यम् । तेन सुखादौ लक्षणसमन्वयः । आत्ममनःसंयोगेऽतिव्याप्तिवारणाय–संयोगाऽवृत्तित्वेति । लक्षणम्–आत्मविशेषगुणभिन्नभिन्नत्वमिति बोध्यम् ॥

मूले–उष्णस्पर्शगुरुत्वयोरिति । उष्णस्पर्शगुरुत्ववेगद्रवत्वसंयोगविभागानां द्विधैव कारणत्वम्=असमवायिकारणत्वं निमित्तकारणत्वं च साधर्म्यमित्यर्थः ॥ द्विधैव कारणत्वपदार्थमाह–मुक्तावल्याम्–असमवायिकारणत्वमिति । असमवायिकारणत्वनिमित्तकारणत्वोभयवत्त्वं साधर्म्यमित्यर्थः । तदुपपादयति–तथाहीति । उष्णस्पर्शः=अवयवगतोष्णस्पर्शः अवयविगतोष्णस्पर्शाऽसमवायिकारणम्, पाकजे च=विजातीयतेजस्संयोगजन्यरूपादौ च निमित्तकारणं भवतीत्यर्थः । अवयवगुरुत्वम् अवयविगुरुत्वं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन कारणम्( असमवायिकारणं ) भवति । अथ च फलादिपतनक्रियां प्रति समवायसम्बन्धेन कारणम्( असमवायिकरणं )भवतीति । अभिघाते=शब्दजनकसंयोगं प्रति तु निमित्तकारणं भवतीत्यर्थः ॥ अवयववेगः अवयविवेगं प्रति स्वसमवायिसमवेतत्वसम्बन्धघटिताऽसमवायिकारणं भवति, स्पन्दनं=पृथ्वीजलादिक्रियां प्रति तु वेगः समवायसम्बन्धघटिताऽसमवायिकारणं भवति, अथ च अभिघाते=शब्दजनकसंयोगं प्रति तु

द्रवत्वं द्रवत्वस्यन्दनयोरसमवायि, सङ्ग्रहे निमित्तम् । भेरीदण्डसंयोगः शब्दे निमित्तं, भेर्याकाशसंयोगेऽसमवायी । वंशदलद्वयविभागः शब्दे निमित्तं वंशदलाकाशविभागेऽसमवायीति ॥

अथ प्रादेशिको भवेत् ।
वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥ ९९ ॥

---

निमित्तकारणं भवतीत्यर्थः ॥ अवयवद्रवत्वम् अवयविद्रवत्वं प्रति स्वसमवायिसमवेतत्वसम्बन्धघटिताऽसमवायिकारणं भवति, स्यन्दनात्मक जलादिक्रियां प्रति समवायघटितासमवायिकारणं भवति, अथ च संग्रहे=पिष्टादिसंयोगं पिण्डीभावविशेषं प्रति निमित्तकारणं भवतीत्यर्थः ॥ एवं भेरीदण्डयोः संयोगः शब्दं प्रति निमित्तकारणम् , अथ च भेर्याकाशसंयोगे=भेर्यवच्छिन्नाकाशनिष्ठदण्डसंयोगे,ऽसमवायिकारणं भवतीत्यर्थः ॥ यदि तु "भेर्याकाशसंयोगोऽसमवायी"ति प्रथमान्तपाठः, तदा दण्डशब्दः दण्डावयवपरः, भेर्याकाशसंयोगः–भेर्याकाशाभ्यां दण्डसंयोग इत्यर्थः । आकाशपदं दृष्टान्तार्थम् । तथा च–यथा दण्डाकाशसंयोगं प्रति दण्डावयवाकाशसंयोगः असमवायिकारणं, तथा दण्डभेरीसंयोगं प्रति दण्डावयवभेरीसंयोगः असमवायिकारणमित्यर्थः । शब्दे च निमित्तकारणमित्यर्थ ऊह्यः ॥ एवं शब्दं प्रति वंशदलद्वयविभागः निमित्तकारणम् भवति, वंशदलाकाशयोर्विभागं प्रति असमवायिकारणं भवतीत्यर्थः ॥ न च–असमवायिकारणत्वनिमित्तकारणत्वोभयवत्त्वलक्षणं चरमाऽवयविसमवेतोष्णस्पर्शादावव्याप्तम् अतिव्याप्तं च रूपादाविति वाच्यम् । समवायसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्व-तादृशकार्यतानिरूपितसमवायघटितसामानाधिकरण्यसम्बन्धावच्छिन्नकारणत्वाऽन्यतरसमानाधिकरणस्वसमवायिसंयुक्तसमवेतत्वसमानाधिकरणकालिकसम्बन्धानवच्छिन्नप्रत्यक्षत्वाऽसमानाधिकरणकार्यतानिरूपितकारणताश्रयीभूतं यद्यत् स्वं तावदन्यतमसमवेतशीतस्पर्शभावनाकर्मान्यतमाऽसमवेतजातिमत्त्वस्य विवक्षितत्वात् । तत्र तादृशोष्णत्वादिजातिमादाय चरमावयविसमवेतोष्णस्पर्शादावपि लक्षणसमन्वयः ॥ भेर्यवच्छिन्नदण्डाकाशसंयोगं प्रति भेरीदण्डसंयोगस्य समवायप्रत्यासत्त्यैव असमवायिकारणत्वात् तत्संग्रहार्थं लक्षणे प्राथमिकाऽसमवायिकारणत्वप्रवेशः । उष्णस्पर्शसंग्रहाय द्वितीयाऽसमवायिकारणत्वनिवेशः । अनुगमाय तयोरन्यतरत्वेन निवेशः । रूपत्वादिकमादायाऽतिप्रसंगनिरासाय जातौ निमित्तकारणत्वपर्यवसितार्थान्यतमसमवेतत्वनिवेशः । रूपादीनामपि कालिकेन कालविधया कार्यमात्रं प्रति कारणतया तत्समवेतरूपत्वादिकमादायातिप्रसंगवारणाय अन्यतमघटककार्यतायां कालिकसम्बन्धानवच्छिन्नत्वनिवेशः । रूपादीनामपि स्वप्रत्यक्ष-द्रव्यादिप्रत्यक्षनिष्ठतादृशकार्यतानिरूपितकारणतावत्त्वेनाऽन्यतमत्वाश्रयत्वात् तत्समवेतरूपत्वादिजातिमादाय अतिप्रसंगवारणाय अन्यतमघटककार्यतायां प्रत्यक्षत्वाऽसमानाधिकरणत्वनिवेशः । स्पर्शत्वसंस्कारत्वकर्मत्वगुणत्वादिजातौरादाय शीतभावनास्थितिस्थापककर्मस्वतिव्याप्तिवारणाय जातौ तादृशान्यतमाऽसमवेतत्वनिवेशः ॥ अथवा असमवायिकारणवृत्तिनिमित्तकारणवृत्तिगुणत्वव्याप्यजातिमत्त्वं साधर्म्यमित्यर्थः ॥ यद्वा–समवायसम्बन्धावच्छिन्नकार्यताविशिष्टगुणत्वव्याप्यव्याप्यजातिमत्त्वं साधर्म्यम् । वैशिष्ट्यं च–स्वनिरूपितनिमित्तकारणतावद्वृत्तित्व–स्वकालीनकार्यतानिरूपिताऽसमवायिकारणतावद्वृत्तित्वोभयसम्बन्धेन । तथा च सर्वत्र समन्वयः ॥ लक्षणम्–उष्णस्पर्शगुरुत्ववेगद्रवत्वसंयोगविभागभिन्नभिन्नत्वमिति बोध्यम् ।

मूले–अथेति । विभुगुणः=विभ्वोः आकाशात्मनोः ये विशेषगुणाः, शब्दज्ञानसुखदुःखे

प्रादेशिकः=अव्याप्यवृत्तिः ॥ ९७ ॥ ९८ ॥ ९९ ॥

च्छाद्वेषभावनाधर्माऽधर्माः संयोगविभागौ च, तेषां, प्रादेशिकत्वं=प्रदेशे भवत्वं,=दैशिकाऽव्याप्यवृत्तिगुणत्वं साधर्म्यमित्यर्थः ॥ प्रकृष्टदेशभवत्वस्य प्रादेशिकत्वस्य रूपादावतिव्याप्तत्वात्--मुक्तावल्यां-प्रादेशिकशब्दार्थमाह-अव्याप्यवृत्तिरिति । दैशिकाऽव्याप्यवृत्तिरित्यर्थः । तेन कालिकाऽव्याप्यवृत्तिरूपादौ नातिव्याप्तिः । न च-ईश्वरज्ञानादेः दैशिकाऽव्याप्यवृत्तित्वाभावात् अव्याप्तिरिति वाच्यम् । दैशिकाऽव्याप्यवृत्तिवृत्तिवेगाऽवृत्तिजातिमत्त्वस्य तदर्थत्वात् । संस्कारत्वगुणत्वादिकमादाय अतिप्रसंगवारणाय वेगाऽवृत्तित्वनिवेशः । तादृशज्ञानत्वादिकमादायेश्वरज्ञानादौ समन्वयः ॥ स्वप्रतियोगितावच्छेदकसम्बन्धेन स्वप्रतियोगिमत्ताबुद्धिविरोधितावच्छेदकविषयितावच्छेदकीभूतकालाऽनवच्छिन्नसम्बन्धेन स्वप्रतियोग्यधिकरणे वर्तमानत्वं दैशिकाऽव्याप्यवृत्तित्वं बोध्यम् ।९७।९८।९९॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य्य-नव्यन्यायाचार्य्य-सांख्ययोग-वेदान्त-मीमांसातीर्थ,--पण्डित"श्रीकृष्णवल्लभाऽऽचार्य्य"स्वामिनारायणविरचितायां न्यायसिद्धान्तमुक्तावल्याः किरणावल्यां गुणसाधर्म्यनिरूपणम् ॥



# अथ प्रत्येकगुणनिरूपणम्

चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् ।
चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥ १०० ॥

**चक्षुरिति ॥ रूपत्वजातिस्तु प्रत्यक्षसिद्धा । रूपशब्दोल्लेखिनी प्रतीतिर्नास्तीति चेन्मास्तु रूपशब्दप्रयोगः, तथापि नीलपीतादिष्वनुगतजातिविशेषोऽनुभवसिद्ध एव । रूपशब्दाप्रयोगेऽपि नीलो वर्णः पीतो वर्ण इति वर्णशब्दोल्लेखिनी प्रतीतिर-**

---

गुणसाधर्म्यवैधर्म्ये निरूप्य यथोद्देशं प्रत्येकं लक्षयिष्यन् आदौ रूपलक्षणमाह–मूले–**चक्षुर्ग्राह्यमिति** । रूपं चक्षुरिन्द्रियग्राह्यं भवति, चक्षुर्ग्राह्यत्वं नाम–चक्षुरिन्द्रियमात्रजन्यप्रत्यक्षविषयत्वमित्यर्थः । तच्च रूपं द्रव्यादेः=द्रव्यगुणादिपदार्थानाम्, उपलम्भकम्=साक्षात्परम्परया वा प्रत्यक्षे कारणं भवतीत्यर्थः । तच्च चाक्षुषप्रत्यक्षे चक्षुषः सहायकं निमित्तकारणं भवतीत्यर्थः । तच्च–शुक्लनीलपीतरक्त-हरितकपिशचित्रभेदात् सप्तधा भवतीत्यर्थः ॥ निर्वक्तव्यस्य रूपलक्षणस्य लक्ष्यतावच्छेदके प्रमाणमाह–**रूपत्वजातिस्त्विति** । सर्वेषु रूपेषु रूपपदशक्तिग्रहाय अवश्यकल्पनीयायाः सकलरूपोपस्थितेर्निर्वाहाय अवश्यकल्प्यसामान्यलक्षणाजन्यप्रत्यक्षप्रतीतिसिद्धेत्यर्थः । अत्र रूपनिष्ठविशेष्यतासम्बन्धेन रूपत्वप्रकारकप्रत्यक्षं प्रति स्वविषयसामान्यवत्त्वसम्बन्धेन रूपत्वज्ञानं कारणमिति तादृशकारणतायां विषयविधयाऽवच्छेदकतया रूपत्वजातिसिद्धिरिति ध्येयम् ॥ **ननु**–रूपशब्देन सर्वरूपोपस्थितिर्यदि भवेत् तर्हि तदर्थं रूपपदशक्तिज्ञाननिर्वाहाय रूपत्वसामान्यकल्पनम् आवश्यकम्, तदेव तु न, इति कथं रूपत्वजातिसिद्धिसंभवः,–इत्याशंकते–**रूपशब्दोल्लेखिनीति** । उल्लेखः आकारः–रूपस्य स्वरूपादावपि अतिप्रसंगात् रूपशब्दप्रतिपाद्यत्वोल्लेखिनी प्रतीतिर्नास्ति प्रमा इत्यर्थः । प्रकारान्तरेण तादृशप्रतीतिं साधयितुम् उत्तरयति-**मास्त्विति** । रूपशब्दप्रयोगः प्रमात्मकतादृशप्रतीतिनिर्वाहको माभूदित्यर्थः ॥ **ननु**–तर्हि कथं रूपत्वजातिः सेत्स्यति ?, तत्साधकव्यवहाराऽभावादित्यत आह–**तथापीति** । तथाव्यवहारस्याऽभावेऽपि नीलपीतादिमात्रेषु अनुगतलक्ष्यतावच्छेदकजातिविशेषः प्रत्यक्षानुभवसिद्ध एव भवतीत्यर्थः ॥ वर्णशब्दप्रयोगात् तद्विवरणात्मकरूपशब्दप्रयोगस्य प्रमात्मक'रूप'मितिप्रतीतिनिर्वाहकत्वमप्युपपादयति–**रूपशब्दाऽप्रयोगेऽपीति** । रूपशब्दप्रयोगस्य 'रूपमि'तिप्रमात्मकप्रतीत्यनिर्वाहकत्वेऽपि, 'नीलो वर्णः, पीतो वर्णः, इत्यादि'वर्ण'विशेषोल्लेखिनी प्रत्यक्षप्रतीतिरस्त्येवेति तादृशानुगत'वर्ण'इति–प्रतीत्या वर्णत्वजातिसिद्धौ वर्णत्वमेव रूपत्वमिति व्यवह्रियते इति रूपत्वजातेर्लक्ष्यतावच्छेदकत्वं सुकरमिति भावः, वर्णशब्दस्तु चातुर्वर्ण्यादिप्रतिपादकोऽपि रूढ्या न तथेति हृदयम् ॥ प्रसङ्गादग्रे निरूपणीयानां नीलत्वादीनामपि सत्त्वे प्रमाणमाह–**एवमिति** । 'इदं रूपं नील'मित्यादिप्रतीत्या नीलत्वं सिद्ध्यति । आदिना रूपत्वव्याप्यजातिमात्रस्य तत्तत्प्रतीत्या सिद्धिर्बोध्या ॥ वस्तुतस्तु 'अकारादयो वर्णा ब्राह्मणादयो वर्णा इतिव्यवहारस्य रूपभिन्नेऽपि सत्त्वान्न 'वर्ण'प्रतीतिः रूपत्वसाधिकेति अस्वरसो बोध्यः ॥ किन्तु–'द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति समवायसम्बन्धेन उद्भूतरूपत्वावच्छिन्नस्य हेतुत्वेन कारणतावच्छेदकघटकतया नीलादिनिखिलरूपवृत्तिरूपत्वजातिसिद्धिर्बोध्या, न च

स्त्येव। एवं नीलत्वादिकमपि प्रत्यक्षसिद्धम्। न चैकैका एव नीलरूपादिव्यक्तय इत्येकव्यक्तिवृत्तित्वान्नीलत्वादिकं न जातिरिति वाच्यम्, नीलो नष्टो रक्त उत्पन्न इत्यादिप्रतीतेर्नीलादेरुत्पादविनाशशालितया नानात्वात्, अन्यथा एकनीलनाशे जगदनीलतामापद्येत। न च नीलसमवायरक्तसमवाययोरेवोत्पादविनाशविषयकोऽसौ

---

परमाण्वादिरूपस्य चाक्षुषाऽहेतुतया तादृशकारणतावच्छेदकतया सिद्धरूपत्वादिजातेस्तत्साधारण्याऽसंभव इति वाच्यम्। परमाण्वादिरूपस्य चाक्षुषत्वरूपयोग्यतास्वीकारे बाधकाऽभावात्। न चैवं सति परमाण्वादेश्चाक्षुषापत्तिरिति वाच्यम्। चाक्षुषत्वव्यापकप्रत्यक्षत्वावच्छिन्नं प्रति महत्त्वस्य हेतुतया तदभावेन व्यापकधर्मप्रत्यक्षत्वावच्छिन्नानुत्पत्त्या व्याप्यधर्मचाक्षुषत्वावच्छिन्नोत्पादनाऽसंभवात्॥ अन्ये तु–चाक्षुषत्वावच्छिन्नं प्रति उद्भूतरूपत्वेन कारणतया रूपत्वसिद्धिः। तस्य अनुद्भूतरूपसाधारण्ये तु समानाग्निसंयोगजनितत्वमेव मानं बोध्यम्। नीलत्वादिजातिस्तु–अयसा हरीतकीसारादेः सम्मेलनाद् विलक्षणतेजस्संयोगबलेन कृष्णादिरूपोत्पत्तेरनुभवसिद्धत्वेन तज्जन्यतावच्छेदकतया सिद्ध्यतीति। न च एतस्याऽनुद्भूतरूपसाधारण्ये किं मानमिति वाच्यम्। 'पाकवशात्कृष्णादिरूपोत्पत्तेरनुभवसिद्धत्वेन पाकस्य च विलक्षणोष्णस्पर्शवदग्निसंयोगरूपतया तस्याऽनुद्भूतरूपवद्वस्तुष्वप्युत्पत्तौ बाधकाऽभावेन तत्रापि तत्सिद्धेः। न चैवमपि पाकजनीले एव तादृशी जातिः सिद्ध्यति, नाऽपाकजे इति वाच्यम्। समवायेन नीलत्वावच्छिन्नं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलस्य कारणतया तत्सिद्धेरावश्यकत्वादिति वदन्ति। अथवा–रूपवति रूपान्तराऽनुत्पत्त्या 'समवायेन रूपं प्रति समवायेन रूपस्य प्रतिबन्धकत्वं वक्तव्यम्, एवं च तादृशप्रतिबन्धकतावच्छेदकतया नीलादिरूपमात्रवृत्तिरूपत्वजातिसिद्धिः। एवं नीलपीतादिमति नीलपीताद्यन्तराऽनुत्पत्त्या समवायेन नीलादिकं प्रति समवायेन नीलादेः प्रतिबन्धकत्वं वक्तव्यम्, एवं च तादृशप्रतिबन्धकतावच्छेदकतयैव नीलत्वादिजातिसिद्धिर्बोध्येति॥ ननु–सामान्यलक्षणाजन्यप्रत्यक्षप्रतीतिविनिर्वाहाय कल्प्यमानो धर्मो बाधकाऽभावे जातिरिति वक्तव्यम्। अत्र तु एकव्यक्तिवृत्तित्वमेव बाधकमित्याशंकते–न चैकैकेति। एका एका=स्वाश्रयत्व-स्वाश्रयप्रतियोगिकभेदवत्त्वोभयसम्बन्धेन नीलत्वादिशून्या, आदिना पीतादिपरिग्रहः। तथा च एकव्यक्तिवृत्तित्वात्मकबाधकसत्त्वात् नीलत्वपीतत्वादिकं न जातिरिति भावः। समाधत्ते–नीलो नष्ट इति। 'पटनीलो नष्टः' 'घटनीलो वर्तते' इति प्रतीत्या, एवं 'घटे रक्त उत्पन्नः, पटे रक्तो नष्टः' इतिप्रतीत्या च नीलादीनामनेकव्यक्तित्वसिद्धेः। अनुमानं तु—'घटनीलः,--पटनीलाद्भिद्यते,--पटनीलध्वंसाधिकरणकालवृत्तित्वादि'त्यादिरीत्या नीलरूपाणां नानात्वम्=अनेकव्यक्तित्वं सिद्ध्यतीति॥ ननु 'घट नीलो नष्ट'इत्यादिप्रतीतिः नाशप्रतियोगितया नीलाऽभिन्नघटमवगाहते न तु घटसमवेतनील रूपमित्यत आह–अन्यथेति।,घटादिसंसारीणपदार्थगतनीलस्यैकव्यक्तित्वे इत्यर्थः। नीलाऽभिन्नघटनाशेन तत्समवेतनीलरूपस्याऽवश्यं नाशाद् एकव्यक्तेरेकत्र नाशे सर्वत्र नाशात् जगत् अनीलताम्=नीलरूपशून्यताम् आपद्येत, तत्तु न दृश्यते, तस्मात् नीलान्यनेकानीति तत्रस्थनीलत्वस्य जातित्वमव्याहतमिति भावः॥ अथ–समवायस्य नानात्ववादी शंकते–न च नीलसमवायेति। असौ प्रत्ययः='नीलो नष्टः, रक्त उत्पन्नः'इत्यादिप्रत्ययः नीलरूपप्रतियोगिकसमवायनाशविषयकः, रक्तरूपप्रतियोगिकसमवायोत्पत्तिविषयकश्च, न तु नीलरूपनाशविषयको न वा रक्तरूपोत्पत्तिविषयकः, तथा च नीलादेरेकव्यक्तित्ववत् नित्यतास्वीकारेऽपि बाधकाऽभावः, तादृशनित्यैकनीलव्यक्तिवृत्तित्वात् नीलत्वं न जातिः, तथा रक्तत्वादिकमपीतिभावः॥ समाधत्ते–प्रतीत्येति। 'नीलो नष्टः,

**प्रत्यय इति वाच्यम्, प्रतीत्या समवायानुल्लेखात् । न च स एवायं नील इति प्रत्यक्षबलाल्लाघवाच्चैक्यमिति वाच्यम्, उक्तप्रत्यक्षस्य तज्जातीयविषयकत्वात्सैवेयं गुर्जरीतिवत्। लाघवं तु प्रत्यक्षबाधितम् ,अन्यथा घटादीनामप्यैक्यप्रसङ्गात्, उत्पाद-**

---

रक्त उत्पन्नः'-इत्यादिप्रतीत्या, समवायस्य-अनुल्लेखात्=अविषयीकरणात्, 'नील'पदस्य समवाये शक्त्यभावादिति भावः । तथा च नीलरूपादेरेव नाशप्रतियोगितयोक्तप्रतीत्या बोधनात् नीलादेरनेकव्यक्तित्वेन नीलत्वादेर्जातित्वे बाधकाऽभावात् ॥ ननु यत्र भूतलादौ घटादिकमपसारितं पुनरानीतं च, तत्र घटानयनसमये घटाभावो नष्ट इति प्रतीतेः सम्बन्धाऽनुल्लेखित्वेन सम्बन्धध्वंसाद्यवगाहित्वस्य कल्पयितुमशक्यत्वेऽपि यथा तत्र नाशधात्वर्थः केवलाऽभाव एवाश्रीयते, 'भूतले घटाभावो नष्ट' इति प्रतीतिश्च घटाभावे भूतलनिष्ठाऽभावप्रतियोगित्वावगाहितया उपपाद्यते,अन्यथा घटाभावस्य ध्वंसोत्पादयोरवगाहनाऽसंभवात्, घटाभावस्य चैक्यं लाघवात् प्रत्यभिज्ञाबलाच्चाऽभ्युपेयते, तथा इहाऽपि 'नीलो नष्ट'इतिप्रतीतिरपि नीलादौ केवलात्यन्ताभावप्रतियोगित्वावगाहितयैव चरितार्था स्यात्,लाघवेन प्रत्यभिज्ञातश्च सिद्धस्य नीलादेरैक्यस्य प्रतिक्षेप्तुमशक्यत्वादित्यभिप्रायवान् शंकते-**न च स एवायमिति** । 'स एवाऽयं नील' इत्याकारकाऽभेदावगाहिप्रत्यक्षबलात् , नीलादेरेकव्यक्तित्वं स्वीकार्यमित्यर्थः ॥ ननु 'स एवाऽयं नील'इतिप्रतीत्या न तन्नीलैतन्नीलयोरभेदो विषयीक्रियते,अन्यथा नीलनीलतरादिव्यवहारविरोधप्रसंगात्, किन्तु तत्सजातीयत्वमेवेति न नीलव्यक्तीनामैक्यसिद्धिरित्याशंकानिरासायाऽऽह-**लाघवाच्चेति** । एकस्य तादृशप्रत्यक्षविषयत्वप्रयुक्तलाघवाच्च नीलादीनामेकव्यक्तित्वमित्यर्थः ॥ नीलनीलतरादिप्रतीतिश्च रूपान्तराऽसम्भेदविषयकतयैवोपपादनीयेति भावः ॥ क्रमेणोत्तरयति-**उक्तप्रत्यक्षस्येति** । 'स एवायं नील' इति प्रत्यक्षस्य, तज्जातीयविषयत्वात्=पूर्वानुभूतनीलव्यक्तिसजातीयनीलव्यक्तिविषयकत्वादित्यर्थः ॥ अन्यथा तारतम्यव्यवहारविरोधप्रसंगादिति भावः ॥ ननु सजातीयाऽवगाहितादृशप्रत्यक्षम् अदृष्टचरमित्याशंकाम् उदाहृत्य परिहरति-**सैवेयमिति** । गुर्जरदेशोद्भवां दृष्टपूर्वां नारीं दृष्ट्वा पुनः प्रत्यभिज्ञानं भवति 'सैव इयं गुर्जरी'इति, गुर्जरदेशोद्भवनारीपिण्डस्य पूर्वदर्शनोत्तरम् अवयवह्रासवृद्ध्यादिना अवयवान्तरतां प्राप्तस्य यथा 'सा एव इयं नारी गुर्जरी'इति पूर्वपिण्डसजातीयपिण्डस्य विषयिणी प्रतीतिर्भवति तथा 'सोऽयं नील'इत्यपि प्रतीतिः नीलसजातीयनीलविषयिणी भवतीति नीलव्यक्तीनामनेकत्वात् नीलत्वादिकस्य जातित्वे बाधकाऽभाव इत्यर्थः ॥ लाघवमपि निषेधति-**लाघवं त्विति** । नीलादीनामनेकत्वकल्पने तदुत्पत्तिनाशकल्पने गौरवाऽपेक्षया एकव्यक्तित्वकल्पने एकस्य तादृशप्रत्यक्षविषयत्वप्रयुक्तं यत् लाघवं तदपीत्यर्थः। प्रत्यक्षबाधितम्='नीलो नष्ट रक्त उत्पन्न' इतिप्रात्यक्षिकबाधज्ञानेन बाधितमेवातो न वस्तुसाधकमिति भावः ॥ **ननु**-'नीलो नष्ट'इति प्रतीतेः नानासमवायालम्बनत्वस्वीकारे सति लाघवं न बाध्यते इत्यत आह-**अन्यथेति** । लाघवस्य अबाधिततया वस्तुसाधकत्वे तु, घटादीनामपि=घटत्वावच्छिन्नानां पटत्वावच्छिन्नानाम्, ऐक्यप्रसङ्गात्=एकैकव्यक्तित्वापत्तिः स्यात्, लाघवबलादिति भावः। तथा च सति 'घटो नष्ट'इतिप्रतीतेरपि अभावमात्रविषयकत्वस्यैव कल्पनीयत्वप्रसक्त्या ध्वंसप्रागभावादेरप्यपलापापत्तिः स्यादिति हृदयम्॥ **ननु**-न वयं 'नष्ट'इतिप्रतीतेरभावमात्रविषयकत्वं कल्पयित्वा नीलादीनामैक्यमुपपादयामः, येन ध्वंसप्रागभावयोरेव जगति अकल्पनीयत्वापत्तिः संभाव्येत, किन्तु 'नष्ट'इत्यस्य नाशप्रतियोगिसम्बन्धप्रतियोगित्वमर्थं कल्पयाम इति न दोषः, प्रत्ययार्थस्यैतादृशस्य कल्पने बाधकाऽभावात् । एवं च अभावस्थलेऽपि वैशिष्ट्याख्यसम्बन्धस्य तथाविधस्य स्वीकरणात् 'नष्ट'इतिप्रत्ययोपपत्तिरित्याशंक्याह-**उत्पादेति** । 'घटो नष्टः, घट

**विनाशबुद्धेः समवायालम्बनत्वापत्तेरिति ॥ एतेन रसादिकमपि व्याख्यातम् ॥ चक्षुर्ग्राह्यमिति ॥ चक्षुर्ग्राह्यविशेषगुण इत्यर्थः। एवमग्रेऽपि ॥ द्रव्यादेरिति ॥ उपलम्भकम्=उपलब्धिकारणम्। इदमेव विवृणोति–चक्षुष इति ॥ द्रव्यगुणकर्मसामान्यानां**

---

उत्पन्नः' इति बुद्धेः, समवायाऽलम्बनत्वापत्तेः=समवायालम्बनत्वे समवायस्यैकत्वग्राहकप्रमाणविरोधापत्तेरित्यर्थः ॥ अतः 'नीलो नष्टः' इत्यादिप्रतीतिः प्रत्यक्षात्मकबाधबलात् नीलरूपादिनाशविषयिण्येवेति नीलादीनामनेकव्यक्तित्वात् नीलत्वादेः जातित्वे बाधकाऽभावादिति भावः ॥ उक्तं सिद्धान्तम् अन्यत्राऽप्यतिदिशति–**एतेनेति**। रूपत्वनीलत्वादिजातिसाधकप्रमाणेन, रसादिकं=रसत्वमधुरत्वादिकम्, आदिना गन्धत्वसुरभित्वादिकम्। व्याख्यातम्=तुल्ययुक्त्या विपक्षतर्कनिरासपूर्वकं साधितं बोध्यमित्यर्थः, तथाहि–'रसत्वजातिः 'रसोऽयमि'तिप्रत्यक्षप्रतीतिसिद्धा, 'मधुरोऽयमि'त्यादिप्रतीत्या च मधुरत्वादिजातिसिद्धिर्बोध्या । 'मधुरो नष्ट' 'अम्ल उत्पन्न'इत्यादिप्रतीत्याच मधुरादीनामानन्त्यमनित्यत्वं च सिद्धम्। एवं 'गन्धोऽयमि'तिप्रतीत्या गन्धत्वजातिसिद्धिः, 'सुरभिरय'मित्यादिप्रतीत्या च सुरभित्वादिजातिसिद्धिः। 'स्पर्शोऽयम्' 'उष्णोऽयमि'त्यादिप्रतीत्या च स्पर्शत्वोष्णत्वादिसिद्धिर्बोध्या। उत्पादविनाशशालित्वादानन्त्यमपि बोध्यमिति ॥ अथ–संयोगादावतिव्याप्तिवारणाय 'चक्षुर्ग्राह्यमिति' मूलार्थमाह–**चक्षुर्ग्राह्यविशेषगुण इत्यर्थ** इति। तेन 'चक्षुरि'ति प्राक् प्रतीकधारणेऽपि न पौनरुक्त्यम् ॥ ननु चक्षुर्मात्रग्राह्यविशेषगुणत्वं स्नेहविशेषे सांसिद्धिकद्रवत्वे चाऽतिव्याप्तमिति चेन्न। विशेषगुणत्वं न पूर्वोक्तसाधर्म्यात्मकं, किन्तु विशेषत्वमत्र त्वगग्राह्यत्वम्, तथा च 'त्वगग्राह्यत्वे सति चक्षुर्ग्राह्यत्वे सति गुणत्वम्' रूपलक्षणमुपपन्नम्, स्नेहादेस्त्वचाऽपि ग्राह्यत्वात् नातिव्याप्तिः। गुणत्वोपादानेन प्रभायां रूपत्वादौ च नाऽतिव्याप्तिरिति। नन्वेवं प्रभाभित्तिसंयोगेऽतिव्याप्तिरिति चेन्न; त्वगग्राह्या चक्षुर्ग्राह्या या गुणत्वव्याप्या जातिस्तद्वत्त्वस्य लक्षणत्वात्। गुणत्वव्याप्यत्वोपादानेन सुवर्णत्वजातिमादाय सुवर्णे नाऽतिव्याप्तिरिति। परमाणुरूपादौ च रूपत्वजातिमत्तामादाय लक्षणसमन्वयात्। नन्वलौकिकसन्निकर्षेण ज्ञानलक्षणात्मकेन त्वगग्राह्यां चक्षुर्ग्राह्यां चाक्षुषानुव्यवसायत्वजातिमादाय चाक्षुषानुव्यवसायेऽतिव्याप्तिरिति चेन्न ॥ चक्षुर्भिन्नेन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वाभाववत्त्वे सति चक्षुरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वे सति गुणत्वव्याप्यजातिमत्त्वमिति तदर्थत्वात्। चक्षुर्भिन्नेन्द्रियनिवेशेन 'मूलाऽनुक्तत्वग्घटितपरिष्कारः प्रकृताऽसम्बन्धक इति शंका निरस्ता वेदितव्या ॥ **अथवा**–स्पार्शनत्वावच्छिन्ननिरूपितलौकिकविषयताशून्यचाक्षुषत्वावच्छिन्ननिरूपितलौकिकविषयताश्रयगुणवृत्तिजातिमत्त्वं रूपस्य लक्षणम्। ततोऽपि लाघवात्—'चाक्षुषत्वावच्छिन्नाऽनिरूपितलौकिकविषयताशून्यलौकिविषयताश्रयगुणवृत्तिजातिमत्त्वं लघुलक्षणं वक्तव्यम्। अथवा त्वाचप्रत्यक्षे चाक्षुषप्रत्यक्षस्य प्रतिबन्धकतामतेन 'त्वगिन्द्रियजन्यप्रत्यक्षप्रतिबन्धकचक्षुर्जन्यप्रत्यक्षविषयजातिमद्गुणत्वमिति' रूपलक्षणं वक्तव्यम्। तेन न कोऽपि दोष इति ॥ **एवमग्रेऽपीति**। स्पर्शलक्षणेऽपि रूपलक्षणोक्तरीत्या दोषप्रदर्शनं तद्वारणप्रकारो लघुलक्षणपरिष्कारश्च ज्ञेया इत्यर्थः ॥ 'द्रव्यादेरुपलम्भकमि'तिमूलं रूपस्य प्रयोजनप्रदर्शनपरतया सङ्गमयितुम् उपलम्भकपदार्थमाह–**उपलब्धिकारणमिति**। चक्षुषा द्रव्यद्रव्यत्वादिविषयकप्रत्यक्षज्ञानजनने रूपं सहकारिकारणमित्यर्थः॥ ननु उपलब्धिकारणत्वमत्र द्रव्यवृत्तिलौकिकविषयताशालिचाक्षुषप्रत्यक्षसहकारिकारणत्वमेव, न त्वन्यादृशमित्यर्थबोधनाय तस्यैव विवरणात्मकं 'चक्षुषः सहकारि स्यादि'तिमूलमवतारयति **इदमेवेति**। 'द्रव्यादेरुपलम्भकमि'तीदमेव स्पष्टं बोधयतीत्यर्थः॥ रूपं यत्र चक्षुःकरणकज्ञानमात्रे कारणं, तादृश चक्षुःकरणकं ज्ञानं किंविषयकं किंधर्मावच्छिन्नं चेति शिष्यजिज्ञासानिवृत्त्यर्थं फलितार्थं

चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणम् ॥ शुक्लादीति ॥ तच्च रूपं शुक्लनीलपीतरक्तहरितकपिशकर्बुरभेदादनेकप्रकारकं भवति। ननु कथं कर्बुरमतिरिक्तरूपं भवति ?, इत्थं,--नीलपीताद्यवयवारब्धोऽवयवी न तावन्नीरूपो, अप्रत्यक्षत्वप्रसङ्गात्। नापि व्याप्यवृत्तिनीलादिकमुत्पद्यते, पीतावच्छेदेनापि नीलोपलब्धिप्रसङ्गात्। नाप्यव्या

---

माह–द्रव्यगुणेत्यादि। द्रव्यचाक्षुषत्वावच्छिन्नं प्रति उद्भूतरूपं समवायेन कारणम्, द्रव्यत्वगुणकर्मचाक्षुषत्वावच्छिन्नं प्रति उद्भूतरूपं स्वाश्रयसमवायेन कारणम्, गुणत्वकर्मत्वादिजातिचाक्षुषत्वावच्छिन्नं प्रति उद्भूतरूपं स्वाश्रयसमवेतसमवायेन कारणम्, इत्येवं यथासम्बन्धं कार्यकारणभावो बोध्यः॥ रूपमात्रस्य हेतुत्वे चक्षुरादेरपि चाक्षुषप्रत्यक्षापत्तेः उद्भूतेत्युक्तम्। उद्भूतत्वं च–"यद्येतत्प्रत्यक्षप्रयोजकसन्निकर्षवत् स्यात् तर्ह्युपलभ्येते'त्यापादनविषयत्वमिति। अथवा–अनुद्भूतत्वाऽभावः उद्भूतत्वम्, अनुद्भूतत्वं च उपाधिः शुक्लत्वादिव्याप्यो नानाविध इति बोध्यम्॥ ननु–अनुद्भूतरूपे मानाऽभावात् जनकतावच्छेदककोटौ उद्भूतत्वप्रवेशो व्यर्थ इति चेन्न। यत्र कपालेऽग्निसंयोगतो नीरूपे नीलरूपवता कपालान्तरेण संयोगाद् घटोत्पत्तिः, तदुत्तरक्षणे तत्र घटे नीलोत्पादापत्तिवारणाय 'रूपं प्रति समवायसम्बन्धावच्छिन्नप्रतियोगिताकरूपाऽभावस्य सामानाधिकरण्यसम्बन्धेन प्रतिबन्धकतायाः स्वीकारे चम्पकाद्यारम्भकाऽवयवान्तःपातिवायूपनीतसुरभिभागानाम् अरूपत्वे चम्पके रूपोत्पादानुपपत्तिः स्यात्, अतोऽनुद्भूतरूपकल्पनायास्तत्राऽऽवश्यकत्वात्॥ उक्तघटे तु कपालान्तरे रूपोत्पत्त्यन्तरं चित्रादिरूपम् उत्पद्यते इति ध्येयम्॥ रूपस्य अनेकविधत्वं स्फुटीकरोति–तच्च रूपमिति। चक्षुर्मात्रग्राह्यजातिमद्गुणत्वलक्षणलक्षितं रूपम्, शुक्लत्वावच्छिन्नं नीलत्वावच्छिन्नम्, पीतत्वावच्छिन्नम्, रक्तत्वावच्छिन्नम्, हरितत्वावच्छिन्नम्, कपिशत्वावच्छिन्नम्, कर्बुरत्वं=चित्रत्वं तदवच्छिन्नमिति भेदात् सप्तप्रकारं भवतीत्यर्थः। अनेकत्वमत्र सप्तत्वम्, तच्च गुणे गुणाऽनङ्गीकारात् अपेक्षाबुद्धिविषयत्वरूपं बोध्यम्। तथा च 'रूपत्वं शुक्लादिसप्तान्यतमत्वव्याप्यमि'ति व्याप्तिर्बोध्येति॥ षड्विधमेव रूपमिति नवीनः शंकते–ननु कथमिति। चित्रं रूपं क्लृप्तशुक्लाद्यन्यतमभिन्नं कथमङ्गीकार्यम्, अव्याप्यवृत्तिशुक्लादिसमुदायस्यैव चित्रव्यवहर्तव्यत्वात्। अतः चित्रं षडतिरिक्तं नाङ्गीकार्यमित्याशयः॥ समाधत्ते–इत्थमिति। वक्ष्यमाणयुक्त्या सप्तमंरूपमङ्गीकार्यमित्यर्थः॥ युक्तिमाह–नीलपीतेति। नीलपीतरक्तंतन्त्वाद्यारब्धपटादिः न तावन्नीरूपः=न रूपशून्यः, न रूपवद्भिन्नो भवितुमर्हतीति। कुतः ?, अप्रत्यक्षत्वप्रसंगात्=तस्य अप्रत्यक्षापत्तिः स्यात्, द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषं प्रति समवायेन उद्भूतरूपस्य हेतुत्वनियमात् चाक्षुषप्रत्यक्षस्य रूपाऽविषयकस्य कथंचिदप्यसंभवेन पटप्रत्यक्षानुपपत्तिश्चित्रं रूपं सामाग्रीरूपं समर्थयतीति भावः॥

ननु–निरवच्छिन्नवृत्तित्वात्मकव्यावृत्ति एव नीलपीतादिरूपं तत्र पटे उत्पद्यते अतो न अप्रत्यक्षापत्तिरित्याशंकां निषेधति–नापि व्याप्यवृत्तीति। निरवच्छिन्नवृत्तिकं नीलादि नोत्पत्तुमर्हति इत्यर्थः। व्याप्यवृत्तित्वमत्र–व्याप्यवृत्तिताघटकसम्बन्धेन तदधिकरणे सम्बन्धसामान्येन वर्तमानो योऽभावस्तन्निरूपिततत्सम्बन्धावच्छिन्नप्रतियोगित्वाऽभावात्मकं बोध्यमिति॥ अनुत्पत्तौ हेतुमाह–पीतावच्छेदेनापीति। पीतावच्छेदेन=पीतावच्छेद्यसन्निकर्षेण, निरवच्छिन्नवृत्तिकतयोत्पन्नं (व्याप्यवृत्ति) यत् पीतघटिताऽनेकरूपवत्तन्तुजन्यपटस्थं पीतरूपं तद्ग्राहकचक्षुःसंयोगघटितचक्षुस्संयुक्तसमवायात्मकसन्निकर्षेणापि, इति यावत्। नीलोपलब्धिप्रसङ्गात्=नीलप्रमात्मकप्रत्यक्षापत्तिप्रसंगः स्यात्, तत्र पटे नीलघटितानेकरूपवत्तन्तुजन्यतया नीलस्यापि निरवच्छिन्नवृत्तिकतया

**प्यवृत्तिनीलादिकमुत्पद्यते, व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात्। तस्मान्नानाजातीयरूपैरवयविनि विजातीयं चित्रं रूपमारभ्यते। अत एव 'एकं चित्रम्' इत्यनुभवोऽपि। नानारूपकल्पने गौरवात्। इत्थं च नीलादीनां पीताद्या-**

उत्पद्य वर्तमानत्वे निराबाधादिति भावः॥ **ननु** सावच्छिन्नवृत्तिकत्वात्मकाऽव्याप्यवृत्तितयैव तादृशपटे नीलादीनामुत्पन्नत्वान्नोक्तापत्तिरित्याशंकां निषेधति—**नाऽप्यव्याप्यवृत्तीति**। दैशिकाऽव्याप्यवृत्तिनीलादिकमपि नोत्पत्तुमर्हतीत्यर्थः। अव्याप्यवृत्तित्वं च स्वावच्छेदकसम्बन्धेन स्वावच्छेदकाऽवच्छिन्नाऽधिकरणे स्वरूपसम्बन्धेन वृत्तिर्यः स्वावच्छेदकाऽवच्छिन्नाऽभावस्तत्कत्वम्, स्वं-प्रतियोगितेति। तथा च यावन्ति रूपाणि अवयवेषु तन्तुषु तज्जन्यतावद्रूपाणां पटे विरोधाभावेन उत्पन्नत्वात् न पटाऽप्रत्यक्षापत्तिरिति भावः॥ अव्याप्यवृत्तिनीलाद्यनुत्पादे हेतुमाह—**व्याप्यवृत्तिजातीयेति**। परमाणुसमवेतनीलादिव्यक्तेर्व्याप्यवृत्तितया तत्सजातीयपटनीलादीनामपि व्याप्यवृत्तित्वमेव, न त्वव्याप्यवृत्तित्वम्, व्याप्यवृत्तित्वाऽव्याप्यवृत्तित्वयोर्विरोधात्=एकत्र वर्तमानत्वाऽसंभवादित्यर्थः। व्याप्यवृत्तिजातीयगुणाः सविषयकगुणभिन्नव्याप्यवृत्तिजातीयगुणा ग्राह्याः, तेन व्याप्यवृत्तीश्वरज्ञानादिसजातीयाऽस्मदादिज्ञानादेरव्याप्यवृत्तित्वेऽपि न क्षतिः॥ **वस्तुतस्तु**—व्याप्यवृत्तितावच्छेदकगुणत्वव्याप्यनीलत्वादिजातेः अवच्छेदकत्वसम्बन्धेन कार्यतावच्छेदकत्वे (अमुकतन्त्वावच्छेदेन नीलमुत्पन्न'मित्येवं नीलत्वादेः कार्यतावच्छेदकत्वे) विरोधात्=उपजीव्यविरोधप्रसंगादित्यर्थः। कपालनीलादितो घटनीलाद्युत्पत्तिमुपजीव्य हि नीलत्वादेर्नीलादिजन्यतावच्छेदकत्वं स्वीक्रियते, कार्यतायाम् अवच्छेदकतासम्बन्धस्याऽवच्छेदकविधया निवेशे तद्विरोधप्रसंगः, केवलनीलकपालजन्यघटनीलस्य व्याप्यवृत्तितया तस्याऽवच्छेदकतासम्बन्धेन उत्पत्त्ययोगात्, नानारूपवदवयवारब्धघटस्थले च नीलोत्पत्तिः सन्दिग्धैव, अतो न तामुपजीव्य अवच्छेदकत्वसम्बन्धावच्छिन्ना नीलादेः कार्यताऽभ्युपगन्तुं शक्येत्यत्र तात्पर्यम्॥

उपसंहरति=**तस्मादिति**। विरोधेन नीलादीनाम् अव्याप्यवृत्तित्वाऽसंभवादित्यर्थः। नानाजातीयरूपैः=अवयवसमवेतनीलत्वाद्यवच्छिन्नपीतत्वाद्यवच्छिन्नादिरूपैः, अवयविनि पदार्थे, विजातीयम्=गुणत्वव्याप्यशुक्लत्वादिक्लृप्तषड्धर्मातिरिक्तधर्मावच्छिन्नम्, चित्रत्वावच्छिन्नं चित्रपदव्यवहार्यं रूपम् आरभ्यते=उत्पाद्यते, इत्यर्थः॥ अत एव=अतिरिक्तचित्रस्वीकारादेव, 'एकं चित्ररूपमि'त्यनुभवोऽपि एकत्वप्रकारकचित्रत्वावच्छिन्नविशेष्यक उपपद्यते इति॥ **ननु**—वृक्षाणां बहुत्वेऽपि समुदायगतमेकत्वमादाय 'एकं वन'मितिप्रतीतिवत् नीलादीनां बहुत्वेऽपि 'एकं चित्र'मितिप्रतीतौ बाधकाऽभावात् चित्रं नांगीकार्यमित्यत आह—**नानारूपेति**। नीलत्वादिनानाजात्यवच्छिन्नानाम् व्याप्यवृत्तीनां रूपाणामेकद्रव्ये कल्पनं, तेषु एकमितिप्रतीतिविषयतायाः कल्पनं च गौरवमित्यर्थः॥ **ननु**—एवं सति समवायेन नीलादिकं प्रति समवायघटितसामानाधिकरण्यसम्बन्धेन नीलादेः कारणत्वस्योभयमतसिद्धतया तद्बलान्नानारूपवदवयवारब्धाऽवयविन्यपि नीलाद्युत्पत्तिः कथं न भवतीत्यत आह—**इत्थं चेति**। उक्तलाघवेन चित्ररूपसिद्धौ चेत्यर्थः। नीलादीनाम्=समवायेन पीतरूपं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन पीतातिरिक्तरूपत्वेन नीलादीनां प्रतिबन्धकत्वात्, एवं समवायेन नीलरूपं च प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलातिरिक्तरूपत्वेन प्रतिबन्धकत्वात् इत्येवं प्रतिबध्यप्रतिबन्धकभावकल्पनात् न चित्राधिकरणेऽवयविनि नीलपीतादिव्याप्यवृत्तिरूपोत्पत्तिरिति भावः॥ चित्ररूपाऽनङ्गीकर्तृमतेऽपि नानारूपवदवयवारब्धावयविनि नीलावयवावच्छेदेन पीतोत्पत्तेर्वारणाय समवायेन तदवयवावच्छेद्यपीतं प्रति तदवयवघटितसमवायघटितसामानाधिकरण्यसम्बन्धेन

**रम्भे प्रतिबन्धकत्वकल्पनादवयविनि न पीताद्युत्पत्तिः। एतेन स्पर्शोऽपि व्याख्यातः। रसादिकमपि नाव्याप्यवृत्ति, किन्तु नानाजातीयरसवदवयवैरारब्धेऽवयविनि रसाभावेऽपि न क्षतिः। तत्र रसनयाऽवयवरस एव गृह्यते, रसनेन्द्रियादीनां द्रव्यग्रहे सामर्थ्याभावादवयविनो नीरसत्वेऽपि क्षतेरभावात्। नव्यास्तु तत्राव्याप्यवृत्त्येव नानारूपं, नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात्। अत एव--"लो-**

पीतान्यरूपत्वेन प्रतिबन्धकताकल्पनाऽवश्यकतया साम्येऽपि 'अनेकेषु चित्रमितिप्रतीतिविषयताकल्पनागौरवं परमतिरिच्यते इति हृदयम्॥ **परे तु**–चित्रेतररूपत्वावच्छिन्ने चित्रं कार्यकालवृत्तितया प्रतिबन्धकमिति मन्यन्ते। **वैशेषिकानुयायिनस्तु**–नीलादिकं प्रति नीलप्रागभावत्वेनैव हेतुता, अतो न चित्रघटस्थले नीलाद्यापत्तिरिति वदन्ति। **नव्यास्तु**–तदवयवावच्छेदेन नीलं प्रति तदवयवघटितसमवायघटितसामानाधिकरण्यसम्बन्धेन हेतुत्वम्, एवमन्यदपि, तावतैव पीतावयवावच्छेदेन नीलोत्पत्तेरभावात्, अतो नोक्तप्रतिबध्यप्रतिबन्धकभावकल्पनम्, एवम्–'चित्र'मित्यतिरिक्तधर्मिकल्पनाऽपेक्षया पटत्वस्तु चित्रमितिप्रतीतिविषयत्वात्मकधर्मकल्पनाया अपि लघीयस्त्वम् इति वदन्ति॥ **एतेनेति**। उक्तानुसारयुक्त्येत्यर्थः॥ **स्पर्शोपि व्याख्यात इति**॥ तथाहि–प्राचीनानां मते स्पर्शस्यापि व्याप्यवृत्तितया नानास्पर्शवदवयवारब्धद्रव्ये परस्परविरोधेन मृदुस्पर्शाद्युत्पत्त्यसंभवात् तद्द्रव्यस्य स्पार्शनाऽनुपपत्त्या चित्ररूपमिव चित्रस्पर्शोऽप्यङ्गीकार्यः। नवीनमतेन तु नानास्पर्शवदवयवारब्धद्रव्ये नानास्पर्शोत्पत्तौ रूपस्थलोक्तरीत्या बाधकाऽभावेन मृदुस्पर्शादिसमुदायस्यैव उक्तरीत्या 'चित्र'इतिप्रतीतिविषयत्वसंभवेन अतिरिक्तचित्रस्पर्शो नाङ्गीकर्तव्य इति भावः॥ ननु रूपवत् रसादिकमपि चित्रमङ्गीकर्तव्यमित्याशंकायामाह–**रसादिकमिति**। प्राचीनमते यथा स्पर्शो न दैशिकाऽव्याप्यवृत्तिस्तथा रसो गन्धश्च न दैशिकाऽव्याप्यवृत्तिरित्यर्थः। अव्याप्यवृत्तित्वं सावच्छिन्नवृत्तिकत्वम्। स्वावच्छेदकसम्बन्धेन स्वावच्छेदकावच्छिन्नाधिकरणे स्वरूपसम्बन्धेन वृत्तिर्यः स्वावच्छेदकाऽवच्छिन्नाऽभावस्तत्कत्वमिति यावत्, स्वं–प्रतियोगितेति। ननु तर्हि मधुरादिनानारसवदवयवारब्धावयविनो नीरसत्वापत्तिरित्यत्रेष्टापत्तिमाह–**किन्त्विति**। नानाजात्यवच्छिन्नरसवदवयवारब्धे घटाद्यात्मकेऽवयविनि रसाभावेऽपि=नीरसे स्वीकृते सत्यपि, न क्षतिः=न काचिद्धानिः, घटादेः नीरूपत्वे निरस्पर्शत्वे वा या अप्रत्यक्षत्वापत्तिरूपा हानिः सा नीरसत्वे नास्तीत्यर्थः॥ ननु तथा सति अवयविनि रसप्रत्यक्षाऽनुपपत्तिरित्याशंकायां तत्रेष्टापत्तिमाह–**तत्रेति**। नानारसवदवयवारब्धे नीरसेऽवयविनि, रसनेन्द्रियेण। रसनासंयुक्तसमवायेन अवयवानां रसा एव गृह्यन्ते, न त्ववयविरसाः तत्र रसाऽनङ्गीकारात्॥ रसनेन्द्रियस्य घ्राणेन्द्रियस्य च रसाश्रयद्रव्यग्रहणे गन्धाश्रयद्रव्यग्रहणे च सामर्थ्याऽभावात्=कारणत्वाऽसंभवात्, विभिन्नरसगन्धाश्रयावयवारब्धावयविनः नीरसत्वे निर्गन्धत्वे चापि अप्रत्यक्षत्वापत्तेरभावात्, द्रव्यरासनप्रत्यक्षे रसस्य द्रव्यघ्राणजप्रत्यक्षे गन्धस्य च कारणत्वाऽननुभवेन तदभावात् क्षतेरभाव इति भावः॥ नव्यानां मतमाह–**नव्यास्त्विति**। तत्र=नानारूपवदवयवारब्धावयविनि, अव्याप्यवृत्त्येव=सावच्छिन्नवृत्तिकम्, तत्तदवयवावच्छेदेन वर्तमानमिति यावत्। नानारूपम्=नीलत्वपीतत्वादिनानाजातीयरूपम्, उत्पद्यते इति। अवच्छेदकतासम्बन्धेन च नीलादिकं प्रति समवायेन नीलादेर्हेतुत्वात् न पीतावच्छेदेन नीलोत्पत्तिरिति, तथा च नास्मन्मते पीतादिकं प्रति नीलादीनां प्रतिबन्धकत्वकल्पनं, प्राचीनानां तु तत्कल्पनं गौरवमेवेति भावः॥ अत्र स्कन्दपुराणवाक्यं प्रमाणयितुमाह–**अत एवेति**। नीलादेः पीताद्यप्रतिबन्धकत्वादेवेत्यर्थः। यस्य मुखे=मुखनासिकाप्रदेशे,

हितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ”॥ इत्यादिशास्त्रमप्युपपद्यते। न च व्याप्यवृत्त्यव्याप्यवृत्तिजातीययोर्द्वयोर्विरोधः, मानाभावात्। न च लाघवादेकं रूपम्, अननुभवात्। अन्यथा घटादेरपि लाघवादैक्यं स्यात्। एतेन स्पर्शादिकमपि व्याख्यातमिति वदन्ति ॥ १०० ॥

जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम् ।

जलादीति ॥ जलपरमाणौ तेजःपरमाणौ च रूपं नित्यम् । पृथिवीपरमाणुरूपं तु न नित्यं तत्र पाकेन रूपान्तरोत्पत्तेः । नहि घटस्य पाकानन्तरं तदवयवोऽपक्व

---

पुच्छे=वालधिप्रदेशे च पाण्डुरः=पिशङ्गमिश्रितश्वेतरूपम्, यस्य चतुर्षु खुरप्रदेशेषु शृंगमूलप्रदेशयोश्च श्वेतरूपम्, मुखपुच्छखुरविषाणानवच्छिन्नशरीरपिण्डस्तु लोहितः रक्तवर्णो भवेत्, स विभिन्नरूपवान् वृषो 'नीलवृष'इति शास्त्रेण उच्यते। तथा च अवयविनि नानारूपानङ्गीकारे वृषस्य नानारूपवत्त्वबोधकं तच्छास्त्रं व्याहन्येत, आचार्यश्च यदि चित्रं रूपं पृथगमंस्यत तदा वृषोत्सर्गप्रकरणे तत्र 'चित्रं वृषमुत्सृजेत्"इत्येवाऽवक्ष्यत् न तु "नीलं वृषमुत्सृजेदि"ति, अतो नास्ति सप्तमं चित्रं रूपं किंचिदिति भावः॥ ननु–व्याप्यवृत्तित्वेन सह अव्याप्यवृत्तित्वस्य विरोधात् न व्याप्यवृत्तिरूपानाम् अव्याप्यवृत्तित्वं युक्तमित्याशंकां निषेधति–न च व्याप्याऽव्याप्येति। व्याप्यवृत्तित्वं-निरवच्छिन्नवृत्तिकत्वम्, अव्याप्यवृत्तित्वं–सावच्छिन्नवृत्तिकत्वम्। द्वयोर्न विरोधोऽस्तीत्यर्थः। कुतः ?, इत्यत आह–मानाऽभावादिति। व्याप्यवृत्तिस्वभावा रूपाद्या न अव्याप्यवृत्तित्वावच्छेदेनोत्पद्यन्ते इत्यत्र- प्रमाणाऽभावादित्यर्थः। नीलवृषे विरुद्धमिति नास्ति सम्प्रत्ययो यद्विरोधः अनुभवसिद्धः(प्रामाणिकः)स्यादिति भावः॥ ननु अनेकापेक्षया 'एकं चित्रमि'तिप्रतीतिविषयैकधर्मावच्छिन्नकल्पनं लाघवमित्याशंकां निषेधति–न च लाघवादेकं रूपमिति। एकधर्मावच्छिन्नस्वीकारलाघवप्रयुक्तम् एकं चित्रमङ्गीकरणीयमित्यपि न युक्तमित्यर्थः॥ तत्र हेतुमाह–अननुभवात् अनुभवविरोधात्='अयमवयवी नीलाद्यनेकवर्णयुक्त'इति योऽनुभवस्तद्विरोधादित्यर्थः॥ ननु चित्रैकरूपवति अनेकरूपवत्तानुभवो भ्रान्तिरित्यत आह–अन्यथेति। आग्रहेण लाघवेन विभिन्नरूपस्थले एकरूपाङ्गीकारे तु, तुल्ययुक्त्या आग्रहेण लाघवेन अनेकेषां घटानां समूहे 'एकोऽयं घट'इत्यप्यङ्गीकृत्य तवानुभवविरोधापत्तिः स्यादित्यर्थः॥ उक्तन्यायं चित्रस्पर्शादिखण्डनेऽप्यतिदिशति–एतेनेति। उक्तन्यायेन, चित्रस्पर्शः, चित्रगन्धश्च, खण्डितो बोध्यः, आम्रादौ मिष्टस्य अम्लस्य कषायस्य चोपलब्धेः प्रत्यक्षसिद्धत्वात् शरीरे च विभिन्नगन्धोपलम्भाच्चेति भावः॥ वदन्तीत्यनेनाऽस्वरसः सूचितः। तथाहि–नीलवृषदृष्टान्तं नैवोपपद्यते, रोम्णामेव विभिन्नरूपवत्त्वेन शृंगखुरवालधिरोम्णां संयोगिद्रव्यतया पिण्डातिरिक्तत्वात् तत्र पिण्डरूपस्याऽवर्णनात्, तथा च उक्तपुराणवचनं वृषपिण्डेऽव्याप्यवृत्तिविभिन्नरूपबोधकं नैवास्तीति न तद्बलात् चित्ररूपखण्डनमिति बोध्यम् ॥ १०० ॥

मूले–जलादिपरमाणाविति। जलपरमाणुषु अभास्वरमनुद्भूतशुक्लं तेजःपरमाणुषु भास्वरमनुद्भूतशुक्लं तद्रूपं नित्यं=ध्वंसप्रागभावाऽप्रतियोगि बोध्यम्। अन्यत्=पार्थिवं सर्वं सप्तविधं रूपं, अनित्यजलीयरूपम्, अनित्यतैजसरूपं च, सहेतुकम्=कारणजन्यम्=अनित्यम् इत्यर्थः॥ तदेव उपपादयति–मुक्तावल्यां–जलपरमाणौ तेजःपरमाणौ च रूपं नित्यमिति। पृथिवीपरमाणुरूपस्य अनित्यत्वे हेतुमाह–तत्रेति । पृथिवीपरमाणौ, पाकेन=विलक्षणतेजस्संयोगेन,

उपलभ्यते। न हि रक्तकपालस्य कपालिका नीलावयवा भवति। एवं क्रमेण परमाणावपि पाकसिद्धेः। अन्यत्=जलतेजःपरमाणुरूपभिन्नं रूपं, सहेतुकं-जन्यम्॥

रसस्तु रसनाग्राह्यो मधुरादिरनेकधा॥ १०१॥
सहकारी रसज्ञाया नित्यतादि च पूर्ववत्।

रसं निरूपयति--रसस्त्विति। सहकारीति। रासनज्ञाने रसः कारणमित्यर्थः॥ पूर्ववदिति॥ जलपरमाणौ रसो नित्योऽन्यः सर्वोपि रसोऽनित्य इत्यर्थः॥

---

पूर्वरूपविजातीयरूपोत्पत्तेरानुभविकत्वादित्यर्थः॥ अनुभवमुपपादयति-नहीति। आमघटस्य पाके सति तदवयवः-कपालं, अपक्वः=आमो न, उपलभ्यते, किन्तु पक्व एव, तथा च प्रत्यक्षेण चरमावयविनोऽवयवेषु विजातीयतेजस्संयोगसिद्धिरिति भावः॥ एवं पक्वस्य रक्तकपालस्याऽवयवः कपालिका रक्तैवेति तदवयवाः नीला न भवितुमर्हन्ति, इत्येवं तदवयवावयवानां रक्तत्वसिद्ध्या क्रमेण=त्रसरेणुपर्यन्तावयवेष्वपि पाकसाधकप्रमाणतुल्यप्रमाणेन द्व्यणुके पाकानुमितिद्वारा, परमाणुपर्यन्तं पाकानुमितिसंभवादित्यर्थः॥ अनुमानं—'पार्थिवद्व्यणुकं—पाकजन्यरूपवत् पाकजन्यरूपाश्रयसमवायित्वात्, त्रसरेणुवदिति। एवं 'पार्थिवपरमाणुः-पाकजन्यरूपवान्, तादृशद्व्यणुकसमवायित्वात्,-त्रसरेणुवदिति॥ अन्यत्पदार्थमाह-जलतेजरिति। पार्थिवं सर्वं रूपम् अनित्यजलतेजोरूपं चेत्यर्थः॥ 'सहेतुक'मितिपदार्थमाह-जन्यमिति—प्रागभावप्रतियोगीत्यर्थः॥

मूले-रसस्त्विति। रसस्तु रसनाग्राह्यः=लौकिकसन्निकर्षप्रयोज्यरसनेन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकधर्मवत्त्वमिति रसस्य लक्षणमित्यर्थः॥ स च रसः मधुराऽम्ललवणकटुकषायतिक्तभेदादनेकधा=षड्विधो भवतीत्यर्थः। रसज्ञायाः=रसनेन्द्रियजन्यप्रत्यक्षे रसः सहकारिकारणं भवतीत्यर्थः। नित्यतादि च पूर्ववत्=नित्यत्वं जलीयपरमाणुरसस्य, अनित्यत्वं च पार्थिवरसस्य अनित्यजलरसस्य चेति रूपवद् बोध्यमित्यर्थः॥ मुक्तावल्यां-रसं निरूपयतीति। रसविषयकज्ञानानुकूलव्यापारानुकूलकृतिमान् ग्रन्थकार इत्यर्थः॥ 'सहकारिपदार्थमाह-रासनज्ञाने इति। रसनेन्द्रियकरणकलौकिकसन्निकर्षकरसादिप्रत्यक्षं प्रति रसो विषयविधया निमित्तकारणमित्यर्थः॥ वस्तुतस्तु-चक्षुरादिकरणानां स्वनिष्ठगुणादिसहकारेणैव कारणत्वात् तादृशसहकारित्वमेवाऽत्र विवक्षितमिति प्राञ्चः॥ अन्ये तु रूपादेः रासनवारणाय द्रव्यसमवेतनिष्ठलौकिकविषयतासम्बन्धेन रासनं प्रति तादात्म्येन रसः कारणमितिरीत्या रसगन्धयोः कारणत्वं वक्तव्यमिति वदन्ति। पूर्ववदितीति। रूपं यथा नित्यमनित्यं चोक्तं तथा रसोऽपि जलपरमाणौ नित्यः अन्यत्र सर्वत्राऽनित्य इत्यर्थः। नित्यत्वं ध्वंसाऽप्रतियोगित्वे सति प्रागभावाऽप्रतियोगित्वम्। अनित्यत्वं तु-ध्वंसप्रतियोगित्वे सति प्रागभावप्रतियोगित्वमिति। स च रसः पृथिव्यां षड्विधो मधुराऽम्ललवणकटुकषायतिक्तभेदात्। जले तु मधुर एव। ननु मरीचमर्चिकाशुण्ठ्यादीनामङ्गुल्यादिस्पर्शाऽनन्तरमङ्गुल्यादिना नेत्रनासिकादौ स्पृष्टे सति तत्र तिक्तरसो भासते, तथा च तिक्तस्य न केवलरसनाग्राह्यत्वमिति चेन्न। तत्र तिक्तरसो नानुभूयते, किन्तु ज्वलनमनुभूयते, तच्च दाह एव, तिक्ते पदार्थे तैजसभागोऽधिक इति फलबलकल्पनीयत्वादिति। प्राचीनास्तु चित्रं रसं मन्यते॥ रसत्वजातिः मधुरत्वादिजातयश्च प्रत्यक्षसिद्धाः, चित्ररूपवच्चित्ररसो नाङ्गीकृतः, द्रव्ये रसनेन्द्रियसन्निकर्षस्य संयोगस्य षड्विधसन्निकर्षघटकस्य सत्त्वेऽपि रसनेन्द्रियस्य तद्ग्रहणेऽसामर्थ्यात्। अतिरिक्तचित्ररसानङ्गीकारेऽपि आम्रादेः रासनप्रत्ययक्षत्वानुपपत्तेरभावात्। लक्षणं तु-लौकिकसन्नि-

घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥ १०२ ॥
सौरभश्चासौरभश्च स द्वेधा परिकीर्तितः ॥

गन्धं निरूपयति—घ्राणग्राह्य इति ॥ उपकारक इति ॥ घ्राणजन्यज्ञाने सहकारिकारणमित्यर्थः । सर्वोऽपि गन्धोऽनित्य एव ॥ १०१ ॥ १०२ ॥

स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥ १०३ ॥
अनुष्णाशीतशीतोष्णभेदात्स त्रिविधो मतः ।
काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत् ॥ १०४ ॥

स्पर्शं निरूपयति—स्पर्श इति ॥ उपकारक इति ॥ स्पार्शनप्रत्यक्षे स्पर्शः कारणमि-

---

कर्षेण रसनाजन्यप्रत्यक्षविषयत्वे सति गुणत्वम् । परमाणुरसेऽव्याप्तिवारणाय—रसनाग्राह्यतावच्छेदकगुणविभाजकजातिमत्त्वं लक्षणमित्यवसेयमिति ध्येयम् ॥

मूले—घ्राणग्राह्य इति । घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वं गन्धस्य लक्षणमित्यर्थः ॥ तथा च लौकिकसन्निकर्षेण घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वमिति लक्षणार्थः । परमाणुगन्धेऽव्याप्तिवारणाय—घ्राणेन्द्रियग्राह्यतावच्छेदकगुणत्वव्याप्यजातिमत्त्वमिति विवक्षणीयम् । यद्वा—घ्राणजनिरूपितलौकिकविषयताश्रयरसाऽसमवेतजातिमत्त्वमिति विवक्षणीयम् ॥ घ्राणस्यैवोपकारकः=घ्राणेन्द्रियजन्यगन्धप्रत्यक्षे विषयविधया गन्धो निमित्तकारणमित्यर्थः ॥ स च गन्धः सौरभः=सुगन्धः, असौरभः=दुर्गन्धः, इति भेदेन नवीनमते द्विधा उक्तः, प्राचीनास्तु चित्रं गन्धं तृतीयं मन्यन्ते इति बोध्यम् । गन्धस्तु परमाणावपि पाकजत्वात् अनित्य इत्यभिप्रायेण मुक्तावल्यामाह—**सर्वोऽपीति** । नित्याऽनित्योभयविधपृथिव्यां गन्धः अनित्य एव=उत्पत्तिध्वंसप्रतियोग्येवेत्यर्थः ॥ गन्धत्वसुरभित्वादिजातयः प्रत्यक्षसिद्धा बोध्याः ॥

मूले—**स्पर्शस्त्वगिन्द्रियग्राह्य इति** । लौकिकसन्निकर्षेण त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं स्पर्शस्य लक्षणमित्यर्थः । संयोगादावतिव्याप्तिवारणाय—लौकिकसन्निकर्षेण त्वगितरेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वमिति वक्तव्यम् । स्पर्शत्वेऽतिव्याप्तिवारणाय—गुणत्वम् । संख्यादिसामान्यगुणेऽतिव्याप्तिवारणाय—त्वगितरेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सतीति । संख्यादीनां चक्षुषाऽपि ग्राह्यत्वात् तद्वारणम् । अतीन्द्रिये गुरुत्वादावतिव्याप्तिवारणाय—त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सतीति । परमाणुस्पर्शेऽव्याप्तिवारणाय—त्वगिन्द्रियमात्रग्राह्यतावच्छेदकगुणत्वव्याप्यजातिमत्त्वं बोध्यम् ॥ **यद्वा**—स्पार्शनत्वावच्छिन्नाऽनिरूपितलौकिकविषयताशून्यत्वलौकिकविषयतावत्त्वोभयविशिष्टजातिमत्त्वं लक्षणं बोध्यम् । यदि वायोः स्पार्शनाङ्गीकर्तृनवीनमते तादृशवायुत्वजातिमादाय वायावतिव्याप्तिरिति विभाव्यते, तदा गुणवृत्तित्वमपि जातौ निवेश्यम् ॥ **अथवा**—चाक्षुषत्वावच्छिन्ननिरूपितलौकिकविषयताशून्यत्वस्पार्शननिरूपितलौकिकविषयत्वोभयविशिष्टगुणवृत्तिजातिमत्त्वमेव लक्षणम् ॥ **त्वचः स्यादुपकारक इति**। स्पार्शनप्रत्यक्षे विषयविधया निमित्तकारणमित्यर्थः ॥ स च—अनुष्णाशीतः पृथ्वीवाय्वोः स्पर्शः, शीतः जलस्य, उष्णः तेजसः, इति भेदात् त्रिविधो मतः । एवं कठिनः स्पर्शः मृदुः स्पर्शः, इत्येते पृथिव्यामेव बोध्याः । **नित्यतादि च**=नित्यः स्पर्शो जलतेजोवायुपरमाणूनाम् । तद्भिन्नानां त्वनित्य इति बोध्यम् ॥ स्पर्शत्वजातिः प्रत्यक्षसिद्धा ॥ **मुक्तावल्याम्**—

त्यर्थः ॥१०३॥ अनुष्णाशीतेति ॥ पृथिव्यां वायौ च स्पर्शोऽनुष्णाशीतः, जले शीतः, तेजस्युष्णः ॥ काठिन्येति ॥ कठिनसुकुमारस्पर्शौ पृथिव्यामेवेत्यर्थः। कठिनत्वादिकं तु न संयोगनिष्ठो जातिविशेषः, चक्षुर्ग्राह्यत्वापत्तेः ॥ पूर्ववदिति ॥ जलतेजोवायुपरमाणुस्पर्शा नित्यास्तद्भिन्नास्त्वनित्या इत्यर्थः ॥ १०४ ॥

एतेषां पाकजत्वं तु क्षितौ नान्यत्र कुत्रचित् ।
तत्रापि परमाणौ स्यात्पाको वैशेषिके नये ॥ १०५ ॥

एतेषामिति ॥ एतेषां = रूपरसगन्धस्पर्शानाम् ॥ नान्यत्रेति ॥ पृथिव्यां हि रूपरसगन्धस्पर्शपरावृत्तिरग्निसंयोगादुपलभ्यते। न हि शतधापि ध्मायमाने जले रूपा-

---

'उपकारक'पदार्थमाह–स्पार्शनप्रत्यक्षे स्पर्शः कारणमिति। स्पर्शादित्वाचप्रत्यक्षे स्पर्शो विषयविधया निमित्तकारणमित्यर्थः ॥ त्रिविधस्पर्शाश्रयत्वं क्रमेणोपपादयति–पृथिव्यामिति। पृथिव्यां पाकजोऽनुष्णाशीतस्पर्शः, तत्र पाकसंभवात्। वायौ तु अपाकजोऽनुष्णाशीतः, तत्र पाकासंभवात्। जले शीतत्वावच्छिन्नः, तेजसि उष्णत्वावच्छिन्न इत्यर्थः ॥ तत्रापि पृथिव्याम् पाकजोऽनुष्णाशीतस्त्रिविधः–सुकुमार कठिन-चित्रभेदादिति दर्शयति–कठिनेति। कठिनः पाषाणादिस्पर्शः, सुकुमारो नवनीतादिस्पर्शः, नानास्पर्शवदवयवारब्धपृथिवीस्पर्शः चित्रस्पर्श इत्यपि बोध्यम् ॥ कठिनः संयोगः मृदुः संयोग इतिप्रतीतेः कठिनत्वादिकं संयोगगतजातिविशेष एवेति नवीनैकदेशिमतं दूषयति–कठिनत्वादिकमितीति। आदिना मृदुत्वपरिग्रहः ॥ चक्षुर्ग्राह्यत्वापत्तेरिति। 'यो गुणो यदिन्द्रियग्राह्यस्तद्गता जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते'इतिनियमात् कठिनत्वादेः संयोगगतधर्मत्वे चाक्षुषप्रत्यक्षापत्तेरित्यर्थः। कठिनत्वादेः संयोगगतत्वे चक्षुषा तत्प्रत्यक्षवारणमशक्यम्, अतः स्पर्शनिष्ठत्वम् आवश्यकम्। यद्यपि विषयतया चाक्षुषं प्रति कोमलत्वकठिनत्वादेरतादात्म्येन प्रतिबन्धकताया भवताऽपि स्वीकरणीयतया तत एव तच्चाक्षुषवारणसंभवे तस्य वारणाय कोमलत्वादेः स्पर्शनिष्ठत्वाऽभ्युपगमो निर्युक्तिकः, तथापि कोमलत्वादेः संयोगनिष्ठत्वे तेषां तद्व्यक्तित्वेन चाक्षुषेऽनन्तप्रतिबध्यप्रतिबन्धकभावकल्पनम् आवश्यकम्, स्पर्शनिष्ठत्वे तु स्पर्शत्वादिचाक्षुषवारणाय विषयतया चाक्षुषं प्रति स्पर्शमात्रवृत्तित्वेन प्रतिबन्धकताया आवश्यकतया तत एव तच्चाक्षुषस्यापि वारणसंभवात् तादृशतत्तद्व्यक्तित्वावच्छिन्नप्रतिबन्धकत्वाऽकल्पनेन लाघवमिति लाघवानुसन्धानेन तस्य स्पर्शे स्वीकारः कर्तव्य इति भावः ॥ 'कठिनः संयोगः' इत्यादिप्रतीतेस्तु 'कठिनस्पर्शतद्वदन्याऽसमवेतसंयोगयोर्भेदाऽग्रहमूलकत्वेन भ्रमत्वात् ॥ जलतेजोवायुपरमाणुस्पर्शा इति। नित्याः–प्रागभावध्वंसाऽप्रतियोगिनः। तद्भिन्नाः = जलतेजोवायुपरमाणुस्पर्शभिन्नाः पार्थिवस्पर्शाः अनित्यजलतेजोवायुस्पर्शाः च अनित्या इत्यर्थः ॥१०१...१०४॥

मूले–एतेषामिति। एतेषां–रूपरसगन्धस्पर्शानाम्, पाकजत्वं = पाकजन्यत्वं, क्षितावेव बोध्यम् ॥ अन्यत्र = जलतेजोवायुषु, कुत्रचित = परमाणौ द्व्यणुकादौ वा, न पाकजत्वं बोध्यम् ॥ तत्रापि = पृथिव्यामपि ॥ वैशेषिके मते = वैशेषिकदर्शनकारकणादर्षिमते, पृथिवीपरमाणावेव पाकः न तु द्व्यणुकादाविति बोध्यम् ॥ मुक्तावल्याम् 'एतेषामि'तिपदस्यार्थमाह–रूपरसगन्धस्पर्शानामिति। तेषां पृथिव्यां पाकजत्वमुपपादयति–पृथिव्यां हीति। पृथिव्यां विजातीयतेजस्संयोगाऽनन्तरम् पूर्वरूपादिचतुष्टयान्यतमविजातीयरूपान्यतमचतुष्टयोपलब्धेः तत्परावृत्तिः विजातीयतेजस्संयोगादङ्गीकर्तव्या इत्यर्थः ॥ जलादौ रूपादेरपरावृत्तित्वमुपपादयति–नहीति। शतधाऽपि

**दिकं परावर्तते। नीरे सौरभमौष्ण्यं चान्वयव्यतिरेकाभ्यामौपाधिकमेवेति निर्णीयते, पवनपृथिव्योः शीतस्पर्शादिवत्। तत्रापि=पृथिवीष्वपि, परमाणावेव रूपादीनां पाक इति वैशेषिका वदन्ति। तेषामयमाशयः-अवयविनावष्टब्धेष्ववयवेषु पाको न सम्भवति, परन्तु वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुष्वेव पाकः। पुनश्च पक्वपरमाणुसंयोगाद् द्व्यणुकादिक्रमेण पुनर्महावयविपर्यन्तमुत्पत्तिः। तेजसामतिशयितवेगवशात्पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति॥**

---

ध्मायमाने=शतविजातीयतेजस्संयोगेन उष्णीकृतेऽपि, जले रूपरसादयो न परिवर्तन्ते,=पूर्वरूपादिनाशपूर्वकरूपान्तरादि नोत्पद्यते इत्यर्थः। दैशिकविशेषणतासम्बन्धेन पूर्वरूपादिनाशं प्रति समवायादिसम्बन्धेन, पूर्वरूपादिविजातीयरूपादिकं प्रति च तादात्म्येन,-पृथिव्या हेतुत्वात् जले च तदभावात् न रूपादिपरावृत्तिरिति भावः॥ ननु-जले पाकाऽनङ्गीकारे सौरभमौष्ण्यं च कथमनुभूयते इत्यत्र आह-**नीरे इति**। **अन्वयव्यतिरेकाभ्यां**='पृथिवीसत्त्वे गन्धसत्त्वम्, पृथिवीभिन्ने च गन्धाऽभावसत्त्व'मित्यन्वयव्यतिरेकाभ्यां पृथव्यामेव गन्धनिर्णयात्, जले गन्धप्रतीतिः पृथिवीसम्बन्धात् औपाधिकी बोध्या। एवम्-तेजस्सत्त्वे उष्णस्पर्शसत्त्वम्, तेजोभिन्ने उष्णस्पर्शाऽसत्त्वमि'ति-अन्वयव्यतिरेकाभ्यां तेजसः उष्णस्पर्शवत्त्वे सिद्धे, जले उष्णस्पर्शप्रतीतिः-तेजस्संयोगात्मकोपाधिकृतेति बोध्यम्। तत्र दृष्टान्तमाह-**पवनपृथिव्योरिति**। यथा जलसंयोगात् पवने पाषाणादौ च शीतप्रतीतिर्भवतीति तद्वदित्यर्थः॥ तथा च समवायेन जले गन्धोष्णादिमत्ताप्रतीतेर्भ्रान्तित्वमिति भावः॥ **तत्रापीति** पदार्थमाह-**पृथिवीष्वपीति**। नित्याऽनित्योभयविधपृथिवीमध्ये इत्यर्थः॥ परमाण्वात्मकनित्यपृथिव्यामेव वैशेषिकसूत्रकारमते पाको भवतीति तन्मतमुपपादयति-**तेषामयमाशय इति**। तेषाम्=वैशेषिकदर्शनकारकणादर्षिमतानुयायिनामित्यर्थः। षोडशपदार्थानां सप्तस्वन्तर्भावेण सप्तविशेषपदार्थप्रतिपादककाणादसूत्रं तद्भाष्यं चान्यदेतदर्थप्रतिपादकम् अभिधीयते विदन्ति' वा वैशेषिकाः, 'क्रतूक्थादी'त्यादिपदग्राह्यत्वात् ठक्॥ **अवयविना**=घटादिना **अवष्टब्धेषु**=स्वकारणीभूतसंयोगाश्रयत्वसम्बन्धेनाश्रितेषु, **अवयवेषु**-कपालादिषु घटादिषु च, **पाकः**=अग्निसंयोगवशात्-पूर्वरूपादिपरावृत्तिः, **न संभवति**=न भवत्येव। बाह्यावयवानां वह्न्यवयवैः सह विजातीसंयोगसंभवेऽपि घटाद्यात्मक(स्पर्शवद्द्रव्य)स्य प्रतिबन्धकस्य सत्त्वाद् वह्न्यवयवानामन्तःप्रवेशाऽसंभवेन अन्तरावयवेषु वह्न्यवयवानां विजातीयसंयोगाऽभावेन सर्वावयवेषु विजातीयतेजस्संयोगात्मककारणाऽभावादिति भावः॥ स्वमतसिद्धपरमाणुपाकमुपपादयति-**परन्त्विति**। परमाणुषु वह्निसंयोगेन क्रियोत्पत्त्या परमाण्वन्तरविभागेन आरम्भकसंयोगे नष्टे सति द्व्यणुकात्मकेष्ववयविषु महावयविपर्यन्तेषु विनष्टेषु सत्सु **स्वतन्त्रेषु**=आरम्भकसंयोगरहितेषु परमाणुष्वेव **पाकः**=पूर्वरूपादिनाशपूर्वकविजातीयरूपाद्युत्पत्तिर्भवति, **पुनश्च**=तदनन्तरम्, पक्वानां परावृत्तरूपादिमतां परमाणूनाम् अग्निसंयोगाधीनद्व्यणुकाद्यारम्भकक्रियाजन्यपरस्परसंयोगात्, **द्व्यणुकादिक्रमेण**=परमाणुद्वयसंयोगेन द्व्यणुकम्, द्व्यणुकत्रयसंयोगेन त्र्यणुकम्, त्र्यणुकचतुष्टयसंयोगेन चतुरणुक इत्येवं क्रमेण रजःकंकरपिण्डकपालघटादिमहावयविपर्यन्तमुत्पत्तिर्भवतीति॥ तत्र पाकजरूपादौ परमाणवः समवायिकारणम्, तेजःसंयोगोऽसमवायिकारणम्, अदृष्टादिकं निमित्तकारणं, द्व्यणुकादिरूपे कारणरूपम् असमवायिकारणमिति बोध्यम्॥ ननु तर्हि पूर्वव्यूहनाशो व्यूहान्तरोत्पत्तिः उत्पन्नव्यूहे पूर्वव्यूहभेदश्च कुतो नोपलभ्यते इत्यत आह-**तेजसामिति**। वह्निसूक्ष्मावयवानाम्, **अतिशयितवेगवशात्**=विजातीयवेगाधीनक्रियावशात्, तादृशक्रियया झटिति क्रमेण पूर्व-

**अत्र द्व्यणुकादि स्वविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पत्त्या रूपादिमद्भवतीति शिष्यबुद्धिवैशद्यार्थं क्षणप्रक्रिया ॥ तत्र विभागजविभागानङ्गीकारे नवक्षणा ॥ तदङ्गीकारे तु विभागः किञ्चित्सापेक्षो विभागं जनयेत्, निरपेक्षस्य तत्त्वे कर्मत्वं**

व्यूहनाशः=द्व्यणुकादिघटपर्यन्तनाशः, व्यूहान्तरोत्पत्तिश्च=द्व्यणुकप्रभृतिघटपर्यन्तोत्पत्तिश्चेत्यर्थः॥ तथा च क्षणभेदाऽज्ञानात् न पूर्वव्यूहनाशाद्युपलब्धिः, पूर्वव्यूहसाजात्यदोषाच्च पूर्वव्यूहभेदाऽनुपलब्धिश्चेति भावः॥

**अत्र**=रूपादेः पाकजत्वप्रकरणे, द्व्यणुकं स्वनाशक्षणमारभ्य कतिक्षणान्तरितक्षणैः पुनरुत्पन्नं द्व्यणुकं रूपादिमद्भवतीति शिष्याणां जिज्ञासया तन्निवर्तकनिश्चयनिष्पत्तये, क्षणप्रक्रिया=द्व्यणुकनाशोत्पत्त्यधिकरणक्षणप्रभृत्युत्पत्स्यमानद्व्यणुकादिसमवेतरूपाद्युत्पत्तिक्षणनिरूपणं क्रियते इत्यर्थः॥ अथ घटपरमाणुषु वह्निसंयोगेन द्व्यणुकनाशो भवति, यथा—प्रथमं वह्निसंयोगः, ततः परमाणौ क्रिया, ततः परमाण्वन्तरेण विभागः, ततः आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशः, इति। अत्र परमाण्वन्तरात्मकाऽवयवविभागात् द्व्यणुकनाशक्षणे द्व्यणुकनाशोत्तरं वा कारणाऽकारणविभागस्वीकारपक्षे तदधीनः परम्परया परमाणुकर्मनाशात्मकश्चतुर्थक्षणोऽधिको द्व्यणुकनाशमारभ्य उत्पन्नद्व्यणुकान्तरीयरूपाद्युत्पत्तिपर्यन्तक्षणसमुदायपरिगणने विवर्धते, विभागजविभागाऽनङ्गीकारपक्षे तु अधिकः क्षणो न भवेदित्यभिप्रायेणाह—**तत्र विभागजविभागाऽनङ्गीकारे** इति। विभागजविभागो द्वेधा, कारणमात्रविभागात् कारणाऽकारणविभागः, कारणाऽकारणविभागात् कार्याकार्यविभागश्च। आद्यस्तावत् यत्र कपाले कर्म, ततः कपालद्वयविभागः, ततः घटारम्भकसंयोगनाशः, ततो घटनाशः, ततस्तेनैव कपालविभागेन सकर्मणः कपालस्य आकाशात् विभागो जन्यते, सोऽयं कारणमात्रविभागात् कारणाऽकारणविभागः। द्वितीयस्तु—यत्र करक्रियया करतरुविभागः, ततः शरीरेऽपि विभक्तप्रत्ययः, सोऽयं विभागः कारणाऽकारणविभागात् कार्याऽकार्यविभाग इत्युच्यते। तथा च प्रकृते कारणमात्रविभागात् कारणाऽकारणविभागाऽनङ्गीकारे इत्यर्थः। तदनङ्गीकारे युक्तिर्यथा—'कारणक्रिययैव कारणाऽकारणविभागोपपत्तौ कारणमात्रविभागात् तदुत्पत्तिस्वीकारो निरर्थक इति। परमाणुक्रियायाः परमाणुद्वयविभागे परमाण्वाकाशविभागे च वैयधिकरण्याऽभावेन हेतुत्वसंभवात् परमाणुद्वयविभागात्मककारणमात्रविभागस्य परमाण्वाकाशविभागात्मककारणाऽकारणविभागहेतुत्वे मानाऽभावात्। न च—विभागग्रन्थे विकसत्कमलकुड्मलभङ्गप्रसङ्गभिया, द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियायास्तदनारम्भकसंयोगप्रतिद्वन्द्विविभागाऽजनकत्वमि'तिस्वीकृतनियमविरोध इति वाच्यम्। पद्मारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मविशेषस्य कुड्मलारम्भकसंयोगप्रतिद्वन्द्विविभागविशेषाऽजनकत्वेऽपि दलाकाशसंयोगनाशकदलाकाशविभागजनकत्वे बाधकाऽभावेन विकसत्कमलकुड्मलभङ्गप्रसङ्गाऽभावेन 'तादृशविभागजनकत्वस्य तादृशविभागाऽजनकत्वव्याप्यत्व'पर्यवसितोक्तनियमस्याऽनावश्यकत्वात्। उक्तनियमस्य तदारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणः तदनारम्भकयत्किञ्चिद्द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वार्थकत्वस्वीकाराद्वा विकसत्कमलकुड्मलभङ्गप्रसङ्गाऽभावादिति भावः॥ अत्र—विकसत्कमलकुड्मलभङ्गप्रसङ्गभियाऽङ्गीकृतोक्तनियमस्य यथाश्रुतार्थकत्ववादिनवीनैकदेशिमते परमाणुद्वयविभागजनकक्रियायाः परमाण्वाकाशविभागजनकत्वाऽसम्भवेन परमाणुद्वयविभागस्यैव तज्जनकत्वं वक्तव्यमित्याशयेनाह—**तदङ्गीकारे त्विति**। परमाणुद्वयविभागात्मककारणमात्रविभागात परमाण्वाकाशविभागात्मककारणाऽकारणविभागोत्पत्त्यङ्गीकारे तु, विभागः=कारणमात्रविभागः, किञ्चित्सापेक्षः=स्वोत्तरोत्पन्नकिञ्चि-

स्यात्। 'संयोगविभागयोरनपेक्षं कारणं कर्मे'ति (१।१।१७) वैशेषिकसूत्रम्। स्वोत्तरोत्पन्नभावान्तरानपेक्षत्वं तस्यार्थः, अन्यथा कर्मणोऽप्युत्तरसंयोगोत्पत्तौ पूर्वसंयोगनाशापेक्षणादव्याप्तिः स्यात्। तत्र यदि द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात्तदा दशक्षणा॥ अथद्रव्यनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात्तदैकादशक्षणा॥

अथ नवक्षणा। तथाहि–अग्निसंयोगात्परमाणौ कर्म। ततः परमाण्वन्तरेण

---

द्रव्यतु(परमाणुद्वयसंयोगनाश)सहकृत एव, विभागम्=कारणाकारणविभागं,-जनयेत्, निरपेक्षस्य=कारणमात्रविभागस्य स्वोत्तरोत्पन्नकिञ्चिदसहकृतस्य, तत्त्वे=विभागजनकत्वे, कर्मत्वं स्यात्=कर्मलक्षणाक्रान्तत्वापत्तिः स्यात्॥ तृतीयपदार्थस्य कर्मणः लक्षणं 'एकद्रव्यमगुणं संयोगविभागयोरनपेक्षं कारणं कर्म'( १।१।१७ )इति वैशेषिकसूत्रेणोक्तम्, तत्र 'संयोगेऽनपेक्षकारणत्वं विभागेऽनपेक्षकारणत्वं वा कर्मत्वमि'ति लक्षणद्वये तात्पर्यम्। तत्र प्रथमलक्षणे संयोगसमवायिकारणे पूर्वसंयोगविनाशे चातिव्याप्तिवारणाय निरपेक्षत्वमुक्तम्, कारणतायां निरपेक्षत्वं च-समवायसम्बन्धावच्छिन्नत्वमेव। उक्तोभयत्र समवायाऽवच्छिन्नत्वाऽभावाद्वारणम्। द्वितीयलक्षणे-विभागसमवायिकारणेऽतिव्याप्तिवारणाय-निरपेक्षत्वम्, तच्च न समवायसम्बन्धावच्छिन्नत्वमात्रम्, नवीनैकदेशिमते परमाणुद्वयविभागेऽतिव्याप्त्यापत्तेः, तस्य परमाण्वाकाशविभागनिरूपितसमवायसम्बन्धावच्छिन्नकारणतावत्त्वात्, किन्तु विभागाऽव्यवहितपूर्वक्षणोत्पत्तिकत्वविशिष्टसमवायसम्बन्धावच्छिन्नत्वरूपम्, तथा च विभागनिरूपिता या विभागाऽव्यवहितपूर्वक्षणोत्पत्तिकत्वविशिष्टसमवायसम्बन्धावच्छिन्नकारणता तद्वत्त्वं कर्मत्वमिति लक्षणं फलितम्। इत्थं च परमाणुद्वयविभागाऽव्यवहितोत्तरक्षणे एव परमाण्वाकाशविभागस्वीकारे विभागघटितकर्मलक्षणस्य परमाणुद्वयविभागेऽतिव्याप्त्यापत्त्या परमाणुद्वयसंयोगादिनाशं मध्ये अपेक्ष्य ततःपरमाण्वाकाशविभागो वक्तव्य इति, तेन न कारणविभागेऽतिव्याप्तिः कर्मलक्षणस्येति भावः॥ उपस्कारानुसारेण अनपेक्षत्वं निर्वक्ति-स्वोत्तरोत्पन्नेति। स्वोत्तरोत्पन्नभावान्तरानपेक्षत्वमिति अनपेक्षपदस्यार्थः। तथा च संयोगविभागनिरूपिता स्वोत्तरोत्पन्नभावान्तराऽनपेक्षिता या कारणता तद्वत्त्वमिति लक्षणार्थः। भावपदसार्थक्यमाह-अन्यथेति। भावपदघटिततादृशाऽर्थाकरणे इत्यर्थः। कर्मणः अपि स्वोत्तरसंयोगे जननीये पूर्वसंयोगनाशस्यापेक्षावत्त्वात् कर्मण्येवाऽव्याप्तिः स्यादिति, भावपदोपादाने तु कर्मणः स्वोत्तरं जायमानस्य पूर्वसंयोगनाशस्य भावत्वाऽभावेन नाऽव्याप्तिरितिभावः॥ तत्रेति। किञ्चित्सापेक्षविभागस्य विभागजनकत्वपक्षे इत्यर्थः॥ द्रव्यारम्भकसंयोगनाशविशिष्टकालमपेक्ष्य=परमाणुद्वयसंयोगनाशाऽव्यवहितोत्तरक्षणे एव, विभागजविभागः=परमाणुद्वयविभागजन्यः परमाण्वाकाशविभागः स्वीक्रियते तदा दश क्षणाः भवन्ति। कन्दलीकारमते कारणाऽकारणविभागं प्रति आरम्भकसंयोगस्य प्रतिबन्धकत्वेन कारणमात्रविभागस्य आरम्भकसंयोगनाशद्वारैव हेतुत्वादिति भावः॥ अथ-द्रव्यनाशविशिष्टं कालमपेक्ष्य=द्व्यणुकनाशक्षणाऽव्यवहितोत्तरक्षणे एव, कारणविभागात् कारणाऽकारणविभागः स्वीक्रियते तदा एकादशक्षणाः भवन्ति। नवीनैकदेशिमते कारणाऽकारणविभागं प्रति द्रव्यस्य प्रतिबन्धकतया तदभावस्य हेतुत्वेन परमाणुद्वयविभागस्य द्व्यणुकनाशद्वारैव परमाण्वाकाशविभागं प्रति हेतुत्वादिति भावः॥

नवक्षणान् परिगणयति-अथ नवक्षणाः,-तथाहीति। अग्निसंयोगात्=अग्निप्रतियोगिकपरमाणुसमवेतपाकात्मकसंयोगात्, परमाणौ=द्व्यणुकारम्भकपरमाणुद्वये क्रिया। तया च परमा-

विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशः १। ततः परमाणौ श्यामादिनाशः २। ततो रक्ताद्युत्पत्तिः ३। ततो द्रव्यारम्भानुगुणा क्रिया ४। ततो विभागः ५। ततः पूर्वसंयोगनाशः ६। तत आरम्भकसंयोगः ७। ततो द्व्यणुकोत्पत्तिः ८। ततो रक्ताद्युत्पत्तिः ९।

ननु श्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणा क्रियाऽस्त्विति चेद्,-न, अग्निसंयुक्ते परमाणौ यत्कर्म तद्विनाशमन्तरेण गुणोत्पत्तिमन्तरेण च परमाणौ क्रियान्तराभावात्,-कर्मवति कर्मान्तरानुत्पत्तेर्निर्गुणे द्रव्ये द्रव्यारम्भानुगुणक्रियानुपपत्तेश्च। तथापि परमाणौ श्यामादिनिवृत्तिसमकालं रक्ताद्युत्पत्तिः स्यादिति चेद्,-न, पूर्वरूपादिध्वंसस्यापि रूपान्तरे हेतुत्वात्। इति नवक्षणा॥

---

ण्वन्तरेण विभागः=द्व्यणुकारम्भकपरमाणुद्वयसमवेतविभागः। तत आरम्भकसंयोगनाशः=द्व्यणुकाऽसमवायिकारणसंयोगनाशः। ततो द्व्यणुकनाशः=परमाणुद्वयकार्यस्य द्व्यणुकस्य नाशः, एतत्क्षणमारभ्य क्षणगणना ग्राह्येति प्रदर्शनार्थमङ्कमाह-१ इति। ततः अग्न्यन्तरसंयोगजन्यः परमाणुसमवेतश्यामादिनाशः २। ततः श्यामादिनाशकाद् अन्यस्माद्वा अग्निसंयोगात् रक्तरूपोत्पत्तिः ३। ततः परमाणौ द्व्यणुकारम्भानुगुणा क्रिया ४। ततः सक्रियपरमाणोः देशान्तराद्विभागः ५। ततः परमाणोः देशान्तरानुयोगिकस्य पूर्वसंयोगस्य नाशः ६। ततः परमाण्वोः द्व्यणुकारम्भकसंयोगः ७। ततो द्व्यणुकम् ८। ततस्तत्र रक्तादिरूपमिति ९॥ नव क्षणाः बोध्याः॥

ननु द्वितीये तृतीये वा क्षणे चतुर्थक्षणीया क्रिया भवतु तत्र प्रतिबन्धकाऽभावादित्याशंकते-**नन्विति**। श्यामादिनाशक्षणात्मके द्वितीयक्षणे, रक्तोत्पत्तिक्षणात्मके तृतीये वा क्षणे परमाणौ द्रव्यारम्भानुगुणक्रियास्वीकारे तदर्थं कल्पितश्चतुर्थक्षणो न कल्पनीय इति अष्टावेव क्षणाः स्युरिति लाघवमिति भावः॥ समाधत्ते-**न, अग्निसंयुक्ते इति**। अग्न्यन्तरसंयुक्ते परमाणौ यत् कर्म तद्विनाशमन्तरेण=द्व्यणुकनाशोत्पत्तिक्षणोत्पत्तिकोत्तरसंयोगाऽसमवायिकारणक्रियानाशं विनेत्यर्थः। तथा च श्यामनाशक्षणे कर्मणो नाशात् तत्पूर्वक्षणे कर्मणः सत्त्वादेव कर्मनाशात्मककारणाऽभावात् न श्यामनाशक्षणे क्रियान्तरोत्पत्तिरितिभावः॥ रक्तोत्पत्तिक्षणे क्रियान्तरोत्पत्तिं वारयति-**गुणोत्पत्तिमन्तरेण चेति**। रक्तादिगुणोत्पत्तिं विना च तत्र निर्गुणे परमाणौ क्रियान्तरोत्पत्तेरसंभवादित्यर्थः॥ तत्र प्रथमे हेतुमाह-**कर्मवतीति**। समवायेन क्रियान्तरं प्रति पूर्वक्रियायाः प्रतिबन्धकत्वात् न कर्मान्तरोत्पत्तिरित्यर्थः। द्वितीये हेतुमाह-**निर्गुणे द्रव्ये इति**। निर्गुणे द्रव्ये परमाणौ द्व्यणुकारम्भानुगुणक्रियाया अप्युत्पत्त्यसंभवादित्यर्थः। तथा च तादृशक्रियायाश्चतुर्थः क्षणः स्वीकार्य इति भावः॥ ननु-तथापि श्यामनाशरक्तोत्पत्ती एकस्मिन्नेव क्षणे जायेताम् इत्याशंकते-**तथापि परमाणाविति**। तदानीं प्रतिबन्धकीभूतपूर्वरूपादेरभावादिति भावः॥ समाधत्ते **पूर्वरूपादीति**। समवायेन रूपं प्रति समवायेन रूपप्रतियोगिकाऽभावस्यापि प्रतिबन्धकाऽभावविधया हेतुत्वात्, तत्र प्रतिबन्धकस्यैव सत्त्वात् न रक्ताद्युत्पत्तिरतो न अष्टौ क्षणाः किन्तु नवैवेति भावः॥

**नवक्षणानां विशदभावः**-प्रथमम् अग्निक्रिया, घटारम्भकबाह्याभ्यन्तरपरमाण्वोरारम्भकसंयोगाऽविरोधिन्यौ क्रिये चेत्येकः कालः। ततोऽग्निपूर्वदेशविभागो घटारम्भकतादृशपरमाणुद्वयपूर्वदेशविभागश्च। ततोऽग्निपूर्वदेशसंयोगनाशो घटारम्भकतादृशपरमाणुद्वयपूर्वदेशसंयोगनाशश्च। ततोऽग्निबाह्यपरमाण्वोरेव संयोगः। ततस्तयोः क्रियानाशः। ततश्चोभयोरपि कर्मणी। ततश्च विभागः।

**अथ दशक्षणा। सा च-आरम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजनने सति स्यात्। तथाहि-वह्निसंयोगात् द्व्यणुकारम्भके परमाणौ कर्म, ततो विभागः, तत आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशविभागजविभागौ १। ततः श्यामनाशपूर्वसंयोगनाशौ २। ततो रक्तोत्पत्त्युत्तरसंयोगौ ३। ततो वह्निनोदनजन्यपरमाणुकर्मणो नाशः ४। ततोऽदृष्टवदात्मसंयोगाद् द्रव्यारम्भानुगुणा क्रिया ५। ततो विभागः ६। ततः पूर्वसंयोगनाशः ७। तत आरम्भकसंयोगः ८। ततो द्व्यणुकोत्पत्तिः ९। ततो रक्तोत्पत्तिः १०। इति दशक्षणा॥**

ततः पूर्वसंयोगनाशः, द्व्यणुकारम्भकबाह्याभ्यन्तरपरमाणुद्वयसंयोगनाशश्च। ततो बाह्यपरमाणोरुत्तरदेशेनाऽग्नेश्च तदुत्तरदेशेन आभ्यन्तरपरमाणुना संयोगौ, द्व्यणुकनाशश्च १॥ ततस्तयोः क्रियानाशः, आभ्यन्तरपरमाणौ श्यामरूपनाशश्च २। तत्र आभ्यन्तरपरमाणौ रक्तोत्पत्तिरग्नौ क्रिया च ३। ततोऽग्नौ आभ्यन्तरपरमाणुविभागः, आभ्यन्तरपरमाणौ च क्रियोत्पत्तिः ४। ततः अग्नितत्परमाणुसंयोगनाशः, परमाणुपूर्वदेशविभागश्च ५। ततोऽग्नेः आभ्यन्तरपरमाणौ संयोगः, परमाणुपूर्वदेशसंयोगनाशश्च ६। तत आभ्यन्तरबाह्यपरमाणुसंयोगः ७ ततो द्व्यणुकोत्पत्तिः ८॥ ततो रूपोत्पत्तिः ९॥ इति॥

अथ दशक्षणान् परिगणयति-**सा च-आरम्भकेति**। परमाणुद्वयसंयोगनाशोत्पत्त्यधिकरणक्षणाऽव्यवहितोत्तरक्षणे। विभागेन विभागजनने सति=कारणमात्रविभागेन कारणाऽकारणविभागाऽङ्गीकर्तृकन्दलीकारमताऽश्रयणे सति भवेदित्यर्थः॥ तदुपपादयति-**तथाहीति**। वह्निसंयोगाद् द्व्यणुकारम्भकपरमाणुद्वये क्रिया उत्पद्यते। तादृशक्रियया परमाण्वन्तरेण द्व्यणुकारम्भकपरमाणुद्वयसमवेतविभागः। तत आरम्भको यो-द्व्यणुकाऽसमवायिसंयोगस्तन्नाशः। ततो द्व्यणुकनाशः परमाण्वाकाशविभागश्च जायते, द्व्यणुकनाशं प्रति असमवायिकारणनाशविधया हेतुभूतस्य, परमाण्वाकाशविभागं प्रति व्यापारविधया हेतुभूतस्य आरम्भकसंयोगनाशस्याऽव्यवहितपूर्वक्षणावच्छेदेन परमाणौ सत्त्वादिति भावः-१॥ ततः श्यामनाशपूर्वसंयोगनाशौ=अग्न्यन्तरसंयोगाधीनश्यामादिनाशः परमाण्वाकाशविभागाधीनपरमाण्वाकाशसंयोगनाशश्चेत्यर्थः-२। ततः रक्तोत्पत्त्युत्तरसंयोगौ=श्यामादिनाशकाग्निसंयोगाद् अन्यस्मादग्निसंयोगाद्वा रक्तोत्पत्तिः परमाण्वाकाशसंयोगनाशाधीनपरमाण्वाकाशसंयोगान्तरं चेत्यर्थः-३। ततो वह्निनोदनजन्यपरमाणुकर्मणो नाशः=वह्निपरमाणुसंयोगजन्यपरमाणुक्रियाया नाशः-४। ततोऽदृष्टवदात्मसंयोगात्=अदृष्टवदात्मसंयोगसहकृतपरमाण्वग्निसंयोगाद् अदृष्टसहकृतपरमाण्वग्निसंयोगाद्वा, द्रव्यारम्भानुगुणा क्रिया=द्व्यणुकाऽसमवायिकारणपरमाणुद्वयसंयोगाऽऽसमवायिकारणक्रियेत्यर्थः-५। ततः सक्रियपरमाण्वोः देशान्तराद्विभागः-६। ततः परमाणोः देशान्तरानुयोगिकस्य पूर्वसंयोगस्य नाशः-७। ततः परमाण्वोः द्व्यणुकारम्भकसंयोगः-८। ततो द्व्यणुकम्-९। ततो रक्तादिरूपमिति-१०॥ **दशक्षणानां**-विशदभावः-यत्राग्निक्रिया, बाह्यपरमाणुक्रिया च। ततोऽग्निपूर्वदेशविभागो बाह्याऽभ्यन्तरपरमाण्वोः द्रव्यारम्भकसंयोगाऽप्रतिद्वन्द्विपूर्वदेशविभागश्च। ततोऽग्निपूर्वदेशसंयोगनाशः, बाह्याभ्यन्तरपरमाणुपूर्वदेशसंयोगनाशश्च। ततोऽग्निबाह्यपरमाणुसंयोगः। ततस्तयोः क्रियानाशः। ततोऽग्नौ स्ववेगात् तादृशवेगवदग्निसंयोगाद् बाह्यपरमाणौ तत्संयोगादाभ्यन्तरपरमाणौ च कर्माणि। ततोऽग्निपूर्वदेशविभागः, बाह्याभ्यन्तरपरमाण्वोश्च विभागः। ततोऽग्नौ पूर्वदेशसंयोगनाशः, बाह्याभ्यन्तरपरमाण्वोरारम्भकसंयोगनाशः। ततोऽग्न्याभ्यन्तरपरमाणुसंयोगो बाह्याभ्यन्तरपरमाण्वोर्विभागजविभागौ द्व्यणुकनाशश्चे-

**अथैकादशक्षणा–वह्निसंयोगात्परमाणौ कर्म, ततो विभागः, ततो द्रव्यारम्भकसंयोगनाशः, ततो द्व्यणुकनाशः १। ततो द्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजविभागश्यामनाशौ २। ततः पूर्वसंयोगनाशरक्तोत्पत्ती ३। तत उत्तरदेशसंयोगः ४। ततो वह्निनोदनजन्यः परमाणुकर्मनाशः ५। ततोऽदृष्टवदात्मसंयोगाद् द्रव्यारम्भानुगुणा क्रिया ६। ततो विभागः ७। ततः पूर्वसंयोगनाशः ८। ततो द्रव्यारम्भकोत्तरसंयोगः**

---

त्येकः कालः–१। तत आभ्यन्तरपरमाणौ श्यामनाशः, अग्नौ क्रियानाशः, बाह्याभ्यन्तरपरमाण्वोर्गगनादिसंयोगनिवृत्तिः २। तत आभ्यन्तरपरमाणौ रक्तोत्पत्तिः, अग्न्याभ्यन्तरपरमाणुविभागानुगुणाग्निक्रिया, बाह्याभ्यन्तरपरमाण्वोर्गगनादिनोत्तरदेशेन संयोगश्च–३। ततोऽग्न्याभ्यन्तरपरमाणुसंयोगविनाशको विभागः, बाह्याभ्यन्तरपरमाण्वोः क्रियानाशश्च–४। तत आभ्यन्तरपरमाणौ क्रियान्तरम्, आग्नेराभ्यन्तरपरमाणुसंयोगनाशः–५। ततः परमाणुद्वयस्य पूर्वदेशविभागः, अग्नेरुत्तरदेशसंयोगश्च–६। ततः पूर्वदेशसंयोगनाशः–७। ततः परस्परं संयोगः–८। ततो द्व्यणुकोत्पत्तिः–९। ततो रूपोत्पत्तिः–१०। इति॥

अथैकादशक्षणान् परिगणयति–**अथैकादश क्षणा** इति। नवीनैकदेशिमतेन एकादशक्षणान् परिगणयति इत्यर्थः। वह्निसंयोगात् द्व्यणुकारम्भकपरमाणुद्वये क्रिया। ततः परमाण्वन्तरेण द्व्यणुकारम्भकपरमाणुद्वयसमवेतविभागः। ततो द्व्यणुकारम्भकस्य असमवायिकारणसंयोगस्य नाशः। ततो द्व्यणुकस्य नाशः १। **ततो द्व्यणुकनाशविशिष्टं कालमपेक्ष्य**=द्व्यणुकनाशोत्पत्त्यधिकरणक्षणाऽव्यवहितोत्तरक्षणे, **विभागजविभागश्यामनाशौ**=परमाणुद्वयविभागजन्यपरमाण्वाकाशविभागः श्यामादिनाशश्च, द्रव्यनाशद्वारैव कारणमात्रविभागस्य कारणाकारणविभागं प्रति हेतुत्वमिति नवीनैकदेशिमते द्व्यणुकनाशोत्तरमेव परमाण्वाकाशविभागसंभवात् द्व्यणुकनाशक्षणे एव परमाण्वोरवयविनाऽवष्टब्धत्वेन तदैव तत्र विजातीयतेजस्संयोगोत्पत्त्या तदुत्तरक्षणे एव तत्र श्यामादिनाशसंभवादितिभावः २॥ ततः परमाण्वाकाशविभागाधीनपरमाण्वाकाशसंयोगनाशः रक्ताद्युत्पत्तिश्च–३। तत आकाशादिना उत्तरदेशेन सह परमाणुसंयोगः–४। ततो वह्निसंयोगजन्यः परमाणुकर्मनाशः ५। तत अदृष्टवदात्मसंयोगसहकृतपरमाण्वग्निसंयोगाद्व अदृष्टसहकृतपरमाण्वग्निसंयोगाद्वा द्व्यणुकाऽसमवायिकारणसंयोगानुगुणा क्रिया ६। ततः सक्रियपरमाण्वोर्देशान्तराद्विभागः–७। ततः परमाण्वोः देशान्तरानुयोगिकस्य पूर्वसंयोगस्य नाशः–८। ततः परमाण्वोर्द्व्यणुकारम्भकसंयोगः ९। ततो द्व्यणुकम्–१०। ततो रक्तोत्पत्तिरिति–११॥

**एकादशक्षणानां विशदभावः**–यत्राग्निक्रिया, बाह्यपरमाण्वोरारम्भकसंयोगाऽविरोधिनी क्रिया। ततस्तयोः पूर्वदेशविभागः। ततः पूर्वसंयोगनाशः। ततो बाह्यपरमाण्वग्निसंयोगः। ततोऽग्निबाह्यपरमाण्वोः क्रियानाशः। ततो बाह्यपरमाणौ आभ्यन्तरपरमाणौ च आरम्भकसंयोगप्रतिद्वन्द्विविभागानुगुणक्रिया, अग्नौ च क्रियान्तरम्। ततो बाह्याऽभ्यन्तरपरमाण्वोर्विभागः, अग्निबाह्यपरमाण्वोर्विभागश्च। ततो बाह्याभ्यन्तरपरमाण्वोरारम्भकसंयोगनाशः, अग्नौ च बाह्यपरमाण्वादिसंयोगनाशः। ततो द्व्यणुकनाशः, आभ्यन्तरपरमाण्वग्निसंयोगश्च–१। ततोऽग्निक्रियानाशः, आभ्यन्तरपरमाणौ श्यामरूपनाशः, बाह्याभ्यन्तरपरमाण्वोर्विभागजविभागश्च–२। ततोऽग्नौ क्रियान्तरम्, आभ्यन्तरपरमाणौ रक्तोत्पत्तिः, बाह्याभ्यन्तरपरमाण्वोः पूर्वदेशसंयोगनाशौ–३। ततोऽग्न्याभ्यन्तरपरमाणुविभागः, बाह्याभ्यन्तरपरमाण्वोरुत्तरदेशसंयोगौ च–४। ततोऽग्न्याभ्यन्तरपरमाणुसंयोगविनाशः, बाह्याभ्यन्तरपरमाण्वोः क्रियानाशश्च–५। ततोऽग्निबहिर्देशसंयोगः, बाह्याभ्यन्तरपरमाण्वो-

**९। ततो द्व्यणुकोत्पत्तिः १०। ततो रक्ताद्युत्पत्तिः ११ इति। मध्यशब्दवदेकस्मादग्निसंयोगान्न रूपनाशोत्पादौ, तावत्कालमेकस्याग्नेरस्थिरत्वात्। किञ्च नाशक एव यद्युत्पादकः, तदा नष्टे रूपादावग्निनाशे नीरूपश्चिरं परमाणुः स्यात्। उत्पादकश्चेन्नाशकः, तदा रक्तोत्पत्तौ तदग्निनाशे रक्ततरता न स्यात्। इत्येकादशक्षणा॥**

द्रव्यारम्भानुगुणक्रिया च–६। ततः पूर्वदेशविभागः–७। ततः पूर्वदेशसंयोगविनाशः–८। ततः परस्परं संयोगः–९। ततो द्व्यणुकोत्पत्तिः–१०। ततो रक्तोत्पत्तिः–११ इति॥ अत्र एकक्षणन्यूनतालाभार्थं द्व्यणुकनाशकाग्निसंयोगस्यैव श्यामादिनाशकत्वं रक्ताद्युत्पादकत्वं चास्त्वित्याशंकां, श्यामादिनाशकाग्निसंयोगस्य रक्ताद्युत्पादकत्वमप्यस्त्वित्याशंकां, च क्रमेण निरस्यति-मध्यशब्दवदिति। यथा मध्यमशब्दः पूर्वशब्दस्य नाशकः उत्तरशब्दस्योत्पादकश्च भवति, तद्वत् एकस्मात् अग्निसंयोगात् न पूर्वश्यामादिरूपनाशः उत्तररक्तादिरूपोत्पत्तिश्च भवितुमर्हतीति, एवं मध्यमशब्दो यथा यत्किंचिच्छब्दात्मकस्वनाशकः शब्दान्तरात्मकस्वसजातीयोत्पादकश्च भवति, तद्वत् एकएवाग्निसंयोगः श्यामादिनाशकः श्यामादिसजातीयरक्ताद्युत्पादकश्च न भवितुमर्हतीति व्यतिरेकदृष्टान्तपूर्वकतादृशग्रन्थार्थो बोध्यः॥ प्रथमकल्पे हेतुमाह–तावत्कालमिति। श्यामादिनिवृत्तिक्षणे तदव्यवहितपूर्वक्षणे चेत्यर्थः। एकस्याऽग्नेः=द्व्यणुकनाशकाग्नेः अस्थिरत्वात्=अवर्तमानत्वात्, तथाच द्व्यणुकनाशकाग्निसंयोगात् अन्यस्मादग्निसंयोगात् श्यामादिनाशोऽवश्यं स्वीकार्यं इति भावः॥

ननु–मास्तु द्व्यणुकनाशकाग्निसंयोगस्य परमाणुश्यामनाशकत्वं रक्तोत्पादकत्वं च, परन्तु द्व्यणुकनाशसमकालोत्पन्नाऽग्न्यन्तरसंयोगस्य परमाणौ श्यामनाशकत्वं रक्तोत्पादकत्वं च भवतु। न च श्यामनाशकतावच्छेदकरक्तोत्पादकतावच्छेदकजात्योः सांकर्यापत्तिरिति वाच्यम्। उत्पादकतावच्छेदकजातेः नाशकतावच्छेदकजातिव्याप्यत्वोपगमादित्यत आह–किञ्च नाशक एवेति। यद्युत्पादकतावच्छेदकवैजात्यं नाशकतावच्छेदकवैजात्यव्याप्यं तदेत्यर्थः। नष्टे रूपादौ=विनश्यदवस्थापन्नविजातीयाग्निसंयोगेन श्यामादौ नष्टे सति। अग्निनाशे=तादृशाग्निसंयोगस्य श्यामादिनाशकाले नाशे सति। नीरूपश्चिरं परमाणुः स्यात्=अग्निसंयोगात्मककारणस्य नष्टत्वात् रक्ताद्युत्पत्त्यसंभवेन सर्वदा रूपाऽभाववानेव परमाणुः स्यादित्यर्थः। यद्वा श्यामनाशकालादारभ्य क्षणत्रयं निरूपं स्यादित्यर्थः। तृतीयक्षणभाव्यग्न्यन्तरसंयोगादेव चतुर्थे रूपान्तरोत्पत्तिम्, उत्तरकाले तन्नाशे रूपान्तरोत्पत्तिं चांगीकृत्य रूपवत्त्वोपपत्तेरिति॥ तथा च रक्तोत्पत्त्यर्थमवश्यम् अन्योऽग्निसंयोगः स्वीकार्यं इति भावः॥ परमाणुरिति वैशेषिकमतेन। न्यायनये तु घटादेरपि नीरूपत्वप्रसंगो बोध्यः॥ ननु रक्ताद्युत्पादकतावच्छेदकवैजात्यस्य श्यामादिनाशकतावच्छेदकवैजात्यव्याप्यत्वं न ब्रूमः, परन्तु तयोरैक्यमिति, तेन न सांकर्यदोषोऽपि, एवं च–चरमाग्निसंयोगस्य रक्ताद्युत्पादकस्य तन्नाशस्वरूपयोग्यत्वेऽपि तादृशसंयोगस्याऽनुभवानुरोधेन रूपादिनाशं प्रति प्रतिबन्धकत्वस्वीकारात् तादृशाग्निसंयोगात् रूपादिनाशाऽसंभवेन न पूर्वोक्तनीरूपत्वापत्तिदोषः, इत्यतोऽस्मिन् पक्षेऽपि दोषमाह–उत्पादकश्चेन्नाशक इति। नाशकतावच्छेदकं यदि उत्पादकतावच्छेदकं तदा, रक्तोत्पत्तौ=श्यामादिनाशकचरमाऽग्न्यन्तरसंयोगेन रक्ताद्युत्पत्तौ, तदग्निनाशे=चरमाग्निसंयोगनाशे सति, रक्ततरता रक्ततमता इति न स्यादित्यर्थः॥ तथा च–आदौ परमाणावग्निसंयोगः अग्न्यन्तरकर्म च, ततोऽग्निसंयोगात् परमाणौ कर्म तादृशाग्निसंयोगजनककर्मनाशः अग्न्यन्तरस्य पूर्वदेशविभागश्च, ततः परमाणुद्वयविभागः तदग्नौ कर्म अग्न्यन्तरस्य पूर्वदेशसंयोगनाशश्च, तत आरम्भकसंयोगनाशः तादृश-

अथ परमाण्वन्तरे कर्मचिन्तनात्पञ्चमादिक्षणेऽपि गुणोत्पत्तिः। तथाहि-एकत्र परमाणौ कर्म, ततो विभागः, तत आरम्भकसंयोगनाशपरमाण्वन्तरकर्मणी। ततस्तु द्व्यणुकनाशः, परमाण्वन्तरकर्मजश्च विभाग इत्येकः कालः १। ततः श्यामादिनाशः, विभागाच्च पूर्वसंयोगनाश इत्येकः कालः २। ततो रक्तोत्पत्तिर्द्रव्यारम्भकसंयोगश्चेत्येकः कालः ३। अथ द्व्यणुकोत्पत्तिः ४। ततो रक्तोत्पत्तिः ५। इति पञ्चक्षणा ॥

द्रव्यनाशसमकालं परमाण्वन्तरे कर्मचिन्तनात्षष्ठक्षणे गुणोत्पत्तिः, तथाहि—परमाणुकर्मणा परमाण्वन्तरविभागः, तत आरम्भकसंयोगनाशः। अथ द्व्यणुकनाशपरमाण्वन्तरकर्मणी १। अथ श्यामादिनाशः, परमाण्वन्तरकर्मजो विभागश्च २। ततो रक्तोत्पत्तिः परमाण्वन्तरे पूर्वसंयोगनाशश्च ३। ततः परमाण्वन्तरसंयोगः ४। ततो

---

कर्मजन्यविभागः परमाणौ चरमाग्न्यन्तरसंयोगश्च, ततो द्व्यणुकनाशः तदग्निपरमाणुसंयोगनाशः अग्न्यन्तरकर्मनाशश्च, ततश्चरमाग्निसंयोगजन्यः परमाणौ श्यामादिनाशः पुनरग्न्यन्तरकर्म च, ततः रक्तोत्पत्तिः चरमाग्न्यन्तरसंयोगनाशकविभागश्च, ततश्चरमाग्न्यन्तरसंयोगनाशसंभवात्, अत्र श्यामनाशकतावच्छेदकम् अग्निसंयोगत्वं यदि रक्ताद्युत्पादकतावच्छेदकं तदा एकवैजात्यस्यैव रक्तरक्ततररक्ततमोत्पादकतावच्छेदकत्वावश्यकतया कारणतावच्छेदकभेदाऽभावेन रक्तरक्ततरत्वादिवैलक्षण्यानुपपत्तिः, क्वचिद्रक्तोत्पत्तिः, क्वचिद्रक्ततरोत्पत्तिः, क्वचिद्रक्ततमोत्पत्तिरिति व्यवस्थानुपपत्तिश्च। तस्मात् नाशकतावच्छेदकवैजात्यविरुद्धमेव उत्पादकतावच्छेदकवैजात्यमङ्गीकर्तव्यम्, एवं च रक्तोत्पादकतावच्छेदकवैजात्यव्याप्य रक्ततराद्युत्पादकतावच्छेदकवैजात्यद्वयाऽङ्गीकारात् कारणतावच्छेदकभेदसत्त्वेन घटकुंकुममाणिक्येष्वनुभूयमानरक्ततारतम्यस्योपपत्तिरिति। तस्मादेकादशक्षणानां न हानिरित्यैदम्पर्यमिति ॥

अथ अन्ये तु द्व्यणुकनाशानन्तरं पुनरुत्पन्नद्व्यणुकस्य द्व्यणुकनाशक्षणप्रभृति—पञ्चमषष्ठसप्तमाष्टमक्षणेषु रूपादिमत्त्वं स्वीकुर्वन्तीति तन्मतोपन्यासायादौ बीजमुपन्यस्यति—अथ परमाण्वन्तरे इति। द्व्यणुकनाशकक्रियावच्छिन्नपरमाणुभिन्नोत्पत्स्यमानद्व्यणुकारम्भकपरमाणावित्यर्थः, कर्मचिन्तनात्=उत्पन्नद्व्यणुकारम्भकसंयोगनाशाद्युत्पत्तिक्षणे उत्पत्स्यमानद्व्यणुकारम्भककर्मोत्पत्तिस्वीकारात्, पञ्चमादिक्षणे=द्व्यणुकनाशक्षणप्रभृतिपञ्चम-षष्ठ सप्तमाष्टमक्षणेषु, रक्तादिगुणोत्पत्तिर्भवतीत्यर्थः। संभवप्रकारमाह—तथाहीति। अत्र आरम्भकसंयोगनाशक्षणे परमाण्वन्तरे कर्मोत्पत्तिक्षणे द्व्यणुकनाशक्षणप्रभृतिपञ्चमक्षणे रूपादिमत्त्वं भवतीति। एकत्रेति। अग्निसंयोगात् एकस्मिन् द्व्यणुकावयवे परमाणौ क्रिया। ततः परमाण्वोर्विभागः। ततो द्व्यणुकाऽसमवायिकारणसंयोगनाशः, द्वितीये द्व्यणुकावयवे परमाणौ क्रिया च। ततो द्व्यणुकनाशः, परमाण्वन्तरक्रियाजन्यः परमाण्वन्तराकाशविभागः इत्येकः क्षणः-१। आकाशेन सह परमाणुपूर्वसंयोगनाशः, ततोऽग्निसंयोगात् परमाणौ श्यामादिनाशः तादृशविभागाच्च आकाशेन सह परमाणुपूर्वसंयोगनाशः-२। ततः परमाण्वोः रक्तोत्पत्तिः, द्रव्यारम्भकसंयोगश्च-३। ततो द्व्यणुकम्-४। ततो द्व्यणुके रक्तोत्पत्तिरिति-५॥ इति पञ्चक्षणा ॥

अथ षट्क्षणान् उपपादयति—द्रव्यनाशसमकालमिति। द्व्यणुकनाशक्षणे परमाण्वन्तरे कर्मोत्पत्तिपक्षे षष्ठक्षणे रूपादिमत्त्वमित्यर्थः॥ तथाहीति। अग्निसंयोगजन्येन एकपरमाणुकर्मणा द्वितीयपरमाणुना सह विभागः। ततो द्व्यणुकारम्भकसंयोगनाशः। ततो द्व्यणुकनाशो द्वितीयस्मिन्परमाणौ कर्म च-१। ततः एकपरमाणौ श्यामनाशः, परमाण्वन्तरे क्रियाजन्य आकाशेन सह

द्व्यणुकोत्पत्तिः५ । अथ रक्तोत्पत्तिः ६ । इति षट्क्षणा ॥

एवं श्यामनाशक्षणे परमाण्वन्तरे कर्मचिन्तनात्सप्तक्षणा। तथाहि-परमाणौ कर्म, ततः परमाण्वन्तरेण विभागः, तत आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशः १ । ततः श्यामादिनाशपरमाण्वन्तरकर्मणी २ । ततो रक्तोत्पत्तिः, परमाण्वन्तरे कर्मज-विभागश्च ३ । ततः परमाण्वन्तरेण पूर्वसंयोगनाशः ४ । ततः परमाण्वन्तरसंयोगः ५ । ततो द्व्यणुकोत्पत्तिः ६ । ततो रक्तोत्पत्तिः ७ । इति सप्तक्षणा ॥

एवं रक्तोत्पत्तिसमकालं परमाण्वन्तरे कर्मचिन्तनादष्टक्षणा। तथाहि-परमाणौ कर्म, ततः परमाण्वन्तरविभागः, तत आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशः १ । ततः श्यामनाशः २ । ततो रक्तोत्पत्तिपरमाण्वन्तरकर्मणी ३ । ततः परमाण्वन्तरकर्म-जविभागः ४ । ततः परमाण्वन्तरे पूर्वसंयोगनाशः ५ । ततः परमाण्वन्तरसंयोगः ६ । ततो द्व्यणुकोत्पत्तिः ७ । अथ रक्तोत्पत्तिः ८ । इत्यष्टक्षणा ॥१०५॥

**नैयायिकानां तु नये द्व्यणुकादावपीष्यते ।**

नैयायिकानामिति । नैयायिकानां मते द्व्यणुकादाववयविन्यपि पाको भवति । तेषामयमाशयः-अवयविनां सच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्ववष्ट-

---

विभागः-२ । ततः एकपरमाणौ रक्तोत्पत्तिः, परमाण्वन्तरे पूर्वाकाशसंयोगनाशः-३ । ततः परमा-ण्वन्तरस्य एकपरमाणुना सह संयोगः-४ । ततो द्व्यणुकम्-५ । ततो रक्तोत्पत्तिरिति-६ ॥ इति षट्क्षणाः ॥

**एवमिति** । श्यामादिनाशक्षणे परमाण्वन्तरे कर्मोत्पत्तिपक्षे सप्तमक्षणे रूपादिमत्त्वं भवतो-त्यर्थः । **तथाहीति** । वह्निसंयोगाद् एकत्र परमाणौ कर्म । ततो द्वितीयपरमाणुना सह विभागः । ततस्तयोः संयोगनाशः । ततो द्व्यणुकनाशः-१ । ततः एकपरमाणौ श्यामनाशः, द्वितीयपरमाणौ च कर्मः-२ । तत एक परमाणौ रक्तोत्पत्तिः द्वितीयपरमाणौ कर्मजन्यविभागः-३ । ततो द्वितीयपर माणौ आकाशेन पूर्वसंयोगनाशः-४ । ततः परमाण्वन्तरेण एकपरमाणुसंयोगः-५ । ततो द्व्यणुकम्-६ । ततो रक्ताद्युत्पत्तिरिति-७ । इति सप्तक्षणः ॥

**एवं रक्तोत्पत्तिसमकालमिति** । रक्तोत्पत्तिक्षणे परमाण्वन्तरे क्रियोत्पत्तिपक्षेऽष्टमपक्षे रूपा-दिमत्त्वं संभवतीत्यर्थः । **तथाहीति** । अग्निसंयोगादेकत्र परमाणौ क्रिया । ततो द्वितीयपरमाणुना सह विभागः । ततो द्व्यणुकाऽसमवायिकारणसंयोगनाशः । ततो द्व्यणुकनाशः-१ । ततः एकपर-माणौ श्यामनाशः-२ । ततस्तत्र रक्तोत्पत्तिः द्वितीयपरमाणौ कर्म च-३ । ततः द्वितीयपरमाणोः क्रियाजन्याकाशविभागः-४ । ततः-तस्य पूर्वाकाशसंयोगनाशः-५ ततः परमाण्वन्तरेणैकपरमाणुसं-योगः-६ । ततो द्व्यणुकम्-७ । ततो रक्तोत्पत्तिरिति-८ इत्यष्टौ क्षणाः ॥ १०५ ॥

**मूले-नैयायिकानां त्विति** । नैयायिकानां=गौतमीयानां मते तु, द्व्यणुकादाववयविन्यपि पाको भवतीति । परमाण्वात्मकेऽवयवे द्व्यणुकघटाद्यवयविनि च पाके युक्तिं दर्शयितुमाह-मुक्ता-वल्यां-**तेषामयमाशय** इत्यादिना । युक्तिं दर्शयति-**अवयविनामिति** । घटादीनां वह्निप्रवेश-योग्यच्छिद्रवत्त्वाद् वह्नेर्द्व्यणुकत्र्यणुकात्मकसूक्ष्मावयवैः सह घटादिषु संयुक्तेषु सत्सु तत्रान्तःप्रविष्टै-स्तैरवयवैरेव अवयविना घटेनाऽवष्टब्धेष्वाश्रितेषु कपालकपालिकाद्व्यणुकपरमाणुषु अपि पाकः= रूपान्तराद्युत्पादकविजातीयतेजस्संयोगो न विरुध्यते, घटस्य सच्छिद्रतया तस्य वह्न्यवयवसंयोगवि-

व्येष्वपि पाको न विरुध्यते। वैशेषिकमते अनन्तावयवितन्नाशकल्पनेन गौरवात्। इत्थं च सोऽयं घट इत्यादिप्रत्यभिज्ञापि सङ्गच्छते। यत्र तु न प्रत्यभिज्ञा तत्रावयविनाशोऽपि स्वीक्रियत इति ॥

गणनाव्यवहारे तु हेतुः संख्याऽभिधीयते ॥ १०६ ॥

संख्यां निरूपयितुमाह-गणनेति। गणनाव्यवहारासाधारणकारणं संख्येत्यर्थः ॥

नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते।
द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥१०७॥

नित्येष्विति। नित्येषु-परमाण्वादिषु एकत्वं नित्यम्। अनित्ये घटादावेकत्वमनित्यमित्यर्थः। द्वित्वादयो व्यासज्यवृत्तिसंख्या अपेक्षाबुद्धिजन्याः ॥१०७॥

---

घटकत्वाऽभावादिति भावः ॥ अवयविनाशानङ्गीकारे बाधकाऽभावमुक्त्वा तदङ्गीकारे बाधकमप्याह-अनन्तावयवीति। परमाणुपाकवादिवैशेषिकमते अनेकद्व्यणुकनाशप्रयुक्ताऽनन्तघटनाशकल्पनम् अनन्तद्व्यणुकोत्पत्तिप्रयुक्ताऽनन्तघटोत्पत्तिकल्पनं च गौरवमित्यर्थः ॥ तन्मते 'सोऽयं घट'इति प्रत्यभिज्ञाऽपि विरुध्येतेति भावः ॥ अस्माकं मते तु साऽप्युपपद्यते इत्याह-इत्थं चेति। घटादावपि पाकस्वीकारेण तन्नाशानभ्युपगमे चेत्यर्थः। 'सोऽयं घट'इति प्रत्यभिज्ञायाः प्रमात्वम् उपपद्यते इति ॥ अथ कश्चित् कुत्रचित् पिण्डादौ 'सोऽयं पिण्ड'इतिप्रत्यभिज्ञा नोत्पद्येत, तत्र अवयविनो नाशः अवयव्यन्तरोत्पत्तिश्च स्वीक्रियते, पाकस्तु तत्रापि अवयवेषु अवयविषु चोभयत्रेति भावः ॥

मूले-गणनाव्यवहारे त्विति। 'अयमेकः' 'इमौ द्वौ' 'इमे त्रयः' इति यो गणनात्मकशब्दव्यवहारस्तत्र प्रकारतया संख्या असाधारणनिमित्तकारणमित्यर्थः। 'एकत्वादिव्यवहाराऽसाधारणहेतुत्वमिति लक्षणार्थः। घटादिवारणाय-एकत्वादीति। कालादिवारणाय-असाधारणेति। अन्ये तु-'एको द्वा'वित्यादिशब्दनिष्ठवाच्यतासम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वमिति लक्षणं, यद्यपि 'एको द्वा'वित्यादिशब्दघटिततया नाऽनुगतत्वं तथापि संख्यावाचकशब्दत्वेन एकादिशब्दान् अनुगमय्य तादृशशब्दत्वावच्छिन्नवाच्यतेत्यादिलक्षणस्य एकत्वादिपरार्धपर्यन्तसंख्यासु सत्त्वात्समन्वयः। यादृशैकत्वादिसंख्यया तादृशव्यवहारो न जातस्तत्राऽतिव्याप्तिवारणाय-तादृशकारणत्वसमानाधिकरणरूपाऽवृत्तिजातिमत्त्वस्य विवक्षितत्वात् ॥ एवं संख्यापदशक्यतावच्छेदकसंख्यात्वजातिमत्त्वमपि लक्षणं बोध्यम् ॥ संख्यात्वम् एकत्वत्वादिकं च जातिः प्रत्यक्षसिद्धाऽपि। "एकं दश शतं चैव सहस्रमयुतं तथा। लक्षं च नियुतं चैव कोटिरर्बुदमेव च ॥ वृन्दं खर्वो निखर्वश्च शंखः पद्मश्च सागरः। अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम्" ॥ अयुतं=दशसहस्रम्। नियुतं=दशलक्षकम्। अर्बुदं=दशकोटिः। वृन्दं = शतकोटिः। ततो दशगुणं खर्वः। एवमग्रेऽपि दशवृद्ध्यैव बोध्यम्। 'लोके'त्वर्बुद'पदेन शतकोटिर्गृह्यते, तच्छास्त्रविरुद्धमिति, स्वोत्पत्तिकालोत्पत्तिकयावत्संख्यासमानाधिकरणसंख्यात्वं परार्धत्वम् ॥ १०६ ॥

मूले-नित्येष्विति। नित्याऽनित्यभेदेन एकत्वं द्विविधम्, तत्र नित्येषु परमाणुषु आकाशादिषु च समवेतमेकत्वं नित्यम्। अथ एकत्वनाशं प्रति आश्रयनाशस्य हेतुत्वेन घटादिषु अनित्येषु वर्तमानमेकत्वम् अनित्यमित्यर्थः। अथ द्वित्वादिकं तु सर्वत्र नित्याऽनित्यपदार्थेष्वपि अनित्यमेवेति बोध्यम्, द्वित्वादिकं प्रति समवायिकारणगतम् एकत्वम् असमवायिकारणम्, 'अयमेकोऽयमेक'इत्या-

अनेकाश्रयपर्याप्ता एते तु परिकीर्तिताः ।
अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥१०८॥

अनेकेति । यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्तते, तथाप्येको द्वाविति प्रत्ययाभावात् एको न द्वाविति प्रत्ययसद्भावाच्च द्वित्वादीनां पर्याप्तिलक्षणः कश्चन सम्बन्धोऽनेकाश्रयोऽभ्युपगम्यते ॥ अपेक्षाबुद्धिनाशादिति ॥ प्रथममपेक्षाबुद्धिः, ततो द्वित्वोपत्तिः, ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पात्मकं, ततो द्वित्वत्वविशिष्टप्रत्यक्षमपेक्षाबुद्धिनाशश्च, ततो द्वित्वनाश इति । यद्यपि ज्ञानानां

---

अपेक्षाबुद्धिर्निमित्तकारणम् । तादृशद्वित्वत्रित्वादयो व्यासज्यवृत्तिसंख्याः = उभयादिवृत्तिसंख्याः उच्यन्ते, ताश्च अपेक्षाबुद्ध्या जन्यन्ते इत्यर्थः । अतीन्द्रियेषु ईश्वरीयाऽपेक्षाबुद्धिरूपकारणात् द्वित्वाद्युत्पत्तिरिति । ईश्वरबुद्धेर्नित्यत्वेऽपि ईश्वरीयाऽपेक्षाबुद्धिसहकारिक्षणविशेषस्य नाशात् द्वित्वनाशोपपादनात् । 'अपेक्षाबुद्धिनाशाच्चे'तिमूलस्य आश्रयनाशोपलक्षकत्ववत् ईश्वरीयाऽपेक्षाबुद्धिसहकारिक्षणनाशोपलक्षकत्वस्वीकारादिति ध्येयम् ॥ १०७ ॥

ले-अनेकाश्रयेति । एते द्वित्वादिसंख्याः पर्याप्त्याख्यस्वरूपसम्बन्धेन अनेकाश्रयेषु=व्यक्तिद्वयादिष्वेव वर्तन्ते इति । अथ च-तेषां द्वित्वादीनाम् अपेक्षाबुद्ध्यात्मककारणनाशात् नाशो भवतीत्यर्थः ॥ पर्याप्तिसम्बन्धसाधनाय आक्षिपति-**मुक्तावल्यां-यद्यपीति** । द्वित्वादेः समवायाख्यः सम्बन्धः प्रत्येके घटादौ घटद्वयादौ च वर्तते तथा च समवायेनैव 'द्वौ घटावि'तिव्यवहारनिर्वाहे समवायभिन्नं तादृशव्यवहारनिर्वाहकतया सम्बन्धान्तरं न कल्पनीयम् इत्याशयः ॥ समाधत्ते-**तथापीति** । 'एको द्वौ'इति प्रतीतिर्न भवति, एको न द्वौ'इति प्रतीतिस्तु भवति, तथा च पर्याप्त्यनङ्गीकारे समवायेन एकघटेऽपि द्वित्वस्य सत्त्वेन 'एको द्वावि'तिप्रतीत्यापत्तिः, 'एको न द्वावि'तिप्रतीत्यनुपपत्तिश्च स्यात् । तद्वारणाय पर्याप्त्यङ्गीकारः, पर्याप्तिसम्बन्धो द्वित्वस्य अधिकरणद्वये एव, त्रित्वस्य चाधिकरणत्रये एव, न तु न्यूने, इति नोक्तापत्त्यनुपपत्तीति भावः ॥ जगदीशादयस्तु-उभयादेः प्रत्येकाऽनतिरिक्ततया उभयादौ वर्तमानपर्याप्तिरेकैकव्यक्तावपि अवश्यमङ्गीकार्या, तत्र उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिरेव द्वित्वादिसम्बन्धः, एवं च द्वित्वादिपर्याप्तेर्द्वित्वादिरूपतया एकत्वव्याप्यद्वित्वादिपर्याप्तेरप्रसिद्ध्या 'एको द्वावि'तिप्रत्ययाऽभावः, उभयत्वादिव्याप्यद्वित्वादिपर्याप्तेः प्रसिद्धतया तादृशपर्याप्त्यव्यापकैकत्वावच्छेदेन तादृशपर्याप्तिसम्बन्धेन द्वित्ववद्भेदसत्त्वात् 'एको न द्वावि'तिप्रत्ययश्चोपपादनीयः । 'एको द्वित्ववानि'तिप्रत्ययः 'एको न द्वित्ववानि'तिप्रत्ययाभावश्च द्वित्वनिष्ठप्रकारतायां तन्निष्ठभेदप्रतियोगितावच्छेदकतायां चाऽवच्छेदकसम्बन्धतया समवायस्य भानमङ्गीकृत्यैव समर्थनीय इति । **अन्ये तु**-'आकाशौ'इति वाक्यस्य प्रामाण्यापत्त्या पर्याप्त्यङ्गीकार आवश्यक इति वदन्ति ॥ अथ-चतुर्थक्षणेऽपेक्षाबुद्धिनाशात् पञ्चमक्षणे द्वित्वनाशो भवतीति व्युत्पादनार्थं वैशेषिकप्रक्रियां प्रदर्शयति-**प्रथममित्यादिना** । प्रथमम्-इन्द्रियसन्निकर्षानन्तरम् । अपेक्षाबुद्धिः='अयमेकः' 'अयमेक'-इत्याद्यनेकधर्मावच्छिन्नविशेष्यकैकत्वप्रकारकप्रत्यक्षम् १। ततः 'इमौ द्वावि'ति द्वित्वोत्पत्तिः' २। ततो द्वित्वत्वद्वित्वोभयनिष्ठतुरीयविषयताशालिज्ञानं निर्विकल्पकम्'३। ततो द्वित्वत्वप्रकारताकद्वित्वविशेष्यताकलौकिकप्रत्यक्षम्, अपेक्षाबुद्धेर्नाशश्च४, । प्रतियोगितासम्बन्धेन अपेक्षाबुद्धिनाशं प्रति स्वप्रागभावाधिकरणक्षणवृत्तित्व-स्वसमानकालीनत्वोभयसम्बन्धेन गुणत्वेन हेतुत्वात् द्वित्वप्रत्यक्षात्मकगुणस्य अपेक्षाबुद्धिनाशकत्वमिति भावः ॥ शंकते-

द्विक्षणमात्रस्थायित्वं,–योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिगुणनाश्यत्वात्, तथाप्य-पेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं कल्प्यते, अन्यथा निर्विकल्पककालेऽपेक्षाबुद्धिनाशानन्तरं द्वित्वस्यैव नाशः स्यात्, न तु द्वित्वप्रत्यक्षं,–तदानीं विषयाभावात्, विद्यमानस्यैव चक्षुरादिना ज्ञानजननोपगमात् । तस्माद् द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते । न चापेक्षाबुद्धिनाशात्कथं द्वित्वनाश इति वाच्यम्, कालान्तरे द्वित्वप्रत्य-

---

यद्यपीति । ज्ञानानां=ज्ञानत्वावच्छिन्नस्य, प्रथमक्षणे उत्पत्तिः, द्वितीयक्षणे स्थितिः, तृतीय-क्षणे तु ध्वंस एवेति न्यायसिद्धान्तः । तत्र हेतुमाह–योग्येति । योग्याः प्रत्यक्षविषयाः ये विभूनाम् आकाशात्मनां विशेषगुणाः शब्दज्ञानसुखदुःखेच्छाद्वेषप्रयत्नास्ते, स्वोत्तरवृत्तिगुणैः=स्वस्थितिक्षणोत्पन्नैः विशेषगुणैः स्वतृतीयक्षणे नाश्यन्ते इति नियमात् अपेक्षाबुद्ध्यात्मक-ज्ञानमपि तृतीयक्षणे स्मरणादिना नाशयितव्यमिति भावः ॥ शब्दत्वबुद्धित्वसुखत्वदुःख-त्वेच्छात्वद्वेषत्वयत्नत्वानां मध्ये प्रतियोगितासम्बन्धेन स्वाश्रयप्रतियोगिकत्वकालिकविशेषण-त्वोभयसम्बन्धावच्छिन्नैकैकजातिविशिष्टं ( नाशं ) प्रति स्वाऽव्यवहितपूर्ववृत्तित्वसम्बन्धेन गुणत्वेन (विशेषगुणस्य ) हेतुत्वमिति नियमः फलितो बोध्यः ॥ समाधत्ते–तथापीति । अपेक्षाबुद्धेः त्रिक्ष-णस्थायित्वं=चतुर्थक्षणवृत्तिध्वंसप्रतियोगित्वं स्वीक्रियते इत्यर्थः ॥ तथाऽनङ्गीकारेऽनिष्टमाह–अन्यथेति । अपेक्षाबुद्धेः त्रिक्षणस्थायित्वानङ्गीकारे इत्यर्थः । द्वित्वत्वद्वित्वनिर्विकल्पकोत्पत्तिकाले तृतीयक्षणे अपेक्षाबुद्धेर्नाशे सति, कारणनाशेन द्वित्वात्मककार्यस्य चतुर्थक्षणे नाश एव प्रसज्येत न तु सविकल्पकप्रत्यक्षं स्यात्, तदानीं विषयस्य द्वित्वस्यैव नाशात्, प्रत्यक्षं प्रति तु विद्यमानस्यैव विषयस्य विषयविधया कारणत्वात् विषयसत्त्वे एव चक्षुरादिना प्रत्यक्षज्ञानजननसिद्धान्तात्, तस्मात्=द्वित्वत्वद्वित्वनिर्विकल्पकादिप्रत्यक्षम् अपेक्षाबुद्धेर्नाशजनकं कल्प्यते न तु द्वितीयक्षणो-त्पन्नस्मरणादीति भावः ॥ आदिना त्रित्वत्वत्रित्वादिनिर्विकल्पकादि बोध्यम् । तथा च प्रतियोगिता-सम्बन्धेनाऽपेक्षाबुद्धिनाशं प्रति स्वप्रागभावाधिकरणक्षणवृत्तित्वस्वसमानकालीनत्वोभयसम्बन्धेन गुणत्वेन हेतुत्वस्य नियमात् द्वित्वसविकल्पकक्षणे एव अपेक्षाबुद्धेर्नाशात् न द्वित्वसवि-कल्पकाऽनुपपत्तिरिति भावः ॥ अथान्ये–द्वित्वादिनिर्विकल्पकक्षणेऽपेक्षाबुद्धिनाशाङ्गीकारे द्वित्वलौकिकसविकल्पकाऽसम्भवेऽपि द्वित्वनिष्ठाऽलौकिकविषयताशालिप्रत्यक्षे बाधकाऽभावात् अपेक्षाबुद्धेः क्षणत्रयाऽवस्थायित्वकल्पनं निष्फलमिति वदन्ति । तन्न । प्राचीनमते निर्विकल्पकस्याऽ-प्रत्यासत्तित्वेन अलौकिकप्रत्यक्षाऽसंभवात्, तदुत्तरजायमान'द्वित्वं साक्षात्करोमी'त्यनुव्यवसायवि-रोधाच्च । नवीनमतावलम्बिनस्तु–अपेक्षाबुद्धेस्त्रिक्षणाऽवस्थायित्वे मानाऽभावः, द्वित्वोत्पत्तिका-लोत्पत्तिकपूर्वानुभवजनितसंस्कारजन्यद्वित्वत्वप्रकारकस्मरणात् द्वित्वोत्पत्तिद्वितीयक्षणे लौकिकद्वित्व-त्वविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षोत्पत्तिसंभवेन तादृशप्रत्यक्षमादायोक्तानुव्यवसायोपपत्तेरिति वदन्ति । तन्न । द्वित्वोत्पत्तिक्षणे नियमेन द्वित्वत्वप्रकारकस्मृतौ मानाऽभावेन यत्र न तादृशस्मरणं तत्र द्वित्वत्वविशिष्टवैशिष्ट्यावगाहिलौकिकप्रत्यक्षाऽनुत्पत्त्या तादृशानुव्यवसायाऽनुत्पत्तेर्दुर्वारत्वात् ॥ तस्माद् द्वित्वादिपरार्धपर्यन्तानां तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वस्य सर्वमताऽसिद्धतया, द्वित्वत्व-प्रकारकस्मृत्युत्पत्त्यनधिकरणद्वित्वाद्युत्पत्त्यधिकरणक्षणतृतीयक्षणोत्पन्नानां 'द्वे द्रव्ये'इत्याद्याकारकाणां सकलप्रत्यक्षाणां द्वित्वाद्यंशेऽलौकिकत्वकल्पनाऽपेक्षया, तादृशसकलप्रत्यक्षोत्तरं साक्षात्करोमीत्यनु-व्यवसायाऽपलापाऽपेक्षया च,–लाघवाद् अपेक्षाबुद्धेः, त्रिक्षणावस्थायित्वकल्पनमेव युक्तमिति ध्येयम् ॥ ननु–द्वित्वादीनां नित्यतया तद्विनाशहेतुविचारस्याऽसंगतत्वमित्याशयेनाऽऽशंकते–

क्षाभावात्, अपेक्षाबुद्धिस्तदुत्पादिका, तन्नाशात्तन्नाश इति कल्पनात्। अत एव तत्पुरुषीयाऽपेक्षाबुद्धिजन्यद्वित्वादिकं तेनैव गृह्यत इति कल्प्यते। न चापेक्षाबुद्धेर्द्वित्वप्रत्यक्षे कारणत्वमस्त्विति वाच्यम्, लाघवेन द्वित्वं प्रत्येव कारणत्वस्योचितत्वात्। अतीन्द्रिये द्व्यणुकादावपेक्षाबुद्धिर्योगिनाम्, सर्गादिकालीनपरमाण्वादावी-

---

न चाऽपेक्षाबुद्धिनाशादिति। कथं द्वित्वनाशः=द्वित्वादेर्नित्यत्वेन तन्नाशहेतुः अपेक्षाबुद्धिनाश इतिविचारस्याऽयुक्तत्वमिति मीमांसकाऽभिप्रायो बोध्य इत्यर्थः॥ द्वित्वस्योत्पत्तिमत्त्वे तस्य भावपदार्थस्य विनाशहेतुचिन्तनं युक्तमित्याशयेन समाधित्सुरादौ तर्केण द्वित्वादेरपेक्षाबुद्धिजन्यतां साधयति–कालान्तरे इति। कालान्तरे=अपेक्षाबुद्धिनाशोत्पत्त्युत्तरक्षणे, द्वित्वस्य लौकिकप्रत्यक्षाऽऽभावात्। तथा च 'यद्यपेक्षाबुद्धिनाशोत्पत्त्युत्तरक्षणे द्वित्वं स्यात् तर्हि उपलभ्येत, यतो नोपलभ्यते अतस्तन्नास्ति, तथा च तन्नाशं प्रति अपेक्षाबुद्धिनाशः कारणमिति अर्थात् सिद्ध्यतीति भावः॥ ननु–अपेक्षाबुद्धिनाशाद् अन्यदेव नाशकमस्त्वित्यत आह–अपेक्षाबुद्धिरिति। यतः अपेक्षाबुद्धेः द्वित्वोत्पत्तिनिमित्ताऽसाधारणकारणत्वम् अत एव तन्नाशात्=अपेक्षाबुद्धिनाशात् तन्नाशः= द्वित्वनाशः इति कल्पयितुं शक्यत्वात्। तथा च द्रव्यनाशं प्रति असमवायिकारणनाशस्य क्लृप्तहेतुतावत् द्वित्वनाशं प्रति असाधारणनिमित्तकारण( अपेक्षाबुद्धि )नाशस्य हेतुत्वं कल्प्यते, कारणनाशस्य कार्यनाशहेतुतायाः क्लृप्तत्वादिति भावः॥ ननु–अपेक्षाबुद्धेर्द्वित्वादिहेतुत्वे चैत्रीयाऽपेक्षाबुद्धिजन्यद्वित्वस्य अपेक्षाबुद्धिशून्यमैत्रस्याऽपि प्रत्यक्षापत्तिः, सन्निकर्षादिघटितसामग्र्याः सत्त्वादत आह–अत एवेति। अपेक्षाबुद्धेर्द्वित्वादिहेतुत्वस्याऽऽवश्यकत्वादेवेत्यर्थः। तत्पुरुषीयेति। चैत्रीयाऽपेक्षाबुद्धिजन्यद्वित्वं चैत्रेणैव प्रत्यक्षं क्रियते, तद्भिन्नपुरुषेण नैव गृह्यते इत्यर्थः। इति कल्प्यते=इत्यङ्गीक्रियते। द्वित्वादिनिष्ठलौकिकविषयतासम्बन्धेन तत्पुरुषीयप्रत्यक्षव्यक्तिं प्रति तत्पुरुषीयाऽपेक्षाबुद्धिजन्यद्वित्वादिव्यक्तेस्तादात्म्येन हेतुत्वस्वीकारात् नोक्तापत्तिरिति भावः॥ ननु कालान्तरे द्वित्वप्रत्यक्षवारणाय द्वित्वप्रत्यक्षं प्रत्येव अपेक्षाबुद्धेर्हेतुत्वमस्तु न तु द्वित्वं प्रति, द्वित्वस्य नित्यत्वादितिमीमांसकः शंकते–न चाऽपेक्षाबुद्धेरिति। उपस्थितिकृतलाघवमभिप्रेत्य समाधत्ते–लाघवेनेति। द्वित्वप्रत्यक्षत्वाऽपेक्षया द्वित्वत्वस्य कार्यतावच्छेदकत्वेऽपि लाघवं बोध्यम्। इदमधिकं बोध्यम्–द्वित्वादिकं प्रत्यपेक्षाबुद्धेर्निमित्तहेतुत्वाऽनङ्गीकारे एकत्वस्येव नित्यगतद्वित्वादेर्नित्यत्वप्राप्त्या अनित्यगतद्वित्वादेरनित्यत्वप्राप्त्या च परमाणुद्वयगतद्वित्वपरमाण्वाकाशादिगतद्वित्वानामनन्तानामेकदैकत्र समावेशाऽऽपत्तिः, एवं पटाद्युत्पत्त्यनन्तरम् एकत्वोत्पत्तिवद् एतत्पटव्यक्तिभिन्नद्रव्यव्यक्त्यो यावत्यः तावद्व्यक्तिसंख्यासमसंख्याकद्वित्वानामानन्त्यापत्तिः, एवं पटोत्पत्तिद्वितीयक्षणे एव तस्मिन्नेव पटे कोटिकोटिद्वित्वानामप्युत्पत्त्यापत्तिः, इत्थं च एकैकस्मिन् द्रव्ये एककालाऽवच्छेदेनाऽप्रामाणिककोटिकोटिद्वित्वाद्युत्पत्तिस्वीकाराऽपेक्षया नित्यमात्रवृत्तिनित्यद्वित्वादीनामनन्तानां कल्पनाऽपेक्षया च अतिलाघवाद् द्वित्वादावेवाऽपेक्षाबुद्धेः कारणता वक्तव्या, एवं च ययोरपेक्षाबुद्धिस्तयोरेव द्वित्वोत्पत्तिस्वीकारात् न अप्रामाणिकाऽनन्तद्वित्वकल्पनापत्तिः, तस्माद् द्वित्वादावेव अपेक्षाबुद्धेः कारणत्वं प्रामाणिकमिति ध्येयम्॥ ननु अपेक्षाबुद्धेर्द्वित्वाद्युत्पादकत्वं न संभवति, द्व्यणुकस्याऽस्मदीयप्रत्यक्षाऽगोचरतया तत्र अपेक्षाबुद्ध्यसंभवेन तत्र त्रित्वानुत्पत्त्यापत्तेः, न चेष्टापत्तिः, भावकार्यस्याऽसमवायिकारणजन्यत्वनियमेन द्व्यणुकगतद्वित्वं विना त्र्यणुकपरिमाणाऽनुत्पत्तेः, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमेन द्व्यणुकपरिमाणस्य तत्राऽसमवायिकारणत्वाऽसंभवादत आह–अतीन्द्रिये द्व्यणुकादाविति। आदिना परमाणुर्ग्राह्यः। द्व्यणु-

श्वरीयापेक्षाबुद्धिः, ब्रह्माण्डान्तरवर्तियोगिनामेक्षाबुद्धिर्वा द्वित्वादिकारणमिति।१०८।

अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरिष्यते ।

अपेक्षाबुद्धिः केत्यत आह–अनेकैकेति। अयमेकोऽयमेक इत्याकारिका इत्यर्थः। इदं तु बोध्यम् , यत्रानियतैकत्वज्ञानं तत्र त्रित्वादिभिन्ना बहुत्वसंख्योत्पद्यते, यथा सेना·

---

कादिविशेष्यकाऽस्मदाद्यपेक्षाबुद्धयसंभवेऽपि सर्वज्ञयोगिनाम् अपेक्षाबुद्धयैव द्वयणुकादौ द्वित्वाद्युत्पत्तिसंभवान्नोक्तदोष इति भावः ॥ ननु सर्गादौ योगिनामभावात् तदा तत्र कथं द्वित्वाद्युत्पत्तिरत आह–सर्गादीति । सर्गस्य ब्रह्माण्डोत्पत्तेः, आदौ = पूर्वकाले=प्रलयकाले इति यावत्, ईश्वरीयाऽपेक्षाबुद्धिवशात् द्वयणुकादौ द्वित्वादिसमुत्पत्तौ बाधकाऽभावादिति भावः ॥ ननु ईश्वरीयाऽपेक्षाबुद्धेर्नित्यत्वेन तज्जन्यद्वित्वादेर्नित्यत्वापत्तिरित्यत आह–ब्रह्माण्डान्तरवर्तियोगिनामिति । ब्रह्माण्डस्य अन्तरे भुवनान्तराले वर्तमानानां योगिनाम् अपेक्षाबुद्धिः खण्डप्रलयद्वयणुकादौ द्वित्वादिकारणतया वाऽभ्युपगन्तव्येति नोक्तनित्यत्वदोषापत्तिरिति भावः ॥ अन्ये तु–ईश्वरीयाऽपेक्षाबुद्धेर्नित्यत्वेऽपि ईश्वरीयाऽपेक्षाबुद्धिविशिष्टक्षणानामनित्यत्वात् तादृशक्षणनाशस्यैव तत्र द्वित्वादिनाशप्रयोजकत्वकल्पनात् घटादौ क्वचित् तदस्वीकारे तु घटादौ द्वित्वनाशं प्रति ईश्वरीयाऽपेक्षाबुद्धिविषयाश्रयनाशस्यैव प्रयोजकत्वकल्पनात् न नित्यत्वापत्तिरिति वदन्ति ॥ तन्न । कारणीभूतक्षणविशेषस्य द्वित्वाद्युत्पत्तिकाले नाशाद् द्वित्वाद्युत्पत्तिद्वितीयक्षणे द्वित्वादिनाशापत्तेः । क्षणविशेषनाशत्वेन आश्रयनाशत्वेन च द्वित्वादिनाशकारणत्वकल्पने गौरवाच्च ॥ १०८ ॥

मूले–अनेकैकत्वेति । अनेकानि एकत्वानि प्रकारा यत्र एतादृशी या बुद्धिः 'एकत्ववत् एकत्ववत् एकत्ववदि'त्याकारिका, सा अपेक्षाबुद्धिरित्यर्थः ॥ मुक्तावल्याम्–अपेक्षाबुद्धिः केत्यत इति । अपेक्षाबुद्धिः कीदृशीत्याकांक्षातः तन्निवृत्यर्थं अपेक्षाबुद्धिस्वरूपमाहेत्यर्थः ॥ ननु–मूलमात्राद् अनेकपदार्थविशेष्यकैकत्वप्रकारकज्ञानमपेक्षाबुद्धिरित्यर्थलाभेन 'एक एक' इतिनिर्धर्मितावच्छेदकैकत्वप्रकारकज्ञानादपि द्वित्वाद्युत्पत्त्यापत्तिरित्यतो मूलार्थमाह–अयमेकोऽयमेक इति । तद्व्यक्तिमात्रनिष्ठेदन्त्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताशालिनी बुद्धिरपेक्षाबुद्धिपदार्थ इत्यर्थः । अनेकपदार्थनिष्ठसावच्छिन्नाऽनेकविशेष्यतानिरूपितैकत्वत्वावच्छिन्नप्रकारताशालिप्रत्यक्षरूपेति यावत् ननु–एतादृशाऽपेक्षाबुद्धेर्द्वित्वाद्युत्पादकत्वे यत्र अनियतपंचदशषोडशादिपदार्थविशेष्यकैकत्वप्रकारकज्ञानं तत्र बहुत्वसंख्याया इव पञ्चदशत्वषोडशत्वादेरप्युत्पत्त्यापत्तिः, कारणसत्त्वात्। न चेष्टापत्तिरिति वाच्यम् । तादृशाऽपेक्षाबुद्धयुत्तरं 'इमे बहव' इत्याकारकबहुत्वविषयकप्रत्यक्षस्यैवाऽनुभवसिद्धत्वात् , इमे पञ्चदश, इमे षोडश, इत्याकारकपञ्चदशत्वषोडशत्वादिप्रत्यक्षस्यानुभविकत्वाच्चेत्याशंकां प्रथमं कन्दलीकारश्रीधराचार्यमतेन निराकरोति–इदन्तु बोध्यमिति । यत्राऽनियतैकत्वज्ञानम्=यद्यद्द्रव्यनिष्ठसावच्छिन्नाऽनेकविशेष्यताकं संख्यात्वव्याप्यद्वित्वत्वत्रित्वत्वपञ्चदशत्वषोडशत्वत्वाद्यवच्छिन्नाऽप्रकारकम् एकत्वप्रकारकप्रत्यक्षम्–'एकोऽयम् एकोऽयमि'त्यादिपञ्चदशवाराद्याकारकम् तत्र= तत्तद्द्रव्यनिष्ठा, त्रित्वादिभिन्ना=त्रित्वत्वादिपरार्धत्वत्वान्तसंख्याविभाजकधर्मान्यतमशून्या,बहुत्वसंख्या उत्पद्यते, यथा–रथगजतुरगपदातिसमुदायात्मकसेनायां वृक्षलतागुच्छादिसमुदायात्मकवने सभासदसभापतिप्रभृतिसमुदायात्मकसभायां च त्रित्वादिभिन्ना बहुत्वसंख्या उत्पद्यते न तु पञ्चदशत्वशतत्वादिसंख्याः, अनियतैकत्वज्ञानस्य तत्र कारणत्वाऽभावादिति,तथा च त्रित्वत्वादिव्यापिका बहुत्वत्वात्मिका जातिरेवेति प्रशस्तपादभाष्यकन्दलीकारमतमित्यर्थः ॥ उक्ताशंकामुदयनाचार्यमतेन निराकरोति·

वनादाविति कन्दलीकारः। आचार्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते, तथाच त्रित्वत्वादिव्यापिका बहुत्वत्वजातिर्नातिरिच्यते। सेनावनादावुत्पन्नेऽपि त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात्। इत्थं चेतो बहुतरेयं सेनेति प्रतीतिरुपपद्यते। बहुत्वस्य संख्यान्तरत्वे तु तत्तारतम्याभावान्नोपपद्येतेत्यवधेयम्॥

परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥१०९॥
अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः।

परिमाणं निरूपयति–परिमाणमिति। परिमितिव्यवहारासाधारणं कारणं परि-

---

आचार्यास्त्विति। अनियतैकत्वज्ञानेन बहुत्वसंख्या उत्पद्यते, सा च त्रित्वादिपरार्धत्वान्तान्यतमैव नत्वतिरिक्ता, इति मन्यन्ते, तथा च=बहुत्वस्य त्रित्वाद्यभिन्नत्वे च, त्रित्वत्वादिव्यापिका=त्रित्वत्वादिभिन्नत्वे सति त्रित्वत्वादिसमानाधिकरणाभावाऽप्रतियोगित्वरूपा, बहुत्वत्वजातिर्न स्वीक्रियते इत्यर्थः। तथा च तत्र त्रित्वाद्यात्मकमेकबहुत्वमुत्पद्यते इत्यर्थः॥ ननु–यदि द्वित्वादिपरार्धत्वान्यतममेव बहुत्वं तदा सेनादौ सहस्रत्वाद्यात्मकं बहुत्वं सहस्रत्वत्वेन रूपेण कथं न गृह्यते–इत्यत आह–सेनावनादाविति। सेनायां वने च, उत्पन्नेऽपि त्रित्वसहस्रत्वाद्यात्मके बहुत्वे, तत्र दोषात्=नियताऽनेकैकत्वज्ञानाऽभावात्मकदोषात्, त्रित्वत्वसहस्रत्वत्वादीनां ग्रहः प्रत्यक्षं न भवतीत्यर्थः। अनियताऽनेकैकत्वज्ञानस्य त्रित्वोत्पत्तिकारणत्वेऽपि त्रित्वांशे त्रित्वत्वप्रकारकप्रत्यक्षे नियताऽनेकैकत्वज्ञानस्यैव हेतुत्वेन तद् विना न त्रित्वत्वादिप्रकारकप्रत्यक्षं भवतीति भावः॥ इत्थं च=बहुत्वस्य त्रित्वादिरूपत्वस्वीकारे एव, इयं सेना इतो बहुतरा बहुतमा वा, इत्याकारकप्रमात्मकप्रतीतिरभ्रान्तैर्ज्ञातुं शक्यते इत्यर्थः॥ कन्दलीकारमतं दूषयति–बहुत्वस्येति। बहुत्वत्वस्य त्रित्वत्वादिपरार्धत्वत्वान्ताऽन्यतमस्वरूपाऽनङ्गीकारपक्षे तु बहुत्वे स्वसजातीयोत्कर्षाऽभावात् बहुत्वत्वस्यैकस्यैव तरतमभावविरहात् 'इयं सेना इतो बहुतरा'इतिप्रतीतिर्नोपपद्येतेत्यर्थः। आचार्यमते तु 'इतो बहुतरा'इत्यत्र बहुत्वे त्रित्वादिरूपस्वसजातीयनिरूपितोत्कर्षस्य सत्त्वात् तादृशप्रतीतिरुपपद्यत एवेति भावः। न च बहुत्वस्य त्रित्वाद्यभिन्नत्वे बहुत्वत्वावच्छिन्नप्रकारताशालिनिश्चयकाले त्रित्वत्वाद्यवच्छिन्नप्रकारकसंशयो न स्यात् त्रित्वत्वादेः बहुत्वत्वादिरूपेण निश्चितत्वादिति वाच्यम्। बहुत्वत्वावच्छिन्नप्रकारकनिश्चयस्य तद्धर्मावच्छिन्नाऽभावप्रकारकबुद्धिं प्रत्येव प्रतिबन्धकतया तादृशनिश्चयकाले त्रित्वत्वाद्यवच्छिन्नप्रकारकसंशयोत्पत्तौ बाधकाऽभावात्॥ इति संख्याग्रन्थः॥

मूले–परिमाणमिति। मानं परिमितिः, तस्या यो व्यवहारः–'इदं महदिदमणु' इत्याद्यात्मकः, तस्य कारणं परिमाणमित्यर्थः। तच्च अणु, महत्, ह्रस्वं, दीर्घंचेति चतुर्धा भवतीत्यर्थः। मानव्यवहाराऽसाधारणकारणत्वात्मकलक्षणस्य कालेऽतिव्याप्तिवारणाय–मुक्तावल्यां तदर्थमाह–परिमितिव्यवहाराऽसाधारणकारणमिति। 'मान'पदानुपादाने 'दण्डमानये'तिशब्दप्रयोगात्मकव्यवहाराऽसाधारणकारणे दण्डेऽतिव्याप्तिः। कालादिवारणाय–असाधारणेति। 'कारण'पदानुपादाने 'मानव्यवहार'इत्याकारकानुपूर्व्यवच्छिन्नशब्दमादाय तस्याऽसाधारणशब्दो मानव्यवहारत्वात्मकः शब्दत्वात्मकश्च तत्रातिव्याप्तिः स्यात्॥ अथवा–'महानि'त्यादिशब्दनिष्ठवाच्यतासम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वं परिमाणलक्षणम्। यत्र पृथिव्यन्तरालनिहितपदार्थे 'महानिति'व्यवहारः कदापि न जातस्तत्राऽव्याप्तिवारणाय–तादृशकारणत्वसमानाधिकरणरूपाऽसमवेतजातिमत्त्वमिति लक्षणार्थो बोध्यः। एवं तादृशकारणत्वसमानाधिकरणदीर्घत्वाऽवृत्तिजा-

माणमित्यर्थः ॥ १०९ ॥ तच्चतुर्विधम्-अणु महद् दीर्घं ह्रस्वं चेति ।

अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥११०॥
संख्यातः परिमाणाच्च प्रचयादपि जायते ।
अनित्यं,

तत्-परिमाणम् । नित्यमित्यत्र परिमाणमित्यनुषज्यते । जायत इत्यत्रापि परिमाणमित्यनुवर्तते । अनित्यमिति पूर्वेणान्वितम् । तथा चानित्यपरिमाणं संख्याजन्यं परिमाणजन्यं प्रचयजन्यं चेत्यर्थः ॥

द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥१११॥

---

तिमत्त्वं महत्त्वलक्षणम्, एवं 'दीर्घ'इतिशब्दनिष्ठवाच्यत्वसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वसमानाधिकरणजातिमत्त्वं दीर्घपरिमाणलक्षणम् । 'दीर्घ'पदस्थाने 'अणु'पदं 'ह्रस्व'पदं च निक्षिप्य अणुपरिमाणस्य ह्रस्वपरिमाणस्य लक्षणे बोध्ये ॥ 'एवं परिमाणपदशक्यतावच्छेदकतया सिद्धपरिमाणत्वजातिमत्त्वं परिमाणसामान्यलक्षणम् । एवम् अणुत्वादिपदशक्यतावच्छेदकतया सिद्धाणुत्वत्वादिजातिमत्त्वम् अणुत्वादिचतुर्णां लक्षणं बोध्यम् । 'अणुत्वं परिमाणं महत्त्वं परिमाणमित्याद्यनुगतप्रतीत्या परिमाणत्वजातिसिद्धिरपि बोध्या । एवम्-'अणुत्वं महत्त्वं दीर्घत्वं ह्रस्वत्वं चे'त्यनुगतप्रतीत्या अणुत्वत्वादिजातयः सिद्ध्यन्ति ॥ मूलोक्तक्रमं परित्यज्य भाष्यक्रमेणाह-अणु इत्यादि । अणु-अणुत्वम्, महत्-महत्त्वम्, दीर्घ-दीर्घत्वम्, ह्रस्वं-ह्रस्वत्वं चेत्यर्थः ॥ चतुर्विधमपि परममध्यमभेदेन द्विविधं,-तत्र परमाणुत्वह्रस्वत्वे परमाणुमनसोः, मध्यमाणुत्वह्रस्वत्वे द्व्यणुके, परममहत्त्वदीर्घत्वे गगनादौ, मध्यममहत्त्वदीर्घत्वे घटादौ । नन्वणुत्वमेव ह्रस्वत्वमस्तु महत्त्वमेव च दीर्घत्वमस्तु, कुतश्चातुर्विध्यमिति चेन्न, तदवधिकाऽणुतया प्रतीयमानेऽपि तदवधिकह्रस्वत्वाऽव्यवहारात्, तदवधिकमहत्त्ववत्तया प्रतीयमानेऽपि तदवधिकदीर्घत्वाऽव्यवहाराच्च,-ह्रस्वत्वदीर्घत्वयोरतिरिक्तपरिमाणतया चातुर्विध्यसम्भवादिति ध्येयम् ॥

मूले-अनित्ये इति । तत्=परिमाणम्, अनित्ये द्रव्ये अनित्यं बोध्यं नित्ये द्रव्ये च नित्यं यथायोगमूह्यम्, तत्र दीर्घत्वं ह्रस्वत्वं नित्याऽनित्यभेदेन द्विधा, नित्यदीर्घत्वम् आकाशादौ, अनित्यदीर्घत्वं जन्यमहत्त्वसमानाधिकरणमेव, नित्यं ह्रस्वत्वं परमाणुत्वेव, अनित्यं ह्रस्वत्वं जन्याणुत्वाधिकरणद्व्यणुकसमवेतमित्याचार्याः । परमाणुद्व्यणुकयोः ह्रस्वत्वेन, आकाशादिविभुचतुष्टयस्य दीर्घत्वेन च केनाऽप्यननुभूतत्वात् ह्रस्वत्वदीर्घत्वयोः जन्यमहत्त्वसमानाधिकरणत्वमेव, अतः सूची दण्डात् ह्रस्वा, ततो दण्डस्तु दीर्घ इति प्रतीतिश्चोपपद्यते । अन्ये तु-अणुत्वं दीर्घत्वं चेति द्वेधा परिमाणं, ह्रस्वत्वदीर्घत्वयोः अवयवसंयोगविशेषात्मकत्वात्, अन्यथा 'इदं वर्तुलम् इदं चतुरस्रमि'त्यनुभवेन वर्तुलत्वादीनामपि परिमाणान्तरतापत्तिः स्यादित्याहुः । तत्र अनित्यं परिमाणं संख्यातो जायते परिमाणादपि जायते प्रचयात् ( शिथिलाख्यसंयोगात् ) अपि जायते ॥ मुक्तावल्यां-संख्याजन्यमिति । संख्यामात्रजन्यम्, परिमाणमात्रजन्यं, प्रचयमात्रजन्यं, चेत्यर्थः । प्रचयादपि-इत्यपिना संख्यापरिमाणोभयत्वावच्छिन्नजन्यं संख्यापरिमाणप्रचयत्रितयत्वावच्छिन्नजन्यं चेत्यपि बोध्यम् ॥

मूले-संख्याजन्यमुदाहरति-द्व्यणुकादाविति । द्व्यणुकपरिमाणं परमाणुद्वयनिष्ठद्वित्वसंख्या-

तत्र संख्याजन्यमुदाहरति–द्व्यणुकादाविति। द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकपरिमाणं वा न कारणं,–परिमाणस्य स्वसमानजातीयोत्कृष्ट-परिमाणजनकत्वनियमात्। द्व्यणुकस्याणुपरिमाणं तु परमाण्वणुत्वापेक्षया नोत्कृष्टम्। त्रसरेणुपरिमाणं तु न सजातीयम्। अतः परमाणौ द्वित्वसंख्या द्व्यणुकपरिमाणस्य, द्व्यणुके त्रित्वसंख्या च त्रसरेणुपरिमाणस्यासमवायिकारणमित्यर्थः॥ ११०–१११॥

परिमाणं घटादौ तु परिमाणजमुच्यते।
प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते॥११२॥
परिमाणं तूलकादौ, नाशस्त्वाश्रयनाशतः।

परिमाणजन्यं परिमाणमुदाहरति–परिमाणं घटादाविति। घटादिपरिमाणं कपालादिपरिमाणजन्यम्॥

प्रचयजन्यमुदाहर्तुं प्रचयं निर्वक्ति–प्रचय इति॥ परिमाणं चाश्रयनाशादेव

जन्यम्, त्रसरेणुपरिमाणं च द्व्यणुकत्रयनिष्ठत्रित्वसंख्याजन्यमित्यर्थः। **मुक्तावल्यां**–संख्यासमवायिकारणकत्वं संख्याभिन्नाऽसमवायिकारणकत्वाऽभावं चोपपादयति–**द्व्यणुकस्येति**। द्व्यणुकसमवेतं परिमाणं प्रति परमाणुपरिमाणं, त्रसरेणुसमवेतपरिमाणं प्रति च द्व्यणुकपरिमाणं न ह्यसमवायिकारणं भवितुमर्हति। तत्र हेतुमाह–**परिमाणस्येति**। परिमाणस्य=परिमाणाऽसमवायिकारणपरिमाणमात्रस्य, स्वसमानजातीयं यत् स्वोत्कृष्टं परिमाणं तन्निरूपिताऽसमवायिकारणतावत्त्वनियमात्। साजात्यं परिमाणविभाजकोपाधिरूपेण। उत्कर्षः–तरतमत्वादिना बोध्यः। तथा च द्व्यणुकपरिमाणं मध्याणुत्वं तु परमाणोरणुत्वाऽपेक्षया नोत्कृष्टम्=न अणुत्वतरम्, त्रसरेणुनिष्ठाऽपकृष्टमहत्परिमाणं तु न अणुत्वत्वेन ह्रस्वत्वत्वेन वा–द्व्यणुकनिष्ठाऽणुत्वादिसजातीयम्, तथा चानुमानम्–'अणुपरिमाणसामान्यं–परिमाणनिष्ठकार्यतानिरूपिताऽसमवायिकारणत्वाऽभाववत्,–स्वसमानजातीयस्वोत्कृष्टपरिमाणाऽसमवायिकारणकं यद्यत्स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटविशिष्टपरिमाणत्वात्, विभुपरिमाणवदि'ति। किञ्च परमाणोर्निरवयवद्रव्यत्वेन पारिमाण्डल्यवत्त्वेन च तयोः शिथिलसंयोगाऽभावात् द्व्यणुकानां सावयवद्रव्यारब्धत्वाऽभावात् तेषामपि शिथिलसंयोगे मानाऽभावात् द्व्यणुकत्र्यणुकपरिमाणयोः प्रचयाऽसमवायिकारणकत्वाऽसंभव इत्यपि बोध्यम्। **अतः**=उक्तरीत्या द्व्यणुकत्र्यणुकपरिमाणयोः परिमाण–प्रचयाऽसमवायिकारणकत्वाऽसंभवात्, परमाणुनिष्ठा द्वित्वसंख्याद्व्यणुकपरिमाणस्याऽसमवायिकारणम्, द्व्यणुकनिष्ठत्रित्वसंख्या च त्रसरेणुगताऽपकृष्टमहत्परिमाणस्याऽसमवायिकारणमित्यर्थः॥११०-१११॥

मूले–परिमाणमात्रजन्यं परिमाणमुदाहरति–**परिमाणं घटादाविति**। घटादौ समवायेन जन्यं मध्यममहत्परिमाणं, कपालद्वयाद्यवयवनिष्ठपरिमाणजन्यमित्यर्थः। **तूलकादौ**=कार्पासतूले यत् मध्यममहत्परिमाणं तत्तु यः शिथिलः कार्पासावयवसंयोगस्तज्जन्यं बोध्यमित्यर्थः। अनित्यपरिमाणस्याश्रयनाशात् नाशो भवतीत्यर्थः॥ **मुक्तावल्यां घटादिपरिमाणमिति**। कपालद्वये शैथिल्याऽभावेन प्रचयस्य घटपरिमाणे हेतुत्वाऽसंभवात्, कपालद्वित्वसंख्याया द्वित्वत्वेन घटपरिमाणहेतुत्वे द्व्यणुकपरिमाणस्यापि महत्त्वापत्तिरिति द्वित्वसंख्याया अपि घटपरिमाणाऽकारणत्वात्, न घटपरिमाणं प्रचयजन्यं संख्याजन्यं वा, किन्तु परिमाणजन्यमेवेति भावः॥ **प्रचयजन्यमिति**। प्रचयमात्राऽसमवायिकारणकपरिमाणे मानाऽभावात् तूलावयवपरिमाणजन्ये परिमाणे प्रचयजन्यत्व-

**नश्यतीत्याह–नाश इति। अर्थात्परिमाणस्यैव। न चावयविनाशः कथं परिमाणनाशकः, सत्यप्यवयविनि त्रिचतुरादिपरमाणुविश्लेषे तदुपचये वावयविनः प्रत्यभिज्ञानेऽपि परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यम्, परमाणुविश्लेषे हि द्व्यणुकस्य नाशोऽवश्यमभ्युपेयस्तन्नाशे च त्रसरेणुनाशः, एवं क्रमेण महावयविनो नाशस्यावश्यकत्वात्, सति च नाशकेऽनभ्युपगममात्रेण नाशस्यापलपितुमशक्यत्वात्,**

---

मपि दर्शयितुं प्रथमं प्रचयस्वरूपं दर्शयति–इत्यर्थः। **प्रचयत्वम्** अवयवसंयोगगतो जातिविशेषः, किञ्चिदवयवावच्छेद्याऽवयवाऽन्तरसंयोगाऽभावविशिष्टमहावयवनिष्ठसंयोगः प्रचय इति प्राञ्चः। महत्पदमत्र न देयमित्येकदेशिनः। भूयोऽवयवावच्छेदेन अवयवान्तराऽसंयोगिनि अवयवे वर्तमान संयोगः प्रचयः, तेन परमाणुसंयोगो द्व्यणुकसंयोगो वा न प्रचय इति नव्याः॥ इदमपि बोध्यम्–कपालत्रयारब्धघटादिसमवेतपरिमाणं संख्यापरिमाणोभयजन्यम्, कपालादिद्वयारब्धघटादिसमवेतमहत्त्वाऽपेक्षया महत्त्वशून्याऽवयवत्रयाऽऽरब्धत्रसरेण्वपेक्षया चोत्कृष्टत्वात्। एवं प्रचितमहावयवत्रयारब्धतूलकादिसमवेतपरिमाणं संख्यापरिमाणप्रचयत्रितयजन्यं, प्रचितमहावयवद्वयारब्धतूलादिसमवेतमहत्त्वापेक्षया अप्रचितमहावयवत्रयारब्धघटादिसमवेतमहत्त्वापेक्षया चोत्कृष्टत्वात्। एवं चाऽनित्यं परिमाणं पञ्चधा पर्यवसितं बोध्यम्॥ **अर्थादिति।** परिमाणनिरूपणस्य प्रकृतत्वात् प्रकृतप्राप्तपरिमाणस्य नाशोऽनुसन्धेय इत्यर्थः॥ तथाच–प्रतियोगितासम्बन्धेन परिमाणनाशं प्रति स्वप्रतियोगिवृत्तित्वकालिकविशेषणत्वोभयसम्बन्धेन आश्रयनाशस्य कारणत्वमिति कार्यकारणभावः। द्वित्रपरमाणुविश्लेषेऽप्यवयविनाम् अनाशमभ्युपगच्छतां मीमांसकानां मतेन शंकते–**न चाऽवयविनाश इति।** परिमाणाश्रयस्याऽवयविनो नाशः परिमाणनाशं प्रति कारणं भवितुं नार्हतीत्यर्थः। तत्र हेतुमाह–**सत्यप्यवयविनीति।** घटात्मकेऽवयविनि विद्यमानेऽपि घटीयत्रिचतुरादिपरमाणु विभागे सति यद्वा त्रिचतुरपरमाणुसंयोगे सत्यपि अवयविनो घटस्य **प्रत्यभिज्ञानेऽपि**='सोऽयं घट'इतिप्रत्यभिज्ञानबलेन घटनाशाऽनङ्गीकारात् तस्मिन्नेवाऽवयविनि परिमाणान्तरस्य=न्यूनाधिकपरिमाणस्य प्रत्यक्षप्रमाणेन सिद्धत्वादित्यर्थः॥ तथाच प्रत्यभिज्ञाबलेन प्रत्यक्षबलेन च परिमाणनाशस्य आश्रयनाशकतानियमस्य व्यभिचरितत्वं, किन्तु–स्वाश्रयसम्बन्ध्यवयविवृत्तित्वसम्बन्धेन अवयवसंयोगविभागान्यतरस्य प्रतियोगितासम्बन्धेन परिमाणनाशं प्रति कारणताया उचितत्वादिति भावः॥ समाधत्ते–**परमाणुविश्लेषे इति।** परमाणुविभागे सति परमाण्वोः संयोगनाशेन तद्द्व्यणुकस्य नाशोऽवश्यमभ्युपगन्तव्यः, द्व्यणुकनाशे सति त्र्यणुकनाशश्चतस्रणुनाशरजोनाशकंकरनाशपिण्डनाशकपालिकानाशकपालनाशक्रमेण महावयविनो घटस्य नाशो भवतीति घटनाशस्य घटपरिमाणनाशकत्वनियमस्य युक्तिसिद्धस्याऽवर्जनीयत्वादित्यर्थः, परमाणुविभागादेः द्व्यणुकनाशं प्रत्येव कारणत्वे चरितार्थतया गौरवात् परिमाणनाशं प्रति कारणत्वाऽकल्पनौचित्येन आश्रयनाशस्यैव कारणत्वकल्पनौचित्यादिति भावः॥ ननु उक्तप्रत्यभिज्ञाविरोधः प्रत्यक्षविरोधश्चेत्यत आह–**सति च नाशके इति।** द्व्यणुकादिनाशक्रमेण प्राप्तस्य आश्रयनाशस्य परिमाणनाशकत्वे युक्तिसहलाघवात् सिद्धे सति परिमाणनाशकस्य घटादिनाशस्य अपलपितुम्=अन्यथयितुम् अशक्यत्वात्, तथाच 'सोऽयं घट'इतिप्रत्यभिज्ञायाः साजात्याऽवलम्बनेन निर्वाहात्, अन्यथा तु तत्कालीनत्वांशे भ्रान्तित्वात्, उक्तप्रत्यक्षस्यापि परिमाणनाशांशे यथार्थत्वेऽपि 'तस्मिन्नेव घटे'इत्यंशेऽप्रमात्वादिति भावः॥ ननु परमाण्वादिविश्लेषे सति घटनाशांगीकारे क्षतादौ सति किंचिद्रुधिरादिविश्लेषेण शरीरनाशापत्त्या जीवति देवदत्तादौ पितुः पुत्रादिव्यवहारो विलुप्येत तस्मान्न द्वित्रपरमाणुविश्लेषो

**शरीरादाववयवोपचयेऽसमवायिकारणनाशस्यावश्यकत्वाद्वयविनाश आवश्यकः। न च पटाद्यनाशेऽपि तन्त्वन्तरसंयोगात्परिमाणाधिक्यं न स्यादिति वाच्यम्; तत्रापि वेमाद्यभिघातेनासमवायिकारणतन्तुसंयोगनाशात्पटनाशस्यावश्यकत्वात्। किञ्च तन्त्वन्तरस्य तत्पटावयवत्वे पूर्वं तत्पट एव न स्यात्, तन्त्वन्तररूपकारणाभावात्, तन्त्वन्तरस्यावयवत्वाभावे च न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवत्, तस्मात्तत्र तन्त्वन्तरसंयोगे सति पूर्वं पटनाशस्ततः पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्यम्। अवयविनः प्रत्यभिज्ञानं तु साजात्येन दीपकलिकादिवत्। न च पूर्वतन्तव एव तन्त्वन्तरसहकारात्पूर्वपटे सत्येव पटान्तरमारभन्तामिति वाच्यम्, मूर्तयोः समान-**

---

महावयविनाशक इत्याशंकायामाह—**शरीरादाविति**। शरीरेऽपि संयोगिद्रव्यात्मकरोमनखादिभिन्नरुधिरादिकिंचिन्मात्राऽवयवविनाशे सति तदुपचये वा सति द्व्यणुकनाशादिक्रमेण द्व्यणुकोत्पत्त्यादिक्रमेण वा असमवायिकारणस्य परमाणुसंयोगस्य यो नाशस्तस्य नूतनसंयोगस्य च अवश्यमुत्पन्नत्वात् द्व्यणुकादिनाशोत्पत्त्यादिक्रमेण महावयविनाशोत्पत्त्यादेरावश्यकत्वीकरणीयाऽवर्जनीयत्वादिति भावः॥

ननु—परमाण्वन्तरतन्त्वन्तरादिसंयोगस्य जायमानत्वेऽपि तेन पटनाशाऽदर्शनेन पूर्वपरिमाणनाशः अधिकपरिमाणान्तरं च नैव भवतीत्याशंकते—**न च पटाद्यनाशेऽपीति**। 'तन्त्वन्तरसंयोगेन पटादेरनाशेऽपि'—इत्यनेन आश्रयाऽनाशो दर्शितः। तथाच—'एकेन तन्तुना सन्धितं दशवितस्तिकं तद्वस्त्रमानये'त्यादिव्यवहारबलात् तन्तुसंयोगेऽपि पूर्वपरिमाणस्यैव व्यवहारात् पूर्वपरिमाणतोऽधिकपरिमाणं नैव स्वीकार्यमिति भावः॥ समाधत्ते—**तत्रापीति**। वेमा—वायदण्डः, तुरी—तन्तुसंचारकदण्डः; तयोरभिघातेन—तयोः उत्पत्स्यमानसंयोगान्तरार्थं पटसमवायिकारणात्मकपूर्वतन्तुविभागेन पटाऽसमवायिकारणसंयोगनाशे सति पटनाशस्य प्रत्यक्षसिद्धत्वादित्यर्थः। संयोज्यमानतन्तोर्यदि अवयवत्वं तदा तत्संयोगादिना पटान्तरोत्पत्त्या परिमाणान्तरोत्पत्त्यादिकं, यदि तु संयोगिद्रव्यत्वं तदा तु न पटान्तरोत्पत्त्यादिकमिति न्यायसिद्धान्त इति भावः। तदेवं स्फुटीकरोति—**किञ्चेति**। येन तन्तुना वस्त्रं सन्धितं तस्य तन्तोः सन्धितवस्त्रावयवत्वे सन्धेः प्राक् सन्धिजनकतन्त्वात्मकस्य कारणस्य सन्धितवस्त्रपूर्वमभावात् सन्धितपट एव न उत्पद्यते, सन्धिजनकतन्तोर्यदि नाऽवयवत्वं तर्हि संयोगिद्रव्यत्वं घटगले तन्तुवत् स्वीकृत्य तेन सन्धितेऽपि तत्कार्ये वस्त्रे परिमाणान्तरं नोत्पद्यते पूर्ववस्त्रनाशवस्त्रान्तरोत्पत्तिविरहादिति भावः। दृष्टान्तमुक्तं—संयुक्तद्रव्यान्तरवदिति॥ उपसंहरति—**तस्मात्तत्रेति**। महापटे अवयवत्वेन तन्त्वन्तरस्य तन्त्वन्तरेण सह संयोगे सति, तत्र वेमादिक्रियया पटीयतन्तुपूर्वसंयोगनाशखण्डपटनाशमहापटनाशक्रमेण खण्डपटोत्पत्तिमहापटान्तरोत्पत्तिरिति स्वीकार्यमिति भावः। 'सोऽयं पट'इतिप्रत्यभिज्ञानस्य तु—'पूर्वपटसजातीयोऽयं पट'इतिसाजात्येन जायमानत्वात्, यथा प्रतिक्षणक्रियया विभिन्नेऽपि दीपे 'सोऽयं दीप'इतिप्रत्यभिज्ञायाः 'पूर्वदीपसजातीयोऽयं दीप'इत्यर्थकतया यथार्थत्वनिर्वाहात्, अन्यथा तु एतद्दीपे पूर्वदीपत्वाऽभाववति पूर्वदीपत्ववत्तांशे भ्रान्तित्वात्, तद्वत् 'सोऽयं पट'इत्यत्रापि बोध्यमिति भावः॥ शंकते—**न चेति**। पूर्वपटे सति एव=अविनष्टे एव सति, तदीयतन्तवः तदतिरिक्ततन्तुना सन्ध्यर्थं सम्मतेन सह संयोगे सति महापटान्तरमुत्पद्यताम्, पूर्वपटनाशांगीकारो निरर्थक इत्यर्थः॥ समाधत्ते—**मूर्तयोरिति**। परिच्छिन्नपरिमाणवद्द्रव्ययोः, समानदेशताविरोधात्=अभिन्नसमवायिकारणवृत्तित्वे विरोधात्, परस्परपटद्वयोत्पत्त्यसंभवात्, परिमाणवत्तानियामकाऽभावेन न्यूनाधिकाऽस्वपरि-

देशताविरोधात्तत्र पटद्वयासम्भवात्, एकदा नानाद्रव्यस्य तत्रोपलम्भस्य बाधितत्वाच्च। तस्मात्पूर्वस्य द्रव्यस्य प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यस्यावश्यमभ्युपेयत्वात्॥

संख्यावत्तु पृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् ॥११३॥

पृथक्त्वं निरूपयति-संख्यावदिति। पृथक्प्रत्ययासाधारणं कारणं पृथक्त्वम्। तन्नित्यतादिकं संख्यावत्। तथाहि-नित्येष्वेकत्वं नित्यम्, अनित्येष्वनित्यम्, अनित्यमेकत्वमाश्रयद्वितीयक्षणे चोत्पद्यते, आश्रयनाशान्नश्यति, तथैकपृथक्त्वमपि, द्वित्वादिवच्च द्विपृथक्त्वादिकमपीत्यर्थः॥ ११२-११३॥

---

माणवत्त्वापत्तेः विनिगमनाविरहाच्चाऽस्वकारणनिरूपितकार्यतावत्त्वापत्तेश्चेति भावः। ननु-एकस्मिन् पिण्डे कपालद्वयोत्पत्तिद्वारा घटजननात् कपालद्वयोत्पत्तिर्घटोत्पत्तिश्च न विरुद्धयते-इत्यत आह-**एकदेति**। एकस्मिन्नेव काले एकत्रैवाऽवयवेषु नानाजातीय-( पूर्वपटत्वावच्छिन्नमहापटत्वावच्छिन्नमध्यपटत्वावच्छिन्नेत्यादि )द्रव्यस्य प्रत्यक्षस्याऽजायमानत्वेन प्रत्यक्षबाधादेव न्यूनाधिकपरिमाणवत्पटद्वयावस्थितेरपि बाधितत्वादित्यर्थः। कपालयोस्तु स्वस्वकपालिकाद्वयं पृथक् कारणं, कपाले च घटकारणे नतु पिण्डादेव कपाले तस्मादेव पिण्डाच्च घटः। कपालम् अद्वारीकृत्य घटाऽनुत्पादात् कपालिके अद्वारीकृत्य कपालाऽनुत्पादात्। वस्त्रेऽपि अमुकतन्तुभिः खण्डपटे सति अमुकखण्डपटाभ्यां महापटोत्पत्तौ तु विरोधाऽभावादिति भावः॥ तदवयवसमवेतद्रव्यान्तरोत्पत्तिं प्रति पूर्वद्रव्यस्य समवायेन प्रतिबन्धकत्वमितिनियमादिति हृदयम्॥ उपसंहरति-**तस्मादिति**। पूर्वद्रव्यस्य प्रतिबन्धकस्य नाशे सति तैरेवाऽवयवैर्द्रव्यान्तरोत्पत्तौ बाधकाऽभावात् द्रव्यान्तरोत्पत्तौ सत्यां परिमाणान्तरोत्पत्तिः स्यादिति परिमाणनाशं प्रति आश्रयनाशस्य कारणत्वं निराबाधमिति भावः॥

मूले-**संख्यावत्तु-इति**। पृथक्प्रत्ययकारणम् पृथक्त्वं संख्यावत् नित्यत्वाऽनित्यत्वादिव्यवस्थं बोध्यमित्यर्थः। 'अयमस्मात् पृथगि'ति यो व्यवहारः तस्य-कारणं पृथक्त्वमित्यर्थः॥ कालेऽतिव्याप्तिवारणाय-असाधारणताघटितं **मुक्तावल्यां** तदर्थमाह-**पृथक्प्रत्ययाऽसाधारणकारणमिति**। कालादिवारणाय-असाधारणेति। पृथग्व्यवहारत्ववारणाय-कारणमिति। अन्ये तु-'पृथगि'तिशब्दनिष्ठवाच्यतासम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वं लक्षणम्, यादृशैकपृथक्त्वादिना तादृशव्यवहारो न जातस्तत्राऽव्याप्तिवारणाय-तादृशकारणत्वसमानाधिकरणरूपाऽवृत्तिजातिमत्त्वं विवक्षणीयम्। एवं-पृथक्पदशक्यतावच्छेदकजातिमत्त्वमपि लक्षणं बोध्यम्। एकपृथक्त्वादीनां विशेषलक्षणान्यपि तथैवोह्यानि। पृथक्त्वत्वमेकपृथक्त्वत्वादिजातयः प्रत्यक्षसिद्धाः॥ तन्नित्यतादिकस्य संख्याव्यवस्थावत् व्यवस्थां दर्शयति-**तथाहीति**। यथा नित्ये परमाण्वादौ एकत्वं संख्या नित्या, अनित्ये द्वयणुकादौ एकत्वादयोऽनित्याः, ते च आश्रयस्थितिक्षणे उत्पद्यन्ते, गुणं प्रति गुणिनः पूर्वक्षणवृत्तित्वेनाऽपेक्षावत्त्वात्। आश्रयनाशे सति च आश्रयनाशोत्तरक्षणेऽनित्यमेकत्वद्वित्वादिकं च नश्यति, गुणनाशं प्रति अधिकरणनाशस्य कारणत्वात्। तथा=तद्वत्, एकपृथक्त्वमपि=एकपृथक्त्वं नित्यगतं नित्यम्, अनित्यगतं तु अनित्यम्॥ **द्वित्वादिवदिति**। द्वित्वादिकं यथा समवायिकारणगताऽनेकैकत्वाऽसमवायिकारणकम् 'अयमेकः अयमेकः' इत्याद्यपेक्षाबुद्धिजन्यम् अपेक्षाबुद्धिनाशाच्च कचिदाश्रयनाशाच्च नश्यति, तथा-द्विपृथक्त्वादिकमपि स्वाश्रयसमवेताऽनेकैकपृथक्त्वाऽसमवायिकारणकं 'इदमेकपृथक् इदमेकपृथक्' इत्याद्यपेक्षाबुद्धिजन्यं तादृशाऽपेक्षाबुद्धिनाशाच्च क्वचिदा-

अन्योन्याभावतो नास्य चरितार्थत्वमिष्यते ।
अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥११४॥

नन्वयमस्मात्पृथगित्यादावन्योन्याभावो भासते तत्कथं पृथक्त्वं गुणान्तरं स्वीक्रियते, न चास्तु पृथक्त्वं न त्वन्योन्याभाव इति वाच्यम्, रूपं न घट इति प्रतीत्यनापत्तेः । नहि रूपे घटावधिकं पृथक्त्वं गुणान्तरमस्ति, न वा घटे घटावधिकं पृथक्त्व-

---

श्रयनाशाच्च नश्यति, एवं त्रिपृथक्त्वादीनि । द्विपृथक्त्वं न उभयसमवेतपृथक्त्वं, त्रिपृथक्त्वस्याप्युभयसमवेतपृथक्त्वत्वात् तत्रातिव्याप्तेः । न च उभयपर्याप्तपृथक्त्वं द्विपृथक्त्वमितिवाच्यम् । प्रत्येकपर्याप्तित्वादिमते तद्दोषतादवस्थ्यात् । किन्तु त्रितयासमवेतोभयसमवेतपृथक्त्वमेव द्विपृथक्त्वम्, एवं चतुष्टयाद्यसमवेतत्रितयादिसमवेतपृथक्त्वादिकमेव त्रिपृथक्त्वादिकमिति बोध्यम् । वस्तुतः यथा एकत्वादिपदशक्यतावच्छेदकैकत्वत्वादिजातिमत्त्वमेकत्वादिकं, तद्वत् एकपृथक्त्वादिपदशक्यतावच्छेदकैकपृथक्त्वत्वादिजातिविशेषवत्त्वमेकपृथक्त्वादिकमपीति निर्वचनीयमिति ध्येयम् । 'घटः पटात् पृथक्' इतिप्रतीत्या एकपृथक्त्वसिद्धिवत् 'घटौ पटात् पृथक्' 'घटाः पटात् पृथक्' इत्यादिप्रतीत्या द्विपृथक्त्वत्रिपृथक्त्वादयः सिद्ध्यन्तीति । तत्र घटद्वयादिसमवेतत्वेन पृथक्त्वादिभानात्, एकैकपृथक्त्वस्य घटद्वयाऽसमवेतत्वेन तादृशप्रतीतेर्भ्रमत्वप्रसङ्गादिति ॥ ननु घटौ पटात्पृथगिति प्रतीतेः पटावधिकैकपृथक्त्वद्वयाऽवगाहित्वेनाऽप्युपपत्तेः द्विपृथक्त्वादौ प्रमाणाऽभाव इति चेन्न । घटौ पटात्पृथगितिप्रतीत्या उभयसमवेतपृथक्त्वे सिद्धे तेनैव घटः पटात् पृथगितिप्रतीत्युपपत्तेरेकपृथक्त्वे प्रमाणाऽभाव इत्यस्यापि सुवचत्वात्, तस्माद्विनिगमनाऽभावेन उभयमपि स्वीकार्यमिति भावः ॥ द्विपृथक्त्वादौ समानाधिकरणानि एकपृथक्त्वानि असमवायिकरणानि, अपेक्षाबुद्धिस्तु निमित्तकारणम् इत्यपि बोध्यम् ॥११२॥११३॥

मूले-अन्योन्याभावतः इति । 'घटो न पट'इत्यन्योन्याभावेनापि अस्य=पृथक्त्वस्य, चरितार्थत्वं-प्रयोजननिर्वाहेण अन्तर्भावत्वं, न इष्यते इत्यर्थः । 'अस्मात् पृथक्' 'इदं न' इतिप्रतीतिद्वयं हि विलक्षणमेव, प्रथमापञ्चमीभेदात् । तस्मात्पृथक्त्वभेदौ भिन्नावेवेति भावः ॥ मुक्तावल्यां पृथक्त्वस्याऽन्योन्याभावेऽन्तर्भावं शंकते-नन्वयमस्मादिति । 'अयं घटः अस्मात्पटात्पृथगि'ति 'इमौ घटौ अस्मात्पटात्पृथगि'त्यादिप्रत्यक्षप्रतीतौ, अन्योन्याभाव एव विषयो भवति, तत्=तस्मात्,-उक्तप्रतीतेरन्योन्याभावविषयकत्वात्, कथं=कस्माद्धेतोः, पृथक्त्वं क्लृप्तगुणातिरिक्तगुणत्वेन स्वीक्रियते, तत्र धर्मिणि गुणत्वे च प्रमाणाऽभावादिति भावः ॥ शंकते-न चेति । 'पृथगि'तिप्रतीतिवत् 'घटः पटो न'इति प्रतीतावपि पृथक्त्वमेव विषयोऽस्तु, न तु अन्योन्याभावस्तत्र विषयः, विनिगमनाविरहसमानन्यायत्वादिति भावः ॥ समाधत्ते-रूपं नेति । 'रूपं न घट'इतिप्रतीतिः 'घटप्रतियोगिकभेदवद्रूपमि'त्यर्थपरतया उपपद्यते सा नोपपद्येतेत्यर्थः ॥ तत्र हेतुमाह-नहीति । रूपे गुणे गुणानङ्गीकारात् घटावधिकपृथक्त्ववत्ताया रूपे बाधितत्वादित्यर्थः ॥ ननु एकार्थसमवायेन रूपे पृथक्त्वं घटगतं वर्तते इति एकार्थसमवायेन घटनिष्ठपृथक्त्वं विषयीकृत्यैव तादृशप्रतीतिरुत्पत्स्यते-इत्यत आह-न वेति । पञ्चम्यन्तघटपदार्थस्य घटावधिकत्वार्थकतया तस्य पृथक्त्वेऽन्वयेन घटावधिकपृथक्त्वमित्यर्थलाभात्, घटे च घटावधिकपृथक्त्वाऽभावात्, अन्यथा घटो घटात्पृथगित्यपि प्रतीत्यापत्तिः स्यात्, तस्मात् समवायघटितसामानाधिकरण्याख्यपरम्परासम्बन्धकल्पनाऽपि निरर्थिका, तथा च तत्र घटावधिकपृथक्त्वाऽभावात् तादृशप्रतीतेः प्रमात्वनिर्वाहार्थमन्योन्याभावस्तद्विषयतया नञर्थोऽङ्गीकार्य इति भावः ॥ एवं 'गुणत्वं न कर्मत्वमि'त्यादिप्रतीत्यनापत्तिः, तत्र निरुक्तपरम्परया पृथक्त्वाऽभावात्, घटत्वं न-

**मस्ति, येन परम्परासम्बन्धः कल्प्येत इत्यत आह-अस्मादिति। ननु शब्दवैलक्षण्यमेव न त्वर्थवैलक्षण्यमिति चेद्-न, विनार्थभेदं घटात्पृथगितिवद्घटो न पट इत्यत्रापि पञ्चमीप्रसङ्गात्। तस्माद्यदर्थयोगे पञ्चमी सोऽर्थो नञर्थान्योन्याभावतो भिन्नो गुणान्तरं कल्प्यत इति॥ ११४॥**

घटत्वमित्यादिप्रतीत्यापत्तिश्च, घटपृथक्त्वस्य उक्तपरम्परया घटत्वे सत्त्वादित्यपि बोध्यम्॥ ननु 'अस्मात् पृथक्''इदं ने'तिमूलप्रदर्शितप्रतीतिनिष्ठवैलक्षण्यं नार्थभेदप्रयुक्तं किन्तु वाचकशब्दभेदप्रयुक्तं तथा च पृथक्त्वमन्योन्याभावश्चाऽभिन्नमेव पदार्थं इत्याशंकां निराकर्तुमाक्षिपति-ननु **शब्दवैलक्षण्यमेवेति**। प्रतीतिवैलक्षण्यं शब्दवैलक्षण्यकृतमेव, न तु अर्थवैलक्षण्यकृतमित्यर्थः॥ समाधत्ते-**विनाऽर्थभेदमिति**। अर्थवैलक्षण्याऽनङ्गीकारे 'घटात्पृथगि'त्यत्र पृथक्पदसमभिव्याहृतघटपदोत्तरमिव 'घटो न' इत्यत्रापि नञ्पदसमभिव्याहृतघटपदोत्तरमपि पञ्चम्यापत्तेरित्यर्थः। तथा च नवीनमते भिन्नपदसमभिव्याहृतघटादिपदोत्तरमपि पञ्चम्युपपत्तये 'अन्यारादितरर्ते'इत्यादिसूत्रघटकाऽन्यपदस्य अन्योन्याभावार्थकशब्दमात्रपरत्वाऽऽवश्यकत्वात् नञ्पदस्यापि तादृशत्वेन तत्समभिव्याहृतघटपदोत्तरमपि पञ्चम्यापत्त्या 'घटान्ने'तिप्रयोगस्य साधुतापत्तेः 'घटो न'इतिप्रयोगस्याऽसाधुतापत्तेश्चेति भावः। वस्तुतस्तु-'पृथग्विनानानाभिस्तृतीयान्यतरस्यामि'तिसूत्रेणैव पञ्चम्यापत्तिर्बोध्या। विभक्तिशून्याऽन्योन्याभावार्थकपृथक्छब्दप्रयोगे यथा पञ्चमी तथा तादृशनञ्पदप्रयोगेऽपि पञ्चम्यापत्तिरिति तुल्यदृष्टान्तेन दोषदानाय 'घटादन्य'इतिप्रयोगात्मकदृष्टान्तमपहाय 'घटात्पृथगि'तिप्रयोगरूपदृष्टान्तमभिहितमिति ध्येयम्॥ उपसंहरति-**तस्मादिति**। उक्तपञ्चम्यापत्तिरूपदोषात्, यदर्थयोगे='पृथग्विनानानाभिस्तृतीयान्यतरस्या'मितिसूत्रेण पृथगर्थकपदयोगे पञ्चमी साध्वी भवति तादृशोऽर्थः पृथक्त्वात्मकः नञर्थाऽन्योन्याऽभावाऽपेक्षयाऽतिरिक्त एव क्लृप्तगुणाऽतिरिक्त एव च 'कल्प्यते='घटात्पृथक्पटः'इतिप्रतीत्या विषयीक्रियते इत्यर्थः। तथा च 'अन्यारादितरर्ते'इति सूत्रे उपात्तेन 'अन्य'पदेन अन्योन्याभाववदर्थकपदयोगे नञ्पदयोगे पञ्चमीवारणार्थम्-'अन्योन्याभावार्थकपदयोगो' नाम स्वार्थान्योन्याभावान्वयिप्रतियोगित्वान्वयित्वं स्वम् अन्योन्याभावार्थकम्-अन्यादिपदम्, तदर्थान्योन्याऽभावान्वयिप्रतियोगित्वान्वयित्वस्य घटार्थे सत्त्वात्, 'घटादन्यः' 'घटाद्भिन्नः' इतिप्रयोगौ साधू। 'घटो ने'त्यत्र तु प्रतियोगितासम्बन्धेन नञर्थान्योन्याभावस्य घटपदार्थेन्वयाद् घटपदार्थस्य अन्योन्याभावान्वयित्वात् अन्योन्याभावान्वयिप्रतियोगित्वान्वयित्वाऽभावात् न पञ्चमीति सूक्ष्ममीक्षणीयम्। **अन्ये** तु-अन्यपदस्य पृथक्त्वात्मकगुणवदर्थकत्वम्। न चैवमितरपदोपादानमफलमिति वाच्यम्। गोवृषन्यायेन तदुपादानादिति वदन्ति। अपरे तु-अन्यपदम् पृथक्त्ववदर्थकपरम्, तेन 'घटः पटात्पृथगित्यत्र पञ्चम्युपपत्तावपि 'घटे पटात् पृथक्त्वमि'त्यत्र कुतस्तत्सिद्धिरिति तदर्थं पृथक्त्वार्थपरेतरपदोपादानं कृतमिति वदन्ति॥ **नव्यास्तु** पृथक्त्वम् अन्योन्याभाव एव, न गुणान्तरं, प्रमाणाऽभावात्। न चैवं सति 'घटो ने'त्यत्र पञ्चम्यापत्तिः,-'घटात्पृथगि'त्यत्र पञ्चम्यनुपपत्त्या सूत्रे अन्यपदस्य अन्योन्याभावार्थकविभक्तिमत्पदपरत्वाऽसंभवेन अन्योन्याभावार्थकपदसामान्ययोगस्याऽत्रापि सत्त्वादिति वाच्यम्। 'घटस्याऽन्योन्याभाव'इत्यादौ पञ्चम्यापत्तिवारणाय सूत्रस्थाऽन्यपदस्य 'प्रतियोगिनिष्ठप्रकारतानिरूपितप्रतियोगितात्वावच्छिन्नप्रकारतानिरूपिताऽन्योन्याऽभावनिष्ठविषयताशालिबोधौपयिकान्योन्याभावार्थकशब्दपरत्वाऽऽवश्यकतया 'घटो ने'त्यत्र प्रतियोगितासंसर्गकबोधस्यैव जायमानतया नञ्पदस्य घटनिष्ठप्रकारतानिरूपितप्रतियोगितात्वावच्छिन्नसांसर्गिकविषयतानिरूपिताऽन्योन्याभावनिष्ठविषयताशालिबोधौपयिकत्वेऽपि तादृशप्रतियोगितात्वावच्छिन्नप्रकारतानिरूपिताऽन्योन्याभावनिष्ठविषयताशालिबोधौपयिकत्वा-

अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः ।
कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥११५॥
तथोभयक्रियाजन्यो भवेत्संयोगजोऽपरः ।

ऽभावेन तत्र पञ्चम्यापत्तेरभावादिति वदन्ति ॥ तन्न । तद्घटस्तद्घटैतद्घटोभयस्मादन्यः-इत्यादिप्रतीतिव्यवहारवत् प्रामाणिकानाम् एतद्घटः तद्घटैतद्घटोभयस्मात्पृथगिति-प्रतीतिव्यवहाराऽभावात् गंगेशोपाध्यायानुमतत्वाच्च अन्योन्याऽभावातिरिक्तमेव पृथक्त्वं गुणान्तरं स्वीकार्यमिति ॥ किञ्च तन्तुक्रियया तन्तुपटयोः संयोगस्य तन्तुसंयोगेन तन्तुपटसंयोगस्य च वारणाय तदतद्वृत्तिसंयोगे तयोः परस्परावधिकपृथक्त्वस्य कारणत्वस्योपेयतयाऽतिरिक्तगुणसिद्धिः । न ह्यत्रान्योन्याभावेन चरितार्थता, तस्य तन्तुपटयोरुभयोरपि सत्त्वेन तदभावेन संयोगानुत्पादस्य कथञ्चिदप्युपपादयितुमशक्यत्वादिति ध्येयम् ॥११३॥११४॥

**मूले-अप्राप्तयोस्त्विति।** अप्राप्तयोः-पृथक्सिद्धयोः द्रव्ययोर्या प्राप्तिः स संयोग उक्तः । 'इमौ संयुक्ता'विति यो व्यवहारस्तस्याऽसाधारणहेतुत्वं लक्षणम् । दण्डादिवारणाय-संयुक्तव्यवहारेति । कालादिवारणाय-असाधारणेति । तादृशव्यवहारत्ववारणाय-कारणमिति ॥ 'प्रतिपाद्यतासम्बन्धावच्छिन्न'संयुक्त'व्यवहार-निष्ठकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वमिति फलितार्थः, यादृशसंयोगाश्रये प्रतिपाद्यतासम्बन्धेन 'संयुक्ता'विति व्यवहारो न जातस्तत्रत्यसंयोगेऽव्याप्तिवारणाय-तादृशकारणत्वसमानाधिकरणरूपाऽवृत्तिजातिमत्त्वं लक्षणं कार्यम् । एवं तादृशकारणतावच्छेदकतया सिद्धसंयोगत्वजातिमत्त्वमपि लक्षणं कार्यम् ॥ संयोगं विभजते-**कीर्तितस्त्रिविध** इति । एषः=उक्तलक्षणलक्षितः संयोगः त्रिविधः कीर्तितः-कथितः इत्यर्थः ॥ वस्तुतस्तु-संयोगो द्विविधः-कर्मजः, संयोगजश्च । कर्मजोऽपि द्विविधः-अन्यतरकर्मजः, उभयकर्मजश्च । आद्यो वृक्षविहगमयोः संयोगः, द्वितीयः-मेषयोर्मल्लयोर्वा संयोगः । स च कर्मजसंयोगः क्वचित् शब्दहेतुः-अभिघातः, शब्दाऽहेतुस्तु नोदनाख्यः इति । संयोगजसंयोगस्तु हस्तपुस्तकसंयोगात् कायपुस्तकसंयोग इति ॥ तथा च कर्मजसंयोगस्य द्वैविध्येन फलतः संयोगस्य त्रैविध्यपर्यवसानाभिप्रायेण त्रिविध इत्युक्तम् । अत्र **कर्मजसंयोगत्वम्**-क्रियानिष्ठाऽसमवायिकारणताकसंयोगत्वम्, क्रियात्वावच्छिन्नाऽसमवायिकारणतानिरूपिततादृशसंयोगनिष्ठकार्यतावच्छेदकतया सिद्धो यः संयोगत्वव्याप्यो जातिविशेषस्तद्वत्त्वं वा लक्षणं बोध्यम् ॥ त्रिविधसंयोगमध्ये आद्यं संयोगमाह-**आद्योऽन्यतरकर्मज** इति । यथा वृक्षविहंगमसंयोग इति । अत्र-अन्यतरकर्मजसंयोगत्वं नाम-स्वाऽसमवायिकारणक्रियाव्यक्तिद्वयकं यद्यत्त्वं तत्तद्व्यक्तिभेदकूटवत्त्वक्रियाजन्यतावच्छेदकतयासिद्धवैजात्याश्रयत्वोभयवत्त्वम्, यद्वा क्रियाव्यक्त्यसहकृतक्रियानिष्ठाऽसमवायिकारणतानिरूपितसंयोगनिष्ठकार्यतावच्छेदकतया सिद्धा क्रियाजन्यतावच्छेदकतया सिद्धवैजात्यव्याप्या या जातिस्तद्वत्त्वम् अन्यतरकर्मजसंयोगत्वम्, अतो नाऽननुगम इति बोध्यम् ॥ द्वितीयं संयोगमाह-**तथोभयक्रियाजन्य** इति । मेषयोर्मल्लयोर्वा संयोगः इति॥ उभयक्रियाजन्यसंयोगत्वं नाम-कर्मसहकृतकर्मनिष्ठाऽसमवायिकारणतानिरूपितसंयोगनिष्ठकार्यतावच्छेदकतया सिद्धा क्रियाजन्यतावच्छेदकवैजात्यव्याप्या च या जातिः तादृशजातिमत्त्वम् ॥ संयोगजसंयोगमाह-**संयोगजोऽपर** इति । यथा हस्तपुस्तकसंयोगात् कायपुस्तकसंयोग इति । संयोगजसंयोगत्वं नाम-संयोगाऽसमवायिकारणकसंयोगत्वं,यद्वा संयोगत्वावच्छिन्नाऽसमवायिकारणतानिरूपिततादृशसंयोगनिष्ठकार्यतावच्छेदकतया सिद्धसंयोगत्वव्याप्यजातिविशेषवत्त्वमितिलक्ष-

आदिमः श्येनशैलादिसंयोगः परिकीर्तितः, ॥११६॥
मेषयोः सन्निपातो यः स द्वितीय उदाहृतः, ।
कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः ॥११७॥
तृतीयः स्यात्, कर्मजोऽपि द्विधैव परिकीर्तितः ।
अभिघातो नोदनं च, शब्दहेतुरिहादिमः ॥११८॥
शब्दाहेतुर्द्वितीयः स्याद्,

णम् ॥ आदिमं संयोगमुदाहरति–**आदिमः श्येनशैलादिसंयोग** इति। श्येनशैलसंयोगः श्येनकर्मजन्य इति। द्वितीयमुदाहरति–**मेषयोः सन्निपात** इति। मेषयोः युद्ध्यमानयोरुभयक्रियाजन्यः संयोग इत्यर्थः। तृतीयमुदाहरति–**कपालेति**। कपालवृक्षसंयोगजन्यो घटवृक्षयोस्संयोग इत्यर्थः॥ **ननु**–संयोगजसंयोगे प्रमाणाऽभावः, कपालक्रियाजन्यकपालतरुसंयोगोत्तरकालीनकुम्भतरुसंयोगं प्रत्यपि समवायघटितसामानाधिकरण्यसम्बन्धेन कपालक्रियाया एव हेतुत्वसंभवादिति चेन्न। कपालतरुसंयोगजनककपालक्रियाया कुम्भतरुसंयोगकाले कपालतरुसंयोगन नाशात् असमवायिकारणस्य कार्यसहभावेन हेतुतया तदभावात् तेन कुम्भतरुसंयोगोत्पत्त्यसंभवात् तत्र कपालतरुसंयोगोत्तरं कुम्भतरुसंयोगाऽपलापे कुम्भसंयोगी वृक्ष इतिसर्वानुभवसिद्धप्रतीतिव्यवहारयोरनुपपत्तेः, तस्मात् सयोगजसंयोगाङ्गीकार आवश्यक इति ॥ **ननु**–तथापि यत्रादौ करक्रिया, ततो द्वितीयक्षणे शरीरक्रिया करक्रिया च, ततश्चतुर्थक्षणे करतरुसंयोगः शरीरक्रियाजन्यशरीरपूर्वदेशसंयोगनाशश्च, तदुत्तरक्षणे जायमानो यः शरीरतरुसंयोगः, तस्य न क्रियाजन्यत्वं संयोगजन्यत्वं वा, विनिगमनाविरहात्। न चोभयजन्यत्वं, जातिसांकर्यापत्तेः। न च तत्र संयोगद्वयमङ्गीकार्यं द्वित्वाऽग्रहस्तु सादृश्यदोषादिति वाच्यम्। एकस्मिन् एकदा तत्संयोगवति तत्संयोगान्तराऽनभ्युपगमात् प्रतिबन्धकीभूतक्रियाघटितसामग्रीसत्त्वेन संयोगजसंयोगोत्पत्त्यसंभवाच्च। तस्मात् तत्र चित्रसंयोग एव स्वीकार्यः, स च विजातीय एवेतिचेव। न। शरीरक्रियायाः संयोगजनकत्वाऽनङ्गीकारे उत्तरसंयोगरूपनाशकाऽभावेन शरीरनाशपर्यन्तस्थायित्वावश्यकतया शरीरे क्रियान्तराऽनुपपत्तिप्रसंगात् कर्मवति कर्मान्तराऽनुपपत्तेः, तस्मात् क्रियासामान्यस्य संयोगजनकत्वमावश्यकं न संयोगसामान्यस्य संयोगजनकत्वम्, क्रियरूपाऽसमवायिकारणविरहस्थले एव संयोगस्य तज्जनकत्वस्वीकारात्, एवं च क्रियाघटितसामग्र्याः प्राबल्यात् उभयसामग्रीसमवधानस्थले शरीरतरुसंयोगस्य शरीरक्रियाजन्यत्वस्यैव स्वीकारादिति ध्येयम्॥ अन्यतरकर्मजसंयोगस्य उभयकर्मजसंयोगस्य च प्रत्येकमवान्तरभेदमाह–**अभिघातो नोदनं चेति**। तत्र–अभिघातमाह–**शब्दहेतुरिति**। शब्दजनकसंयोगः। अवच्छेदकतासम्बन्धावच्छिन्नशब्दनिष्ठकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणताश्रयसंयोगत्वम्–अभिघातत्वमित्यर्थः। निरुक्तकारणतावच्छेदकतया अभिघातपदशक्यतावच्छेदकतया वा सिद्धाभिघातत्वजातिविशेषवत्त्वम् अभिघातत्वमिति लक्षणम्। तत्र नोदनमाह-**शब्दाहेतुरिति**। शब्दाऽजनकसंयोग इत्यर्थः। एवं नोदनपदशक्यतावच्छेदकतया सिद्धनोदनत्वाख्यजातिविशेषवत्त्वं नोदनसंयोगलक्षणमिति बोध्यम्॥ वस्तुतस्तु–संयोगत्वतद्व्याप्या जातयः प्रत्यक्षसिद्धा एव॥ संयोगः अव्याप्यवृत्तिः, स्वात्यन्ताभावसमानाधिकरणत्वम् अव्याप्यवृत्तित्वम्। स्वं–संयोगः, तस्याऽत्यन्ताभावेन सह समानमेकमधिकरणं यस्य तत्त्वम्। स्वप्रतियोगित्व–स्वसामानाधिकरण्योभयसम्बन्धेन अभावविशिष्टत्वमिति निष्कर्ष इति ध्येयम्॥ मुक्तावली तु स्फुटैव॥

संयोगं निरूपयति—अप्राप्तयोरिति। तं विभजते—कीर्तित इति। एषः—संयोगः॥ सन्निपातः—संयोगः। द्वितीयः—उभयकर्मजः॥ तृतीय इति। संयोगजसंयोग इत्यर्थः। तृतीयः स्यादिति पूर्वेणान्वितम्। आदिमः—अभिघातः। द्वितीयो नोदनाख्यः संयोग इति॥

विभागोऽपि त्रिधा भवेत्।
एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः ॥११९॥
विभागजस्तृतीयः स्यात्तृतीयोऽपि द्विधा भवेत्।
हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥१२०॥

विभक्तप्रत्ययासाधारणं कारणं विभागं निरूपयति—विभाग इति॥ एककर्मेति॥ तदुदाहरणं तु श्येनशैलविभागादिकं पूर्ववद् बोध्यम्। तृतीयोऽपि=विभागजविभागः कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति द्विविधः। आद्यस्तावत्—यत्र

---

मूले—विभागोऽपि त्रिधा भवेदिति। विभागोऽपि त्रिविधः, तत्र आद्यः—प्रथमः, एककर्मोद्भवः—अन्यतरक्रियाजन्यः। यथा श्येनशैलविभागः। अपरः—द्वितीयः, द्वयकर्मोद्भवः—उभयक्रियाजन्यः। यथा मेषयोर्विभागः। विभागजविभागः तृतीयः, एनं द्वेधा मुक्तावल्यामुदाहरिष्यति। तृतीयोऽपि द्विधा—कारणमात्रविभागजन्यः, कारणाऽकारणविभागजन्यश्चेत्यर्थः। वस्तुतस्तु विभागोऽपि द्वेधा—कर्मजो विभागजश्च। तत्र कर्मजो द्वेधा—अन्यतरकर्मजः, उभयकर्मजश्च। विभागजोऽपि द्वेधा,—कारणमात्रविभागजः, कारणाऽकारणविभागजश्चेति। तदविरोधेन मूले त्रैविध्यमुक्तमिति बोध्यम्। लक्षणमनुक्त्वा विभागकथनेन मूलस्य न्यूनता,तां वारयितुं लक्षणमाह मुक्तावल्यां—विभक्तप्रत्ययेति। 'इमौ विभक्तौ'इतिप्रतीतेः असाधारणं कारणं विभाग इत्यर्थः। प्रतिपाद्यतासम्बन्धावच्छिन्नविभक्तप्रत्ययनिष्ठकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वमिति लक्षणार्थः। यादृशविभागाश्रये विभक्तप्रत्ययः कस्यापि न जातस्तत्र विभागेऽव्याप्तिवारणाय तादृशकारणत्वसमानाधिकरणरूपाऽवृत्तिजातिमत्त्वम्, यद्वा तादृशकारणतावच्छेदकतया सिद्धजातिविशेषवत्त्वं विभागलक्षणं बोध्यम्॥ यद्वा—संयोगनाशाऽसाधारणकारणत्वे सति गुणत्वमिति लक्षणम्। क्रियायाः संयोगनाशकत्वात् तत्रातिव्याप्तिवारणाय—गुणत्वम्, ईश्वरेच्छादिवारणाय—असाधारणेति। संयोगस्य प्रतियोगिविधया स्वनाशं प्रति हेतुत्वात् संयोगेऽतिव्याप्तिवारणाय प्रतियोगित्वसम्बन्धानवच्छिन्ननाशनिष्ठजन्यतानिरूपितजनकतावत्त्वमिति लक्षणमवसेयम्। वस्तुतस्तु—संयोगनाशत्वावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणतावत्त्वमिति लक्षणं बोध्यम्॥ अथ कर्मजविभागत्वं नाम—क्रियात्वावच्छिन्नाऽसमवायिकारणतानिरूपितविभागनिष्ठकार्यतावच्छेदकतया सिद्धजातिविशेषवत्त्वम्,कर्मजविभागस्य लक्षणम्। एवम् एकक्रियाजन्यविभागत्वं नाम—कर्माऽसहकृतकर्मनिष्ठाऽसमवायिकारणतानिरूपितविभागनिष्ठकार्यतावच्छेदकतया सिद्धविभागसामान्यविभाजककर्मजन्यतावच्छेदकवैजात्यव्याप्यजातिविशेषवत्त्वमिति, अन्यतरकर्मजविभागलक्षणम्। एवम् उभयक्रियाजन्यविभागत्वं नाम—कर्मसहकृतकर्मनिष्ठाऽसमवायिकारणतानिरूपितविभागनिष्ठकार्यतावच्छेदकतया सिद्धतादृशवैजात्यव्याप्यजातिविशेषवत्त्वमिति—लक्षणम्। एवं—विभागजविभागत्वं नाम—विभागत्वावच्छिन्नाऽसमवायिकारणतानिरूपितविभागनिष्ठकार्यतावच्छेदकतया सिद्धजातिविशेषवत्त्वं लक्षणमिति। नवीनैकदेशिमतानुसारेण विभागजविभागस्य द्वैविध्यमाह—कारणमात्रवि-

**कपाले कर्म, ततः कपालद्वयविभागः, ततो घटारम्भकसंयोगनाशः, ततो घटनाशः, ततस्तेनैव कपालविभागेन सकर्मणः कपालस्याकाशविभागो जन्यते, तत आकाशसंयोगनाशः तत उत्तरदेशसंयोगः, ततः कर्मनाश इति ॥ न च तेन कर्मणैव कथं देशान्तरविभागो न जन्यत इति वाच्यम्, एकस्य कर्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्याऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य च विरोधात् ।**

---

भागजन्यः कारणाऽकारणविभागजन्यश्चेति । कारणमात्रविभागजविभागत्वं=कारणमात्रविभागाऽसमवायिकारणक-कारणाऽकारणविभागत्वम् । कारणाकारणविभागजविभागत्वं नाम—कारणाऽकारणविभागाऽसमवायिकारणकार्याऽकार्यविभागत्वमिति ॥ तत्र कारणमात्रविभागजविभागमुपपादयति—**आद्यस्तावदिति**। यत्र-यदा एककपालेऽवयवेऽदृष्टादिवशात् क्रिया,अत्रकपालपदमवयवमात्रोपलक्षकम्,तेन परमाणुरपि ग्राह्यः । ततः=तदनन्तरं तया क्रियया, कपालद्वयसमवेतविभागः, एवं परमाणुद्वयविभागोऽपि बोध्यः, तेन विभागेन घटात्मकाऽवयविनोऽसमवायिकारणसंयोगस्य नाशः, एवं द्वयणुकस्य नाशोऽपि बोध्यः, ततो घटनाशः, द्वयणुकनाशोऽपि बोध्यः, असमवायिकारणनाशे सति कार्यद्रव्यस्य नाश इति नियमात् । ततः तेनैव कपालद्वयविभागेन परमाणुद्वयविभागेनाऽपीतिबोध्यम् । सकर्मणः=कर्मनाशकोत्तरसंयोगाऽभावात् सकर्मणः कपालस्य,परमाणोरपि बोध्यम् । आकाशविभागः—विभुसामान्यविभागः, जन्यते, सोऽयं कारणमात्रविभागजः । तत्र अवयवविभ्वोः विभागाऽनंगीकारे अनित्याऽवयवात्मकाऽऽश्रयनाशात् अनित्यावयवविभुसंयोगस्य नाशसंभवेऽपि द्वयणुकादिस्थले नित्याऽवयवविभुसंयोगस्य नाशकाऽभावेन नित्यत्वापत्त्या तादृशविभागाऽङ्गीकार आवश्यक इति ध्येयम् ॥ तादृशपरमाण्वोः आकाशेन सह विभागाऽनंगीकारे परमाण्वाकाशसंयोगस्य नाशकाऽभावेन नित्यत्वापत्तिरेव, परमाण्वाकाशसंयोगस्य प्रतिबन्धकस्य सत्त्वेन उत्तरसंयोगाऽनुत्पत्त्या नित्यत्वापत्तिः उत्तरसंयोगस्यैव स्वजनककर्मनिवर्तकत्वादिति भावः ॥ एतदर्थप्रकाशनार्थमुच्यते—**तत आकाशसंयोगनाश इति** । कपालाकाशसंयोगनाशः, परमाण्वाकाशसंयोगनाश इत्यपि बोध्यम् । ततः उत्तरदेशेन सह कपालस्य संयोगः, परमाणोः संयोगोऽपि बोध्यः । ततः कपालकर्मणो नाशः, परमाणुकर्मणोऽपि नाशो बोध्यः । अत्र कपालघटौ दृष्टान्ततया ग्राह्यौ परमाणुद्व्यणुके दार्ष्टान्तिकतयेति बोध्यम् । कपालसंयोगस्य कपालनाशे सत्यपि नाशसंभवेन नित्यत्वापत्त्यप्रसक्तेरिति तत्त्वम् ॥ अत्र सिद्धान्ती शंकते—**न च तेनैवेति** । तेनैव—परमाणुकर्मणैव, एवकारेण परमाणुद्वयविभागस्य हेतुत्वं व्यवच्छिद्यते, देशान्तरविभागः=परमाण्वाकाशविभागः, कथं न जन्यतेः ? क्रियाघटितसामग्र्याः प्राबल्यादिति भावः ॥ समाधत्ते—**एकस्येति** । एकस्य अवयवकर्मणः ॥ **आरम्भकेति** । द्वयणुकाद्यारम्भकस्य परमाणुद्वयसंयोगस्य विरोधी यः परमाणुद्वयविभागस्तज्जनकत्वेन, सह । **अनारम्भकेति** । द्व्यणुकस्याऽनारम्भको यः परमाण्वाकाशसंयोगस्तद्विरोधिविभागस्तज्जनकतायाः विरोधात् ॥ विरोधाऽनङ्गीकारे दोषमाह—**अन्यथेति**। विकसत्कमलस्य कुड्मलस्यापि नाशप्रसंगात्। तत्र विकसति कमलेऽग्रावच्छेदेन अनारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणः सत्त्वात्, तेन कर्मणा मूलावच्छेदेन आरम्भकसंयोगविरोधिविभागोत्पत्त्या आरम्भकसंयोगनाशे सति कमलनाशप्रसंगः स्यादिति भावः ॥ तस्मात् निरुक्तापत्तिपरिहाराय तयोर्विरोधस्वीकाराऽवश्यकत्वादित्यर्थः । तथा च "परमाणुसमवेतक्रिया,—न परमाण्वाकाशविभागजनिका,—परमाणुद्वयविभागजनकत्वात्,—यत् यदारम्भकसंयोगप्रतिद्वन्द्विविभागजनकं तन्न अनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकं, यथा—विकसत्कमलकुड्मलकर्मेति,—

**अन्यथा विकसत्कमलकुड्मलभङ्गप्रसङ्गात्, तस्माद् यदीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनयेत्तदारम्भकसंयोगप्रतिद्वन्द्विविभागं न जनयेत्। न च कारणविभागेनैव द्रव्यनाशात्पूर्वं कुतो देशान्तरविभागो न जन्यत इति वाच्यम्, आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागासम्भवात् ॥ द्वितीयस्तावत्–यत्र हस्तक्रियया हस्ततरुविभागस्ततः शरीरेऽपि विभक्तप्रत्ययो भवति, तत्र च शरीरतरुविभागे हस्तक्रिया न कारणं, व्यधिकरणत्वात्। शरीरे तु क्रिया नास्त्येव, अवयविकर्मणो यावदवयवकर्मनियतत्वात्। अतस्तत्र कारणा-**

---

सामान्यमुखव्याप्त्या परमाण्वादिकर्मविशेषे परमाण्वाकाशवृत्तिविभागजनकत्वाऽभावसिद्ध्या परिशेषात् कारणमात्रविभागजविभागसिद्धिर्निराबाधेति बोध्यम् ॥ ननु–परमाणुद्वयविभागजनकत्वमस्तु परमाण्वाकाशविभागजनकत्वाऽभावो मास्तु इतिव्यभिचारशंका भवितुमर्हतीति चेत्! तद्वारकं तर्कमाह–**यदीदमिति**। इदं परमाणुसमवेतकर्म यदि आकाशविभागजनकं स्यात् तर्हि तत् परमाणुद्वयविभागजनकं न स्यात्, अन्यथा द्व्यणुकस्य अनाशापत्तिः स्यात्। न चेष्टापत्तिः उपलभ्यमानस्य त्र्यणुकादिमहावयविपर्यन्तनाशापलापापत्तेः। उक्ततर्के परमाणुद्वयविभागजनकत्वाऽभावाऽभावेन आपाद्याभावेन आकाशविभागजनकत्वाऽभावस्य आपादकाऽभावस्य सिद्धिर्भवतीति बोध्यम् ॥ ननु परमाणुद्वयविभागस्य परमाण्वाकाशादिविभागाऽसमवायिकारणत्वे परमाणुद्वयसंयोगनाशकाले एव परमाण्वाकाशादिविभागः कुतो नोत्पद्यते इत्याशंकते–**न चेति**। कारणविभागेनैव=परमाणुद्वयविभागेनैव, द्रव्यनाशात्पूर्वम् = द्व्यणुकनाशक्षणपूर्वक्षणे, देशान्तरविभागः= परमाण्वाकाशादिविभागः, कुतो न जन्यते कारणसत्त्वात् इत्यर्थः ॥ समाधत्ते–**आरम्भकसंयोगेति**। परमाणुद्वयसंयोगविरोधिविभागवतः अवयवस्य=परमाणुद्वयस्य–द्व्यणुकनाशपूर्वक्षणवर्तिनः, सति द्रव्ये=द्व्यणुके सति परमाण्वाकाशात्मकदेशान्तरस्य विभागाऽजननादित्यर्थः। तत्र परमाणुद्वयविभागात्मकाऽसमवायिकारणस्य परमाण्वाद्यात्मकसमवायिकारणस्य सत्त्वेऽपि प्रतिबन्धकद्रव्यद्व्यणुकाऽभावात्मकनिमित्तकारणस्याऽसत्त्वादिति भावः। न च तत्र समवायेन द्रव्यस्य प्रतिबन्धकत्वे मानाभाव इति वाच्यम्। एकदेशिमते सति द्रव्ये तादृशविभागाऽननुभवस्यैव प्रमाणत्वात्। विभागेन द्व्यणुकनाशमपेक्ष्यैव विभागजननात् 'संयोगविभागयोरनपेक्षं कारणं कर्मे'तिसूत्रप्रतिपाद्यकर्मलक्षणमपि संगच्छते। अन्यथा परमाणुद्वयविभागादेरपि तादृशलक्षणाऽऽक्रान्ततयाऽतिव्याप्तत्वेन सूत्रस्याऽप्यप्रामाण्यापत्तेः। एतत्तत्त्वं क्षणप्रक्रियाप्रारम्भे विवेचितम् ॥ द्वैतहेतुविभागजन्यविभागमाह–**द्वितीयस्तावदिति**। कारणाऽकारणविभागजन्यकारणाऽकारणविभागो यथेत्यर्थः। यत्र=यस्मिन् क्षणे, करक्रियया करतरुविभागः, ततः=करतरुविभागोत्पत्त्यधिकरणतृतीयक्षणे। शरीरेऽपि='शरीरतरू विभक्तावि'तिप्रत्यक्षं भवति। तत्र=शरीरतरुविभक्तप्रत्ययविषये शरीरतरुविभागे। करक्रिया न असमवायिकारणं भवितुमर्हति, व्यधिकरणत्वात्=करक्रियायाः शरीरे वृक्षे वा समवायेन अभावात्। क्रियायाः संयोगे इव विभागेऽपि समवायेनैव हेतुत्वादिति भावः ॥ ननु तर्हि शरीरक्रिययैव शरीरतरुविभागो भवत्वित्यत आह–**शरीरे त्विति**। शरीरे तु समवायेन तदानीं क्रिया नास्त्येवेत्यर्थः॥ तत्र हेतुमाह–**अवयविकर्मण इति**। शरीरादिक्रियायाः, यावदवयवकर्मनियतत्वात्=यावदवयवघटकप्रत्येकाऽवयवसमवेता यावत्यः क्रियास्तावत्प्रत्येकनिरूपितजन्यतावत्त्वात्। तथा च कर्मणः व्याप्यवृत्तित्वनियमात् दैशिकाऽव्याप्यवृत्तित्ववारणाय उक्तनियमाङ्गीकारस्याऽऽवश्यकतया एकावयवसमवेतक्रियामात्रेण शरीरक्रियोत्पत्तिर्न संभवतीति भावः ॥ अतः=

२७

कारणविभागेन-कार्याकार्यविभागो जन्यत इति। अत एव विभागो गुणान्तरम्, अन्यथा शरीरे विभक्तप्रत्ययो न स्यात्। अतः संयोगनाशेन विभागो नान्यथासिद्धो भवति ॥ ११५,......१२० ॥

परत्वं चापरत्वं च द्विविधं परिकीर्तितम्।
दैशिकं कालिकं चापि मूर्त एव तु दैशिकम् ॥१२१॥
परत्वं मूर्तसंयोगभूयस्त्वज्ञानतो भवेत्।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥१२२॥

परापरव्यवहारनिमित्ते परत्वापरत्वे निरूपयति-परत्वमपरत्वं चेति। दैशिक-

---

एकावयवक्रियामात्रेण अन्यविक्रियाजननाऽभावात्, तत्र=तादृशशरीरे, कारणाऽकारणविभागेन= करतरुविभागेन, कार्याकार्यविभागः-शरीरतरुविभागो जन्यते इति विभागजविभागसिद्धिर्निष्प्रत्यूहेति बोध्यम् ॥ अथ-संयोगध्वंसात्मक एव विभाग इति वादिनां मतं निरसितुं स्वसिद्धान्तमाह-अत एवेति। विभागजविभागस्वीकाराऽऽवश्यकत्वादेवेत्यर्थः। विभागपदार्थः क्लृप्तगुणातिरिक्तगुण एव, न तु संयोगध्वंसात्मक इति ॥ संयोगध्वंसात्मकत्वे बाधकमाह-अन्यथेति। संयोगध्वंसात्मकत्वे, शरीरात्मकेऽन्त्यावयविनि, 'शरीरवृक्षौ विभक्ताविं'तिप्रतीतिर्नोत्पद्येत, विषयाऽभावात्,। 'शरीरवृक्षसंयोगध्वंस'इत्येवप्रतीतिः स्यादितिभावः ॥ अतः=निरुक्तप्रतीतिसिद्धत्वात्, विभागपदार्थः संयोगनाशेन अन्यथासिद्धः=अपदार्थो भवितुं नार्हतीत्यर्थः ॥ ननु उक्तप्रतीतेः विषयः शरीरतरुध्वंस एवाऽस्तु इति चेन्न। विभागाऽनङ्गीकारे शरीरतरुसंयोगनाशस्यैवाऽसंभवात्। करक्रियाया व्यधिकरणत्वेन तन्नाशकत्वाऽसंभवात्। ननु करतरुसंयोगनाश एव शरीरतरुसंयोगनाशं जनयेदिति चेन्न। आश्रयनाशाऽजन्यगुणनाशस्य विरोधिगुणजन्यत्वनियमेन शरीरतरुसंयोगनाशे करतरुसंयोगनाशस्याऽजनकत्वात्। किंच संयोगाऽभावस्य विभागत्वे विनिगमनाविरहेण विभागाऽभावस्य संयोगत्वमपीति द्वयोरप्यसिद्धिः स्यात्। विभागस्य संयोगात्यन्ताभावात्मकत्वे-संयोगस्याऽव्याप्यवृत्तितया संयुक्तेऽपि दण्डादौ मध्ये किंचिदवच्छेदेन संयोगात्यन्ताभावसत्त्वेन विभक्तप्रतीत्यापत्तेः। नापि संयोगान्योन्याभावरूपत्वं,संयुक्तेऽपि तथाप्रत्ययापत्तेः। नापि संयोगप्रागभावात्मकत्वम्,दण्डादेश्चरमसंयोगोत्पत्त्यनन्तरं तादृशसंयोगनाशे विभक्तप्रत्ययाऽनुपपत्तेः। नापि संयोगध्वंसात्मकत्वं, पूर्वसंयोगध्वंसवत्यपि संयुक्ते दण्डादौ तथा प्रत्ययापत्तेः ॥ किञ्च-विभक्तप्रत्ययस्य संयोगध्वंसविषयकत्वे बहूनां संयोगध्वंसानां विनिगमनाऽभावेन विषयत्वाऽऽवश्यकतया गौरवम्। यावत्संयोगध्वंसान्विषयीकृत्य विभक्तप्रत्ययस्य प्रामाणिकत्वे संयोगोत्पत्त्यनन्तरकाले तदनुपपत्तिरेवेति ध्येयम् ॥ ११५ ॥ १२० ॥

मूले--परत्वं चाऽपरत्वं चेति। परत्वाऽपरत्वे द्विविधे कीर्तिते, दैशिके=दिङ्निरूपिते, कालिके=कालनिरूपिते चेत्यर्थः। मूर्ते एव=दैशिकपरत्वापरत्वे नित्याऽनित्येषु मूर्तपदार्थेष्वेवोत्पद्येते इत्यर्थः। कालिकपरत्वाऽपरत्वे तु-अनित्येष्वेव मूर्तपदार्थेषु इति बोध्यम्। मूर्तत्वं-परिच्छिन्नपरिमाणवत्त्वमत्र बोध्यम्। परत्वम्=दैशिकपरत्वं, मूर्तपदार्थसंयोगभूयस्त्वज्ञानेन जन्यते, दैशिकपरत्वे विप्रकृष्टत्वविषयिण्यपेक्षाबुद्धिः निमित्तकारणमिति भावः। अपरत्वं=दैशिकाऽपरत्वम्, तदल्पत्वबुद्धितः=मूर्तपदार्थसंयोगाऽल्पीयस्त्वज्ञानेन जन्यते, दैशिकाऽपरत्वे सन्निकृष्टत्वविषयिण्यपेक्षाबुद्धिर्निमित्तकारणमित्यर्थः ॥ मुक्तावल्यां लक्षणमाह-पराऽपरेति। 'अयम् अस्मात्पर'

मिति । दैशिकपरत्वं बहुतरमूर्तसंयोगान्तरितत्वज्ञानादुत्पद्यते, एवं तदल्पीयस्त्वज्ञानादपरत्वमुत्पद्यते । अत्रावधित्वार्थं पञ्चम्यपेक्षा, यथा पाटलिपुत्रात्काशीमपेक्ष्य प्रयागः परः, पाटलिपुत्रात्कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति ॥ १२१-१२२ ॥

---

इतिव्यवहाराऽसाधारणकारणं परत्वम्, 'अयम् अस्मात् अपर' इति व्यवहाराऽसाधारणकारणम् अपरत्वमित्यर्थः। परत्वलक्षणे 'परव्यवहारानु'पादाने असाधारणकारणत्वस्यैव लक्षणत्वे दण्डेऽपि 'दण्ड'इत्यभिधानात्मकव्यवहाराऽसाधारणकारणत्वसत्त्वेनाऽतिव्याप्तिस्तद्वारणाय-परव्यवहारेति। यद्वा–प्रत्यक्षाद्यसाधारणकारणे इन्द्रियादावतिव्याप्तिरपि बोध्या। 'कारण'पदानुपादाने परव्यवहारे परव्यवहारत्वस्य असाधारणधर्मत्वसत्त्वेन तमादायाऽतिव्याप्तिः स्यात्। कालादिवारणाय–असाधारणमिति। अपरत्वलक्षणेऽपि व्यावृत्तिस्तद्वत्। तथा च 'अयमपरः अयं परः' इत्याकारकशब्दनिष्ठप्रतिपाद्यतासम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वस्य, क्वचिदपि तादृशव्यवहाराविषयेऽव्याप्तिवारणाय च तादृशकारणतासमानाधिकरणरूपाऽवृत्तिजातिमत्त्वस्य, तादृशकारणतावच्छेदकतया सिद्धपरत्वत्वादिजातिमत्त्वस्य, वा परत्वाऽपरत्वलक्षणत्वं बोध्यमिति॥ एवं परत्वाऽपरत्वपदशक्यतावच्छेदकजातिमत्त्वमपि लक्षणं बोध्यम्। परत्वत्वाऽपरत्वत्वजातिसिद्धिः प्रत्यक्षतोऽपि बोध्या॥ दैशिकपरत्वे निमित्तकारणमाह–**दैशिकपरत्वमिति**। बहुतरा ये मूर्तपदार्थसंयोगास्तदन्तरितत्वज्ञानात् उत्पद्यते, यथा 'पाटलिपुत्रात्=पटणातःकाशीमपेक्ष्य प्रयागः परः'–इत्यत्र पाटलिपुत्रकाशीनगयोर्मध्ये यावत्संख्याकमूर्तसंयोगास्तदपेक्षया पाटलिपुत्रप्रयागयोर्मध्ये बहुतरमूर्तसंयोगानां सत्त्वात् 'प्रयागो बहुतरमूर्तसंयोगान्तरित'इतिज्ञानेन विषयतया प्रयागनिष्ठेन प्रयागे दैशिकपरत्वम् उत्पद्यते इत्यर्थः। अपरत्वाश्रयनिष्ठतदवधिकमूर्तसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायपर्याप्तसंख्याधिकसंख्यापर्याप्त्यधिकरणस्वनिष्ठतदवधिकमूर्तसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायकत्वज्ञानात् दैशिकपरत्वमुत्पद्यते इति फलितार्थः। **एवं तदल्पीयस्त्वज्ञानादिति**। अल्पतरा ये मूर्तपदार्थसंयोगास्तदन्तरितत्वज्ञानात् दैशिकाऽपरत्वमुत्पद्यते इत्यर्थः। परत्वाश्रयनिष्ठतदवधिकमूर्तसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायपर्याप्तसंख्यान्यूनसंख्यापर्याप्त्यधिकरणस्वनिष्ठतदवधिकमूर्तसंयुक्तसंयोगपरम्पराघटकसंयोगसमुदायत्वज्ञानात् दैशिकाऽपरत्वमुत्पद्यते इति फलितार्थः॥ ननु–परत्वाऽपरत्वयो किं मानम्?, न तावत्प्रत्यक्षम्, तादृशशब्दोल्लेखिप्रतीत्यभावादित्याशंकापरिहाराय तादृशप्रयोगघटकाऽवधिवाचकशब्दस्य पञ्चम्यन्तत्वं साधयति–**अत्रेति**। परत्वादिविषयकशाब्दबोधौपयिकवाक्ये इत्यर्थः। अवधित्वार्थम्=अवधित्वविषयकशाब्दबोधार्थम्। पञ्चम्यपेक्षा=पञ्चमीविभक्तिमत्त्वेन अवधिवाचकपदप्रयोग आवश्यक इत्यर्थः॥ तादृशप्रयोगमुदाहरति–**यथेति**। पाटलिपुत्रादिति पञ्चम्यर्थोऽवधित्वम्, तस्य निरूपकत्वसम्बन्धेन परपदार्थैकदेशे परत्वेऽन्वयः। काशीमपेक्ष्य=काशीनिरूपितमित्यर्थः। तथा च–पाटलिपुत्रनिष्ठाऽवधितानिरूपककाशीनिरूपितपरत्वाश्रयः प्रयाग इति बोधः। एवं पाटलिपुत्रात्कुरुक्षेत्रमपेक्ष्येत्यत्र 'पाटलिपुत्रनिष्ठाऽवधितानिरूपक–कुरुक्षेत्रनिरूपिताऽपरत्वाश्रयः प्रयाग इति बोधः। तथा च अवधिवाचकपदोत्तरं द्वितीयादिः न संभवति, द्वितीयादेरवधित्वाऽवाचकत्वात्, षष्ठीविभक्तेरवधित्वादिशक्तत्वेऽपि शेषषष्ठ्याः सम्बन्धसामान्यशक्ततया सम्बन्धत्वेन अवधित्वबोधेऽप्यवधित्वत्वेन अवधित्वाऽबोधात् तदवधिकपरत्वादिप्रत्यक्षं नैतादृशशब्दोल्लेखीति तादृशप्रत्ययाऽभावेन परत्वाद्यसिद्ध्यापत्त्या तत्सिद्ध्यर्थं पञ्चम्यन्ताऽवधिवाचकपदघटितवाक्योदाहरणमावश्यकमिति भावः॥ १२१ ॥ १२२ ॥

तयोरसमवायी तु दिक्संयोगस्तदाश्रये ।
दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत् ॥१२३॥
परत्वमपरत्वं तु तदीयाल्पत्वबुद्धितः ।
अत्र त्वसमवायी स्यात्संयोगः कालपिण्डयोः ॥१२४॥
अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः ।

तयोर्दैशिकपरत्वापरत्वयोः । असमवायी–असमवायिकारणम् । तदाश्रये–दैशिकपरत्वापरत्वाश्रये ॥ दिवाकरेति ॥ अत्र परत्वमपरत्वं च कालिकं ग्राह्यम् । यस्य सूर्यपरिस्पन्दापेक्षया यस्य सूर्यपरिस्पन्दोऽधिकः स ज्येष्ठः, यस्य न्यूनः स कनिष्ठः । कालिकपरत्वापरत्वे जन्यद्रव्य एव । अत्र=कालिकपरत्वापरत्वयोः ॥१२३–१२४॥

---

मूले–तयोरसमवायीति । दैशिकपरत्वाऽपरत्वयोरसमवायिकारणं तु तदाश्रये=दैशिकपरत्वाऽपरत्वाश्रये पिण्डादौ यो दिग्पिण्डसंयोगः स एव बोध्य इत्यर्थः । कालिकपरत्वापरत्वयोः कारणं वक्ति–दिवाकरेति । दिवाकरः सूर्यस्तस्य परिस्पन्दः क्रिया तस्याः भूयस्त्वं बहुतरत्वं तज्ज्ञानात् दैशिकपरत्वमुत्पद्यते । तदीयाल्पत्वबुद्धितः–सूर्यक्रियाऽल्पीयस्त्वज्ञानात्, अपरत्वमुत्पद्यते । अत्र=कालिकपरत्वाऽपरत्वयोः, कालपिण्डसंयोगः असमवायिकारणमित्यर्थः । तेषाम्=कालिकदैशिकपरत्वाऽपरत्वानाम्, स्वनिमित्तकारणविप्रकृष्टत्वाद्यात्मकाऽपेक्षाबुद्धीनां नाशेन नाशो बोध्यः ॥ मूलतात्पर्यार्थमाह–मुक्तावल्यां यस्येति । यस्य सूर्यपरिस्पन्दाऽपेक्षया=यदुत्पत्तिप्रभृतिकालिकपरत्वबुद्ध्युत्पत्तिकालपर्यन्तं जायमानसूर्यक्रियासमुदायपर्याप्तसंख्याऽपेक्षया । यस्य सूर्यपरिस्पन्दः=यदुत्पत्तिप्रभृतिकालिकपरत्वबुद्ध्युत्पत्तिकालपर्यन्तं जायमानसूर्यक्रियासमुदायः । अधिकः=अधिकसंख्यापर्याप्त्यधिकरणम् । स ज्येष्ठः=तादृशाधिकरणमेव कालिकपरत्वाश्रयः, तद्विशेषज्येष्ठत्वाश्रयश्चेत्यर्थः । तथा च समवायेन तदवधिकपरत्वं प्रति तदुत्पत्तिप्रभृतिकालिकपरत्वबुद्ध्युत्पत्तिकालपर्यन्तं जायमानसूर्यपरिस्पन्दसमुदायपर्याप्तसंख्याधिकसंख्यापर्याप्त्यधिकरणसूर्यपरिस्पन्दसमुदायाऽवधिभूतोत्पत्त्याश्रयत्वज्ञानं निमित्तकारणमिति भावः ॥ यस्य न्यून इति । यस्य सूर्यपरिस्पन्दाऽपेक्षया यस्य सूर्यपरिस्पन्दो न्यूनः स कनिष्ठ इत्यन्वयः । यदुत्पत्तिप्रभृतिकालिकाऽपरत्वबुद्ध्युत्पत्तिकालपर्यन्तं जायमानसूर्यक्रियासमुदायपर्याप्तसंख्याऽपेक्षया यदुत्पत्तिप्रभृतिकालिकाऽपरत्वबुद्ध्युत्पत्तिकालपर्यन्तं जायमानसूर्यक्रियासमुदायः न्यूनसंख्यापर्याप्त्यधिकरणम्, तादृशाधिकरणमेव कालिकाऽपरत्वाश्रयः तद्विशेषकनिष्ठत्वाश्रयश्चेत्यर्थः । तथा च समवायेन तदवधिकाऽपरत्वं प्रति तदुत्पत्तिप्रभृतिकालिकाऽपरत्वबुद्ध्युत्पत्तिकालपर्यन्तं जायमानसूर्यपरिस्पन्दसमुदायपर्याप्तसंख्याधिकसंख्यापर्याप्त्यधिकरणसूर्यपरिस्पन्दसमुदायाऽवधिभूतोत्पत्त्याश्रयत्वज्ञानं निमित्तकारणमिति भावः ॥ ननु एतादृशाऽपेक्षाबुद्धेः कालिकपरत्वादिहेतुत्वे परमाण्वादौ तदनुपपत्तिरित्याशंकामिष्टापत्त्या परिहर्तुमाह–कालिकपरत्वापरत्वे इति । जन्यद्रव्ये एव=कालिकपरत्वापरत्वे नित्यद्रव्याऽवर्तिनीति न परमाणौ तदुत्पत्तिरिति भावः॥ ननु जन्यगुणादौ तदुत्पत्तिः स्यादिति चेन्न । कालिकपरत्वादिकं प्रति जन्यद्रव्यकालसंयोगस्य असमवायिकारणतया जन्यगुणादौ तदभावान्न तदापत्तिरिति । किञ्च–भावकार्यं प्रति द्रव्यस्यैव समवायिकारणतया जन्यगुणादौ तादात्म्येन द्रव्याऽभावान्न गुणोत्पत्त्यापत्तिरिति । विभिन्नावधिनिरूपितं परत्वमपरत्वं चैकत्राऽविरुद्धमित्यपि बोध्यम् । नव्यास्तु–बहुतरसंयोगान्तरितत्वरूपविप्रकृ-

तेषां=कालिकदैशिकपरत्वापरत्वानाम् ॥

बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः ॥१२५॥
अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते ।
अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते ॥१२६॥
तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता ।
तत्प्रपञ्चो विपर्यासः संशयोऽपि प्रकीर्तितः ॥१२७॥

**क्रमप्राप्तां बुद्धिं निरूपयितुमाह–बुद्धेरिति॥ तत्राऽप्रमां निरूपयति–तच्छून्य इति। तदभाववति तत्प्रकारकं ज्ञानं भ्रम इत्यर्थः ॥ तत्प्रपञ्चोऽप्रमाप्रपञ्चः ।१२५-१२६-१२७।**

---

ष्टत्वाऽल्पसंयोगान्तरितत्वरूपसन्निकृष्टत्वाभ्यां देशिकपरत्वाऽपरत्वादिव्यवहारस्य बहुतरस्पन्दान्तरितजन्यत्वरूपज्येष्ठत्वाऽल्पतरस्पन्दान्तरितजन्यत्वरूपकनिष्ठत्वाभ्यां च कालिकपरत्वादिव्यवहारस्योपपत्तेर्न तयोर्गुणान्तरत्वमिति वदन्ति । दैशिकपरत्वादेर्निरुक्तसूर्यसंयोगान्तरितत्वादिरूपत्वे तस्याऽप्यतीन्द्रियत्वेन घटादावपि कस्यापि दैशिकपरत्वादिनिष्ठलौकिकविषयताशालिप्रत्यक्षानुत्पत्तेः साक्षात्करोमीत्यनुव्यवसायाऽनुत्पत्तेश्च । एवं कालिकपरत्वादेर्निरुक्तबहुतरतपनपरिस्पन्दाऽन्तरितत्वोत्पन्नत्वादिरूपत्वे ज्येष्ठत्वादेर्निरुक्तबहुतरतपनपरिस्पन्दान्तरितजन्मत्वादिरूपत्वे चोत्पत्तिजन्मनोरतीन्द्रियतया तल्लौकिकप्रत्यक्षाऽनुत्पत्तेः, जन्यगुणादावपि निरुक्तबहुतरतपनपरिस्पन्दान्तरितोत्पन्नत्वादेरसत्त्वेन भ्रान्तानां कालिकपरत्वादिप्रत्ययापत्तेश्चेति ध्येयम् ॥१२३-१२४ ॥

मूले—**बुद्धेः प्रपञ्च इति** । बुद्धेः=ज्ञानस्य, प्रपञ्चः–विस्तारः,भेदप्रभेदादिः–"अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा" इत्येवमादिः, प्रायशः–बाहुल्येन, प्रागेव=आत्मनिरूपणाऽवसरे एव, निरूपितः–कथितः । अथ=तथापि, अप्रमाप्रमाभेदेनाऽवशिष्टः प्रकारः इदानीं निरूप्यते ॥ ज्ञानं=बुद्धिः–अप्रमा प्रमा चेति द्वेधा उच्यते । अप्रमा–अयथार्थज्ञानम् । प्रमा–यथार्थज्ञानम् । यद्यपि 'प्रमा अप्रमा चेति'निरूपणक्रम उचितः, तथापि अग्रे प्रमालक्षणस्य भ्रमभिन्नत्वघटिततया भ्रमत्वज्ञानार्थं प्रागत्र अप्रमाऽभिहितेति बोध्यम् ॥ अप्रमामाह–**तच्छून्ये इति** । रजतत्वादिशून्ये शुक्तौ या तन्मतिः–रजतत्वप्रकारकबुद्धिः 'इदं रजतमि'ति, सा अप्रमा उच्यते इत्यर्थः ॥ तत्प्रपञ्चः= तस्याः अप्रमायाः, प्रपञ्चः–अवान्तरभेदौ, विपर्यासः–विपर्ययः, संशयश्च,–बोध्यौ ॥ "अथ गुणा रूपं रसो गन्धस्ततः परमि"त्युद्देशक्रमानुसारेण अपरत्वनिरूपणाऽनन्तरं प्रसंगसंगत्या बुद्धिनिरूपणं दर्शयितुमाह–मुक्तावल्यां–**क्रमप्राप्तामिति** । गुणविभागकारिकाक्रमोपस्थितामित्यर्थः ॥ **तत्र अप्रमामिति** । अप्रमां लक्षयित्वा विभजत इत्यर्थः ॥ 'तच्छून्ये तन्मतिरि'तिमूलेन तदभाववन्निष्ठविषयतानिरूपकत्वे सति तन्निष्ठविषयतानिरूपकज्ञानत्वं भ्रमलक्षणं लभ्यते, तच्च 'घटपटावि'तिनानाविशेष्यताशालिसमूहालम्बनप्रमायाम् अतिव्याप्तम् , पटे घटाभावसत्त्वेन तादृशसमूहालम्बनज्ञानस्य घटाभाववत्पटनिष्ठविशेष्यतानिरूपकत्वे सति घटनिष्ठविशेष्यतानिरूपकत्वात्, अतः प्रकारताया विशेष्यतायाश्च निरूप्यनिरूपकभावापन्नत्वेन निवेशाऽभिप्रायकं लक्षणं स्फुटीकर्तुमाह–मुक्तावल्यां–**तदभाववति तत्प्रकारकं ज्ञानमिति** । तदभाववन्निष्ठविशेष्यतानिरूपिता या तन्निष्ठा प्रकारता तन्निरूपकज्ञानत्वम् अप्रमात्वम् इति तदर्थः ॥ रजतत्वाऽभाववच्छुक्तिनिष्ठविशेष्यतानिरूपिता या रजतत्वनिष्ठा प्रकारता तन्निरूपकज्ञानत्वस्य 'शुक्तौ–इदं रजतमि'त्यत्र सत्त्वात्समन्वयः । 'घट-

पटावि'ति समूहालम्बने-घटे घटाभाववत्पटनिष्ठविशेष्यतानिरूपितप्रकारताविरहादेव नातिव्याप्तिरिति । ननु तथापि रजते रजतत्वज्ञानस्यापि भ्रमत्वापत्तिः, वैशिष्ट्य-व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकरजतत्वाऽभावस्य रजते सत्त्वात् । न च प्रकारतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकतदभावो विवक्षित इति वाच्यम् । स्वरूपतो रजतत्वप्रकारकरङ्गविशेष्यकज्ञानेऽव्याप्त्यापत्तेः । न च स्वीयप्रकारतानवच्छेदकधर्मानवच्छिन्नप्रतियोगिताकाऽभावो विवक्षित इति वाच्यम् । स्वरूपतो रजतत्वप्रकारकभ्रमीयप्रकारताऽनवच्छेदकधर्मानवच्छिन्नप्रतियोगिताकरजतत्वाऽभावाऽप्रसिद्धेरव्याप्तेः । न च वैशिष्ट्य-व्यासज्यवृत्तिधर्माऽनवच्छिन्नप्रतियोगिताकतदभाववन्निष्ठेत्यादिनिवेशात् नोक्तदोष इति वाच्यम् । 'गुणकर्मान्यत्वविशिष्टसत्तावान् गुण'इति भ्रमेऽव्याप्तेः । न च प्रकारतावच्छेदकाऽतिरिक्तवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाऽभावो विवक्षित इतिवाच्यम् । स्वरूपतो रजतत्वप्रकारकभ्रमेऽव्याप्त्यापत्तेः, तत्र प्रकारतावच्छेदकाऽप्रसिद्धेः । यदि च प्रकारतावच्छेदकत्वं प्रकारांशे प्रकारतारूपाऽवच्छेदकत्व-प्रकारतावच्छेदकसम्बन्धनिष्ठसांसर्गिकविषयत्वोभयसाधारणाऽवच्छेदकतात्वेन,–प्रकारतानिरूपितविशेष्यताभिन्नविषयतात्वेन वा निवेश्यते, समवाये तत्प्रसिद्धत्वान्नोक्ताव्याप्तिः । तदा प्रमेयत्वेन यावत्प्रमेयप्रकारकसंयोगसंसर्गकगुणविशेष्यकप्रमेयवत्त्वान् गुण इति भ्रमेऽव्याप्तिः, तत्र प्रमेयमात्रस्यैव तादृशप्रकारतावच्छेदकत्वेन तदतिरिक्ताऽप्रसिद्धेः । संयोगेन दण्डप्रकारकप्रमायामतिव्याप्तेश्च, तद्दण्डाऽवृत्तिसंयोगावच्छिन्नतद्दण्डनिष्ठप्रतियोगिताकाभावस्य तद्दण्डवति सत्त्वात् । न च– स्वीयप्रकारतानिरूपितविशेष्यताभिन्नविषयताऽनवच्छेदकधर्मानवच्छिन्नाऽवच्छेदकताकस्वनिष्ठप्रतियोगिताकाऽभावो निवेश्यते, प्रकृते च तादृशसांसर्गिकविषयतावच्छेदकं संयोगत्वं, न तत्प्रतियोगितावच्छेदकतावच्छेदकं, तदवृत्तित्वस्यैव तथात्वादिति नातिव्याप्तिः, प्रमेयवत्त्वान् गुण इत्यत्रापि तादृशविषयतावच्छेदकप्रमेयत्वातिरिक्तत्वस्य प्रसिद्धत्वात् नाऽव्याप्तिरिति वाच्यम् । 'रजतमि'तिज्ञाने स्वरूपत एव समवायस्य संसर्गताङ्गीकारात् रङ्गविशेष्यकरजतत्वप्रकारकभ्रमेऽव्याप्तितादवस्थ्यात्, तादृशविषयताऽवच्छेदकाऽप्रसिद्धेरितिचेत् ! उच्यते,–स्वसमानाधिकरणाऽभावप्रतियोगितावच्छेदकावच्छिन्नभिन्ना स्वसमानाधिकरणाऽभावीययद्यत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकधर्मव्यापिका सती तत्तत्सम्बन्धावच्छिन्ना या या प्रकारता तदन्यतन्निष्ठप्रकारताशालिज्ञानत्वं भ्रमत्वम् । स्वं–विशेष्यता । 'रजतमि'ति स्वरूपतो रजतत्वप्रकारकभ्रमस्थले स्वरूपतो रजतत्वप्रकारतायाः तादृशप्रतियोगितानवच्छेदकधर्मव्यापकत्वाऽभावेन तादृशव्यापकप्रकारतान्यतन्निष्ठप्रकारताशालिज्ञानत्वाल्लक्षणसमन्वयः । रजतत्वस्यापि रङ्गनिष्ठाऽभावीयकालिकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वात् अव्याप्तिवारणाय–तत्सम्बन्धावच्छिन्नत्वमुक्तम् । गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इत्यत्र गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नप्रकारतायाः स्वसमानाधिकरणाऽभावीयसमवायसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकसत्तात्वव्यापकत्वेऽपि समवायसम्बन्धावच्छिन्नत्वेऽपि च स्वसमानाधिकरणाऽभावप्रतियोगितावच्छेदकावच्छिन्नभिन्नप्रकारतात्वाऽभावान्नाऽव्याप्तिः । **तथा च**–"स्वसमानाधिकरणाऽभावीययत्सम्बन्धावच्छिन्नप्रतियोगितानिरूपितयत्सम्बन्धावच्छिन्नावच्छेदकतावान् यो धर्मस्तत्सम्बन्धावच्छिन्नतन्निष्ठावच्छेदकताकतत्सम्बन्धावच्छिन्नप्रकारतान्या स्वसमानाधिकरणाऽभावीययत्सम्बन्धावच्छिन्नप्रतियोगितानिरूपितयत्सम्बन्धावच्छिन्नाऽवच्छेदकताशून्यो यो धर्मः तत्सम्बन्धावच्छिन्नतन्निष्ठव्याप्यतानिरूपितस्वरूपसम्बन्धावच्छिन्नव्यापकताश्रयीभूततत्सम्बन्धावच्छिन्ना या या प्रकारता तदन्यतन्निष्ठप्रकारताशालिज्ञानत्वमिति **निष्कर्षः** । तेन रजतत्वत्वेन रजतत्वप्रकारकप्रमायां प्रकारतावच्छेदकीभूतरजतत्वत्वस्य रजतनिष्ठाऽभावीयसम-

आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः ।
भवेन्निश्चयरूपा या,

आद्य इति । विपर्यास इत्यर्थः । शरीरादौ निश्चयरूपं यदात्मत्वप्रकारकं ज्ञानं गौरोऽहमित्याकारकम्, एवं शङ्खादौ 'पीतः शङ्ख' इत्याकारकं यज्ज्ञानं निश्चयरूपं तद्भ्रम इति ॥

संशयोऽथ प्रदर्श्यते ॥१२८॥
किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः ।

---

वायसम्बन्धावच्छिन्नप्रतियोगितानिरूपितविषयितासम्बन्धावच्छिन्नाऽवच्छेदकताश्रयत्वेऽपि नाऽतिव्याप्तिः । न वा रङ्गविशेष्यकरजतत्वप्रकारकभ्रमे वस्तुमात्रस्यैव रङ्गनिष्ठाऽभावप्रतियोगितानिरूपितविषयितासम्बन्धावच्छिन्नाऽवच्छेदकताश्रयतया तदनवच्छेदकाऽप्रसिद्ध्याऽव्याप्तिरिति ध्येयम् ॥ अन्ये तु–स्वसमानाधिकरणाऽभावप्रतियोगितावच्छेदकावच्छिन्नप्रकारतान्या या स्वसमानाधिकरणाऽभावप्रतियोगितानवच्छेदकव्यापिका प्रकारता तदन्यतन्निष्ठप्रकारतानिरूपितविशेष्यताकत्वं भ्रमत्वम्, स्वं-विशेष्यता, इति वदन्ति । तन्न । तत्र–प्रतियोगितावच्छेदकावच्छिन्नत्वस्य प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकत्वरूपत्वे प्रमेयत्वविशिष्टगुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति भ्रमेऽव्याप्त्यापत्तेः । प्रमेयत्वघटितगुरुधर्मस्य अनवच्छेदकत्वात् ॥ स्वसमानाधिकरणाऽभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणनिष्ठावच्छेदकताकत्वनिवेशे तु स्वरूपतो रजतत्वप्रकारकरङ्गविशेष्यकभ्रमेऽव्याप्त्यापत्तेः । रजतत्वत्वस्य रङ्गनिष्ठाऽभावीयकालिकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वात् ॥ अपरे तु–तत्सम्बन्धावच्छिन्नतन्निष्ठतादृशप्रतियोगिताकाऽभाववन्निष्ठज्ञानीयविषयतानिरूपिततत्सम्बन्धावच्छिन्नतन्निष्ठविषयतानिरूपितविषयित्वसम्बन्धेन तद्धर्मविशिष्टत्वं तेनसम्बन्धेनतद्भ्रमत्वम् इति वदन्ति । तन्न । वृक्षः कपिसंयोगीतिप्रमायामतिव्याप्तेरिति ध्येयम् ॥१२५॥१२७॥

मूले–आद्यो देहेष्वात्मबुद्धिरिति । आद्यः–विपर्ययः, देहेषु आत्मत्वप्रकारकबुद्धिः–'देहे 'अयम् आत्मा'इतिनिश्चयात्मकज्ञानम् । एवं–'शंखे–अयं पीत' इति पीतत्वप्रकारकनिश्चयात्मकं ज्ञानं, विपर्यय उच्यते इत्यर्थः ॥ मुक्तावल्यां शरीरादाविति । शरीरात्मनोरभेदावगाही शरीरे आत्मत्वप्रकारकः, 'शरीरमहमि'ति निश्चयः । विशिष्टाद्वैतमते आत्मनः ईश्वरशरीरतया 'शरीरोऽहमि'ति प्रतीतेर्यथार्थत्वात् आह–'गौरोऽहमि'ति । रक्ताश्रये आत्मत्वाऽभावात् तस्य भ्रमत्वमिति भावः । 'एवम् आत्मनि शरीरत्वप्रकारकः 'अहं शरीरमि'तिनिश्चयः 'अहं गौर'इतिनिश्चयश्च विपर्ययः इत्यर्थः । मूढमात्रप्रसिद्ध विपर्ययस्वरूपमुक्त्वा पण्डितेष्वपि प्रसिद्धं विपर्ययमाह–एवं शंखादाविति । 'शंखः पीत' इतिपीतत्वप्रकारकनिश्चयः, एवं 'शंखः पीतरूपवानि'ति तादात्म्यावगाही निश्चयश्च विपर्यय इत्यर्थः । आदिना 'वराटिका पीता'इतिनिर्णयोऽपि विपर्ययो ग्राह्यः ॥ मिथ्याज्ञानं विपर्ययः, स च तदभाववति तत्प्रकारकनिश्चयरूपः, प्रमावारणाय तद्भाववतीति । घटाभाववति भूतले घटाभाववद्भूतलमितिनिश्चयवारणाय–तत्प्रकारकेति । निश्चयपदानुपादाने तदभाववति तत्प्रकारकत्वस्य संशये इच्छायां च सत्त्वेन तत्रातिव्याप्तिः, तद्वारणाय–संशयान्यज्ञानार्थकं निश्चयपदम् । रङ्गरजतयोः इमे रङ्गरजते इति यथार्थसमूहालम्बनेऽतिव्याप्तिवारणाय–तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वे सति संशयान्यत्वे सति ज्ञानत्वं विपर्ययत्वमिति लक्षणं बोध्यम् ॥

मूले–संशयोऽथ प्रदर्श्यते इति । संशयस्वरूपं प्रदर्श्यते इत्यर्थः । किंस्विदिति । इदं तु

तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥१२९॥

किंस्विदिति। किंस्विदिति वितर्के। निश्चयस्य लक्षणमाह-तदभावेति। तदभावाप्रकारकं तत्प्रकारकं ज्ञानं निश्चयः ॥१२८-१२९॥

स संशयो मतिर्या स्यादेकत्राभावभावयोः।
साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥१३०॥

संशयं लक्षयति-स संशय इति। एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं

---

वितर्के। नरो वा='नरत्ववान्न वा' इति नरत्वतदभावप्रकारकज्ञानं संशयः, एवं 'स्थाणुर्वा-'स्थाणुत्ववान्न वा' इतिस्थाणुत्वस्थाणुत्वाऽभावप्रकारकज्ञानं संशय इत्यर्थः। 'नरो वा स्थाणुर्वे'ति-भावद्वयकोटिकैकसंशयाऽप्रसिद्धत्वात् संशयद्वयं बोध्यम् ॥ निश्चयस्य लक्षणं-तदभावाऽप्रकारा तत्प्रकारा धी'रिति। घटे-'घट'इतिज्ञानं घटत्वाऽभावाऽप्रकारकं घटत्वप्रकारकं च। एवं शुक्तौ 'रजतमि'तिज्ञानं रजतत्वाऽभावाऽप्रकारकं रजतत्वप्रकारकं च भवतीति तन्निश्चयो बोध्यः ॥ तमेवार्थमाह मुक्तावल्यां-तदभावाऽप्रकारकमिति। संशयेऽतिव्याप्तिवारणाय-तदभावाऽप्रकारकमिति। निर्विकल्पकेऽतिव्याप्तिवारणाय-तत्प्रकारकमिति। इच्छायामतिव्याप्तिवारणाय-ज्ञानमिति। 'ह्रदो वह्न्यभाववान् पर्वतो वह्निमानि'तिसमूहालम्बनात्मकनिश्चयसंग्रहाय-लक्षणे 'एकधर्मिविशेष्यकत्वमपि' निवेश्यम्। 'घटः प्रमेय'इतिनिश्चये प्रमेयत्वाऽभावाऽप्रसिद्धिनिबन्धनाऽव्याप्तिवारणाय-'प्रतियोगितासम्बन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नप्रकारत्वाऽनिरूपकत्वं विवक्षणीयम्। एवमपि 'पर्वतो वह्निमान् वह्न्यभाववांश्चे'तिसमुच्चये निरुक्तप्रकारत्वाऽनिरूपकत्वाऽभावनिबन्धनाऽव्याप्तिवारणाय-'तन्निष्ठप्रकारतानिरूपितज्ञानीयविशेष्यताकत्वतादृशविशेष्यतासमानाधिकरणतद्विरोधविशिष्टदैशिकविशेषणतासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपकत्वाभावैतदुभयवत्वं तन्निश्चयत्वमिति वक्तव्यम्। संशयसमुच्चययोर्वैलक्षण्याय संशये कोट्योर्विरोधस्य संसर्गतया भानस्वीकारात्। अन्ये तु-संशयसमुच्चययोर्वैलक्षण्याय संशये भावाऽभावनिरूपितविशेष्यतयोरवच्छेद्याऽवच्छेदकभावः, न तु समुच्चयीयविषयतयोः। तथा च 'प्रतियोगितासम्बन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानवच्छेदकतन्निष्ठप्रकारतानिरूपितज्ञानीयविशेष्यताकत्वं तन्निश्चयत्वमिति वदन्ति॥ १२८ ॥ १२९ ॥

मूले-स संशयो मतिर्या स्यादिति। एकत्र=एकस्मिन् धर्मिणि, भावस्य अभावस्य च यज्ज्ञानं स संशय इत्यर्थः। उभयसाधारणधर्मज्ञानम् असाधारणधर्मज्ञानं, विप्रतिपत्तिवाक्यजन्यकोटिद्वयज्ञानं, संशयस्य कारणमुक्तमित्यर्थः॥ 'मतिर्या स्यादेकत्राऽभावभावयो'रितिमूलेन लब्धस्य 'एकवृत्तिभावाऽभावविषयकज्ञानत्व'स्य 'वृक्षे कपिसंयोगतदभावज्ञाने'ऽतिव्याप्तिरित्यतः मुक्तावल्यामाह-एकधर्मिकविरुद्धेति। वृक्षे कपिसंयोगतदभावयोरविरुद्धत्वात् तद्वारणमिति। भूतलह्रदौ घटतदभाववन्तौ इतिज्ञानेऽतिव्याप्तिवारणाय-एकधर्मिकेति। 'भूतलं घटवत् पृथिवी घटाभाववती'तिज्ञानेऽतिव्याप्तिवारणाय-एकधर्मितावच्छेदकविशिष्टविशेष्यकत्वावच्छिन्नेति तदर्थः। 'भूतलं घट-तदभावाभाववदि'तिज्ञानवारणाय-विरुद्धभावाऽभावेति। 'भूतलं-भूतल-तदभावाऽभावः'-इतिज्ञानवारणाय-प्रकारकमिति। इच्छादिवारणाय-ज्ञानमिति॥ ननु-'भूतलं संयोगेन घटवत् समवायेन घटाभाववच्चे'तिज्ञानेऽतिव्याप्तिरिति चेन्न। तत्सम्बन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताकविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्विरुद्धतदभावनिष्ठप्र-

**संशय इत्यर्थः॥ साधारणेति ॥ उभयसाधारणो यो धर्मस्तज्ज्ञानं संशयकारणम्। यथोच्चैस्तरत्वं स्थाणुपुरुषसाधारणं ज्ञात्वाऽयं स्थाणुर्न वेति सन्दिग्धे। एवमसाधारणधर्मज्ञानमपि कारणम्। यथा शब्दत्वस्य नित्यानित्यव्यावृत्तत्वं शब्दे गृहीत्वा शब्दो नित्यो न वेति सन्दिग्धे। विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणं,-शब्दव्याप्तिज्ञानादीनां निश्चयमात्रजनकत्वस्वभावात्, किन्तु तत्र**

---

कारताकज्ञानत्वमिति विवक्षणात्। **वस्तुतस्तु**-स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वस्वसामानाधिकरण्योभयसम्बन्धेन विषयिताविशिष्टविषयिताशालिज्ञानत्वं संशयत्वम्, स्वं-विषयिता॥ **अन्ये तु**-तद्विरोधविशिष्टदैशिकविशेषणतासंसर्गावच्छिन्नप्रकारतानिरूपकत्वं तत्संशयत्वम्। **अपरे तु**-तन्निष्ठप्रकारतानिरूपिता या प्रतियोगितासम्बन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नप्रकारतानिरूपिता च विशेष्यता तन्निरूपकत्वं तत्संशयत्वमिति वदन्ति। **इतरे तु**-तन्निष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ना या प्रतियोगित्वसम्बन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नप्रकारतानिरूपिता विशेष्यता तन्निरूपकत्वं तत्संशयत्वमिति वदन्ति। **परे तु**-'स्वीयैककोटिप्रकारताऽवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूताऽपरकोटिप्रकारताशालिज्ञानत्वं संशयत्वमित्याहुः॥ **उभयसाधारण इति**। कोटिद्वयसहचरितत्वेन गृह्यमाणो यो धर्मः ऊर्ध्वत्वादिस्तत्प्रकारकनिश्चयः संशयकारणमित्यर्थः। तेन 'घटत्व-तदभावसहचरितपटत्ववानयमि'ति भ्रमात् 'अयं घटो नवे'तिसंशयोपपत्तिः॥ तदुपपादयति-**यथेति**। उच्चैस्तरत्वम्=स्थाणवस्थाणुसाधारणधर्ममुच्चैस्तरत्वं संशयधर्मिणि ज्ञात्वा 'अयं स्थाणुत्ववान् तदभाववान्वा'इति सन्दिग्धे=सन्देहवान् भवतीत्यर्थः। स्थाणवस्थाणुसहचरितत्वेन वर्तमानग्रहविषयधर्मप्रकारकपुरोवर्तिविशेष्यकज्ञानात् पुरोवर्तिविशेष्यकस्थाणुत्वतदभावकोटिसंशयो भवतीति भावः। अत्र साधारणधर्मवद्धर्मिज्ञानजन्यकोटिद्वयस्मरणस्यैव संशयजनकत्वं धर्मिज्ञानस्य तु प्रयोजकत्वमात्रमिति प्राचीनानां मतम्। नवीनास्तु-कोटिद्वयस्मरणोत्पत्तिक्षणे एव संशयोत्पत्तिसंभवात् क्षणविलम्बकल्पनायां मानाऽभावात् साधारणधर्मवद्धर्मिज्ञानजन्यकोटिद्वयस्मरणत्वेन कारणत्वे गौरवात् तत्तद्व्यक्तित्वेन हेतुत्वे व्यभिचारात् साधारणधर्मवद्धर्मिज्ञानत्वेन हेतुत्वं युक्तमिति प्राहुः॥ 'साधारणादिधर्मस्ये'तिमूलोक्ताऽऽदिपदार्थानाह-**एवमिति**। असाधारणधर्मज्ञानम्=कोटिद्वयाऽधिकरणाऽवृत्तित्वेन गृह्यमाणधर्मप्रकारकनिश्चयः संशयकारणमित्यर्थः॥ तदुदाहरति—**यथेति**। शब्दत्वं नित्यत्वाऽनित्यत्वकोटिद्वयाधिकरण-(सपक्षविपक्ष)व्यावृत्तित्वेन गृहीत्वा 'शब्दो नित्यत्ववान् तदभाववान्वा'इति सन्देहवान् भवतीत्यर्थः॥ 'अथ-'समानाऽनेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय' इतिगौतमसूत्रे 'विरुद्धकोटिद्वयवाक्यात्मकविप्रतिपत्तेः 'शब्दो नित्यो न वे'त्याकारिकायाः अर्थद्वयस्मृतिद्वारा संशयजनकत्वमुक्तम्, तत्खण्डयति-**विप्रतिपत्तिस्त्विति**। विप्रतिपत्तिवाक्यज्ञानं तु अर्थकोटिद्वयस्मरणद्वारा न संशयकारणमित्यर्थः। तथा च संशयात्मकशाब्दबोधोऽपि नाऽङ्गीकर्तव्य इति भावः॥ तत्र हेतुमाह-**शब्देति**। शब्दज्ञानस्य व्याप्तिज्ञानस्य अतिदेशवाक्यार्थज्ञानस्य चेत्यर्थः। **निश्चयेति**। प्रत्यक्षान्यनिश्चयमात्रजनकत्वात्मकाऽसाधारणधर्मवत्त्वादित्यर्थः। व्याप्तिज्ञानं दृष्टान्तार्थमुक्तम्, तथा च-'विप्रतिपत्त्यादिशब्दज्ञानं,-न संशयजनकं,-प्रत्यक्षान्यनिश्चयकारणत्वात्,-व्याप्तिज्ञानादिवदि'त्यनुमानेन विप्रतिपत्तेः संशयाजनकत्वसिद्धिरिति बोध्यम्॥ ननु विप्रतिपत्तेः संशयाऽजनकत्वे उक्तसूत्रस्याऽप्रामाण्यापत्तिरित्यत आह-**किन्त्विति**। तत्र=विप्रतिपत्तिस्थले,

**शब्देन कोटिद्वयज्ञानं जन्यते संशयस्तु मानस एवेति। एवं ज्ञाने प्रामाण्यसंशयाद्विषयसंशय इति। एवं व्याप्यसंशयादपि व्यापकसंशय इत्यादिकं बोध्यम्। किन्तु**

शब्देन=शक्तिज्ञानसहकृत-कोटिद्वयात्मकशब्दज्ञानेन, कोटिद्वयज्ञानं=भावाऽभावकोटिद्वयस्मरणमात्रं जायते, तथा च कोटिद्वयव्याप्यवत्ताज्ञानकाले भावाऽभावरूपकोटिद्वयशाब्दसामग्रीसत्त्वे एकैकशाब्दं प्रति अपरशाब्दसामग्र्याः प्रतिबन्धकत्वात् शाब्दसामान्यानुपपत्तिरेवेति भावः॥ ननु तर्हि अनुभूयमानसंशयोपपत्तिः कथमित्यत आह-**संशयस्त्विति**। मानस एव-मनःकरणक एव,-न तु विप्रतिपत्तिकरणकः, तत्र कोटिद्वयसहकृतमनसा संशयस्वीकारात्। विप्रतिपत्तेरितिपञ्चम्याः न जन्यत्वमर्थः किन्तु प्रयोजकत्वमितिकल्पनात् न सूत्रविरोध इति॥ **एवं ज्ञाने इति**। 'घटवद्भूतलमि'तिज्ञानं प्रमात्ववन्न वा'इति ज्ञानधर्मिकप्रमात्वतदभावप्रकारकसंशयेन 'भूतलं घटवन्न वे'ति विषये पदार्थेऽपि संशयो जन्यते। एवम्-अप्रामाण्यसंशयादपि विषयसंशयो ग्राह्यः 'प्रामाण्यसंशयादि'त्यस्य भ्रमभिन्नत्व-तदभावकोटिकसंशयादित्यर्थकत्वात्॥ **व्याप्यसंशयादिति**। वह्न्यादिव्याप्यत्वेन गृह्यमाणधूमादिकोटिकसंशयात् 'व्याप्यधूमवान्न वे'त्याकारकात् व्यापकस्य वह्नेः संशयः 'वह्निमान्नवे'त्याकारक उत्पद्यते इत्यर्थः॥ ननु व्याप्यसंशयस्य व्यापकसंशयहेतुत्वे मानाभावः, विशेषाऽदर्शनकोटिद्वयस्मरणादितः एव तत्संभवेन व्यापकसंशयस्याऽन्यथासिद्धत्वादिति चेन्न। महानसादौ वह्निं ह्रदादौ वह्न्यभावं च स्मरतः पर्वतादिकं पश्यता धूमादिरूपव्याप्यसंशयवत्त्वे वह्निसंशयोत्पत्तेः तादृशव्याप्यसंशयाऽभावे वह्निसंशयाऽनुत्पत्तेश्च गृहीतत्वेन अन्वयव्यतिरेकाभ्यां तस्यापि संशयहेतुत्वस्वीकारात्, सूत्रस्थ 'च'कारेण तत्संग्रहात् तथाहि 'समानाऽनेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः'इति सूत्रम्। तदर्थः-समानधर्मः-कोटिद्वयसहचरितत्वेन गृह्यमाणो धर्मः, अनेकस्मात् सपक्षाद्विपक्षाद्व्यावृत्तत्वेन गृह्यमाणो धर्मः, तयोरुपपत्तेः ज्ञानात्। विप्रतिपत्तेः=भावाभावकोटिद्वयप्रतिपादकवाक्यज्ञानात्, प्रयोजकत्वं पञ्चम्यर्थः। उपलब्धेः=प्रामाण्यस्य, अनुपलब्धेः-अप्रामाण्यस्य, अव्यवस्थातः=संशयात्। चकारेण-व्याप्यसन्देहात् व्यापकसन्देहः, साधनाऽव्यापकव्याप्यत्वसन्देहात् साधनाऽव्यापकत्वसन्देहश्च ग्राह्य इति। 'विशेषापेक्षो विमर्श'इति तु लक्षणम्, एकधर्मिकभावाऽभावप्रकारकत्वरूपविशेषवान्, विमर्शः-ज्ञानमिति तदर्थः॥ अत्र स्वावच्छिन्नाऽव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन साधारणधर्मज्ञानत्वाद्यात्मककारणतावच्छेदकतत्तद्धर्मविशिष्टत्वावच्छिन्नं प्रति तत्तद्धर्मावच्छिन्नस्य कारणत्वं बोध्यम्, तेन न परस्परव्यभिचारः॥

ननु-धर्मिज्ञानस्यापि संशयहेतुत्वात् तत्कृतसंशयविभागः कथं न कृत इत्यत आह-**किन्तु-संशये इति**। संशयसामान्यं प्रति धर्मिज्ञानस्य कारणत्वात् विशेषविभागो न कृत इति भावः॥ ननु धर्मिज्ञानस्य कारणत्वमेव नास्तीति चेन्न। तुरगादिकमारुह्य वेगेन गच्छतोऽनन्तधर्मीन्द्रियसन्निकर्षेऽपि यस्यैव धर्मिणो ज्ञानं तस्यैव संशयो विपर्ययो वा, यस्य तु न ज्ञानं न तत्रेत्यनुभवस्यैव तत्र प्रमाणत्वात्॥ ननु-तर्हि धर्मिज्ञानस्य आरोपमात्रे हेतुत्वमित्यायातम्, कार्यकारणभावश्च,-'तद्धर्मितावच्छेदककतद्धर्मिकसंयोगसंसर्गकतद्धर्म्यसंयुक्तधर्मप्रकारकज्ञानत्वाद्यवच्छिन्नं प्रति तद्धर्मितावच्छेदकप्रकारकतद्धर्मिज्ञानत्वेन हेतुत्वमिति, एवं च सति 'वृक्षः संयोगी न वा'इत्यादौ यत्र कोटिद्वयांऽशे नाऽरोपः, किन्तु विरोधांशे एव, तत्र संशये वृक्षादिरूपधर्मिधियो हेतुत्वं न स्यादिति चेन्न। तत्र अभावरूपधर्मिज्ञानस्य हेतुत्वेन वृक्षादिरूपधर्मिज्ञानस्य अहेतुत्वे इष्टापत्तेः॥ ननु-तत्र येषां धर्मिणां न ज्ञानं, तेषाम् इन्द्रियसन्निकृष्टत्वेऽपि मानाऽभावः, किञ्च-तद्धर्म्यन्तरेन्द्रि-

संशये धर्मिज्ञानं धर्मीन्द्रियसंनिकर्षो वा कारणमिति ॥ १३० ॥

दोषोऽप्रमाया जनकः, प्रमायास्तु गुणो भवेत् ।
पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥१३१॥

दोष इति । अप्रमां प्रति दोषः कारणम्, प्रमां प्रति गुणः कारणम् । तत्रापि पित्तादिरूपा दोषा अननुगताः, तेषां कारणत्वमन्वयव्यतिरेकाभ्यां सिद्धम् । गुणस्य प्रमाजनकत्वं तु अनुमानात् सिद्धम् । यथा,-'प्रमा,-ज्ञानसामान्यकारणभिन्नकारणजन्या,-

---

यसन्निकर्षे सति तत्तद्धर्मिणां ज्ञानमेव कुतो न जायते ?, दोषविशेष एव तत्तद्धर्मिज्ञानप्रतिबन्धक इति चेत् !, तर्हि तत्तद्धर्मिज्ञानरूपतत्तद्धर्मिकसंशयं प्रत्यपि स एव प्रतिबन्धक इति किं धर्मिज्ञानस्य पृथग्धेतुत्वेनेत्यरुचेराह-धर्मीन्द्रियसन्निकर्षो वा इति । धर्मिणा सह इन्द्रियस्य संयोगसंयुक्तसमवायाद्यात्मकसन्निकर्षः संशयसामान्यकारणमित्यर्थः । धर्मीन्द्रियसन्निकर्षस्य प्रत्यक्षसामान्यकारणत्वात् तज्जन्यसंशयस्य विभाज्यत्वेन परिगणनाऽसंभवात् पृथग्विभागो न दर्शित इति बोध्यम् ॥ यत्तु-"धर्मिज्ञानजन्यतावच्छेदकस्य संशयत्वसमव्याप्यत्वान्न तद्विभाजकतावच्छेदकमिति"व्याख्यानं, तत्त्वपव्याख्यानम्, आरोपमात्रे धर्मिज्ञानस्य हेतुत्वेन संशयत्वाऽसमनियतस्यैव धर्मिज्ञानकार्यतावच्छेदकत्वादिति ध्येयम् ॥ १३० ॥

मूले-दोषोऽप्रमाया इति । अयथार्थज्ञानस्य कारणं दोषो भवति, प्रमायाः=यथार्थज्ञानस्य कारणं गुणो भवति । दोषाः-पित्तं दूरत्वं तमः इत्यादयो अननुगता बोध्याः । तथा च अनुगतदोषाऽभावेऽपि अप्रमासामान्यं प्रति यावन्तो दोषास्तावदन्यतमत्वेन, यादृशदोषोत्तरं यादृशी-अप्रमा प्रामाणिकी तत्तदप्रमात्वावच्छिन्नं प्रति तत्तद्दोषत्वेन वा हेतुत्वं बोध्यम् । तेन न परस्परव्यभिचार इति ॥ मुक्तावल्याम्-अप्रमां प्रतीति । तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वावच्छिन्नं प्रति यावन्तो दोषास्तावदन्यतमत्वेन कारणत्वमित्यर्थः ॥ प्रमां प्रतीति । तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वावच्छिन्नं प्रति गुणत्वेन कारणत्वमित्यर्थः ॥ पित्तादिदोषाणामननुगतत्वात् नैकरूपेण कारणत्वं सम्भवतीत्याह-तत्रापीति । तत्र=अप्रमाकारणघटकाः, पित्तादिदोषाः=पित्त-दूरत्व-तिमिर-विद्युन्मण्डुकवसाञ्जनादयो दोषाः अननुगताः=अनुगतकारणतावच्छेदकाऽनवच्छिन्नाः, भवन्तीत्यर्थः ॥ ननु-अनुगतकारणतावच्छेदकशून्यानां कारणत्वमेव न संभवतीत्यत आह-तेषां कारणत्वमिति । दोषाणां कारणत्वं तु-'दोषसत्त्वे अप्रमासत्त्वं' 'दोषाऽभावे अप्रमाऽभाव'-इत्यन्वयव्यतिरेकसहचारज्ञानसहकृतेन प्रत्यक्षप्रमाणेन सिद्धमिति बोध्यम् ॥ ननु-'अप्रमा,-ज्ञानसामान्यकारणभिन्नकारणजन्या,-जन्यज्ञानत्वादि'त्यनुमानादपि दोषाणामप्रमाकारणत्वं सिद्ध्यति, प्रमायाः गुणजन्यत्वसिद्धेः प्राक् अन्वयव्याप्तौ दृष्टान्तत्वाऽसम्भवेऽपि व्यतिरेकव्याप्तौ परमाण्वाद्यात्मकनित्यानां दृष्टान्तत्वसंभवादिति चेन्न । प्रमायाः गुणजन्यत्वसिद्धेः प्राक् तत्र साध्यसन्देहाऽहितव्यभिचारसन्देहसंभवात् ईदृशव्यभिचारसन्देहस्य पक्षीयव्यभिचारसंशयरूपत्वाऽभावेन व्याप्तिज्ञानप्रतिबन्धकत्वात्, व्याप्तिज्ञानाऽभावेन च व्याप्तिज्ञानात्मकानुमानप्रमाणेन दोषाणाम् अप्रमाकारणत्वं नैव सिद्ध्यतीति बोध्यम् ॥ ननु गुणस्य प्रमाजनकत्वे किं प्रमाणमित्याकांक्षायामाह-गुणस्येति । अनुमानात्=अन्वयव्यतिरेकसहचारज्ञानसहकृतप्रत्यक्षप्रमाणात् अनुमानप्रमाणाच्च गुणस्य प्रमाकारणत्वं सिद्ध्यतीत्यर्थः ॥ अनुमानं दर्शयति-यथेति । प्रमा-पक्षः,अत्र तद्वति तत्प्रकारकज्ञानत्वरूपप्रमात्वं समवायकालिकोभयसम्बन्धेन,

**जन्यज्ञानत्वात्, अप्रमावत्। न च दोषाभाव एव कारणमस्त्विति वाच्यम्, पीतः शङ्ख इति ज्ञानस्थले पित्तदोषसत्त्वाच्छङ्खत्वप्रमानुत्पत्तिप्रसङ्गात्, विनिगमनाविरहाद-नन्तदोषाभावस्य कारणत्वमपेक्ष्य गुणस्य कारणताया न्याय्यत्वात् न च गुणस-**

---

प्रमापदवाच्यत्वं वा स्वरूपकालिकोभयसम्बन्धेन पक्षतावच्छेदकं, नाऽतः अवच्छेदकाऽवच्छेदेन साध्यत्वे भगवज्ज्ञाने बाधः॥ **'ज्ञानसामान्यकारणभिन्नकारणजन्यत्वं'**साध्यम्, ज्ञानसामान्यकारणं यदात्ममनःसंयोगादिस्तद्भिन्नं यत् गुणः चक्षुःसंयोगादिस्तज्जन्यत्वमित्यर्थः॥ अत्र साध्ये ज्ञानसाधारणकारणत्वं न ज्ञानत्वावच्छिन्नकारणत्वं, ज्ञानत्वस्य नित्यज्ञाने सत्त्वेन कार्यतानवच्छेदकत्वात्। न वा कालिकसमवायोभयसम्बन्धेन ज्ञानत्वावच्छिन्नकारणत्वं, पक्षे तादृशकारणताश्रयभिन्नचक्षुरादिजन्यतामादाय सिद्धसाधनात्। न च–ज्ञाननिष्ठकालिकसम्बन्धानवच्छिन्नकार्यतानिरूपितकारणतात्वेन क्लृप्ता यावन्तः पदार्थाः तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटविशिष्टार्थनिष्ठकारणतानिरूपितकालिकसम्बन्धानवच्छिन्नजन्यत्वस्यैव साध्यत्वस्वीकारेण चक्षुरादेस्तादृशभेदकूटविशिष्टत्वाऽभावात् तज्जन्यत्वमादाय न सिद्धसाधनप्रसंग इति वाच्यम्। तथा सति वक्ष्यमाण'विशेषणवद्विशेष्येन्द्रियसन्निकर्षसाध्यवत्पक्षविशेष्यकपरामर्शादिरूपगुणस्यापि सन्निकर्षत्वपरामर्शत्वादिना निरुक्तकारणतावत्त्वेन क्लृप्तत्वात् तत्तद्भेदकूटविशिष्टपदार्थरूपत्वाऽभावेन तज्जन्यत्वाऽसिद्ध्याऽतिरिक्तवस्तुजन्यत्वमादाय अर्थान्तरप्रसंगात्। किन्तु–निरुक्तकारणतावच्छेदकत्वेन क्लृप्तार्थाः यावन्तो धर्माः तत्तद्व्यक्तिभेदकूटविशिष्टधर्मावच्छिन्ननिरूपितजन्यत्वं साध्यमिति न सिद्धसाधनार्थान्तरे इति ध्येयम्॥ अन्येतु–ज्ञानत्वावच्छिन्नकार्यतान्यकार्यतानिरूपितकारणताश्रयजन्यत्वं साध्यमिति वदन्ति॥ **'जन्यज्ञानत्वादि'**ति हेतुः। भगवज्ज्ञाने व्यभिचारवारणाय हेतौ जन्येति। वस्तुतस्तु–कालिकसमवायोभयसम्बन्धेन ज्ञानत्ववत्त्वादित्यर्थः॥ **अप्रमावदिति** दृष्टान्तम्। शङ्खादिविशेष्यकपीतरूपादिप्रकारकज्ञानवदित्यर्थः॥ अर्थान्तरमाशंकते–**न च दोषाऽभाव एवेति**। एवकारेण गुणव्यवच्छेदः, दोषसत्त्वे प्रमाऽनुत्पत्त्या दोषाणां प्रतिबन्धकत्वात् प्रतिबन्धकाऽभावविधया दोषाभावस्य कारणत्वे प्राप्ते दोषाऽभावजन्यत्वं सिद्ध्यतीत्यर्थान्तरमिति भावः॥ दोषस्य प्रतिबन्धकं न भवतीति समाधानेन परिहरति–**'पीतः शङ्ख'**इति। 'पीतत्वप्रकारकशंखविशेष्यकज्ञानस्थले तादृशज्ञानविषयशंखे स्वाश्रयसंयुक्तत्वसम्बन्धेन पित्ततादिदोषसत्त्वात् तस्य प्रतिबन्धकस्य विद्यमानत्वेन 'शंखे'–'शंख'इति-शंखत्वप्रकारकशंखविशेष्यकप्रमा नोत्पद्येत किन्तु उत्पद्यतेऽतोऽन्वयव्यभिचारः, तस्मात् प्रमां प्रति दोषस्य प्रतिबन्धकत्वं न मन्तव्यम्, तथा च प्रतिबन्धकाऽभावविधया दोषाभावस्यैव न प्रमाकारणत्वमिति भावः॥ **ननु**–पित्तदोषस्य शुक्लत्वप्रकारकशंखविशेष्यकप्रमां प्रति प्रतिबन्धकत्वम्, नतु यावत्प्रमां प्रति, तथा च प्रतिबन्धकाऽभावविधया दोषाऽभावस्यैव प्रमाहेतुत्वस्य निराबाधत्वात् अर्थान्तरं तदवस्थमेवेत्यत आह–**विनिगमनाविरहादिति**। दोषाभावस्य गुणस्य वा हेतुत्वे एकपक्षसाधकयुक्त्यभावात् दोषाभावस्येव गुणस्यापि प्रमाजनकत्वं निराबाधमिति भावः॥ ननु दोषाभावाणामानन्त्यप्रयुक्तगौरवात् न कारणत्वं किन्तु गुणस्यैवेति प्राचीनैकदेशिमतं खण्डयितुमुपन्यस्यति–**अनन्तदोषाऽभावस्येति**। पित्त-मण्डुकवसाञ्जन-दूरत्व-विद्युत्-तिमिर-सजातीयसंवलनादिदोषाणामननुगतत्वेन दोषाऽभावाणामप्यननुगततया तत्तद्धर्मेण प्रमाकारणत्वकल्पनं गौरवम्, तदपेक्षया **गुणस्य कारणतायाः**=प्रत्यक्षप्रमां प्रति विशेषणवद्विशेष्येन्द्रियसन्निकर्षत्वेन, अनुमित्यादिप्रमां प्रति साध्यवत्पक्षविशेष्यकपरामर्शत्वादिना हेतुत्वौचित्यादित्यर्थः। **न्याय्यत्वात्**=लाघवप्रमाणसिद्धत्वादित्यर्थः॥ एकैकप्रमां प्रति दोषाऽभावाणामनेकरूपेण कारणत्वे प्रमाचतुष्टयं प्रति तु अनन्तधर्मेण

त्त्वेऽपि पित्तेन प्रतिबन्धाच्छङ्खे न श्वैत्यज्ञानमतः पित्तादिदोषाभावानां कारणत्वमवश्यं वाच्यं तथा च किं गुणस्य हेतुत्वकल्पनयेति वाच्यम्, तथाप्यन्वयव्यतिरेकाभ्यां गुणस्यापि हेतुत्वसिद्धेः। एवं भ्रमं प्रति गुणाभावः कारणमित्यस्यापि सुवचत्वात्॥ तत्र दोषाः के इत्याकाङ्क्षायामाह–पित्तेति। क्वचित्पीतादिभ्रमे पित्तं दोषः, क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः, क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवं रूपा दोषा अननुगता एव भ्रान्तिजनका इत्यर्थः॥ १३१॥

प्रत्यक्षे तु विशेष्येण विशेषणवता समम्।
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः॥ १३२॥

---

कारणत्वं महद्गौरवमिति तदपेक्षयाऽतिलाघवात् प्रमाचतुष्टयं प्रति विशेषणवद्विशेष्यसन्निकर्षत्वानुमानत्वादिना कार्यकारणभावचतुष्टयांगीकारस्यैवोचितत्वमिति भावः॥ गुणस्य कारणत्वाऽभावं शंकते–न च गुणसत्त्वेऽपीति। शुक्लरूपवच्छंखेन्द्रियसंयोगरूपगुणसत्त्वेऽपि, पित्तदोषरूपप्रतिबन्धकेन शंखे 'श्वेतः शंख' इति ज्ञानं प्रमा नोत्पद्यते, अतः=गुणसत्त्वेऽपि प्रमाऽनुत्पत्तिवशात्, पित्तादिदोषाऽभावाणामननुगतरूपेणाऽपि अन्यथाऽनुपपत्त्याऽवश्यं हेतुत्वं स्वीकार्यं, तथा च=दोषाभावाणां हेतुत्वस्यावश्यकत्वे च, गुणस्य हेतुत्वांगीकारेण किं प्रयोजनं?, न किंचिदिति। तस्मात् गुणोऽन्यथासिद्ध इति भावः॥ समाधत्ते–तथापीति। अन्वयव्यतिरेकाभ्याम्=पीतरूपवद्वस्त्रादौ पीतरूपात्मकविशेषणवद्विशेष्येन्द्रियसन्निकर्षे सति 'पीतः पट'इति प्रमा, तेजोंऽशशुवर्णस्य पीतरूपवत्त्वाभावेन तत्र पीतत्वविशेषणवद्विशेष्येन्द्रियसन्निकर्षात्मकगुणाऽभावेन पीतत्वप्रकारकप्रमाया अनुत्पत्तिरित्यन्वयव्यतिरेकाऽभ्यां गुणस्यापि हेतुत्वावश्यकत्वात् न अन्यथासिद्धत्वमिति भावः॥ उक्तयुक्त्या प्रमां प्रति गुणस्येव दोषाभावस्य यथा कारणत्वं तथा भ्रमं प्रति दोषस्येव गुणाऽभावस्यापि कारणत्वं दर्शयति–एवमिति। भ्रमं प्रति–तदभाववद्विशेष्यकतत्प्रकारकनिश्चयं प्रति, अन्वयव्यतिरेकाभ्यां गुणाभावः=विशेषणवद्विशेष्येन्द्रियसन्निकर्षाऽभावादेः कारणत्वं, पीतपटादौ पीतरूपभ्रमानुत्पत्त्या विशेषणवद्विशेष्यसन्निकर्षात्मकगुणस्य प्रतिबन्धकत्वमंगीकृत्य तदभावस्य प्रतिबन्धकाऽभावविधया 'पीतः शङ्ख'इतिभ्रमं प्रति कारणत्वस्य अवश्यं वक्तव्यत्वादिति भावः॥ अत्र प्रत्यक्षप्रमां प्रत्येव पित्तादिदोषाभावस्यापि हेतुत्वं, प्रत्यक्षभ्रमं प्रति च गुणाऽभावस्यापि हेतुत्वं मन्तव्यम्, न त्वनुमित्यादौ, साध्यतत्पक्षविशेष्यकपरामर्शादिरूपगुणसत्त्वे साध्याभाववत्पक्षविशेष्यकपरामर्शादिदोषाऽप्रसक्तेः। एवं साध्याभाववत्पक्षविशेष्यकपरामर्शादिरूपदोषसत्त्वे साध्यवत्पक्षविशेष्यकपरामर्शादिरूपगुणसत्त्वाऽप्रसक्तेः भ्रमानुमित्यादौ तादृशगुणाऽभावस्यापि हेतुत्वं न संभवतीति ध्येयम्॥ दोषाः के इत्याकांक्षायां तान् दर्शयति–पित्तेतीति। क्वचित्='पीतः शङ्ख'इति भ्रमे नेत्रस्थपित्तं दोषः स्वाश्रयसंयुक्तत्वसम्बन्धेन शंखवृत्तिः सन् कारणं बोध्यः। क्वचिच्चन्द्रादेः महद्गोलकस्यापि स्थालीसमपरिमाणवत्तया 'अपकृष्टमहच्चन्द्र'इतिप्रत्यक्षभ्रमे दूरत्वदोषस्य चन्द्रस्थस्य कारणत्वम्, दूरत्वं–बहुतरमूर्तसंयोगावच्छिन्नत्वम्। क्वचिद् वक्रे वंशे उरगभ्रमे मण्डूकवसाञ्जनं नेत्रस्थदोषः स्वाश्रयसंयुक्तसम्बन्धेन वंशस्थः सन् कारणं भवतीति। एवं विद्युन्नाटके पटादौ सक्रियपुरुषादिभ्रमः विद्युदात्मकदोषजन्य इति एवं सर्वत्र यथायोग्यं दोषः कल्पनीय इति भावः॥ १३१॥

मूले–प्रत्यक्षे त्विति। प्रत्यक्षे प्रत्यक्षप्रमायां, विशेषणवता विशेष्येण समम् इन्द्रियसन्निकर्षो लौकिकाऽलौकिकान्यतरो गुणः। अथ अनुमितौ=अनुमितिप्रमायां साध्यविशिष्टपक्षे 'साध्यव्याप्यहेतु-

पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥ १३३ ॥
शाब्दबोधे योग्यतायास्तात्पर्यस्याथ वा प्रमा ।
गुणः स्यात्, भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ॥ १३४ ॥

अथ के गुणा ? इत्याकाङ्क्षायां प्रत्यक्षादौ क्रमशो गुणान्दर्शयति--प्रत्यक्षे त्विति । प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः, अनुमितौ साध्यवति साध्यव्याप्यवैशिष्ट्यज्ञानं गुणः, एवमग्रेऽप्यूह्यम् ॥ प्रमां निरूपयति–भ्रमभिन्नमिति ॥१३२॥१३३॥१३४॥

ननु यत्र शुक्तिरजतयोरिमे रजते इति ज्ञानं जातं तत्र रजतांशेऽपि प्रमा न स्यात् तज्ज्ञानस्य भ्रमभिन्नत्वाभावादत आह--

अथ वा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् ।
तत्प्रमा, न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ॥ १३५ ॥

---

मान् पक्ष'–इतिपरामर्शो गुणः । अथ उपमितौ,=उपमितिप्रमायां, शक्ये=गवयपदवाच्ये गवये, सादृश्यप्रकारकज्ञानं गुणः । अथ शाब्दबोधप्रमायां योग्यताप्रमा तात्पर्यप्रमा च गुण इत्यर्थः । योग्यताप्रमा=एकपदार्थेऽपरपदार्थवत्त्वनिश्चयः । तात्पर्यप्रमा–घटपदे घटपदार्थबोधेच्छयोच्चरितत्वप्रकारकयथार्थज्ञानम् ॥ अत्रेदं बोध्यम्–प्रत्यक्षादिप्रमाचतुष्टयसाधारणतद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वावच्छिन्नं प्रति तत्समानाकारविषयिताकभगवज्ज्ञानव्यक्तित्वावच्छिन्नमेकमेव गुणः लाघवादिति । न च सदा प्रमोत्पादापत्तिरिति वाच्यम् । अस्मद्गुणानामपि पृथक् कारणत्वात् ॥ अथ प्रमालक्षणमाह–भ्रमभिन्नं तु ज्ञानमिति । तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानभिन्नतत्प्रकारकज्ञानत्वं प्रमात्वमिति लक्षणार्थः । भ्रमेऽतिव्याप्तिवारणाय–भिन्नान्तम् । निर्विकल्पकेऽतिव्याप्तिवारणाय–तत्प्रकारकमिति । इच्छादावतिव्याप्तिवारणाय–ज्ञानत्वमिति । 'इदं रजतमि'तिज्ञानस्य इदन्त्वेन शुक्त्यवगाह्यंशे इदन्त्वाऽभाववद्विशेष्यकेदन्त्वप्रकारकभिन्नेदन्त्वप्रकारकज्ञानत्वात् प्रमात्वम्, रजतत्वेन शुक्त्यंशे तु रजतत्वाऽभाववच्छुक्तिविशेष्यकरजतत्वप्रकारकज्ञानभिन्नरजतत्वप्रकारकज्ञानत्वाऽभावात् रजतत्वांशे न प्रमात्वमिति बोध्यम् ॥१३२॥१३३॥१३४॥

भ्रमभिन्नत्वघटकप्रमालक्षणं दूषयितुं शंकते मुक्तावल्यां–ननु यत्रेति । यत्र=यदि, शुक्तिरजतयोः–'इमे रजते'इति ज्ञानम् 'इदन्त्वेन शुक्तिरजतोभयविशेष्यकरजतत्वप्रकारकसमूहालम्बनात्मकम् उत्पन्नम्, तत्र=तादृशज्ञानम्, रजतांशेऽपि=शुक्तिविषयकत्वावच्छेदेन यथा रजतत्वप्रमात्वशून्यं, तथा रजतविषयकत्वावच्छेदेनापि रजतत्वप्रमात्वशून्यं स्यादित्यर्थः॥ तत्र हेतुमाह–तज्ज्ञानस्येति । निरुक्तसमूहालम्बनज्ञानस्य, भ्रमभिन्नत्वाऽभावात्=रजतत्वाऽभाववच्छुक्तिविशेष्यकरजतत्वप्रकारकज्ञानभिन्नज्ञानत्वाऽभावादित्यर्थः॥ यद्यपि–'रजतत्वाऽभाववन्निष्ठविशेष्यतानिरूपितरजतत्वप्रकारताभिन्नरजतत्वप्रकारताशालिज्ञानत्वमे'व लक्षणं द्विधा ज्ञानत्वप्रवेशाऽपेक्षया लाघवेन उचितम्, एवं च 'रंगरजतयोः–'इमे रजते'इतिसमूहालम्बने रजतांशे रजतत्वप्रकारतायाः रजतत्वाभाववच्छुक्तिनिष्ठविशेष्यतानिरूपितरजतत्वप्रकारताभिन्नत्वात् रजतांशे प्रमात्वोपपादनसंभवात् लक्षणान्तराऽनुसरणं निर्बीजं तथापि तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताभिन्नतन्निष्ठप्रकारताशालिज्ञानत्वाऽपेक्षया तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वस्य लाघवेन अथवेत्यादिना लक्षणान्तरानुसरणं

प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत् ।

अथवेति । तद्वद्विशेष्यकत्वे सति तत्प्रकारकं ज्ञानं प्रमेत्यर्थः । अथैवं स्मृतेरपि

कृतमिति बोध्यम् ॥ मूले "तद्वद्विशेष्यकं तत्प्रकारकं यज्ज्ञानं तत् ज्ञानं प्रमा, यथा घटत्ववद्घटविशेष्यकं घटत्वप्रकारकं 'घट'इतिज्ञानं प्रमा इति मूलार्थः ॥ निर्विकल्पकं ज्ञानं तु न प्रमा भवति, न वा भ्रमो भवति, प्रकारतादिशून्यत्वादित्यर्थः ॥ निर्विकल्पकज्ञानस्य लक्षणमाह–प्रकारतादिशून्यं हीति । निरूपकतासम्बन्धेन विशेषणता(प्रकारता)ख्यविषयताशून्यमित्येकं लक्षणं, आदिना निरूपकतासम्बन्धेन विशेष्यताख्यविषयताशून्यमिति द्वितीयं लक्षणम् । तृतीयं लक्षणमाह–सम्बन्धानवगाहि तदिति । निरूपकतासम्बन्धेन संसर्गताख्यविषयताशून्यमिति लक्षणार्थः । यद्वा 'सम्बन्धाऽनवगाही'त्यनेन निर्विकल्पकस्वरूपं दर्शितम्, यथा 'घटघटत्वे' 'घटभूतले'इत्याद्याकारकमिति । निर्विकल्पकेचतुर्थी विषयिता बोध्या, ननु तथापि चतुर्थविषयताविषययोर्धर्मधर्मिभावावगाहित्वात् निर्विकल्पकत्वहानिरिति चेन्न । स्वनिरूपितविषयतायाः स्वस्मिन् विषयत्वेन अभानात् न क्षतिरिति मन्तव्यम् । यद्वा तादृशविषयताविषययोः सविकल्पकत्वेऽपि घटभूतलयोर्निर्विकल्पके बाधकाभावात् निर्विकल्पकत्वस्य तत्तद्विषयावच्छेदेनाऽव्याप्यवृत्तित्वादिति ध्येयम् ॥ निर्विकल्पकज्ञानसिद्धिस्तदतीन्द्रियत्वं च 'ज्ञानं यन्निर्विकल्पाख्यमि'(५८)तिकारिकयोक्तं ततोऽवगन्तव्यमिति । तत्रेन्द्रियाऽगोचरत्वस्य सांसर्गिकविषयताशून्यत्वे पर्यवसानात् 'प्रत्यक्षभेदस्याऽतीन्द्रियत्वे विरोधः' इत्याशंका निरस्ता वेदितव्या ॥ "तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकं तत्प्रमा"इतिमूलस्य "तत्प्रकारकं यज्ज्ञानं तादृशज्ञानवद्विशेष्यकं तत्प्रमा"इत्यर्थभ्रमे सति शुक्तौ–'रजतमि'त्यत्र रजतत्वप्रकारकं रजतमिति यज्ज्ञानं विषयतया तादृशज्ञानवच्छुक्तिविशेष्यकस्य तस्य प्रमात्वापत्तिः स्यादित्यतो मूलकाराऽभिप्रेतार्थं स्फुटमाह मुक्तावल्यां–तद्वद्विशेष्यकत्वे सतीति । रजते 'इदं रजतमि'तिज्ञाने रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकत्वाल्लक्षणसमन्वयः । शुक्तौ 'इदं रजतमि'त्यत्र रजतत्ववद्विशेष्यकत्वाऽभावान्नातिव्याप्तिः । ननु तथापि 'रङ्गरजतयोः–इमे रजतरङ्गे'इतिभ्रमेऽतिव्याप्तिः, तत्र रजतत्ववद्रङ्गविशेष्यकत्वरजतत्वप्रकारकत्वयोः सत्त्वात् इति चेन्न । तद्वन्निष्ठविशेष्यतानिरूपिता या तन्निष्ठा प्रकारता तच्छालिज्ञानत्वस्य विवक्षितत्वात्, उक्तसमूहालम्बने तु रजतत्वप्रकारतायाः रङ्गत्ववद्रंगनिष्ठविशेष्यतानिरूपितत्वात् रजतत्ववद्रजतनिष्ठविशेष्यतानिरूपितत्वाऽभावान्नातिव्याप्तिः । इच्छादावतिव्याप्तिवारणाय–ज्ञानत्वनिवेशः । तदपि प्रकारतायां ज्ञाननिरूपितत्वलाभाय, न तु स्वातन्त्र्येण तस्य निवेशः, तथा सति तादृशप्रकारताकत्वविशिष्टज्ञानत्वस्य तादृशज्ञानत्वविशिष्टप्रकारताकत्वस्य वा विनिगमनाविरहेण विशेषणविशेष्यभावव्यत्यासे लक्षणद्वयापत्तेः। तादृशप्रकारताकत्वज्ञानत्वोभयत्वावच्छिन्नत्वस्य लक्षणत्वे लक्षणतावच्छेदकाऽसाधारणसम्बन्धाऽप्रसिद्धयाऽसम्भवापत्तेः । ननु तथापि 'पृथिवीजलोभयं गन्धवदि'तिभ्रमेऽतिव्याप्तिः, गन्धवद्विशेष्यतानिरूपितगन्धनिष्ठप्रकारताशालित्वादिति चेन्न। व्यासज्यवृत्तिधर्मानवच्छिन्नतद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वस्योक्तत्वात्, ननु तथापि 'पृथिवीजलोभयं द्रव्यमि'तिप्रमायामव्याप्त्यापत्तिरिति चेन्न । तदधिकरणतावच्छेदकधर्मावच्छिन्नतद्वद्विशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वस्य लक्षणत्वात् । ननु निरवच्छिन्नविशेष्यताक–'घट'इतिप्रमायामव्याप्तिरिति चेन्न । तदधिकरणतानवच्छेदकाऽनवच्छिन्नतद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वस्य लक्षणत्वात् ।

अत्र तद्वन्निष्ठविशेष्यत्वं–तत्प्रतियोगिकसम्बन्धानुयोगिनिष्ठविशेष्यत्वमिति वक्तव्यम्, अन्यथा

प्रमात्वं स्यात्, ततः किमिति चेत्, तथासति तत्करणस्यापि प्रमाणान्तरत्वं स्यादिति चेद्,--न, यथार्थानुभवकरणस्यैव प्रमाणत्वेन विवक्षितत्वात्। इदं तु बोध्यम्-येन सम्बन्धेन यद्वत्ता तेन सम्बन्धेन तद्वद्विशेष्यकत्वं तेन सम्बन्धेन तत्प्रकारकत्वं च वाच्यम्, तेन कपालादौ संयोगादिना घटादिज्ञाने नातिव्याप्तिः। एवं सति निर्विकल्पकं प्रमा न स्यात् तस्य सप्रकारकत्वाभावादत आह--न प्रमेति। ननु वृक्षे

---

वृत्त्यनियामकाधेयत्वतादात्म्यादिसम्बन्धावच्छिन्नप्रमायां 'घटे घटत्वम्' 'घटो द्रव्यमि'त्यादावव्याप्तिप्रसंगात। ननु 'वायू रूपवानि'तिभ्रमेऽतिव्याप्तिः, रूपाधिकरणतानवच्छेदकानवच्छिन्ना या पार्थिवरूपप्रतियोग्येकसमवायानुयोगिवायुनिष्ठविशेष्यतानिरूपितप्रकारताशालित्वादिति चेन्न। पृथिव्यादौ रूपनिरूपितत्वविशिष्टसमवायाधिकरणत्वस्यैव रूपसम्बन्धस्वीकारात् तद्वत्ताप्रतीत्यनियामकसम्बन्धस्य तदवच्छेदकसंसर्गतानभ्युपगमात्॥ अन्येतु-'तत्सम्बन्धिनिष्ठत्वतत्सम्बन्धितावच्छेदकताऽनवच्छेदकावच्छिन्नावच्छेदकत्वाऽनिरूपितत्वज्ञानीयतन्निष्ठप्रकारतानिरूपितत्वैतत्त्रितयसम्बन्धेन तद्धर्मविशिष्टविशेष्यताशालित्वं तत्प्रमात्वमिति, निर्धर्मितावच्छेदकभ्रमत्वप्रामाणिक इति वदन्ति॥ स्मृतेःप्रमात्वेन तत्करणस्यापि प्रमाणान्तरत्वमाक्षिपति-अथैवमिति। अनुभवसमानाकारत्वात् स्मृतेरपि तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वात् प्रमात्वापत्तिः। ननु तथा सति का हानिरिति शंकते-ततः किमिति। आपत्तिं दर्शयति-तथा सतीति। स्मृतेः प्रमात्वे सति, तत्करणस्यापि=स्मृतिकरणस्य-अनुभवस्यापि संस्कारस्य वाऽपि, प्रमाणान्तरत्वं=प्रत्यक्षत्वादिप्रमाणविभाजकोपाधिचतुष्टयाऽन्यप्रमाणत्वव्याप्योपाधिमत्त्वं, स्यादित्यापत्तिः, तच्च गौरवं निरर्थकं चेति भावः॥

सिद्धान्ती उक्तापत्तिं समाधत्ते-यथार्थानुभवकरणस्यैवेति। यथार्थानुभवजन्यस्मृतेर्यथार्थज्ञानत्वेऽपि यथार्थानुभवकरणत्वमेव प्रमाणत्वमिति लक्षणस्य स्मृतिकरणेऽप्रवृत्तेर्नोक्तापत्तिरिति भावः॥ ननु मूलोक्त-प्रमालक्षणस्य सम्बन्धविशेषाऽघटितया संयोगेन घटवत्कपालमिति भ्रमेऽतिव्याप्तिः, समवायेन घटवत्कपालविशेष्यकघटप्रकारकत्वस्य तत्र सत्त्वादित्याशंकायां सम्बन्धघटितं लक्षणमाह-अत्रेदं बोध्यमिति। इदं=वक्ष्यमाणं सम्बन्धघटितं लक्षणं स्वीकार्यमित्यर्थः। येनेति। यत्सम्बन्धावच्छिन्नयद्वन्निष्ठविशेष्यतानिरूपिता यन्निष्ठा यत्सम्बन्धावच्छिन्ना प्रकारता तच्छालिज्ञानत्वं प्रमात्वमित्यर्थः॥ सम्बन्धनिवेशफलमाह-तेनेति। कपाले संयोगेन घटवत्ताभ्रमे नातिव्याप्तिः, तत्र संयोगेन कपाले घटवत्त्वाऽप्रसिद्धेरिति भावः॥ ननु-प्रकारताघटितप्रमालक्षणत्वे निर्विकल्पके घटत्वादिज्ञानेऽव्याप्तिः स्यादित्याशंकते-एवं सतीति। प्रकारताघटितप्रमालक्षणत्वइत्यर्थः। निर्विकल्पकं=प्रकारताविशेष्यतादिशून्यज्ञानं तादृशलक्षणाऽनाक्रान्ततया प्रमा न स्यात, तस्य निर्विकल्पकज्ञानस्य प्रकारताविशेष्यतानिरूपकत्वाऽभावादित्यर्थः॥ भ्रमलक्षणस्यापि प्रकारतादिघटिततया निर्विकल्पके तदव्याप्तेर्भ्रमत्वमपि न स्यात्, तथा च तृतीयज्ञानत्वापत्तिरिति भावः॥ तत्समाधत्ते मूले-न प्रमा न भ्रमः स्यान्निर्विकल्पकमिति। द्वितीयप्रमालक्षणस्याऽलक्ष्यत्वेऽपि 'भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा' (१३४) इति कारिकोक्तमूलार्थकप्रथमप्रमालक्षणलक्ष्यत्वात् तादृशप्रमाऽन्तर्गतत्वात् "अप्रमा च प्रमा चेति द्विविधंज्ञानमिष्यते" इति (१२६) द्विविधविभागे न काचित् क्षतिः। द्वितीयलक्षणाऽभिप्रायेण तु 'प्रमा अप्रमा निर्विकल्पकं चे'ति त्रिधा विभागेऽपि इष्टापत्तिरिति बोध्यम्॥ ननु 'वृक्षः कपिसंयोगी'ति प्रमायामपि अव्याप्यवृत्तिकपिसंयोगविषयकत्वेन कपिसंयोगाऽभाववन्मूलावच्छिन्नवृक्षनिष्ठविशेष्यतानिरूपितकपिसंयोगनिष्ठप्रकारताकत्वात्मकभ्रमलक्षणस्य समन्वयात् ज्ञानसांकर्यापत्तिः स्यादित्याशंकते-ननु वृक्षे इति। वृक्षविशेष्यककपि-

कपिसंयोगज्ञानं भ्रमः प्रमा च स्यादिति चेद्,न,-प्रतियोगिव्यधिकरणसंयोगाभाववति संयोगज्ञानस्य भ्रमत्वात्। न च वृक्षे कपिसंयोगाभावावच्छेदेन संयोगज्ञानं भ्रमो न स्यात्तत्र संयोगाभावस्य प्रतियोगिसमानाधिकरणत्वादिति वाच्यम्, तत्र संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात्। लक्ष्यस्याननुगमाल्लक्षणस्याननुगमेऽपि न क्षतिः ॥ १३५ ॥

प्रमात्वं न स्वतोग्राह्यं संशयानुपपत्तितः ॥ १३६ ॥

संयोगप्रकारकं'वृक्षः कपिसंयोगी'ति प्रमाज्ञानं भ्रमोऽपि स्यात्, प्रमालक्षणलक्ष्यस्य तस्य भ्रमलक्षणाऽऽक्रान्तत्वात्, अतो नोक्तरूपे प्रमाभ्रमलक्षणे युक्ते इत्याशयः। समाधत्ते-**प्रतियोगिव्यधिकरणेति**। 'तदभाववति तत्प्रकारकज्ञानत्वमि'ति भ्रमलक्षणेऽव्याप्यवृत्तिस्थलानुरोधेन प्रतियोगिव्यधिकरणत्वस्य तदभावे निवेशात्, 'वृक्षे कपिसंयोगज्ञानस्य प्रमात्मकस्य प्रतियोगिव्यधिकरणकपिसंयोगाऽभाववद्विशेष्यकत्वाऽभावात् नातिव्याप्तिः। 'प्रतियोगिव्यधिकरणकपिसंयोगाऽभाववति जलादौ कपिसंयोगज्ञानं तु भ्रम एवेति तत्र लक्षणसत्त्वमिष्टमेवेति भावः। प्रतियोग्यनधिकरणीभूततदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वमिति लक्षणार्थः॥ ननु तर्ह्यपि कपिसंयोगाभाववन्मूलावच्छिन्नवृक्षे 'मूले वृक्षः कपिसंयोगी'तिज्ञाने भ्रमलक्षणस्याऽव्याप्तिरित्याशंकते-**न च वृक्षे इति**। संयोगाभावावच्छेदेन=कपिसंयोगाऽभावावच्छेदकमूलावच्छेदेन वृक्षे कपिसंयोगज्ञानं भ्रमो न स्यात्=तत्र भ्रमलक्षणस्याऽव्याप्तिः स्यादित्यर्थः॥ तत्र हेतुमाह-**तत्र संयोगाभावस्येति**। तत्र=वृक्षे, वृक्षवृत्तिकपिसंयोगाभावस्य कपिसंयोगात्मकप्रतियोगिसमानाधिकरणत्वात्, प्रतियोग्यनधिकरणकपिसंयोगाऽभाववत्त्वेन वृक्षस्य गृहीतुमशक्यत्वादिति भावः॥ तत्र भ्रमलक्षणं विशिष्य वक्तव्यमित्यभिप्रायेणाह-**तत्र संयोगाऽभावावच्छेदेनेति**। यदवच्छेदेन यत्सम्बन्धावच्छिन्नप्रतियोगिताको यदभावस्तद्वन्निष्ठविशेष्यतानिरूपिता या तदवच्छेदेन तत्सम्बन्धावच्छिन्ना तन्निष्ठा प्रकारता तादृशप्रकारतानिरूपकत्वे सति ज्ञानत्वस्य लक्षणत्वादित्यर्थः॥ कपिसंयोगाभावावच्छेदकमूलावच्छेदेन समवायसम्बन्धावच्छिन्नप्रतियोगिताको यस्य कपिसंयोगस्याऽभावस्तत्संयोगाभाववद्वृक्षनिष्ठविशेष्यतानिरूपिता या मूलावच्छेदेन समवायसम्बन्धावच्छिन्ना कपिसंयोगनिष्ठप्रकारता तच्छालिज्ञानत्वस्य तत्र सत्त्वाल्लक्षणसमन्वय इति भावः॥ व्याप्यवृत्तिपदार्थविषयकभ्रमस्थले तु-तत्सम्बन्धावच्छिन्नप्रतियोगिताकाऽभाववत्तन्निष्ठविशेष्यतानिरूपिता या तत्सम्बन्धावच्छिन्ना तन्निष्ठा प्रकारता तन्निरूपकज्ञानत्वमिति भ्रमलक्षणं बोध्यम्॥ ननु-व्याप्यवृत्त्यव्याप्यवृत्तिस्थलभेदेन भ्रमलक्षणभेदे लक्षणाऽननुगम इत्यत आह-**लक्ष्यस्येति**। लक्ष्यस्य=व्याप्यवृत्त्यव्याप्यवृत्तिधर्मप्रकारकभ्रमस्य, अननुगमात्=विभिन्नरूपेण लक्ष्यत्वस्वीकारात् लक्षणाऽननुगमेऽपि=विभिन्नरूपेण लक्षणत्वेऽपि, न क्षतिः=लक्षणाऽननुगमप्रयुक्ताऽव्याप्त्यादेरनवकाशः, फलमुखलक्षणभेदप्रयुक्तगौरवस्याऽदोषत्वादिति भावः॥१३५॥

इदानीं तादृशप्रमात्वस्य नैयायिकमतसिद्धपरतोग्राह्यत्वव्यवस्थापनाय मीमांसकमतसिद्धस्वतोग्राह्यत्वं निराकरोति-मूले-**प्रमात्वं नेति**। ज्ञाननिष्ठं यत् प्रमात्वं=तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वं, तत् न स्वतः=स्वस्मात् ज्ञानात् न ग्राह्यं, किन्तु परतः=अनुमानादिना ग्राह्यमित्यर्थः। तस्य स्वतोग्राह्यत्वे दोषमाह-संशयाऽनुपपत्तितः इति। यदि प्रामाण्यं स्वतोग्राह्यं स्यात् तदा अनभ्यासदशायां(प्रथमजलज्ञानोत्तरदशायाम्) दूरावलोकिते जले सति 'जलज्ञानं प्रमा न वा

इति अनुभवसिद्धः प्रमात्वसंशयो नोपपद्येत, अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात्, तस्मात् ज्ञानप्रामाण्यम् अनुमेयमित्यर्थः ॥ यद्यपि 'अप्रमा च प्रमा चे'तिविभागक्रमेण प्रथमम् अप्रामाण्यस्य परतोग्राह्यत्वसिद्धान्तव्यवस्थापनमुचितं तथापि प्रभाकरमतेऽप्रमात्वस्याऽलीकत्वात् प्रथमं प्रमात्वस्य स्वतोग्राह्यत्वं व्यवस्थाप्यते मूलकृतेति बोध्यम् ॥

**विप्रतिपत्तिस्तु—"ज्ञानप्रामाण्यं,—तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वे"**ति बोध्या। अत्र यद्धर्मप्रकारकज्ञानप्रामाण्यं यदा पक्षः तदा तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यत्वमेव साध्यं, न तु सामान्यतो ज्ञानग्राहकयावद्ग्राह्यत्वमिति लाभार्थं विशिष्य साध्यघटकघटत्वादिप्रकारकज्ञानपरं पक्षे 'ज्ञान'पदं बोध्यम्। **तदप्रामाण्येत्यादि**–साध्ये तत्पदेन–यद्धर्मघटितज्ञानप्रामाण्यं पक्षः तद्धर्मघटितज्ञानं ग्राह्यं, तादृशज्ञानाऽप्रामाण्याऽग्राहिका यावती तादृशज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयत्वं न वेत्यर्थः। तादृशो ग्रहः **गुरुमते** व्यवसायः, स च 'अयं घटः घटत्वेन घटमहं जानामी'त्याकारकः समूहालम्बनात्मको घटत्वधर्मघटितो यदि, तदा 'अयं घटः घटत्वेन घटमहं जानामी'त्याकारकसमूहालम्बनज्ञानप्रामाण्यं पक्षः, तादृशसमूहालम्बनज्ञानाप्रामाण्याऽग्राहिका यावती तादृशसमूहालम्बनज्ञानग्राहिका सामग्री चक्षुःसंयोगादिरूपा, तज्जन्यतादृशसमूहालम्बनव्यवसायविषयत्वं ज्ञानप्रामाण्येऽस्तीति समन्वयः। **भट्टमते**–तादृशग्रहोऽनुमितिः। तन्मते सर्वमेव ज्ञानमतीन्द्रियम्, अतो 'घटत्ववति घटत्वप्रकारकत्वविशिष्टमतीन्द्रियं यद् घटज्ञानं तत्प्रामाण्यं पक्षः, तादृशाऽतीन्द्रियज्ञानाऽप्रामाण्याऽग्राहिका यावती तादृशाऽतीन्द्रियज्ञानविषयकग्रहस्य 'इयं ज्ञातता घटत्ववति घटत्वप्रकारकज्ञानजन्ये'त्याकारकस्यानुमित्यात्मकस्य जनिका परामर्शादिघटिता सामग्री तज्जन्यतादृशानुमित्यात्मकग्रहविषयत्वं तादृशातीन्द्रियज्ञानप्रामाण्ये पक्षे इति समन्वयः। **मिश्रमते**–तादृशो ग्रहोऽनुव्यवसायः, स च 'अयं घट' इतिव्यवसायात्मकज्ञानाऽव्यवहितोत्तरजायमानो 'घटत्वेन घटमहं जानामी'त्याकारकमानसज्ञानात्मकः। एतन्मते 'अयं घट'इतिज्ञानप्रामाण्यं यदा पक्षस्तदा 'अयं घट'इत्याकारकव्यवसायात्मकज्ञानाऽप्रामाण्याऽग्राहिका यावती 'अयं घट'इतिव्यवसायज्ञानविषयकज्ञानजनिका सामग्री आत्ममनःसंयोगादिरूपा, तज्जन्यो 'घटत्वेन घटमहं जानामी'त्यनुव्यवसायात्मकग्रहः तद्विषयत्वम् 'अयं घट'इति व्यवसायात्मकज्ञानप्रामाण्ये वर्तते इति रीत्या साध्यसमन्वयः। **उक्तविप्रतिपत्तौ**–'यावद्' पदानुपादाने मीमांसकमते सिद्धसाधनं स्यात्, "घटज्ञानं प्रमा, सर्वमभिधेयम्,"–समर्थप्रवृत्तिजनकत्वात्,–वाच्यत्वाच्चे'तिसमूहालम्बनात्मकानुमितेः सर्वैः स्वीकारात्, घटज्ञानाप्रामाण्याऽग्राहिका घटज्ञानविषयकनिरुक्तसमूहालम्बनात्मकानुमित्यात्मकग्रहजनिका 'प्रमात्वव्याप्य-समर्थप्रवृत्तिजनकत्ववद्घटज्ञानम्–अभिधेयत्वव्याप्यवाच्यत्ववत् सर्वं चे'तिसमूहालम्बनात्मकपरामर्शात्मिका सामग्री तज्जन्यनिरुक्तसमूहालम्बनात्मकानुमितिरूपग्रहविषयत्वस्य घटज्ञानप्रमात्वे नैयायिकमीमांसकोभयमतसिद्धत्वात्। **'याव'**त्पदोपादाने तु तदप्रामाण्याऽग्राहिका यावती ज्ञानग्राहिका सामग्री यथायथं चक्षुःसंयोगात्मिका ज्ञाततालिंगकपरामर्शात्मिका, मनःसंयुक्तसमवायादिका च, यथायथं तज्जन्यः समूहालम्बनात्मको व्यवसायः, ज्ञाततालिङ्गकानुमितिः, अनुव्यवसायश्च, तद्विषयत्वं प्रमात्वे न नैयायिकमतसिद्धमतो न सिद्धसाधनमिति। अत्र सामग्र्यां न यावत्त्वं, यावत्सामग्रीजन्यज्ञानस्यैवाऽप्रसिद्धेः, किन्तु ग्रहे। यावत्पदस्य व्यापकत्वमर्थः। तथा च तदप्रामाण्याऽग्राहकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकविषयितानिरूपकं न वेति फलितोऽर्थः॥ **सामग्री**पदानुपादाने साध्याऽप्रसिद्धिः। तदप्रामाण्याऽग्राहकज्ञानग्राहकजीवात्मशरीरादिजन्ययावद्ग्रहविषयत्वस्य घटत्ववति घटत्वप्रकारकत्वा-

**प्रमात्वमिति। मीमांसका हि प्रमात्वं स्वतोग्राह्यमिति वदन्ति। तत्र गुरूणां मते ज्ञानस्य स्वप्रकाशरूपत्वात्तज्ज्ञानप्रामाण्यं तेनैव गृह्यते। भाट्टानां मते ज्ञानमतीन्द्रि-**

दिरूपे कुत्राऽपि प्रमात्वेऽप्रसिद्धेः। तदुपादाने तु–प्रागभावरूपसामग्रीमादाय तज्जन्ययावद्ग्रहविषयत्वस्य प्रमात्वे सत्त्वान्नाऽप्रसिद्धिः। जीवात्मशरीरादिकं तु न सामग्रीति भावः॥ 'तदप्रामाण्याऽग्राहके'तिपदानुपादाने 'घटत्ववति घटत्वप्रकारकज्ञाने 'इदं ज्ञानम् अप्रमे'त्यप्रामाण्यग्रहे जायमाने सति तादृशज्ञानाऽप्रामाण्यग्राहक–तादृशज्ञानग्राहकसामग्रीजन्य–तादृशाऽप्रामाण्यज्ञानाऽस्कन्दितग्रहविषयत्वस्य पक्षेऽभावात् बाधः स्यात्। तदुपादाने तु तदप्रामाण्याऽग्राहकज्ञानग्राहकसामग्र्येव साध्यघटकीभूता, तथा च 'अयं घट' इतिव्यवसायगताऽप्रामाण्यग्रहाऽजनिका तादृशव्यवसायविषयकग्रहजनिका यथार्थं चक्षुस्संयोग–परामर्श-मनःसंयोगात्मिका तज्जन्य–समूहालम्बनव्यवसाय–ज्ञातताल्लिङ्गकानुमित्यनुव्यवसायात्मकग्रहविषयत्वस्य साध्यत्वेन तादृशविषयत्वाऽभावस्य पक्षेऽसत्त्वान्न बाध इति॥ 'तदप्रामाण्याऽग्राहके'त्यत्र 'तत्'पदानुपादाने पटादौ–'अयं घट,–इतीदं ज्ञानमप्रमे'तिज्ञानप्रामाण्यं यत्र पक्षः, तत्र 'अयं घटः, इतीदं ज्ञानमप्रमे'तिज्ञानग्रहजनकतदप्रामाण्यग्रहाऽजनकसामग्र्येव न प्रसिद्ध्यति, तत्र ज्ञानग्राहिकाया मनःसंयुक्तसमवायाद्यात्मकसामग्र्या एव अप्रामाण्यग्राहकत्वात्। 'ताद'तिलुप्तसप्तमीकपदोपादाने तु यादृशज्ञानप्रामाण्यमनुमितावुद्देश्यं तादृशप्रामाण्याश्रयमेव ज्ञानं तत्पदेन ग्राह्यं, उक्तस्थले तु व्यवसाये अप्रामाण्यग्राहकस्यापि अनुव्यवसाये तदग्राहकत्वात् स्वतस्त्वसिद्धिरिति॥

ननु स्वतस्त्ववादिनः के? इत्याकांक्षायामाह–**मुक्तावल्यां–मीमांसका** इति। गुरुमिश्रभट्टाख्यः। प्रभाकरःगुरुः, मुरारिमिश्रः, कुमारीलोभट्टः। ते हि प्रमात्वं=ज्ञानवृत्तित्वविशिष्टं तद्वतितत्प्रकारकत्वं, स्वतोग्राह्यं=तदप्रामाण्याग्राहकज्ञानग्राहकयावत्सामग्रीजन्यग्रहविषय इति वदन्तीत्यर्थः। तदेव क्रमेणोपपादयति–**तत्रे**ति। त्रिपु मीमांसकेषु मध्ये। गुरूणां प्रभाकराणां मते ज्ञानस्य=ज्ञानमात्रस्य, स्वप्रकाशरूपत्वात्=स्वाऽभिन्नज्ञानविषयत्वाऽवश्यकत्वात्। ज्ञानस्य तत्प्रमात्वस्य च ज्ञानान्तरग्राह्यत्वे तद्ग्रहणार्थं पुनर्ज्ञानान्तराऽपेक्षेत्येवमनवस्थापत्तेरिति भावः॥ **ज्ञानप्रामाण्यमिति।** अनेन पक्षः दर्शितः। ज्ञानवृत्तित्वविशिष्टं तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वात्मकप्रामाण्यमित्यर्थः। अत्र पक्षे 'ज्ञान'पदानुपादाने 'प्र'पूर्वक 'मा'धातोः 'करणाधिकरणयो'रितिकरणे ल्युटि, ततः 'ष्यञ्' निष्पन्न'प्रामाण्य'शब्दस्य यत् प्रमाकरणत्वमर्थस्तस्य मनःप्रभृतिवर्तमानस्य पक्षत्वापत्तिः स्यात्, तच्चाऽनभिप्रेतमिति। किन्तु 'प्र'पूर्वक'मा'धातोर्भावे ल्युटि निष्पन्न'प्रमाण'शब्दात् तद्धित'ष्यञ्'सिद्धस्य 'प्रामाण्यस्य' यत् प्रमात्वमर्थः तस्यैव पक्षत्वमिति तात्पर्यग्रहार्थम् ज्ञानपदं बोध्यम्। वस्तुतस्तु–तद्वति तत्प्रकारकज्ञानत्वस्य घटत्वपटत्वादिरूपार्थभेदेन भिन्नत्वात् तादृशे कुत्रचिदपि प्रामाण्ये 'यावज्ज्ञानग्राहकसामग्रीग्राह्यत्व'रूपंसाध्यं न संभवति, किन्तु तद्धर्मप्रकारकज्ञानग्राहकयावत्सामग्रीग्राह्यत्वात्मकमेव साध्यं संभवति, अतो 'यद्धर्मप्रकारकज्ञानप्रामाण्यं यदा पक्षस्तदा तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यत्वमेव साध्यमिति विशिष्य साध्यघटकघटत्वादिप्रकारकज्ञानपरं 'ज्ञान'-पदमिति तत्त्वम्॥ तच्च प्रमात्वं **तेनैव**–समूहालम्बनात्मक'अयं घटः घटत्वेन घटमहं जानामी'-तिव्यवसायेनैव, **गृह्यते**=विषयीक्रियते इत्यर्थः। त्रिपुटीप्रत्यक्षवादिगुरुमते सर्वस्मिन्नेव ज्ञाने मिति–मातृ–मेयैतत्त्रयं भासते, मितिः–ज्ञानम्, माता–ज्ञानाश्रयः, मेयः–विषयः, 'अयं घटः घटमहं जानामी'त्युल्लेखि व्यवसायज्ञानमेवादौ उत्पद्यते, तस्य 'घटत्ववन्निष्ठघटत्वनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वविशिष्टज्ञानाश्रयोऽहमि'ति शाब्दबोधः, तस्य प्रमात्वविषयकतया तदुल्ले-

**यम्, ज्ञानजन्या ज्ञातता प्रत्यक्षा, तथा च ज्ञानमनुमीयते। मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते। सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं**

खिप्रत्ययस्य तस्य प्रमात्वविषयकत्वम् अव्याहतमिति भावः। **तथा च** प्रभाकरमते तज्ज्ञानप्रमात्वे–तदप्रामाण्याऽग्राहकस्वाश्रयग्राहकचक्षुःसंयोगादिसामग्रीजन्यग्रहत्वव्यापकविषयितानिरूपकत्वं स्वतोग्राह्यत्वं तत्र **बोध्यम्**। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणतायास्तैरनङ्गीकारात् प्रथमम् अनुपस्थितस्यापि प्रामाण्यस्य भानसंभवादिति ध्येयम्। **कुमारीलभट्टमते** स्वतोग्राह्यत्वमुपपादयति–**भट्टानां मते** इति। ज्ञानं=ज्ञानसामान्यम्, अतीन्द्रियं=लौकिकविषयताशून्यम्, आत्मसमवेतवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति धर्माधर्मादेरिव ज्ञानस्यापि तादात्म्येन प्रतिबन्धकत्वादित्याशयः। **ज्ञानजन्येति**। आदौ 'अयं घट'इतिप्रत्यक्षं, ततो 'घटे ज्ञातताया उपत्तिः, सा च ज्ञानजन्यविषयवृत्तिपदार्थान्तरम् प्राकट्याऽपराभिधानेति। सा च प्रत्यक्षा='ज्ञातो घट'–इतिप्रत्यक्षनिरूपितलौकिकविषयतावती। तथा च प्रत्यक्षप्रमाणेन ज्ञाततायाः सिद्धत्वात् नैयायिकानां प्रमाणाऽभावप्रयुक्तत्वाऽलीकत्वोक्तिरसंगतेति बोध्यम्। **तथा च**=तादृशज्ञाततया लिङ्गेन च। **ज्ञानमनुमीयते**=ज्ञानं तद्गतप्रामाण्यं चानुमीयते इत्यर्थः। तत्र क्रमः:–घटे ज्ञाततोत्पत्तिः 'घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानजन्यत्वव्याप्या–ज्ञातता' इति व्याप्तिस्मरणं चेत्येकः कालः, ततः इन्द्रियसम्बद्धविशेषणात्मक–ज्ञाततेन्द्रियसन्निकर्षव्याप्तिस्मरणेत्युभाभ्यां 'घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानजन्यत्वव्याप्यघटवृत्तिघटत्वप्रकारकज्ञाततावती–इयम्' इति तादात्म्यसम्बन्धेन व्याप्यवत्तापरामर्शः। तदनन्तरम् 'इयं ज्ञातता–घटत्ववति घटत्वप्रकारकज्ञानजन्ये'त्यनुमितिर्भवतीति। तथा च तया=ज्ञाततया, ज्ञाततालिंगकानुमित्या प्रामाण्यं विषयीक्रियते इत्यर्थः। अनुमानप्रयोगः–'इयं ज्ञातता,–घटत्ववति घटत्वप्रकारकज्ञानजन्या,–घटवृत्तिघटत्वप्रकारकज्ञाततात्वात्, या यद्वृत्ति यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या, यथा पटे पटत्वप्रकारिका ज्ञाततेति। यद्वा घटपक्षकानुमानं–'घटः,–घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयः,–घटत्वप्रकारकज्ञाततावत्त्वात्, यन्नैवं तन्नैवं यथा पटः इति॥ तथा च भट्टमते–ज्ञानप्रामाण्ये–तदप्रामाण्यग्रहाऽजनक-स्वाश्रयानुमितिजनकज्ञाततालिङ्गकपरामर्शात्मकसामग्रीजन्यग्रहत्वव्यापकविषयितानिरूपकत्वं स्वतोग्राह्यत्वं फलितम्॥ **मुरारिमिश्रमतमुपपादयति–मुरारिमिश्राणामिति**। अनुव्यवसायेन=व्यवसायोत्तरमनुव्यवसायेन, ज्ञानं=व्यवसायस्तद्गतप्रामाण्यं च, गृह्यते=विषयीक्रियते इत्यर्थः। **मिश्रमते**'अयं घट'इतिव्यवसायोत्तरं घटत्वेन घटमहं जानामी'त्यनुव्यवसायात्मकं लौकिकमानसं ज्ञानमुत्पद्यते, तेनाऽनुव्यवसायेन व्यवसायगतं प्रामाण्यं गृह्यते। तथा च मिश्रमते–ज्ञानप्रामाण्ये–तदप्रामाण्याग्राहकस्वाश्रयग्राहकमनःसंयोगादिसामग्रीजन्यानुव्यवसायात्मकग्रहत्वव्यापकविषयितानिरूपकत्वं स्वतोग्राह्यत्वमिति फलितम्। अन्येषामपि स्वतःप्रामाण्यवादिनां मतं समीकरोति–**सर्वेषामपीति**। प्रमात्वाऽप्रमात्वे स्वतोग्राह्ये इतिसांख्यानां योगानां च, प्रमात्वं स्वतोग्राह्यमितिविशिष्टाद्वैतिप्रभृतिवेदान्तिनां चापि मते, अनुव्यवसायेन=ज्ञानविषयकज्ञानेन, पौरुषेयबोधेन, फलेनेति यावत्, ज्ञानं=व्यवसायस्तद्गतप्रामाण्यं च विषयीक्रियते इत्यर्थः॥ **इदं तु बोध्यं**–"प्रमाणत्वाऽप्रमाणत्वे स्वतः सांख्याः समाश्रिताः,। नैयायिकास्ते परतः, सौगताश्चरमं स्वतः॥ प्रथमं परतस्त्वाहुः, प्रामाण्यं, वेदवादिनः–। प्रमाणत्वं स्वतः प्राहुः परतश्चाऽप्रमाणताम्" इति॥ ननु–अनुव्यवसायस्य व्यवसायमात्रविषयकत्वात् व्यवसायविषयाणां घटघटत्वादीनामविषयकत्वात् घटत्ववतिघटत्वप्रकारकत्वमिति यत् विषयघटितप्रामाण्यं तस्य वषयीकरणत्वाऽभावेन मिश्रसांख्यादिमते अनुव्यवसाये प्रामाण्यविषयकत्वस्वीकारोऽयुक्तस्तथा च

गृह्यते, विषयनिरूप्यं हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषयः ॥ तन्मतं दूषयति–न स्वतोग्राह्यमिति ॥ संशयेति ॥ यदि ज्ञानस्य प्रामाण्यं स्वतोग्राह्यं स्यात्, तदाऽनभ्यासदशापन्नज्ञाने प्रामाण्यसंशयो न स्यात्। तत्र हि यदि ज्ञानं ज्ञातं तदा त्वन्मते प्रामाण्यं ज्ञातमेवेति कथं संशयः, यदि तु ज्ञानं न ज्ञातं तदा धर्मिज्ञानाभावात्कथं

---

स्वतोग्राह्यत्वं तत्र नोपपद्येतेत्यत आह–**विषयनिरूप्यं** हीति । हि–यतो विषयतासम्बन्धेन ज्ञानं प्रति विषयस्य अभेदसम्बन्धेन कारणत्वात्, **ज्ञानं**=ज्ञानत्वं, विषयनिरूप्यं=किंचिन्निष्ठविषयतानिरूपकविषयिताव्याप्यम् भवति, निर्विषयकस्य ज्ञानत्वे प्रमाणाऽभावादिति भावः । अतः **विषयः**=घटादिविषयः, ज्ञानवित्तिवेद्यः=ज्ञानस्य वित्तिः ज्ञानं तेनापि वेद्यः=विषयीकर्तव्यो भवतीत्यर्थः। तथा च घटघटत्वादयो यथा साक्षाद् व्यवसायविषयास्तथा व्यवसायात्मकप्रत्यासत्त्या अनुव्यवसायेनाऽपि विषयाक्रियन्तेऽतोऽनुव्यवसायविषयत्वं प्रामाण्ये निराबाधं, ज्ञानज्ञानस्य ज्ञानविषयविषयकत्वनियमात्, पूर्वपूर्वविषयकोत्तरोत्तरप्रकटितज्ञानपरम्परां प्रति प्राथमिकज्ञानविषयस्य उपजीव्यत्वादिति भावः ॥ अनुमानं तु–'घटानुव्यवसायः,–घटविषयकः–व्यवसायद्वारा घटोपजीवकत्वे सति ज्ञानत्वात्'स्मृतिवदि'ति बोध्यम् ॥ **तन्मतं**=प्रामाण्यस्य स्वतोग्राह्यतावादिमीमांसकमतं दूषयति–**न स्वतोग्राह्यमितीति** । मीमांसकमते संशयाऽनुपपत्तिरूपं दूषणं व्युत्पादयति–**यदि ज्ञानस्येति** । ज्ञाननिष्ठप्रमात्वं स्वतोग्राह्यं यदि स्यात् तदा, **अनभ्यासदशापन्नज्ञाने**=द्विरावृत्त्यादिकम् अभ्यासः, तच्छून्यम् अनभ्यासः, दशा–स्थितिक्षणः, तथा च–स्थितिक्षणापन्नप्राथमिकजलज्ञाने सति तत्र सर्वानुभवसिद्धो यः 'जलज्ञानं प्रमा न वे'ति संशयः, स न स्यादित्यर्थः ॥ संशयाऽभावे हेतुमाह–**तत्र हीति** । तादृशस्थले इत्यर्थः । जलज्ञानं यदि स्वतोग्राह्यत्वात् ज्ञातं, तदा प्रामाण्यं मीमांसकमते ज्ञातमेव=निश्चितमेवेति, कथं=केन कारणेन संशयः स्यात्? न स्यादेवेत्यर्थः, निश्चयस्य विरोधित्वादिति भावः । ननु–अगृहीतग्राहित्वस्यैव प्रमात्वेन प्राथमिकज्ञानानाम् अगृहीतग्रहरूपाणां प्रमात्वरक्षार्थं विषयेष्विव अनुव्यवसायादेः प्रमात्वरक्षार्थम् प्राथमिकज्ञानेष्वपि समानाकारज्ञानान्तरेण अगृहीतत्वस्य स्वीकारात्, स्वेन स्वस्थितिक्षणे स्वप्रामाण्यस्यैव ग्रहणे निरुक्तप्रमात्वाऽहानेश्च, प्राथमिकज्ञानानाम् अज्ञातत्वात् तदानीं प्रमात्वसंशयो निर्वहत्येवेत्यत आह–**यदि तु ज्ञानं नेति** । यदि तु प्राथमिकज्ञानानि समानाकारज्ञानान्तरैरज्ञातानि तदा संशयकारणस्य धर्मिज्ञानस्य अभावात् कारणाऽभावेन प्रमात्वसंशयात्मककार्यस्याऽभाव एव स्यात् । तथा च संशयाऽनुत्पत्त्यात्मकबाधकसत्त्वात् प्रमात्वं न स्वतोग्राह्यमिति भावः ॥ किञ्च–गुरुमते 'घटोऽयं घटत्वेन घटमहं जानामी'तिसमूहालम्बनज्ञानार्थं यथेन्द्रियविषयसन्निकर्षोऽपेक्ष्यते तथा 'घटत्ववति घटत्वप्रकारकत्वा'त्मकप्रामाण्यस्य ज्ञानधर्मस्यापि विषयघटिततया तद्ग्रहार्थं इन्द्रियविषयसन्निकर्षघटितपरम्परासन्निकर्षोऽपेक्षाया अवर्जनीयत्वापत्त्या तस्यातिरिक्तग्राहकत्वाऽपेक्षया लाघवसहानुभवसिद्धानुमानग्राह्यत्वस्यौचित्यात् परतोग्राह्यत्वं, तादृशसन्निकर्षाऽनङ्गीकारे तु स्वतोग्राह्यत्वं नैवोपपद्येतेति । भट्टमतमपि न साधु, 'ज्ञातो घट' इतिप्रतीतेः घटांशे ज्ञाननिरूपितविषयत्वावगाहित्वस्वीकारेणैवोपपत्तेः प्रमाणान्तराऽभावाच्च ज्ञाततया अप्रसिद्धत्वेन तल्लिंगकज्ञानानुमितेः सुतराम् अप्रसिद्धत्वेन तत्र प्रामाण्याऽवगाहित्वस्य स्वतस्त्वे निर्युक्तिकत्वात् ॥ एवं–घटत्वप्रकारकसमवायसंसर्गकघटविशेष्यकज्ञानत्वस्यैव प्रमात्वेन मिश्रैश्चानुव्यवसाये समवायभानानङ्गीकारात् तद्घटितप्रमात्वस्य स्वतोग्रहोऽप्ययुक्तिक एव, यदि व्यवसायप्रत्यासत्त्या घटघटत्वयोरिव समवायस्य भानमंगीक्रियेत तदा 'समानाधिकरण्यसम्बन्धेन प्रमेयत्वविशिष्टो घट'इतिज्ञानात्

**संशयः। तस्माज्ज्ञाने प्रामाण्यमनुमेयम्, तथाहि–'इदं ज्ञानं, प्रमा, संवादिप्रवृत्तिजनकत्वात्, यन्नैवं, तन्नैवं, यथाऽप्रमा'। इदं पृथिवीत्वप्रकारकं ज्ञानं,-प्रमा,-गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात्। एवमिदं जलत्वप्रकारकं ज्ञानं,-प्रमा,-स्नेहवति जलत्वप्रकारकज्ञानत्वात्। न च हेतुज्ञानं कथं जातमिति वाच्यम्, पृथवीत्वप्रकारकत्वस्य स्व-**

---

निखिलप्रमेयप्रकारकाऽलौकिकप्रत्यक्षापत्तेः, सामानाधिकरण्यघटकतया निखिलप्रमेयस्यापि संसर्गतया भानात, तस्मात् मिश्रमतमपि हेयमेवेति ध्येयम्॥ स्वसिद्धान्तमाह–**तस्मादिति**। संशयाऽनुपपत्त्यादिदोषेण ज्ञानप्रामाण्यस्य मतत्रयसिद्धस्वतस्त्वाऽसंभवादित्यर्थः। ज्ञाने प्रामाण्यमनुमेयमेव=ज्ञाननिष्ठोद्देश्यतानिरूपिताऽनुमितिनिरूपितविधेयतावदेव प्रमात्वं बोध्यमित्यर्थ.॥ प्रथमं घटज्ञानाऽनन्तरं प्रवृत्तौ सत्यां घटलाभे सति अनुमीयते, तमनुमानप्रकारमाह–**तथाहीति**। 'इदं ज्ञानं'–पक्षः, तद्व्यक्तित्वेन प्राथमिकघटादिज्ञानं पक्षः। इदमिति–तद्व्यक्तित्वेन पक्षतालाभाय। 'प्रमा'–इति साध्यम्, प्रमात्ववदित्यर्थः, घटत्वादिनिष्ठप्रकारतानिरूपितसमवायादिनिष्ठसंसर्गतानिरूपितघटनिष्ठविशेष्यतानिरूपकज्ञानत्वमिति यावत्। 'संवादिप्रवृत्तिजनकत्वादि'ति हेतुः। संवादिनो=समर्था–सफला इति यावत्, एतादृशप्रवृत्तिप्रयोजकत्वादित्यर्थः॥ व्यतिरेकेण दृष्टान्तमाह–**यन्नैवमिति**। यत्र साध्यं नास्ति तत्र हेतुर्नास्ति यथा 'शुक्तौ–इदं रजतमि'ति अप्रमा–इत्यर्थः। एवं प्रमात्वेन निर्णीतघटादिज्ञानाऽन्तरमपि अन्वयिदृष्टान्तो बोध्यः॥ एवं द्वितीयादिघटज्ञानेषु पूर्वज्ञानसजातीयत्वात्मकलिंगेन प्रमात्वमनुमेयम्, यथा–'द्वितीयादिघटज्ञानं,–प्रमा,–प्रथमप्रमात्मकघटज्ञानसजातीयत्वात्, प्रथमज्ञानवदिति। साजात्यं च समर्थप्रवृत्तिजनकत्वेन धर्मेण बोध्यम्॥ तथा च मीमांसकानां तद्विषयकप्रवृत्तिं प्रति तद्विषयक–ज्ञाननिष्ठप्रामाण्यनिश्चयः कारणमिति कार्यकारणभावो व्यभिचरितो बोध्यः, प्रवृत्तिहेतुना प्रामाण्यस्य निश्चितत्वादिति ध्येयम्॥ ननु–प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्य कारणत्वे न्यायमते तादृशज्ञानाऽसत्त्वेऽपि यत्र ग्रीष्मोत्तरप्राथमिकवृष्टिमत्पृथिव्याम् अनायत्या 'गन्धवतीपृथिवी'तिप्रत्यक्षं जातं, तत्र ज्ञाने निरुक्तसमर्थप्रवृत्तिजनकत्वहेतोरभावात् कथं प्रमात्वनिर्णय इत्यत आह–**इदं पृथिवीत्वप्रकारकं ज्ञानमिति**। तद्व्यक्तित्वेन पृथिवीत्वप्रकारकज्ञानस्य पक्षतालाभाय–इदमिति। प्रमात्वं, साध्यम्, तस्य पृथिवीत्ववति पृथिवीत्वप्रकारकत्वमर्थः। 'गन्धवति पृथिवीत्वप्रकारकज्ञानत्वादि'ति हेतुः, गन्धवन्निष्ठविशेष्यतानिरूपितपृथिवीत्वनिष्ठप्रकारताकज्ञानत्ववत्त्वादित्यर्थः, स्वाश्रयनिरूपितगन्धवन्निष्ठविशेष्यतानिरूपितपृथिवीत्वनिष्ठप्रकारतानिरूपकत्वसम्बन्धेन ज्ञानत्ववत्त्वादिति वाऽर्थः, अतो न विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्तगौरवाऽवकाशः, न वा हेतुतावच्छेदकसम्बन्धाऽप्रसिद्धिः। अत्र पृथिवीत्वप्रकारकज्ञानत्वस्य पक्षतावच्छेदकत्वात्, पृथिवीत्ववद्विशेष्यकपृथिवीत्वप्रकारकत्वस्य साध्यत्वात्, पृथिवीत्ववद्गन्धवद्विशेष्यकपृथिवीत्वप्रकारकज्ञानत्वस्य हेतुत्वात् न पक्षतावच्छेदकसाध्यहेतूनामैक्यापत्तिरिति बोध्यम्। दृष्टान्तं तु–पृथिवीत्वप्रमात्वेन निर्णीतज्ञानान्तरं ग्राह्यमिति॥ तथा चैतादृशस्य 'गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात्मकस्य हेतोस्तत्र सत्त्वात्प्रामाण्यं तेनानुमेयमिति भावः॥ अनयैव दिशाऽन्यत्राऽपि प्रामाण्यमनुमेयमित्याह–**एवमिति**। उक्तरीत्येत्यर्थः। अनुमानमाह–**इदमिति**। इदं जलत्वप्रकारकं ज्ञानं तद्व्यक्तित्वेन पक्षः। प्रमात्वं–जलत्ववति जलत्वप्रकारकत्वं साध्यम्। स्नेहवद्विशेष्यकजलत्वप्रकारकज्ञानत्वादिति, यद्वा–स्वाश्रयनिरूपितस्नेहवन्निष्ठविशेष्यताकजलत्वनिष्ठप्रकारताकत्वसम्बन्धेन ज्ञानत्ववत्त्वादिति हेतुः। दृष्टान्तं–जलत्वप्रमात्वेन निर्णीतज्ञानान्तरं ग्राह्यम्॥ एवं विशिष्य सर्वत्र ज्ञानेषु प्रमात्वम् अनुमेयमेवेति बोध्यम्। स्वरूपाऽसिद्धिं शंकते–**न च हेतुज्ञानमिति**। गन्धवति पृथि-

तोग्राह्यत्वात् । तत्र गन्धग्रहेण गन्धवद्विशेष्यकत्वस्यापि सुग्रहत्वात् । तत्प्रकारकत्वावच्छिन्नतद्वद्विशेष्यकत्वं परं न गृह्यते संश(१)यानुरोधात् । ननु सर्वेषां ज्ञानानां

वीत्वप्रकारकज्ञानत्वात्मकादिहेतोः पक्षे निर्णयः, कथं=केन प्रयोजकेन प्राक् जातः? न केनाऽपि, तथा च पक्षवृत्तितया हेतुनिर्णयाऽभावात् निरुक्तानुमितिर्नोत्पद्येतेत्याशंकितुरभिप्रायः ॥ समाधत्ते-**पृथिवीत्वप्रकारकत्वस्येति**। व्यवसायस्य पृथिवीत्वप्रकारकत्वेन अनुव्यवसायज्ञाने व्यवसायस्येव तन्निष्ठपृथिवीत्वप्रकारकज्ञानत्वस्यापि विषयत्वात् तस्य स्वतोग्राह्यत्वात्=अनुव्यवसायवेद्यत्वादित्यर्थः। तथा च अनुव्यवसायेन निर्णीतस्य हेतोः प्रमात्वसाधकत्वं निराबाधमिति भावः।। ननु-तथापि गन्धवद्विशेष्यकत्वस्य पूर्वमगृहीतत्वात् विशेषणाऽसिद्धिरित्यत आह-**तत्रेति** । तत्र=पुरोवृत्तिपृथिवीपदार्थे, गन्धग्रहेण=गन्धप्रत्यक्षे सति गन्धप्रत्यक्षस्येव, तन्निष्ठगन्धवद्विशेष्यकत्वस्यापि, सुग्रहत्वात्=अनुव्यवसायविषयत्वात्, तथा च पक्षे हेतुनिर्णयात् न प्रमात्वानुमित्यनुपपत्तिरिति भावः ॥ ननु गन्धवति पृथिवीत्वप्रकारकत्वस्येव तुल्ययुक्त्या 'पथिवीत्ववति पृथिवीत्वप्रकारकत्वात्मकप्रमात्वस्यापि अनुव्यवसायविषयत्वे बाधकाऽभावात् प्रमात्वस्यानुमेयत्वं निर्बीजमेवेत्याशंकायामाह-**तत्प्रकारकत्वावच्छिन्नेति** । पृथिवीत्वप्रकारकत्वविशिष्टपृथिवीत्ववद्विशेष्यकत्वाद्यात्मकप्रमात्वं ,-पृथिवीत्ववद्विशेष्यकत्वविशिष्टपृथिवीत्वप्रकारकत्वात्मकप्रमात्वमिति यावत् ॥ **परं न गृह्यते** इति । परं-किन्तु, न गृह्यते=अनुव्यवसायेन न विषयीक्रियते इत्यर्थः। ननु प्रमात्वमेव वस्तुतः अवच्छेद्यावच्छेदकभावापन्नतद्वद्विशेष्यकत्वतत्प्रकारकत्वोभयं स्वीकर्तव्यं, किं निरुक्तविशिष्टप्रमात्वेन, तथा च विशकलितयोर्विशेषणविशेष्ययोः प्रमात्वरूपयोः स्वतोग्रहसंभवात् तवानुमानग्राह्यत्वकल्पनं निरर्थकमेवेत्यत उक्तम्-**संशयानुरोधादिति** । प्राथमिकदूरदेशीयजलादिज्ञानाऽनन्तरं सर्वमतसिद्धो यः 'जलत्ववद्विशेष्यकत्वविशिष्टजलत्वप्रकारकं जलज्ञानं नवे'ति विशिष्टधर्मप्रकारकसंशयः, तस्य विशिष्टप्रमात्वाऽऽत्मकधर्मं विना प्रकाराऽप्रसिद्धिनिबन्धनाऽप्रसिद्ध्यापत्त्या अप्रसिद्धिरेव स्यात् , अतः तद्वद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वमेव प्रमात्वं स्वीकर्तव्यम् , तस्य चानुव्यवसायविषयत्वे तन्निश्चयात् संशयो नोत्पद्येत, इति सर्वमतसिद्धसंशयाऽन्यथानुपपत्त्या निरुक्ततद्वद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वमेव प्रमात्वं स्वीकार्यं, तच्च न प्रथमानुव्यवसायवेद्यमिति तद्ग्रहार्थम् अनुमानमावश्यकमिति भावः ॥ ननु-प्रथमानुव्यवसायस्य धर्मितावच्छेदकसामानाधिकरण्येन प्रामाण्यावगाहित्वस्वीकारेण तस्य धर्मितावच्छेदकावच्छेदेन प्रामाण्यावगाहि-तत्सामानाधिकरण्येन प्रामाण्याऽभावावगाहिसंशयविरोधित्वाऽभावात् न प्रामाण्यस्य स्वतोग्राह्यत्वेऽपि संशयाऽनुपपत्तिरिति चेन्न । प्रथमानुव्यवसायसामान्यस्य सामानाधिकरण्येन प्रामाण्यावगाहित्वे तदुत्तरं जायमानसंशयसामान्यस्य सामानाधिकरण्येन च प्रामाण्याऽभावावगाहित्वे च प्रमाणाऽभावादिति ध्येयम् ॥ अथ-प्रामाण्यस्यानुमेयत्ववत् द्वितीयानुव्यवसायवेद्यत्वमपि संभवति, तथाहि-'जलं जानामी'तिप्राथमिकानुव्यवसायोत्तरं प्रवृत्तौ सत्यां जललाभे सति 'जलमेव समवायेन जलत्वेन जानामी'तिद्वितीयाऽनुव्यवसायः जलत्वसमवायज्ञानानामुपस्थितिवशाज् जायते, तत्र तन्मतसिद्धप्रामाण्यमपि विषय इत्यपि बोध्यम् । तत्र उक्तलिंगेन प्राथमिकानुव्यवसायोत्तरकालीनप्रमात्वानुमित्युत्तरं 'जलत्वादिप्रकारकप्रमावानहमि'त्यनुव्यवसायो जायते, तादृशद्वितीयानुव्यवसायविषयत्वमेव तन्मतसिद्धप्रमात्वस्य वाच्यमित्यपि ध्येयम् ॥ प्राभाकरः शंकते-**ननु सर्वेषामिति**। प्राभाकरमते ज्ञानमात्रस्य यथार्थत्वम् , सर्वस्य ज्ञानस्य अर्थाऽव्य-

(१) **संशयानुरोधादिति**। एतदनन्तरम्-"न च प्रमात्वस्य प्रसिद्धिः कथमिति वाच्यम्, ज्ञानप्रमात्वस्य स्वतोग्राह्यत्वात् । न च प्रकारभेदेन प्रामाण्यभेदाद् घटत्वप्रकारकत्वादेः कथं प्रसिद्धि-

**यथार्थत्वात्प्रमालक्षणे तद्वद्विशेष्यकत्वं विशेषणं व्यर्थम्, न च रङ्गे रजतार्थिनः प्रवृ-**

भिचारित्वेन तन्नियमात्। यस्यां संविदि योऽर्थोऽवभासते स तस्या विषयो नाऽन्यः, तस्य तत्राऽनवभासात्, अनवभासमानस्य विषयत्वेऽतिप्रसंगात्, तेन अन्यस्य अन्यथाभानं प्रतीतिविरुद्धमेव। 'शुक्ताविदं रजत'मित्यत्र ज्ञानद्वयमेव, प्रत्यक्षात्मकं स्मरणात्मकं च, तत्र इदमांश एव प्रत्यक्षप्रतीतिविषयो न तु रजतांशः, तस्य चक्षुराद्यसन्निकर्षात्, किन्तु रजतांशस्य स्मृतित्वमेव। तथा 'पीतः शंख'इतिज्ञानं यथार्थमेव,तत्र नयनवर्तिपित्तद्रव्यसंयुक्ता नायनरश्मयः शङ्खादिभिः सह दूरं गत्वा संयुज्यन्ते, तद्गतपीतिमा स्वेनैव गृह्यते, तथा दोषवच्छंखमात्रं च गृह्यते, परस्परसाकांक्षयोस्तयोर्विद्यमानोऽप्यसम्बन्धो न बुद्धयते, ततश्च तत्र असम्बन्धाऽग्रहात् विशिष्टधीव्यवहारः, प्रवृत्तिरपि तत एवेति। **एवं**–जपाकुसुमप्रभाऽभिभूतत्वात् जपाकुसुमसमीपवर्तिस्फटिकमणिरपि 'रक्त'इति गृह्यते, तत्रापि 'रक्त'इतिज्ञानं सत्यमेव। **एवं**–मरुमरीचिकायां जलज्ञानमपि यथार्थम्, पञ्चीकरणप्रक्रियया तेजःपृथिव्योर्जलस्य च विद्यमानत्वात्, तत्र तेजःपराभवात्मकेन्द्रियदोषेण तेजःपृथिव्योरग्रहणं. यद्वा तत्र जलांशज्ञानं स्मरणमेवेति। **एवं**–द्विचन्द्रज्ञानेऽपि अंगुल्यादिकृतनेत्रनिरोधनेत्ररोगादिभिर्नायनरश्मिगतिर्द्विधा भवतीति, एका स्वाभाविकी ऋजुः, द्वितीया तु वक्रीभूता, तत्र स्वाभाविकी स्वदेशविशिष्टचन्द्रं गृह्णाति। द्वितीया तु चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णातीति, न च चन्द्रसमीपदेशे चन्द्राऽभावात् कथं तद्ग्रहणमिति वाच्यम्। चन्द्राधिकरणदेशतत्समीपदेशयोरन्तरालाऽग्रहणेन तथाप्रत्ययात्, सामग्रीद्वयभेदेन 'चन्द्रौ द्वा'वितिप्रतीतिः। सामग्रीद्वयस्य पारमार्थिकत्वात् चन्द्रद्वयज्ञानमपि पारमार्थिकं, तत्र प्रविभक्तनायनरश्मिभ्यां एकस्मिन् चन्द्रे द्वित्वं जन्यते, द्वित्वस्य चन्द्रमसश्चाऽसम्बन्धग्रहात् 'द्वौ चन्द्रा'विति व्यवहारः॥ **एवम्**–उल्मुकचक्रादौ चक्राकारज्ञानमपि यथार्थमेव, तत्राऽतिशैघ्र्यात् तदन्तरालाऽग्रहणात् वर्तुलाकारप्रतीतिर्भवति, प्रतीतिविषयस्तु—तत्तद्देशसंयुक्ततत्तद्वस्तुविशेष इति॥ **एवं**-दर्पणे निजाननज्ञानं यथार्थमेव, तत्र दर्पणस्य स्वच्छद्रव्यत्वात् सविशेषं दर्पणं गृहीत्वा दर्पणतलप्रतिहतगतयो नायनरश्मयः परावृत्य निजाननं गृह्णन्तीति, तत्र दर्पणस्य मुखस्य च भेदाऽग्रहात् दर्पणे मुखव्यवहार इति। **एवं**-दिग्भ्रमोऽपि यथार्थ एव, वस्तुतो दिश एकत्वात् सर्वत्र सर्वदिशां विद्यमानत्वात्, अन्याऽन्यवस्त्वपेक्षितदिशोः भेदाग्रहात् पूर्वादिदिशः पश्चिमादिदिक्त्वेन ज्ञानं व्यवहारश्चेति। **एवं**–स्वप्नस्तु स्मृतिरेव यथार्था, नह्यननुभूते तदुदयः, दोषाच्च तत्ताप्रमोषस्तत्र बोध्य इति। **एवं**-संशयोऽपि–ज्ञानद्वयं, स्थाणुपुरुषगोचरं प्रमुष्टतत्ताकं पुरःस्थितोर्ध्ववस्तुदर्शनोद्बोधकजन्यं स्मरणद्वयमेव॥ तथा च तत्र सर्वत्र भ्रमत्वविपर्ययत्वादिव्यवहारस्तु विषयव्यवहारबाधाद्भवतीति। तस्मात् सर्वेषां ज्ञानानां **यथार्थत्वात्**=तद्वन्निष्ठविशेष्यताकत्वात्, यथावस्थितव्यवहारानुगुणज्ञानत्वादिति यावत्। प्रमालक्षणे'तद्वद्विशेष्यकत्वमि'ति विशेषणं **व्यर्थम्**=अतिव्याप्त्यवारकं, अलक्ष्यस्यैव अलीकत्वादिति भावः। तद्वद्विशेष्यकत्वस्य तत्प्रकारकज्ञानत्वव्याप्यत्वात् सर्वत्र तत्प्रकारकज्ञानत्वात्मकप्रमात्वस्वीकारेणैव सामञ्जस्ये तद्वद्विशेष्यकत्वं नोपादेयमेव, तच्च स्वतोग्राह्यं न्यायमतेऽपि भवतीति प्रमात्वं स्वतोग्राह्यमेव स्वीक्रियतामिति हृदयम्॥ नैयायिकः शंकते–**न च रङ्गे इति**। सर्वज्ञानानां याथार्थ्ये **रजतार्थिनः** पुरुषस्य, **भ्रमजन्या**=इदन्त्वेन रङ्गविशेष्यकरजतत्वप्रकारकज्ञानजन्या, **रङ्गे** रङ्गविशेष्यकरजतत्वप्रकारिका **प्रवृत्तिर्न** उत्पद्येत,

रितिवाच्यम्, घटत्वप्रकारकत्वस्य स्वविशेष्यकत्वस्य च स्वतोग्राह्यत्वात् घटस्य च पूर्वमुपस्थितत्वात् घटविशेष्यकं घटत्वप्रकारकमिति ज्ञाने प्रामाण्यस्य बाधकाभावः, व्यवसायपरं तु प्रामाण्यं न गृह्यते

**त्तिर्भ्रमजन्या न स्यात्,-तव मते भ्रमस्याभावादिति वाच्यम्, तत्र हि दोषाधीनस्य पुरोवर्तिनि स्वतन्त्रोपस्थितरजतभेदाग्रहस्य हेतुत्वात्। सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात्तदेव कारणम्, अस्तु वा तत्रापि रजतभेदाग्रह एव कारणमिति। न**

विशेष्यतासम्बन्धेन रजतत्वप्रकारकप्रवृत्तिं प्रति विशेष्यतासम्बन्धेन रजतत्वप्रकारकेच्छायाः कारणत्वात्, तादृशेच्छां प्रति च तेन सम्बन्धेन रजतत्वप्रकारकज्ञानस्य हेतुत्वनियमात्, **तव मते**=मीमांसकमते-तत्र रङ्गविशेष्यकरजतत्वप्रकारकज्ञानाऽभावेन(भ्रमानङ्गीकारात्)इच्छानुत्पत्तौ प्रवृत्त्यनुत्पत्तिरिति भावः॥ विसंवादिप्रवृत्तौ संवादिप्रवृत्तौ च कारणभेदं प्रकल्प्य समाधत्ते-**तत्रेति**। इदन्त्वेन रङ्गगोचररजतार्थिरजतत्वप्रकारकप्रवृत्तावित्यर्थः। विसंवादिप्रवृत्तिं प्रति दोषाधीन रजतभेदाऽग्रहः कारणम्, संवादिप्रवृत्तिं प्रति तु रजतत्ववद्विशेष्यकरजतत्वप्रकारकज्ञानमेव कारणमित्यर्थः॥ रङ्गे रजतभेदप्रत्यक्षे सति भेदाऽग्रहाऽसत्त्वे तु रजतार्थिनः प्रवृत्तिर्न भवतीत्यत उक्तं-**दोषाधीनस्येति**। भेदग्रहप्रतिबन्धकचाकचक्यादिदोषप्रयोज्यस्य तादृशभेदाऽग्रहस्येत्यर्थः। तथा च दोषात्मकप्रतिबन्धकसत्त्वेन तदभावरूपकारणाऽभावेन भेदप्रकारकप्रत्यक्षाऽनुत्पत्तेः भेदाऽग्रहसत्त्वेन विसंवादिप्रवृत्त्युपपत्तिरिति भावः॥ **पुरोवर्त्तिनीति**। इदन्त्वेन ज्ञायमानलिङ्गात्मकपूर्ववर्तिनि शुक्तावित्यर्थः। सत्यरजते चाकचक्याधीनस्य रजतभेदाऽग्रहस्य सत्त्वेन विसंवादिप्रवृत्त्यापत्तिवारणाय उक्तं-रजते-**स्वतन्त्रोपस्थितत्वमिति**। पुरोवृत्त्यनधीनोपस्थितिविषयत्वमित्यर्थः। पुरोवृत्तिनिष्ठविषयत्वाऽनिरूपितवर्तमानग्रहविषयताश्रयत्वमिति यावत्। सत्यरजतस्थले पुरोवृत्तिरजतनिष्ठविषयतानिरूपितवर्त्तमानग्रहविषयताश्रयरजतभेदाऽग्रहस्य सत्त्वेन कारणाऽभावेन न तत्र विसंवादिप्रवृत्तिरपीति भावः। **तथा** च-रजताऽवृत्तिविशेष्यतासम्बन्धेन रजतत्वप्रकारकप्रवृत्तिं प्रति एककालावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन पुरोवृत्तिनिष्ठविषयत्वाऽनिरूपितविषयताशालिपुरोवृत्त्युपस्थितिरजतोपस्थित्युभयविशिष्टरजतभेदप्रकारकज्ञानत्वावच्छिन्नविशेष्यता सम्बन्धावच्छिन्नप्रतियोगिताकाऽभावत्वावच्छिन्नस्य दैशिकविशेषणतासम्बन्धेन हेतुत्वमिति कार्यकारणभावः फलितः॥ संवादिप्रवृत्तिकारणमाह-**सत्यरजतस्थले त्विति**। रजतगोचररजतार्थिप्रवृत्तिं प्रति तु इत्यर्थः॥ **विशिष्टज्ञानस्य सत्त्वादिति**। पुरोवृत्तिविशेष्यकतादात्म्यसम्बन्धेन रजतप्रकारकज्ञानस्य, समवायेन रजतत्वप्रकारकज्ञानस्य वा, प्रसिद्धत्वादित्यर्थः॥ **तदेवेति**। तादृशविशिष्टज्ञानमेव कारणम्। तथा च-रजतनिष्ठविशेष्यतासम्बन्धेन रजतत्वप्रकारकप्रवृत्तिं प्रति विशेष्यतासम्बन्धेन लघुभूतरजतत्वप्रकारकज्ञानत्वेन हेतुत्वमिति भावः॥ ननु तर्हि कार्यकारणभावद्वयप्रयुक्तगौरवमित्याशंकायाम् तदुभयसाधारणैककार्यकारणभावमाह-**अस्तु वेति**। 'वा'कारः कल्पान्तरद्योतकः। **तत्रापि**=संवादिप्रवृत्तावपि। **रजतभेदाऽग्रह एव कारण-**

तत्र संशयसामग्रीसत्त्वे संशयस्यैवोपपत्तेः, किं चाभ्यासदशायां तृतीयानुव्यवसायादिना प्रामाण्यस्य स्वतएव ग्रहसम्भवात् प्रथमानुव्यवसायपरं न तद्ग्राहकमिति कल्प्यते संशयानुरोधात्। अथ प्रामाण्यानुमितौ प्रामाण्यग्रहे न तस्य विषयनिश्चयरूपत्वार्थं तत्र प्रमाण्यग्रहो वाच्यः सोऽप्यनुमित्यन्तरेणेति फलमुखी कारणमुखी वाऽनवस्थेति चेद्-न,-अगृहीताप्रामाण्यग्राहकस्यैव निश्चयरूपत्वात्, यत्र च प्रामाण्यसंशयस्तत्रैव प्रामाण्यानुमितेरपेक्षा यावदाशङ्कं प्रामाण्यानुमितिरिष्यत एव, सर्वत्र तु न संशयः क्वचित्कोट्यनुपस्थितेः क्वचिद्विशेषदर्शनादितः क्वचिद्विषयान्तरसंचारादिति संक्षेपः।" इति विद्याविलासमुद्रिते महामहोपाध्यायलक्ष्मणशास्त्रिद्राविडसंशोधितेऽधिकः पाठः स च दिनकरेणाऽव्याख्यातत्वात्प्रक्षिप्त इव प्रतिभाति॥

चान्यथाख्यातिः सम्भवति, रजतप्रत्यक्षकारणस्य रजतेन्द्रियसन्निकर्षस्याभावाद्रङ्गे रज-

मिति=धर्मधर्म्युपस्थितिद्वयविशिष्टभेदाऽग्रह एव कारणमित्यर्थः। एवकारेण-विशिष्टज्ञानहेतुता-व्यवच्छेदः॥ तथा च-"विशेष्यतासम्बन्धेन रजतत्वप्रकारकप्रवृत्तिसामान्यं प्रति एककालावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन इदन्त्वावच्छिन्नोपस्थितिरजतोपस्थितिद्वयविशिष्टरजतभेदप्रकारकज्ञानत्वावच्छिन्नविशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाऽभावत्वावच्छिन्नस्य दैशिकविशेषणतया हेतुत्वम्। अतो न कार्यकारणभावद्वयकल्पनागौरवमिति भावः॥ ननु-प्रवृत्तिसामान्ये तादृशभेदाऽग्रहस्य कारणत्वे सत्यरजतस्थले रजतभेदाऽग्रहस्य सत्त्वेन तत्र 'नेदं रजतमि'तिन्यायमतसिद्धभ्रमकाले तत्स्थानाभिषिक्त-इदन्त्वावच्छिन्नविषयकोपस्थितिरजतभेदशब्दोपस्थितिद्वयकालेऽपि प्रवृत्त्यापत्तिः, अन्यथाख्यात्यनङ्गीकारेण रजते निरुक्तभेदाऽग्रहसत्त्वादिति चेन्न। 'रजतभेदाग्रह' इति वाक्यघटक-'रजतभेदग्रह'शब्दस्य रजतभेदस्य ग्रहो यस्मात्='रजताऽभेदग्रहाऽभावादिति व्युत्पत्त्या रजताऽभेदग्रहाभावः प्रवृत्तिप्रतिबन्धकः, तदभावः रजताभेदग्रहाऽभावाभावः-रजतभेदग्रहाऽभावरूपः प्रवृत्तिजनक इति लभ्यते, तथा च 'विशेष्यतासम्बन्धेन प्रवृत्तिसामान्यं प्रति एककालावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन रजतोपस्थितिविशिष्टस्य विशेष्यतासम्बन्धावच्छिन्नरजताऽभेदग्रहत्वावच्छिन्नप्रतियोगिताकाभावस्य दैशिकविशेषणतासम्बन्धेन प्रतिबन्धकत्वम्, एवं-'विशेष्यतासम्बन्धेन प्रवृत्तिसामान्यं प्रति एककालावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन धर्मधर्म्युपस्थितिद्वयविशिष्टस्य दैशिकविशेषणतासम्बन्धावच्छिन्नतादृशप्रतिबन्धकीभूताऽभावत्वावच्छिन्नप्रतियोगिताकाऽभावस्य दैशिकविशेषणतासम्बन्धेन हेतुत्वमिति॥ एवं च 'नेदं रजतमि'त्यत्र निरुक्तप्रतिबन्धकसत्त्वात् न प्रवृत्त्यापत्तिरिति॥ इदन्त्वेन रंगविषयक 'इदं रजत'मित्यत्र तादृशोपस्थितिद्वयकाले रङ्गे प्रवृत्त्युपपत्तये प्रतिबन्धकीभूताऽभावं रजतभेदोपस्थितिवैशिष्ट्यनिवेशः॥ न च-'पटो न रजतमित्युपस्थिति-इदन्त्वेन रङ्गगोचरइदं रजतमित्युपस्थितिद्वय-एतत्त्रितयकाले रङ्गे रजतार्थिप्रवृत्तिर्न स्यात, निरुक्तोपस्थितिविशिष्टप्रतिबन्धकीभूताऽभावसत्त्वादिति वाच्यम्॥ रङ्गविशेष्यकरजतभेदग्रहप्रतिबन्धकदोषस्य उत्तेजकत्वस्वीकारात्, प्रकृते च रङ्गे रजतभेदसत्त्वेऽपि चक्षुःसन्निकर्षसत्त्वेऽपि च रजतभेदप्रत्यक्षाऽनुत्पत्त्या तत्र तत्प्रतिबन्धकदोषसत्त्वस्याऽऽवश्यकत्वेन तादृशोत्तेजकाऽभावविशिष्टप्रतिबन्धकाऽसत्त्वान्न तत्र तादृशप्रवृत्त्यनुपपत्तिरिति। एवं च-निरुक्तप्रतिबन्धकरजतभेदोपस्थितिवैशिष्ट्यं न निवेशनीयम्। रजतभेदोपस्थितिशून्यकालीनरङ्गविषयकेदं रजतमितिभ्रमस्थानाभिषिक्तज्ञानद्वयकाले निरुक्तप्रतिबन्धकसत्त्वेऽपि तस्य तादृशभेदग्रहप्रतिबन्धकदोषरूपोत्तेजकविशिष्टत्वेन उत्तेजकाऽभावविशिष्टप्रतिबन्धकाऽसत्त्वात्॥ इत्थं च यदा 'रङ्गे-नेदं रजतमितिज्ञानाऽभावः,-इदन्त्वेन रङ्गोपस्थित्यभावः रजतोपस्थित्यभावो वा, तदा रङ्गे निरुक्तप्रतिबन्धकाऽसत्त्वात् प्रवृत्तिवारणाय कारणीभूतनिरुक्ताऽभावे धर्म्युपस्थितिधर्मोपस्थितिद्वयवैशिष्ट्यमपि निवेशनीयम्-इति ध्येयम्॥ ननु-भ्रमप्रमासाधारणस्थले प्रवृत्तिसामान्ये निरुक्तभेदाऽग्रहत्वेन हेतुत्वाऽपेक्षया लाघवात् इष्टतावच्छेदकप्रकारकज्ञानत्वेन हेतुत्वमस्तु-इत्याशंकायां तत्र प्रथमं भ्रमं खण्डयति-नचेति। अन्यथाख्यातिः=न यथाख्यातिः-अन्यथाख्यातिः=अतद्धर्मवत्तया प्रतीतिः, भ्रम इति यावत्, स च नैव सम्भवति=न प्रामाणिक इत्यर्थः॥ तत्र हेतुमाह-रजतेति। रजतत्वप्रकारकप्रत्यक्षप्रयोजकस्य रजतघटितचक्षुःसंयुक्तसमवायस्य, अभावात्=रजतत्वेऽसत्त्वात्। तत्र रजतस्यैवाऽभावादिति भावः। तथा च सन्निकर्षाऽभावेन रङ्गे रजतत्वप्रकारकप्रत्यक्षभ्रमाऽनुत्पत्त्या इष्टतावच्छेदकरजतत्वप्रकारकज्ञानाऽभावात् कारणाऽभावेऽपि प्रवृत्तिरूपकार्यसत्त्वात्मकव्यतिरेकव्यभिचारात् न इष्टतावच्छेदकप्रकारकज्ञानस्य कार-

**तद्बुद्धेरनुपपत्तेरिति चेद्,–न, सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वादन्यत्रापि तत्कल्पनात्। न च संवादिप्रवृत्तौ तत्कारणं, विसंवादिप्रवृत्तौ च भेदाग्रहः कारणमिति वाच्यम्, लाघवेन प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात्। इत्थं**

णत्वम्॥ अन्यथाख्यातिरपि तत्र नैव सम्भवति, एवं सर्वत्र नैयायिकाऽभिमतभ्रमस्थले विषयसम्बन्धाऽभावात् अन्यथाख्यातिर्नैवोत्पद्यते इति हृदयम्॥ **यद्यपि**–रङ्गं रजततया जानामी'त्यनुव्यवसाय एव अन्यथाख्यातौ प्रमाणं, तथापि परैः (मीमांसकैः) तादृशानुव्यवसायस्य रजतत्वप्रकारकत्ववद्भेदाऽग्रहकालीनतादृशप्रकारकत्वोपस्थितिविशिष्टरङ्गविषयकज्ञानोपस्थितिरूपत्वस्यैव स्वीकरणीयतया, तदसाधकत्वादिति ध्येयम्॥ **अथानुमानेन** अन्यथाख्यातिं साधयितुं समाधानमुखेन भूमिकामारचयति–**सत्यरजतस्थले** इति। रजतत्वप्रकारकरजतविशेष्यकप्रवृत्तिं प्रति, रजते विशेष्यतासम्बन्धेन रजतत्वप्रकारकप्रवृत्तिं प्रति वेत्यर्थः। **विशिष्टज्ञानस्य**=इदन्त्वेन रजतविशेष्यकरजतत्वप्रकारकज्ञानस्य, रजतनिष्ठविशेष्यतासम्बन्धेन रजतत्वप्रकारकज्ञानस्य वा, **हेतुतायाः**=लघुधर्मावच्छिन्नकारणतायाः, अन्वयव्यतिरेकाभ्याम् उभयमतेऽपि **क्लृप्तत्वात्**=प्रत्यक्षप्रमाणसिद्धत्वात्। **अन्यत्राऽपि**=रङ्गविशेष्यकरजतत्वप्रकारकप्रवृत्तिं प्रत्यपि, रङ्गनिष्ठविशेष्यतासम्बन्धेन रजतत्वप्रकारकप्रवृत्तिं प्रत्यपि वा, **तत्कल्पनात्**=रङ्गविशेष्यकरजतत्वप्रकारकज्ञानहेतुत्वस्य, रङ्गनिष्ठविशेष्यतासम्बन्धेन रजतत्वप्रकारकज्ञानहेतुत्वस्य वा,–अनुमानात्। तथाहि–'विसंवादिप्रवृत्तिः,–पुरोवृत्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानजन्या, पुरोवृत्तिनिष्ठविशेष्यतासम्बन्धेन इष्टतावच्छेदकप्रकारकज्ञानजन्या वा,–प्रवृत्तित्वात्,–संवादिप्रवृत्तिवदि'त्यनुमानेन विसंवादिप्रवृत्तिहेतुतया अन्यथाख्यातिसिद्धिः तत्र ज्ञानलक्षणया रजतत्वस्य भानादिति भावः॥ ननु 'प्रवृत्तित्व'हेतुरसाधकः, सन्दिग्धव्यभिचारित्वादित्याशंकते–**न च संवादिप्रवृत्ताविति**। इष्टे रजते विशेष्यतासम्बन्धेन इष्टतावच्छेदकप्रकारकप्रवृत्तौ, **तत्**=इष्टनिष्ठविशेष्यतासम्बन्धेन इष्टतावच्छेदकप्रकारकज्ञानं( विशिष्टज्ञानं )कारणम्, लघुधर्मावच्छिन्ननियतपूर्ववर्तितया उभयमतसिद्धत्वात्। अथ च **विसंवादिप्रवृत्तौ**=विशेष्यतासम्बन्धेन इष्टरजतभिन्नविशेष्यकेष्टतावच्छेदकरजतत्वादिप्रकारकप्रवृत्तौ च, **भेदाऽग्रहः**=रजतादिभेदाऽग्रह एव कारणमस्तु, तथा च इष्टनिष्ठविशेष्यतासम्बन्धेन इष्टतावच्छेदकप्रकारकज्ञानं संवादिप्रवृत्तिनियतपूर्ववर्तित्वेन उभयमतसिद्धं, इष्टभिन्नपुरोवृत्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानन्तु विसंवादिप्रवृत्तिनियतपूर्ववर्तित्वेन न उभयमतसिद्धं,–मीमांसकैरन्यथाख्यात्यनभ्युपगमात्। एवं च सति एतन्मतद्वयेन प्रयुक्त,–'संवादिप्रवृत्तौ तत्कारणम्, विसंवादिप्रवृत्तौ च भेदाऽग्रहः कारणम्' इति वाक्यश्रवणेन मध्यस्थस्य पक्षे विसंवादिप्रवृत्तौ साध्यसन्देहजननात् हेतावपि तदधीनव्यभिचारसंशयस्याऽनिवार्यतया व्याप्तिनिश्चयाऽसम्भवेन हेतोरसाधकत्वमिति भावः॥ **ननु**-ईदृशव्यभिचारसन्देहस्य पक्षे साध्यसन्देहाधीनत्वेन पक्षीयव्यभिचारसंशयरूपतया व्याप्तिनिर्णयाऽप्रतिबन्धकत्वेन न असाधकत्वं हेतोरिति चेन्न। व्यभिचाररूपैककोटिभानप्रतिबन्धकाऽनुकूलतर्कविरहेण व्यभिचारशंकापरम्पराया एव जायमानत्वात् तादृशानुकूलतर्कविरहविशिष्टव्यभिचारसंशयसामग्रीरूपप्रतिबन्धकसत्त्वेन व्याप्तिनिश्चयाऽसंभवादिति ध्येयम्॥ समाधत्ते–**लाघवेनेति**। संवादिविसंवादिप्रवृत्तिभेदेन कार्यकारणभावद्वयकल्पनाऽपेक्षया 'एककार्यकारणभावकल्पने लाघवमि'ति लाघवज्ञानेन, एवं गुरुधर्मेण एककारणत्वकल्पनाऽपेक्षया लघुधर्मेणैककारणत्वकल्पने लाघवमि'ति लाघवज्ञानेन च,–**प्रवृत्तिमात्रे**=प्रवृत्तिसामान्ये, तस्य=विशिष्टज्ञानस्य(इदन्त्वेन रजतविशेष्यकरजतत्वप्रकारकज्ञानस्य, रजतनिष्ठविशेष्यतासम्बन्धेन रजतत्वप्रकारकज्ञानस्य वा ) हेतुत्वकल्पनात्=कारणतासाधकानुमानस्य

च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न क्षतिः, फलमुखगौरवस्यादोषत्वात् । किञ्च यत्र रङ्गरजतयोरिमे रजते रङ्गे वेति ज्ञानं जातं तत्र न कारणबाधोऽपि । अपि च यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र

---

निर्दुष्टत्वादित्यर्थः ॥ तथा च एतादृशलाघवज्ञानेन प्रवृत्तिसामान्ये विशिष्टज्ञानत्वेन कारणत्वसिद्धौ ईदृशकार्यकारणभावग्रहात्मकाऽनुकूलतर्कस्य जागरूकत्वात् अनुकूलतर्कविरहविशिष्टव्यभिचारसंशयसामग्रीरूपप्रतिबन्धकविरहेण व्याप्तिनिश्चयजननात् 'प्रवृत्तित्वा'त्मकहेतोः साधकताया निर्विवादतया उक्तानुमानात् विसंवादिप्रवृत्त्यात्मकपक्षेऽपि विशिष्टज्ञानजन्यत्वसिद्धिर्निराबाधेति भावः ॥ रजतांशेऽसन्निकर्षात् न अन्यथाख्यातिः संभवतीति प्राभाकरोक्तं दूषणमुद्धरति–इत्थं चेति–उक्तानुमानात् विसंवादिप्रवृत्तावपि विशिष्टज्ञानजन्यत्वसिद्धौ चेत्यर्थः ॥ **रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेनेति** । रङ्गविशेष्यकरजतत्वप्रकारकप्रवृत्तिप्रयोजकस्य रङ्गविशेष्यकरजतत्वप्रकारकज्ञानस्य निर्वाहायेत्यर्थः । **ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपीति** । ज्ञानलक्षणायाः प्रत्यासत्तित्वकल्पनायाः गौरवे सत्यपि, **न क्षतिः**=न प्रवृत्तित्वेन विशिष्टज्ञानत्वेन एककार्यकारणभावग्रहाऽनुपपत्तिप्रसक्तिरित्यर्थः ॥ तत्र हेतुमाह–**फलमुखगौरवस्येति** । फलम् उक्तैकविधः कार्यकारणभावः, तन्मुखं=तत्प्रयोज्यं, यत् गौरवं=सामान्यलक्षणाप्रत्यासत्तिकल्पनागौरवज्ञानं तस्य, **अदोषत्वात्**=उक्तैककार्यकारणभावग्रहाऽविघटकत्वात् । तथा च निरुक्तानुमानात् कार्यकारणभावानुमितेः प्राक् ज्ञानलक्षणायाः प्रत्यासत्तित्वस्वीकाराऽप्रसक्त्या गौरवज्ञानाऽभावात् अनुमित्युत्पत्तौ विसंवादिप्रवृत्तौ सिद्धकारणताकविशिष्टज्ञानाऽन्यथाऽनुपपत्त्या ज्ञानलक्षणायाः प्रत्यासत्तित्वकल्पनाप्रयुक्तगौरवज्ञानस्य कार्यकारणभावग्रहोपजीवकत्वेन तदुपजीवकत्वस्य तदुत्तरकालीनोत्पत्त्याश्रयत्वेऽपि तादृशग्रहप्रतिबन्धकत्वाऽसंभवादिति भावः ॥ ननु उक्तफलमुखगौरवस्य उत्तरकालीनतया कार्यकारणभावग्रहाऽप्रतिबन्धकत्वेऽपि उत्पन्नकार्यकारणभावग्रहे अप्रामाण्यज्ञानसम्पादकत्वम् अव्याहतम्, तथा च अप्रामाण्यप्रमाऽऽस्कन्दितकारणजन्यानुमितेरपि अप्रमात्वेन, विशिष्टज्ञानस्य विसंवादिप्रवृत्तिकारणत्वेन प्रमितत्वाऽभावात् तत्र अन्यथाख्यातेः (विशिष्टज्ञानात्मकस्य) अनावश्यकता, इत्याशंकायां स्थलविशेषेऽन्यथाख्यातेरावश्यकतां प्रदर्शयति–**किञ्च यत्रेति**–यदा रङ्गरजताभ्यां चक्षुःसंयोगे सति 'इदन्त्वेन रङ्गरजतोभयविशेष्यकं रजतत्वप्रकारकं 'इमे रजते' इतिज्ञानं रङ्गांशे भ्रमात्मकं जातं, यद्वा इदन्त्वेन रंगरजतोभयविशेष्यकं रङ्गत्वप्रकारकं 'इमे रङ्गे' इति ज्ञानं रजतांशे भ्रमात्मकं जातम्, तत्र=तादृशसमूहालम्बनात्मकप्रत्यक्षे, **न कारणबाधोऽपि**=रजतत्वेन सह चक्षुःसंयुक्तसमवायात्मकलौकिकसन्निकर्षाऽसम्भवोऽपि न ॥ तथा च एतादृशलौकिकसन्निकर्षस्थले अलौकिकसन्निकर्षाऽकल्पनेन ज्ञानलक्षणायाः प्रत्यासत्तित्वकल्पनाप्रयुक्तगौरवप्रयोज्याऽनुमितिधर्मिकाऽप्रामाण्यज्ञानोत्पत्त्यप्रसक्त्या रङ्गांशे विसंवादिप्रवृत्तिहेतुतया अन्यथाख्यात्यभ्युपगमस्य आवश्यकत्वादिति भावः ॥ **ननु**–तत्तद्विशेष्ये तत्तद्विशिष्टबुद्धिं प्रति तत्तद्विशेषणे तत्तद्विशेष्यघटितसन्निकर्षो हेतुः, अन्यथा असन्निकृष्टस्यापि प्रत्यक्षाऽऽपत्तेः, तथा च कथं रजतघटितसंयुक्तसमवायेन रङ्गे रजतत्वग्रहः तथा च नाऽन्यथाख्यातिसंभवः, इत्यतः तत्साधनार्थं स्थलान्तरम् आह–**अपि चेति**–**यत्र**=यदा, तद्व्यक्तित्वेन रङ्गरजतोभयविशेष्यकं रङ्गांशे रजतत्वप्रकारकं रजतांशे रङ्गत्वप्रकारकं च 'इदं रजतम्' 'इदं रङ्गमि'तिसमूहालम्बनं ज्ञानं जातं, **तत्र**=तदा, मीमांसकस्य भेदाऽग्रहविशिष्टज्ञानद्वयस्योत्पत्तेः, तदुत्तरकालम्, **उभयत्र**=रङ्गव्यक्तौ रजतव्यक्तौ च, युग-

**युगपत्प्रवृत्तिनिवृत्ती स्यातां रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहे चान्यथाख्यातिभयात् त्वन्मते दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात्। किञ्चाऽनुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वह्निव्याप्यधूमवद्भेदाग्रहादनुमितिर्निराबाधा।**

**पत्**=एकक्षणे, **प्रवृत्तिनिवृत्ती स्याताम्**=एकैकस्मिन् प्रवृत्तिनिवृत्त्युभयोत्पत्त्यापत्तेरित्यर्थः॥ तत्र रंगे प्रवृत्तिकारणस्य रजतभेदाऽग्रहस्य, निवृत्तिकारणस्य च रङ्गभेदाऽग्रहस्य सत्त्वात, एवं रजते प्रवृत्तिकारणस्य रजतभेदाऽग्रहस्य, निवृत्तिकारणस्य च रङ्गभेदाऽग्रहस्य सत्त्वादिति भावः॥ अथ–'रङ्गरजतयोः–'इमे रजतरङ्गे'इत्यत्र रंगे रङ्गभेदग्रहः स्वीकर्तव्यः, तेन रङ्गभेदाऽग्रहाऽभावात् रंगे निवृत्तिर्नोत्पद्येत, रजते च रजतभेदग्रहः स्वीकर्तव्यः, तेन रजतभेदाऽग्रहाऽभावात् रजते प्रवृत्तिर्नोत्पद्येत, तथा च न युगपदेकत्र प्रवृत्तिनिवृत्त्यापत्तिरिति तु अन्यथाख्यातिमनङ्गीकर्तॄणां स्वीकर्तुम् अशक्यमेवेति दर्शयति–**रङ्गे** इत्यादिना **भयादि**त्यन्तेन। रंगभेदाऽभाववति रंगे रङ्गभेदज्ञानस्य भ्रमत्वात् रजतभेदाऽभाववति रजते रजतभेदज्ञानस्य च भ्रमत्वात् **अन्यथाख्याति**–(भ्रम)स्वीकारापत्तिभयेन रङ्गे रंगभेदग्रहस्य रजते रजतभेदग्रहस्य च स्वीकाराऽसंभवादित्यर्थः॥ तथा च तद्विपरीतः रंगे रंगभेदाऽग्रहः निवृत्तिकारणं, रजते रजतभेदाऽग्रहः प्रवृत्तिकारणं चाऽर्थात् स्वीकर्तव्यः, तव मतसिद्धत्वादिति भावः॥ तदेवं रङ्गे निवृत्तिकारणं, रजते प्रवृत्तिकारणं च प्रदर्श्य, रंगे प्रवृत्तिकारणसत्त्वं रजते निवृत्तिकारणसत्त्वं च प्रदर्शयितुमाह–**त्वन्मते दोषादेवेति**। प्राभाकरमते, रङ्गे रजतभेदग्रहप्रतिबन्धकात्, रजते रङ्गभेदग्रहप्रतिबन्धकाच्च वर्तुलत्वचाकचक्य–रजतसमभिव्याहारादिधर्मदर्शनात्मकदोषादेवेत्यर्थः॥ तादृशदोषात्मककारणसत्त्वादेवेति भावः॥ **रङ्गे रजतभेदाऽग्रहस्य**=रजतभेदप्रकारकग्रहनिष्ठविशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाऽभावस्य रङ्गविषयकप्रवृत्तिकारणस्य रङ्गवृत्तित्वेनाऽवश्यं स्वीकार्यत्वात्, एवं **रजते रंगभेदाऽग्रहस्य**=रंगभेदप्रकारकग्रहनिष्ठविशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाऽभावस्य रजतविषयकनिवृत्तिकारणस्य रजतवृत्तित्वेनाऽवश्यं स्वीकार्यत्वाच्चेत्यर्थः। तव मतसिद्धत्वादिति भावः। तथा चैककर्तृसामग्रीद्वयसत्त्वात प्रवृत्तिनिवृत्त्युभयोत्पत्त्यापत्तिः, परस्परसामग्र्याः फलप्रतिबन्धकत्वे तु एकैकस्याऽनुत्पत्तेरुभयाऽनुत्पत्तिप्रसङ्गः। तस्मात् भेदाऽग्रहस्य प्रवृत्तिनिवृत्तिकारणत्वं परित्यज्य प्रवृत्तौ इष्टतावच्छेदकप्रकारकज्ञानस्य, निवृत्तौ च अनिष्टतावच्छेदकप्रकारकज्ञानस्याऽन्यथाऽनुपपत्त्या हेतुत्वमङ्गीकृत्यैव प्राभाकरेण युगपत्प्रवृत्त्यापत्तिदोषो वारणीयः, तथा च रङ्गे इष्टतावच्छेदकरजतत्वप्रकारकज्ञानस्य भ्रमात्मकस्य सिद्धिर्निराबाधा, रजते च अनिष्टतावच्छेदकरङ्गत्वप्रकारकज्ञानस्य अन्यथाख्यात्यात्मकस्य सिद्धिर्निराबाधा इति भावः॥

ननु–नानाविधदोषाणामनुगतदोषत्वाऽभावेऽपि 'यथा यादृशदोषोत्तरं यादृशी अप्रमा प्रामाणिकी तत्तदप्रमां प्रति तत्तद्दोषत्वेन हेतुत्वांगीकारवत्' प्रकृतेऽपि 'यादृशदोषोत्तरं यादृशप्रवृत्त्यभावो निवृत्त्यभावो वा प्रामाणिकः तादृशदोषत्वेन तत्र तत्र कारणत्वांगीकारे बाधकाभावात् रङ्गे रजतभेदाऽग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वात् न निवृत्तिः किन्तु प्रवृत्तिरेव, एवं रजते रङ्गभेदाऽग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वान्न प्रवृत्तिः किन्तु निवृत्तिरेवेति कथं युगपत्प्रवृत्तिनिवृत्त्योरापादनम्?, तथा च इष्टतावच्छेदकप्रकारकज्ञानादेरकल्पनात् नान्यथाख्यातिसिद्धिरित्यतः स्थलान्तरे तां साधयति–**किं चेति**। **अनुमितिं प्रति**=अनुमितिसामान्यं प्रति। अनुमितिसामान्यं प्रति भेदाऽग्रहः कारणम्, उत न्यायमतसिद्धविशिष्टज्ञानम्, इति विकल्प्य भेदाऽग्रहस्य हेतुत्वे अन्यथाख्यातिं साधयति–**भेदाऽग्रहस्य हेतुत्वे इति**। भ्रमानंगीकर्तृप्रभाकरेण 'पर्वतो वह्निमान्, प्रमेयत्वात्,

यदि च विशिष्टज्ञानं कारणं, तदाऽयोगोलके वह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितम्। सेयमुभयतःपाशारज्जुः। इत्थं चान्यथाख्यातौ प्रत्यक्षमेव प्रमाणं, रङ्गे

इत्यत्र वह्निव्याप्यप्रमेयत्ववानितिविशिष्टज्ञानस्य, 'पर्वतो वह्निमान्–महानसीयधूमादि'त्यत्र महानसीयधूमवत्पर्वत इति विशिष्टज्ञानस्य, 'पर्वतो वह्निमान्–रजतत्वादि'त्यत्र–वह्निव्याप्यरजतत्ववत्पर्वत' इति विशिष्टज्ञानस्य (परामर्शस्य) चाऽनङ्गीकारात् तत्र किन्तु प्रथमस्थले वह्निव्याप्यः, प्रमेयत्ववान् इति ज्ञानद्वयं, द्वितीयस्थले–वह्निव्याप्यमहानसीयधूमः, पर्वतः, इति ज्ञानद्वयम्, तृतीयस्थले–वह्निव्याप्यः, रजतत्वम्, पर्वतः,–इति ज्ञानत्रयं,–इत्यंगीकारात्, तत्रानुमित्युत्पत्तये भेदाऽग्रहः कारणं स्वीकर्तव्यं, प्रथमस्थले प्रमेयत्वे वह्निव्याप्यत्ववद्भेदाऽग्रहः, द्वितीयस्थले पर्वते वह्निव्याप्यमहानसीयधूमवद्भेदाऽग्रहः, तृतीयस्थले रजतत्वे वह्निव्याप्यत्ववद्भेदाऽग्रहः पर्वते च रजतत्ववद्भेदाऽग्रहः, इति। तथा च प्रथमस्थले–व्याप्यत्ववद्भेदाग्रहविशिष्टव्याप्योपस्थितिकालीनहेतुप्रकारकपक्षविशेष्यकनिश्चयस्य, द्वितीयस्थले व्याप्यवद्भेदाऽग्रहकालीनव्याप्यविशिष्टविषयकोपस्थितिविशिष्टपक्षग्रहस्य, तृतीयस्थले च व्याप्यत्ववद्भेदाग्रहविशिष्टव्याप्योपस्थितिकालीनहेतूपस्थिति––हेतुमद्भेदाऽग्रहकालीनहेतुविशिष्टविषयकोपस्थितिविशिष्टपक्षग्रहस्य तावदन्यतमत्वेन हेतुत्वस्वीकाराऽवश्यकत्वात्, **जलह्रदे**='जलह्रदो वह्निमान्–धूमादित्यत्रापि, **वह्निव्याप्यधूमवद्भेदाऽग्रहात्**=वह्निव्याप्यधूमवद्भेदाऽग्रहकालीनव्याप्यविशिष्टविषयकोपस्थितिविशिष्टपक्षग्रहात् कारणात्, **अनुमितिः**=विशेष्यतासम्बन्धेन वह्निविधेयकानुमितिः, **निराबाधा**=अवश्यमङ्गीकर्तव्या। अनुमित्यनङ्गीकारेऽन्वयव्यभिचारात् अनुमितिसामान्ये निरुक्तभेदाऽग्रहस्य कारणत्वानुपपत्त्या तव सिद्धान्तहान्यापत्ति' तदङ्गीकारे तु 'वह्निमान्ह्रद'इत्यनुमित्यात्मकाऽन्यथाख्यातिसिद्धिरिति उभयतः पाश इति भावः॥ अथानुमितिसामान्यं प्रति न्यायमतसिद्धविशिष्टज्ञानस्य कारणत्वांगीकारपक्षेऽपि उभयतः पाशेन अन्थाख्यातिं साधयति–**यदि चेति**। **विशिष्टज्ञानं**=वह्निव्याप्यत्वप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षविषयताशालिज्ञानत्वेन(परामर्शस्य)कारणत्वांगीकार इति पक्षेऽपि, भेदाऽग्रहत्वेन कारणत्वमिति स्वसिद्धान्तपरित्यागापत्तिः। अथ तप्ताऽयोगोलके च वह्नेः प्रत्यक्षमिवानुमितेरपि सर्वसम्मततया 'अयोगोलकं वह्निमदि'त्य**नुमित्यनुरोधात्**=तादृशानुमित्यनुपपत्तिभिया, तत्कारणत्वेन अयोगोलके **वह्निव्याप्यधूमज्ञानं**=वह्निव्याप्यत्वप्रकारतानिरूपितधूमप्रकारतानिरूपिताऽयोगोलकनिष्ठविशेष्यताशालिज्ञानम्, **आपतितम्**=अवश्यमंगीकर्तव्यम्, तथा च कारणज्ञानात्मकाऽन्यथाख्यातिसिद्धिरिति। **सेयमिति**। पूर्वोक्तस्थलेषु अत्र स्थले च, एकत्र स्वमतहानिः, अन्यत्र अन्यथाख्यातिसिद्धिरिति उभयपक्षतः पाशआपद्यते इति भावः॥ मीमांसकैः परामर्शात्मकविशिष्टज्ञानस्य कारणतयाऽनङ्गीकारात् यदि चेत्यनास्थायामुक्तम्। ह्रदो वह्निमानिति विशिष्टानुमितेः सर्वमताऽसिद्धत्वात् अयोगोलकपक्षकस्थलान्तरानुसरणं कृतम्॥

ननु–'ह्रदे वह्निव्याप्यधूमवद्भेदाऽग्रहात् न 'ह्रदो वह्निमानि'त्यनुमितिरन्यथाख्यातिरूपा, अपि तु–अगृहीताऽसंसर्गकं ज्ञानद्वयं 'ह्रदो' 'वह्निमान्' इति उत्पद्यते तथा च नाऽन्यथाख्यातिसिद्धिः, प्रमाणाऽभावात्। 'अयोगोलकं वह्निमदि'त्यत्रापि वह्निव्याप्यधूमवद्भेदाऽग्रहेण कारणेन तदुत्पत्तिः, न तु विशिष्टज्ञानात्मककारणेन, तदस्वीकारात्। तथा च कथमन्यथाख्यातिः सिद्ध्येदित्यतः प्रमाणेषु बलवत् प्रत्यक्षमेव प्रमाणमाह–**इत्थं चेति**। अनुमानादिना साधितेऽपि भ्रमे यदि अनास्था तदेत्यर्थः॥ **अन्यथाख्यातौ**=भ्रमे, प्रत्यक्षमेव 'रङ्गे रजतत्वप्रकारकज्ञानात्मकं' प्रमाणं स्वीक्रियतामित्यर्थः॥ ननु तत्रापि ज्ञानद्वयमेव 'रङ्गप्रत्यक्षं, रजतस्मरणं'चेति जायते, तथा च न प्रत्यक्षं प्रमाणम्

रजततयाऽवेदिषमित्यनुभवादिति सङ्क्षेपः ॥ १३६ ॥

अन्यथाख्यातौ, इत्यतो मानसानुव्यवसायं तत्र प्रमाणमाह–'रङ्गं **रजततयाऽवेदिषमि**'ति। रङ्गविशेष्यकरजतत्वप्रकारकज्ञानवानहमि'ति मानसप्रत्यक्षादित्यर्थः ॥ तथा च प्रत्यक्षेणान्यथाख्याति-निष्प्रत्यूहेति भावः ॥ **इदमपि बोध्यम्**–मीमांसकमते व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्याऽनुमितिहेतुत्वे कपिसंयोगव्याप्यः कपिविभागः,कपिविभागवान् मूलावच्छिन्नवृक्षः, इतिज्ञानद्वयेन प्रमात्मकेन 'मूलावच्छिन्नवृक्षः कपिसंयोगी'त्यनुमितेरावश्यकतया अन्यथाख्यातिसिद्धेर्निष्प्रत्यूहत्वादिति ॥ ननु 'रंगं रजततयाऽवेदिषम्'–इत्यनुव्यवसायो न इदंविशेष्यकज्ञाने रजतत्वप्रकारकत्वविशिष्टबुद्धिरूपः, अपि तु रजतत्वप्रकारकत्वाऽसंसर्गाऽग्रहरूप एव, एवं–मूलावच्छिन्नवृक्षेऽपि कपिसंयोगाऽसंसर्गग्रहाऽभावरूपानुमितिरपि बोध्या। तथा च नाऽन्यथाख्यातिः सिद्धयेदिति चेत् ? तदयुक्तं, मानसे तथाऽनुल्लेखात्। किन्तु रजतं पश्यामि, कपिसंयोगमनुमिनोमि,( ताम्रादिप्रतिमासु )गवयपदवाच्यत्वमुपमिनोमि, वह्निकरणकत्वं शाब्दयामी'त्यनुव्यवसायानामुल्लेखात्। तदनङ्गीकारे तु प्रत्यक्षत्वादिप्रमितिविभाजकधर्मचतुष्टयाऽसिद्धयापत्तेः तेन प्रमाणचतुष्टयस्याऽव्यसिद्धयापत्तेः। न चेष्टापत्तिः। तथा सति सकलतान्त्रिकसिद्धान्तविरोधापत्तेः, प्रमाणषट्कवादिभवत्सिद्धान्तविरोधापत्तेश्च। तादृशानुव्यवसायानुरोधेन ज्ञानलक्षणाऽपि अवश्यं स्वीकर्तव्या, तथा च–तत्र तत्राऽन्यथाख्यातिर्निष्प्रत्यूहेति हृदि निधाय समाप्तिद्योतक 'इति' पदमात्रमनुक्त्वा 'इति **संक्षेप**' इत्युक्तमिति ध्येयम् ॥

**अत्रेदमनुसन्धेयम्**–यत्र सर्पादौ 'भ्रान्तिधियः, तत्र शून्यवादिमाध्यमिकानाम् असत्ख्यातिः। क्षणिकवादियोगाचाराणाम् आत्मख्यातिः। नैयायिकानाम् अन्यथाख्यातिः। सांख्यानां प्राभाकराणां च अख्यातिः। अद्वैतिनाम् अनिर्वचनीयख्यातिः। श्रीस्वामिनारायणीयानां रामानुजानां मीमांसकानां च सत्ख्यातिरिति। तत्र **शून्यवादिमते** अत्यन्ताऽसतः सर्पस्य रज्जुदेशे प्रतीतिः। क्षणिक **विज्ञानवादिमते** विज्ञानमेव सर्पाकारं भासते तदेवात्मा चेति। **नैयायिकमते**–बिलादौ सत्यस्य सर्पस्य दोषसामर्थ्यात् पुरोवर्तिप्रदेशे भानम्। **चिन्तामणिकारादिनव्यमते** तु–सर्पत्वात्मकतद्धर्माभाववति रज्जुविशेषे दोषवशात् तद्धर्मभानम्। **मीमांसकमते**–सर्पस्मरणं रज्जुप्रत्यक्षं चेतिज्ञानद्वयं सत्यमेव ॥ **रामानुजमते श्रीस्वामिनारायणमते** च रज्ज्ववयवानां सर्पावयवानां च पार्थिवत्वात् तादृशावयवैःकालभेदेन अनेकपदार्थारम्भात् रज्ज्वामपि पार्थिवावयवेषु तिमिरादिदोषसहकृतं सर्पभानं यथार्थम्। **अद्वैतिमते**–तत्र सर्पः, न सन्, न असन्, न सदसन्, किन्तु अनिर्वचनीय एवेति ॥

**अथ मीमांसकमते** सर्वेषांज्ञानानां यथार्थत्वात् तत्प्रमात्वं स्वतोग्राह्यं,–द्वेधा, उत्पत्तौ ज्ञप्तौ चेति भेदात्। दोषाऽभावसहकृतज्ञानसामान्यसामग्रीप्रयोज्यत्वम् उत्पत्तिस्वतस्त्वम्, दोषाऽभावसहकृतयावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वं ज्ञप्तिस्वतस्त्वम्। **न्यायमते** च–ज्ञानमात्रग्राहकसामग्रीभिन्नसामग्रीग्राह्यत्वं ज्ञप्तिपरतस्त्वम्। ज्ञानमात्रग्राहकसामग्र्यतिरिक्तकारणप्रयोज्यत्वम्–उत्पत्तिपरतस्त्वम्। एवम्–अप्रमायाः–ज्ञानमात्रकारणातिरिक्तदोषात्मककारणप्रयोज्यत्वम् उत्पत्तिपरतस्त्वम्। ज्ञानमात्रग्राहकसामग्रीभिन्नसामग्रीग्राह्यत्वम् अप्रमायां ज्ञप्तिपरतस्त्वम्। **अनुमानं** तु–'पूर्वोत्पन्नरजतज्ञानम्, अप्रमा,–निष्फलप्रवृत्तिजनकत्वादि'ति। यन्नैवं तन्नैवं यथा घटप्रमा, इति ध्येयम् ॥ १३६ ॥

व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा ।
हेतुर्व्याप्तिग्रहे, तर्कः क्वचिच्छङ्कानिवर्तकः ॥ १३७ ॥

पूर्वं व्याप्तिरुक्ता, तद्ग्रहोपायस्तु न दर्शित इत्यतस्तं दर्शयति—व्यभिचारस्येति । व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारणम् । व्यभिचारग्रहस्य व्याप्तिग्रहे प्रतिबन्धकत्वात्तदभावः कारणमित्यर्थः । एवमन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता । भूयोदर्शनं तु न कारणं,—व्यभिचारास्फूर्तौ सकृद्दर्शनेऽपि क्वचिद्व्याप्तिग्रहात् ।

---

मूले—व्यभिचारस्याऽग्रहोऽपीति । तदभाववद्वृत्तित्वाद्यात्मकव्यभिचारज्ञानाऽभावः, प्रत्यक्षतः तत्सत्त्वे तत्सत्त्वमिति सहचारज्ञानं च, तदभाववदवृत्तित्वाद्यात्मकव्याप्तिज्ञाने कारणमित्यर्थः ॥ 'धूमो वह्निव्यभिचारी न वे'तिव्यभिचारशंकानिवर्तकतया 'तर्कः'—धूमो यदि वह्निव्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यादिति, क्वचित्=क्वचित् उपयुक्तो भवतीत्यर्थः ॥ अथ—प्रामाण्यम् अनुमानगम्यं तदा भवेत्, यदि अनुमान प्रमाणं भवेत्, तदेव तु न संभवति, व्याप्तेर्ग्राहकाऽभावात्, इत्याशंकानिरासाय मूले 'व्यभिचारस्याऽग्रहोऽथ सहचारग्रहस्तथे'ति व्याप्तिज्ञानोपायः प्रदर्शितः । सोऽप्ययुक्तः, व्याप्तिस्वरूपज्ञानाऽभावादित्याशंकां वारयितुं मुक्तावल्यामाह—पूर्वं व्याप्तिरुक्तेति । अनुमानखण्डे व्याप्तिर्निरूपिता, तद्ग्रहोपायस्तु न दर्शितः=व्याप्तिज्ञानोपायस्तु न निरूपितः, इत्यतः=व्याप्तिस्वरूपनिरूपणेन तज्ज्ञानस्योत्पन्नतया अनुमानग्राह्यत्व-(स्वतोग्राह्यत्व)व्यवस्थित्यनुकूलत्वरूपोपोद्घातसंगत्या अनुमानप्रामाण्यव्यवस्थापनाऽनन्तरं व्याप्तिग्रहोपायनिरूपणं युक्तमिति भावः ॥ मूलेन 'व्यभिचारस्य अग्रहः, व्यभिचारस्य सहचारग्रहः'—इत्यर्थभ्रमवारणार्थमाह व्यभिचाराऽग्रहः इत्यादि । संशयनिश्चयसाधारणव्यभिचारज्ञानत्वावच्छिन्नप्रतियोगिताकाऽभाव इत्यर्थः । सहचारग्रहश्च=हेतुविशेष्यकसाध्यसामानाधिकरण्यप्रकारकज्ञानं चेत्यर्थः । तदुभयमपि व्याप्तिनिश्चये कारणम् ॥ ननु कथ कारणं भवतीत्यत आह—व्यभिचारग्रहस्येति । साध्यतावच्छेदके हेतुसमानाधिकरणाऽभावप्रतियोगितावच्छेदकत्वात्मकव्यभिचारप्रकारकज्ञानस्येत्यर्थः ॥ व्याप्तिग्रहे=व्याप्तिघटकसाध्यतावच्छेदके हेतुसमानाधिकरणाऽभावप्रतियोगिताऽनवच्छेदकत्वनिर्णये । प्रतिबन्धकत्वात्=ग्राह्याभावावगाहित्वेन विरोधित्वादित्यर्थः ॥ तदभावः=व्यभिचारज्ञानाऽभावः । कारणम्=व्याप्तिघटकाऽव्यभिचारांशनिश्चयकारणत्वात् तदाश्रयसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यात्मकव्याप्तिज्ञानोपयोगित्वमिति भावः ॥ सहचारग्रहस्यापि व्याप्तिज्ञाने कारणतामाह—एवमिति । तद्वत्,-'साध्यहेत्वोः सहचारज्ञानसत्त्वे व्याप्तिज्ञानसत्त्वं तयोः सहचारज्ञानाऽभावे तु व्याप्तिज्ञानाऽभाव'इति प्रत्यक्षतोऽन्वयव्यतिरेकाभ्यां, सहचारनिश्चयस्याऽपि हेतुता बोध्येत्यर्थः ॥ कुत्रचिद्व्याप्तौ सहचारग्रहस्य कारणत्वसंभवेऽपि 'साध्यवदन्याऽवृत्तित्वात्मकव्याप्तेः,——स्वावच्छिन्नसमानाधिकरणाऽभावप्रतियोगिताऽनवच्छेदकसाध्यतावच्छेदकधर्मवत्त्वात्मकव्याप्तेर्वा सहचाराऽघटिततया तत्साधारणसकलव्याप्तिग्रहे सहचारज्ञानस्य हेतुत्वसम्पादनार्थम् अन्वयव्यतिरेकप्रत्यक्षात्मकं प्रमाणमुक्तमिति ध्येयम् ॥ अथ प्राचीनाः सकृद्दर्शनं न व्याप्तिग्रहोपायः, रासभवह्न्योः सकृत्सहचारदर्शनेऽपि व्याप्तिग्रहाऽभावात्, किन्तु भूयोदर्शनमेव तथा च वह्निशून्यदेशेऽपि रासभदर्शनेन भूयोदर्शनात्मककारणविरहात् न तयोर्व्याप्तिज्ञानमिति वदन्ति । तन्मतं दूषयितुमाह—भूयोदर्शनन्त्विति । भूयस्सु स्थानेषु साध्यहेतुसहचारदर्शनं, भूयसां साध्यानां हेतूनां च सहचारदर्शनम्, साध्यहेतुसहचारस्य बहुवारदर्शनं चेत्यर्थः । न कारणं=

क्वचिद्व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते। यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षे बाधकस्तर्कोऽपेक्षितः। तथाहि—वह्निविरहिण्यपि धूमः स्यादिति यथाशङ्का भवति, तदा सा वह्निधूमयोः कार्यकारणभावस्य प्रतिसन्धाना-

न व्याप्तिनिश्चयं प्रति कारणमित्यर्थः॥ कारणताविघटकव्यतिरेकव्यभिचारं दर्शयितुं कारणान्तरस-म्पत्तिमपि आह—व्यभिचाराऽस्फूर्ताविति। व्यभिचारज्ञानात्मकप्रतिबन्धकसामान्याऽभावा-त्मककारणसत्त्वे, सकृद्दर्शनेऽपि=उक्तत्रिविधान्यतमभूयोदर्शनाऽभावकाले साध्यहेतुसहचारैकवार-दर्शनेऽपि, क्वचित्=एतद्रूपवान्–एतद्रसादित्यादौ, व्याप्तिग्रहात्=एतद्रसविशेष्यकैतद्रूपनिरूपि-तव्याप्तिप्रकारकनिश्चयजननात्। तत्र अनेकाधिकरणाऽभावात् अनेकसाध्यहेत्वोरभावात्, ज्ञाना-नाम् अयौगपद्यात् बहुवारं दर्शनाभावाच्चाऽपि, व्यभिचारज्ञानाऽभावसहकृतसाध्यहेतुसहचार-विषयकसकृद्दर्शनाद्व व्याप्तिनिश्चयोत्पत्तेः व्यतिरेकव्यभिचारात् भूयोदर्शनं न व्याप्तिग्र-होपाय इति भावः॥ नन्वेवं सति "व्याप्त्यवगमो भूयोदर्शनात् तर्कादे"ति प्रशस्तपादभाष्यविरोध इत्यत आह—क्वचिदिति। व्याप्तिग्रहविशेषे। व्यभिचारशंकाविधूननद्वारा=हेत्वधिकरणे सा-ध्याभावभ्रमप्रयुक्तायाः 'साध्यतावच्छेदके हेतुसमानाधिकरणाऽभावप्रतियोगितावच्छेदकत्व'शंकायाः या सामग्री तद्विघटनद्वारा। भूयोदर्शनम्=अनेकाधिकरणेषु साध्यहेतूनां सहचारदर्शनम्। उपयु-ज्यते=पूर्ववृत्तित्वात्मक( प्रयोजकरूप )वद् भवतीत्यर्थः। भाष्यस्थपञ्चम्याः प्रयोजकत्वपरत्वान्न वि-रोध इति भावः। अथ व्याप्तिग्रहं प्रति व्यभिचारज्ञानाऽभावत्वरूपगुरुधर्मेण कारणत्वाऽपेक्षया तर्कयामीत्यनुभवेन जिज्ञासाविशेषनिवर्तकतावच्छेदकत्वेन वा सिद्धमानसत्वव्याप्यजातिविशेषरूप-वत्त्वेन हेतुत्वं युक्तमिति प्राचीनैकदेशिमतं, तदपि प्रतिबन्धकाऽभावस्य कार्यमात्रे हेतुतायाः क्लृप्त-तया व्यभिचारज्ञानाऽभावस्य प्रतिबन्धकाऽभावविधया व्याप्तिग्रहकारणत्वं, तर्कस्य कारणत्वं त्वप्रा-माणिकं, 'तर्कादि'ति'भाष्यस्थपञ्चम्यास्तु प्रयोजकत्वमर्थः, तथा च न विरोधः तर्कस्य क्वचित्प्रयोज-कत्वात्, इत्याशयेनाह—यत्र त्विति। यादृशाऽसन्निहितस्थले, भूयोदर्शनादपि=भूयस्सु स्थानेषु साध्यहेतुसहचारदर्शनादपि यदधिकरणघटितव्यभिचारशंका न निवर्तते। तत्र=तादृशस्थले क्वचित्। विपक्षे=यद्धेत्वधिकरणे साध्याभावभ्रमस्तत्रेत्यर्थः, तदधिकरणघटकव्यभिचारशंकायाः इति यावत्। बाधकः=निवर्तकः। तर्कः—आहार्यव्याप्यवत्ताभ्रमजन्यः आहार्यव्यापकवत्ताभ्रमात्मकः, 'यद्ययं वह्निमान्न स्यात्, धूमवान्न स्यादि'त्याकारकः। अपेक्षितः=अवश्यं सम्पादनीय इत्यर्थः॥ तदेतदुपपादनार्थं प्रथमं व्याप्तिज्ञानविरोधिनीम् आशंकामुल्लिखति—तथाहीति। 'वह्निविरहिण्यपि धूमः स्यात् यदी'त्याशंका. संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकाऽभावाधिकरणेऽपि यदि संयोगेन धूमोत्पत्तिः स्यादिति तदर्थः। 'धूमो वह्निव्यभिचारी न वा'इति यावत्। वह्नित्वं धूमसमा-नाधिकरणाऽभावप्रतियोगितावच्छेदकं न वा'इति तु शंकाशयः॥ अत्र वह्नित्वधर्मिकतादृशव्यतिरेकव्य-भिचारशंकायाः तत्सामग्रीकाले एवोत्पन्नत्वात्–यदीत्युक्तम्, शंकाविघटकस्तर्कः, तर्कजनकः कार्य-कारणभावनिश्चयः, इति तर्कावताराय कार्यकारणभावनिश्चयमाह—तदा सेति। तादृशसामग्रीसम-वधानकालीना व्यतिरेकव्यभिचारशंका। वह्निधूमयोः कार्यकारणभावस्य=वह्निनिष्ठकारणत्वस्य धूम-निष्ठकार्यत्वस्य च, प्रतिसन्धानात्=निश्चयात्, निवर्तते=विनष्टा भवतीत्यर्थः॥ धूमसमानाधिकर-णाभावप्रतियोगितानवच्छेदकत्वाऽन्यथासिद्ध्यनिरूपकत्वोभयविशिष्टवह्नित्ववत्त्वात्मकवह्निनिष्ठधूमका-रणत्वस्य निश्चयात् शंका निवर्तते इति भावः॥ तादृशकार्यकारणभावस्तु—'धूमत्वावच्छिन्नं प्रति वह्नि-त्वावच्छिन्नं कारणम् इति। अर्थात् वह्निः धूमसमानाधिकरणाऽभावप्रतियोगितानवच्छेदकत्वाऽन्य-

न्निवर्तते। यद्ययं वह्निमान्न स्यात्तदा धूमवान्न स्यात्, कारणं विना कार्यानुत्पत्तेः। यदि च क्वचित्कारणं विनापि कार्यं भविष्यति, तदाऽहेतुक एव भविष्यति, इति तत्राप्याशङ्का भवेत्, तदा सा व्याघातादपसारणीया। यदि हि कारणं विना कार्यं स्यात्, तदा धूमार्थं वह्नेस्तृप्त्यर्थं भोजनस्य वा नियमत उपादानं तवैव न स्यादिति। यत्र

थासिद्ध्यनिरूपकत्वोभयविशिष्टवह्नित्ववानिति यावत् ॥ तादृशकार्यकारणभावनिश्चयजन्यं तर्कमाह–**यद्ययंमिति**। यदि अयं=धूमोत्पत्त्यवच्छेदकतया निर्णीतः पर्वतः, वह्निमान्न स्यात्=संयोगेन वह्नित्वावच्छिन्नप्रतियोगिकाऽभाववान् स्यात्!, ( एतदापादकं दलम् ), **तदा धूमवान्न स्यात्**=संयोगावच्छिन्नोत्पत्त्यवच्छेदकतासम्बन्धेन धूमत्वावच्छिन्नप्रतियोगिताकाऽभाववान् स्यात्!, (एतदापाद्यदलम् ) तर्के आपाद्याभावेन धूमाऽभावाऽभावेन धूमेन, आपादकाऽभावस्य वह्न्यभावाऽभावस्य वह्नेः सिद्धिर्भवति। तेन शंका निवर्तते। कार्यकारणभावनिश्चये तु प्रत्यक्षतोऽन्वयव्यतिरेकसहचारज्ञानं कारणमिति ध्येयम्। अथ 'वह्निमान्न स्यात् धूमवान्न स्यादि'तितर्कस्य विषयपरिशोधकस्य व्याप्तिग्रहाऽनौपयिकत्वात् असंगतिरित्यतः–"धूमो यदि वह्निव्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यादि"ति तर्काऽवताराय तत्कारणीभूतम् आपाद्यव्याप्याऽऽपादकवत्ताज्ञानमपि दर्शयति–**कारणं विना कार्याऽनुत्पत्तेरिति**। कारणं विना=कारणतावच्छेदकसम्बन्धेन वह्न्याद्यभाववति पर्वते, कार्याऽनुत्पत्तेः=कार्यतावच्छेदकसम्बन्धावच्छिन्नकार्यनिष्ठोत्पत्त्यवच्छेदकत्वाऽसंभवादित्यर्थः ॥ संयोगसम्बन्धेन वह्न्यभावस्य ( आपादकस्य ) संयोगसम्बन्धावच्छिन्न–धूमनिष्ठोत्पत्त्यवच्छेदकत्वाऽभाव( आपाद्य )व्याप्यतायाः आवश्यकतया तादृशाऽऽपाद्यव्याप्याऽऽपादकवत्ताज्ञानसत्त्वात् तर्काऽवतार इति भावः ॥ तथा च–आपाद्यव्याप्यापादकवत्ताज्ञानेन 'धूमो यदि वह्निव्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यादि'ति व्याप्तिग्रहौपयिकतर्काऽवतारे सति, तत्र धूमे वह्निजन्यत्वाऽभावाऽभावेन–वह्निजन्यत्वेन, वह्निव्यभिचारित्वाऽभावाऽभावस्य–वह्निव्याप्तिनिश्चयस्य सिद्धिर्भवतीति, अतो वह्निव्याप्तिज्ञाने तादृशाशंकाविघटनद्वारा तर्कः उपयोगीति हृदयम् ॥ 'ननु–'धूमत्वावच्छिन्नं प्रति वह्नित्वावच्छिन्नं कारणमि'ति कार्यकारणभावग्रहेऽपि आशंका भवति तद्वारणार्थं पुनस्तर्कान्तरं, तत्कारणे कार्यकारणभावग्रहे च पुनराशंकाया विघटनाय पुनस्तर्कान्तराऽवतार इत्यनवस्था भवेदित्याशंकायां प्राथमिकतर्ककारणीभूतकार्यकारणभावे शंकां प्रदर्शयन् तस्या व्याघातेनाऽपसारणे सति न अनवस्था इत्यभिप्रायेणाह–**यदि चेति**। तत्रापि आशंका भवेदित्यन्वयः। तत्र=प्राथमिकतर्कप्रयोजक–कार्यकारणभावग्रहे–"**क्वचित्कारणं विनाऽपि कार्यं भविष्यती**'त्येकाऽऽशंका, क्वचित्=धूमविशेषे, "कारणं वह्निं विनाऽपि कार्यं धूमो भविष्यति न वा ?" इत्याकारिका प्रतिबन्धिका भवेदित्यर्थः ॥ द्वितीयाम् आशंकामाह–"**तदाऽहेतुक एव भविष्यती**'ति। धूमः किं निर्हेतुक एव भविष्यतीत्यर्थः। **तदा सा**=निरुक्तशंकाद्वयम्। स्वक्रियाव्याघातात्=स्वं–तर्कप्रयोक्ता पुरुषः तस्य या क्रिया=प्रमाणसिद्धा वह्न्युपादानार्थं प्रवृत्तिः, तस्या व्याघातः=अनुपपत्तिः, तस्मात्=तद्विषयकज्ञानात्, अपसारणीया=निवर्तनीया इत्यर्थः ॥ व्याघातज्ञानस्य ग्राह्याऽभावाद्यनवगाहित्वेऽपि मणिमन्त्रादिन्यायेन स्वतन्त्रप्रतिबन्धकत्वादिति भावः ॥ व्याघातस्य शंकासाकांक्षत्वात् शंकां पुनरुल्लिखन् व्याघाताकारं दर्शयितुमाह–**यदि हीति**। 'यदि हि कारणं विना कार्यं स्यात्'इति तु प्रागुक्तशंकोल्लेख एव, कार्यं–धूमः, कारणं वह्निं विनापि स्यात्=स्वसमानाधिकरणवह्निमदन्यत्वाव्यवहितप्राक्क्षणको न वे'त्याशंका स्यात् तदेत्यर्थः। व्याघातमाह–'**धूमार्थं वह्नेः नियमतः उपादानं तवैव न स्यादि**'ति। यत्र धूमस्तत्र वह्निरितिनियमज्ञानप्रयोज्या या धूमप्रयोजन-

**स्वत एव शङ्का नावतरति तत्र न तर्कापेक्षापीति तदिदमुक्तम्-तर्कः क्वचिच्छङ्कानिवर्तक इति ॥ १३७ ॥**

---

सम्पादकवह्विविषयकग्रहणाऽनुकूलप्रवृत्तिः सा तव तर्कप्रयोक्तुरेव न उपपद्येत !, किन्तु उपपद्यते' इतिज्ञानेन 'धूमो वह्निं विना नैव भवती'तिनिश्चये सति उक्तशंकायाः नाशादित्यर्थः ॥ चिन्तामणिकारोक्तं प्रतिव्यक्त्यनुभवविषयव्याघातमाह-**तृप्त्यर्थं भोजनस्येति**। तृप्तिं प्रति भोजनं कारणमि'त्यत्र यदि 'भोजनं विनाऽपि तृप्तिर्भवति न वे'ति आशंका भवेत् !, तदा तृप्त्यर्थं भोजनस्योपादानं-प्रवृत्तिरेव तव न स्यादि'तिज्ञानेन साऽपसारणीयेत्यर्थः ॥ तथा च यथा तृप्त्यन्यथानुपपत्त्या भोजनप्रवृत्तिज्ञानं तृप्तिभोजनयोः कार्यकारणभावस्य शंकाविघटनद्वारा दार्ढ्यप्रयोजकं तथा धूमप्राप्त्यन्यथाऽनुपपत्त्या वह्न्युपादानप्रवृत्तिज्ञानं वह्निधूमयोः कार्यकारणभावस्य शंकाविघटनद्वारा दार्ढ्यप्रयोजकमिति दृष्टान्तदार्ष्टान्तिभावेन ग्रन्थः संगमनीय इत्याशयः ॥ अत एवोक्तं चिन्तामणितर्के-"यदि हि गृहीतान्वयव्यतिरेकं हेतुं विना कार्योत्पत्तिं शंकेत, तदा स्वयमेव धूमार्थं वह्नेः, तृप्त्यर्थं भोजनस्य, परप्रतिपत्त्यर्थं शब्दस्य, चोपादानं कथं कुर्यात्, तेन विनाऽपि तत्सम्भवात्, तस्मात्तत्तदुपादानमेव तादृशशंकाप्रतिबन्धकम्, शंकायां न नियतोपादानं नियतोपादाने च न शंका, तदिदमुक्तं-तदेव ह्याशंक्यते यस्मिन्नाशंक्यमाने स्वक्रियाव्याघातो न भवतीति, नहि संभवति स्वयं वह्न्यादिकं धूमादिकार्यार्थं नियमत उपादत्ते तत्कारणं तन्नेत्याशंकते चेति" भावः ॥ मूलोक्त-'क्वचित्'-पदप्रयोजनमाह-**यत्र स्वत एवेति**। यादृशसाध्यहेतुकादिव्याप्तिनिश्चये, भूयोदर्शनेन शंका निवर्तते,-यद्वा स्वत एव=स्वसामग्र्यभावप्रयुक्तः, शंका नावतरति=शंकाऽवताराऽभावो वर्तते, तत्र तादृशसाध्यहेतुव्याप्तिनिश्चये, न **तर्कोऽपेक्षा**=तर्को नांगीकर्तव्यः, व्यभिचारशंकाऽभावादिति भावः ॥ तदिदमुक्तम्=एतादृशस्थलीयाऽपेक्षाशून्यत्वस्य तर्के दर्शयितुमुक्तम्-मूले-**क्वचिच्छंकानिवर्तक** इति ॥

**अत्रेदं बोध्यम्** ॥ 'व्याप्यारोपेण व्यापकारोपस्तर्क इति लक्षणम्। व्याप्यस्य वह्न्यभावस्य, आरोपेण-आहार्यज्ञानेन, व्यापकस्य-धूमाभावस्य, आरोपः इत्यर्थः। पदद्वयम् असम्भववारणाय बोध्यम्। आहार्यव्याप्यवत्ताभ्रमजन्य आहार्यव्यापकवत्ताभ्रमजन्यस्तर्क इति समुदितार्थः ॥ बाधनिश्चयकालीनेच्छाजन्यज्ञानम् आहार्यम्। बाधनिश्चयः-वह्निधूमयोः पर्वतादौ निश्चयः-'वह्निमान्धूमवानि'त्याकारकः, तत्कालीनेच्छा 'वह्निव्याप्यधूमवति पर्वते वह्न्यभावज्ञानं धूमाभावज्ञानं च जायतामि'त्याकारिका, तज्जन्यं ज्ञानं 'पर्वतो यदि वह्न्यभाववान् स्यात् धूमाभाववान् स्यादि'-तितर्कात्मकं ज्ञानमिति ॥ तथा च-आहार्यव्याप्यवत्ताभ्रमः 'निर्वह्निः स्यादि'त्यंशः। तज्जन्यः आहार्यव्यापकवत्ताभ्रमः 'निर्धूमः स्यादि'त्यंशः। व्याप्यत्वं-स्वसमानाधिकरणाऽभावाऽप्रतियोग्यापादकत्वम्, स्वम्-आपादकत्वेन अभिमतम्। व्यापकत्वं च-निरुक्तव्याप्यत्वघटकाऽप्रतियोगित्वपर्यन्तम् ॥ लक्षणे-जन्यान्ताऽनुपादाने आहार्यभ्रमात्मकज्ञानमात्रेऽतिव्याप्तिः स्यात्। प्रथमा'ऽऽहार्य'पदानुपादाने 'अयं न पुरुष'इतिनिश्चयसत्त्वे शाखादौ करादिभ्रमेण करादिव्याप्यपुरुषवत्ताभ्रमात् 'अयं पुरुष'इत्याद्याहार्यव्यापकवत्ताऽऽरोपो भवति तत्रातिव्याप्तिः स्यात् ॥ द्वितीया'ऽऽहार्य'पदानुपादाने 'रजतत्वव्याप्यचाकचक्याऽभाववत्तानिश्चयकाले आहार्यं यत् रजतत्वव्याप्यवत्ताज्ञानं तज्जन्ये 'इदं रजत'-मित्यनाहार्यज्ञानेऽतिव्याप्तिः स्यात्। **तर्को द्विविधः**-विषयपरिशोधको व्याप्तिग्राहकश्च। विषयपरिशोधकः-वह्न्यभाववान् स्यात् धूमाभाववान् स्यादिति। व्याप्तिग्राहकस्तु-'धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादि'ति। तर्के-आपाद्यव्यतिरेकनिश्चयः कारणम्। आपाद्यापाद-

कयोर्व्याप्तिनिश्चयोऽपि कारणम् ॥ **तर्कः–प्रकारान्तरेणापि द्विविधः**–साक्षाद् व्यभिचारशंकानिवर्तकः, परम्परया चेति । आद्यः–'धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादिति ॥ द्वितीयस्तु 'वह्न्यभाववान् स्यात् धूमाभाववान् स्यादि'ति, एतस्य धूमवति वह्न्यभावशंकानिरासद्वारा हेतुता, व्यभिचारशंकानिरासकत्वाच्च विषयपरिशोधक इत्युच्यते ॥ **तर्कः प्रकारान्तरेणाऽपि पञ्चधा**–आत्माश्रयाऽन्योन्याश्रयचक्रकाऽनवस्थातदन्यबाधितार्थप्रसंगभेदात् । **स्वस्य स्वाऽपेक्षितत्वेऽनिष्टप्रसंगः–आत्माश्रयः**, स च उत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा–यथा क्रमशः 'यद्ययं घट एतद्घटजन्यः स्यात् एतद्घटानधिकरणोत्तरक्षणवर्ती न स्यात्' । 'यद्ययं घट एतद्घटवृत्तिः स्यात् एतद्घटव्याप्यो न स्यात्' । 'यद्ययं घट एतद्घटज्ञानाऽभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यादि'ति सर्वत्राऽऽपाद्यम् । **तदपेक्षाऽपेक्षितत्वनिबन्धनोऽनिष्टप्रसंगोऽन्योन्याश्रयः**, सोऽपि उत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा, यथा 'यद्येतौ बीजवृक्षौ अन्योन्यजन्यौ स्यातां तदा उभयभिन्नौ स्याताम् एकाऽसिद्ध्या वा उभावपि न स्यातामि'ति । यद्वा 'सुखदुःखे परस्पराऽभावात्मके स्याताम्–एकाऽसिद्ध्या उभेऽपि न स्यातामि'ति । 'यदि सुखदुःखस्थितिः परस्पराऽसाधारणकारण(अदृष्ट)जन्या स्यात् परस्परविजातीयप्रतियोगिताका न स्यात्' । यदि सुखदुःखे परस्पराऽभावज्ञानाऽभिन्ने स्याताम् ज्ञानसामग्रीजन्ये स्याताम्'इति । **तदपेक्षाऽपेक्षाऽपेक्षितत्वनिबन्धनोऽनिष्टप्रसंगश्चक्रकम्**, अयमपि ज्ञप्त्युत्पत्तिस्थितिभेदात् त्रेधा, यथा सिद्धान्तलक्षणे 'व्याप्तिः संसर्गाऽभावघटिता, संसर्गाभावः–(संसर्गारोपजन्यप्रतीतिविषयाऽभावः)जन्यताघटितः, जन्यत्वं–( तद्व्याप्यत्वे सति तन्निष्ठान्यथासिद्ध्यनिरूपकत्वम् ) व्याप्तिघटितं, व्याप्तिश्च संसर्गाऽभावघटिता'इति । तत्र "व्याप्तिज्ञानं यदि–स्वग्रहसापेक्षजन्यताग्रहसापेक्ष–संसर्गाभावग्रहसापेक्षग्रहविषयं स्यात् स्वभिन्नं स्यात्' इति ज्ञप्तितर्कः । उत्पत्तितर्काकारः–'घटः यदि स्वकारणसापेक्षकारणसापेक्षकारणसापेक्षकारणात्मकः स्यात् स्वभिन्नः स्यादिति' । एवं स्थितितर्काकारः–'घटो यदि स्ववृत्तिसापेक्षवृत्तिसापेक्षवृत्तिसापेक्षवृत्त्यात्मकः स्यात् स्वभिन्नः स्यादिति ॥ चतुःकक्षादावपि स्वस्य स्वापेक्षाऽपेक्षाऽपेक्षितत्वसत्त्वात् चक्रकमेव । अथ–**अव्यवस्थितपरम्परारोपाधीनाऽनिष्टप्रसंगोऽनवस्था**, यथा–'यदि घटत्वं घटजन्यत्वव्याप्यं स्यात् कपालसमवेतत्वव्याप्यं न स्यादि'ति । **तदन्यबाधितार्थप्रसंगस्तु**–'धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्यो न स्यादि'ति । **प्रथमोपस्थितत्वोत्सर्गविनिगमनाविरहलाघवगौरवादिकं तु** प्रसंगाऽनात्मकत्वान्न तर्कः, किन्तु प्रमाणसहकारित्वरूपसाधर्म्यात् तथाव्यवहार इति संक्षेपः ॥ **इदन्त्ववधेयम्**––तर्के त्रयो दोषाः,–इष्टापत्तिः, मूलशैथिल्यम् , विपर्यये तर्ककोटिमात्राऽपर्यवसानं चेति । ह्रदो निर्वह्निः स्यात् निर्धूमः स्यादिति'तर्के आद्यो दोषः । 'ह्रदो यदि निर्वह्निः स्यात् तर्हि द्रव्यं न स्यादि'ति तर्के द्वितीयो दोषः, वह्न्यभावादेर्द्रव्यत्वाभावाद्यव्याप्यत्वात् । 'रूपे चक्षुर्ग्राह्यत्वशंकानिरासतात्पर्यके 'रूपं चक्षुरितराऽग्राह्यत्वे सति चक्षुर्ग्राह्यं न स्यात् तर्हि ग्राह्यं न स्यादि'त्यादितर्के तृतीयो दोषः, चक्षुर्ग्राह्यत्वात्मककोटिमात्राऽसिद्धेः । तादृशदोषत्रयान्यतमविशिष्ट एव तर्काऽभासः, तादृशान्यतमशून्यस्तु सत्तर्क इति । **ननु**–तर्कसामान्यस्य साक्षात्परम्परया वा व्यभिचारज्ञानप्रतिबन्धकत्वे प्रामाणाऽभावः, वह्निव्यभिचारित्वरूपाऽऽपादके वह्निजन्यत्ववदवृत्तित्वरूपवह्निजन्यत्वाऽभावात्मकाऽऽपाद्यव्याप्यत्वप्रकारकज्ञानस्य च तत्कारणत्वेन तत्पूर्वम् आवश्यकतया तेनैव व्यभिचारज्ञाननिवृत्तेःतद्विरुद्धज्ञानकालीनतद्धर्माज्ञानस्य तद्विरुद्धतया ज्ञायमानधर्मप्रकारकज्ञानप्रतिबन्धकत्वादिति चेत् ?, अत्र मणिकारप्रभृतयः–'अनाहार्यतादृशज्ञानस्य निरुक्तज्ञानप्रतिबध्यत्वेऽपि आहार्यज्ञानस्य केनाऽप्यप्रतिबध्यत्वान्निरुक्तज्ञानकाले आहार्यव्यभिचारादिज्ञानोत्पत्तौ बाधकाऽभावेन

साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा ।
स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥ १३८ ॥

इदानीं परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयति-साध्यस्येति । साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वमुपाधित्वमित्यर्थः । ननु स

तन्निरासार्थं तर्कस्याऽऽवश्यकत्वात्, अनिष्टप्रसञ्जनात्मकतर्केणाऽऽपाद्यज्ञाने द्वेषस्यैवोत्पत्त्या तेन चात्र प्रतिबन्धात् तादृशज्ञानस्य इष्टत्वाऽभावेन आपादकज्ञाने इष्टसाधनताज्ञानाऽनुत्पत्त्या कारणाऽभावेन इच्छाया अनुत्पत्त्या आहार्यशंकाया उत्पत्त्यसंभवात् तादृशशंकां प्रति इच्छायाः कारणत्वादिति रीत्या तर्कस्य तादृशशंकानिवर्तकत्वमित्याहुः ॥ उपाध्यायप्रभृतयस्तु—व्यभिचारज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकतायां तर्कस्य उत्तेजकत्वस्वीकारात् तर्ककाले व्यभिचारज्ञानसत्त्वेऽप्युतेजकाऽभावविशिष्टव्यभिचारज्ञानाऽभावरूपकारणसंभवात् तत्सम्पादकत्वरूपम् औपचारिकमेव व्यभिचारशंकानिवर्तकत्वं तस्येत्याहुः ॥ दीधितिकारप्रभृतयस्तु—आहार्यज्ञानसाधारणतत्प्रकारकबुद्धित्वावच्छिन्नं प्रति तदापादकतर्कत्वेन मणिमन्त्रादिन्यायेनाऽनुमितौ सिद्धेरिव तर्कस्यापि प्रतिबन्धकत्वम् आवश्यकमिति प्राहुः ॥ ननु—धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादि'ति तर्क एव न भवति, तत्र वह्निजन्यत्वनिश्चयस्य प्रतिबन्धकत्वादिति चेन्न । आहार्यव्याप्यारोपेण आहार्यव्यापकारोपस्य तर्कतया आपाद्यव्यतिरेकनिश्चये आपाद्यव्याप्यवत्तानिश्चयस्य न प्रतिबन्धकत्वम्, न वा आपाद्यव्यतिरेकनिश्चयस्य तर्के प्रतिबन्धकत्वमिति ॥ तर्कत्वं—मानसत्वव्याप्यो जातिविशेषः, तर्कपदशक्यतावच्छेदकतया सिद्धजातिमत्त्वं वा तर्कत्वमिति ध्येयम् ॥ १३७ ॥

मूले—'साध्यस्य व्यापको यस्त्वि'ति । यः साध्यस्य व्यापकः तथा हेतोः अव्यापकः, सः उपाधिः उच्यते, तस्य—उपाधेः, अयं=अग्रे वक्ष्यमाणः, निष्कर्षः—सिद्धस्वरूपं, प्रदर्श्यते इत्यर्थः ॥ ननु व्याप्तिग्रहोपायनिरूपणोत्तरम् उपाधिनिरूपणम् अयुक्तम् असंगतिकत्वादित्याशंकां संगतिप्रदर्शनेन स्वयं परिहरति—इदानीमिति । व्याप्तिग्रहोपायनिरूपणोत्तरम्, परकीयव्याप्तिज्ञानप्रतिबन्धार्थम् उपाधेर्लक्षणं स्वरूपं च प्रसङ्गसंगत्या निरूपयतीत्यर्थः । व्याप्तिज्ञानप्रतिबन्धकतावच्छेदकव्यभिचारानुमापकत्वेन उपाधेः स्मरणात् स्मृतस्योपेक्षाऽनर्हत्वरूपप्रसंगसंगत्या उपाधिनिरूपणमिति भावः ॥ उपाधेः हेतुदोषतया हेत्वाभासप्रकरणे निरूपणौचित्येऽपि व्यभिचारात्मकदोषोद्भावकस्य तस्य हेत्वाऽभासत्वेनाऽनङ्गीकर्तृणां तत्र निरूपणाऽनौचित्येनाऽत्रैव प्रसंगात् निरूपणं क्रियतइति बोध्यम् ॥ मूललभ्यं 'साध्यव्यापकत्वे सति साधनाऽव्यापकत्वमिति'लक्षणम् अयुक्तम्, धूमस्य अनुमितिविधेयत्वात्मकसाध्यत्वाऽभावात् वह्नेश्च धूमानुमापकत्वात्मकसाधनत्वाऽभावादित्यतस्तदर्थमाह-मुक्तावल्यां-साध्यत्वाऽभिमतेति । तथा च धूमस्य सिद्धिविषयत्वात्मकसाध्यत्वाऽभावेऽपि साध्यत्वेनाऽभिप्रेतत्वे बाधकाऽभावात् वह्नेश्च साधनत्वेनाऽभिमतत्वात् नाऽव्याप्तिः आर्द्रेन्धनसंयोगात्मकोपाधौ, तस्य साध्यत्वेनाऽभिमतधूम(समानाधिकरणाऽत्यन्ताभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वात्मक)व्यापकत्वात् वह्नि(समानाधिकरणात्यन्ताऽभावप्रतियोगित्वात्मका)ऽव्यापकत्वात् । ननु—'गुणकर्मान्यत्वविशिष्टसत्तावान् जाते'रित्यत्र गुणान्यत्वविशिष्टसत्ताया उपाधित्वं न स्यात् साध्यत्वेनाऽभिमतपदेन विशिष्टशुद्धयोरैक्यात् सत्तामादाय तदव्यापकत्वात् एवं 'संयोगी गुणकर्मान्यत्वविशिष्टसत्त्वादि'त्यत्र द्रव्यत्वेऽतिव्याप्तेः, द्रव्यत्वस्य संयोगव्यापकत्वात् साधनत्वाऽभिमतपदेन सत्तामादाय तदव्यापकत्वाच्चेति चेन्न । साध्यतावच्छेदकत्वेनाऽभिमतधर्मावच्छिन्नव्यापकत्वे सति

**श्यामो मित्रातनयत्वादित्यत्र शाकपाकजन्यत्वं नोपाधिः स्यात्,-तस्य साध्यव्याप- कत्वाभावाच्छयामत्वस्य घटादावपि सत्त्वात्,एवं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वा**

साधनतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नाऽव्यापकत्वमिति तदर्थत्वात् । निरुक्तस्थले साध्यतावच्छे- दकत्वेनाऽभिमतं गुणकर्मान्यत्वविशिष्टसत्तात्वं, साधनतावच्छेदकत्वेन चाऽभिमतमपि द्वितीयस्थले तदेवेति नाऽव्याप्त्यतिव्याप्ती ॥ ननु तथापि वह्निमान् धूमादित्यत्र द्रव्यत्वे उपाधिलक्षणातिव्याप्तिः, संयोगेन वह्नित्वावच्छिन्नव्यापकस्य द्रव्यत्वस्य कालिकावच्छिन्नधूमाऽव्यापकत्वात्, कालिकेन धूमत्वावच्छिन्नस्य वाऽव्यापकत्वात्, एवं धूमवान् वह्नेरित्यत्राद्रेन्धनसंयोगेऽव्याप्तिः, आर्द्रेन्धनसंयो- गस्य कालिकावच्छिन्नधूमाऽव्यापकत्वात्, कालिकेन धूमत्वावच्छिन्नस्याऽव्यापकत्वाच्चेति चेन्न । साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नसाध्यतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नसाध्यतावच्छेदक सम्बन्धावच्छिन्नसाध्यवन्निष्ठान्योन्याभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वे सति साधनतावच्छेदकता- घटकसम्बन्धावच्छिन्नसाधनतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नसाधनतावच्छेदकसम्बन्धावच्छिन्न- वन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकधर्मवत्त्वम् उपाधित्वमिति विवक्षितत्वात् ॥ उपाधिपदस्य साध्यव्यापकत्वादिविशिष्टरूढत्वेऽपि 'उप-स्वसमीपवर्तिनि स्वीयधर्ममादधाती'ति योगेन तस्य साध्यव्यापकत्वविशिष्टबोधकत्वात् साध्यसमव्यापकत्वघटितस्योपाधिलक्षणस्य युक्तत्वेऽपि हेतौ स्वव्य- भिचारेण साध्यव्यभिचारोन्नायकत्वादिरूपदूषकताबीजस्य विषमव्यापकेऽपि वस्तुनि सत्त्वात् तस्या- प्युपाधित्वसंरक्षणार्थम् एतादृशं लक्षणं कृतमिति ध्येयम् ॥ अव्याप्तिं शंकते-ननु इति । 'स'इति तच्छब्दः काकपरः । न तु मित्रानामकस्त्रीश्यामतनयपरः, तथा सति 'ध्वंसो विनाशी, जन्यत्वादि' त्युदाहरणीयोपाधेः शाकपाकजत्वस्य साधनरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वेन अत्रापि भावत्वस्य उपाधेः साधनरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वेन उदाहरणपौनरुक्त्यापत्तिः स्यात् । तच्छब्दस्य काकपरत्वे तु मित्रातनयत्वस्य पक्षधर्मत्वाऽभावात् शाकपाकजत्वे साधनावच्छिन्नसाध्यव्यापकत्वो- दाहरणतया पौनरुक्त्यभावात् ॥ वस्तुतस्तु-तच्छब्दस्य मित्रातनयतद्व्यक्तिपरत्वे तु-अस्य केवल- व्यभिचारिहेतुकोदाहरणत्वेन 'ध्वंसो विनाशी'त्यस्य तु बाधितत्वविशिष्टव्यभिचारिहेतुकोदाहरणेन विभिन्नदुष्टहेतुकोदाहरणस्थले उपाधावव्याप्त्याशंकया ग्रन्थसंगमनेन न पौनरुक्त्यमिति ध्येयम् ॥ तथा च 'काकः-मित्रातनयो वा,-श्यामरूपवान्,-मित्रापुत्रत्वादि'त्यत्र, शाकपाकजन्यत्वं=शाका- त्मकाऽऽहारपरिणामजन्यरजोजन्यत्वम् । नोपाधिः स्यात्=तत्र उपाधिलक्षणाऽव्याप्तिः स्यात् । तस्य= शाकपाकजन्यत्वस्य, श्यामत्वात्मकसाध्यव्यापकत्वाऽभावात्, श्यामत्वात्मकसाध्यस्य शाकपाकाऽ- जन्यघटादिश्यामद्रव्यमात्रे श्यामत्वस्य सत्त्वादित्यर्थः ॥ एवं-साधनावच्छिन्नसाध्यव्यापकोपाधाव- व्याप्तिं प्रदर्श्य पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधावव्याप्तिमाह-एवं वायुरिति । अत्र प्रत्यक्षत्वं साध्यं पृथिवीजलतेजआत्मसु एवम् अनतीन्द्रियगुणेषु कर्मसु जात्यादिषु च वर्तते, अतो यत्र प्रत्यक्षत्वं तत्र उद्भूतरूपवत्त्वं न वर्तते आत्मादिष्वभावात्, तथा च तत्रोपाधावव्याप्तिरिति ॥ अत्र प्रत्यक्षं प्रति उद्भूतरूपस्याऽव्यापकत्वेन रूपस्य सुतराम् अव्यापकत्वमिति उद्भूतपदं व्यर्थमेव, तथापि प्राचां मते बहिर्द्रव्यप्रत्यक्षमात्रे एव उद्भूतरूपस्य हेतुतया कार्यकारणभावलक्षणानुकूलतर्कप्रदर्शनार्थं तदिति । अथवा-प्राचीनाऽभिम'तोपाधि'पदयोगरूढ्यर्थतावच्छेदक'साध्यसमव्याप्तत्वघटितोपाधित्वाश्रयप्रदर्शनाय उद्भूतपदम्, केवलरूपस्य पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे तादृशप्रत्यक्षशून्यचक्षुरादावपि केवल- रूपसत्त्वेन तस्य तादृशसाध्यव्यापकत्वाऽभावात् । न च तादृशप्रत्यक्षशून्यपरमाणुषु उद्भूतरूपस- त्त्वात् तस्यापि साध्यव्याप्यत्वमिति वाच्यम् । प्रकृते उद्भूतपदस्य प्रत्यक्षविषयार्थकत्वेन प्रत्यक्षविषयरू-

दित्यत्रोद्भूतरूपवत्त्वं नोपाधिः स्यात्,-प्रत्यक्षत्वस्यात्मादिपु सत्त्वात्तत्र च रूपाभावात्, एवं ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वं नोपाधिः स्यात्,-विनाशित्वस्य प्राग भावेऽपि सत्त्वात्तत्र च भावत्वाभावादिति चेद्,-न, यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्पर्यात्। मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वं, तदवच्छिन्नसाधनाव्यापकं च। एवं पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपवत्त्वम्, बहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकं च। एवं ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकं भावत्वं

---

पत्य पक्षधर्मावच्छिन्नसाध्यसमव्याप्तत्वस्य अव्याहतत्वादिति ॥ वस्तुतस्तु-बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षाधिकरणेपु यावत्सु रूपसिद्धावेव रूपे तादृशप्रत्यक्षत्वव्यापकतानिश्चयो भवतीति तादृशयावत्सु रूपसत्त्वे प्रत्यक्षमेव प्रमाणमिति बोधयितुं तादृशयावदधिकरणविशेष्यकप्रत्यक्षप्रमाणकरणकप्रमितिविषयार्थकम् 'उद्भूत'पदमुपात्तमिति ध्येयम् ॥ तत्र च रूपाऽभावादिति। आत्मादिपु रूपाऽत्यन्ताभावादित्यर्थः ॥ साधनावच्छिन्नसाध्यव्यापकोपाधावव्याप्तिमाह-एवं ध्वंस इति। यत्र यत्र विनाशित्वं=ध्वंसप्रतियोगित्वं तत्र तत्र भावत्वमिति' नास्ति, प्रागभावे विनाशित्वसत्त्वेऽपि भावत्वाऽभावात् भावत्वे साध्यव्यापकत्वाऽभावेन भावत्वे उपाधिलक्षणाऽव्याप्तिरित्यर्थः ॥ यद्यपि 'स श्यामः-इत्यादिना प्रदर्शितस्थलत्रयेऽपि शाकपाकजत्वादित्रयस्य उपाधित्वानङ्गीकारेऽपि क्षत्यभावः। न च व्यभिचारेऽवश्यमुपाधिरिति नियमभङ्गप्रसङ्ग इति वाच्यम्। व्यभिचारनिरूपकाधिकरणान्यत्वादेरेव अवश्योपाधित्वस्वीकारात् नियमभंगाऽनवकाशात्। तथापि शाकाद्याहारपरिणामजन्यमित्रातनये एव श्यामोत्पत्त्या शाकाद्याहारपरिणामजन्यत्वस्यैव मित्रातनयश्यामोत्पत्तिनियामकत्वात् तत्र शाकपाकजन्यत्वस्यैव मुख्योपाधित्वं नतु व्यभिचारनिरूपकाधिकरणान्यत्वादेः, एवं प्राचां मते बहिर्द्रव्यप्रत्यक्षमात्रे उद्भूतरूपस्य कारणतया तस्यैव मुख्योपाधित्वं, एवं प्रागभाववृत्तिप्रतियोगिताभिन्नप्रतियोगितासम्बन्धेन नाशं प्रति जन्यभावत्वेन कारणत्वात् भावत्वस्यापि कारणतावच्छेदकत्वात् तत्र तस्यैव मुख्योपाधित्वमिति प्राचीनैकदेशिमतानुसारेण तेषां लक्ष्यत्वम् अङ्गीकृत्यैव उपाधिलक्षणस्याऽव्याप्त्यभिधानं कृतमिति ध्येयम् ॥ अव्याप्तित्रयोद्धरणार्थं लक्षणार्थमाह-यद्धर्मावच्छिन्नेति। सामानाधिकरण्यसम्बन्धेन यद्धर्मविशिष्टं साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नसाध्यतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यं तद्धन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकधर्मवत्त्वे सति, तद्धर्मावच्छिन्नसाधनाऽव्यापकत्वम्=सामानाधिकरण्यसम्बन्धेन तद्धर्मविशिष्टं साधनतावच्छेदकताघटकसम्बन्धावच्छिन्नसाधनतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नसाधनतावच्छेदकसम्बन्धावच्छिन्नसाधनं तद्वन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकधर्मवत्त्वम् उपाधित्वम्-इत्यर्थः ॥ क्रमेण अव्याप्तीरुद्धरति-मित्रातनयेति। सामानाधिकरण्येन मित्रातनयत्वात्मकहेतुत्ववच्छिन्नश्यामत्वात्मकसाध्यस्य व्यापकं शाकपाकजन्यत्वं भवति, तादात्म्येन मित्रातनयत्वावच्छिन्नमित्रातनयत्वात्मकसाधनस्य अव्यापकं च भवतीति तत्र लक्षणसमन्वयः ॥ एवं-पक्षधर्मेति। पक्षस्य वायोर्धर्मो यो बहिर्द्रव्यत्वात्मकः सामानाधिकरण्येन तादृशबहिर्द्रव्यत्वावच्छिन्नं यत् साध्यं प्रत्यक्षत्वं पृथिवीजलतेजस्सु, वायोः प्रत्यक्षानङ्गीकारात्, तादशप्रत्यक्षत्वस्य व्यापकम् उद्भूतरूपवत्त्वम्=उद्भूतरूपं भवति, एवं सामानाधिकरण्येन बहिर्द्रव्यत्वविशिष्टप्रत्यक्षस्पर्शाश्रयत्वात्मकहेतोः वायावपि सत्त्वेन तस्य अव्यापकं च भवतीति तत्र लक्षणसमन्वयः ॥ अतो हेतौ बहिर्द्रव्यत्वविशिष्टाभिधानं लक्षणानुसारेण कृतम्, तदनुक्तावपि लक्षणसमन्वयात्। एवं ध्वंस इति। साधनं यत् जन्यत्वं

**बोध्यम्। सद्धेतौ तु एतादृशो धर्मो नास्ति यदवच्छिन्नस्य साध्यस्य व्यापकं तदवच्छिन्नस्य साधनस्य चाव्यापकं किञ्चित्स्यात्। व्यभिचारिणि तु उपाध्यधिकरणं यत्साध्याधिकरणं यच्चोपाधिशून्यं साध्यव्यभिचारनिरूपकमधिकरणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेरन्ततः सम्भवतीति ॥ १३८ ॥**

---

तद्विशिष्टविनाशित्वव्यापकं भावत्वं, तादात्म्येन जन्यत्वविशिष्टजन्यत्वाऽव्यापकं च, ध्वंसे जन्यत्वसत्त्वात् इति तत्र लक्षणसमन्वयः ॥ ननूक्तस्थलत्रयेऽपि 'तद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाऽव्यापकत्वमि'ति लक्षणेनैव निर्वाहे हेतौ तद्धर्मावच्छिन्नत्वोपादानं व्यर्थमिति चेन्न। वह्निमान् धूमादित्यादौ सामानाधिकरण्येन पर्वतत्वविशिष्टवह्निव्यापकत्वस्य महानसीयेतरवह्नौ सत्त्वात् धूम सामान्याऽव्यापकत्वसत्त्वाच्चोपाधित्वं महानसीयेतरवह्नेरापद्येत, यद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति तद्धर्मावच्छिन्नसाधनाऽव्यापकत्वमित्युक्तौ तु न सद्धेतोः सोपाधिकत्वाऽपत्तिरित्याशयेनाह—**सद्धेतौ त्विति**। वह्निमान् धूमादित्यादिस्थलीयहेतौ तु, एतादृशः=अनुपदं वक्ष्यमाणो धर्मो न मिलति, अप्रसिद्ध एवेत्यर्थः ॥ **यदवच्छिन्नस्य**=सामानाधिकरण्येन पर्वतत्वाद्यवच्छिन्नस्य, साध्यस्य वह्नेः, यो व्यापको महानसीयेतरवह्निः, तदवच्छिन्नस्य=सामानाधिकरण्येन पर्वतत्वविशिष्टस्य, धूमस्य, अव्यापको भवेत्, किन्तु व्यापक एव भवति। **किञ्चित्**=उपाधित्वेन अभिप्रेतं किञ्चिद्वस्तु नैव तादृशलक्षणाक्रान्तं भवतीति न सद्धेतुस्थलेऽतिव्याप्तिरिति भावः ॥ व्यभिचारिमात्रे लक्षणसमन्वयार्थं यद्धर्मपदग्राह्यम् अनुगतधर्ममाह—**व्यभिचारिणि त्विति**। 'धूमवान् वह्ने'रित्यत्र आर्द्रेन्धनसंयोगः उपाधिः, तादृशोपाधेरार्द्रेन्धनसंयोगात्मकस्य अधिकरणं साध्यस्य धूमस्य चाऽधिकरणं यन्महानसादिः, यच्चोपाधिशून्यम्=आर्द्रेन्धनसंयोगशून्यम् अयोगोलकं धूमात्मकसाध्यव्यभिचारनिरूपकाधिकरणम् अयोगोलकम्, तदन्यतरत्वं यद्धर्मपदेन सर्वत्र व्यभिचारिस्थले प्रसिद्धं, सामानाधिकरण्यसम्बन्धेन तद्विशिष्टस्य साध्यस्य धूमस्य व्यापकत्वम्, तादृशान्यतरत्वविशिष्टस्य वह्नेश्चाऽव्यापकत्वम्, **उपाधेः**—आर्द्रेन्धनसंयोगस्य, अन्यत्र व्यभिचारिस्थले तत्तदुपाधेश्च, **अन्ततः**—धर्मान्तराऽस्फूर्तौ सत्यां, प्रसिद्ध्यति लक्षणसमन्वयो निर्वहति चेत्यर्थः ॥ 'वायुः—प्रत्यक्षो—द्रव्यत्वादि'त्यत्र प्रत्यक्षत्वरूपसाध्याधिकरणमात्मा, उद्भूतरूपात्मकोपाधिशून्यं साध्यव्यभिचाराधिकरणं गगनं, तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वस्य उद्भूतरूपेऽभावात्—अव्याप्तिस्तद्वारणाय उक्तम्—उपाध्यधिकरणमिति। उद्भूतरूपाधिकरणपरमाण्वाकाशान्यतरत्वावच्छिन्नसाध्याऽप्रसिद्ध्या अव्याप्तिरादवस्थ्यमत—उक्तं—साध्याधिकरणमिति। उद्भूतरूपाधिकरणं यत्प्रत्यक्षत्वाधिकरणं घटादि तद्वृत्तिद्रव्यत्वात्मकधर्मावच्छिन्नसाध्यव्यापकत्वाऽभावात् अव्याप्तिवारणाय उक्तं—यच्चोपाधिशून्यं साध्यव्यभिचाराधिकरणमिति। तत्रापि साध्यव्यभिचाराधिकरणपरमाणुघटान्यतरत्वावच्छिन्नद्रव्यत्वात्मकसाधनव्यापकत्वात् अव्याप्तिस्तद्वारणाय उक्तम्—उपाधिशून्यमिति। तत्रैव उपाध्यधिकरणं साध्याधिकरणं घटः उपाधिशून्यम् अधिकरणम् आत्मा तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वाऽभावात् अव्याप्तिवारणाय उक्तं—साध्यव्यभिचाराधिकरणमिति। उद्भूतरूपाधिकरणं यत् प्रत्यक्षत्वाधिकरणं घटः यच्चोद्भूतरूपशून्यं प्रत्यक्षत्वाऽभावाधिकरणमतीन्द्रियरूपादि तदन्यतरत्वावच्छिन्नद्रव्यत्वात्मकसाधनाऽव्यापकत्वस्य उद्भूतरूपेऽभावात् अव्याप्तिः, अतः—साध्याभावाधिकरणमिति परित्यज्य—साध्यव्यभिचाराधिकरणमुक्तम्। तदर्थश्च—साधननिष्ठ—साध्यव्यभिचारनिरूपकाधिकरणत्वमिति ॥ १३८ ॥

अत एव लक्ष्यमप्युपाधिरूपमेतदनुसारेण दर्शयति–

सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः ।
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥ १३९ ॥

सर्वं इत्यादिना ॥ स्वसाध्येति ॥ स्वम्–उपाधिः, स्वं च साध्यं च स्वसाध्ये तयोर्व्यभिचारितेत्यर्थः ॥ १३९ ॥

व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम् ।

---

**अत एवेति ।** यद्धर्मावच्छिन्नत्वघटितनिरुक्तोपाधिलक्षणस्य मूलकाराऽभिमतत्वादेवेत्यर्थः ॥ लक्ष्यमपि=उपाधिस्वरूपमपि, एतदनुसारेण=निरुक्तलक्षणानुसारेण, दर्शयति–मूले **सर्वे** इति । साध्यसमानाधिकरणाः=साध्यवन्निष्ठाऽन्योन्याभावप्रतियोगितानवच्छेदकाः, साध्यव्यापका इति यावत् । ते सर्वे उपाधयः स्युः । ननु के ते ? इत्याकांक्षायामाह–**हेतोरि**ति । **येषाम्**=उपाधीनां, **हेतोरेकाश्रये**=यत्किञ्चिद्धेत्वधिकरणायोगोलकावच्छेदेन हेतौ वह्नौ, **स्वस्य**=उपाधेः—आर्द्रेन्धनसंयोगस्य व्यभिचारित्वम्, साध्यस्य–धूमस्य च व्यभिचारित्वम्, वर्तेत, तादृशसाध्यसमानाधिकरणा उपाधयो बोध्या इत्यर्थः । साध्याऽभावाधिकरणीभूतं यत् साधनाधिकरणं तन्निष्ठाऽभावप्रतियोगित्वे सति साध्यसमानाधिकरणा ये भवन्ति ते उपाधिलक्षणलक्ष्या इति समुदितार्थः ॥ वह्निमान् धूमादित्यत्र महानसत्वेऽतिव्याप्तिवारणाय–साध्याभावाधिकरणीभूतमिति । प्रतियोगित्वान्तमात्रविवक्षणे तत्रैव गगनादेरप्युपाधित्वापत्तिः स्यात् ॥ **यद्वा**–मूलकारिकायाः–'यादृशहेतुनिष्ठप्रकृतसाध्यनिरूपितव्यभिचारनिरूपकाधिकरणावच्छेद्या 'स्वसाध्ये'तिसमुदायघटकप्रत्येकधर्मावच्छिन्ननिरूपिता प्रकृतहेतुनिष्ठा व्यभिचारिता भवति, साध्यतावच्छेदकभिन्नतादृशधर्मावच्छिन्ना सर्वे साध्यसमानाधिकरणाः उपाधिलक्षणलक्ष्याः भवन्तीत्यर्थः ॥ 'अत्र–यादृशहेतुनिष्ठप्रकृतसाध्यनिरूपितव्यभिचारनिरूपकाधिकरणाऽवच्छेद्या'इत्यर्थपरक'**एकाश्रये**'इतिपदस्य मूलेऽनुपादाने 'वायुः प्रत्यक्षः,–द्रव्यत्वादित्यत्र द्रव्यत्वहेतोः आत्मावच्छेदेन आत्मभिन्नत्वव्यभिचारित्वात् आकाशाद्यन्तर्भावेण प्रकृतसाध्यव्यभिचारित्वात् साध्यतावच्छेदकभिन्नतादृशात्मभिन्नत्वत्वात्मकधर्मावच्छिन्नस्य साध्यसमानाधिकरणस्य साध्याऽव्यापकत्वेऽपि उपाधिलक्षणलक्ष्यत्वापत्तिः स्यात् । तदुपादाने तु द्रव्यत्वे आत्मावच्छेदेन आत्मभिन्नत्वव्यभिचारितायाः प्रत्यक्षत्वनिरूपितव्यभिचारनिरूपकाधिकरणाऽऽत्मात्मकैकाधिकरणाऽवच्छेद्यत्वाभावात् आत्मभिन्नत्वस्य उपाधिलक्षणलक्ष्यत्वाऽभावात् तत्र लक्षणाऽगमने क्षत्यभावादिति बोध्यम् ॥ **अन्ये तु**–यद्धेत्वधिकरणवृत्तितावच्छेदकत्वयत्साध्याभावव्याप्यतावछेदकत्वोभययद्धर्मावच्छिन्नप्रतियोगिताकाऽभावत्वं यद्धर्मावच्छिन्नाऽवच्छेदकताकप्रतियोगिताकभेदकत्वं वा भवति तत्तद्धर्मावच्छिन्नान्यतमत्वं तत्साध्यकतद्धेतुस्थलीयोपाधित्वम्, धूमवान् वह्नेरित्यत्र–अयोगोलके आर्द्रेन्धनसंयोगाऽभावस्य वृत्तित्वात् वह्न्यधिकरणायोगोलकवृत्तितावच्छेदकत्वस्य धूमाऽभावव्याप्यतावच्छेदकत्वस्य च सत्त्वात् तादृशोभयवत् आर्द्रेन्धनसंयोगाभावत्वं भवति तदवच्छिन्नस्य तत्रोपाधित्वमिति समन्वयः ॥ संयोगेन आर्द्रेन्धनाभावस्य आर्द्रेन्धनसंयोगाऽभावस्य तवाऽव्याप्यवृत्तित्वेन केवलान्वयितया तादृशाऽभावत्वस्य धूमाभावव्याप्यतावच्छेदकत्वाऽभावात् आर्द्रेन्धनसंयोगस्योपाधित्वानुपपत्तिवारणाय–'यद्धर्मावच्छिन्नाऽवच्छेदकताकप्रतियोगिताकभेदकत्वं वा'–इति पक्षान्तरानुसरणम् इति वदन्ति । **मुक्तावल्यां–स्वं च साध्यं चेति**–'स्वस्य साध्यमि'तिभ्रमवारणायोक्तमिति ध्येयम् ॥ १३९ ॥

उपाधेर्दूषकताबीजमाह—व्यभिचारस्येति। उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः। तथाहि—यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनैवोपाधिव्यभिचारेण साध्यव्यभिचारानुमानम्, यथा धूमवान्वह्नेरित्यादौ 'वह्निर्धूमव्यभिचारी तद्व्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादिति, व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात्। यत्र तु किञ्चिद्धर्मावच्छिन्नसाध्यस्य व्यापक उपाधिस्तत्र तद्धर्मवति उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम्। यथा 'स श्यामो मित्रातनयत्वादित्यादौ मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति। बाधानुन्नीतपक्षेतरस्तु साध्यव्यापकताग्राहकप्रमाणा-

---

मूले-व्यभिचारस्यानुमानमिति। उपाधेः—प्रयोजनं=फलं तु, स्वव्यभिचारितासम्बन्धेन साध्यव्यभिचारात्मकहेत्वाभासस्य अनुमितिः हेतुधर्मिका भवतीति बोध्यम्॥ तमेवार्थमाह—मुक्तावल्याम्—उपाधिव्यभिचारेणेति। उपाधिव्यभिचारात्मकहेतुना, हेतौ=हेत्वात्मके पक्षे, साध्यव्यभिचारात्मकसाध्यस्य अनुमितिर्भवतीत्यर्थः॥ उपाधेः शुद्धसाध्यव्यापकत्वेन विशिष्टसाध्यव्यापकत्वेन द्वैविध्यात् तत्र शुद्धसाध्यव्यापकमुपाधिं पृथक्कृत्य उपपादयितुमाह—यत्रेति। यत्र=यत्र वह्निहेतौ, शुद्धस्य=पर्वताऽयोगोलकान्यतरत्वाऽविशिष्टस्य, साध्यस्य व्यापकः उपाधिरुद्भाव्यते, तत्र=वह्न्यात्मकहेतौ, शुद्धेन=अन्यतरत्वाघटितेन उपाधिव्यभिचारात्मकहेतुना, प्रकृतसाध्यव्यभिचारस्य अनुमितिः भवतीत्यर्थः॥ उदाहरति—यथेति। 'धूमवान् वह्ने'—रित्यादिस्थले वह्निहेतुं पक्षीकृत्यानुमानाकारं दर्शयति—वह्निरिति। वह्निः पक्षः, धूमव्यभिचारित्वं साध्यम्। धूमव्यापकार्द्रेन्धनसंयोगात्मकोपाधिव्यभिचारित्वादिति हेतुः। ननु-'हेतुरस्तु साध्यं मास्त्विति'—व्यभिचारशंकासत्त्वेन अप्रयोजकम् उक्तानुमानमितिचेत्?, तादृशाशंकानिरासकः—'यदि व्याप्यव्यभिचारी न स्यात् व्यापकव्यभिचारी न स्यादि'तितर्कः उन्नेयः, इति दर्शयितुम्—आपाद्याभावम् आपादकाभावं च उल्लिखति—व्यापकव्यभिचारिण इति। अनेन आपाद्याभावः, व्याप्यव्यभिचारेति—आपादकाऽभावो बोध्यः॥ आर्द्रेन्धनसंयोगात्मकव्यापकस्य व्यभिचारी यो वह्निः स अवश्यम् आर्द्रेन्धनसंयोगव्याप्यधूमस्य व्यभिचारी भवतीत्यर्थः॥ विशिष्टसाध्यव्यापकोपाधिमुपपादयति—यत्र तु किञ्चिद्धर्मेति। यत्र हेतौ मित्रातनयत्वविशिष्टश्यामत्वस्य व्यापकः उपाधिः शाकपाकजत्वमुद्भाव्यते, तत्रत्ये मित्रातनयत्वात्मके हेतौ, तत्र तद्धर्मवति=मित्रातनयत्वात्मकतद्धर्मवन्मित्रातनयवृत्तित्वेन, शाकपाकजत्वात्मकोपाधिव्यभिचारेण, साध्यस्य श्यामत्वस्य व्यभिचारानुमितिर्भवतीति। तदुदाहरति—यथेति। सः=एकः पुत्रः, काको वा पक्षः। श्यामरूपं साध्यम्। मित्रातनयत्वादिति हेतुः। इत्यादौ=इत्यादिविशिष्टसाध्यव्यापकोपाधिकस्थलेषु। 'मित्रातनयत्वं पक्षः, श्यामत्वव्यभिचारीति साध्यम्=श्यामरूपाऽभाववद्वृत्तीति तदर्थः॥ मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति हेतुः,शाकपाकजत्वाऽभावाधिकरणमित्रातनयवृत्तित्वादिति तदर्थः॥ एवं 'प्रत्यक्षस्पर्शाश्रयत्वं, प्रत्यक्षत्वव्यभिचारि, बहिर्द्रव्ये रूपव्यभिचारित्वात्'इत्यप्युन्नेयम्। रूपाऽभाववद्बहिर्द्रव्यवृत्तित्वादिति हेत्वर्थः। एवं सर्वत्र बोध्यम्॥ तदेवं लक्ष्ये लक्षणसमन्वयं फलं च प्रदर्श्येदानीम् 'पक्षेतरत्वस्य-तादृशोपाधिलक्षणलक्ष्यतया उपाधित्वं मन्तव्यमित्याशंकायामाह—बाधानुन्नीतेति। बाधेन—पक्षे प्रकृतसाध्याभावनिश्चयवत्त्वेन प्रयोजकेन अन्यत्र अनुन्नीतः=साध्यव्यापकतया अनिर्णीतः, तादृशः-पक्षेतरः=पक्षभेदस्तु न उपाधिर्मन्तव्यः इत्यर्थः। कुतः?, इत्याकांक्षायां तत्र हेतुमाह—साध्यव्यापकतेति। प्रकृतसाध्यव्यापकत्वप्रकारक—तादृशपक्षेतरत्वविशेष्यकनिर्णयजनकस्य प्रमाणस्य=

**ऽभावात्स्वव्याघातकत्वाच्च नोपाधिः । बाधोन्नीतस्तूपाधिर्भवत्येव यथा वह्निरनुष्णः कृतकत्वादित्यादौ प्रत्यक्षेण वह्नेरुष्णत्वग्रहे वह्नीतरत्वमुपाधिः । यस्य तूपाधेः साध्यव्यापकता सन्दिह्यते स सन्दिग्धोपाधिः । पक्षेतरस्तु सन्दिग्धोपाधिरपि नोद्भावनी-**

सामग्र्यात्मकस्य अभावात्, पक्षे साध्याभावनिर्णयस्यैव पक्षेतरत्वे साध्यव्यापकतानिर्णायकत्वम्, प्रकृते तु पक्षे साध्यसन्देहात् पक्षे च पक्षेतरत्वस्याऽसत्त्वात साध्यव्यापकत्वाऽनिर्णयेन पक्षेतरत्वस्योपाधिलक्षणाऽनाऽक्रान्तत्वादिति भावः ॥ ननु पक्षे साध्यसन्देहेन पक्षेतरत्वे साध्यव्यापकत्वसन्देहात् साध्यव्यापकत्वादिघटितलक्षणसन्देहाच्च पक्षेतरत्वस्य सन्दिग्धोपाधित्वमावश्यकमित्यतआह–**स्वव्याघातकत्वाच्चेति** । तथा सति स्वस्य=उपाधिमात्रस्य, दूषकताव्याघातकत्वापत्तिः स्यादित्यर्थः । बाधानुन्नीतपक्षेतरत्वस्य सन्दिग्धोपाधित्वे तु सकलानुमानेषु एतादृशोपाधिसंभवेन सदनुमानमात्रोच्छेदापत्त्या सदनुमानान्तर्गते 'हेतुः साध्यव्यभिचारी–उपाधिव्यभिचारित्वा'दित्यनुमानेऽपि पक्षेतरत्वस्य उपाधित्वसंभवात् एतादृशदूषकताबीजकानुमानस्याऽप्युच्छेदेन तदधीनायाः उपाधौ दूषकताया अपि विलोपेन उपाधिरेव निरर्थकतया अनङ्गीकर्तव्यतामापद्येतेति भावः ॥ अथ बाधोन्नीतं पक्षेतरत्वं तु उपाधिर्भवतीत्याह–**बाधोन्नीतस्त्विति** । बाधेन=पक्षे निश्चितसाध्याभाववत्त्वेन प्रयोजकेन, महानसादौ **उन्नीतः**=साध्यव्यापकतया निर्णीतं यत् पक्षेतरत्वं तत्तु उपाधिर्भवत्येवेत्यर्थः । तदुदाहरति–**यथेति** । वह्निः पक्षः, अनुष्णत्वं साध्यम्, तच्च वह्नौ प्रत्यक्षप्रमाणेन बाधितम्, तथाच–वह्नौ अनुष्णत्वाभावनिर्णयात्, अन्यत्र जलादौ अनुष्णत्वव्यापकं वह्नीतरत्वं भवतीति वह्नीतरत्वं तत्रोपाधिर्भवितुमर्हतीत्यर्थः, किन्तु तत्र बाधस्य प्रथमोपस्थितत्वात् बाधस्यैव दोषत्वम् इति बोध्यम् ॥

ननु–धूमवान् वह्नेरित्यादौ आर्द्रेन्धनादौ कदाचित् दोषवशात् साध्यव्यापकत्वविशिष्टसाधनाऽव्यापकत्वात्मकोपाधित्वसंशये सति हेतौ उपाधिव्यभिचारसन्देहात् उपाधिव्यभिचारात्मकलिङ्गनिर्णयाऽभावेन हेतौ साध्यव्यभिचारनिर्णयात्मकानुमित्यसंभवेन तत्स्थलीयोपाधेर्दूषकत्वाऽनुपपत्तिरित्याशंकायामाह–**यस्य तूपाधेरिति** । उपाधित्वाश्रयस्य यस्य, क्वचित् दोषवशात् साध्यव्यापकत्वं साधनाव्यापकत्वं वा सन्दिह्यते, सः सन्दिग्धोपाधिः स्वीकार्यः, तत्र उपाधित्वसंशयोत्तरं वह्न्यात्मकहेतौ व्यभिचारितासम्बन्धेन उपाधिव्यभिचारसंशयस्याऽऽवश्यकत्वेन 'हेतुः सन्दिग्धसाध्यव्यभिचारवान्, सन्दिग्धसाध्यव्यापकोपाधिव्यभिचारवत्त्वादि'ति सन्दिग्धव्यभिचारानुमितेर्जनकत्वादितिभावः ॥ ननु तर्हि तुल्यन्यायेन बाधानुन्नीतं पक्षेतरत्वमपि सन्दिग्धोपाधितया स्वीकार्यमित्याशंकायामाह–**पक्षेतरस्तु**–इति । साध्यव्यापकत्वात्सन्देहाधीनसन्दिग्धोपाधित्वावच्छिन्नं पक्षेतरत्वं न दूषकत्वेन व्यवहर्तव्यमित्यर्थः । तत्र हेतुमाह–**कथकेति** । कथकानाम् भाष्यकारप्रभृतीनां 'अमुको दोषत्वेन स्वीकार्यः अमुकश्च ने'तिसम्प्रदायस्य अनुरोधात्=कृतनियमादित्यर्थः । तथाहि–यत्र साध्यहेत्वोः कारणकार्यभावव्यभिचारशंकाविघटकः व्यापकव्याप्यभावव्यभिचारशंकाविघटको वा तर्काऽवतरः प्रमाणसिद्धः तादृशतर्काऽभावविशिष्टोपाधिव्यभिचारस्य हेतौ साध्यव्यभिचारानुमापकत्वं न त्वन्यथा, इति कृतनियमात्, सद्धेतुस्थले पर्वतेतरत्वादौ वह्न्यादिसाध्यव्यापकत्वसन्देहाधीनोपाधित्वसन्देहेन हेतावपि उपाधिव्यभिचारसंशयसंभवेऽपि तादृशोपाधिव्यभिचारसंशयस्य धूमादौ वह्न्यादिव्यभिचारशंकानिवर्तकतर्कविरहविशिष्टस्यैव साध्यव्यभिचारसन्देहजनकतया धूमवह्न्योः कार्यकारणभावग्रहात्मकाऽनुकूलतर्कसत्त्वेन वह्निव्यभिचारित्वसंशयजननाऽसमर्थात् पक्षेतरत्वात्मकः सद्धेतुस्थलीयः संदिग्धोपाधिर्न उद्भावनीय इति भावः ॥ सत्प्रतिपक्षोन्नायकत्वेन उपाधेर्दूषकतावादिनां

यः, कथकसम्प्रदायानुरोधादिति। केचित्तु सत्प्रतिपक्षोत्थापनमुपाधिफलम्। तथाहि-अयोगोलकं धूमवद्वह्नेरित्यादावयोगोलकं धूमाभाववदार्द्रेन्धनसंयोगाभावादिति सत्प्रतिपक्षसम्भवात्। इत्थं च साधनव्यापकोऽपि क्वचिदुपाधिः 'यथा करका पृथ्वी कठिनसंयोगवत्त्वादित्यादावनुष्णाशीतस्पर्शवत्त्वम्। न चात्र स्वरूपासिद्धिरेव दूषणमिति वाच्यम्, सर्वत्रोपाधेर्दूषणान्तरसाङ्कर्यात्। अत्र च साध्यव्यापकः पक्षावृत्ति रुपाधिरित्याहुः॥

**शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥ १४० ॥**

---

प्राचीनैकदेशिनां मतमाह-**केचित्त्विति**। प्राचीनैकदेशिनस्तु सत्प्रतिपक्षोत्थापनम्=पक्षे स्वाऽभावलिङ्गकसाध्याऽभावानुमितिमात्रम् उपाधेः फलं-दूषकत्वम् आहुः। तदुपपादयति-**तथाहीति**। अयोगोलकं पक्षः। धूमः साध्यः, वह्निः हेतुः। तत्र धूमव्यापकोपाधिना आर्द्रेन्धनसंयोगात्मकेन स्वाऽभावद्वारा साध्याभावः साध्यते इति तदाह-'**अयोगोलकं**, धूमाभाववत्,-आर्द्रेन्धनाऽभावादिति। **सत्प्रतिपक्षसंभवादिति**। प्रथमानुमाने आर्द्रेन्धनस्य सत्प्रतिपक्षोद्भावकत्वेनाऽऽवश्यकत्वादित्यर्थः॥ **इत्थं चेति**। सत्प्रतिपक्षोत्थापकत्वेन दूषकत्वाऽवश्यकत्वे चेत्यर्थः॥ **साधनव्यापकोऽपीति**। यथा 'साध्यव्यापकः साधनाऽव्यापकश्च'उपाधिः, तथा क्वचित् स्थले 'साध्यव्यापकः साधनव्यापकश्चापि उपाधिः संभवतीत्यर्थः॥ साधनव्यापकोपाधिस्थलमाह-यथा **करकेति**। करका=जलीयपाषाणः पक्षः, पृथिवीत्वं साध्यम्, कठिनसंयोगवत्त्वं समवायेन हेतुः। तत्र सत्प्रतिपक्षोन्नायकम् अनुष्णाशीतस्पर्शवत्त्वम् उपाधिः, तस्य पृथिव्यां पृथिवीत्वव्यापकत्वात् कठिनसंयोगव्यापकत्वाच्च। ननु करकात्मकजलेऽपि कठिनसंयोगवत्त्वात् न साधनव्यापकत्वमिति चेन्न, करकान्तर्गतपार्थिवभागे एव तत्स्वीकारात्, जले तु तद्भ्रान्तेः। तथा च-'करका,-पृथिवीत्वाभाववान् अनुष्णाशीतस्पर्शाऽभावादि'ति सत्प्रतिपक्षोन्नायकता बोध्येति भावः॥ ननु तत्र स्वरूपासिद्धिः बाधः सत्प्रतिपक्षश्चेति दूषणानि वर्तन्ते, इति तादृशदोषैरेव हेतोर्दुष्टत्वसंभवे साधनव्यापकसाधारणमुपाधिलक्षणं स्वीकृत्य तादृशोपाधिनाऽपि हेतोर्दुष्टत्वांगीकारो निष्प्रयोजन इत्याशंकते-**न चात्रेति**। अत्र=कठिनसंयोगवत्त्वहेतौ, स्वरूपाऽसिद्धिः=पक्षे हेत्वभाव एव, दोषः स्वीक्रियतां, न तूपाधिर्दूषणमितिभावः॥ समाधत्ते-**सर्वत्रेति**। सर्वत्रोपाधिस्थले, उपाधिमात्रस्य, दूषणान्तरसांकर्यात्=दूषणान्तरव्यभिचारादिसमवहितत्वात्, तथा च दूषणान्तरसांकर्यस्याऽपरिहार्यत्वात् तद्भिया उपाधेर्दूषकत्वाऽनङ्गीकारो नोचितः, 'उपधेयसंकरेऽप्युपाधेरसंकरादि'तिन्यायेन प्रकृतहेतौ उपाधिरूपदोषाङ्गीकारोऽप्यावश्यक इति भावः॥ ननु उपाधेः साधनव्यापकत्वे पूर्वोक्तं 'साध्यव्यापकत्वे सति साधनाऽव्यापकत्वमि'त्युपाधिलक्षणमपि तन्मतेऽव्याप्तिग्रस्तं स्यादित्यतः तन्मतानुसारेण लक्षणमाह-**अत्र चेति**। उपाधेः सत्प्रतिपक्षोन्नायकत्वेन दूषकत्वपक्षे इत्यर्थः। **साध्यव्यापक इति**। साध्यव्यापकत्वे सति पक्षाऽवृत्तित्वम् उपाधिलक्षणमित्यर्थः॥ तथा च तत्र समन्वय इति भावः॥ एतल्लक्षणमपि तत्तत्स्थलानुरोधेन पूर्ववत्परिष्करणीयम्॥ अथ-'पर्वतो-धूमवान्-वह्ने'रित्यादौ आर्द्रेन्धनसंयोगादौ, घटो द्रव्यं-सत्त्वादित्यादौ गुणान्यत्वादौ चाऽव्याप्तिः, तेषां पक्षाऽवृत्तित्वाऽभावात्। किञ्च-उपाधेः सत्प्रतिपक्षोन्नायकत्वं न मणिकारानुमतम्, 'यदभावो व्यभिचारविरोधी तत्त्वमिति'त्युपाधिलक्षणकरणात्, अन्यथा 'यदभावः साध्यविरोधी तत्त्वमिति' लक्षणकरणापत्तेरित्यस्वरसाद् 'आहुरि'त्युक्तम् इति ध्येयम्॥

अनुमानगतार्थत्वादिति वैशेषिकं मतम्।
तन्न सम्यग्विना व्याप्तिबोधं शब्दादिबोधतः ॥ १४१ ॥

शब्दोपमानयोरिति। वैशेषिकाणां मते प्रत्यक्षमनुमानं च प्रमाणम्। शब्दोपमानयोस्त्वनुमानविधयैव प्रामाण्यम्। तथाहि–'दण्डेन गामानये'त्यादिलौकिकपदानि यजेतेत्यादिवैदिकपदानि वा, तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि, आका

मूले–शब्दोपमानयोरिति। शब्दप्रमाणस्य उपमानप्रमाणस्य च अनुमानप्रमाणतः पृथक् प्रमाणत्वं न एव इष्यते, अनुमानेऽन्तर्भावादिति–वैशेषिकदर्शनकारकणादर्पिमतमित्यर्थः॥ अत्र 'उपमानशब्दयो'रिति वक्तुमुचितत्वेऽपि वैशेषिकदर्शनोक्तरीत्या अत्र शब्दोपमानयोरित्युक्तत्वान्न दोषावहत्वमिति बोध्यम्॥ तन्नेति। सम्यक्=युक्तियुक्तं तन्न भवति, व्याप्तिज्ञानं विना, शब्दादिबोधतः=शब्दजन्यबोधस्य उपमानजन्यबोधस्य चोपपत्तेरित्यर्थः॥ मूलार्थमनुवदति–वैशेपिकाणामिति। काणादमते प्रत्यक्षम् अनुमानं चेति द्वयमेव प्रमाणम्=प्रमाकरणत्वेनाऽङ्गीकृतम्। नैयायिकाऽभिमतस्य शब्दस्य=आप्तवाक्यस्य, उपमानस्य=सादृश्यज्ञानस्य, च, अनुमानविधयैव=अनुमितिकरणत्वेनैव, प्रामाण्यम्=प्रमाणत्वम्, न तु शाब्दबोधकरणत्वेन उपमितिकरणत्वेन, चेत्यर्थः॥ तत्र शब्दस्य अनुमानेऽन्तर्भावं दर्शयति–दण्डेनेति। वैशेपिकमते 'घटोऽस्ति घटमानये'त्यादिशब्दश्रवणोत्तरं पदवृत्त्या पदार्थानां स्मरणे सति तदुत्तरं तात्पर्यज्ञानविषयोभूतो यः स्मारितः पदार्थानां परस्परान्वयात्मकसंसर्गः तद्विषयिणी या नैयायिकाभिप्रेतशाब्दबोधात्मिका प्रमा सा अनुमित्यात्मिकैव, नान्या, तथा च तादृशप्रमाणं शब्दात्मकप्रमाणं न मन्तव्यमित्याशयः। "दण्डेन गाम् आनय'–इति लौकिकपदानि" पक्षः,=तावदन्यतमत्वेन पक्षत्वम्। प्राभाकरमते लौकिकशब्दस्यानुवादकत्वं वैदिकशब्दस्यैव प्रमाणत्वमिति तन्मतानुसारेण वैदिकशब्दं पक्षत्वेन दर्शयति–'यजेतेत्यादिवैदिकपदानि वेति। 'स्वर्गकामो यजेते'त्यादिपदानि' तावदन्यतमत्वेन वा पक्ष इत्यर्थः॥ तात्पर्येत्यादिसाध्यम्। अभ्रान्त'वक्तृतात्पर्यस्य विषयीभूतो यः, स्मारितः शक्तिलक्षणान्यतरवृत्त्योपस्थापितः। पदार्थानां परस्परसंसर्गः तस्य प्रमा=यथार्थज्ञानं तत्पूर्वकाणि, प्रयुज्यन्ते इति साध्यार्थः॥'घटमानये'त्यादौ घटकर्मत्वयोः कर्मत्वानयनयोश्च तात्पर्याऽविषयकालिकसंसर्गज्ञानपूर्वकत्वसिद्धिप्रयुक्ताऽर्थान्तरवारणाय–साध्यकोटिप्रविष्टसंसर्गे तज्ज्ञाने वा तात्पर्यविषयत्वविशेषणम्। अस्मारितपदार्थसंसर्गज्ञानपूर्वकत्वमादाय अर्थान्तरवारणाय–पदार्थे स्मारितत्वं विशेषणम्। 'घटसंयोगवद्भूतल'मितिपदानां तात्पर्यज्ञानविषयस्मारितसंयोगसंसर्गप्रमापूर्वकत्वमादाय अर्थान्तरवारणाय 'पदार्थे'ति, तथा च अत्र संयोगस्य पदार्थत्वात् पदार्थयोः संसर्गत्वेनाऽपतितत्वात् न दोषः। तादृशपदार्थज्ञानपूर्वकत्वमादाय सिद्धसाधनवारणाय अर्थान्तरवारणाय च–संसर्गेति। वाक्ये कण्ठताल्वाद्यभिघातस्य साक्षाद्धेतुतया तादृशप्रमाजन्यत्वाऽभावात् बाधवारणाय जन्यत्वमपहाय प्रयोजकत्वार्थकं 'पूर्वकत्वं' निवेशितम्। आकांक्षादिमत्पदकदम्बत्वादिति हेतुः। आकांक्षायोग्यतासत्तिमत्पदसमुदायत्वादित्यर्थः। 'घटः कर्मत्वमि'त्यादौ व्यभिचारवारणाय–आकांक्षेति। 'वह्निना सिञ्चती'त्यत्र व्यभिचारवारणाय–योग्यतेति। तद्वत्त्वं पदे स्वाश्रयपदार्थशक्तिमत्त्वसम्बन्धेन बोध्यम्। 'नीलो घटो द्रव्यं पट'इत्यत्र व्यभिचारवारणाय–आसत्तिमदिति। 'घटमानये'तिवाक्यैकदेश आकांक्षादिमत्पदत्वात्मकहेतुसत्त्वात्–व्यभिचारस्तद्वारणाय–पदकदम्बत्वादित्युक्तम्। तादृशपदसमुदायघटितवाक्यत्वादित्यर्थः॥ 'घटमानये'तिपदकदम्बः दृष्टान्तः॥ ननु–एतादृशरीत्या पदविशेष्यकसंसर्गप्र-

क्षादिमत्पदकदम्बत्वाद्, घटमानयेतिपदकदम्बवत्'। यद्वा 'एते पदार्थाः, मिथः संसर्गवन्तः, योग्यतादिमत्पदोपस्थापितत्वात्, तादृशपदार्थवत्'। दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरिति ॥

---

मापूर्वकत्वानुमित्या न शाब्दबोधाऽपलापसम्भवः, तस्य पदार्थविषयकस्यैव नैयायिकानुभवसिद्धस्य निरुक्तानुमित्या चारितार्थ्याऽसंभवादिति चेन्न। लिङ्गोपहितलैङ्गिकभानवत् पदादिविषयकत्वमपि शाब्दबोधस्य नैयायिकैकदेशिमतसिद्धमिति तन्मतेन उक्तानुमानकथनादिति। एतादृशमतस्यैकदेशित्वेन तत्राऽनिर्भरात् सिद्धान्तपक्षमवलम्ब्य पदार्थविषयकस्यापि शाब्दबोधस्याऽनुमित्या चारितार्थ्यं व्यवस्थापयितुम् अनुमानान्तरमाह–यद्वेति। 'एते पदार्थाः' पक्षः। घटकर्मत्वाऽऽनयनादिपदार्थाः इत्यर्थः, बहुवचनं संभवस्थलाभिप्रायेण। एतत्पदम् उदासीनपदार्थानां पक्षतावारणाय, अन्यथा स्वरूपाऽसिद्ध्यापत्तेः। **'मिथः संसर्गवत्त्वं'** साध्यम्। प्रत्येकरूपेण संसर्गवन्त इत्यर्थः। कर्मत्वम् आधेयतासम्बन्धेन घटवत्, आनयनं निरूपकतासम्बन्धेन घटकर्मतावत्, कृतिः अनुकूलतासम्बन्धेन घटकर्मकानयनवती, चैत्रः आश्रयतासम्बन्धेन घटकर्मकाऽऽनयनाऽनुकूलकृतिमान्–इत्येवं संसर्गवन्त इत्यर्थः। अतात्पर्यविषयकालिकादिसम्बन्धेन घटादिमत्त्वसिद्धिमादाय अर्थान्तरवारणाय–संसर्गे तात्पर्यविषयत्वं देयम्। कर्मत्वं सम्बन्धसामान्येन घटवदितिज्ञानस्यापि सम्बन्धत्वरूपसामान्यधर्मपुरस्कारेण तात्पर्यविषयाऽऽधेयतासम्बन्धेन घटप्रकारकतया तादृशसिद्धिप्रयुक्ताऽर्थान्तरवारणाय–तत्तद्विशेषसम्बन्धतावच्छेदकधर्मावच्छिन्नपरस्परसम्बन्धग्रहणार्थं–मिथःपदम्, अत्र–'कर्मत्वादिकम्–अभ्रान्तप्रयोक्तृतात्पर्यविषयवर्तमानग्रहविषयत्वोपलक्षिताधेयतादिसम्बन्धेन घटादिमद्'इति-प्रतिज्ञावाक्यार्थः फलितो बोध्यः॥

**योग्यतादिमत्पदोपस्थापितत्वादि'**–ति हेतुः। योग्यतावदर्थवद्घट–अम्–इत्यादिपदशक्तिलक्षणान्यतरस्मारितत्वादित्यर्थः॥ क्रियार्थे कारकार्थानुमापकहेतुघटकपदे आकांक्षावत्त्वविशेषणस्य व्यर्थत्वात् बाधितत्वाच्च क्रियाकारकपदार्थपक्षकस्थलाभिप्रायेण आकांक्षाऽघटितहेतुकरणम्। यदि तु प्रत्ययार्थकर्मत्वप्रकृत्यर्थघटादिपक्षकस्थलाभिप्रायेण तु आकांक्षावत्त्वं देयमेवेति॥ 'वह्निना सिञ्चती'त्यत्र व्यभिचारवारणाय–योग्यतेति। 'नीलो घटो द्रव्यं पट'इत्यत्र व्यभिचारवारणाय–आसत्तिमत्त्वम् आदिपदेन ग्राह्यम्। तादृशपदोपस्थापितत्वं च तादृशपदनिरूपितवृत्तिज्ञानजन्योपस्थितिविशेष्यत्वं, तेन 'घटमि'त्यादिवाक्यघटका–ऽम–ादिपदात् समवायेन आकाशस्य स्मृतत्वेऽपि तत्र निरुक्तसाध्याभावेऽपि च न व्यभिचारः। एवं–साध्यघटकतात्पर्यविषयबोधसमानाकारकबोधौपयिकत्वमपि हेतुघटकाकांक्षादिविशेषणं कर्तव्यम्, तेन 'घटः कर्मत्वम्'इत्यादिवाक्यघटकघटादिपदसुप्पदयोः एकत्वप्रकारकघटविशेष्यकबोधौपयिकाकांक्षावत्त्वेऽपि, वह्निना सिञ्चतीत्यादिवाक्यस्य वह्नीयं करणत्वं सेकानुकूलकृतिरित्याद्यन्वयबोधौपयिकयोग्यतावत्त्वेऽपि, नीलो घटो द्रव्यं पट इत्यादिवाक्यघटकनीलघटपदयोरपि सुपा सह आसत्तिमत्त्वेऽपि, निरुक्तहेत्वधिकरणतत्तदर्थेषु विवक्षितसाध्याभावसत्त्वेऽपि च, न व्यभिचारः, तादृशाऽनाकांक्षादिवाक्यानां तादृशबोधौपयिकाकांक्षावत्पदत्वाऽभावेन पक्षीभूततत्तदर्थेषु तादृशपदघटितहेतोरभावादिति ध्येयम्॥ **'तादृशपदार्थवदि'ति** दृष्टान्तः। 'पटमानये'तिवाक्यबोध्यपटकर्मत्वादिपदार्थवदित्यर्थः॥ ननु दृष्टान्ते कथं साध्यप्रसिद्धिरित्यत आह–**दृष्टान्तेऽपीति**। पटकर्मत्वादावपीत्यर्थः। **दृष्टान्ताऽन्तरेण**=शरावमानयेत्यादिवाक्यबोध्यशरावकर्मत्वादिरूपार्थदृष्टान्तेन॥ **साध्यसिद्धिः**=मिथःसंसर्गवत्त्वात्मकसाध्यानुमितिः सम्पादनीयेति॥ नन्वेवं सति 'दृष्टान्ते साध्यानुमितेः दृष्टान्तान्तरसाध्यप्रसिद्ध्यधीनत्वात्, तस्याश्च पुनः

**एवं गवयव्यक्तिप्रत्यक्षानन्तरं 'गवयपदं, गवयत्वप्रवृत्तिनिमित्तकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्। असति च वृत्त्यन्तरे वृद्धैर्यत्र यत्प्रयुज्यते तत्र तत्तत्प्रवृत्तिनिमित्तकम्, यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम्। यद्वा 'गवयपदं सप्रवृत्तिनिमित्तकं, साधुपदत्वादि'त्यनुमानेन पक्षधर्मताबलाद्गवयत्वप्रवृत्तिनिमित्तकत्वं सिध्यति।**

---

दृष्टान्तान्तरसाध्यसिद्ध्यधीनत्वमित्येवमनवस्थेति अनुमानान्न क्वापि साध्यसिद्धिर्निर्वहेदित्यतः शब्दस्य पृथक् प्रामाण्यं स्वीकार्यमिति चेन्न॥ 'भूतले घट'इतिप्रयोगसमये यत्र 'भूतले घटास्तित्वं' प्रत्यक्षतोऽवगतं तत्र भूतलास्तित्वविशिष्टघटात्मकेऽर्थे प्रत्यक्षात्मकसाध्यसिद्धिसम्भवात् सर्वत्र तद्दृष्टान्तेन अनवस्थायाः प्रशमनात्॥

**अथ-उपमानस्य** अनुमानान्तर्भावमुपपादयति-**एवं गवयेति**। गवयपदे पक्षे साध्यहेत्वोरप्रसिद्धिशंकानिरासाय-उक्तं-**गवयप्रत्यक्षाऽनन्तरमिति**। गवयत्वप्रकारकगवयविशेष्यकप्रत्यक्षानन्तरमित्यर्थः। एतादृशप्रत्यक्षबलेन प्रत्यक्षकर्तुः साध्यहेत्वोरप्रसिद्धिशंकैव नोदेति इति भावः॥ गवयपदं तद्व्यक्तित्वेन पक्षः। गवयत्वप्रवृत्तिनिमित्तकमिति-साध्यम्,-गवयत्वावच्छिन्नपिण्डनिष्ठशक्तिनिरूपकमित्यर्थः। 'वृत्त्यन्तरेऽसति वृद्धैस्तत्र प्रयुज्यमानत्वादि'ति हेतुः। वृत्त्यन्तरे असति=गवयत्वविशिष्टपिण्डादिविषयकलक्षणाशून्यत्वे सति, वृद्धैः=आप्तैः, तत्र=गवयत्वविशिष्टपिण्डे, प्रयुज्यमानत्वात्=कृतप्रयोगत्वात् इत्यर्थः॥ शक्तिभ्रमाऽजन्यलक्षणाग्रहाऽजन्यगवयत्वावच्छिन्नविषयकशाब्दबोधनिरूपितोपस्थितिनिष्ठजनकतानिरूपितजन्यतासम्बन्धावच्छिन्नावच्छेदकतानिरूपितविषयित्वसम्बन्धावच्छिन्नाऽवच्छेदकतावद्वृत्तिमत्त्वादिति हेतुफलितार्थो बोध्यः॥ तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानतदुपस्थितेर्हेतुत्वस्य सर्वानुमतसिद्धत्वाऽभिप्रायात्॥ 'गवयकर्दमस्य प्रक्षालनाभिप्रायेण प्रयुक्तं 'गवयं प्रक्षालयेति' गवयकर्दमे लाक्षणिकगवयपदे व्यभिचारवारणाय-असति वृत्त्यन्तरे इति लक्षणाग्रहाऽजन्यत्वार्थकम्। गवयपदस्य बहुशाखशृंगमृगादौ शक्तिभ्रमवत्पुरुषेण प्रयुक्तस्य हेतुमत्त्वेऽपि साध्याभाववत्त्वाद्व्यभिचारस्तद्वारणाय-वृद्धैरिति=आप्तैः, शक्तिभ्रमाऽजन्यत्वार्थकम्॥ गवयपूतलिकादौ गवयचित्रे वा प्रयुक्ते गवयपदे व्यभिचारवारणाय-तत्रेति,-गवयत्वजात्यवच्छिन्नप्रसिद्धपशुपिण्डमुद्दिश्येत्यर्थकम्। उक्तानुमाने सामान्यमुखीं व्याप्तिमाह-**असति चेति**। लक्षणादिशून्यत्वे सति यत्पदम् आप्तैः यत्रार्थे उच्चार्यते तत् पदं तत्रार्थे शक्तिमद्भवतीत्यर्थः। पक्षधर्मताबलाच्च विशेषभानम्, नातो दृष्टान्ताऽसिद्धिबाधान्यतरम्। सामान्यमुखीव्याप्तौ दृष्टान्तमाह-**यथा गोपदं गोत्वप्रवृत्तिनिमित्तकमिति**। गोपदे वृद्धव्यवहारेण शक्तिग्रहनिर्णयेन दृष्टान्तत्वोपपत्तिः, नातो 'गोपदे गोत्वावच्छिन्नशक्तत्वानुमानात् प्राक् साध्यनिर्णयाऽभावात् कथं दृष्टान्तत्वमिति शंकाऽवकाशः॥ **इदमपि बोध्यम्**-गवयप्रत्यक्षाऽनन्तरं, "गवयत्वविशिष्टं,-गवयपदशक्यम्,—गवयपदनिरूपितलक्षणाऽशून्यत्वे सति गवयपदनिरूपिताऽभ्रान्तसमवेतवृत्तिज्ञानजन्योपस्थितिविशेष्यत्वात्, यद्धर्मावच्छिन्नं यत्पदनिरूपितलक्षणाशून्यत्वे सति यत्पदनिरूपिताऽभ्रान्तसमवेतवृत्तिज्ञानजन्योपस्थितिविशेष्यं भवति तद्धर्मावच्छिन्नं तत्पदशक्यं यथा गोत्वावच्छिन्नं गोपदशक्यमि'त्यनुमानात् गवयत्वावच्छिन्ने गवयपदशक्यतानुमितिरपीति॥ **अथ**-उक्तानुमानं यत्तदर्थयोरनुगतत्वमभ्युपगम्योक्तम्, तयोरतथात्वे तु आह-**यद्वेति**। गवयपदं पक्षः, सप्रवृत्तिनिमित्तकं साध्यम्,-किंचिदर्थनिरूपितशक्तिमदित्यर्थः। साधुपदत्वादिति हेतुः,-किंचिद्विषयकबोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावत्पदत्वादित्यर्थः। वस्तुतस्तु-पदत्वादित्येव वक्तव्यम्, वर्णत्वादिति तदर्थः, साधुपदं तु वर्णमात्रस्य किंचिद्धर्मावच्छिन्नशक्तत्वद्योतनायेति

तन्मतं दूषयति-तन्न सम्यगिति। व्याप्तिज्ञानं विनापि शाब्दबोधस्यानुभवसिद्धत्वात्।नहि सर्वत्र शब्दश्रवणानन्तरं व्याप्तिज्ञाने प्रमाणमस्तीति। किञ्च सर्वत्र शब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोध एव किं न स्वीक्रियतामिति ध्येयम् ॥ १४० ॥ १४१ ॥

त्रैविध्यमनुमानस्य केवलान्वयिभेदतः।
द्वैविध्यं तु भवेद् व्याप्तेरन्वयव्यतिरेकतः॥ १४२ ॥
अन्वयव्याप्तिरुक्तैव व्यतिरेकादिहोच्यते।

---

ध्येयम् ॥ तादृशानुमानेन हेतोः पक्षधर्मताबलात् 'गवयत्वप्रवृत्तिनिमित्तकत्वं गवयपदोद्देश्यकानुमितौ भासते इति भावः ॥ तथा च सर्वत्र-उपमानजन्यबोधस्यानुमितित्वेनैव निर्वाहे उपमितिकरणतया उपमानस्य पृथक् प्रमाणत्वकल्पनमनुचितमिति ध्येयम् ॥

तन्मतमिति। वैशेषिकमतं दूषयतीत्यर्थः। व्याप्तिज्ञानं विनापीति। उक्तानुमानचतुष्टयस्थलेऽपि हेतुधर्मिकसाध्यनिरूपितव्याप्तिज्ञानशून्यकालेऽपि,गोकर्मकाऽऽनयनानुकूलकृतिमानित्यादिशाब्दबोधस्य 'गवयो गवयपदवाच्य'-इत्युपमितेश्च सर्वानुभवसिद्धत्वात्। तथा च व्यतिरेकव्यभिचारात् शाब्दबोधे उपमितौ च व्याप्तिज्ञानस्य न कारणत्वमित्यतः शब्दः उपमानं च प्रमाणान्तरमिति भावः॥ ननु व्याप्तिज्ञानं विना शाब्दबोधोऽसिद्धः, तथा च यत्रानुभूयमानः शाब्दबोधस्तत्रापि व्याप्तिज्ञानं कल्पनीयमित्यत आह—नहीति। गामानयेति-शब्दश्रवणाऽनन्तरं नहि सर्वत्र=अनुभूयमानगोकर्मकाऽऽनयनानुकूलकृतिमानित्यादिबोधपूर्वक्षणे, व्याप्तिज्ञानकल्पकप्रमाणमस्ति, तथा च-सर्वत्र व्याप्तिज्ञानकल्पनायां प्रमाणाऽभावात् व्यभिचारदुर्वारत्वात् व्याप्तिज्ञानं न कारणमिति भावः ॥ ननु-अनुमितिरूपकार्याऽन्यथाऽनुपपत्तिरेव प्रामाणमित्याशंकां प्रतिबन्दीमुखेन परिहरति-किञ्चेति। सर्वत्र शाब्दबोधप्राक्क्षणे यदि अनुमित्यन्यथाऽनुपपत्त्या व्याप्तिज्ञानं कल्प्यते तदा तुल्ययुक्त्या शाब्दप्रमाऽन्यथाऽनुपपत्त्या सर्वत्रानुमितिप्राक्क्षणे पदज्ञानं कल्पयित्वा अनुमितिप्रमामपलाप्य तत्स्थाने शाब्दप्रमा एव किमर्थं न स्वीक्रियताम्, किन्तु स्वीक्रियतामेव,तथा च अनुमानस्य प्रमाणान्तरत्वोच्छेदापत्तिः। तस्मात् एकेन अपरस्याऽपलापाऽसंभवात् शब्दस्यापि पृथक् प्रामाण्यम् आवश्यकम्, एवं युक्तितौल्येन उपमानस्यापीति। किंच-अनुमिनोमीत्यनुव्यवसायबलात् अनुमितित्वावच्छिन्नस्येव, उपमिनोमि शाब्दयामीत्यनुभवबलात् उपमितित्वशाब्दत्वात्मकवैजात्यावच्छिन्नस्य सिद्धेः तादृशप्रमाकरणतया उपमानशब्दयोःपृथक्प्रमाणत्वम् आवश्यकमिति। किञ्च-योग्यतायाः लिङ्गविशेषणत्वे तेन रूपेण पक्षे हेतुनिश्चयस्याऽऽवश्यकत्वेन तदर्थं योग्यतानिश्चयस्याऽऽवश्यकत्वेन तस्य सिद्धिरूपतया अनुमितेः प्रतिबन्धकत्वात् अनुमित्यनुपपत्तिः, उपलक्षणत्वे तु हेतोर्व्यभिचारित्वापत्तिः। किञ्च-शब्दस्यानुमानविषयैव प्रामाण्ये 'घटमानये'ति वाक्यं स्वरूपयोग्यं 'घटः कर्मत्वम् आनयनं कृति'रितिवाक्यं स्वरूपाऽयोग्यमिति व्यवस्था न स्यात् अनुमानस्योभयत्राऽपि सत्त्वात् तस्मात् शब्दस्य पृथक् प्रमाणत्वम् उपमानस्य चेति ध्येयम्। किंच-'श्रोतव्यो मन्तव्य'इतिश्रुतिप्रयोगात् शाब्दत्वस्यापि शृणोतेः शक्यतावच्छेदकत्वात् शाब्दबोधो नाऽनुमितिः, किन्तु-पदज्ञानात्मकप्रमाणजन्यः स्वतन्त्रोऽनुभव इति दिक् ॥१४०॥१४१॥

मूले-त्रैविध्यमनुमानस्येति। अनुमानस्य=अनुमितिकरणव्याप्तिज्ञानाश्रयस्य हेतोः, त्रिविधत्वं, केवलान्वयिहेतुः, केवलव्यतिरेकिहेतुः, अन्वयव्यतिरेकिहेतुश्चेति भेदादित्यर्थः॥ व्याप्तिस्तु

त्रैविध्यमिति। अनुमानं हि त्रिविधं-केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्। तत्रासद्विपक्षः केवलान्वयी, यथा घटोऽभिधेयः प्रमेयत्वादित्यादौ, तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्त्वम्। असत्सपक्षः केवलव्यतिरेकी, यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ, तत्र हि जलादित्रयोदशभेदस्य पूर्वं-

द्विविधा भवति केवलान्वयिनी केवलव्यतिरेकिणी चेति। तत्र अन्वयव्याप्तिः अनुमानखण्डेऽभिहिता। व्यतिरेकव्याप्तिः इह-प्रदर्श्यते इत्यर्थः ॥ मूलोक्तार्थं स्फुटयति-मुक्तावल्याम्-**अनुमानं हीति**। अनुमानं पक्षः, त्रिविधत्वं साध्यम्, त्रिविधत्वमत्र-उद्देश्यतावच्छेदकसमनियतवस्तुमदन्यसखण्डत्वम्, समनैयत्यं च-स्वाश्रयाऽऽश्रयत्वसम्बन्धेन, स्वं-त्रित्वं, तदाश्रयाणि-केवलान्वयित्वादीनि त्रीणि, तदाश्रयाः-केवलान्वय्यादयस्त्रयः। समनियतत्वं च-व्यापकत्वे सति व्याप्यत्वम्, स्वाश्रयाश्रयत्वसम्बन्धेन। वस्तुमत्त्वं च-स्ववृत्तित्व-स्वसमानाधिकरणस्वेतरवृत्तित्वोभयसम्बन्धेन, स्वम्-अनुमानत्वम्, तद्वृत्तित्वं, अथ च-अनुमानत्वसमानाधिकरणस्वेतरकेवलान्वयित्ववृत्तित्वोभयसम्बन्धेन वस्तुमत्त्वं चतुष्ट्वसंख्यायाम्, तदन्यत्वाऽभावान्न अनुमानं चतुर्विधमितिव्यवहारः॥ हेतुः-**केवलान्वयीत्यादिः**। स च स्वप्रतियोगितासम्बन्धेन बोध्यः॥ केवलान्वयिलिङ्गमाह-**तत्रेति**। लिङ्गत्रयमध्ये। **असद्विपक्षः**=अत्यन्ताऽभावाऽप्रतियोगिसाध्यकत्वमित्यर्थः, यथाश्रुतार्थकत्वे तु असत्त्वस्य सपक्षत्वस्य च असिद्धिसिद्धिरूपत्वेन व्याघातापत्तेः॥ तथा च-अत्यन्ताभावाऽप्रतियोगितत्तत्साध्यकानुमितिकरणं तत्तत्साध्यककेवलान्वय्यनुमानमिति फलितार्थः॥ तदुदाहरति-**यथा घट इति**। घटः पक्षः, अभिधेयत्वं साध्यम्, प्रमेयत्वादिति हेतुः। तत्र=तादृशप्रयोगस्थले, **सर्वस्यैव**=पदार्थमात्रस्यैव, **अभिधेयत्वात्**=अभिधा-ईश्वरेच्छा शक्तिस्तद्विषयत्वात्, तादृशाऽभिधेयत्वस्य अत्यन्ताऽभावाऽप्रतियोगित्वेन केवलान्वयित्वात् निश्चितसाध्यवतो विपक्षस्याऽप्रसिद्धत्वादित्यर्थः॥ अत्यन्ताभावाऽप्रतियोगित्वं च-निरवच्छिन्नवृत्तिमदत्यन्ताभावाऽप्रतियोगित्वं वक्तव्यम्। तेन आकाशाऽभावकपिसंयोगाऽभावादेरभावप्रतियोगित्वेऽपि केवलान्वयिनि तत्र तत्र नाऽव्याप्तिः॥ केवलव्यतिरेकिणो लक्षणमाह-**असत्सपक्ष इति**। अविद्यमानः सपक्षो यस्य हेतोरित्यर्थः। अत्र साध्यसाधनोभयवत्तया निश्चीयमानधर्मिरूपसपक्षपदार्थस्य सिद्धत्वे, असत्त्वेन च असिद्धत्वे सिद्ध्यसिद्धिभ्यां व्याघातः स्यात्, तस्मात्-'प्रकृतहेतुधर्मिकसाध्यसहचारगृहानधीनव्यतिरेकिसाध्यकानुमितिफलोपहितकरणत्वं केवलव्यतिरेकित्वमिति लक्षणार्थो बोध्यः॥ तदुदाहरति-**यथा पृथिवीति**। पृथिवी पक्षः। इतरेभ्यो भिद्यते इति साध्यम्,-जलतेजोवाय्वाकाशकालदिगात्ममनोगुणकर्मसामान्यविशेषसमवायाऽभावेभ्यो भिन्नमित्यर्थः॥ समवायेन-गन्धवत्त्वं हेतुः। तत्र स्थले हि, **जलादित्रयोदशभेदस्य**=त्रयोदशसु भेदः त्रयोदशभेदः, जलादीनां त्रयोदशभेदः तस्येति विग्रहः, जलादिप्रतियोगिकचतुर्दशभेदानां मध्ये एकैकभेदस्य स्वप्रतियोगिभिन्नत्रयोदशसु प्रसिद्धत्वेपि, तादृशैकैकभेदघटितभेदचतुर्दशत्वावच्छिन्नस्य अप्रसिद्धत्वादित्यर्थः। यद्वा-जलादिषु त्रयोदशभेदस्येति विग्रहः, जलादिचतुर्दशपदार्थेषु मध्ये एकैकस्मिन् वर्तमानः तद्घटकतदितरपदार्थनिष्ठचतुर्दशत्वव्यवहारनियानकतत्तद्धर्मावच्छिन्नप्रतियोगिताकः त्रयोदशत्वावच्छिन्नो यो भेदस्त-

(१) ननु सर्वेषां धर्माणां व्यावृत्तत्वात केवलान्वय्यसिद्धिरिति चेन्न, व्यावृत्तत्वस्य सर्वसाधारण्ये केवलान्वयित्वात्, किंच वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वं तच्च गगनाभावादौ प्रसिद्धम्, इति क्वचित्पुस्तकेऽधिकः पाठः।

मनिश्चिततया निश्चितसाध्यवतः सपक्षस्याभाव इति । सत्सपक्षविपक्षोऽन्वयव्यतिरेकी, यथा–वह्निमान्धूमादित्यादौ, तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्त्वमिति ॥

तत्र व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तदर्थं व्यतिरेकव्याप्तिं निर्वक्ति–

साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥ १४३ ॥

साध्याभावेति । साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः ।

---

स्येत्यर्थः । जले प्रसिद्धो यो भेदस्त्रयोदशत्वावच्छिन्नः, तेजसि प्रसिद्धो यो भेदस्त्रयोदशत्वावच्छिन्नः एवं वाय्वादिषु सर्वेषु प्रत्येकं प्रसिद्धो यो भेदः त्रयोदशत्वावच्छिन्नः मिलित्वा तेषां चतुर्दशत्वेन,–तादृशचतुर्दशत्वावच्छिन्नस्य भेदस्यानुमितिपूर्वम् अप्रसिद्धत्वादिति फलितार्थः । तेन नैकपदार्थप्रतियोगिकभेदाऽनिर्देशप्रयुक्तन्यूनतेति भावः । अन्ये तु वैशेषिकमते अभावपदार्थस्य अनिरूपणात् मीमांसकैश्च अभावोऽधिकरणात्मक इत्यंगीकारात् तान् प्रति प्रयोगे त्रयोदशभेदा यथाश्रुता एव ग्राह्या इत्यपि वदन्ति । **पूर्वम् अनिश्चिततया**=अनुमितिपूर्वं पृथिव्याम् अन्यत्र वा अनिश्चितत्वात् निश्चितसाध्यवत्तया सपक्षस्य अप्रसिद्धत्वात् तत्र–साध्यहेत्वोरन्वयसहचाराऽभावेन 'यत्र साध्यं नास्ति तत्र हेतुर्नास्ती'तिव्यतिरेकसहचारेण व्यतिरेकव्याप्तिमत्त्वात् केवलव्यतिरेकी हेतुर्गन्ध इति भावः ॥ अन्वयव्यतिरेकिणो लक्षणमाह–**सत्सपक्षविपक्ष इति** । सन् विद्यमानः सपक्षः विपक्षश्च यस्येत्यर्थः । गृहीतान्वयव्यतिरेकिसाध्यकत्वम् अन्वयव्यतिरेकित्वमिति यावत् । प्रकृतहेतुसाध्यसहचारनिश्चयाधीनव्यापकताग्रहप्रयोज्यव्यतिरेकप्रतियोगिप्रकृतसाध्यकानुमितिकरणत्वमिति तु निष्कर्षः ॥ तदुदाहरति–**यथा वह्निमानिति** । तत्र स्थले सपक्षस्य–निश्चितसाध्यवतः महानसस्य, विपक्षस्य=निश्चितसाध्याभाववतो जलह्रदादेश्च विद्यमानत्वादित्यर्थः ॥

**तत्रेति** । लिङ्गत्रयमध्ये । **व्यतिरेकिणि**=व्यतिरेकिलिङ्गकानुमितौ । व्यतिरेकव्याप्तिज्ञानम् असाधारणकारणं भवतीति तादृशव्याप्तिज्ञानार्थं व्यतिरेकव्याप्तिस्वरूपं निर्वक्ति–**मूले–साध्याभावव्यापकत्वमिति** । यथा वह्न्यभावव्यापकत्वं धूमाभावे भवतीति साध्यहेत्वोरभावयोर्व्याप्तिः व्यतिरेकव्याप्तिरित्यर्थः ॥ एतमर्थमाह–मुक्तावल्यां–**साध्याभावेति** । वह्न्यभावव्यापकीभूतो यो धूमाऽभावस्तत्प्रतियोगित्वं धूमे इति व्यतिरेकव्याप्तिः हेतौ विश्राम्यतीत्यर्थः । एवं 'पृथिवी–इतरभिन्ना,–गन्धादित्यत्रापि–'इतरभेदाऽभाव(इतरत्वं जलत्वादि)व्यापकीभूतो यो गन्धाऽभावस्तत्प्रतियोगित्वं गन्धे इति बोध्यम् । धूमवान् वह्नेरित्यादौ वह्न्यभावस्यापि धूमाभावसमानाधिकरणत्वेन तत्प्रतियोगित्वस्य च वह्नौ सत्त्वात् अतिव्याप्तिः, अतः सामानाधिकरण्यमपहाय लक्षणे व्यापकत्वं निविष्टम् । साध्याभावश्च–साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः, तेन समवायेन वह्न्यभावाधिकरणे पर्वतादौ धूमाऽभावाऽसत्त्वात् धूमाऽभावस्य च व्यापकत्वविरहेऽपि न क्षतिः, नवा वह्निघटोभयाऽभावाधिकरणपर्वतादिवृत्त्यभावप्रतियोगित्वेऽपि धूमाऽभावस्य 'पर्वतो वह्निमान् धूमादि'त्यत्र अतिव्याप्तिः । व्यापकीभूताऽभावश्च–हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः, तेन समवायेन धूमाभावस्य वह्न्यभावव्यापकत्वविरहेऽपि न क्षतिः ॥ व्यापकत्वं–च तद्वन्निष्ठान्योन्याभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वरूपं बोध्यम् ॥ **वस्तुतस्तु**–साध्यनिरूपिता साध्याभावहेत्वभावघटिता हेतुनिष्ठा व्याप्तिः व्यतिरेकव्याप्तिः । न तु साध्याभावहेत्वभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः, जलह्रदे 'धूमाभावनिरूपिता धूमाऽभावाऽभाववदवृत्तिर्वह्न्यभावः'

अत्रेदं बोध्यम्—यत्सम्बन्धेन यदवच्छिन्नं प्रति येन सम्बन्धेन येन रूपेण व्यापकता [१]गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाऽभाववत्ताज्ञानात्तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति। इत्थं च यत्र विशेषणतादिसम्बन्धेनेतरत्वव्यापकत्वं गन्धात्यन्ताभावे गृह्यते तत्र गन्धाभावाभावेनेतरत्वात्यन्ताभावः सिद्ध्यति। यत्र तु तादात्म्यसम्बन्धेनेतरव्यापकता गन्धाभावस्य गृह्यते तत्र तादात्म्यसम्बन्धेनेतरस्याभावः सिध्यति, स एवान्योन्याभावः।

---

त्यस्याः अन्वयव्याप्तित्वात्। तथा च—'साध्याऽभावव्यापकीभूताऽभावप्रतियोगित्वरूपा व्याप्तिः साक्षाद्धूमे वर्तते इति बोध्यम्॥ अन्ये तु—कपिसंयोगी एतत्त्वादित्यादौ अव्याप्तिवारणाय 'एतत्त्ववान् कपिसंयोगादि'त्यत्राऽतिव्याप्तिवारणाय च साध्याभावे हेत्वभावे च प्रतियोगिवैयधिकरण्यनिवेशभिया 'साध्यवद्भेदव्यापकभेदप्रतियोगितावच्छेदकहेतुत्वं' व्यतिरेकव्याप्तेरभिप्राय इति वदन्ति। तथा च 'साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्यवद्भेदव्यापकहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेतुमद्भेदप्रतियोगितावच्छेदकतावच्छेदकहेतुतावच्छेदकवत्त्वं व्यतिरेकव्याप्तिः फलितेति वदन्ति। तन्न। भेदघटितत्वेन मूलयथाश्रुतविरोधात् भेदत्वेन व्यापकताम् अजानतस्तदनुत्थानापत्तेश्चेति दिक्॥

ननु—व्यतिरेकव्याप्तेः परामर्शद्वारा हेतुत्वे तत्र सम्बन्धविशेषाऽनियमे 'पृथिवी इतरभिन्ना गन्धादि'त्यत्र तादात्म्यावच्छिन्नेतरभेदाऽभावव्यापकीभूताऽभावप्रतियोगिगन्धवती पृथिवीतिपरामर्शात् 'पृथिवी इतरत्वाऽभाववती'त्यप्यनुमितिः स्यात्, तथाच परस्परव्यभिचारः इत्याशंकायामाह—**अत्रेदं बोध्यमिति।** यत्सम्बन्धेनेति। यथा—यत्संयोगसम्बन्धेन यद्धूमत्वावच्छिन्नं प्रति येन संयोगसम्बन्धेन येन वह्नित्वेन रूपेण च व्यापकता=धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वात्मिका, गृह्यते तत्संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्नित्वावच्छिन्नात्यन्ताभाववत्ताज्ञानात् जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमत्वावच्छिन्नाऽभावस्य सिद्धिः=अनुमितिः भवतीत्यर्थः, नतु तादात्म्यसमवायाद्यवच्छिन्नप्रतियोगिताकधूमाद्यभावस्येति॥ इत्थं च 'पृथिवी, इतरभिन्ना'-गन्धादित्यत्र यदि='विशेषणता(स्वरूप)सम्बन्धेन इतरत्वत्वावच्छिन्नं प्रति येन स्वरूपसम्बन्धेन येन गन्धाभावत्वेन रूपेण गन्धाभावस्य व्यापकता 'यत्र स्वरूपेण इतरत्वं तत्र स्वरूपेण गन्धाभाव'इति गृह्यते तत्रेतरत्वाभावव्यापकस्वरूपसम्बन्धावच्छिन्नगन्धाभावत्वावच्छिन्नप्रतियोगिताकाऽभाववत्ताज्ञानात्मकपरामर्शात् 'पृथिवी इतरत्वात्यन्ताभाववती'इति अनुमितिर्भवतीत्यर्थः। यत्र तु 'पृथिवी—इतरभिन्ना,—गन्धादि'त्यत्र यत्तादात्म्यसम्बन्धेन यदितरत्वावच्छिन्नं प्रति येन स्वरूपसम्बन्धेन येन गन्धाऽभावत्वेन रूपेण गन्धाऽभावस्य व्यापकता 'यत्र तादात्म्येन इतरत् तत्र स्वरूपेण गन्धाऽभाव' इति गृह्यते तत्रेतरभेदव्यापकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकगन्धाऽभावाऽभाववत्ताज्ञानात्मकपरामर्शात् तादात्म्येन इतरस्याऽभावः=भेदः, सिद्ध्यति=पृथिवी—इतरभिन्ना'—इत्यनुमितिर्भवति, न तु 'पृथिवी इतरत्वाभाववती'त्यर्थः। स एव=तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाऽभाव एव अन्योन्याभाव इत्युच्यते इत्यर्थः॥ "येन सम्बन्धेन व्यापकता गृह्यते" इत्यस्य फलमाह—**एवं यत्र**

---

(१) येन रूपेण येन सम्बन्धेन यत्र व्यापकता गृह्यते तेन रूपेण तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभाववत्ताज्ञानात् यत्सम्बन्धेन यं प्रति यस्य व्याप्यता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति **पाठान्तरं क्वचित्पुस्तके।**

एवं यत्र संयोगसम्बन्धेन धूमं प्रति संयोगसम्बन्धेन वह्नेर्व्यापकता गृह्यते, तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिध्यति। अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानं कारणम्। केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते, न तु व्यतिरेकव्याप्तिज्ञानमपि कारणम्। यत्र व्यतिरेकसहचाराद्व्याप्तिग्रहस्तत्र व्यतिरेकीत्युच्यते। साध्यप्रसिद्धिस्तु घटादावेव जायते पश्चात्पृथिवीत्वावच्छेदेन साध्यत इति वदन्ति ॥१४३॥

संयोगसम्बन्धेनेति। 'यत्र संयोगेन धूमस्तत्र संयोगेन वह्नि'रितिव्यापकता गृह्यते,–तत्र धूमाभावव्यापकसंयोगावच्छिन्नप्रतियोगिताकवह्न्यभाववत्ताज्ञानात्मकपरामर्शात् जलह्रदे संयोगावच्छिन्नप्रतियोगिताकधूमाभावानुमितिर्जायते इति। न तु समवायेन धूमाद्यभावानुमितिः। एवं 'येन रूपेणे'त्यनुपादाने द्रव्यत्वावच्छिन्नवह्न्यभाववत्ताज्ञानादपि धूमाभावानुमित्यापत्तिः स्यात् तद्वारणाय–तदुक्तम्। 'यदवच्छिन्नं प्रती'त्यनुपादाने वह्नित्वावच्छिन्नाऽभाववत्ताज्ञानात् द्रव्यत्वावच्छिन्नधूमाभावानुमित्यापत्तिः स्यात्, तद्वारणाय–तदुक्तम्। "तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभाववत्ताज्ञाना'दित्यस्य'परामर्शादित्यर्थः। तथाच सर्वत्र 'धूमाभावव्याप्यवह्न्यभाववानि'तिपरामर्शात्। 'इतरभेदव्याप्यगन्धवती'तिपरामर्शात्, इतरत्वात्यन्ताभावव्याप्यगन्धवती'तिपरामर्शाच्च तत्तद्व्याप्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाऽभाववत्तानुमितिर्भवतीति सर्वत्रानुसन्धेयम्॥ ननु–साध्यसाधनसहचारज्ञानात्मककारणाऽभावात् कथम् एतादृशव्याप्तिज्ञानं जायेतेत्यत आह–अत्र चेति। केवलव्यतिरेकिहेतुकस्थले व्यतिरेकव्याप्तिज्ञानं प्रति 'यत्र साध्याभावस्तत्र हेत्वभाव'इतिव्यतिरेकसहचारज्ञानस्य कारणत्वात् तेन व्यतिरेकव्याप्तिज्ञानं जन्यते इत्यर्थः॥ अन्वयसहचाराऽग्रहे अन्वयव्याप्तेरभावात् व्यतिरेकसहचारेण व्यतिरेकव्याप्तिस्फूर्तिदशायां व्यतिरेक्यनुमितिर्जन्यते इति भावः॥ उदयनाऽऽचार्यमतं दर्शयति–केचित्त्विति। अनुमितिसामान्ये अन्वयव्याप्तिज्ञानमेव कारणम्, न तु व्यतिरेकव्याप्तिज्ञानमपि, अन्यथासिद्धत्वात् केवलान्वयित्वग्रहकालीनानुमितौ व्यभिचाराच्च इति आचार्याशयः। ननु–'पृथिवी'–इतरेभ्यो भिद्यते'इत्यनुमित्यनुपपत्तिः, तत्राऽन्वयसहचारज्ञानाऽभावेन अन्वयव्याप्तिज्ञानाऽसम्भवादित्यत आह–व्यतिरेकसहचारेणेति। अन्वयसहचारनिरपेक्ष–व्यतिरेकसहचारज्ञानेनाऽपि अन्वयव्याप्तिज्ञानं जन्यते तेन च अन्वयिलिङ्गकानुमितिरेव भवतीत्यर्थः॥ ननु तर्हि व्यतिरेकिहेतोः व्यतिरेकिलिङ्गत्वाऽनुपपत्तिरित्याशंकायामिष्टापत्तिं दर्शयितुमाह–न त्विति। अनुमितौ व्यतिरेकव्याप्तिज्ञानम् अन्यथासिद्धत्वात् कारणमेव न भवति, तथा च व्यतिरेकसहचारेणापि अन्वयव्याप्तिज्ञानजननात् तेन अन्वयिलिङ्गकानुमितिरेव भवतीति भावः॥ ननु तर्हि केवलान्वयिकेवलव्यतिरेकीत्यादिविभाग एव विलुप्येतेत्यत आह–यत्रेति। यद्धेतौ–व्यतिरेकसहचारज्ञानजन्याऽन्वयव्याप्तिमत्त्वम्, स हेतुः व्यतिरेकी इति व्यवह्रियते इत्यर्थः॥ तथाच–साध्यसाधनसहचारज्ञानजन्यतदन्यसहचारज्ञानाऽजन्यव्याप्तिज्ञानविशेष्यं केवलान्वयिलिङ्गत्वम्, अन्वयसहचारज्ञानाऽजन्यव्यतिरेकसहचारज्ञानजन्यव्याप्तिज्ञानविशेष्यत्वं केवलव्यतिरेकिलिङ्गत्वम्, उभयसहचारज्ञानजन्यव्याप्तिग्रहविशेष्यत्वम् अन्वयव्यतिरेकिलिङ्गत्वमिति व्यवस्थानात् न विभागलोप इति भावः॥ ननु व्यतिरेकसहचारस्थले साध्यतावच्छेदकेन इतरभेदत्वेन रूपेण साध्यस्येतरभेदादेः कुत्राऽप्यप्रसिद्धत्वात् कथम् अन्वयव्याप्तिग्रह–इत्यत आह–साध्यप्रसिद्धिस्त्विति। साध्यतावच्छेदकेतरभेदत्वेन रूपेणेतरभेदस्य प्रसिद्धिस्तु पक्षैकदेशे घटादावेव "घटो जलादिप्रतियोगिकभेदचतुर्दशत्वाद्यवच्छिन्नवानि"त्याप्तवाक्याद्, यद्वा 'घटादिः,–जलादिप्रतियोगिकभेदचतुर्दशत्वाद्यव-

अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः॥ १४४॥

अर्थापत्तिरिति। अर्थापत्तिः प्रमाणान्तरमिति केचन मन्यन्ते। तथाहि-यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनो गृहासत्त्वं च प्रत्यक्षादवगतं, तत्र शतवर्षजीविनो गृहासत्त्वं बहिःसत्त्वं विनाऽनुपपन्नमिति बहिःसत्त्वं कल्प्यते, इति तदप्यनुमानेन गतार्थत्वान्नेष्यते। तथाहि-यत्र जीवित्वस्य बहिः-

---

च्छिन्नवान्,-गन्धादि'त्यनुमानाज्ज्ञायत इति भावः। ननु घटादिपृथिव्यां साध्ये निर्णीते सति साध्यसिद्धिः प्रतिबन्धिका स्यात् तेन अनुमितिर्नैवोत्पद्येतेति चेन्न। अवच्छेदकावच्छेदेन अनुमितौ सामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धकत्वात् अनुमितिर्निराबाधेत्याशयेनाह-पश्चादिति। पृथिवीत्वसामानाधिकरण्येन घटत्वावच्छिन्ने साध्यनिश्चयोत्तरम् पृथिवीत्वावच्छेदेन पृथिव्याम् इतरभेदः अनुमीयते इत्यर्थः॥ तत्र-अन्वयव्याप्तिज्ञाने व्यतिरेकसहचारज्ञानस्य हेतुत्वे मानाऽभावः, व्यतिरेकिलिङ्गस्थलीयान्वयव्याप्तेः क्वचिद् घटादौ साध्यान्वयसहचारज्ञानजन्यतया च तत्स्थलीयलिङ्गस्यान्वयव्यतिरेकित्वापत्त्या केवलव्यतिरेकित्वहान्यापत्तिरित्यस्वरसं हृदि निधाय 'वदन्ती'त्युक्तम्॥१४२,१४३॥

मूले-अर्थापत्तिस्त्विति। न्यायमते-अर्थापत्त्यभिधानं प्रमाणान्तरं न मन्यते, हि निश्चये, यतः यस्माद्धेतोः, सा=अर्थापत्तिप्रमाणजन्या प्रमा व्यतिरेकव्याप्त्या अनुमारूपा जन्यते, तथा च व्यतिरेकव्याप्तावन्तर्भावोऽर्थापत्तेरित्यर्थः॥'मुक्तावल्याम्-अर्थापत्तिम् उपपादयति-अर्थापत्तिरिति। केचन=मीमांसका अद्वैतवेदान्तिनश्च। अर्थापत्तिः पृथक् प्रमाणमिति मन्यन्ते। अर्थापत्तित्वम् अर्थापयामीत्यनुभवसिद्धजातिविशेषः तदवच्छिन्ना प्रमा, षष्ठ्या अर्थस्य आपत्तिः ज्ञानमिति, योगेन च-अर्थस्य आपत्तिर्ज्ञानं यस्मात् प्रमाणात् तत् अर्थापत्तिः प्रमाणमिति। अर्थापत्तिर्नाम अन्यथाऽनुपपत्तिज्ञानमिति, अन्यथानुपपत्तिर्द्वेधा,-श्रुतार्थाऽनुपपत्तिर्दृष्टार्थानुपपत्तिश्च। तदनुरोधेन प्रमाऽपि द्वेधा-अभिधेयाऽर्थापत्तिः,-अभिधानाऽर्थापत्तिश्चेति। तत्क्रमेणोपपादयति- तथाहि यत्रेति। यदा देवदत्तनामकपुरुषस्य शतवर्षजीवित्वं ज्योतिःशास्त्रात् प्रतीतम्, जीविनः=जीवतश्च तस्य गृहाऽवर्तमानत्वं प्रत्यक्षात् चक्षुरादिप्रमाणात् प्रमितम्, तत्र=तदा, शतवर्षजीवतो देवदत्तस्य गृहाऽवर्त्तमानत्वं बहिर्वर्तमानत्वं विना न उपपद्यते अतः बहिःसत्त्वम् आपाद्यते इत्यर्थः। तत्र उपपाद्यज्ञानम् अर्थापत्तिः प्रमाणम्, उपपादकज्ञानं अर्थापत्तिः प्रमा, योऽर्थोऽन्येन कल्पनीयेन विना नोपपद्यते सोऽर्थ उपपाद्यः, यस्य च कल्पनीयार्थस्य अभावे सति उपपाद्यं नोपपद्यते सोऽर्थः उपपादक इति। तथा च-जीवतो देवदत्तस्य बहिःसत्त्वज्ञानम् उपपादकम् अर्थापत्तिः प्रमा, शतवर्षजीवित्वविशिष्टगृहाऽसत्त्वज्ञानम् उपपाद्यम् अर्थापत्तिः प्रमाणम्, इयं 'जीविदेवदत्तो गृहे नास्ती'ति आप्तवाक्यश्रवणे सति श्रुतार्थापत्तिर्बोध्या॥ तामनुमानेऽन्तर्भावयति-तदप्यनुमानेनेति। अनुमानेन=व्यतिरेकव्याप्तिज्ञानेन कृतकृत्यत्वात् पृथक् प्रमाणं नेष्यते इत्यर्थः॥ तदेवाह-यत्रेति। जीविदेवदत्तः,-बहिःसत्त्वगृहसत्त्वान्यतरवान्,-जीवित्वादित्यनुमानप्रयोगः। तत्र-बहिःसत्त्वगृहसत्त्वान्यतराभाव जीवित्वाऽभावयोः घटत्वादौ सहचारज्ञानाधीनं यद् 'बहिःसत्त्वगृहसत्त्वान्यतराभावव्यापकीभूताभावप्रतियोगिजीवित्वमि'तिव्यतिरेकव्याप्तिज्ञानं, तेन च 'बहिःसत्त्वगृहसत्त्वान्यतराभावव्यापकीभूताऽभावप्रतियोगिहेतुमान् पक्ष'इति परामर्शे सति 'जीविदेवदत्तः-बहिःसत्त्वगृहसत्त्वान्यतरवानि'त्यनुमितिर्जायते, यद्वा-श्रुतार्थाऽपत्तिस्थले-'जीवी देवदत्तः,-बहिःसत्त्वगृहसत्त्वान्यतरवान्,-जीवित्वात्,-यो निरुक्तान्यतराऽभाववान् स

सत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते। एवं 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनसिद्धौ दिवाभोजनबाधे रात्रिभोजनं सिध्यतीति॥ अभावप्रत्यक्षस्यानुभविकत्वादनुपलम्भोऽपि न प्रमाणान्तरम्। किञ्चानुपलम्भस्याज्ञातस्य हेतुत्वे ज्ञानाकरणकत्वात्प्रत्यक्षत्वम्, ज्ञातस्य हेतुत्वे तु तत्राप्यनुपलम्भा-

---

जीवित्वाऽभाववान् यथा घटत्वम्,–इतिव्यतिरेकिन्यायप्रयोगाधीन–शाब्दबोधोत्तरकालीन–"बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यजीवित्ववान्जीविदेवदत्त"इतिमानसपरामर्शोत्तरं वा अनुमितिर्जायते इत्याशयेनाह–**जीवित्वस्येति**। जीवित्वात्मकहेतोरित्यर्थः। **बहिःसत्त्वेति**। गृहान्यदेशनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्व–गृहनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वान्यतरात्मकसाध्यनिरूपित–साध्याभावहेत्वभावघटितव्यतिरेकव्याप्तिमत्त्वात्मकव्याप्यत्वे गृहीते सति, **तत्र**=जीविदेवदत्ते पक्षे, **जायमानायाम्**=उत्पत्स्यमानायाम्, **अन्यतरसिद्धौ**=बहिःसत्त्वगृहसत्त्वान्यतरानुमितौ, प्रत्यक्षेण गृहसत्त्वात्मककोटेर्बाधात्, **बहिःसत्त्वम्**=बहिःसत्त्वमेव, **अनुमितौ भासते**=अनुमितौ विधेयतया विषयं भवतीत्यर्थः॥ तथा च–श्रुतार्थापत्तिप्रमाणस्य-व्यतिरेकव्याप्तिज्ञानेऽन्तर्भाव इति भावः॥ अथ–दृष्टार्थापत्तिं निरसितुमाह–**एवं पीन इति**। 'पीनो देवदत्तो दिवा न भुंक्ते' इति प्रत्यक्षतो ज्ञाते, श्रुते वा, पीनत्वस्य रात्रिभोजनं विनाऽनुपपत्त्या रात्रिभोजनम् अर्थापत्तिप्रमाणेन आक्षिप्यते। **इत्यादौ** इत्यादिस्थले। **पीनत्वस्येति**। 'पीनो देवदत्तः–दिवाभोजनरात्रिभोजनान्यतरवान्,–पीनत्वात्'इत्यनुमानप्रयोगः। मासोपवासिनि तापसे 'दिवाभोजनरात्रिभोजनान्यतराऽभाव-पीनत्वाऽभावयोः सहचारज्ञाने सति, **पीनत्वस्य** हेतोः, **भोजनव्याप्यत्वाऽवगमात्**=दिवाभोजनरात्रिभोजनान्यतरात्मकसाध्यनिरूपिता साध्याभावहेत्वभावघटिता या 'दिवाभोजनरात्रिभोजनान्यतराभावव्यापकीभूताऽभावप्रतियोगिपीनत्वमिति'व्यतिरेकव्याप्तिमत्ताज्ञानात्, परामर्शद्वारा उत्पत्स्यमानायां **भोजनसिद्धौ**=दिवाभोजनरात्रिभोजनाऽन्यतराऽनुमितौ, शब्दतः प्रत्यक्षतो वा दिवाभोजनबाधे सति, रात्रिभोजनं विधेयतया विषयो भवतीत्यर्थः। तथा च अर्थापत्तिप्रमाया अनुमितित्वेनैव निर्वाहात् तत्करणप्रमाणस्याऽर्थापत्तेरपि व्यतिरेक्यनुमानत्वेनैव निर्वाह इति भावः॥ अन्ये तु–जीविदेवदत्तः–बहिःसत्त्ववान्,–गृहाऽसत्त्वे सति जीवित्वात्, 'पीनो देवदत्तः–रात्रिभोजी, दिवाऽभुञ्जानत्वे सति पीनत्वादिति, प्रयोगेण तत्र गृहासत्त्वस्य दिवाऽभुञ्जानत्वस्य बाधाऽपेक्षैव न भवतीतिरीत्याऽनुमानान्तर्भावं निरूपयन्तीति ध्येयम्॥ अथ–अभावप्रत्यक्षोपपत्त्यर्थं–योग्यानुपलब्धिं प्रमाणान्तरं भाट्टमीमांसकैरिष्यते तद्दूषयति–**अभावप्रत्यक्षस्येति**। अभावप्रत्यक्षस्य इन्द्रियेण भवतीत्यनुभवसिद्धत्वात्, इन्द्रियाणाम् अभावप्रत्यक्षे जननीये योग्याऽनुपलब्धेः सहकारितामात्रेण निर्वाहे योग्याऽनुपलब्ध्यात्मकस्याऽनुपलम्भस्य न अतिरिक्तप्रमाणत्वमित्यर्थः॥ ननु योग्याऽनुपलम्भस्य सहकारित्वकल्पनाऽपेक्षया स्वतन्त्रप्रमाणत्वं न्याय्यमित्यत आह–**किञ्चेति**। अनुपलम्भः=प्रतियोग्युपलम्भाऽभावः, स च स्वयम् अज्ञातः सन् अभावप्रमाहेतुः? उत ज्ञातः सन्?,। आद्ये दूषणमाह–**अज्ञातस्येति**। स्वरूपसतोऽनुपलम्भस्य हेतुत्वे तु, स्वरूपसता प्रतियोग्युपलम्भाभावेन जायमाने अभावप्रत्यक्षे फले 'ज्ञानाऽकरणकं ज्ञानं प्रत्यक्ष'–मिति प्रत्यक्षप्रमालक्षणलक्ष्यतावत्त्वात् 'तादृशप्रत्यक्षप्रमाकरणं-प्रत्यक्षमि'ति प्रत्यक्षप्रमाणलक्षणस्य इन्द्रियेष्विव तवाऽभिमतप्रतियोग्यनुपलम्भेऽपि सत्त्वेन प्रतियोग्यनुपलम्भस्य प्रत्यक्षप्रमाणाऽन्तर्भूतत्वात् न प्रत्यक्षातिरिक्तप्रमाणत्वम्, तथाच इन्द्रियाऽनुपलम्भयोः प्रत्य-

न्तरापेक्षेत्यनवस्था । एवं चेष्टापि न प्रमाणान्तरं, तस्याः सङ्केतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावात् । यत्र च व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति ॥ १४४ ॥

सुखं तु जगतामेव काम्यं धर्मेण जायते ।

सुखं निरूपयति-सुखं त्विति । काम्यम्=अभिलाषविषयः ॥ धर्मेणेति ॥ धर्मत्वेन

---

क्षत्वाङ्गीकाराऽपेक्षया प्रत्यक्षबलाच्चेन्द्रियाणां प्रमाणत्वे सिद्धे अनुपलम्भस्य योग्यानुपलब्धिविधया सहकारित्वमेव युक्तमिति भावः ॥ पक्षान्तरे दोषमाह **ज्ञातस्येति** । प्रतियोग्युपलम्भाभावज्ञानस्य अभावप्रत्यक्षप्रमायां करणत्वे तु तज्जन्याऽभावप्रमायां 'ज्ञानाकरणकज्ञानत्वं प्रमात्वमि'तिलक्षणाऽगमनात् तादृशप्रमाकरणत्वस्य अनुपलब्धावभावेन प्रत्यक्षत्वाऽनन्तर्भावेऽपि, अभावप्रत्यक्षज्ञाने प्रतियोग्युपलम्भाभावज्ञानस्य कारणत्वे प्रतियोग्युपलम्भाभावज्ञानस्यापि अभावज्ञानत्वेन तत्र पुनः-उपलम्भाभावज्ञानस्य कारणत्वं तत्र पुनरित्येवम् अनवस्था स्यात् इन्द्रियाणां कारणत्वे तु न तथादोषः, तस्मात् अनुपलब्धिर्न प्रमाणान्तरमिति भावः ॥ **अथ चेष्टा**-विलक्षणव्यङ्ग्यबोधजनिका प्रमाणान्तरमिति आलंकारिका वदन्ति । तन्मतं ।निषेधति-**चेष्टाऽपि नेति** । सापि शब्दद्वारा अनुमानद्वारा वा व्यवहारहेतुर्भवति, न तु स्वन्त्रा, अतः शब्दप्रमाणेऽनुमाने वाऽन्तर्भाव इत्याह-**तस्याः संकेतेति** । चेष्टायाः नेत्रादिमिषेणाऽऽह्वानात्मकसंकेतितार्थग्रहजनकशब्दस्मारकत्वेन लिप्यादिसमानत्वात यथा शब्दस्मारिका लिपी न प्रमाणान्तरं तथा चेष्टापि न प्रमाणान्तरं किन्तु चेष्टास्थले शब्दस्मरणेन अर्थस्मरणद्वारा शाब्दबोध एव । **यत्र चेति** । अनुमानेऽन्तर्भावपक्षे तु नेत्रमिषेणाऽऽहूयमानां कांचिदवलोक्य दर्शकस्तावदनुमिनोति-"इयं-मामाह्वयति,-स्वानुकूलप्रयत्नवत्त्वसम्बन्धेन ममाऽऽह्वानानुकूलचेष्टावत्त्वात् । 'अहम् अनयाऽऽकांक्ष्यमाणः,-नेत्रचेष्टयाऽऽह्वानादिति वा ॥ **अथ-पौराणिकाः** सम्भवैतिह्ययोरतिरिक्तप्रमाणत्वं वदन्ति-तद्यथा-'खार्यां द्रोणाऽढकप्रस्थाद्यवगमः'-तत्र द्रोणचतुष्टयं खारी, चतुराढकश्च द्रोणः, चतुःप्रस्थं चाऽऽढकम् , चत्वारः कुडवाः प्रस्थम्, मुष्टिचतुष्टयं कुडवः । तत्र 'खारी'त्युक्ते द्रोणाढकप्रस्थादिसमावेशोऽप्युक्तो भवति, 'शतवानि'त्युक्ते 'पञ्चाशद्वानि'त्यप्युक्तं भवति । तदुभयत्र खार्यां द्रोणादीनां सम्भवः, शते पञ्चाशत्संभवश्चेति प्रमाणान्तरमिति । **तन्न** । अनुमानेनैव निर्वाहात् । यथा-"खारी,-द्रोणादिघटिता,-खारीत्वात,-इत्यनुमानेन 'द्रोणादिघटितत्वव्याप्यखारीत्ववत्त्व'परामर्शेन 'खारी-द्रोणाद्यविनाभूते'त्यनुमितिर्भवतीति । **एवं** 'शतं-पञ्चाशद्घटितम्, शतत्वादि'त्यनुमानेन 'पञ्चाशद्घटितत्वव्याप्यशतत्ववच्छतमि'तिपरामर्शेन 'शतं-पञ्चाशदविनाभूतमि'त्यनुमितिर्भवतीति भावः ॥ **एवम्-ऐतिह्यं**-'अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यम्-'इति ह ऊचुः वृद्धाः'इति, यथा-'इह वटे यक्षः प्रतिवसतीति । तदपि न प्रमाणान्तरम् । यतो यद्यज्ञातमूलप्रवक्तृकः शब्दः, तदाऽप्रमाणमेव, यदि च आप्तप्रवक्तृकः शब्दः, तदा शब्दप्रमाणेऽन्तर्भाव इति ॥ १४४ ॥

मूले-**सुखं त्विति** । जगतां=सांसारिकप्राणिनां, काम्यं=कामनाविषयं सुखं तु धर्मेण=पुण्याख्यगुणेन, उत्पद्यते इत्यर्थः ॥ मुक्तावल्यां-काम्यपदार्थमाह-**अभिलाषविषय इति** । अन्यविषयकेच्छाऽनधीनेच्छाविषयत्वमिति लक्षणम् इत्यर्थः । सुखेच्छाधीने भोजनादावतिव्याप्तिवारणाय-इतरेच्छानधीनेति इच्छाविशेषणम् । वस्तुतस्तु-'अहं सुखी'त्यनुभवसिद्धसुखत्वजातिमत्त्वमेव सुखलक्षणम् । यद्वा-धर्ममात्राऽसाधारणकारणकत्वे सति गुणत्वमिति लक्षणम् । यद्वा सुखपदवाच्यतावच्छेदकतया सिद्धसुखत्वजातिमत्त्वं सुखलक्षणम् । सुखं द्वेधा=वैषयिकं मानोरथिकं च, आद्यं

सुखत्वेन कार्यकारणभाव इत्यर्थः ॥

अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ १४५ ॥

दुःखं निरूपयति—अधर्मेति। अधर्मत्वेन दुःखत्वेन कार्यकारणभाव इत्यर्थः ॥ प्रतिकूलमिति ॥ दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकद्वेषविषय इत्यर्थः ॥ १४५ ॥

निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ।
इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥

इच्छां निरूपयति-निर्दुःखत्व इति। इच्छा द्विविधा फलविषयिणी उपायविषयिणी च। फलं तु सुखं दुःखाभावश्च। तत्र फलेच्छां प्रति फलज्ञानं कारणम्।

---

स्रक्चन्दनवनितासंभोगादिनिमित्तकं, सम्भोगसम्पादको धर्मः। द्वितीयन्तु-ज्ञाननिमित्तकं,। धर्मः चित्तशुद्धिद्वारा ज्ञानदः इति॥ धर्मसुखयोः कार्यकारणभावमाह-धर्मत्वेनेति। समवायेन सुखत्वावच्छिन्नं प्रति समवायेन धर्मत्वावच्छिन्नं कारणमित्यर्थः॥ 'आनन्दं ब्रह्मेति'श्रुतेः, ईश्वरे नित्यसुखांगोकारपक्षे तु-'समवायेन जन्यसुखत्वावच्छिन्नं प्रति समवायेन धर्मत्वावच्छिन्नस्य कारणत्वमिति कार्यकारणभावो बोध्यः॥

मूले-अधर्मजन्यमिति। सचेतसाम्=शरीरिणाम्, प्रतिकूलवेदनीयं यत् तत् दुःखस्वरूपमित्यर्थः। तच्च दुःखम् अधर्मेण जन्यते इत्यर्थः॥ मुक्तावल्याम्-अधर्मत्वेनेति। समवायेन दुःखत्वावच्छिन्नं प्रति समवायेन अधर्मत्वावच्छिन्नं कारणमित्यर्थः। दुःखत्वज्ञानादेवेति। सर्वप्राणिनां 'इदं दुःखमि'ति दुःखत्वप्रकारकमानसप्रत्यक्षादेव, स्वाभाविकद्वेषविषयः=अन्यगोचरद्वेषानधीनद्वेषविषयः दुःख भवतीत्यर्थः। तथा च-अन्यगोचरद्वेषानधीनद्वेषविषयत्वं दुःखलक्षणम्। दुःखसाधनसुपुत्रत्यागादावपि सर्वप्राणिनां द्वेषविषयत्वस्य सत्त्वात् तद्व्यावर्तनाय द्वेषे अन्यगोचरद्वेषाऽनधीनत्वविशेषणम्। द्वेषविषयत्वमात्रोक्तौ सर्पादावतिव्याप्तिः, तत्रापि द्वेषविषयत्वसत्त्वात्, 'इतरद्वेषाऽनधीने'त्युक्तौ तु सर्पजन्यदुःखे द्वेषात् सर्पेऽपि द्वेष इति सर्पद्वेषस्य अन्यगोचरद्वेषाऽनधीनत्वाऽभावान्नातिव्याप्तिः॥ यद्वा-'अहं दुःखी'त्यनुभवसिद्धदुःखत्वजातिमत्त्वम्, यद्वा-अधर्ममात्राऽसाधारणकारणकत्वे सति गुणत्वं, यद्वा दुःखपदवाच्यतावच्छेदकतया सिद्धजातिमत्त्वं दुःखलक्षणमिति॥ तद् दुःखं द्वेधा-वैषयिकं मानोरथिकंच, आद्यं-कण्टकादिविषयजन्यं, द्वितीयं तु चिन्ताजन्यं। तत्राऽसाधारणकारणमधर्म एवेति॥ १४५॥

मूले-निर्दुःखत्वे इति। निर्दुःखत्वे=दुःखाऽभावे, सुखे च, दुःखाभावज्ञानात् सुखज्ञानाच्च, इच्छा उत्पद्यते। एवं तदुपाये=दुःखाभावोपाये सुखोपाये च, इष्टोपायत्वधीः=इदं मदिष्टदुःखाभाव-सुखान्यतर)साधनमि'ति ज्ञानात् इच्छा जायते इत्यर्थः॥ 'अहमिच्छामी'तिप्रत्यक्षसिद्धेच्छात्वजातिमत्त्वम् इच्छायाः लक्षणम्, भगवदिच्छायामपि तादृशजातिस्वीकरात्। मुक्तावल्याम् इच्छां विभजते-इच्छा द्विविधेति। फलविषयिणी=फलं यत्-दुःखाभावः सुख च, तद्विषयकेच्छात्वं फलेच्छात्वम्, तथा च फलविशेष्यकेच्छात्वं,-पुरुषार्थम् इच्छामीतिप्रतीतिसाक्षिकेच्छात्वव्याप्यजातिविशेषवत्त्वं वा फलेच्छासामान्यलक्षणं बोध्यम्॥ उपायेच्छामाह-उपायविषयिणीति। दुःखाभावस्य सुखस्य च य उपायः योगध्यानादिः तद्विषयिणीच्छेत्यर्थः, तथा च-उपायविशेष्यकेच्छात्वम्, उपायमिच्छामीतिप्रतीतिसाक्षिकेच्छात्वव्याप्यजातिविशेषवत्त्वं वा उपायेच्छासामान्यलक्षणम्॥ फलमाह-सुखमिति। सुखं मुख्यफलं प्राधान्यात्, दुःखाऽभावस्तु गौणफलम्, नान्तरी-

अत एव पुरुषार्थः संभवति। यज्ज्ञातं सत्स्ववृत्तितयेष्यते स पुरुषार्थ इति तल्लक्षणात्। इतरेच्छानधीनेच्छाविषयत्वं पुरुषार्थत्वम् इति फलितोऽर्थः। उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम् ॥ १४६ ॥

चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत्।
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥ १४७ ॥

चिकीर्षेति। कृतिसाध्यत्वप्रकारिका कृतिसाध्यविषयिणीच्छा चिकीर्षा,—पाकं कृत्या साधयामीति तदनुभवात्। चिकीर्षां प्रति कृतिसाध्यताज्ञानमि-

---

यकदुःखसत्त्वेऽपि सुखस्य प्राधान्येनाऽभिलाषविषयत्वानुभवादिति ॥ यद्विषयकं ज्ञानं तद्विषयिणीच्छा उत्पद्यते इति नियमेन इच्छाज्ञानयोः कार्यकारणभावमाह–**फलेच्छां प्रतीति।** समवायेन तद्धर्मावच्छिन्नफलविषयकेच्छात्वावच्छिन्नं प्रति समवायेन तद्धर्मावच्छिन्नफलविषयकज्ञानत्वावच्छिन्नस्य कारणत्वमित्यर्थः ॥ एतादृशकार्यकारणभावापन्नज्ञानेच्छाविषयपदार्थ एव पुरुषार्थशब्देनोच्यते इत्याह–**अत एवेति।** फलेच्छां प्रति फलज्ञानस्य हेतुत्वादेवेत्यर्थः। पुरुषार्थः=पुरुषस्य अर्थः=प्रयोजनं, संभवति=अप्रत्यूहं भवति ॥ पुरुषार्थलक्षणमाह–**यत् ज्ञातं सदिति।** यद्वस्तु सुखादिकं ज्ञानविषयीकृतं सत् स्ववृत्तितया=मम सम्बन्धि भवतु,–इतीष्यते तद्वस्तु पुरुषार्थ इत्युच्यते इत्यर्थः, तथा च स्वविषयकज्ञानजन्येच्छाविषयत्वं पुरुषार्थत्वमिति फलितम् ॥ ननु–उपायेऽतिव्याप्तिः, उपायस्यापि–स्वविषयकेष्टसाधनताज्ञानजन्येच्छाविषयत्वादित्यत आह–**इतरेच्छेति।** उपायेच्छायाः फलेच्छाधीनेच्छात्वात् न पुरुषार्थत्वमिति भावः ॥ उपायेच्छायाः कारणमाह–**उपायेच्छां प्रतीति।** समवायेन योगध्यानाद्युपायविशेष्यकेच्छात्वावच्छिन्नं प्रति समवायेन तादृशोपायविशेष्यकेष्टसाधनत्वप्रकारकज्ञानत्वावच्छिन्नं कारणमित्यर्थः ॥ १४६ ॥

इच्छाया भेदं चिकीर्षां तत्कारणं तत्प्रतिबन्धकं च निरूपयति–**मूले–चिकीर्षेति।** कर्तुमिच्छा चिकीर्षा 'इदं मत्कृत्या साध्यतामि'त्याकारिका 'कृतिसाध्यत्वप्रकारिका इदन्त्वावच्छिन्नविशेष्यिका' विशेषेच्छा चिकीर्षेत्यर्थः। **तद्धेतुः**=समवायेन तादृशचिकीर्षायाः हेतुः,–**कृतिसाध्येष्टसाधनत्वमतिः**=कृतिसाध्यत्वप्रकारकज्ञानम्, इष्टसाधनत्वप्रकारकज्ञानं च, बोध्यमित्यर्थः ॥ **मुक्तावल्यां** चिकीर्षां स्फुटयति–**कृतिसाध्यत्वप्रकारिकेति।** कृतिः प्रयत्नः, 'मत्प्रयत्नसाध्यमिदम्' 'इदं मत्प्रयत्नेन साध्यतामि'त्याद्याकारिका या कृतिसाध्यपदार्थविशेष्यिकेच्छा सा चिकीर्षा इत्यर्थः। कृतिसाध्यत्वप्रकारकेच्छात्वं, चिकीर्षामीतिप्रतीतिसाक्षिकोपायेच्छामात्रवृत्तिवैजात्यव्याप्यजातिविशेषवत्त्वं वा लक्षणमिति भावः ॥ तत्र कृतिसाध्यत्वप्रकारकत्वे अनुभवं प्रमाणमाह–**पाकमिति।** पाकं=तण्डुलादिविक्लित्तिं, कृत्या=प्रयत्नेन साध्यत्वप्रकारेण, अहं साधयामि–इच्छामी'त्यर्थः ॥ तथा च–'साध्यत्वप्रकारकपाकत्वावच्छिन्नविशेष्यकेच्छावानहमि'ति बोधः,तादृशशब्दोल्लेखितादृशानुभवस्य कृतिसाध्यत्वप्रकारकेच्छायां प्रमाणत्वमि'ति भावः ॥ चिकीर्षायाः कारणं दर्शयति–**चिकीर्षां प्रतीति।** चकारो वैशिष्ट्यद्योतकः, वैशिष्ट्यं समानकालीनत्वसम्बन्धेन, तथा च कृतिसाध्यताज्ञानसमानकालीनेष्टसाधनताज्ञानं चिकीर्षाकारणमित्यर्थः। कृतिसाध्यताज्ञानं–यागो मत्कृतिसाध्यो भवतु इति,। इष्टसाधनताज्ञानं–यागो मदिष्टस्य स्वर्गस्य साधनमि'ति ॥ अत्रेदं बोध्यम्–'मे स्वर्गो भवत्वि'तिफलेच्छाधीना 'यागो मम भवत्वि'त्युपायेच्छा, तदधीना च 'यागो मम कृतिसाध्यो भवत्वि'ति चिकीर्षा, तथा च उपायेच्छाचिकीर्षयोः इष्टसाधनविषयकेच्छात्वेन 'तद्विषयकेच्छां

ष्टसाधनताज्ञानं च कारणम् ॥ तद्धेतुरिति ॥ अत एव वृष्ट्यादौ कृतिसाध्यताज्ञाना-भावान्न चिकीर्षा ॥ १४७ ॥

बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका ।
तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥ १४८ ॥

बलवदिति । बलवद्द्विष्टसाधनताज्ञानं तत्र प्रतिबन्धकम्, अतो मधुविषसं-पृक्तान्नभोजने न चिकीर्षा । बलवद्द्वेषः प्रतिबन्धक इत्यन्ये ॥ तदहेतुत्वेति ॥

---

प्रति तद्विषयकज्ञानस्य कारणत्वमिति नियमबलात् इष्टसाधनताज्ञानसत्त्वे क्वचित् उपायेच्छा क्वचिच्च चिकीर्षा स्यात्–इति या आशंका साऽपि कृतिसाध्यताज्ञानसमानकालीनेष्टसाधनताज्ञानस्य चिकीर्षां प्रति कारणत्वकथनेन निवारिता भवति, कृतिसाध्यताज्ञानाऽसमानकालीनेष्टसाधनताज्ञानस्यैवोपाये-च्छां प्रति कारणत्वव्यवस्थानादिति ॥ ननु चिकीर्षां प्रति इष्टसाधनताज्ञानस्यैव कारणत्वं कृत्यसा-ध्यताज्ञानस्य च प्रतिबन्धकत्वं वक्तव्यमित्याशंकायामाह–अत एवेति । कृत्यसाध्यत्वप्रकारकज्ञा-नस्य प्रतिबन्धकत्वमनुक्त्वा कृतिसाध्यत्वप्रकारकज्ञानस्य हेतुत्वस्वीकारादेवेत्यर्थः । वृष्ट्यादौ = वृष्टि-करणे चन्द्रानयने च, कृतिसाध्यताज्ञानाऽभावात्='वृष्टिर्मत्कृतिसाध्या'–'चन्द्रानयनं मत्कृतिसाध्य-मि'त्यादिज्ञानात्मककारणाऽभावात् न चिकीर्षा, अन्यथा कृत्यसाध्यताज्ञानाऽभावकाले इष्टसाधनता-ज्ञानसत्त्वे चिकीर्षापत्तिः स्यादिति भावः ॥ अत्र–मैथुनेच्छा = कामः, अभ्यवहारेच्छा = अभि-लाषः, पुनः पुनर्विषयानुरञ्जनेच्छा = संकल्पः, स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा=कारुण्यम्, दोषदर्शनात् विषयपरित्यागेच्छा=वैराग्यम्, परवञ्चनेच्छा=उपगूढः, अन्तर्निगूढेच्छा भावः, कर्तुमिच्छा = चिकीर्षा, संहारेच्छा=जिहीर्षा, परद्रव्याऽऽदानेच्छा=स्पृहा, अवश्यकर्तव्येऽपि स्व-द्रव्याऽपरित्यागेच्छा=लोभः, अन्यायेन परद्रव्याऽपहरणेच्छा=कापट्यम्–इत्येवमादय इच्छाविशे-षास्तत्कारणविशेषाश्च कल्पनीया एवेति ॥ १४७ ॥

ननु–विषसम्पृक्तान्नभक्षणादौ चिकीर्षापत्तिः, तत्र तृप्तिरूपेष्टसाधनत्वकृतिसाध्यत्वज्ञानसत्त्वादि-त्यत आह–मूले बलवद्द्विष्टेति । 'बलवद्द्वेषविषयीभूतस्य मरणस्य हेतुरिदं विषसम्पृक्तान्नभक्षण-मि'ति या मतिः ज्ञानं, तत् चिकीर्षां प्रति प्रतिबन्धकमित्यर्थः । कस्यचित् नैयायिकैकदेशिनो मते, तदहेतुत्वबुद्धेः–तस्य बलवदनिष्टस्य अजनकं तत्त्वप्रकारकस्य 'इदं बलवदनिष्टस्याऽजनकमि'त्याका-रकस्य बलवदनिष्टजनकत्वाभावज्ञानस्य चिकीर्षां प्रति कारणत्वं, बलवदनिष्टजनकत्वज्ञानस्य च प्रतिबन्धकत्वं स्वीकृतं विद्यत इत्यर्थः ॥ मुक्तावल्यां–बलवद्द्विष्टसाधनतेति । द्वेषे बलवत्त्वं वैजात्यमेव, तच्च नान्तरीयकदुःखविषयकद्वेषव्यावृत्तम्, तथा च–तादृशवैजात्यावच्छिन्नद्वेषविषयी-भूतवस्तुजनकत्वप्रकारकज्ञानं चिकीर्षां प्रति प्रतिबन्धकमिति भावः ॥ तत्प्रयोजनमाह–अतो मध्विति । मधुविषं–मधुरसंकीर्णं विषं, तेन सम्पृक्तं संसृष्टं यदन्नं तस्य भोजने न चिकीर्षा, कारणाऽभावादिति भावः ॥ अन्ये तु बलवद्द्विष्टसाधनत्वप्रकारकज्ञानत्वेन प्रतिबन्धकत्वापेक्षया लाघवात् बलवद्द्वेषत्वेन प्रतिबन्धकत्वमाह–बलवद्द्वेष इति ॥ बलवद्द्विष्टसाधनत्वज्ञानाधीनो द्वेष इत्यर्थः । अधीनत्वान्तं परिचायकमात्रं बोध्यम् । तथा च समवायेन तद्धर्मावच्छिन्नतन्निष्ठवि-शेष्यताशालिचिकीर्षां प्रति तद्धर्मप्रकारकतद्विशेष्यकद्वेषत्वेन समवायेन प्रतिबन्धकत्वमिति भावः । अत्र चिकीर्षां प्रति बलवद्द्विष्टसाधनताज्ञानाधीनद्वेषस्यैव प्रतिबन्धकत्वे यत्र यदा इष्टसाधनताज्ञानं द्विष्टसाधनताज्ञानजनकसामग्रीसमवधानं च तत्र तदुत्तरक्षणे द्विष्टसाधनताज्ञानस्येव इच्छाया

बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः ॥ १४८ ॥

द्विष्टसाधनताबुद्धिर्भवेद् द्वेषस्य कारणम् ।

द्वेषं निरूपयति–द्विष्टसाधनतेति । दुःखोपायविषयकं द्वेषं प्रति बलवद्द्विष्टसाधनताज्ञानं कारणमित्यर्थः । बलवदिष्टसाधनताज्ञानं च प्रतिबन्धकम्, तेन नान्तरीयकदुःखजनके पाकादौ न द्वेषः ॥

प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम् ।

प्रयत्नं निरूपयति–प्रवृत्तिश्चेति । प्रवृत्ति-निवृत्ति-जीवनयोनियत्नभेदात्प्रयत्नस्त्रिविध इत्यर्थः ॥

चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ॥ १५० ॥
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ।

---

अप्युत्पत्तिप्रसंगः, द्वेषाऽभावरूपप्रतिबन्धकाऽभावसत्त्वादित्यस्वरसः 'अन्ये' इत्यनेन सूचितः ॥ बलवदनिष्टाऽजनकत्वज्ञानमिति । समवायेन तद्धर्मावच्छिन्नविशेष्यकचिकीर्षां प्रति बलवद्द्वेषविशिष्टज्ञानस्य समवायेन कारणत्वं बोध्यम् । एतन्मतेऽपि मूलोक्तेन 'कस्यचिन्मते'–इत्यनेनाऽस्वरसः सूचितः, तद्बीजं तु–कृतिसाध्यताज्ञानादिमतो बलवदनिष्टसाधनताज्ञानशून्यस्य पुरुषस्य बलवदनिष्टाऽजनकत्वज्ञानं विनाऽपि चिकीर्षायां विलम्बाऽभाव एवेति बोध्यम् ॥ १४८ ॥

क्रमप्राप्तं द्वेषं निरूपयति मूले–द्विष्टेति । 'द्वेष्मी'त्यनुभवसिद्धद्वेषत्वजातिमत्त्वं 'द्विष्टसाधनताज्ञानजन्यगुणत्वं वा द्वेषस्य लक्षणम्, द्वेषो द्विविधः, दुःखविषयकः तदुपायविषयकश्च, आद्ये दुःखज्ञानं हेतुः, द्वितीये द्विष्टसाधनताज्ञानं हेतुः । तदेवाह–मुक्तावल्यां–दुःखोपायेति । 'द्विष्ट'पदस्यार्थमाह–बलवद्द्विष्टेति । द्वेषे बलवत्त्वं च–नान्तरीयकदुःखाऽधिकदुःखविषयकत्वम्, तथा नान्तरीयकं–मध्ये मध्ये आनुषङ्गिकतया जायमानं यद्दुःखं ततोऽधिकदुःखविषयकद्वेषविशिष्टवस्तुनः यत्साधनं तत्त्वप्रकारकज्ञानं दुःखोपायविषयकद्वेषं प्रति कारणम् । अथ च–'बलवदिच्छाविषयीभूतस्य अर्थस्य साधनमिद'मिति ज्ञानं प्रतिबन्धकम्, तेन=द्वेषे बलवत्त्वविशेषणेन, नान्तरीयकदुःखजनके=मध्ये आनुषङ्गिकतया जायमानस्य बलवद्द्वेषाऽविषयस्य दुःखस्य जनके, पाकक्रियादौ न द्वेषः, कारणसत्त्वे कार्याभावात्मकव्यभिचारापत्तिर्न भवतीत्यर्थः ॥

त्रिविधं प्रयत्नं दर्शयति–मूले–प्रवृत्तिश्चेति । प्रयत्नत्वजातिमत्त्वं प्रयत्नस्य लक्षणम्, प्रवृत्तित्वं रागजन्यतावच्छेदकतया सिद्धो जातिविशेषः, निवृत्तित्वं द्वेषजन्यतावच्छेदकतया सिद्धो जातिविशेषः, जीवनयोनित्वं साहजिकप्राणसंचारविषयकयत्नत्वम्, यद्वा प्रवृत्तित्वं प्रवृत्तिपदशक्यतावच्छेदकतया निवृत्तित्वञ्च निवृत्तिपदशक्यतावच्छेदकतया जीवनयोनियत्नत्वं च जीवनयोनिपदशक्यतावच्छेदकतया सिद्धो जातिविशेषः तत्र रूढिस्वीकारात् ॥ जीवनं प्राणसञ्चारस्तस्य कारणम् असाधारणनिमित्तमित्यर्थः । तान्त्रिकैः=नैयायिकैः ॥

प्रवृत्तिकारणमाह–मूले–चिकीर्षेति । प्रवृत्तौ–प्रवृत्तिं प्रति, चिकीर्षा, कृतिसाध्यताज्ञानम्, इष्टसाधनताज्ञानम्, उपादानाख्यसमवायिकारणस्य प्रत्यक्षं चेति चतुष्टयं कारणमित्यर्थः । चन्द्रानयने·

चिकीर्षेत्यादि। मधुविषसंपृक्तान्नभोजनादौ बलवदनिष्टानुबन्धित्वज्ञानेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः। कृतिसाध्यताज्ञानादिवत् बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यतिरेकाभ्यां प्रवृत्तौ कारणमित्यपि वदन्ति॥ कार्यताज्ञानं प्रवर्तकमिति गुरवः, तथाहि-ज्ञानस्य प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति, सा च कृतिसाध्यताज्ञानसाध्या, इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमात्, चिकीर्षा हि कृतिसाध्यत्वप्रकारिकेच्छा, तत्र कृतिसाध्यत्वं प्रकारः तत्प्रकारकं ज्ञानं चिकीर्षायां तद्द्वारा च प्रवृत्तौ हेतुः, नत्विष्टसाधनताज्ञानं तत्र हेतुः, कृत्यसाध्येऽपि चन्द्रमण्डलानयनादौ प्रवृत्त्यापत्तेः, ननु कृत्यसाध्यताज्ञानं प्रतिब-

---

कृतिसाध्यताज्ञानाऽभावात्, अग्निप्रवेशे इष्टसाधनताज्ञानाऽभावात्, द्व्यणुकोत्पादने परमाणुप्रत्यक्षाऽभावात्, न प्रवृत्तिः, भवति च कुलालस्य घटे प्रवृत्तिः, तादृशकारणचतुष्टयसत्त्वादिति बोध्यम्। मधुविषसम्पृक्तान्नभोजने चिकीर्षाऽभावात्प्रवृत्त्यभावं दर्शयति मुक्तावल्यां-मधुविषेति। चिकीर्षां प्रति बलवदनिष्टाऽनुबन्धित्वज्ञानाऽभावस्य हेतुत्वेन तदभावात् प्रतिबन्धकस्य बलवदनिष्टानुबन्धित्वज्ञानस्य सत्त्वात् चिकीर्षानुत्पत्तौ प्रवृत्त्यनुत्पत्तिरित्यर्थः॥ उक्तचतुष्टयस्येव बलवदनिष्टानुबन्धित्वाभावप्रकारकज्ञानस्यापि स्वतन्त्रहेतुत्वे मतान्तरमाह-कृतिसाध्यताज्ञानादिवदिति। आदिना चिकीर्षादिः दृष्टान्तो ग्राह्यः। स्वतन्त्रेति। किंचिद्द्वारकेत्यर्थः। बलवदनिष्टाननुबन्धित्वज्ञानसत्त्वे चिकीर्षा तादृशज्ञानाऽभावे चिकीर्षाऽभाव इत्यन्वयव्यतिरेकौ बोध्यौ, तत्सहकृतमनस्सन्निकर्षादिति यावत्। अत्र 'बलवदनिष्टानुबन्धित्वज्ञानसत्त्वे चिकीर्षाऽभावात् बलवदनिष्टाऽननुबन्धित्वज्ञानं चिकीर्षाद्वारा प्रवृत्तिकारणं न तु साक्षादित्यस्वरसो 'वदन्ती'त्यनेन सूचितः॥ कृतिसाध्यत्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानानां विध्यर्थत्वव्यवस्थापनाय प्रथमं कार्यत्वमात्रस्य विध्यर्थत्ववादिप्राभाकरमतं निरसितुमादावुपन्यस्यति-कार्यताज्ञानमिति। कार्यताज्ञानं=कृतिसाध्यताज्ञानमात्रम्, प्रवर्तकम्=चिकीर्षाद्वारा प्रवृत्तिजनकमित्यर्थः। गुरवः-प्राभाकराः मीमांसकाः। वदन्तीतिशेषः। तदुपपादयति-तथाहीति। ज्ञानस्य=कृतिसाध्यताज्ञानस्य (कार्यताज्ञानस्य), प्रवृत्त्यात्मककार्ये जननीये सति, चिकीर्षात्मकव्यापारभिन्नं सहकारिकारणं किमपि नाऽपेक्षितं भवति, सहकारिकारणं चिकीर्षातिरिक्तं नास्त्येवेत्यर्थः॥ चिकीर्षायां व्यापारत्वमुपपादयति-सा चेति। चिकीर्षैव कृतिसाध्यता(कार्यता)ज्ञानसाध्या भवति। तत्र हेतुमाह-इच्छाया इति। चिकीर्षायाः स्वं या चिकीर्षा तत्र प्रकारः एव प्रकारो यत्र सा स्वप्रकारप्रकारकधीः, तत्साध्यत्वनियमात्=अन्वयव्यतिरेकाभ्यां तज्जन्यत्वावश्यकत्वादित्यर्थः। उक्तार्थं घटयति-चिकीर्षा हीति। तत्र=इच्छायाम्। तत्प्रकारकं=कृतिसाध्यत्वप्रकारकं ज्ञानम्, चिकीर्षायां कारणम्, तद्द्वारा=चिकीर्षाद्वारा च प्रवृत्तौ कारणमिति॥ वस्तुतो लाघवात् साध्यतासंसर्गेण कृतिप्रकारिका 'पाको मत्कृतिमान् भवत्वि'तीच्छैव व्यापार इति बोध्यम्॥ इष्टसाधनताज्ञानस्य प्रवृत्तिहेतुत्वं निषेधति-न त्विति। अन्वयव्यभिचारमाह-कृत्यसाध्येऽपीति। कृतेः असाध्येऽपि चन्द्रमण्डलानयने इष्टसाधनताज्ञानात्मककारणसत्वात् व्यभिचार इत्यर्थः। तथा च प्रयत्नाऽसाध्यत्वेनाऽवगते चन्द्रानयनादौ प्रवृत्त्यदर्शनात् प्रयत्नसाध्यत्वेनाऽवगते यागादौ प्रवृत्तिदर्शनात् कृतिसाध्यताज्ञानमेव चिकीर्षाद्वारा प्रवृत्तिजनकम्, अतः कृतिसाध्यत्वमेव विध्यर्थ इत्याशयः॥ नैयायिकः शंकते-ननु कृत्येति। 'चन्द्रमण्डलानयनं मत्कृत्यसाध्यमि'तिज्ञानं प्रतिबन्धकम्, तेन प्रवृत्तिर्न स्याच्चन्द्रानयने, अतो न व्यभिचार इति भावः॥ प्राभाकरो निषेधति-नेति। तदभावाऽपेक्षया=कृत्यसाध्यताज्ञानाऽभावात्मको यः प्रतिबन्धकाऽभावस्तस्य कारणत्वाऽ-

न्धकमिति चेद्,-न, तदभावापेक्षया कृतिसाध्यताज्ञानस्य लघुत्वात्। न च द्वयोरेव हेतुत्वं, गौरवात्। ननु त्वन्मतेऽपि मधुविषसंपृक्तान्नभोजने चैत्यवन्दने च प्रवृत्यापत्तिः, कार्यताज्ञानस्य सत्त्वादिति चेद्,-न, स्वविशेषणवत्ताप्रतिसन्धानजन्य-

पेक्षया, कृतिसाध्यत्वप्रकारकज्ञाने कारणतायां लाघवादित्यर्थः। तादृशप्रतिबन्धकाऽभावविशिष्टकृतिसाध्यताप्रकारकज्ञानस्य प्रवृत्तिं प्रति कारणत्वे गौरवं तदपेक्षया केवलं कृतिसाध्यताप्रकारकज्ञानस्य कारणत्वे लाघवमिति भावः॥ कृत्यसाध्यतानिश्चयाऽभाव उभयमतेऽपि सर्वत्र चिकीर्षोत्पत्तिपूर्वं सिद्धः, कृतिसाध्यताज्ञानं तु न तथा, तथा च कृतिसाध्यताज्ञानत्वस्य सदपि लाघवं कारणतावच्छेदकतायां न विनिगमकं, तत्र नियतपूर्ववर्तितावच्छेदकत्वकल्पनागौरवस्य दुर्वारत्वात्, कृत्यसाध्यताज्ञानाऽभावत्वे चाऽन्यथासिद्धिनिरूपकताऽनवच्छेदकत्वस्यैव कल्प्यतया तत्राऽपि लाघवगौरवयोस्तौल्यात्, तथा च कारणतावच्छेदकगौरवम् अकिञ्चित्करमेवेति विनिगमनाविरहादुभयोरेव हेतुत्वमावश्यकमित्याशयेन नैयायिकः शंकते-न **च द्वयोरेवेति**। निरुक्ताऽभावत्वज्ञानत्वाभ्यामित्यादिः। स्वातन्त्र्येण कृत्यसाध्यताज्ञानाऽभावस्य कृतिसाध्यताज्ञानस्य चेत्यर्थः॥ मीमांसको दूषयति-**गौरवादिति**। कारणतावच्छेदकद्वयकल्पने गौरवात्, कृतिसाध्यताज्ञानत्वाऽपेक्षया कृत्यसाध्यताज्ञानाऽभावत्वस्य गौरवादित्यर्थः। तथा च कथायां स्वकीयतत्त्वनिर्णये स्वानुभवविषये कृतिसाध्यताज्ञानत्वे फलनियतपूर्ववर्तितावच्छेदकताघटितकारणतावच्छेदकतायाः कल्पनवेलायां लाघवज्ञानस्य सत्त्वेन कृत्यसाध्यताज्ञानाऽभावत्वे तु गौरवज्ञानस्य प्रतिबन्धकस्य सत्त्वेनाऽस्मदभीष्टसिद्धिरिति भावः॥ नैयायिकः शंकते-**ननु त्वन्मतेऽपीति**। प्राभाकरमतेऽपि मिष्टस्य विषयसम्पृक्तान्नस्य भोजने, चैत्यस्य "चैत्यमायतने बुद्धबिम्बेऽप्युद्देश्यपादपे' इति पाषाणादिनिर्मितायतनस्य बुद्धप्रतिमाया उद्देश्यवृक्षस्य वा वन्दने पुरुषस्य चिकीर्षाद्वारा प्रवृत्त्यापत्तिः स्यात्, तत्र कार्यताज्ञानस्य-कृतिसाध्यताज्ञानात्मककारणस्य 'विषयुक्तमधुरान्नभोजनं मत्कृतिसाध्यमि'त्याकारकस्यसत्त्वादित्यर्थः॥ प्राभाकरस्तत्समाधत्ते **स्वविशेषणेति**। स्वं=प्रवर्तमानः पुरुषः,तस्य विशेषणं=तन्निष्ठो धर्मः,-काम्ये पुत्रेष्टियागादौ कर्मणि कामनादिरूपो, नित्ये सन्ध्यावन्दनादौ कर्मणि तात्कालिकशौचादिरूपो, नैमित्तिके च आशौचादिरूपः, तद्वत्ताप्रतिसन्धानं='तादृशतत्तद्विशेषणवानह'मित्याकारकं ज्ञानम्, लिंगविधया तज्जन्यत्वस्य सकलकार्यता(कृतिसाध्यता)ज्ञानसाधारणत्वात् तज्जन्यत्वेन सकलकृतिसाध्यताज्ञानस्यानुमितिरूपस्याऽनुगतत्वेन तादृशज्ञानस्यैकस्यैव चिकीर्षाद्वारा प्रवर्तकत्वात्=प्रवृत्तिं प्रति हेतुत्वादित्यर्थः। कृतिसाध्यत्वानुमानं चेत्थं 'यागादिः,-मत्कृतिसाध्यः,-मत्कृतिं विनाऽसत्त्वे सति मदिष्टसाधनत्वात्, भोजनादिवत्, यन्नैवं तन्नैवं यथा गगनादीति। अत्र वृष्ट्यादौ व्यभिचारवारणाय प्रथमं सत्यन्तम्, मदिष्टसाधनपरकृतिपाकादौ व्यभिचारवारणाय 'मत्कृतिं विने'त्यत्र मत्पदम्, श्रमे व्यभिचारवारणाय मदिष्टसाधनत्वादिति। मदीयश्रमस्य मच्छत्रोरिष्टसाधनत्वात् तद्दोषतादवस्थ्यमतस्तद्दलघटकेष्टे मदीयत्वनिवेशः। अत्र नान्तरीयकश्रमे प्रवृत्त्यापत्तिवारणाय स्वेच्छाधीनकृतिसाध्यताज्ञानस्यैव प्रवर्तकत्वं वक्तव्यं, तच्चोक्तानुमानान्न संभवत्यतः स्वेच्छाधीनकृतिसाध्यत्वस्यैव साध्यत्वं बोध्यम्, एवं च हेतावपि 'मत्कृतिं विने'त्यत्र स्वेच्छाधीनत्वं मत्कृतिविशेषणं देयम्, अन्यथा अन्येच्छाधीनमत्कृतिसाध्यमदिष्टसाधने नान्तरीयकजलसंयोगादौ व्यभिचारापत्तेः। एवं सति स्वेच्छाधीनमत्कृतिघटितहेत्वभावादेव श्रमे व्यभिचारवारणसंभवात् विशेष्यदलप्रयोजनं यद्यपि न संभवति, तथापि नीलधूमादिवद्धेत्वन्तरत्वात् अदोषः॥ एवं-'चैत्रः,-इदानीन्तनकृतिसाध्यसन्ध्यावन्दनः, द्विजातित्वे सति विहितसन्ध्याकालीनशौचादिमत्त्वात्, यो

**कार्यताज्ञानस्य प्रवर्तकत्वात्। काम्ये हि यागपाकादौ कामना स्वविशेषणम्, ततश्च बलवदनिष्टाननुबन्धिकाम्यसाधनताज्ञानेन कार्यताज्ञानम्, ततश्च प्रवृत्तिः। तृप्तश्च भोजने न प्रवर्तते-तदानीं कामनायाः पुरुषविशेषणत्वाभावात्। नित्ये च शौचादिकं पुरुषविशेषणम्, तेन शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात्तत्र प्रवृत्तिः। ननु तदपेक्षया लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानविशिष्टकार्यताज्ञानमेव**

---

द्विजातित्वे सति विहितसन्ध्याकालीनशौचादिमान् स तत्कालीनकृतिसाध्यसन्ध्यावन्दनः, यथाऽहम्, इत्यनुमानात् नित्ये कार्यताज्ञानं संभवतीति ॥ ननु 'यागादिः,-स्वेच्छाधीनमत्कृतिसाध्यः, स्वेच्छाधीनमत्कृतिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वात्, स्वेच्छाधीनमत्कृतिं विना असत्त्वे सति सत्त्वाद्वा'-इत्यनुमानाज्जायमानस्वेच्छाधीनकृतिप्रकारकानुमित्यात्मकज्ञानादपि प्रवृत्त्यापत्तिः, तादृशानुमितेरपि कृतिरूपस्वविशेषणघटितहेतुप्रतिसन्धानजन्यत्वादित्यत आह-**काम्ये हीति**। यागपाकादौ कामनाविषये इत्यर्थः। हि-यतः,कामनैव स्वविशेषणं=स्वविशेषणशब्देन विवक्षिता, एवं विशेषणशब्दोत्तरप्रत्ययेन स्वविषयसाधनतैव विवक्षिता, तथा च स्वविशेषणवत्ताप्रतिसन्धानशब्देन कामनाविषयसाधनताज्ञानस्यैव(इष्टसाधनताज्ञानस्यैव)विवक्षितत्वात् 'यागादिः स्वेच्छाधीनमत्कृतिजन्य'-इत्यनुमितिज्ञानस्य च कामनाविषयसाधनताज्ञानजन्यत्वाऽभावात् न प्रवृत्त्यापत्तिरिति भावः। चैत्यवन्दने-इष्टसाधनताज्ञानजन्यकृतिसाध्यत्वज्ञानाऽभावात् न प्रवृत्त्यापत्तिः ॥ ननु तथापि मधुविषसम्पृक्तान्नभोजने काम्य(तृप्ति)साधनताज्ञानजन्यकार्यताज्ञानेन प्रवृत्त्यापत्तिस्तु न निवृत्तेत्यत आह-**ततश्च बलवदेति**। हेतौ स्वविशेषणवत्ताप्रतिसन्धाने बलवदनिष्टाऽननुबन्धित्वविषयकत्वमिति विशेषणदाने सति, बलवदनिष्टाऽननुबन्धीष्टसाधनताज्ञानजन्यं यत् कार्यताज्ञानं ततश्चः तादृशज्ञानात्-प्रवृत्तिर्वाच्या, एवंच सति मधुविषसम्पृक्तान्नभोजने इष्ट(तृप्ति)साधनताज्ञानस्य बलवदनिष्टा( मरणा)ऽनुबन्धित्वविषयकतया बलवदनिष्टाऽननुबन्धीष्टसाधनताज्ञानाऽभावात् ततो न प्रवृत्त्यापत्तिरिति भावः ॥ ननु तृप्तस्याऽप्यतीतभोजनकामनाघटितलिंगजन्यकार्यताज्ञानात् प्रवृत्त्यापत्तिरित्यत आह-**तृप्तश्चेति**। तृप्तो भोजने नैव प्रवर्तते, कुतः ? कामनायास्तदानीं=तृप्तिकाले, पुरुषविशेषणत्वाऽभावात्-पुरुषवृत्तित्वाऽभावादित्यर्थः। तथा च 'स्वविशेषणे'त्यत्र तदानीन्तनत्वं विशेषणं देयमिति भावः। तथा च बलवदनिष्टाऽननुबन्धिविषयक-तत्कालीनकामनाविषयसाधनत्वघटितलिङ्गज्ञानजन्यतादृशकार्यताज्ञानं तत्कालीनप्रवृत्तिकारणमिति फलितार्थः ॥ ननु नित्ये सन्ध्यावन्दनादौ इष्टाऽभावेन इष्टसाधनताघटितनिरुक्तकारणाऽभावात् सर्वानुभवसिद्धप्रवृत्त्यनुपपत्तिरित्यत आह-**नित्ये चेति**। शौचादिकमित्यादिना विहितकालजीवित्वपरिग्रहः। **पुरुषविशेषणमिति**,-स्वविशेषणपदेन विवक्षितमित्यर्थः। **तेनेति**। स्वविशेषणशब्देन शुचित्वादेर्विवक्षितत्वेनेत्यर्थः। तत्र-सन्ध्यावन्दनादिकर्मणि, **प्रवृत्तिः**, वक्तव्येति शेषः। तथा च शुचित्वविहितकालजीवित्वाद्याश्रयत्वरूपलिङ्गज्ञानाधीनतादृशकार्यताज्ञानस्यैव प्रवर्तकत्वलाभान्न नित्ये प्रवृत्त्यनुपपत्तिरिति भावः ॥ नैयायिकः शंकते-**ननु तदपेक्षयेति**। बलवदनिष्टाऽननुबन्धित्वविशिष्टतत्कालीनेष्टसाधनताज्ञानजन्यकृतिसाध्यताज्ञानत्वेन कारणत्वाऽपेक्षयेत्यर्थः ॥ **लाघवेनेति** ॥ तद्व्याप्यत्वे सति तन्निष्ठाऽन्यथासिद्ध्यनिरूपकत्वात्मकजन्यत्वस्य ज्ञानत्वस्य चाऽनिवेशप्रयुक्तलाघवेनेत्यर्थः। **बलवदनिष्टाऽननुबन्धीष्टसाधनताज्ञानविशिष्टकार्यताज्ञानमेवेति**। बलवदनिष्टाऽननुबन्धित्वेष्टसाधनत्वकृतिसाध्यत्वेतित्रितयविषयकज्ञानत्वेन कारणं भवत्वित्यर्थः। ननु बलावदनिष्टाननुबन्धित्वज्ञानस्य प्रवृत्तिहेतुत्वे मुक्तिकामस्य तीर्थयात्रादौ स्वर्गकामस्य ज्योतिष्टोमादौ प्रवृत्त्यनुपपत्तिः कायशोषणादिरूपबलवद्दुःखसाधनत्वात्, एव

**हेतुरस्तु, बलवदनिष्टाननुबन्धित्वं चेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं बलवद्द्वेषविषयदुःखाजनकत्वं वेति चेद्,–न,–इष्टसाधनत्वकृतिसाध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात्साध्यत्वसाधनत्वयोर्विरोधात्। असिद्धस्य हि साध्यत्वं, सिद्धस्य च साधनत्वम्। न चैकमेकेनैकदा सिद्धमसिद्धं चेति ज्ञायते, तस्मात्कालभेदादुभयं**

---

मत्युष्णोदकस्नानादौ प्रवृत्त्यापत्तिः अल्पदुःखसाधनत्वादित्यत आह–**बलवदनिष्टाऽननुबन्धित्व चेति**। इष्टस्य पाकादिकार्यस्य उत्पत्तेः नान्तरीयकं–नियतपूर्ववृत्तिसाधनकर्म जन्यं मध्ये मध्ये स्थितं, तत् आयासादि दुःखं, तदधिकस्य अतिरिक्तस्य प्राणपीडादिदुःखस्याऽजनकत्वरूपमेव ग्राह्यमित्यर्थः। तथा च नोक्ताऽनुपपत्त्यापत्तीति भावः॥ नन्वेवं सति नरकसाधनत्वेन प्रमिते परदाराभिगमनादौ रागौत्कट्यादपि न प्रवर्तेत इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वेन रागिणो निश्चयादित्यत आह–**बलवद्द्वेषेति**। विजातीयद्वेषविषयदुःखाऽजनकत्वं वेत्यर्थः। तथा च रागान्धस्य यदाऽगम्यागमनादिजन्यदुःखे न तादृशो द्वेषस्तदा तद्धेतौ न प्रवृत्त्यनुपपत्तिरिति भावः॥ मीमांसको निराकुरुते–**न,इष्टसाधनत्वेति**। इष्टसाधनत्वस्य कृतिसाध्यत्वस्य च युगपत्-एककालावच्छेदेन ज्ञातुमशक्यत्वात्–ज्ञानविषयताप्रयोजकसामर्थ्याऽभावादित्यर्थः। तत्र हेतुमाह–**साध्यत्वेति**॥ क्षणविशेषघटितयोस्तयोरित्यर्थः॥ **विरोधादिति**॥ एकक्षणावच्छेदेनैकत्राऽवर्तमानत्वादित्यर्थः॥ विरोधमुपपादयति–**असिद्धस्येति**। आद्यक्षणसम्बन्धस्यैव साध्यत्वम्॥ **सिद्धस्येति**। आद्यक्षणान्यक्षणवृत्तित्वविशिष्टस्यैव साधनत्वम्। तथा च कृत्यव्यवहितोत्तरक्षणसम्बन्धित्वघटितस्य कृतिसाध्यत्वस्य पाकोत्पत्तिक्षणे एव पाकवृत्तित्वात् कालान्तरभाव्योदनादिफलसाधनत्वस्यौदनाऽव्यवहितपूर्वक्षणसम्बन्धित्वघटितस्य चोत्पत्तिक्षणे पाकाऽवृत्तित्वात् तयोरेकक्षणावच्छेदेनैकत्राऽवृत्तित्वरूपो विरोध इति भावः॥ यत् स्वरूपसम्पन्नं तत् साधनं यथा अपक्वावस्थतण्डुलादि, यच्च न स्वरूपसम्पन्नं तत् साध्यं यथौदनादि, अनयोर्युगपद्विरोधः, तं स्पष्टीकरोति–**न चैकमिति**। एकेन ज्ञात्रा एकं वस्तु एकक्षणे एव सिद्धं साध्यं चेत्युभयं न ज्ञायते, व्याप्यवृत्तिवस्तुनि विरुद्धधर्मयोर्विषयताया निरूपकत्वस्यैकज्ञानेऽसंभवादिति भावः॥ प्राभाकरमतमुपसंहरति–**तस्मादिति**। एककाले 'असिद्धः पाकः कृतिसाध्यः सिद्धश्चेष्टसाधनमि'त्याकारकसमूहालम्बनज्ञानस्याऽनुत्पादेन तदविषयीकरणादित्यर्थः॥ **कालभेदादिति**। भिन्नक्षणाऽवच्छेदेन एकैकज्ञानजननात् तन्निरूपितविषयतावत् निरुक्तसाधनत्वसाध्यत्वोभयं भवेदेवेत्यर्थः। तथा च इष्टसाधनत्वकृतिसाध्यत्वोभयविषयकज्ञानस्याऽप्रामाणिकतया नैयायिकैस्तादृशोभयविषयकज्ञानत्वेन प्रवृत्तिहेतुताया वक्तुमशक्यत्वात् अनायत्या सर्वैरपि तादृशकार्यताज्ञानत्वेनैव प्रवृत्तिकारणत्वं स्वीकार्यमिति प्राभाकराऽभिप्रायः॥ नैयायिकः प्राभाकरमतं दूषयति–**नैवमित्यादिना**॥ काम्ये पुरुषविशेषणं कामना, नित्ये शुचित्वविहितकालजीवित्वोभयम्, नमित्तिके आशौचादिकम्, एवं प्राणित्वस्यापि पुरुषविशेषत्वेन 'अहम्–इदानीन्तनकृतिसाध्यविषभक्षणः,—प्राणित्वादि'—त्यनुमितिसंभवात् विषभक्षणसाधारणं यत् स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानं ततोऽपि प्रवृत्त्यापत्तिवारणाय बलवदनिष्टाऽननुबन्धीष्टसाधनताऽपि पुरुषविशेषणं वक्तव्यम्, तथा च बलवदनिष्टाऽननुबन्धीष्टसाधनताऽऽशौच-शुचित्वविहितकालजीवित्वाद्यन्यतमलिङ्गप्रतिसन्धानजन्यकार्यताज्ञानस्य तव प्रवर्तकत्वाऽपेक्षया तद्व्याप्यत्वे सति तन्निष्ठान्यथासिद्धयनिरूपकत्वात्मक—जन्यत्वाऽघटिततया लाघवात् काम्यनित्यनैमित्तिकसाधारणबलवदनिष्टाऽननुबन्धित्वेष्टसाधनत्व-कृतिसाध्यत्वेतित्रितयविषयकज्ञानत्वेन

ज्ञायत इति। मैवम्। लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य तत्र हेतुत्वात्। न च साध्यत्वसाधनत्वयोर्विरोध, यदा कदाचित् साध्यत्वसाधनत्वयोरविरोधादेकदा साध्यत्वसाधनत्वयोश्च ज्ञानात्। नव्यास्तु-ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्तकम्, अनागते तस्य ज्ञातुमशक्यत्वात्। किन्तु यादृशस्य पुंसः कृतिसाध्यं यद् दृष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्तते। तेनौदनकामस्य तत्साध्यताज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यस्तादृशश्चाहमिति प्रतिसन्धाय पाके प्रवृत्तिरित्याहुः। तन्न। स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामोद्भेदादिना संभोगादिप्रवृत्तौ च तदभावात्॥ इदं तु बोध्यम्॥ इदानीन्तनेष्टसाधनत्वादिज्ञानं प्रवर्तकं,

---

हेतुत्वमुचितमित्याशयेनाह-लाघवेनेति। गुरुभूतजन्यत्वादिघटितधर्मस्य कारणतावच्छेदकत्वाऽप्रविष्टत्वप्रयुक्तलाघवेनेत्यर्थः॥ बलवदेति॥ बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वकृतिसाध्यत्वविषयकनिर्णयस्य तत्र=प्रवृत्तौ तादृशत्रितयविषयज्ञानत्वेन हेतुत्वादित्यर्थः॥ साध्यत्वसाधनत्वयोर्विरोधं परिहरति-न चेति। नहीत्यर्थः॥ अविरोधमुपपादयति-यदा कदाचिदिति। विभिन्नकालघटितयोः साध्यत्वसाधनत्वयोरेकत्र वृत्तौ बाधकाऽभावादित्यर्थः॥ एकदेति। इदं च ज्ञानादित्यन्वयि। एककालीनज्ञाने द्वयोर्विषयतयाऽन्वयादिति भावः। तथा च-साध्यत्वसाधनत्वयोश्च=अनवच्छिन्नयोरविरुद्धयोःसाध्यत्वसाधनत्वयोस्तु, एककालीनज्ञानसम्भवात्, न प्रवृत्त्यनुपपत्तिरित्यर्थः। क्वचित्-पुस्तके 'एकदा साध्यत्वसाधनत्वयोश्चाऽज्ञानादि'ति पाठः॥ प्राभाकरमताऽनुयायिनां नव्यानां मतमाह-नव्यास्त्विति। 'इदं मत्कृतिसाध्यमि'त्याकारकज्ञानं न प्रवृत्तिकारणं, अनागते-भविष्यत्पाके, तस्य=मत्कृतिसाध्यत्वस्य, ज्ञातुमशक्यत्वात्-ज्ञानाऽसम्भवात्, भविष्यत्पाकस्य ज्ञानाऽसम्भवेन-सामान्यलक्षणायाः प्रत्यासत्तित्वानङ्गीकर्तृमते प्रत्यक्षस्य पक्षज्ञानाभावेनानुमितेश्चाऽसम्भवात् तद्विशेष्यककृतिसाध्यत्वप्रकारकज्ञानस्य सुतरामसम्भवादिति भावः॥ किन्त्विति। यादृशस्य=कृत्युत्पादकयादृशसामग्रीविशिष्टस्य पुरुषस्य, कृतिसाध्यम्=कृतिविधेयताश्रयतावत्, यद्विशिष्टं-यद्धर्मावच्छिन्नं प्रमितम्, तादृशत्वं स्वस्य प्रतिसन्धाय=तादृशसामग्रीमानहमिति निर्णयात्, तत्र प्रवर्तते=तद्धर्मावच्छिन्नविधेयताकप्रवृत्तिमान् भवतीत्यर्थः॥ अनागते व्यभिचारं वारयति-तेनेति। 'ममेदं कृतिसाध्यमि'तिज्ञानस्य प्रवर्तकत्वस्वीकारेणेत्यर्थः। ओदनकामस्य='ओदनं मम भवत्वि'तीच्छाविशिष्टस्य, तत्साध्यताज्ञानवतः=अन्यदीयपाकविशेष्यकान्यदीयकृतिसाध्यत्वप्रकारकप्रत्यक्षादिप्रमावतः, तदुपकरणात्मकदर्व्यादिसामग्रीमतश्च, पाकः कृतिसाध्यः='कृतिनिरूपितविधेयताश्रयः पाकः प्रमितः, तादृशश्चाहमिति प्रतिसन्धाय पाके प्रवृत्तिः=निरुक्तफलेच्छादिसामग्रीमानहमिति निश्चयादेव पाकविधेयताकप्रवृत्तिः भवतीत्यर्थः॥ नैयायिकस्तन्निषेधति-तन्न स्वेति। स्वकल्पित-(संकेतित)लिप्यादौ तादृशभाषादौ च तन्निर्मातुः अन्यदीयकृतिसाध्यविजातीयलिप्याद्यप्रसिद्धिप्रयुक्ताऽदर्शनेन तादृशश्चाहमिति प्रवर्तकज्ञानाऽसम्भवेन कारणाऽभावेऽपि तादृशलिप्यादिप्रवृत्त्युत्पत्त्या व्यभिचारान्न तादृशज्ञानं प्रवर्तकमिति भावः॥ स्थलान्तरे व्यभिचारमाह-यौवने इति। यौवने कामातिशयेन सम्भोगादिमतः पुरुषस्य अन्यदीयकृतिसाध्यदर्शनमन्तरेणाऽपि स्वत एव सम्भोगे प्रवृत्तिदर्शनात्, आदिना बाल्ये अविवेकेन स्वमातृताडनप्रवृत्तिदर्शनाच्च त्वदुक्तं व्यभिचारीति भावः। तदभावात्=यादृशस्य पुंसः कृतिसाध्यं यद् दृष्टं तादृशत्वज्ञानाऽभावात्॥ ननु इष्टसाधनताज्ञानस्य प्रवर्तकत्वे भावियौवराज्ये प्रवृत्त्यापत्तिरत आह-इदन्तु बोध्यमिति। अनुपदं वक्ष्यमाणं प्रवर्तकं बोध्यमित्यर्थः॥ इदानीन्तनेति॥ इदानीन्तनेच्छाविषयसाधनत्वेदानीन्तनकृति-

**तेन भावियौवराज्ये बालस्य न प्रवृत्तिः,—तदानीं कृतिसाध्यत्वाज्ञानात्। एवं तृप्तश्च भोजने न प्रवर्तते,-तदानीमिष्टसाधनत्वाज्ञानात्। प्रवर्तते च दोषदूषितचित्तो विषादिभक्षणे,-तदानीं बलवदनिष्टाननुबन्धित्वज्ञानात्। न चास्तिककामुकस्याग-म्यागमने शत्रुवधादिप्रवृत्तौ च कथं बलवदनिष्टाननुबन्धित्वबुद्धिर्नरकसाधनत्वज्ञा-नादिति वाच्यम्, उत्कटरागादिना नरकसाधनताधीतिरोधानात्। वृष्ट्यादौ तु कृतिसाध्यताज्ञानाभावान्न चिकीर्षाप्रवृत्ती, किन्त्विष्टसाधनताज्ञानादिच्छामात्रम्। कृतिश्च प्रवृत्तिरूपा बोध्या, तेन जीवनयोनियत्नसाध्ये प्राणपञ्चकसञ्चारे न प्रवृत्तिः। इत्थञ्च प्रवर्तकत्वानुरोधाद्विधेरपीष्टसाधनत्वादिकमेवार्थः।**

---

साध्यत्वेदानीन्तनबलवद्द्वेषविषयाऽननुबन्धित्वैतत्त्रितयविषयकज्ञान प्रवृत्तिजनकं बोध्यमित्यर्थः। स्थलत्रये इदानीन्तनत्वनिवेशस्य क्रमशः फलमाह-**तेनेति**। कृतिसाध्यत्वघटककृतौ इदानीन्तनत्व-निवेशेनेत्यर्थः। तदानीं=बाल्यावस्थायाम्, कृतिसाध्यत्वाऽज्ञानात्=इदानीन्तनकृतिसाध्यत्वाऽज्ञा नात् न भावियौवराज्ये प्रवृत्त्यापत्तिः। इच्छायामिदानीन्तनत्वविशेषणस्य फलमाह-**एवमिति**। इष्टसाधनत्वघटकेच्छायामिदानीन्तनत्वनिवेशेनेत्यर्थः। तदानीन्=तृप्तिसमये, इष्टस्य-तृप्तिसमया-वच्छिन्नेच्छाविषयत्वस्य तृप्तावभावात् सुतरां तत्साधनत्वज्ञानाऽभावादित्यर्थः। बलवद्द्वेषे इदानीन्त-नत्वनिवेशफलमाह-**प्रवर्तते चेति**। दोषेण सुरापानादिना दूषितं गर्हितं चित्तं यस्य सः, तथोक्तो जनो विषभक्षणे गर्हितव्यवहारे वा प्रवर्तते, तदानीन्तनबलवदनिष्टाननुबन्धित्व-ज्ञानस्य सम्भवात्॥ मध्ये मीमांसकः शंकते—**न चास्तिककामुकस्येति**। अस्ति परलोक इति ज्ञानवतः कामिपुरुषस्य, अगम्यायाः-सम्बद्धुमयोग्याया गमने संभोगे शत्रुमारणे सुरा-पानादौ च या प्रवृत्तिस्तत्र, नरकसाधनत्वज्ञानात्=अनिष्टसाधनत्वज्ञानसत्त्वेऽपि, कथं नियतपूर्ववर्तितया बलवदनिष्टाऽननुबन्धित्वनिश्चयो भवति, अर्थात् न स्यात्, तथा च प्रति-बन्धकसत्त्वेन कारणाऽभावात् कार्यसत्त्वे व्यतिरेकव्यभिचारात् न। बलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवृत्तिसामान्ये हेतुत्वमिति भावः॥ समाधत्ते नैयायिकः-**उत्कटेति**। उत्कटत्वं वैजात्यं, पुनः पुनरनुरञ्जनात्मकोत्कटेच्छात्मकरागेण उत्कटत्वरूपवैजात्यावच्छिन्नसंहारेच्छारूपजिहीर्षया च नरकाऽस्फूर्त्या नरके बलवद्द्वेषाऽनुत्पत्त्या वा तत्र बलवद्द्विष्टसाधनताज्ञानात्मकप्रतिबन्धकस्याऽप्य-भावात् प्रतिबन्धकाऽभावात्मककारणसत्त्वात् बलवदनिष्टानुबन्धित्वज्ञानानुत्पादाच्च प्रवृत्तिपूर्वं बल-वदनिष्टाननुबन्धित्वज्ञानोत्पत्तिसम्भवेन व्यभिचाराऽभावात्॥ कृतिसाध्यताज्ञानस्य फलमाह-**वृष्ट्यादाविति**। वृष्ट्यानयने चन्द्रानयने च 'वृष्ट्याद्यानयनं मत्कृतिसाध्यमि'तिज्ञानाऽभावान्न चिकीर्षा, तदभावाच्च न प्रवृत्तिः, किन्तु-इष्टस्य धान्यादेः साधनताज्ञानात् उपाये वृष्ट्यादौ इच्छा-मात्रं भवतीत्यर्थः॥ ननु कृतिसाध्यताज्ञानं न प्रवर्तकम्, कृतिपदेन जीवनयोनियत्नमादाय तत्स-त्त्वेऽपि प्राणपंचकसंचारे प्रवृत्त्यदर्शनाद् इत्यत आह-**कृतिश्चेति**। कृतिसाध्यताज्ञानमित्यत्र कृतिः प्रवृत्तिरूपैव विवक्षितेत्यर्थः। तत्फलमाह-**तेनेति**। प्रवृत्तिमात्रविवक्षणेनेत्यर्थः। तथा च प्रवृत्ति-साध्यताज्ञानाऽभावात् प्रवृत्त्यभाव अतो न व्यभिचार इति भावः॥ फलितसिद्धान्तमाह-**इत्थं चेति**। प्रवृत्तिं प्रति बलवदनिष्टाऽननुबन्धित्वेष्टसाधनत्वकृतिसाध्यत्वेतित्रितयविषयकज्ञानस्य कारणत्वे सिद्धे च, 'अग्निष्टोमेन यजेत स्वर्गकाम' इत्यादौ 'यजेते'त्यादिविधेरपि बलवदनिष्टान-नुबन्धीष्टसाधनत्वविशिष्टकृतिसाध्यत्वमेवाऽर्थो वाच्यः, प्रवर्तकत्वानुरोधात्=प्रवृत्तिकारणत्वा न्वयव्यतिरेकवत्त्वादित्यर्थः॥ अत्र वदन्ति-'विधिः न साक्षात् प्रवृत्तिजनकज्ञानमुत्पादयति,

इत्थञ्च 'विश्वजिता यजेत' इत्यादौ यत्र फलं न श्रूयते तत्रापि स्वर्गः फलं कल्प्यते।

किन्तु विधिवाक्यादिष्टसाधनत्वे कृतिसाध्यत्वे चाऽवगते किमिष्टमित्याकांक्षायां स्वर्गकामादिपदसमभिव्याहारात् स्वर्गसाधनमिति ज्ञानमानुमानिकं मानसं वा उत्पद्यते, अन्यथा विशेषरूपेण फलज्ञानाऽभावात् प्रवृत्त्यनुपपत्तेः, एवमिदानीन्तनत्वाद्यन्तर्भावेण कृतिसाध्यतादिज्ञानमनुमानादिति, अत एव चिन्तामणिकारेण 'एवं विधिजन्यज्ञानजन्यं ज्ञानं प्रवर्तकमि'त्युक्तमिति। **भट्टास्तु** स्वेच्छाजन्यत्वेन परप्रेरणाजन्यत्वेन च प्रवृत्तेर्द्वैविध्यात्, तत्र स्वेच्छाजन्यप्रवृत्तौ प्रवर्तनाया अनुपयोगेऽपि द्वितीयप्रवृत्तौ प्रेरणायाः प्रयोजकत्वम्, 'आचार्यप्रेरणया इदं करोमीति व्यवहारात्। प्रवर्तना च प्रवर्तयितुः प्रवृत्त्यनुकूलो व्यापारविशेषः, स च चेतनस्याऽभिप्राय एव, अचेतनस्य तु वेदस्य अभिधानात्मकः कश्चिच्छब्दसमवेतः, तथा च आचार्याऽभिप्रायज्ञानाद्यथा शिष्यः प्रवर्तते तथाऽभिधाज्ञानाद्विधिस्थले पुंसां प्रवृत्तिरिति साऽभिधैव लिङर्थः, सैव च शब्दभावना लिङ्त्वांशेनोच्यते, अर्थभावना तु आख्यातत्वांशेनेति ॥ तन्न। लोके स्वेच्छाधीनप्रवृत्तौ इष्टसाधनताज्ञानस्य हेतुत्वेन क्लृप्तत्वादन्यत्रापि प्रवृत्तौ तदेव कारणमस्तु, शब्दशक्तिभिन्नायामभिधायां मानाऽभावाच्च वेदेऽपि न प्रवर्तनाज्ञानं हेतुः। **मण्डनमिश्रास्तु**—प्रवर्तनापदेन प्रवृत्त्यनुकूलत्वेनेष्टसाधनत्वं गृहीत्वा ग्रन्थं संगमयन्ति ॥ अथ—वैदिकं वाक्यं विधिनिषेधाऽर्थवादभेदात्त्रिविधम्, तत्र इष्टसाधनत्वादिबोधकवाक्यत्वं विधित्वम्, यजेतेत्यत्र धात्वर्थे यागादौ स्वर्गसाधनत्वादिबोधकत्वाल्लक्षणसंगतिः। स विधिरुत्पत्तिविधिविनियोगविध्यधिकारविधिप्रयोगविधिभेदाच्चतुर्विधः, तत्र कर्मस्वरूपमात्रप्रतिपादनविधिरुत्पत्तिविधिः—यथा सोमेन यजेतेत्यादिः, तस्य सोमयागादिरूपकर्ममात्रविधायकत्वात्। क्रियार्थतया किञ्चिद्वस्तुविधायको विधिः विनियोगविधिः, यथा दध्ना जुहोतीत्यादिः, होमार्थतया दध्यादिविधायकत्वात्, अयं च अपूर्वविधिनियमविधिपरिसंख्याविधिभेदात्त्रिविधः, तत्र प्रमाणान्तरेणाऽप्रापको विधिरपूर्वविधिः, यथा व्रीहीन्प्रोक्षतीत्यादिः, लेटि स्वरूपविधिं विना व्रीहिकर्मकप्रोक्षणस्याऽप्राप्तत्वात् ॥ नियतप्रवृत्तिफलको विधिः नियमविधिः, यथा व्रीहीनवहन्तीत्यादिः, तत्र पुरोडाशनिष्पादकव्रीहिवैतुष्यद्वारा यागोपकारकत्वेनाऽवहननप्रवृत्तेरिव नखविदलनेऽपि प्रवृत्तिप्रसक्त्या प्रवृत्तिनियमो न स्यादिति नखविदलनादिकरणकतुषादिमोचनप्रवृत्तिभञ्जनपूर्वकाऽवहननकरणकतुषादिमोचनप्रवृत्तिनियमनिर्वाहकत्वादीदृग्विधेर्नियमविधित्वमिति। स्वसमभिव्याहृतधात्वर्थभिन्नार्थविषयकप्रवृत्तिभञ्जको विधिः परिसंख्याविधिः, यथा इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इत्यादिविधिः, तत्र इमामगृभ्णन्रशनामृतस्य पूर्वं आयुषि विदथेषु कव्ये इत्यादिमन्त्रस्य सामान्यतो रशनाग्रहणप्रतिपादकमन्त्रलिंगेन गर्दभरशनादानेऽपि विनियोगलाभादश्वरशनादानकाले मन्त्रवाक्यब्राह्मणवाक्यघटकविधितः प्रथममश्वरशनाग्रहणे एतन्मन्त्रविनियोगलाभेन निराकांक्षतया न गर्दभरशनाग्रहणे तादृशमन्त्रविनियोग इति। कर्तुः फलसम्बन्धबोधको विधिरधिकारविधिः, यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिविधिः। प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः, स च अंगवाक्यैकवाक्यतापन्नः प्रधानविधिरेव, यथा प्रयाजाद्यंगजातवाक्यैकवाक्यतामापन्नो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यादिः प्रधानविधिरेवोक्तः ॥

नतु विश्वजिता यजेतेत्यत्र इष्टफलाश्रवणेनेष्टसाधनताज्ञानाऽभावात् प्रवृत्त्यनुपपत्तिरित्यत आह—**इत्थं च विश्वजितेति**। इत्थं च=यजेतेत्यादिवाक्येषु विधिप्रत्ययस्येष्टसाधनत्वादिरूपेऽर्थेऽवगते सति, 'विश्वजिता यजेते'त्यादिफलश्रवणशून्यवाक्यस्थलेऽपि स्वर्गस्येष्टत्वाद् यागस्य तत्साधनत्वाच्च स्वर्गं एव फलमनुमीयते मानसविषयीक्रियते इति यावत्। तथाहि विश्वजिता यजेतेतिश्रुतिघटक-

**ननु 'अहरहः सन्ध्यामुपासीत' इत्यादाविष्टानुत्पत्तेः कथं प्रवृत्तिः?, न चार्थवादिकं ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यम्, तथा सति काम्यत्वेन नित्यत्वहान्यापत्तेः, कामनाभावे चाकरणापत्तेः; इत्थञ्च यत्र फलश्रुतिस्तत्रार्थवादमात्रमिति चेद्,—न, ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव [भरणीश्राद्धे काम्यत्वनैमित्तिक-**

---

विधिप्रत्ययादिष्टत्वरूपसामान्यरूपेणेष्टसाधनत्वविषयकशाब्दबोधानन्तरं 'एतादृशेष्टं,–स्वर्गत्ववत्, विशेषरूपेण शाब्दाऽविषयत्वे सति प्रवर्तकविधिवाक्यप्रतिपाद्यत्वात्, यन्नैवं तन्नैवं यथा तृप्त्यादीत्यनुमानात् स्वर्गानुमितिः, न चेदमप्रयोजकम् , 'सः स्वर्गः स्यात् सर्वान्प्रत्यविशिष्टत्वादि'ति ( पूर्वमीमांसा–४ अ०, ३ पा०, १३ सूत्रम् ) न्यायरूपानुकूलतर्कसत्त्वात् , तादृशन्यायसहकृतनिरुक्तप्रतिपाद्यत्वज्ञानात् 'इष्टः स्वर्ग' इति मानसप्रमितिमान् भवतीति विश्वजिन्न्यायार्थस्तु–विश्वजिति-प्रवृत्त्यर्थम् इष्टसाधनताज्ञानमवश्यमपेक्षणीयं तच्च इष्टं किमिति नियामकं नास्ति विश्वजिता यजेतेति-श्रुतौ फलविशेषानिर्देशात् , किञ्चित्फलं स्वेच्छया कल्पनीयमिति पूर्वपक्षे स विश्वजिद्यागफलं स्वर्गः स्यात् सर्वपुंसामिष्टत्वादिति सिद्धान्त इति ॥ ननु नित्ये कर्मणि सन्ध्यावन्दनादौ फलाऽभावात् नेष्टसाधनताज्ञानं प्रवर्तकं न वा तद्विषयो विध्यर्थ इत्याशयेन प्राभाकरमतानुयायी शङ्कते–**नन्वहरहरिति** । फलस्येष्टस्याऽप्रसिद्धत्वात् इष्टसाधनताज्ञानाऽनुत्पादेन प्रवृत्त्यभाव इत्याशयः । रात्रिसत्रन्यायेन सन्ध्योपासनादेरपि अर्थवादचोदितफलसम्बन्धः स्वीकार्य इत्याशयमाशंकारूपेणाऽवतारयति–**न चार्थवादिकमिति** । 'सन्ध्यामुपासते ये तु सततं संशितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनमि'त्यर्थवादप्रतिपाद्यपापनाशपूर्वकब्रह्मलोकप्राप्तिः प्रत्यवायाऽनुत्पत्तिश्च फलं स्वीकार्यं, तथा च न प्रवृत्त्यनुत्पत्तिरित्यर्थः । 'वा' समुच्चयार्थः । शंकां निरासयति–**तथा सतीति** । नित्यकर्मणोऽपि फलवत्त्वकल्पने सति तु नित्यकर्मणः काम्यकर्मत्वापत्त्या नित्यकर्मत्वहान्यापत्तिः स्यात् । न च नित्यत्वं काम्यत्वं चोभयं तत्राङ्गीकार्यमिति वाच्यम् । सफलत्वे सति विधिप्रतिपाद्यत्वरूपकाम्यत्वस्य, निष्फलत्वे सति विधिप्रतिपाद्यत्वरूपनित्यत्वस्य च विरोधात् ॥ ननु तस्य नित्यत्वहानिरिष्टैवेत्यत आह–**कामनाऽभावे इति** । सन्ध्यावन्दनादेः प्रत्यहं कृतिविषयस्य काम्यत्वपक्षेऽपि यस्य फलकामना नैवास्ति तादृशजनस्य कामनाऽभावात् सन्ध्यावन्दनादौ प्रवृत्त्यभावात्मकाऽकरणत्वापत्तिः स्यात् अकरणे च प्रत्यवायोऽपि न स्यात् , तथा च शिष्टाचारो व्याहन्येत तस्मान्नार्थवादिकं किमपि फलमिति भावः ॥ ननु तर्हि 'सन्ध्यामुपासते ये त्वि'त्यादिफलश्रुतेः का गतिरित्यत आह–**इत्थं चेति** । उक्तयुक्त्या निष्फलत्वसिद्धौ च, फलबोधिका 'सन्ध्यामुपासते'–इत्यादिश्रुतिः, तत्र = सन्ध्योपासनादिकर्तरि पुरुषे, अर्थवादमात्रम् = प्रशस्तत्वबोधमात्रतात्पर्यवती, न तु फलबोधतात्पर्यवतीत्यर्थः ॥ नैयायिकः समाधत्ते–**न, ग्रहणश्राद्धादाविति** । 'उपरागे श्राद्धं कुर्वीत उपरागे स्नायादि'तिविधिवाक्येन ग्रहणनिमित्तकश्राद्धस्नानयोः नित्यत्वप्रतिपादनात् उपरागनिमित्तकत्वप्रतिपादनाच्च तयोर्नित्यत्वनैमित्तिकत्ववदित्यर्थः ॥ **भरणीश्राद्धइति** । भरणीनक्षत्रनिमित्तकश्राद्धे इत्यर्थः, सप्तविंशतिनक्षत्राणां मध्ये एकैकनक्षत्रनिमित्तकम् एकैककाम्यश्राद्धमुक्त्वा एकैकश्राद्धस्य पशुपुत्रादिरूपैकैकाभ्युदयफलं चोक्त्वा भरणीनिमित्तकश्राद्धकर्तुः तावत्फलवत्त्वस्य हरिवंशादौ प्रतिपादकत्वान्नक्षत्रनिमित्तकत्वाच्च भरणीनिमित्तकश्राद्धस्य काम्यत्वनैमित्तिकत्ववच्चेत्यर्थः ॥ दृष्टान्तद्वयं प्रदर्श्य दार्ष्टान्तिके निगमयति–**नित्यत्वेति** । सन्ध्योपासनादेर्नित्यत्वकाम्यत्वयोरपि अविरोधस्वीकारात्, तत्र 'अहरहः सन्ध्यामुपासीते'तिविधिवाक्येन नित्यत्वप्रतिपादनात् रात्रिसत्रन्यायेन च 'सन्ध्यामुपासते ये त्वि'त्याद्यर्थवादचोदितफलसाधनत्वाच्च नित्यत्वकाम्यत्वोभयस्वीकारे बाधकाऽभावादिति भावः । कामनाऽ-

त्वयोरिव] नित्यत्वकाम्यत्वयोरप्यविरोधात् । न च कामनाभावेऽकरणापत्तिः, त्रिकालस्तवपाठादाविव कामनासद्भावस्यैव कल्पनात् । ननु वेदबोधितकार्यताज्ञानात्प्रवृत्तिः संभवत्येवेति चेन्न, इष्टसाधनत्वमविज्ञाय तादृशकार्यताज्ञानसहस्रेणापि प्रवृत्तेरसंभवात् । यदपि पण्डापूर्वं फलमिति, तदपि न,-कामनाभावेऽकरणापत्तेस्तौल्यात् । कामनाकल्पने त्वार्थवादिकं फलमेव रात्रिसत्रन्यायात्कल्प्यते, अन्यथा प्रवृत्त्यनुपपत्तेः । तेनानुत्पत्तिमेव प्रत्यवायस्यान्ये मन्यन्ते । एवम्-"सन्ध्या-

भावेऽकरणापत्तिरूपदूषणं वारयति-**न चेति** । कामनाशून्यपुरुषस्य सन्ध्यावन्दनादौ नित्ये प्रवृत्त्यभावात्मकाऽकरणापत्तिरूपं दूषणं न चाऽस्तीत्यर्थः ॥ तत्र हेतुमाह-**त्रिकालस्तवेति** । यथा त्रैकालिको विष्णुसहस्रनामस्तवादिपाठो विधिप्राप्तत्वान्न काम्यं कर्म तथापि 'त्रिसन्ध्यं कीर्तयेद्यस्तु सर्वान्कामानवाप्नुयादि'ति-फलकामनया पुरुषास्तत्र प्रवर्तन्ते फलमपि च तथा भवति । आदिना कालद्वयविहिताग्निहोत्रपरिग्रहः । तद्वत् प्रकृतेऽपि 'अकुर्वन् विहितं कर्म नरो भवति किल्बिषी'तिवचनात् प्रत्यवायाऽभावकामनाऽवश्यं कल्पनीयेति भावः ॥ मीमांसकः शंकते-**नन्विति** । नित्यकर्मणि श्रुतिघटकविधिबोध्यकृतिसाध्यताज्ञानेनैव कारणेन प्रवृत्तिः, न तु इष्टसाधनताज्ञानं कारणं, तथा च फलकल्पनमनुचितमिति भावः ॥ नैयायिक उत्तरयति-**इष्टेति** । निष्फले प्रवृत्त्यभावेनान्वयव्यतिरेकाभ्यां प्रवृत्तित्वेन फलात्मकेष्टसाधनताज्ञानत्वेन च कार्यकारणभावस्यावश्यकत्वात् इष्टसाधनताज्ञानं विना केवलसहस्रकार्यताज्ञानैरपि प्रवृत्त्यनुत्पादादित्यर्थः ॥ नित्यस्थले पण्डापूर्वं फलमिति प्राभाकरैकदेशिमतं खण्डयति-**यदपीति** । पण्डो नपुंसकः स इव अपूर्वं पण्डापूर्वं, नित्यकर्मणा स्वर्गाद्यजनकम् अपूर्वं नाममात्रेण जायते, तदपि न युक्तमित्यर्थः । अयुक्तत्वे हेतुमाह-**कामनाऽभावे इति** । पण्डाऽपूर्वात्मकफलकामनाऽभाववतो जनस्य, अकरणापत्तेः-अप्रवृत्तिप्रयुक्तप्रत्यवायोत्पत्तिर्न स्यादिति पूर्वोक्तदोषतुल्यत्वादित्यर्थः । यदि च तत्र कामना कल्प्यते तदा, **रात्रिसत्रन्यायात्**='रात्रि'शब्देन 'ज्योतिर्गौरायु'रित्यादि-वाक्योत्पादितानि सौत्यानि कर्माणि उच्यन्ते, तानि च त्रयोदशरात्रसंज्ञकानि सत्रनाम्नाऽपि व्यवह्रियन्ते द्वादशसत्रादूर्ध्वभाविनस्त्रयोदशरात्रचतुर्दशरात्रादयः सर्वे सत्रविशेषाः, त्रयोदशसंख्याका रात्रयो यस्मिन् सत्रविशेषे सोऽयं त्रयोदशरात्रः, एवमन्यत्, तत्र "प्रतितिष्ठन्ति" 'ब्रह्मवर्चस्विनोऽन्नादा भवन्ति ये एता उपयान्ति' इत्यादीनि वाक्यानि विषयः । तत्र 'प्रतितिष्ठन्ति'इति किमयं फलविधिरुतार्थवादः इति संशयः ॥ तत्र अर्थवादः, ततश्च विश्वजिन्न्यायेन श्रुतः स्वर्गः कल्प्य इति पूर्वपक्षः । सिद्धान्तस्तु 'श्रुतानुमानयोः श्रुतसम्बन्धो बलीया-निति'न्यायेन प्रतिष्ठैव श्रुतं फलं न तु कल्प्यः स्वर्गो दुर्बलत्वादिति । तथा च 'ज्योतिर्गौरायुरिती'ति श्रुतिप्रमाणकानां ज्योतिर्गौरायुरितिनामकानां रात्रिसत्रशब्दवाच्यकर्मणां रात्रिसत्रेण यजेतेति विधितः फलश्रवणाऽभावात् फलजिज्ञासायां श्रुते संभवति अत्यन्ताऽश्रुतस्वर्गकल्पने गौरवात् विश्वजिन्न्यायापनोदेन 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती'त्यर्थवादबोधितप्रतिष्ठारूपफलं यथा सिद्धान्तितं तथाऽत्राऽपि लाघवात् 'सन्ध्यामुपासते ये त्वि'त्याद्यर्थवादादुपस्थितब्रह्मलोकाऽवाप्तिरूपं फलमवश्यं स्वीकार्यमितिनैयायिकाशयः ॥ **अन्यथेति** । नित्यकर्मणो निष्फलत्वे इत्यर्थः ॥ **प्रवृत्त्यनुपपत्तेरिति** । सन्ध्यादिषु प्रवृत्त्यभावः स्यादेवेतिदोषापत्तेरित्यर्थः ॥ नित्यकर्मणः फलवत्त्वे आचार्यमतमप्याह-**तेनेति** । सन्ध्योपासनादौ लाघवादर्थवादोपस्थितफलस्वीकारेणेत्यर्थः । प्रत्यवायस्य=पापस्य, अनुत्पत्तिमेव=प्रागभावपरिपालनमेव, फलम्, इति अन्ये=नवीना आचार्या मन्यन्ते ॥ **एवमिति** । प्राचीना अपि सन्ध्यादिनित्यकर्मणाम् 'ये जनास्तु शंसितव्रताः सन्तः सन्ध्यामुपासते ते विधूतपापाः सन्तः

मुपासते ये तु सततं शंसितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥" एवम्--"दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्--" इत्यादिवचनप्रतिपादित-ब्रह्मलोक-प्रीत्यादिकमेव फलमस्तु। न च पितृप्रीतिः कथं फलं? व्यधिकरणत्वादिति वाच्यम्, गयाश्राद्धादाविवोद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य क्वचित्कल्पनात्। अत एवोक्तं--'शास्त्रदर्शितं फलमनुष्ठानकर्तरीत्युत्सर्ग'-इति। पितॄणां मुक्तत्वे तु स्वस्य स्वर्गादिफलं, यावन्नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गजनकत्वात्। पण्डापूर्वार्थं प्रवृत्तिश्च न संभवति। न हि तत्सुखदुःखाभाववत्स्वतः पुरुषार्थो, न वा तत्साधनम्। प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेद् ?, इत्थम्-यथा हि नित्ये कृते प्रत्यवायाभावस्तिष्ठति तदभावे तदभावः, एवं प्रत्यवायाभावस्य सत्त्वे दुःखप्रागभावसत्त्वं तदभावे तदभाव इति योगक्षेमसाधारणकारणतया दुःखप्रागभावं प्रत्यपि

---

अनामयं ब्रह्मलोकं यान्ती'ति ब्रह्मलोकः फलं मन्यन्ते। एवं पितृभ्यः प्रीतिमावहन्सन्यः अहरहः श्राद्धं दद्यात्'-इत्यत्रार्थवादस्थले पितृप्रीतिरेव फलं मन्तव्यमिति,॥ मीमांसकः शंकते-न चेति। पितृप्रीतिः पितरि, श्राद्धं तु वंशजे कर्तरि, इति फलकारणयोरैकाधिकरणाऽभावात् कार्यकारणभाव एव न स्यात् तथा च कारणाऽभाववति कार्यसत्त्वरूपव्यतिरेकव्यभिचारात पितृ-प्रीतिः फलं नेत्याशंकितुरभिप्रायः। समाधत्ते नैयायिकः-गयाश्राद्धेति। आदिना ब्रह्मकपाल-श्राद्धादेः परिग्रहः। 'गयायां पिण्डदानं पितृप्रीतिकरमि'तिवचनेन उद्देश्यतासम्बन्धेन गयाश्राद्धस्य पितरि सत्त्वात् तत्र तृप्तेर्जायमानत्वान्न व्यभिचारः, एवम् 'अहरहः श्राद्धं दद्यादि'त्यत्रापि उद्देश्यतासम्बन्धेन श्राद्धस्य पितरि सत्त्वात् तत्र प्रीतिरूपं फलं न व्यधिकरणमिति भावः। उक्तार्थ-दार्ढ्याय भट्टोक्तमुत्सर्गमाह-अत एवेति। क्वचित् पितृप्रीत्यादेः श्राद्धफलत्वस्वीकारादेवेत्यर्थः। 'शास्त्रदर्शितं फलमनुष्ठातरि' इति मीमांसकानामुत्सर्ग एव, स च सापवादः, यः कर्ता स फलभोक्ता इतिनियमस्तु बहुस्थले तथासंभवाऽभिप्रायक एव न तु सार्वत्रिक इति भावः॥ ननु यस्य पितरो मुक्तास्तेषां तृप्त्यात्मकसुखाऽयोगात् तत्रान्वयव्यभिचार इत्यत आह-पितॄणामिति। पितॄणां मुक्तत्वे तु, स्वस्य=श्राद्धकर्तुः, स्वर्ग एव फलं कल्पनीयम्, असति विशेषफले सामान्यफल-योगाऽऽवश्यकत्वात्॥ तदेवाह-यावदिति। नित्यस्य सन्ध्यावन्दनादेर्नैमित्तिकस्य श्राद्धादेर्वा सामान्यतो विहितकर्मत्वात् 'स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वादि'तिन्यायेन स्वर्गफलजनकत्वं स्वीक्रियते इति॥ पूर्वं सन्ध्योपासनादेः पण्डापूर्वफलकत्वं न संभवतीत्येवं दूषितम्, इदानीं पण्डापूर्वस्य फलत्वमेव न संभवतीत्येवं दूषयति-पण्डापूर्वार्थमिति। निष्फलाऽपूर्वमुद्दिश्य, सन्ध्योपासनादिविधेयकप्रवृत्तिर्नैवोत्पत्तुमर्हतीत्यर्थः॥ तदुपपादयति-नहीति। तत्-पण्डापूर्वम्, सुखमिव दुःखाभाव इव, स्वतः पुरुषार्थः=स्वज्ञानमात्रजन्येच्छाविषयो न भवतीति न फलत्वं तस्येत्यर्थः॥ ननु यागे इव विधेयतया प्रवृत्तिरास्तां पण्डापूर्वे इत्यत आह-न वेति। न च याग इव फलस्य साधनमपि पण्डापूर्वं येन तत्र प्रवृत्तिः स्यादिति भावः॥ ननु तर्हि न्यायमते प्रत्यवायाऽनुत्पत्तिः फलं न स्यात् स्वतःपुरुषार्थत्वाऽभावात्, तथा च अफलात्मके तत्र कथं प्रवृत्तिरित्याशंकते-प्रत्यवायाऽनुत्पत्ताविति। प्रत्यवायप्रागभावे इत्यर्थः॥ परिहरति-इत्थमिति। यथाहि नित्यसन्ध्योपासनादिकरणे सति अनुष्ठातरि प्रत्यवायप्रागभावस्तिष्ठति, सन्ध्योपासनादिकरणाऽभावे च प्रत्यवायप्रागभावनाशः, एवं प्रत्यवायप्रागभावसत्त्वे दुःखप्रागभावसत्त्वं प्रत्यवायप्रागभावनाशे च दुःखप्रागभावध्वंस, इति योगक्षेमसाधारणकारणतायाः=योगोऽप्राप्तस्य प्राप्तिः, क्षेमः सिद्धस्य संरक्षणम्,

**सुवचत्वात्। एवमेव प्रायश्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति। ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे कथं नञर्थान्वयः? इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति चेद्,-न, तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वं च न विध्यर्थः, किन्तु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते। अथवा बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः। तदभावश्च नञा बोध्यमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्यति। ननु-**

---

तदुभयसाधारणकारणतायाः दुःखप्रागभावं प्रति प्रत्यवायप्रागभावस्य सुवचत्वादिति, तथा च यद्यपि प्रत्यवायप्रागभावो न स्वतः पुरुषार्थो नाऽपि च तत्साधनम् अतस्तस्य प्रवृत्तिं प्रति कारणता अप्राप्तैव तथापि दुःखप्रागभावेन सह तस्य व्याप्तिरस्तीति कृत्वा तस्यापि प्रवृत्तिं प्रति कारणता नीतैवेत्ययमेवाऽत्र योगः, इष्टसाधनताज्ञानस्य प्रवृत्तिं प्रति कारणता तु सिद्धैव परं प्राभाकरकृतर्कनिरासेन तस्या एव यत्प्रकृते संरक्षणं स क्षेमः, अनया रीत्या दुःखप्रागभावेऽपि जन्याऽजन्यसाधारणनिरूपितकारणता सिद्धयतीति भावः ॥ उक्तरीतिं चान्द्रायणादिप्रायश्चित्तकर्मस्वप्यतिदिशति— **एवमेवेति**। योगक्षेमसाधारणमेव दुःखप्रागभावस्य कारणत्वं प्रायश्चित्तं प्रति बोध्यमिति ॥ नव्यास्तु सन्ध्योपासनादेः प्रत्यवायप्रागभावः प्रत्यवायप्रागभावस्य दुःखप्रागभावो वा न फलं किन्तु सन्ध्योपासनादेः प्रत्यवायाऽत्यन्ताऽभावस्तस्य च दुःखात्यन्ताभावस्तयोःक्षेमसाधारणत्वसंभवादित्याहुः॥ इष्टसाधनत्वं यदि विध्यर्थस्तदा नञर्थाऽन्वयोऽसंभवीति तटस्थः शंकते-**ननु न कलञ्जमिति**। शूल्यं मांसं कलञ्जमिति केचित्, विषदग्धबाणाहतमृगमांसं कलञ्जमित्यपरे, पलाण्डुः कलञ्जमित्यन्ये, 'कालिंगड्डु' फलमिति गौर्जराः। वस्तुतस्तु कलञ्जं रक्तलशुनम्, 'कलञ्जपलाण्डुपारीरका'—इत्यापस्तम्बधर्मसूत्रव्याख्याने हरदत्तेन वीरमित्रोदये वीरमिश्रेण च कलञ्जं रक्तलशुनमिति व्याख्यातत्वात्। 'न कलञ्जं भक्षयेदि' त्यत्र विध्यर्थेन सह नञर्थान्वयः स्यात् तदा 'कलञ्जभक्षणं पुरुषेष्टसाधनत्वाऽभाववत् कृतिसाध्यत्वाभाववच्चे' त्याकारको बोधः स्यात्, स च न सुशकः, शुष्कसविषमांसविशेषाद्यात्मक-कलञ्जभक्षणे पुरुषस्येष्टसाधनत्वस्य कृतिसाध्यत्वस्य चाऽप्रतीतेरुक्तबोधस्य प्रतीतिबाधितत्वात्, तथा च विध्यर्थे नञर्थान्वयो बाधित इति भावः ॥ समाधत्ते-**तत्रेति**। इष्टसाधनत्वादौ नञर्थान्वयबाधात् विध्यर्थो न कृतिसाध्यत्वादिकं, किन्तु बलवदनिष्टाननुबन्धित्वमात्रं, तदभावः नञा 'कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वाभाववदि'ति बोध्यते। इष्टसाधनत्वं कृतिसाध्यत्वं बलवदनिष्टाननुबन्धित्वं चेति त्रयोंऽशा विध्यर्थस्य, तत्र यत्र यस्यांशस्य बोधो जायते तत्र यदि नञ् आपतेत् तर्हि तस्यांशस्यैवाऽभावो नञा बोध्यते न त्वितरस्येति स एवांशस्तत्र विध्यर्थतया ग्राह्यो नेतरांशाविति भावः। यदि च सर्वत्रैवांशत्रयस्यैव विध्यर्थत्वं न तु योग्यस्यैकस्येति तदाप्याह **अथवेति**।**तदभावश्चेति**। बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वस्य अभावः विशिष्टाभावः इत्यर्थः। स च विशिष्टाभावः विशेषणाऽभावे विश्राम्यतीत्यन्वयः। नञा बोध्यमानो यः बलवदनिष्टाननुबन्धित्वस्याऽभावः, विशेषणाऽभावः, तत्प्रयुक्तो यो **विशिष्टाभावः**=बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यताऽभावः, सः कृतिसाध्यत्वात्मकविशेष्यवति कलञ्जभक्षणे वर्तमानः सन् नातिरिक्तः किन्तु **विशेषणाऽभावे**=बलवदनिष्टाननुबन्धित्वाऽभावे विश्राम्यति=विशेषणाऽभावात्मको भवतीति नव्यानामभिप्राय इति न काचिदनुपपत्तिरित्यर्थः॥ ननु विशिष्टस्य विध्यर्थत्वे श्येनयागे बलवदनिष्टाननुबन्धित्वात्मकविशेषणबाधात् 'श्येनेनाऽभिचरन् यजेते'त्यत्र कथं विशिष्टस्य विध्यर्थस्य बोध

'श्येनेनाऽभिचरन्यजेते'त्यादौ कथं बलवदनिष्टाननुबन्धित्वं विध्यर्थः। 'श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात्। न च वैधत्वान्न निषेध इति वाच्यम्, अभिचारे प्रायश्चित्तोपदेशात्। न च मरणानुकूलव्यापारमात्रं यदि हिंसा, तदा खड्गकारस्य कूपकर्तुश्च हिंसकत्वापत्तिर्गललग्नान्नभक्षणजन्यमरणे स्वात्मवधत्वापत्तिश्चेति वाच्यम्, मरणोद्देश्यकत्वस्यापि विशेषणत्वात्, अन्योद्देश्यकक्षिप्त-

---

इत्याशंकते—ननु श्येनेनेति। श्येन इति यागविशेषस्य नामधेयम्, 'तद्व्यपदेशश्चे'तिन्यायेन निर्णीतम्, "यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेनेति" वाक्येनोक्त उपमानोपमेयभावो न ह्येकस्मिन्पक्षिणि युज्यते, न चात्राऽनन्वयः, तस्मात्पक्षिण उपमानस्य गुणे उपमेये कर्मण्यस्तीति श्येनशब्दस्याऽभिचारकर्मनामत्वं तद्व्यपदेशेन बोध्यम्॥ तथा च श्येनेन=श्येनाख्यकर्मणा, अभिचरन्=वैरिमारणं कामयमानः। वैरिमारणं कामयन् श्येननामकयागं कुर्यादित्यर्थः॥ बाधमुपपादयति—श्येनस्येति। श्येनयागस्य शत्रुमरणानुकूलव्यापारस्य नरकसाधनत्वात्—'मा हिंस्यात्सर्वा भूतानी'तिनिषेधविधिना हिंसासामान्यस्य निषिद्धत्वप्रतिपादनेन निषिद्धाचरणस्य नरकसाधनत्वावश्यकत्वात्। तथा च बलवदनिष्टाननुबन्धित्वं कथं विधिप्रतिपाद्यं, श्येनयागे तस्य बाधादिति भावः॥ विशिष्टविध्यर्थवादी शंकते—न च वैधत्वादिति। 'श्येनेनाऽभिचरन्यजेत' 'अग्नीषोमीयं पशुमालभेते'त्यादिविधिवाक्यबोधितत्वात् वेदविहितत्वात् सा न हिंसा भवति, 'मा हिंस्यादि'तिनिषेधस्य तु वैधहिंसेतरहिंसापरत्वम्, तथा च श्येनकर्म न बलवदनिष्टानुबन्धि, तस्मात् तत्र बलवदनिष्टाननुबन्धित्वरूपविध्यर्थस्य न बाध इति भावः॥ आक्षेप्ता वारयति—अभिचारे इति। अभिचारकर्मणि कृते सति कर्तुः 'अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहति'—इति अभिचारकर्मणः अहीनयागस्य च कर्तृकारयित्रोः प्रायश्चित्तोपदेशात् श्येनस्यास्त्येव हिंसात्वेन नरकफलम् अन्यथा प्रायश्चित्तोपदेशो व्यर्थः स्यादिति भावः। न चैवमग्नीषोमीयपशुहिंसाया अपि नरकसाधनत्वापत्तिः तादृशहिंसाया अपि सामान्यशास्त्रेण निषेधप्रतिपादनादिति वाच्यम्, मा हिंस्यादिति शास्त्रस्याऽनुपदिष्टप्रायश्चित्तहिंसेतरहिंसानिषेधपरत्वस्वीकारस्याऽऽवश्यकतया अग्नीषोमीयपशुहिंसाया अनुपदिष्टप्रायश्चित्तहिंसारूपत्वेन सामान्यशास्त्राऽप्रवृत्तेः श्येननामकाऽभिचारकर्मणः उपदिष्टप्रायश्चित्तहिंसारूपतया सामान्यशास्त्रप्रवृत्तेः॥ साक्षान्मरणानुकूलव्यापार एव हिंसा, नहि श्येनस्तथा, इति मा हिंस्यादिति निषेधाऽविषयत्वादस्यैव बलवदनिष्टाननुबन्धित्वमित्यभिप्रायेण साक्षात्परम्परासाधारणमरणानुकूलव्यापारमात्रस्य हिंसात्वे दोषमाह—न च मरणेति। साक्षात्परम्परया सर्वोऽपि मरणानुकूलव्यापारो यदि हिंसा, तदा खड्गकर्तुः कूपकर्तुश्च हिंसकत्वापत्तिः, खड्गेन परम्परया जीवानां हननात्, कूपे च क्रियमाणे परम्परया तदन्तःपतिताऽसमर्थजीवानां मरणदर्शनात्। एवं गले लग्नशीलम् अपक्वं चिक्कणतमं यद् शमीतरुशिम्बिबर्बुरवृक्षनिर्यासाऽन्वित—कोद्रवयुक्तमाषचूर्णसहकृतचणकलड्डुकात्मकमन्नम्, तस्याऽज्ञानात्साक्षाद्भक्षणजन्ये मरणे स्वात्मवधत्वापत्तिश्च स्यादिति॥ समाधत्ते—मरणोद्देश्यकेति। तथा च मरणोद्देश्यकमरणानुकूलव्यापारस्यैव हिंसात्वेन खडगकरणादेः मरणानुकूलत्वेऽपि तत्कर्तुः मरणोद्देश्यकत्वाऽभावान्न हिंसकत्वापत्तिः, कूपकर्तुरन्नभक्षयितुरपि तथा न हिंसकत्वापत्तिः। श्येनयागस्य तु मरणोद्देश्यकत्वाद्धिंसात्वमिति भावः॥ ननु तर्हि अन्यमरणोद्देश्यकनाराचप्रक्षेपात् मध्ये अकस्माद् ब्राह्मणे हते सति नाराचप्रक्षेप्तुः प्रायश्चित्तविधानाऽनुपपत्तिः ब्राह्मणमरणोद्देश्यकत्वाऽभावेन हिंसात्वाऽभावादित्यत—आह—अन्योद्देश्यकेति। वाचनिकम्—'सेतौ च स्नानमात्रेण ब्रह्महत्यां व्यपोहती'ति वचनेन ब्राह्मणमात्रवधस्य

**नाराचहतब्राह्मणस्य तु वाचनिकं प्रायश्चित्तमिति चेद्,-न,[तत्र बलवदनिष्टाननुबन्धित्वस्य विध्यर्थत्वाभात्। वस्तुतः] श्येनवारणायादृष्टाद्वारकत्वेन विशेषणीयम्, अत एव काशीमरणार्थं कृतशिवपूजनादेरपि न हिंसात्वम्। न च साक्षान्मरणजनकस्यैव हिंसात्वं, श्येनस्तु न तथा, किन्तु तज्जन्यापूर्वमिति वाच्यम्, खड्गघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानापत्तेः॥ केचित्तु श्येनस्य हिंसा फलं, न तु मरणम्, तेन श्येनजन्यखड्गघातादिरूपा हिंसाऽभिचारपदार्थः, तस्य च पापजनकत्वम्, अतः श्येनस्य वैधत्वात्पापाजनकत्वेऽपि अग्रिमपापं प्रतिसन्धाय सन्तो न प्रवर्तन्त इत्याहुः।**

---

सेतुस्नानादिरूपप्रायश्चित्तप्रतिपादनात् एवं 'ब्रह्महा द्वादशसमाः कुटिं कृत्वा वने वसेत्। भैक्ष्याश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम्॥ इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्। कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते'इतिवचनात्-सामान्यतो ब्राह्मणवधस्याऽप्युद्दिष्टप्रायश्चित्तत्वेन हिंसात्वाऽनपायात्। अन्योद्देश्यकनाराचप्रक्षेपस्य मरणोद्देश्यकत्वाऽभावेन मा हिंस्यादिति निषेधशास्त्राऽविषयत्वेऽपि ब्राह्मणं न हन्याल्लोहितं कुर्यादिति विशेषनिषेधविधिना ब्राह्मणहननमात्रस्य निषेधप्रतिपादनात् तस्य हिंसात्वं तत्कर्तुः प्रायश्चित्तविधानं चोपपन्नमिति भावः॥ श्येनयागस्थले समाधत्ते-तत्रेति। श्येनयागीयविधिवाक्यघटकविध्यर्थो न बलवदनिष्टाननुबन्धित्वं किन्तु कृतिसाध्यत्वविशिष्टेष्टसाधनत्वमेव विध्यर्थः, तथा च न बाध इति भावः॥ अर्थसंकोचेऽस्वरसात्कल्पान्तरमाह-वस्तुत इति। श्येनवारणाय=श्येनस्य बलवदनिष्टानुबन्धित्ववारणाय, हिंसालक्षणम् अदृष्टाऽद्वारकत्वेन विशेषणीयम्='अदृष्टाद्वारकत्वे सति मरणोद्देश्यकत्वे सति मरणानुकूलव्यापारत्वं' हिंसात्वमिति कर्तव्यम्। श्येनस्य तु अदृष्टद्वारकत्वेन उक्तलक्षणाऽगमनात् न हिंसात्वं, तथा च अहिंसकर्मणि बलवदनिष्टाननुबन्धित्वरूपविध्यर्थस्य न बाधः, तज्ज्ञानस्य तत्र सहजतो जायमानत्वादिति भावः॥ अदृष्टाऽद्वारकत्वस्य दार्ढ्यार्थं स्थलान्तरेऽपि सार्थक्यमाह-अत **एवेति**। हिंसालक्षणेऽदृष्टाद्वारकत्वनिवेशादेव, शिवपूजनस्य अदृष्टद्वारकतया काशीमरणं प्रति हेतुत्वात् तत्र हिंसात्वलक्षणाऽभावः, तादृशविशेषणाऽनुपादाने तु पुण्यस्य शिवपूजनस्यापि हिंसात्वापत्तिः स्यात् मरणोद्देश्यकत्वे सति मरणानुकूलव्यापारत्वादिति भावः॥ तटस्थः शंकते-**न च साक्षादिति**। उक्तलक्षणाऽपेक्षया लाघवात् 'साक्षान्मरणजनकत्वमेव हिंसात्वं वक्तव्यं, श्येनस्य त्वदृष्टद्वारा मारणजनकत्वान्न हिंसात्वम्, किन्तु श्येनजन्यम् अपूर्वम्-अदृष्टमेव हिंसा, तथा च श्येने बलवदनिष्टाननुबन्धित्वस्य न बाध इत्याशयः॥ लघुलक्षणं दूषयति-**खड्गघातेनेति**। असिहननेन व्रणद्वारा मृते सति असिना हन्तुरपि हिंसकत्वाऽनापत्तिः स्यात्, तस्मात् अदृष्टाद्वारकत्वघटितमेवोक्तं हिंसात्वमुचितमिति भावः॥ अदृष्टाऽद्वारकत्वविशेषणं विनैव श्येने बलवदनिष्टाऽननुबन्धित्वमुपपादयतां प्राचीनैकदेशिनां मतमाह-**केचित्त्विति**। श्येनस्य हिंसात्मकव्यापार एव फलम्, मरणं तु व्यापारस्य फलं न श्येनस्येति, तेन हेतुना श्येनक्रियाजन्या या खड्गघातादिरूपा क्रिया सैव हिंसा, सा च प्रकृतेऽभिचारपदार्थः, तस्य चाऽभिचारस्य 'अभिचारमहीनञ्चे'त्यादिशास्त्रेण पापजनकत्वबोधनात्। अतः श्येनस्य विधिबोधितकर्मत्वात् साक्षान्मरणफलकहिंसात्मकव्यापारमात्रफलकत्वाच्च हिंसापदार्थस्य पापपदार्थभिन्नतया वैधहिंसाया हिंसात्वाभावेन श्येनस्य पापाऽजनकत्वेऽपि अग्रिमं परम्परया जायमानं यत् शत्रुमरणजन्यं पापं तत् प्रतिसन्धाय-मनसा बुध्वा, सन्तः सज्जना अहिंसका न प्रवर्तन्ते, तथा च तत्र

आचार्यास्तु–आप्ताभिप्रायो विध्यर्थः। 'पाकं कुर्याः' इत्यादावाज्ञादिरूपेच्छावाचित्ववल्लिङ्मात्रस्येच्छावाचित्वं लाघवात्। एवं च 'स्वर्गकामो यजेत' इत्यादौ यागः स्वर्गकामकृतिसाध्यतया आप्तेष्ट इत्यर्थः। ततश्चाप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमाय प्रवर्तते। कलञ्जभक्षणे तदभावान्न प्रवर्तते। यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधिरेव तावद्गर्भ इव श्रुतिकुमार्याः पुंयोगे मानम्। न च कर्त्रस्मरणं बाधकं, कपिलकणादादिकमारभ्याद्यपर्यन्तं कर्तृस्मरणस्यैव प्रतीयमानत्वात्, अन्यथा स्मृतीनामप्यकर्तृकत्वापत्तेः। तत्रैव कर्तृस्मरणमस्तीति चेद्वेदेऽपि 'छन्दांसि जज्ञिरे तस्मात्'

---

बलवदनिष्टाननुबन्धित्वादिविध्यर्थो निराबाध इत्याहुः। अभिचारस्य मनुना उपपातकमध्ये गणितत्वात् पातकत्वाऽविशेषात् श्येने बलवदनिष्टाननुबन्धित्वार्थस्य बाध इत्यस्वरस 'आहु'रित्यनेन सूचितः॥ उदयनाचार्यमतमाह–आचार्यास्त्विति। आप्तस्य–यथार्थवक्तुः, अभिप्रायः–इच्छा,–तात्पर्यम्,–यत्रार्थे स विध्यर्थ इत्यर्थः। स च विध्यर्थः स्वेष्टसाधनतानुमापकः, 'यागः–स्वेष्टसाधनम्–आप्तेष्टत्वादिति'। इष्टसाधनताज्ञानं च प्रवर्तकम्, यथा–'पाकं कुर्याः, पाकं कुर्यामि'तिमध्यमोत्तमपुरुषयोराज्ञाध्येषणरूपेच्छावाचित्वं क्लृप्तं तेन दृष्टान्तेन प्रथमपुरुषेऽपीच्छावाचित्वम् अनुमेयम्–'कुर्यादितिप्रथमपुरुषः,–इच्छावाची, तत्र क्लृप्तत्वात्, कुर्या इति मध्यमपुरुषवदिति। एवं–लाघवात्–बलवदनिष्टाननुबन्धीष्टसाधनत्वाद्यपेक्षया इच्छात्वेन विधिशक्तौ लाघवादित्यर्थः। लिङ्मात्रस्य=विधिप्रत्ययमात्रस्य, इच्छावाचित्वं स्वीकर्तव्यमित्यर्थः। एवमिच्छामात्रस्य विध्यर्थत्वे च स्वर्गकामो यजेते'त्यादिवैदिकलिङ्वाक्यघटकसाकांक्षत्वादिप्रकारकपदज्ञाने सति 'यागः स्वर्गकामकृतिसाध्यतया आप्तेष्ट'इति बोधो जायते, ततश्च–एतादृशशाब्दबोधात्मकलिङ्गज्ञानाऽनन्तरम्, 'यागः–मम स्वर्गकामस्य बलवदनिष्टाननुबन्धीष्टसाधनम्,–मत्कृतिसाध्यतयाऽप्तेनेष्यमाणत्वात्,–मन्मात्रकृतिसाध्यतयेष्यमाणमद्भोजनवदित्यनुमाय यागे बलवदनिष्टाननुबन्धीष्टसाधनत्वविषयकप्रवर्तकज्ञानात् प्रवर्तते, कलञ्जभक्षणादौ कृतिसाध्यतया आप्तेष्टत्वाऽभावेन तल्लिङ्गकबलवदनिष्टाननुबन्धीष्टसाधनत्वज्ञानाऽनुत्पादेन न प्रवर्तते इत्यर्थः। एतच्च–'विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः। अभिधेयाऽनुमेया तु कर्तुरिष्टाऽभ्युपायता॥ कृत्स्न एव हि वेदोऽयं परमेश्वरगोचरः। स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ॥ इत्यादिना कुसुमांजलौ पंचमस्तवकेऽभिहितम्॥

ननु वेदे वक्तुरभावात् कस्येच्छा लिङा बोधनीयेत्याशंकमानस्य निरीश्वरवादिमीमांसकस्य मतेऽपि पौरुषेयत्वं वेदे व्यवस्थापयितुमाह–यस्त्विति। मीमांसकस्तु, वेदे पौरुषेयत्वं–पुरुषप्रणीतत्वं नाऽभ्युपैति, तं मीमांसकं प्रति यजेतेत्यादिविधिरेव तावत्–प्रथमं 'कुयार्याः पुंयोगे गर्भ इव' श्रुतेः पुरुषकर्तृत्वे लिङ्गं भवतीति भावः॥ शंकते–नच कर्त्रेति। कर्तुः अस्मरणमेव बाधकं तथा च 'वेदः–न पौरुषेयः,–अस्मर्यमाणकर्तृकत्वात्,–आकाशादिवदि'त्यनुमानमीश्वरसिद्धौ बाधकमित्यर्थः। तत्समाधत्ते–कपिलेति। कपिलकणादगौतमादिभिः एतत्कालीनवैदवक्तृपर्यन्तं, कर्तृस्मरणस्य–सकर्तृकत्वबोधकस्मृतेः, प्रतीयमानत्वात्–प्रमाबोधकप्रणयनात्–'वेदः–पौरुषेयः,–(सर्वज्ञपुरुषकृतसजातीयोच्चारणानपेक्षोच्चारणविषयः), वाक्यसमूहत्वात्, भारतादिवदि'त्यनुमानेन वेदकर्तुरनुमितौ तन्मूलकस्मरणस्मृतिप्रणयनयोः संभवात्, अन्यथा=अनुमानस्याऽप्रयोजकत्वमङ्गीकृत्य वेदस्य सकर्तृकत्वाऽनङ्गीकारे, मन्वादिस्मृतीनामपि अकर्तृकत्वाऽपत्तेः,–'स्मृतिः पौरुषेया–वाक्यसमूहत्वादि'त्यस्याऽप्रयोजकत्वादिति भावः। ननु तत्र स्मृतिष्वेव तथाचेत्याह गौतम इति शातातपोऽब्रवीदिति कर्तुः नामस्मरणमस्तीति न अपौरुषेयत्वं तासाम् इति चेत्? तुल्यन्यायेन वेदेऽपि–'छन्दांसि जज्ञिरे तस्मात्'

इत्यादिकर्तृस्मरणमस्त्येव । एवं-"प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते"-इत्यपि द्रष्टव्यम्। "स्वयंभूरेष भगवान्वेदो गीतस्त्वया पुरा। शिवादिऋपिपर्यन्ताः स्मर्तारोऽस्य न कारकाः"-इति तु वेदस्य स्तुतिमात्रम्। न च पौरुषेयत्वे भ्रमादिसंभवादप्रामाण्यं स्यादिति वाच्यम्, नित्यसर्वज्ञत्वेन निर्दोषत्वात्। अत एव पुरुषान्तरस्य भ्रमादिसम्भवान्न कपिलादेरपि कर्तृत्वं वेदस्य, किञ्च वर्णानामनित्यत्वस्य वक्ष्यमाणत्वात्सुतरां तत्सन्दर्भस्य वेदस्यानित्यत्वमिति संक्षेपः॥

उपादानस्येति । उपादानस्य-समवायिकारणस्य, अध्यक्षं-प्रत्यक्षं, प्रवृत्तौ कारणमिति॥

निवृत्तिस्तुभवेद् द्वेषाद् द्विष्टसाधनताधियः॥ १५१॥

निवृत्तिरिति। द्विष्टसाधनताज्ञानस्य निवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकाभ्यामवधारितमिति भावः॥ १४९-१५०-१५१॥

---

'यजुस्तस्माद् अजायत' 'तस्मात्तेपानात् त्रयो वेदा अजायन्त'इत्यादिकर्तुः स्मरणमस्त्येवेति॥ स्मृतिमपि प्रमाणमाह-प्रतिमन्वन्तरमिति । एकमन्वन्तरस्य वर्षाणि विंशतिसहस्राधिक-सप्तषष्टिलक्षोत्तर-त्रिंशत्कोटयो भवन्ति। चतुर्युगानामेकसप्ततिः मन्वन्तरं भवति। ब्रह्मण एकदिवसे चतुर्दशमन्वन्तराणि भवन्ति, प्रतिमन्वन्तरं क्वचित् क्वचित् खण्डप्रलये श्रुतिवाक्य-वेदः-अन्याऽऽनुपूर्व्यवच्छिन्नः क्रियते भगवता इत्यर्थः। ननु तर्हि वेदस्याऽकर्तृकत्वबोधकभारतवाक्यस्य का गतिरित्यत आह-स्वयम्भूरेष इति। स्वयम्भूः-नित्यः, भगवान्-ब्रह्मादीनामपि सर्वार्थप्रकाशकः, एतादृशो वेदः त्वया परमात्मना, पुरा-सृष्टिप्रारम्भे, गीतः-गानविषयीकृतः, नतूत्पादितः, अत एव शिवादीश्वराः ऋषयश्च अस्य वेदस्य स्मर्तार एव न तु कर्तार इति। एतद्वचनं तु वेदस्य स्तुतिमात्रम्-स्तुत्यात्मकार्थवादः, स्मृतीतिहासपुराणाऽपेक्षया स्वतन्त्रपुरुषानुष्ठितत्वरूपोत्कर्षप्रदर्शनपरं न तु स्वार्थतातात्पर्यकमिति भावः॥ वेदस्य पौरुषेयत्वे दोषं शंकते-न च पौरुषेयत्वे इति। पुरुषे भ्रमप्रमादविप्रलिप्सादिसंभवात् तत्कर्तृकवेदेऽपि तद्दोषात् अप्रामाण्यापत्तिरित्यर्थः॥ समाधत्ते-नित्येति। 'यः सर्वज्ञः स सर्ववित्' इत्यादिश्रुत्या नित्यसर्वविषयकसामान्यविशेषज्ञानवत्त्वेन परमेश्वरस्य भ्रमादिदोषशून्यत्वात् वेदस्य प्रामाण्यमव्याहतमित्यर्थः॥ अत एवेति। सामान्यरूपेण विशेषरूपेण च नित्यसर्वविषयकज्ञानवत्त्वाऽभावेन च, पुरुषान्तरस्य कपिलादेः भ्रमप्रमादादिसंभवात् वेदस्य कर्तृत्वं कपिलादौ न संभवतीत्यर्थः॥ कारणस्याऽनित्यत्वात् कार्यस्याऽनित्यत्वपि दर्शयति-किञ्चेति। वर्णानां कखगादीनाम् उत्पत्तिध्वंसप्रतियोगित्वस्याग्रे शब्दनिरूपणाऽवसरे वक्ष्यमाणत्वात् तेषां शब्दानां सन्दर्भात्मकग्रन्थस्य वेदस्य क्षणिकानुपूर्वीविशिष्टस्याऽनित्यत्वमावश्यकमित्यर्थः॥ श्लोकार्धं व्याख्याति-उपादानस्येति। समवायिकारणविषयकप्रत्यक्षमपि कार्यविषयकप्रवृत्तिं प्रति समवायेन कारणं बोध्यमित्यर्थः॥ ननु-शब्दसाध्यकप्रवृत्तिर्गगनादौ न स्यात् गगनस्याऽप्रत्यक्षत्वादिति चेन्न। शब्दसाक्षात्कारसाध्यकप्रवृत्तेः मृदंगादिगोचराया उपगमादिति प्राचीनाः, नव्यास्तु-प्रकृतेऽधिष्ठानमात्रमुपादानं, तेन यागादेर्हविः, शब्दस्य मृदङ्गादिः, प्राणसंचारादेश्च प्राणवहनाड्यादि, उपादानमिति वदन्ति॥

मूले निवृत्तिमाह-निवृत्तिस्त्विति। निवृत्तिं प्रति फलगतो द्वेषः, द्विष्टसाधनताज्ञानं च कारणमित्यर्थः। श्रममरणदुःखत्वादिप्रकारकज्ञानजन्यो यः फले द्वेषः स उपायद्वेषं प्रति कारणमित्यपि

यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत् ।
शरीरे प्राणसंचारे कारणं परिकीर्तितः ॥ १५२ ॥

यत्न इति । जीवनयोनियत्नो यावज्जीवनमनुवर्तते, स चातीन्द्रियः ।
तत्र प्रमाणमाह-शरीर इति । प्राणसञ्चारो हि अधिकश्वासादिर्यत्नसाध्यः । इत्थं च प्राणसञ्चारस्य सर्वस्य यत्नसाध्यत्वमनुमानात् । प्रत्यक्षयत्नस्य बाधाच्चातीन्द्रिययत्नसिद्धिः स एव जीवनयोनिर्यत्नः ॥ १५२ ॥

अतीन्द्रियं गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत् ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ १५३ ॥
तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि ।

गुरुत्वं निरूपयति-अतीन्द्रियमिति ॥ अनित्य इति ॥ अनित्ये द्व्यणुकादौ तद्-गुरुत्वमनित्यम् । नित्ये परमाणौ नित्यम् । गुरुत्वमित्यनुवर्तते । तद् गुरुत्वम्, असमवायि-असमवायिकारणम् ॥ पतनेति ॥ आद्यपतन इत्यर्थः ।

सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥ १५४ ॥

---

बोध्यम्, द्विष्टसाधनताज्ञानसत्त्वे दुःखसाधनविषयकनिवृत्तिः, तादृशज्ञानाऽभावे च तादृशनिवृत्त्यभाव-इत्यन्वयव्यतिरेकात् ॥ १५१ ॥

मूले जीवनयोनिमाह-यत्न इति । जीवनस्य प्राणसंचारस्य योनिः कारणं यः प्रयत्नः सः सर्वदा अतीन्द्रिय एव, शरीरे यः प्राणसंचारः तस्य असाधारणनिमित्तकारणं भवतीत्यर्थः । जीवनयोनिं प्रति जीवनाऽदृष्टं कारणम् । 'अधिकश्वासादिप्राणसंचारः, प्रयत्नसाध्यः,-कार्यत्वादि'त्यनेन प्राणसंचारस्य यत्नसाध्यत्वे सिद्धे प्रत्यक्षत एव इतरप्रयत्नसाध्यत्वस्य बाधात् अतीन्द्रियत्वसिद्धिरिति भावः ॥ अन्ये तु-सुषुप्तिकालीनश्वासः,-भोक्तृप्रयत्नसाध्यः,-श्वासत्वात्,-धावतः श्वासवदि'त्यनुमानं कुर्वन्तीति ॥ १५२ ॥

मूले गुरुत्वमाह-अतीन्द्रियमिति । गुरुत्वम् अतीन्द्रियं भवति,-तस्याऽनुमानेन सिद्धिः यथा-'संयोगाऽसमवधानकालीना पतनक्रिया,-गुणाऽसमवायिकारणिका,-क्रियात्वात्, संयोगजन्यक्रियावत्, अत्र यो गुणस्तत् गुरुत्वम् । पतनाऽसमवायिकारणतावच्छेदकतया गुरुत्वत्वजातिः सिद्ध्यति, यथा 'पतनाऽसमवायिकारणता,-किञ्चिद्धर्मावच्छिन्ना,-कारणतात्वादिति । तच्च पृथिव्यां जले च वर्तते । तत्-गुरुत्वम् ॥ पतनाख्ये इति । आद्यपतनं प्रति गुरुत्वम् असमवायिकारणं भवति । द्वितीयादिपतनक्रियां प्रति वेगोऽसमवायिकारणं भवतीति वेगवारणाय-आद्येति । अत्राऽऽद्यत्वं नाम-स्वसमानाधिकरण-पतनप्रतियोगिकध्वंसाऽसमानकालीनत्वम् । द्वितीयादिपतनानां प्राथमिकपतनध्वंससमानकालीनत्वान्नाद्यत्वमिति । आद्यपतनाऽसमवायिकारणत्वमिति तल्लक्षणं बोध्यम् । आम्रादिपतनक्रियायां बहुशो दण्डादीनां निमित्तत्वाद्दु दण्डादिवारणाय असमवायीति । घटरूपं प्रति कपालरूपादेरसमवायिकारणत्वेन कपालादिरूपवारणाय-पतनेति ॥

द्रवत्वमाह मूले-सांसिद्धिकमिति । आद्यस्यन्दनाऽसमवायिकारणत्वं द्रवत्वस्य लक्षणम् । द्वितीयस्यन्दनं प्रति कारणीभूते वेगेऽतिव्याप्तिवारणाय-आद्येति । आद्यत्वं-स्वसमानाधिकरण-स्य-

सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः ।
परमाणौ जले नित्यमन्यत्रानित्यमिष्यते ॥ १५५ ॥
नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु ।
द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ॥ १५६ ॥

द्रवत्वं निरूपयति-सांसिद्धिकमिति । द्रवत्वं द्विविधं-सांसिद्धिकं नैमित्तिकं चेत्यर्थः। द्वितीयं=नैमित्तिकम् ॥ परमाणाविति ॥ जलपरमाणौ द्रवत्वं नित्यमित्यर्थः। अन्यत्र-पृथवीपरमाण्वादौ जलद्व्यणुकादौ च, द्रवत्वमनित्यम्। कुत्रचित्तेजसि कुत्रचित्पृथिव्याञ्च नैमित्तिकं द्रवत्वं तत्र को वा नैमित्तिकार्थस्तद्दर्शयति—नैमित्तिकमिति। [वह्नीति पदं तेजोऽर्थकम्] तथाच] अग्निसंयोगजन्यं नैमित्तिकं द्रवत्वम् । तच्च सुवर्णादिरूपे तेजसि घृतजतुप्रभृतिपृथिव्यां च वर्तत इत्यर्थः ॥ द्रवत्वं स्यन्दने हेतुरिति। असमवायिकारणमित्यर्थः। संग्रहे-सक्तुकादिसंयोगविशेषे। तत्-द्रवत्वं, स्नेहसहितमिति बोद्धव्यम्। तेन द्रुतसुवर्णादीनां न संग्रहः ॥ १५६ ॥

स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ ।
तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ॥ १५७ ॥

स्नेहं निरूपयति—स्नेहो जले इति। जल एवेत्यर्थः। असौ—स्नेहः। ननु पृथिव्यामपि तैले स्नेह उपलभ्यते, न चासौ जलीयः, तथा सति दहनप्रातिकूल्यं स्यादत आह-तैलान्तर इति। तत्प्रकर्षात्-स्नेहप्रकर्षात्। तैले उपलभ्यमानः स्नेहोऽपि जलीय एव, तस्य प्रकृष्टत्वादग्नेरानुकूल्यम् । अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः ॥ १५७ ॥

संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ।

---

न्दनप्रतियोगिकध्वंसाऽसमानकालीनत्वम् । कपालरूपादिवारणाय-स्यन्दनेति । दण्डादिवारणाय-असमवायीति । द्रवत्वत्वजातिः प्रत्यक्षसिद्धा । स्वभावसिद्धं सांसिद्धिकम्, अग्न्यादिनिमित्तजन्यं नैमित्तिकं घृते सुवर्णे च वर्तते करकायां तु अदृष्टवशात् सांसिद्धिकद्रवत्वनिरोधः, इति ॥१५३,१५६॥

स्नेहमाह-मूले-स्नेह इति। चूर्णादिपिण्डीभावाऽसाधारणनिमित्तहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम्। पिण्डीभावो नाम-चूर्णादेर्धारणाऽऽकर्षणादिसम्पादकः संयोगः, लोष्ठादिपिण्डीभावहेतुभूताऽग्निसंयोगे व्यभिचारवारणाय-चूर्णमिति पिष्टादिपरं बोध्यम्। स्नेहः प्रत्यक्षसिद्धः। स्नेहत्वं जातिरपि प्रत्यक्षसिद्धा। जलगतद्रवत्वाऽपेक्षया द्रुतजलसंयोगस्य कारणत्वकल्पने द्रवत्वस्य उभयपक्षे कारणप्रविष्टत्वेन लाघवाऽभावेऽपि द्रवत्वस्य स्नेहस्य च स्वसमवायिसंयुक्तत्वसम्बन्धेन कारणत्वकल्पनाऽपेक्षया द्रुतजलसंयोगस्य समवायेनैव कारणत्वकल्पने लाघवं तस्मात् द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वम्, स्नेहस्य पिण्डीभावहेतुत्वे मानाभावः, तथा च स्नेहत्वजातिमत्वमेव स्नेहस्य लक्षणं बोध्यमिति। घृते तैलादौ च जलस्यैव स्नेहः। नित्यजले नित्योऽनित्यजलेऽनित्यश्च स्नेह इति ॥ १५७ ॥

संस्कारमाह मूले-संस्कारभेद इति। वेगः, स्थितिस्थापकः, भावना चेति त्रिविधः, वेगः

मूर्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् ॥ १५८ ॥

संस्कारं निरूपयति-संस्कारेति । वेगस्थितिस्थापकभावनाभेदात्संस्कारस्त्रिविध इत्यर्थः ॥ मूर्तमात्र इति ॥ कर्मजवेगजभेदाद्वेगो द्विविध इत्यर्थः । शरीरादौ हि नोदनजनितेन कर्मणा वेगो जन्यते, तेन च पूर्वकर्मनाशस्तत उत्तरं कर्म । एवमग्रेऽपि । विना च वेगं कर्मणः कर्मप्रतिबन्धकत्वात्पूर्वकर्मनाश उत्तरकर्मोत्पत्तिश्च न स्यात् । यत्र वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः ॥ १५८ ॥

स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि ।
अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् ॥ १५९ ॥

स्थितिस्थापकेति । आकृष्टशाखादीनां परित्यागे पुनर्गमनस्य स्थितिस्थापकसाध्यत्वात् ॥ केचिदिति ॥ चतुर्षु क्षित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते, तदप्रमाणमिति भावः । असौ-स्थितिस्थापकः । क्वचिद् = आकृष्टशाखादौ ॥ १५९ ॥

भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः ।
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥ १६० ॥

भावनाख्य इति । तस्य-संस्कारस्य । उपेक्षात्मकज्ञानात्संस्कारानुत्पत्तेरुपेक्षा-

---

मूर्तमात्रे-पृथिव्यादिचतुष्टयमनोमात्रवृत्तिरित्यर्थः । वेगत्वं जातिविशेषः प्रत्यक्षसिद्धः । कर्मजवेगजभेदाद् वेगो द्विविधः । तत्र प्राचीनैकदेशिमतानुसारेण वेगस्य कर्मनाशकत्वं कर्मोत्पादकत्वं च व्यवस्थापयितुमाह मुक्तावल्यां-**शरीरादौ हीति** । शरीरादौ नोदनाख्यसंयोगजन्यकर्मणा वेगो जायते, तेन च वेगेन स्वजनककर्मनाशः, कर्मान्तरोत्पत्तिश्च भवतीति । **एवमग्रेऽपीति** । द्वितीयादिकर्मणा पूर्ववेगनाशः ततो वेगान्तरोत्पत्तिश्च भवतीति बोध्यम् । ननु वेगस्य कर्मनाशकत्वे मानाऽभाव इत्यत आह-**विना चेति** । वेगमन्तरेण पूर्वकर्मणः स्थायिनः उत्तरकर्मप्रतिबन्धकत्वात् पूर्वकर्मनाशो न स्यात् तस्याऽनाशे उत्तरकर्मोत्पत्तिश्च न स्यादित्यर्थः ॥ १५८ ॥

मूले स्थितिस्थापकसंस्कारमाह-**स्थितीति** । पृथिवीमात्रसमवेतत्वसमानाधिकरणसंस्कारत्वव्याप्यजातिमत्त्वं तल्लक्षणम् । संस्कारत्वव्याप्यत्वोपादानेन गन्धत्वादिकमादाय न गन्धेऽतिव्याप्तिः; पृथिवीमात्रसमवेतेत्यनुपादाने भावनात्वमादाय भावनायामतिव्याप्तिः, पृथिवीमात्रनिरूपितसमवायाऽवच्छिन्नवृत्तित्वलाभायैव जातिपदम् । आकृष्टशाखादीनां परित्यागे पुनर्यथापूर्वं संयोगजनकक्रियायाः स्थितिस्थापकसाध्यत्वात् स्थितिस्थापकस्य सिद्धिः, स्थितिस्थापकसंस्कारत्वजातिः क्रियाविशेषजनकतावच्छेदकतया सिद्धा । स च स्वजन्यक्रियानाश्योऽतीन्द्रियश्च भवतीति । **चतुर्ष्वपीति** । व्यजनाकृष्टे वाय्वादौ वह्न्यादिज्वालादौ पूर्यमाणघटादिमध्यप्रविशज्जलादौ च यथावस्थितसंयोगदर्शनात् स्थितिस्थापकसंस्कारस्तत्रानुमीयते अतो नाऽप्रमाणमिति ध्येयम् ॥ आकृष्टशाखागतो यः स्पन्दः क्रिया तत्र कारणं भवतीति ॥

मूले-**भावनाख्यस्त्विति** । अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम् । अनुभवध्वंसेऽतिव्याप्तिवारणाय-स्मृतिहेतुत्वमिति, आत्मादावतिव्याप्तिवारणाय-अनुभवेति । स चातीन्द्रियः, स्मृतिरूपकार्यानुमेय इत्यर्थः । असावधानतया वस्तुनो ज्ञानमुपेक्षा, उपेक्षात्मकज्ञानेन

नात्मक इत्युक्तम्। तत्संशयात्संस्कारस्यानुत्पत्तेर्निश्चय इत्युक्तम्। तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः। ननु स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वं, तेनोपेक्षादिस्थले न स्मरणम्, इत्थं च संस्कारं प्रति ज्ञानत्वेनैव हेतुताऽस्त्विति चेद्-न, विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात्। किञ्चोपेक्षास्थले संस्कारकल्पनाया गुरुत्वात्संस्कारं प्रति चोपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् ॥ १६० ॥

**स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ।**

**असौ**-संस्कारः। तत्र प्रमाणं दर्शयति-**स्मरण** इति। यतः स्मरणं प्रत्यभिज्ञानं च जनयत्यतः संस्कारः कल्प्यते। विना व्यापारं पूर्वानुभवस्य स्मरणादिजननासामर्थ्यात्स्वस्वव्यापारान्यतराभावे कारणत्वासंभवात्। न च प्रत्यभिज्ञां प्रति तत्तत्संस्कारस्य हेतुत्वे प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम्, अप्रयोजकत्वात्। परे त्वनुद्बुद्धसंस्कारात्प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः ॥

---

संस्कारो न जन्यते, अतस्तदनात्मकनिश्चयः संस्कारहेतुः। उपेक्षानात्मकसंशयादपि संस्काराऽनुत्पत्तेः उपेक्षानात्मकनिश्चय इत्युक्तम्। उपेक्षान्यनिश्चयत्वापेक्षया ज्ञानत्वस्य कारणतावच्छेदकत्वे लाघवमाश्रित्य शंकते-**नन्विति**। संस्कारं प्रति ज्ञानसामान्यस्य हेतुत्वं स्वीक्रियताम्, उपेक्षात्मकज्ञानादपि संस्कारद्वारा स्मृतित्वापत्तिरिति शंका तु स्मृतिं प्रति उपेक्षानात्मकनिश्चयस्य कारणताङ्गीकारेण समाधेयेत्यर्थः ॥ समाधत्ते-**विनिगमनेति**। ज्ञानसामान्यस्य संस्कारहेतुत्वमित्येकपक्षमात्रसाधकयुक्त्यभावात्, ज्ञानत्वेन कारणत्वे लाघवाऽपेक्षया स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन कारणत्वकल्पनाया गुरुत्वाच्च, किं च उपेक्षास्थले संस्कारकल्पनाया अपि गुरुत्वात्, संस्कारं प्रति उपेक्षान्यनिश्चयत्वेनैव कारणत्वं सिद्ध्यतीति समुदितार्थः ॥ १६० ॥

मूले-**स्मरणे** इति। घटं स्मरामीति स्मृतिं प्रति, सोऽयं घट इति प्रत्यभिज्ञां प्रति, च 'घट'इति संस्कारः कारणं भवति, इन्द्रियसहकृतसंस्कारजन्यज्ञानं प्रत्यभिज्ञा, यतः पूर्वानुभवः कालान्तरे स्मरणं प्रत्यभिज्ञानं च जनयति,-इति जनकत्वादेव हेतोः, मध्ये व्यापारात्मकः संस्कारोऽनुमीयते-'पूर्वानुभवः,-संस्कारात्मकव्यापारवान्,-स्मरणादिजनकत्वादिति। ननु अनुभवध्वंस एव व्यापारोऽस्त्विति चेन्न, अनुभवध्वंसस्य सर्वदा सत्त्वात् सर्वदा स्मरणापत्तेः। तदुपपादयति-**विना व्यापारमिति**। स्वं स्मरणं तस्य व्यापारः संस्कारः, स्वं प्रत्यभिज्ञा तस्या व्यापारः संस्कारेन्द्रियसंयोगोभयं तदन्यतराऽभावेऽनुभवस्य चिरविनष्टस्य कारणत्वानुपपत्तेः, अव्यवहितपूर्वत्वाऽभावादिति भावः ॥ संस्कारजन्यतया प्रत्यभिज्ञायाः स्मृतित्वापत्तिं शंकते-**न च प्रत्यभिज्ञामिति**। समाधत्ते-**अप्रयोजकत्वादिति**। संस्कारजन्यत्वस्य संस्कारध्वंसेऽपि सत्त्वेन स्मृतित्वे प्रयोजकत्वाऽभावात्, अनुभवजन्यज्ञानत्वस्यैव स्मृतित्वप्रयोजकत्वादित्यर्थः ॥ चिन्तामणिकारानुयायिमतमाह-**परे त्विति**। प्रत्यभिज्ञां प्रति उद्बुद्धसंस्कारत्वेन कारणत्वापेक्षया लाघवात् स्मृतित्वेन कारणत्वं स्वीकार्यं, मणिकारमते प्रत्यभिज्ञापूर्वं प्रतिबन्धकीभूतलौकिकसामग्रीसत्त्वेन स्मरणाऽनुत्पादात्,-इत्याहुः। परेषान्तु मते उद्बुद्धसंस्कारस्य स्मरणं प्रति स्मरणस्य च प्रत्यभिज्ञां प्रति हेतुताक-

धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥ १६१ ॥
गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः ।

अदृष्टं निरूपयति–धर्माधर्माविति ॥ स्वर्गादीति ॥ स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनां च साधनं धर्म इत्यर्थः ॥ तत्र प्रमाणं दर्शयितुमाह–यागादीति । यागादिव्यापारतया धर्मः कल्प्यते । अन्यथा यागादीनां चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात् । तदुक्तमाचार्यैः–"चिरध्वस्तं फलायाऽलं न कर्मातिशयं विना" इति । ननु यागध्वंस एव व्यापारः स्यात्, न च प्रतियोगितद्ध्वंसयोरेकत्राजनकत्वं, सर्वत्र तथात्वे मानाभावात् । न च त्वन्मते फलाऽऽनन्त्यं, मन्मते चरमफलस्यापूर्वनाशकत्वान्न तथात्वमिति वाच्यम्, कालविशेषस्य सहकारित्वादित्यत आह–गङ्गास्नानेति । गङ्गास्नानस्य हि स्वर्गजनकत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमपूर्वमेव कल्प्यते लाघवादिति भावः ॥

---

ल्पनं, मन्मते त्वन्तरा स्मरणव्यक्तिमकल्पयित्वा उद्बुद्धसंस्कारस्यैव प्रत्यभिज्ञां प्रति हेतुताकल्पने लाघवमित्यरुचिराहुरित्यनेन सूचिता ॥

मूलेऽदृष्टं निरूपयति–**धर्मेति** । अप्रत्यक्षत्वात् तयोरदृष्टमिति संज्ञा, गंगास्नान-पूजन-होम याग-दानादौ कृते सति ततो भाविस्वर्गादिफलस्य मध्ये व्यापारतया धर्मः कल्प्यते, स च साधनं=निमित्तकारणं बोध्यः । यागत्वं–देवतोद्देश्यकस्वस्वत्वध्वंसवद्द्रव्यविशेष्यकेच्छात्वम् । होमत्वं अग्निसंयोगानुकूलक्रियाजनकघृतादिवृत्तिनोदनादिव्यापारत्वम् । दानत्वं–मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वत्वजनकत्यागत्वम् । स्नानत्वं शरीरावच्छेदेन जलसंयोगः । पूजनं–सत्कारादिकरणम् । मीमांसकास्तु–देवतामुद्दिश्य द्रव्यत्यागो यागः, त्यक्तस्य द्रव्यस्य वह्नौ प्रक्षेपो होमः, स्वीयद्रव्यस्य स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनं दानम् इति ॥ कुसुमांजलिस्थमुदयनाचार्यपद्यमाह–**चिरध्वस्तमिति** । चिरध्वस्तं=यागादि–कर्म, अतिशयं=मध्ये अपूर्वं व्यापारं, विना, फलाय=स्वर्गादिप्रापणाय, अलं–समर्थं कारणं न भवतीति व्यापारोऽवश्यं धर्मात्मकः कल्पनीय इति भावः ॥ यागध्वंसः व्यापारो स्वीकार्यो न तु धर्म इत्याशंकते–**ननु यागेति** । धर्मकल्पनाऽपेक्षया क्लृप्तस्य यागध्वंसस्य व्यापारत्वं युक्तमिति भावः ॥ ननु कारणस्य कारणाऽभावस्य च मिथो विरोधिनः कथमेकत्र कारणत्वमित्याशंक्य समाधत्ते–**न च प्रतियोगितद्ध्वंसयोरिति** । यागस्य यागध्वंसस्य च एकत्र स्वर्गे अजनकत्वं न भवति, सर्वत्र स्थले, तथात्वे=अजनकत्वे, प्रमाणाऽभावात्, प्राचां मते दुरितस्येव दुरितध्वंसतत्प्रागभावयोरपि दुरितात्यन्ताभावप्रतियोगिरूपतया दुरितसंसर्गाऽभावत्वेन त्रयाणामपि समाप्तिहेतुत्वात् कालभेदेन वा विरोधाऽभावादिति भावः ॥ ननु तव मते ध्वंसस्य सार्वदिकत्वेन स्वर्गात्मकफलस्य सार्वदिकत्वात्मकाऽऽनन्त्यापत्तिः, मन्मते तु चरमफलस्य स्वर्गस्यान्तिमभोगरूपस्य अपूर्वात्मकधर्मनाशकत्वात् न सार्वदिकत्वमित्याशंकते–**न च त्वन्मते इति** । परिहरति–**कालविशेषस्येति** । येन यागेन यावती स्वर्गे स्थितिः स्मृत्यादौ निश्चिता तादृशकालविशिष्टयागध्वंसः स्वर्गं प्रति कारणमिति स्वीकारेण फलानन्त्याऽदोषादित्यर्थः । एतत्समाधत्ते–**गंगास्नानस्येति** । सर्वत्र करणध्वंसस्य व्यापारत्वे गंगास्नानात्मकानन्तजलसंयोगध्वंसानां व्यापारत्वाऽपेक्षया गंगास्नानजन्य एको धर्मः लाघवात् व्यापार उचित इति भावः ॥

ननु ध्वंसोऽपि न व्यापारोऽस्तु। न च निर्व्यापारस्य चिरध्वस्तस्य कथं कारणत्वमिति वाच्यम्, अनन्यथासिद्धनियतपूर्ववर्तित्वस्य तत्रापि सत्त्वात्, अव्यवहितपूर्ववर्तित्वं हि चक्षुस्संयोगादेः कारणत्वे, न तु सर्वत्र, कार्यकालवृत्तित्वमिव समवायिकारणस्य कारणत्वे इत्यत आह—

कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥ १६२ ॥

कर्मनाशेति। यदि ह्यपूर्वं न स्यात्तदा कर्मनाशाजलस्पर्शादिना नाश्यत्वं धर्मस्य न स्यात्। नहि तेन यागादेर्नाशः प्रतिबन्धो वा कर्तुं शक्यते तस्य पूर्वमेव वृत्तत्वादिति भावः। एतेन देवताप्रीतेरेव फलत्वमित्यपास्तम्, गङ्गास्नानादौ सर्वत्र देवताप्रीतेरसम्भवात्, देवतायाश्चेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात्, प्रीतेः सुखस्वरूपत्वेन विष्णुप्रीत्यादौ तदसम्भवात्, जन्यसुखादेस्तत्राभावात्। तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्यते ॥ १६१ ॥ १६२ ॥

अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः।
प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ ॥ १६३ ॥

अधर्म इति। नरकादिसकलदुःखानां नारकीयशरीरादीनां च साधनमधर्म

---

ननु—स्नानध्वंसो धर्मो वा व्यापार एव मास्तु इत्याशंकते—ननु ध्वंसोऽपीति। अनुपपत्तिमाशंकते—न च निर्व्यापारस्येति। चिरध्वस्तस्य स्नानादेरव्यवहितपूर्वत्वाऽभावात् कारणत्वमसंभवीत्यर्थः॥ परिहरति—अनन्यथेति। अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववृत्तित्वस्य कारणलक्षणस्य तत्र चिरध्वस्ते स्नानादौ सत्त्वात् न कारणत्वानुपपत्तिरित्यर्थः॥ अव्यवहितपूर्ववृत्तित्वं न सर्वत्र कारणे इत्याह—अव्यवहितेति। समवायिकारणे यथा कार्यकालवृत्तित्वमपेक्ष्यते तथा न प्रागभावादौ सर्वत्र नियम इत्याशयः॥ धर्मस्यास्तित्वे प्रमाणमुपन्यस्य एतत्समाधत्ते—मूले कर्मनाशेति। कर्मनाशाख्यनदीजलस्पर्शादिना, आदिना—'कर्मनाशाजलस्पर्शात् करतोयाऽतिलङ्घनात्। गण्डकीबाहुतरणात् धर्मः क्षरति कीर्तनादि'ति करतोयातिलंघनादिकं ग्राह्यम्। धर्मस्याऽसत्त्वे तन्नाश्यत्वबोधकवाक्यस्याऽप्रामाण्यापत्तेरिति भावः॥ ननु तत्र धर्मपदेन यागादिर्ग्राह्यः इत्यत आह—नहि तेनेति। तेन—कर्मनाशाजलस्पर्शादिना, यागस्य नाशो नहि कर्तुं शक्यः, नाशस्य पूर्वमेव जायमानत्वात्, न वा प्रतिबन्धः कर्तुं शक्यः, यागस्य तत्पूर्वमेव वृत्तत्वात्, तस्मात् धर्मः अस्त्येवेति भावः॥ मीमांसकैकदेशिमतं निषेधति—एतेनेति। देवताप्रीतिरेव यागादिसत्कर्मफलम् इत्यपि न, गंगास्नाने देवताप्रीतेरभावात्, देवताप्रीतिमुद्दिश्य स्नानाऽकरणाच्च, विष्णुप्रीतेर्नित्यसुखात्मकत्वेन उद्देश्यत्वाऽसंभवात्, तत्र विष्णौ जन्यसुखाऽभावाच्चेत्यर्थः। किन्तु 'विष्णुप्रीतिजन्यत्वात् स्वर्गादिरेव विष्णुप्रीतिलक्ष्यमिति। सुखासाधारणकारणतावच्छेदकजातिमत्त्वं धर्मत्वम् इति लक्षणम्। विहितक्रियैव स इति मीमांसकाः। बुद्धेः परिणामविशेष इति सांख्याः, चित्तस्य चित्तान्तरे आहिता शुभवासना इति शाक्याः। कायारम्भकः सूक्ष्मो मूर्तिमान् सुखहेतुः पुद्गलनामधेय इत्यार्हताः। भगवत्प्रीतिरेवेति स्वामिनारायणीयादयो वैष्णवाः॥१६१॥१६२॥

मूलेऽधर्मं निरूपयति—अधर्म इति। नरकशरीरक्षयरोगविशिष्टेदानीन्तनशरीरप्रभृतिलभ्यदुःखानामसाधारणनिमित्तकारणमधर्मः स च वेदादिशास्त्रनिषिद्धाऽभक्ष्यभक्षणागम्यागमनापेयपा-

इत्यर्थः ॥ तत्र प्रमाणमाह-प्रायश्चितेति । यदि ह्यधर्मो न स्यात्तदा प्रायश्चित्तादिना नाश्यत्वमधर्मस्य न स्यात् । न हि तेन ब्रह्महननादीनां नाशः प्रतिबन्धो वा विधातुं शक्यते, तस्य पूर्वमेव विनष्टत्वादिति भावः ॥ जीवेति ॥ ईश्वरे धर्माधर्माभावादिति भावः ॥ १६३ ॥

इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ।

इमौ-धर्माधर्मौ ॥ वासनेति ॥ अतो ज्ञानिना कृते अपि सुकृतदुष्कृतकर्मणी न फलायाऽलमिति भावः ॥ ज्ञानादपीति ॥ अपिना भोगपरिग्रहः । ननु तत्त्वज्ञानस्य कथं धर्माधर्मनाशकत्वं? 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति वचनविरोधात्, इत्थं च तत्त्वज्ञानिनां झटिति कायव्यूहेन सकलकर्मणां भोगेन क्षय इति चेद्,-न, तत्र भोगस्य वेदबोधितनाशकोपलक्षकत्वात् । कथमन्यथा प्रायश्चित्तादिना कर्मणां नाशः । तदुक्तम्-'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इत्यादिना । श्रूयते च-'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति ॥ ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादि च न स्याज्ज्ञानेन सर्वेषां कर्मणां नाशादिति चेद्,-न, प्रारब्धेतरकर्मणामेव नाशात् । तत्तच्छरीरभोगजनकं हि यत्कर्म तत्प्रारब्धं, तदभि-

---

नात्मकनिन्दितकर्मभ्यो जायते, स च मन्वादिधर्मशास्त्रेषु विहितप्राजापत्यादिप्रायश्चित्तनाश्यतया प्रतिपादितत्वात् सिद्ध्यत्येव, अन्यथा शास्त्रोपदिष्टप्रायश्चित्तवैयर्थ्यापत्त्या तदुपदेष्टुरप्रामाण्यापत्तिः स्यादिति भावः । आदिना ज्ञानेन भोगेन च नाश इति बोध्यम् । ननु तेन प्रायश्चित्तेन ब्रह्महनना-देरेव नाशः प्रतिबन्धो वा भवतु किमधर्मनाशकल्पनयेत्यत आह-नहि तेनेति । तेन-प्रायश्चित्तेन, तस्य=ब्रह्महननादेः । पूर्वम्-प्रायश्चित्तादिकरणपूर्वमेव ॥ जीवेति । जीवात्ममात्राधारौ धर्माधर्मौ, न तु ईश्वराधारौ तद्गुणत्वाऽभावात्, अवच्छेदकतासम्बन्धेन शरीरस्य समवायेन विहितनिषिद्ध-कर्मणोश्च धर्माधर्मकारणतया ईश्वरे शरीरकर्माऽभावान्न धर्माधर्माविति भावः ॥ १६३ ॥

ननु-ईश्वरे कुतो न धर्मादेरुत्पत्तिरत आह मूले-इमाविति । मिथ्याज्ञानजन्यो यः अस-त्संस्कारो वासना तदात्मकनिमित्तकारणजन्यौ । अन्ये तु वासना मिथ्याज्ञानजन्येच्छा तज्जन्याविति वदन्ति ॥ वासनाया हेतुत्वे प्रमाणमाह-मुक्तावल्याम् अत इति । वासनाया हेतुत्वादेव ज्ञानिकृत-शुभाशुभकर्मणी न धर्माधर्मोत्पादनसमर्थे, तस्य रागरूपसहकारिकारणाऽभावादिति भावः ॥ तत्त्वज्ञानं न धर्माधर्मनाशकमित्याशंकते-ननु तत्त्वज्ञानस्येति । भोगस्यैव धर्माधर्मनाशकत्वात् ज्ञानिनामपि एकदाऽनेकशरीरस्वीकारेण निखिलधर्माधर्माणां फलानुभवकरणेन क्षय इति भावः ॥ समाधत्ते-तत्र भोगस्येति । 'नाऽभुक्तमि'त्यत्र भोगस्य वेदवैदिकशास्त्रबोधितयावन्नाशकसूचकत्वेन भोग-वेदबोधितनाशकात्मकतत्त्वज्ञानप्रायश्चित्तादिकं विना न क्षीयते इत्यर्थात् न तत्त्वज्ञानस्य धर्माधर्मादिनाशकत्वानुपपत्तिः, अन्यथा कर्मनाशकानां प्रायश्चित्तादीनां वैयर्थ्ये तद्बोधकशास्त्राणामप्रामाण्यापत्तिः स्यादिति भावः ॥ उक्तार्थे स्मृतिं प्रमाणयति-ज्ञानाग्निरिति । गीतायां भगवतोक्तं ज्ञानाग्निः सकलाऽदृष्टानि नाशयतीत्यर्थः॥ श्रुतिमप्याह-क्षीयन्ते इति । अस्य ज्ञानिनः सकलाऽ-दृष्टानि निरवधिकरत्वाश्रये ब्रह्मणि साक्षात्कृते सति नाशं प्राप्नुवन्तीत्यर्थः ॥ ननु तत्त्वज्ञानस्य कर्म-नाशकत्वे ज्ञानिनः शरीरस्थितिः सुखादिकं च न स्यादित्याशंकते-तत्त्वज्ञानिनस्तर्हीति । समा-धत्ते-प्रारब्धेतरेति । आयुःसमाप्तिपर्यन्तं भोगार्थं प्रकर्षेण आरब्धानि यानि कर्माणि शरीरस्थि-

प्रायमेव नाभुक्तमिति वचनमिति ॥

शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥ १६४ ॥
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ।
सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥ १६५ ॥
वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता ।
कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥ १६६ ॥

शब्दं निरूपयति-शब्द इति । नभोवृत्तिः-आकाशसमवेतः । दूरस्थशब्दस्याग्रहणादाह-श्रोत्रेति । ननु मृदङ्गावच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह-वीचीति । आद्यशब्देन बहिर्देशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन सदृशो जन्यते, तेन चापरस्तद्व्यापकः, एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति ॥ कदम्बेति ॥ आद्यशब्दाद्दशसु दिक्षु दश शब्दा उत्पद्यन्ते । तेभ्यश्चान्ये दश शब्दा उत्पद्यन्त इति भावः । अस्मिन्मते कल्पनागौरवादुक्तं-कस्यचिन्मत इति ॥१६४॥१६५॥१६६॥

---

तिकारणानि तदङ्गभूतानि चान्यानि तानि विहाय यानि संचितानि अवशिष्येरन् तेष मेव ज्ञानेन दग्धत्वात्, आयुःसमाप्तिपर्यन्तं शरीरभोगजनकं तु कर्म जन्मत एव प्रारब्धं तस्य अनाशान्नोक्तापत्तिः, अत एव 'नाऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्यत्र कर्मपदेन प्रारब्धकर्म, 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' इत्यत्र च सर्वकर्माणिपदेन प्रारब्धेतरकर्माणि गृहीत्वा द्वयोर विरोध उपपादनीय इति भावः ॥

मूले शब्दमाह-शब्द इति । श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं शब्दस्य लक्षणम् । शब्दत्वं जातिः प्रत्यक्षसिद्धा, शब्दः सर्वोऽप्यनित्योऽव्याप्यवृत्तिश्च । स द्विविधः-ध्वनिवर्णभेदात् । ध्वनिः-तारतारतरत्वादिधर्मवानभिघातादिजन्योऽस्फुटशब्दो मृदङ्गादिजन्यः, वर्णस्तु कण्ठसंयोगादिजन्यः स्फुटः कखादिरूपः, आकाशे समवायेनोत्पन्नस्य शब्दस्य धारावाहिकोत्पत्त्या कर्णात्मकाकाशे समुत्पन्नस्य प्रत्यक्षं भवतीति, सजातीयशब्दोत्पत्तिस्तु द्विधा भवति वीचितरङ्गवत् कदम्बपुष्पमञ्जरिवच्च निमित्तपवनेन भवति, वीचिर्यथा सर्वदिगवच्छेदेन एकदा तरङ्गान् जनयति परन्तु यद्देशदिगभिमुखो वायुस्तद्देशदिगवच्छेदेनाऽधिकतरङ्गान् जनयति तथा च भेरीमृदङ्गाद्यवच्छेदेन जायमानशब्दः भेर्यादिभिन्नसर्वदेशावच्छेदेन सर्वदिगवच्छेदेन चैकदैव शब्दान् जनयति परन्तु यद्देशदिगभिमुखो वायुस्तद्देशदिगवच्छेदेनाऽधिकशब्दान् जनयतीति । यद्वा कदम्बपुष्पमेकनालकाधिकरणविशेषे यथा स्वसमीपदेशेषु प्राच्याद्यष्टदिक्षु सजातीयपुष्पाणि जनयति तादृशपुष्पाणि तस्मिन्नेवाधिकरणे तत्समीपदेशेष्वष्टदिक्षु चान्यानि सजातीयपुष्पाणि जनयन्ति तथा भेर्यवच्छेदेन जायमानशब्दः भेरीसमीपदेशावच्छेदेन दशदिक्षु शब्दान् जनयति ते च तत्समीपदेशावच्छेदेन सर्वदिगवच्छेदेन च बहून् शब्दान् जनयन्तीति । पक्षद्वयेऽपि आद्यशब्दोऽतीन्द्रियः ॥ अस्मिन्मते इति । बहूनां शब्दानां शब्दाऽसमवायिकारणकत्वकल्पनेन द्वितीयक्षणभिन्नक्षणानां निमित्तकारणकत्वकल्पनेन च गौरवादित्यर्थः । शब्दस्त्रिविधः-संयोगजो विभागजः शब्दजश्चेति । तत्राद्यो भेरीदण्डसंयोगजन्यः, द्वितीयो वंशदलद्वयविभागजन्यः, भेर्यादिदेशमारभ्य श्रोत्रपर्यन्तद्वितीयादिशब्दाः शब्दजाः । भेरीदण्डसंयोगजन्ये शब्दे भेर्याकाशसंयोगोऽसमवायिकारणम्, भेरीदण्डसंयोगो निमित्तकारणम् । वंश-

उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ।
सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥ १६७ ॥

ननु शब्दस्य नित्यत्वादुत्पत्तिकथनमसङ्गतमत आह–उत्पन्न इति । शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ॥ ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम्, इत्थं चोत्पादविनाशबुद्धिर्भ्रमरूपैवेत्यत आह–सोऽयं क इति ॥ साजात्यमिति ॥ तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषयः, उक्तप्रतीतिविरोधात् । इत्थञ्च द्वयोरपि प्रतीत्योर्न भ्रमत्वमिति ॥ १६७ ॥

तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।
तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥ १६८ ॥

❀ इति श्रीविश्वनाथपञ्चाननभट्टाचार्यकृता कारिकावली ❀

ननु सजातीये सोऽयमिति प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह–तदेवेति ॥ यदौषधं

---

दलद्वयविभागजन्ये शब्दे वंशदलाकाशविभागोऽसमवायिकारणम्, वंशदलद्वयविभागो निमित्तम् । शब्दजन्यशब्दे पूर्वपूर्वशब्दोऽसमवायिकारणम्, पवनादिकन्तु निमित्तम्, ध्वन्यात्मकशब्दवत् वर्णात्मकशब्दस्यापि त्रैविध्यम्, यथा वायुकण्ठसंयोगेन जायमानः प्रथमः, ओष्ठद्वयविभागेन जायमानो द्वितीयः, शब्दाच्छब्दान्तरं तृतीय इति बोध्यम् ॥

मूले शब्दस्याऽनित्यत्वे प्रत्यक्षप्रतीतिं प्रमाणयति–उत्पन्न इति । कः=ककारः उत्पन्नो विनष्टश्चेतिबुद्धिप्रमाणसत्त्वात् शब्दस्याऽनित्यतेत्यर्थः । ननु–'तस्यैवायं शब्द'–इत्यादिस्थले 'स एवायं ककार' इत्यादिप्रत्यभिज्ञाया जायमानत्वात् नित्यत्वं शब्दस्याङ्गीकार्यम्, उक्तप्रतीतेस्तु उत्पन्नत्वाद्यभाववति शब्दे उत्पन्नत्वादिप्रकारकत्वात्मिका भ्रान्तिरिति चेन्न । 'स एवायं ककार' इतिप्रत्यभिज्ञानं तु तत्ककारसजातीयोऽयं ककार इति कत्व-तारत्व-मन्दत्वादि–विषयकं भवति, नतु शब्दात्मकव्यक्तितादात्म्यविषयकं, उत्पादविनाशशालित्वसाधकप्रतीतिविरोधात्, इत्थं च=प्रत्यभिज्ञानस्य सजातीयविषयत्वेन उत्पादप्रतीतिप्रत्यभिज्ञानयोर्द्वयोरेव यथार्थत्वम्, उत्पत्तिमति उत्पत्तिप्रकारकत्वात् तत्सजातीयत्ववति तत्सजातीयत्वप्रकारकत्वाच्चेति भावः ॥ १६७ ॥

प्रत्यभिज्ञायां सजातीयत्वविषयकत्वं प्रसिद्धं दृष्टान्तयति मूले–तदेवौषधमित्यादाविति । 'तदेवमिदमौषधमि'तिप्रत्यभिज्ञायाः पूर्वानुभूतौषधवृत्तिस्वर्णवटिकात्वादिविशेषधर्मवति स्वर्णवटिकात्वादिप्रकारकत्वात् याथार्थ्यमिति । आदिना 'सैवेयं दीपकलिका'–'सोऽयं स्वभावः' इत्यादौ प्रत्यभिज्ञायाः पूर्वानुभूतसजातीयत्ववति तादृशसजातीयत्वप्रकारकत्वात् याथार्थ्यं निदर्शनीयम् । न चाऽत्र सर्वत्र व्यक्त्यभेदो विषय इति वाच्यम् । स्वकर्तृकत्वस्वभिन्नकर्तृकत्वादिविरुद्धधर्माध्यासाहितभेदप्रत्ययस्य प्रतिबन्धकस्य सत्त्वात् । न च–विरुद्धधर्माध्यासो न धर्मिभेदसाधकः, कारणत्वकार्यत्वयोर्विरुद्धयोरपि निरूपकभेदात् कपालादौ सत्त्वेऽपि धर्म्यभेदादिति वाच्यम् । उक्तप्रत्यभिज्ञायाः सजातीयपरमाण्वादिकारणकत्वविषयकत्वस्वीकारेणापि तदोपाऽप्रसक्तत्वात्, परमाणूनां च भिन्नत्वान्न निरूपकभेदाऽपेक्षेति । न च परमाण्वादिकारणकत्वविषयकत्वकल्पने गौरवमिति वाच्यम् । समानतन्तु-

मया कृतं तदेवान्येनापि कृतमित्यादिदर्शनादिति भावः ॥ १६८ ॥

❀ इति गुणनिरूपणम् ❀

❀ इति महामहोपाध्यायविद्यानिवासभट्टाचार्यसुतश्रीविश्वनाथपञ्चानन-भट्टाचार्यविरचिता न्यायसिद्धान्तमुक्तावली सम्पूर्णा ❀

न्योत्तरीयपटादौ 'तदेवेदमि'तिप्रत्यभिज्ञायाः समानकारणकत्वविषयकत्वस्याऽनुभवसिद्धतया तस्या एव याथार्थ्यात् तदुत्तरजायमानगौरवज्ञानादेरकिञ्चित्करत्वादित्यालोचनीयमिति शम् ॥ १६८ ॥

शास्त्रान्तरारण्यसुकेसरीन्द्रास्तर्कात्मकाऽसीमवनेक्षणोत्काः ।
मुक्तापथे मे किरणं प्रलम्ब्य स्थलीष्वनन्तासु विशन्त्वकम्पाः ॥१॥

'भारते' पश्चिमे प्रान्ते पुण्ये सागरसङ्गते । "रैवताऽद्रि"समाधारे "कङ्कसौराष्ट्र"विश्रुते ॥ १ ॥ वैक्रमेऽष्टादशशते वर्षे सर्वशुभावहे । "वीलखा"राज्यपः श्रीमान् "कूकावाळा"ऽऽख्यभूपतिः ॥ २ ॥ यं प्रधानं नियोज्यैव ग्रामान् संगृह्य द्वादश । अस्थापयद्द राजधानीरूपां हि नगरीं शुभाम् ॥ ३ ॥ नामतः "कुंकुमवापीं( कुंकावाव ) नवतिग्राममूर्धनीम् । 'कूका''नृपतिमान्यस्य राज्यकल्याणमिच्छतः ॥ ४ ॥ श्रीमत्"कल्याण''देवानीकस्य ख्यातस्य तस्य वै । नवतिग्रामसमूहात्मकस्य मण्डलस्य यः ॥ ५ ॥ राष्ट्राऽध्यक्षो बली "लिम्बा"देवानीकः सुपुत्रकः । "कूका"वाळानृपपुत्रे "आलावाळा"ख्यभूपतौ ॥ ६ ॥ राज्ये शासत्युन्नतिं वै राष्ट्रस्य कृतवान् बहु । "आलावाळा"नृपे स्वर्गं गते राज्ञी च धीमती ॥ ७ ॥ राज्यं समकरोत "लिम्बा''देवानीकसहायतः । तस्य पञ्चमपुत्रस्य सर्वसद्गुणशालिनः ॥ ८ ॥ श्रीमद्"गोपाल"देवानीकस्य पुण्यवतो गृहे । धर्मपत्न्यां श्री"कमरावती"देव्यां तृतीयकः ॥ ९ ॥ वैक्रमे चन्द्रषण्णिधिभूमिते (१९६१) वत्सरे शुभे । आश्वीनशुक्लपञ्चम्यां पुत्रो यो जन्म लब्धवान् ॥ १० ॥ मूलाक्षर'गुणातीतानन्द'स्वामिपरम्परा,–शिष्यमण्डलमाश्रित्य 'जयन्त'नगरे, ततः ॥ ११ ॥ वर्षे चतुर्दशे यः श्रीस्वामिनारायणस्य च । दीक्षां दुर्गपुरे भाद्रे॰वैष्णवीं लब्धवान् शुभाम् ॥ १२ ॥ जीर्णदुर्ग च संस्थानं कृत्वाऽष्टादशवर्षके । काशीमागत्य शास्त्राणि समधीत्य हि तत्त्वतः ॥ १३ ॥ सन्दृब्धे येन भाष्ये वै प्रगल्भे सांख्ययोगयोः । वेदान्तन्यायसाहित्यसाङ्ख्ययोगसमाश्रयाः ॥ १४ ॥ टीकाग्रन्थाश्च सुस्पष्टा रचिता, अथ यं पुनः । दृष्ट्वा योग्यं च विद्वांसं सर्वसद्गुणशालिनम् ॥ १५ ॥ वृत्तालयपदाधीशा गुणज्ञा गुणिपूत्सुकाः । धर्मधुरधराचार्य्य महाराजमहोदयाः ॥ १६ ॥ परमात्मसमाऽऽपूज्या"ऽऽनन्दप्रसाद"देशिकाः । 'वृत्तालय'पुरे यस्मै सद्गुर्वाख्यं पदं ददुः ॥ १७ ॥ विशिष्टाद्वैतसिद्धान्तस्वामिनारायणाऽऽश्रित,–"श्रीकृष्णवल्लभाऽऽचार्य्य"धीमता तेन तात्त्विकी ॥ १८ ॥ न्याये किञ्चित्प्रविष्टानां विदुषां हितकारिणी । 'न्यायमुक्तावली'टीका विस्तृता "किरणावली" ॥ १९ ॥ काश्यां भाद्रे वैक्रमेऽब्दे गुणाङ्काङ्केन्दु ( १९९३ ) सम्मिते । विरचय्याऽर्पिता यत्र स्वामिनारायणात्मके ॥ २० ॥ परे ब्रह्मणि सर्वज्ञे सर्वशास्त्रनिरूपिते । स्वेष्टदेवेऽन्तरात्मा स परमात्मा प्रसीदतु ॥ २१ ॥

* इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य्य–नव्यन्यायाचार्य–सांख्ययोगवेदान्तमीमांसातीर्थ–पण्डित "श्रीकृष्णवल्लभाचार्य"स्वामिनारायणविरचिता न्यायसिद्धान्तमुक्तावल्याः किरणावली *

# ❀ पारिभाषिकशब्दाः ❀

पदार्थाः, अभिधेयाः, प्रमेयाः, ज्ञेयाः, वाच्याः। द्रव्यं, गुणी, गुणवत्, कर्मवत्, क्रियावत्। कर्म, क्रिया, गतिः, गमनं, स्पन्दः, स्पन्दनम्।। जातिः सामान्यं, अनुगतधर्मः, व्यावर्तकधर्मः। समवायः, नित्यसम्बन्धः। अभावः, व्यतिरेकः, विरहः। ध्वंसः, प्रध्वंसाभावः, नाशो, विनाशो, निवृत्तिः। अत्यन्ताभावः, रहितत्वं, शून्यत्वम्। अन्योन्याभावः, भेदः, भिन्नत्वं, भेदवत्त्वम्, इतरत्वम्, अन्यत्वम्। ज्ञानं, ग्रहः, बोधः, बुद्धिः संवित्, धीः, प्रत्ययः, प्रतीतिः। अयथार्थानुभवः, भ्रमः, अप्रमा। दैशिकविशेषणता, दैशिकसम्बन्धः, स्वरूपसम्बन्धः। कालिकविशेषणता, कालिकसम्बन्धः। दैशिकविशेषणता कालिकविशेषणता चेतिद्वयं सर्वाधारताप्रयोजकसम्बन्धः। संसर्गः,अन्वयः, सम्बन्धः, प्रत्यासत्तिः, सन्निकर्षः। प्रत्यक्षं, प्रत्यक्षप्रमाणम्, इन्द्रियम्। अनुमानम्, व्याप्तिज्ञानम्। शब्दः, पदम्। अन्वयिदृष्टान्तः, निश्चितहेतुसाध्यवान्दृष्टान्तः, अन्वय्युदाहरणम्। व्यतिरेकिदृष्टान्तः, निश्चितसाध्यहेत्वभाववद्दृष्टान्तः, व्यतिरेक्युदाहरणम्, तादृशनिदर्शनम्। साधनं, साधकं, लिङ्गं, हेतुः, गमकम्, ज्ञापकम्, सिद्धिजनकम्। आधारत्वम्, आधारता, आश्रयता, अधिकरणता,-अधिकरणत्वम्, अनुयोगिता। आधेयता, आधेयत्वं, वृत्तिः, सत्त्वं, प्रतियोगिता। तत्सत्त्वं, तन्निष्ठत्वं, तद्वृत्तित्वं, तद्वर्तमानत्वं, तद्विद्यमानत्वं, तदधिकरणकत्वम्, तदधिकरणताकत्वम्, तन्निष्ठाधिकरणतानिरूपकत्वम् तदाश्रयकत्वम्, तदाधारकत्वम्। तद्विषयकत्वं, तद्विषयताकत्वम् तन्निष्ठविषयतानिरूपकत्वम्, तद्विषयित्वम्, तन्निष्ठविषयतानिरूपितविषयित्वम्, तद्विषयताशालित्वम्, तदवगाहित्वम्, तद्गोचरत्वम्। तद्विशेष्यकत्वम्, तद्विशेष्यताकत्वम्, तन्निष्ठविशेष्यतानिरूपकत्वम्, तद्विशेष्यित्वम्, तन्निष्ठविशेष्यतानिरूपितविशेष्यित्वम्, तद्विशेष्यताशालित्वम्। तत्प्रकारकत्वम्, तन्निष्ठप्रकारताकत्वम्, तन्निष्ठप्रकारतानिरूपकत्वम्, तत्प्रकारित्वम् , तन्निष्ठप्रकारतानिरूपितप्रकारित्वं, तन्निष्ठप्रकारताशालित्वम्। तत्संसर्गकत्वम्, तन्निष्ठसंसर्गताकत्वम्, तन्निष्ठसंसर्गतानिरूपकत्वम्, तत्संसर्गित्वम् , तन्निष्ठसंसर्गतानिरूपितसंसर्गित्वम्, तन्निष्ठसंसर्गताशालित्वम्। तत्प्रतियोगिकत्वम्,तत्प्रतियोगिताकत्वम्,तन्निष्ठप्रतियोगितानिरूपकत्वम्। तदनुयोगित्वं, तदनुयोगिताकत्वम्, तदनुयोगितानिरूपकत्वम्। कार्यत्वम्,जन्यत्वम्,हेतुमत्त्वम्, प्रयोज्यत्वम्। कारणत्वं जनकत्वम्, हेतुत्वम्, प्रयोजकत्वम्। तत्प्रत्यक्षजनकत्वं, तद्ग्राहकत्वम्, तदुपलम्भकत्वम्। तत्प्रत्यक्षत्वं, तत्साक्षात्कृतत्वं, तद्ग्राह्यत्वं, तज्जन्यप्रत्यक्षविषयत्वम्, तदुपलब्धत्वम्। अनुमितत्वम्, अनुमितिविषयत्वम्। चाक्षुषत्वं, चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वम्, चक्षुर्ग्राह्यत्वम्। समवेतत्वं, समवायसम्बन्धावच्छिन्नवृत्तित्वम्। तद्वत्त्वं, तद्विशिष्टत्वं, तद्युक्तत्वम्, तत्। सामानाधिकरण्यम्, एकाधिकरणकत्वम्, समानवृत्तित्वम्। असामानाधिकरण्यं, वैयधिकरण्यम्, विरुद्धाधिकरणकत्वम्, एकाधिकरणवृत्तित्वाभावः,

विरुद्धत्वं, भिन्नाधिकरणकत्वम्। नियतत्वं, व्याप्तिमत्त्वम्। पटाभावः, पटप्रतियोगिकाभावः, पटप्रतियोगिताकाभावः, पटत्वावच्छिन्नप्रतियोगितानिरूपकाभावः। पटसामान्याभावः, पटत्वातिरिक्तधर्मानवच्छिन्नप्रतियोगितानिरूपकाऽभावः। सव्यभिचारः, अनैकान्तिकः, व्यभिचारी। कालात्ययाऽपदिष्टः, वाधितः। तादात्म्यसम्बन्धः, अभेदसम्बन्धः। तदवच्छेद्यत्वं, तदवच्छिन्नत्वम्, तन्निष्ठावच्छेदकताकत्व, तन्निष्ठावच्छेदकतानिरूपकत्वम्। अवच्छेदकता, भेदकता, इतरेभ्यो भिन्नत्वेन बोधजनकता। निरूप्यत्वं, निरूपितत्वम्। ईश्वरसंकेतः, ईश्वरेच्छा, शक्तिः, अभिधा। लक्षणा, शक्यसम्बन्धः। कार्यकारणभावः, जन्यजनकभावः, हेतुहेतुमद्भावः, साध्यसाधनभावः। असद्धेतुः, दुष्टहेतु., हेत्वाभासः। समवायिकारणम्, उपादानम्। कार्यं,फलम्, उपादेयम्, उत्पत्तिमत्, जन्यम्, अनित्यम्, सादि। प्रतियोगित्वम्, अभावाभावत्वम्। प्रत्यक्षम्, अपरोक्षम्, साक्षात्कारः,उपलब्धिः, अध्यक्षं, उपलम्भः। शाब्दबोधः, शाब्दज्ञानं, अन्वयबोधः, सम्बन्धबोधः, वाक्यार्थबोधः। व्यवहारः, स्फुरणं, शब्दप्रयोगः। द्वारं, व्यापारः। लक्षणम्, असाधारणधर्मः। सहचारग्रहः, सामानाधिकरण्यग्रहः। नान्तरीयकं, मध्यगतं, व्याप्यं, तदन्तःकालीनत्वं। विशेष्यता, प्रकारता, संसर्गता, तत्त्रयभिन्ना चतुर्थी चेति चतुर्विधा विषयताः। कार्यता कारणता, आधेयता अधिकरणता, विशेष्यता प्रकारता, संसर्गता विशेष्यविशेषणता, विषयता विषयिता, लक्ष्यता लक्षणता, प्रतियोगिता अनुयोगिता, निरूप्यता निरूपकता, स्वता स्वामिता, एतासां, निरूप्यनिरूपकभावः, अवच्छेदकता च भवति। प्रकारता प्रतियोगिता कार्यता कारणता आधेयता अवच्छेदकता व्याप्यता व्यापकता लक्षणता इमा नियतसम्बन्धावच्छिन्ना भवन्ति। अनुयोगिता अधिकरणता विशेष्यता लक्ष्यता संसर्गताः सम्बन्धानवच्छिन्नाः भवन्ति। वस्तुत्वं वाच्यत्वं प्रमेयत्वं ज्ञेयत्वं गगनाभावः कपिसंयोगाभावः व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावः केवलान्वयिनो भवन्ति ॥ * ॥

| कार्यं | समवायिकारणम् | असमवायिकारणम् | निमित्तकारणम् |
|---|---|---|---|
| घटः, | कपालं, | कपालद्वयसंयोगः, | दण्डचक्रसलिलकुलालादयः |
| पटः, | तन्तवः | तन्तुसंयोगः | तुरीवेमातन्तुवायाः |
| अवयवी | अवयवाः | अवयवसंयोगः | कालेश्वरादृष्टादयः |
| अवयविरूपं | अवयवी | अवयवरूपं | कालेश्वरादृष्टादयः |
| पटरूपं | पटः | तन्तुरूपं | कालेश्वरादृष्टादयः |
| पार्थिवद्व्यणुकरूपं | द्व्यणुकं | परमाणुरूपं | कालेश्वरादृष्टादयः |
| पार्थिवपरमाणुरूपं | परमाणुः | पाकः (तेजस्संयोगः) | कालेश्वरादृष्टादयः |
| संयोगजशब्दः | गगनं | भेर्याकाशसंयोगः | भेरीदण्डसंयोगादिः |
| विभागजशब्दः | गगनं | वंशाकाशविभागः | कालेश्वरादृष्टादयः |

| | | | |
|---|---|---|---|
| शब्दजशब्दः | गगनं | पूर्वपूर्वशब्दाः | पवनादयः |
| ज्ञानम् | आत्मा | आत्ममनस्संयोगः | मनःप्रभृतयः |
| आद्यपतनम् | फलादि | गुरुत्वं | वाय्वादिः |
| द्वितीयपतनम् | फलादि | वेगः | कालेश्वरादृष्टादिः |
| कायपुस्तकसंयोगः | कायपुस्तके | हस्तपुस्तकसंयोगः | कालेश्वरादृष्टादयः |
| क्रियाजन्यसंयोगः | पुस्तकं | क्रिया | कालेश्वरादृष्टादयः |
| विभागः | हस्तपुस्तकादि | क्रिया | कालेश्वरादृष्टादयः |
| न्यायमतेऽवयविरूपं | अवयवी | पाकः | कालेश्वरादृष्टादयः |
| अवयविरूपरसगन्धस्पर्शाः, | अवयवी | अवयवरूपरसगन्धस्पर्शाः | कालादयः |
| अनित्यैकत्वम् | अनित्यघटादिः | अवयवगतैकत्वं | कालादयः |
| द्वित्वादि | आश्रयघटादिः | समानाधिकरणैकत्वानि | अपेक्षाबुद्धयादयः |
| अवयविपरिमाणं | अवयवी | अवयवपरिमाणं | कालादयः |
| त्र्यणुकपरिमाणं | त्र्यणुकं | द्व्यणुकगतत्रित्वं | कालादयः |
| द्व्यणुकपरिमाणं | द्व्यणुकं | परमाणुगतद्वित्वं | कालादयः |
| अवयविगतैकपृथक्त्वम् | अवयवी | अवयवैकपृथक्त्वं | कालादयः |
| द्विपृथक्त्वम् | आश्रयद्वयं | स्वाश्रये नानापृथक्त्वं | कालादयः |

| फलं | व्यापारः | करणम् |
|---|---|---|
| प्रत्यक्षज्ञानम् | इन्द्रियार्थसन्निकर्षः, | षडिन्द्रियाणि |
| चाक्षुषप्रत्यक्षम् | चक्षुर्विषयसंयोगः | चक्षुरिन्द्रियम् |
| त्वाचप्रत्यक्षम् | त्वग्विषयसंयोगः | त्वगिन्द्रियम् |
| मानसप्रत्यक्षं | आत्ममनःसंयोगः | मनइन्द्रियम् |
| अनुमितिः | परामर्शः | व्याप्तिज्ञानम् |
| उपमितिः | उपदिष्टवाक्यार्थस्मरणम् | उपदिष्टवाक्यार्थज्ञानम् |
| शाब्दबोधः | पदजन्यपदार्थोपस्थितिः | वृत्तिज्ञानसहकृतंपदज्ञानम् |
| घटः | चक्रभ्रमणं | दण्डः |
| घटः | कपालद्वयसंयोगः | कपालम् |
| कपालं | कपालिकासंयोगः | कपालिका |
| द्व्यणुकं | परमाणुसंयोगः | परमाणू |
| समाप्तिः | विघ्नध्वंसः | मङ्गलम् |
| स्वर्गादि | अपूर्वम् | यागादि |
| स्मृतिः | भावना | अनुभवः |

संयोगसमवायस्वरूपकालिकपर्याप्तिस्वाभाववद्वृत्तित्वादयः सम्बन्धाः वृत्तितानियामकाः । निरूप्यनिरूपककोटिप्रविष्टविषयत्वादयः न वृत्तित्वनियामकाः । अवच्छेदकता द्वेधा, स्वरूपसम्बन्धरूपा दण्डत्वादौ, अनतिरिक्तवृत्तित्वरूपा च सिद्धान्तलक्षणेऽनवच्छेदकत्व-

घटकीभूता। तर्को द्वेधा कार्यकारणभावभङ्गप्रसंगाश्रितः व्याप्यव्यापकभावभङ्गप्रसंगाश्रितश्च, प्रथमः 'धूमो वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादिति, द्वितीयः द्रव्यं विशिष्टसत्त्वादित्यत्र 'विशिष्टसत्ता द्रव्यत्वव्यभिचारिणी स्यात् तदा यत्र विशिष्टसत्ता तत्र द्रव्यत्वमिति नियमो न स्यादिति। कारणं द्वेधा स्वजनकत्वसम्बन्धेन फलविशिष्टत्वं फलोपधानरूपं कारणतावच्छेदकधर्मवत्त्वात्मकं स्वरूपयोग्यं च, प्रथमं साक्षाद्दण्डादौ, द्वितीयं वनिदण्डादौ। हेतुः द्वेधा समव्याप्तः, विषमव्याप्तश्च, आद्यः हेतुव्यापकसाध्यव्यापकः विशिष्टसत्तादिः, द्वितीयः हेतुव्यापकसाध्याऽव्यापकः धूमादिः। पञ्चावयववाक्यं द्वेधा– अन्वयं, व्यतिरेकं च, आद्यं–पर्वतो वह्निमान्, धूमवत्त्वात्, यो यो धूमवान् स स वह्निमान् यथा महानसं, तथा चायं, तस्मात् तथेति, द्वितीयं पर्वतो वह्निमान्, धूमवत्त्वात्, यो यो वह्न्यभाववान् स स धूम भाववान्, यथा जलह्रदः, न चायं तथा, तस्मान्न तथेति। कृतिनिरूपितविषयता त्रिधा उद्देश्यता विधेयता उपादानता च। विशिष्टाभावस्त्रेधा विशेष्याभावप्रयुक्तः विशेषणाभावप्रयुक्त; उभयाभावप्रयुक्तश्च, आद्यः पटे द्रव्यत्वविशिष्टघटत्वाभावः द्वितीयः पटे घटत्वविशिष्टद्रव्यत्वाभावः तृतीयः गुणादौ घटत्वविशिष्टद्रव्यत्वाभावः। कृतिसाध्यत्वप्रकारकेच्छा चिकीर्षा, तां प्रति कारणत्रयम् कृतिसाध्यताज्ञानम् इष्टसाधनताज्ञानम् बलवदनिष्टाननुबन्धित्वज्ञानं च। एवकारस्त्रेधा विशेष्यसंगतः विशेषणसंगतः क्रियासंगतश्च, आद्यः पार्थ एव धनुर्धरः, द्वितीयः शंखः पाण्डुर एव, तृतीयः नीलमुत्पलं भवत्येव ॥ * ॥

## * नियमाः *

प्रतीतिव्यवहाराभ्यामर्थसिद्धिः, यद्वैशिष्ट्यं यत्र भासते स एव स्वपदार्थः, प्रकृत्यर्थे प्रकारीभूतधर्मो भावप्रत्ययार्थः, यदुत्तरं प्रत्ययो विधीयते स प्रकृतिः, यस्याऽभावः स प्रतियोगी, यद्धर्मविशिष्टं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकः, येन सम्बन्धेन यन्नास्तीत्युच्यते तन्निष्ठा प्रतियोगिता तत्सम्बन्धावच्छिन्ना, विग्रहवाक्यात् यादृशविशेषणविशेष्यभावापन्नपदार्थविषयकबोधो जायते समासवाक्यात् तद्विषयकबोधो जायते समासवाक्यात् तद्विपरीतबोधो जायते, निपातातिरिक्तनामार्थयोरभेदसम्बन्धेन अन्वयः, विशेषणवाचकपदोत्तरवर्तिविभक्तेर्निरर्थकत्वमिति केचन, तस्या अप्यभेदार्थकत्वमित्यपरे, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्, गुणे गुणानङ्गीकारः, सर्वाधारः कालः, जन्यानां कालोपाधित्वम्, मूर्तानां दिगुपाधित्वम्, नित्येषु कालिकायोगः, विभिन्नकालीनपदार्थयोः विषयत्वान्यसम्बन्धेन आधाराधेयभावविरहः, उत्पन्नं द्रव्यं क्षणम् अगुणं निष्क्रियं च तिष्ठति, यो गुणो येनेन्द्रियेण गृह्यते तद्गता जातिस्तदभावश्च तदिन्द्रियग्राह्यः, नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमः, ध्वंसप्रागभावयोः स्वप्रतियोगिसमवायिदेशवृत्तित्वम्, अनुल्लेख्यमानजात्यखण्डोपाध्यतिरिक्तधर्माणां स्वरूपतो भाने प्रमाणाभावः, जात्य-

खण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किञ्चिद्धर्मप्रकारकत्वनियमः, विशेषणाभावाद्विशिष्टाभावः, विशेष्याभावाद्विशिष्टाभावः, उभयाभावाद्विशिष्टाभावः, एकसत्त्वेऽपि द्वयं नास्ति, एकधर्मावच्छिन्नाऽऽधेयता एका, सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वात्, सम्भवति लघौ धर्मे गुरौ तदभावात्, स्वविषयार्थबोधकधातुसमभिव्याहृतद्वितीयार्थीभूतकर्मत्वं विषयतारूपम्, एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्, सम्बन्धसत्त्वे सम्बन्धिसत्त्वम्, अभावमात्रस्य स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतया सह विरोधः, पदार्थः पदार्थेनान्वेति नत्वेकदेशेन, समानज्ञानीयसमानाधिकरणप्रकारताविशेष्यतयोरभेदः इति केचन, तयोरवच्छेद्यावच्छेदकभाव इत्यपरे, यद्धर्मावच्छिन्नवाचकपदात्तरं यावत्पदं सामान्यपदं वा श्रूयते तद्धर्मव्यापकत्वं विधेयांशे भासते, असति बाधके उद्देश्यतावच्छेदकधर्मव्यापकत्वं विधेयांशे भासते, व्याप्यवृत्तिजातीयधर्माणाम् अव्याप्यवृत्तित्वे प्रमाणाभावः, समुदायः प्रत्येकान्नातिरिच्यते, उभयत्वम् उभयत्रैव पर्याप्तं न त्वेकत्र, भेदस्य व्याप्यवृत्तित्वनियमः, व्याप्यवृत्तेरवच्छेदकसद्भावे प्रमाणाभावः, सप्तम्यन्तानुयोगिवाचकपदसमभिव्याहृतनञः अत्यन्ताभावार्थकत्वम् ॥ ❀ ॥

## ❀ पर्याप्तिप्रकारः ❀

'साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वमिति, वा–साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्वमिति, वा स्वावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति, वा– साध्यतावच्छेदकतान्यूनवारकपर्याप्तिनिवेशप्रकारः ॥

'साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वमिति, वा–'साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकस्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकत्वमिति, वा–'स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति वा साध्यतावच्छेदकतेतरवारकपर्याप्तिनिवेशप्रकारः ॥

साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वे सति साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वमिति, वा–साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकस्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकत्वमिति, वा स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति वा साध्यतावच्छेदकतान्यूनेतरवारकपर्याप्तिद्वयनिवेशप्रकारः ॥

'साध्यतानिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वमिति, वा साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गताकत्वमिति, वा स्वनिरूपितसंसर्गतावच्छेदकताप्रतियोगिक-

पर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति वा—साध्यतानिरूपितसंसर्गतावच्छेदकतान्यूनवारकपर्याप्तिनिवेशप्रकारः ॥

साध्यतानिरूपितसंसर्गतावच्छेदकातिरिक्तधर्मानवच्छिन्नसंसर्गताकत्वमिति, वा —साध्यतानिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकस्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकसंसर्गताकत्वमिति, वा—स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतानिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति, वा साध्यतानिरूपितसंसर्गतावच्छेदकतेतरवारकपर्याप्तिनिवेशप्रकारः ॥

साध्यतानिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वे सति साध्यतानिरूपितसंसर्गतावच्छेदकातिरिक्तधर्मानवच्छिन्नसंसर्गताकत्वमिति, वा —साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकस्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकसंसर्गताकत्वमिति, वा—स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति वा—साध्यनिरूपितसंसर्गतावच्छेदकतान्यूनेतरवारकपर्याप्तिद्वयनिवेशप्रकारः ॥

एवं हेतुतावच्छेदकत्वादिन्यूनेतरोभयवारकपर्याप्तिनिवेशप्रकारो बोध्यः ॥

## ❀ शाब्दबोधप्रकारः ❀

शाब्दबोधो द्वेधा—खण्डशाब्दबोधः, अखण्डशाब्दबोधश्च । आद्यः 'घटमानये'त्यत्र घटपदस्य घटोऽर्थः, द्वितीयायाः कर्मत्वमर्थः, आङ्पूर्वकनय् धातोरानयनमर्थः, आख्यातस्य कृतिरर्थः, इत्येवं खण्डशो बोधः ॥ द्वितीयः—घटकर्मकानयनानुकूलकृतिमाँस्त्वमिति बोधः ॥ न्यायमते प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधः—घटकर्मकानयनानुकूलकृतिमाँश्चैत्र इत्यादिः । वैयाकरणैः 'भावप्रधानमाख्यातमि'ति नियमेन भाव(धात्व)र्थमुख्यविशेष्यकबोधोऽङ्गीक्रियते, यथा चैत्रकर्तृकं घटकर्मकमानयनमिति । मीमांसकैः आख्यातार्थमुख्यविशेष्यकशाब्दबोधोऽङ्गीक्रियते—यथा घटकर्मकानयनानुकूला चैत्रसमवेता कृतिरिति ॥

**प्रथमाया** नियतार्थाऽभावात् साधुत्वार्था सा मन्यते, अत एव न कारके गणिता, कर्तृत्वमेकत्वमभिन्नत्वमित्येवं यथाप्रकरणं मतभेदेनार्था अपि स्वीक्रियन्ते ।

**द्वितीयायाः**—निष्ठत्वं, विषयत्वं, विशेष्यत्वं, प्रकारत्वं, प्रतियोगित्वं, निरूपितत्वं, व्यापकत्वं चार्थः । चैत्रो ग्रामं गच्छतीत्यत्र ग्रामनिष्ठोत्तरसंयोगावच्छिन्नक्रियावाँश्चैत्र इति बोधः । घटं जानातीत्यत्र घटविषयकज्ञानाश्रयश्चैत्र इति बोधः । पृथिवीं लक्षयतीत्यत्र पृथिवीविशेष्यकलक्षणप्रकारकज्ञानानुकूलकृतिमाँश्चैत्र इति बोधः, पृथिवीं विभजते इत्यत्र पृथिवीविशेष्यकपृथिवीत्वव्याप्यमियोविरुद्धविशेषधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमानिति बोधः, पृथिवीं निरूपयतीत्यत्र पृथिवीविशेष्यकलक्षणस्वरूपप्रामाण्यादिप्रकारकज्ञानानुकूलकृतिमानिति बोधः । पृथिव्या लक्षणमाहेत्यत्र पृथिवीविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमाँश्चैत्र इति बोधः । चैत्रो घटं नाशयतीत्यत्र घटप्रतियोगिकनाशानुकूलव्यापारानुकूलकृतिमाँश्चैत्र इति बोधः । घटं प्रति कारणं दण्ड इत्यत्र

घटनिरूपितकारणतावान् दण्ड इति बोधः। मासमधीते चैत्र इत्यत्र मासत्वव्यापकाध्ययनानुकूलकृतिमाँश्चैत्र इति बोधः, क्रोशं कुटिला नदीत्यत्र क्रोशत्वव्यापककौटिल्यवती नदीति बोधः॥ इत्येव मन्यत्रोह्यम्॥

**तृतीयायाः**–कर्तृत्वं, करणत्वं, ज्ञानज्ञाप्यत्वं, अभेदः, साहित्यं, प्रतियोगित्वं, निरूपितत्वं, निष्ठत्वं, समवेतत्वं, समानकालिकत्वं, अवच्छिन्नत्वं चार्थः। चैत्रेण पच्यते तण्डुल इत्यत्र चैत्रकर्तृकपचनकर्मीभूतस्तण्डुल इति बोधः। परशुना छिनत्तीत्यत्र परशुकरणकच्छेदनानुकूलकृतिमाँश्चैत्र इति बोधः। धूमेन वह्निमनुमिनोतीत्यत्र धूमज्ञानज्ञाप्यवह्निविधेयकानुमितिमाँश्चैत्र इति बोधः। धान्येन धनवानित्यत्र धान्याऽभिन्नधनवानयमिति बोधः। पुत्रेणाऽऽगतः पितेत्यत्र पुत्रागमनसहितागमनानुकूलकृतिमान् पितेति बोधः। रूपेण रहितो वायुरित्यत्र रूपप्रतियोगिकाभाववान्वायुरिति बोधः। पुत्रेण सहितश्चैत्र इत्यत्र पुत्रनिरूपितसाहित्यवाँश्चैत्र इति बोधः। व्याप्त्या विशिष्ट इत्यत्र व्याप्तिनिष्ठप्रकारतानिरूपकाऽभिन्न इति बोधः। घटो मया क्रियत इत्यत्र मत्समवेतकृतिविषयो घट इति बोधः, मया ज्ञायत इत्यत्रापि मत्समवेतज्ञानविषयो घटः, मया इष्यत इत्यत्र च मत्समवेतेच्छाविषयो घट इति बोधः। धावता पुरुषेण पीतमित्यत्र धावनसमानकालिकं पुरुषकर्तृकं पानमिति बोधः। यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वमित्यत्र यद्विषयकत्वावच्छिन्नाऽनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतेतिबोधः॥ एवमन्यत्राप्यूह्यम्॥

**चतुर्थ्याः**–उद्देश्यत्वं, तृप्तिप्रयोजकत्वं, समवेतत्वं, निष्पत्तिप्रयोजकत्वं, विकारित्वं, वृद्धिप्रयोजकत्वं, आश्रितत्वं, विषयत्वं, स्वापहरणेच्छाप्रयोज्येच्छाविषयत्वं, प्रयोजकत्वं, इच्छाधीनेच्छाविषयत्वं चेत्यर्थः। ब्राह्मणाय गां ददातीत्यत्र ब्राह्मणोद्देश्यकगोकर्मकदानानुकूलकृतिमानयमिति बोधः। भूतेभ्यो बलिरित्यत्र भूततृप्तिप्रयोजकीभूतो बलिरिति बोधः। गवे सुखमित्यत्र गोसमवेतं सुखमिति बोधः। यूपाय दार्वित्यत्र यूपनिष्पत्तिप्रयोजकीभूतं दार्विति बोधः। कुण्डलाय सुवर्णमित्यत्र कुण्डलविकारिसुवर्णमिति बोधः। वृक्षायोदकं सिञ्चतीत्यत्र वृक्षवृद्धिप्रयोजकीभूतसेचनानुकूलकृतिमानयमिति बोधः। नारदाय रोचते कलह इत्यत्र नारदाश्रितप्रीतिविषयीभूतः कलह इति बोधः। पुष्पेभ्यः स्पृहयतीत्यत्र पुष्पविषयकेच्छावानयमिति बोधः। एधेभ्यो व्रजतीत्यत्र इन्धनाहरणेच्छाप्रयोज्येच्छाविषयगमनानुकूलकृतिमानयमिति बोधः। अन्नाय यतत इत्यत्र अन्नसम्प्रदानप्रयोजकीभूतयत्नवानयमिति बोधः। यागाय यातीत्यत्र यागदर्शनेच्छाधीनेच्छाविषयगमनानुकूलकृतिमानयमिति बोधः॥ एवमन्यत्राऽप्यूह्यम्॥

**पञ्चम्याः**–अवधिमत्त्वं, प्रतियोगित्वं, जन्यत्वं, स्वकर्तृकोच्चारणाधीनत्वं, निरूपितत्वं, ज्ञानज्ञाप्यत्वं, आरम्भः, पर्यन्तः, तदपेक्षत्वं चेत्यर्थः। वृक्षात्पर्णं पततीत्यत्र वृक्षावधिकपतनाश्रयं पर्णमिति बोधः। घटः पटाद्भिन्न इत्यत्र पटप्रतियोगिकभेदाश्रयो घट इति बोधः। दण्डाद्घट इत्यत्र दण्डनिरूपितजन्यताश्रयो घट इति बोधः। साध्याभाववतोऽवृत्तिरित्यत्र साध्याभाववन्निरूपितवृत्तित्वाभाववानिति बोधः। वह्निमान् धूमादित्यत्र धूमज्ञानज्ञाप्यवह्निमानिति बोधः। आजननादभ्यस्यतीत्यत्र जननारम्भकाभ्यासानुकूलव्यापारानुकूलकृतिमानयमिति बोधः। आमरणाद्ध्यायतीत्यत्र मरणपर्यन्तध्यानवानयमिति बोधः। पण्डितात्पुराणं शृणोतीत्यत्र पण्डितकर्तृकोच्चारणाधीनश्रावणानुकूलकृतिमानयमिति बोधः। अयमस्माद्दीर्घ इत्यत्र एतदपेक्षदीर्घत्ववानयमिति बोधः॥ एवमन्यत्राऽप्यूह्यम्॥

**षष्ठ्याः**–विषयत्वं, विशेष्यत्वं, प्रकारत्वं प्रतियोगित्वं, निरूपितत्वं, वृत्तिः, स्वामितानिरूपितस्वत्वं, प्रतिपादकत्वं, उच्चरितत्वं, प्रतियोगित्वानुयोगित्वे, अभेदः, कर्तृत्वं, कर्मत्वम्, अवयवत्वं, कर–

णत्वं, समवेतत्वं, स्वसमभिव्याहृतपदार्थतावच्छेदकजातिशून्यषष्ठ्यन्तपदार्थव्यावृत्तत्वं, चार्थाः। घटस्य ज्ञानमित्यत्र घटविषयकं ज्ञानमिति बोधः। घटस्य लक्षणमाहेत्यत्र घटविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमानयमिति बोधः। पृथिव्या लक्षणस्य ज्ञानं जनयतीत्यत्र पृथिवीविशेष्यकलक्षणप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमानयमिति बोधः। घटस्य नाश इत्यत्र घटप्रतियोगिको नाश इति बोधः। घटस्य कारणमित्यत्र घटनिरूपितकारणताश्रय इति बोधः। घटस्य रूपमित्यत्र घटवृत्तिरूपमिति बोधः। राज्ञः पुरुष इत्यत्र राजनिष्ठस्वामितानिरूपितस्वत्ववानयं पुरुष इति बोधः। रामस्य नाममहिमेत्यत्र रामप्रतिपादकनामधेयमहिमेति बोधः। आप्तस्य वाक्यमित्यत्र आप्तोच्चरितं वाक्यमिति बोधः। भूतलस्य घटस्य च संयोग इत्यत्र भूतलानुयोगिकघटप्रतियोगिकसंयोग इति बोधः। राहोश्शिर इत्यत्र राहुभिन्नं शिरः, नाम्नोर्द्वयमित्यत्र च नामाभिन्नं द्वयमिति बोधः। चैत्रस्य भोजनमित्यत्र चैत्रकर्तृकं भोजनमिति बोधः। विश्वस्य रक्षितेत्यत्र विश्वकर्मकरक्षणानुकूलकृतिमानिति बोधः। चैत्रस्य हस्त इत्यत्र चैत्रावयवो हस्त इति बोधः। नाऽग्निस्तृप्यति काष्ठानां न पुंसां वामलोचनेत्यादौ काष्ठकरणकतृप्त्यभाववानग्निः, पुरुषकरणकतृप्त्यभाववती वामलोचनेति बोधः। घटस्य रूपमित्यत्र घटसमवेतरूपमित्यर्थः। नराणां क्षत्रियश्शूर इत्यत्र क्षत्रियत्वशून्यनरव्यावृत्तशूरत्ववान् क्षत्रिय इति बोधः। शेषे षष्ठीतिसूत्रात् षष्ठ्यर्था अनन्ता बोध्या ऊह्याश्च ॥

**सप्तम्याः**–आधेयत्वं, विषयत्वं, विशेष्यत्वं, निरूपितत्वं, व्यापकत्वम्, अभेदः, अवच्छेद्यत्वं, घटकत्वं, प्रतिपाद्यत्वं, प्रकारत्वं, सामानाधिकरण्यात्मकवैशिष्ट्यं, समानकालिकत्वं, पूर्वकालिकत्वं, उत्तरकालिकत्वम्, अनुयोगित्वं, प्रतियोगित्वं, स्वविषयकेच्छाधीनत्वं, स्वसमभिव्याहृतपदार्थतावच्छेदकजातिशून्यसप्तम्यन्तपदार्थव्यावृत्तत्वं, कार्यकारणभावः, इत्यर्थाः। भूतले घट इत्यत्र भूतलनिरूपिताधेयतावान् घट इति बोधः। कान्तायां रतिरित्यत्र कान्ताविषयिणी रतिरिति, सर्पे द्वेष इत्यत्र सर्पविषयकद्वेष इति बोधः। पर्वते वह्निमनुमिनोतीत्यत्र पर्वतविशेष्यकवह्निविधेयकानुमितिमानयमिति बोधः। भूतले वर्तते घट इत्यत्र भूतलनिरूपितवृत्तितावान् घट इति बोधः। दिने दिने पठतीत्यत्र दिनत्वव्यापकपठनानुकूलकृतिमानयमिति बोधः। शिवे भागवत इत्यत्र शिवाऽभिन्नभगवद्विषयकभक्तिमानयमिति बोधः। अग्रे वृक्षः कपिसंयोगीत्यत्र अग्रावच्छिन्नकपिसंयोगवान्वृक्ष इति बोधः। वने वृक्षः, सूत्रे पदमित्यत्र च वनघटकीभूतो वृक्षः सूत्रघटकं पदमिति बोधः। शास्त्रे विषय इत्यत्र शास्त्रप्रतिपाद्यो विषय इति बोधः। पर्वते वह्नौ सन्दिहान इत्यत्र पर्वतविशेष्यकवह्निप्रकारकसन्देहवानयमिति बोधः। द्रव्यकर्मभिन्ने सति सामान्यवान्गुण इत्यत्र द्रव्यकर्मभिन्नत्वविशिष्टसामान्यवान्गुण इति बोधः। वित्ते नष्टे वितरणमहो कर्तुमिच्छन्ति मूढा इत्यत्र वित्तनाशकालिकवितरणचिकीर्षावन्तो मूढा इति बोधः। पितरि नमिष्यति गत इत्यत्र पितृगमनपूर्वकालिकगमनानुकूलकृतिमानयमिति बोधः। पितरि गते पुत्रोगत इत्यत्र पितृगमनोत्तरकालीनगमनानुकूलकृतिमान् पुत्र इति बोधः। भूतले घटसंयोग इत्यत्र भूतलानुयोगिको घटसंयोग इति बोधः। भूतलसंयोगो घट इत्यत्र भूतलानुयोगिकः घटप्रतियोगिकः संयोग इति बोधः। चर्मणि द्वीपिनं हन्तीत्यत्र चर्मविषयकेच्छाधीनद्वीपिहननानुकूलकृतिमानयमिति बोधः। नरेषु क्षत्रियश्शूर इत्यत्र क्षत्रियत्वशून्यनरव्यावृत्तशूरत्ववान् क्षत्रिय इति बोधः। पयःपाने तृषा शाम्यतीत्यत्र पयःपानजन्यतृषाशान्तिमानयमिति बोधः॥

## ❀ इवाद्यव्ययार्थाः ❀

इव-वद्-वा-यथादीनां सादृश्यमर्थः। चन्द्र इव मुखमित्यत्र चन्द्रनिरूपितसादृश्यप्रयोजकाह्ला

दकत्ववन्मुखमिति बोधः। चन्द्रवन्मुखमित्यादौ चन्द्रनिरूपितसादृश्यवन्मुखमिति बोधः। चन्द्रमुखो बालेत्यादौ चन्द्रनिरूपितसादृश्यविशिष्टाऽभिन्नमुखविशिष्टा बालेति बोधः। चन्द्राह्लादकं मुखमित्यादौ चन्द्रनिरूपितसादृश्यप्रयोजकाऽभिन्नाऽह्लादकत्ववन्मुखमिति बोधः। चन्द्रवद्भाति मुखमित्यादौ चन्द्रनिरूपितसादृश्यप्रकारकज्ञानविषयो मुखमिति बोधः चन्द्रवदाह्लादकं भाति मुखमित्यत्र चन्द्रनिरूपितसादृश्यप्रयोजकाह्लादकत्वप्रकारकज्ञानविषयो मुखमिति बोधः। सादृश्यस्य साधारणधर्मतोऽनतिरिक्ततामते प्रयोजकत्वस्थानेऽभेदो ज्ञेयः॥

इत्युवाच नृपं विप्र इत्यादाविति शब्दस्य पूर्वोक्तवाक्यार्थं पदार्थः, तस्य वचिधात्वर्थैकदेशीभूतज्ञाने विषयत्वसम्बन्धेनाऽन्वयः, तथा च पूर्वोक्तवाक्यार्थविषयकज्ञानजनकशब्दप्रयोगानुकूलव्यापारानुकूलकृतिमान् विप्र इतिबोधः। इत्थमेवमादीनामपि स एवार्थः॥ स्थाणुः पुरुष इति ज्ञात इत्यत्रेतिशब्दस्य प्रकारतानिरूपकत्वमर्थः, तथा च पुरुषत्वप्रकारकज्ञानविषयः स्थाणुरिति बोधः। ब्राह्मण इति नमस्करोतीत्यत्रेतिशब्दस्य स्वसमभिव्याहृतपदार्थतावच्छेदकप्रकारकज्ञानहेतुकत्वमर्थः, तथा च ब्राह्मणत्वज्ञानहेतुकनमस्कारानुकूलव्यापारानुकूलकृतिमानयमिति बोधः। तमाल इति वृक्ष इत्यत्र इतिशब्दस्याऽभेदोऽर्थः, तथा च तमालाऽभिन्नो वृक्ष इति बोधः। ग्रन्थान्ते इतिशब्दस्य समाप्तिरर्थः, तथा च 'इति, ग्रन्थ' इत्यस्य ग्रन्थस्समाप्त इति बोधः। किंपदसमभिव्याहृतेति शब्दस्य जिज्ञासाविषयहेतुकत्वमर्थः, तथा च किमिति भगवन्तं भजत इत्यादौ जिज्ञासाविषयहेतुकभगवद्विषयकभक्तिमानयमिति बोधः। इतिशब्दस्य क्वचिच्छब्दस्वरूपमप्यर्थः, यथा गवित्याहेत्यत्र गोशब्दस्वरूपाऽभिन्नज्ञानानुकूलव्यापारानुकूलकृतिमानयमिति बोधः॥

दृष्ट्वा गत इत्यादौ क्त्वाप्रत्ययान्ताऽव्ययानामुत्तरकालीनत्वमर्थः, तथा च दर्शनोत्तरकालिकगमनाश्रयोऽयमिति बोधः। विलोक्य प्रविष्ट इत्यादिल्यबन्तानामप्येवमेव उत्तरकालीनत्वमर्थः, शाब्दबोधः पूर्ववदेव॥ द्रष्टुं गत इत्यत्र तुमुन्नन्ताऽव्ययस्थले तुमुन्प्रत्ययस्येच्छाप्रयोज्यत्वम् इच्छाधीनेच्छाविषयत्वं वाऽर्थः, तथा च दर्शनेच्छाप्रयोज्यगमनानुकूलकृतिमानयमिति बोधः॥

सम्यक् पठतीत्यादौ सम्यक्पदार्थः श्रद्धापूर्वकत्वम्, तथा च श्रद्धापूर्वकत्वविशिष्टपठनानुकूलकृतिमानयमिति बोधः। सम्यक् स्वपतीत्यत्र जाग्रत्ज्ञानाऽभावसामानाधिकरण्यं सम्यक्पदार्थः, तथा च जाग्रत्ज्ञानाऽभावसमानाधिकरणस्वापानुकूलव्यापारानुकूलकृतिमानयमिति बोधः। सम्यक् फलतीत्यत्र सम्पूर्णत्वं, सम्यङ्नमस्करोतीत्यत्र भक्तिपूर्वकत्वं, सम्यक्पश्यतीत्यत्र अनुरागपूर्वकत्वम्, सम्यक् ताडयतीत्यत्र दयाराहित्यपूर्वकत्वं, सम्यक्पदार्थः, इत्येवं स्थलभेदेन ऊह्यः॥

क्रियाविशेषणस्थले स्तोकं पचतीत्यादौ स्तोकपदार्थस्याऽल्पस्य पच्धात्वर्थे पाकेऽभेदेनाऽन्वयः, तथा च अल्पाऽभिन्नपाकानुकूलकृतिमानयमिति बोधः। सुखं शेते इत्यत्र सुखपदस्य सुखजनके लक्षणा, तथा च सुखजनकाऽभिन्नशयनानुकूलव्यापारानुकूलकृतिमानिति बोधः। मधुरं रौतीत्यादौ मधुराऽभिन्नकूजनानुकूलव्यापारानुकूलकृतिमानिति बोधः॥

चैत्र एव मैत्रं ताडयतीत्यत्र चैत्रः मैत्रकर्मकताडनकर्ता चैत्रान्यः मैत्रकर्मकताडनकर्तृत्वाभाववानिति बोधः। कामी कान्तामेव कामयते इत्यत्र कान्ताविषयकेच्छावान् कान्ताऽन्यविषयकेच्छाऽभाववांश्च कामीति बोधः। कुठारेणैव छिनत्ति वृक्षमित्यत्र कुठारकरणकवृक्षकर्मकच्छेदनकर्ता कुठारान्यकरणकवृक्षकर्मकच्छेदनकर्तृत्वाऽभाववांश्चायमिति बोधः। ब्राह्मणायैव गां ददातीत्यत्र ब्राह्मणोद्देश्यकगोकर्मकदानकर्ता ब्राह्मणेतरोद्देश्यकगोकर्मकदानकर्तृत्वाभाववांश्चाऽयमिति बोधः। मृत्योरेव बिभेतीत्यत्र मृत्युभिन्नजन्यभयाभाववान् मृत्युजन्यभयवांश्चायमिति बोधः। चैत्रस्यैवेदं गृहमि-

त्यत्र चैत्रेतराऽसम्बन्धि चैत्रसम्बन्धीदं गृहमिति बोधः। द्रव्ये एव गुण इत्यत्र द्रव्येतरनिरूपितवृत्तित्वाभाववान् द्रव्यनिरूपितवृत्तितावांश्च गुण इति बोधः। एषु सप्तविभक्तिस्थलेषु एवकारस्य अन्ययोगव्यवच्छेद एवार्थः॥ मात्रपदस्यापि 'मृत्युमात्रात्प्रमुच्यते, चक्षुर्मात्रेण गृह्यते इत्यादौ एवकारसमानार्थकत्वं बोध्यम्॥ इति॥ ❀॥

# ❀ कारिकापाठः ❀

नूतनजलधररुचये गोपवधूटीदुकूलचौराय। तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय॥ १॥ द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम्। समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः॥ २॥ क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः। द्रव्याण्यथ गुणा रूपं रसो गन्धस्ततः परम्॥ ३॥ स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम्। संयोगश्च विभागश्च परत्वं चाऽपरत्वकम्॥ ४॥ बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम्। द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च॥ ५॥ उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा। प्रसारणं च गमनं कर्माण्येतानि पञ्च च॥६॥ भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च। तिर्यग्गमनमप्यत्र गमनादेव लभ्यते॥ ७॥ सामान्यं द्विविधं प्रोक्तं परं चाऽपरमेव च। द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते॥ ८॥ परभिन्ना च या जातिः सैवाऽपरतयोच्यते। द्रव्यत्वादिकजातिस्तु पराऽपरतयोच्यते॥ ९॥ व्यापकत्वात् पराऽपि स्याद् व्याप्यत्वादपराऽपि च। अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः॥ १०॥ घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः। तेषु जातेश्च सम्बन्धः समवायः प्रकीर्तितः॥ ११॥ अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः। प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च॥ १२॥ एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते। सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते॥ १३॥ द्रव्यादयः पञ्च भावा अनेके समवायिनः। सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः॥ १४॥ सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः। पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्॥१५॥ अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता। कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम्॥ १६॥ समवायिकारणत्वं ज्ञेयमथाऽप्यसमवायिहेतुत्वम्। एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम्॥ १७॥ यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत्। तत्राऽऽसन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात्॥१८॥ येन सह पूर्वभावः, कारणमादाय वा यस्य,। अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम्॥ १९॥ जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते। अतिरिक्तमथाऽपि यद्भवेन्नियतावश्यकपूर्वभाविनः॥ २०॥ एते पञ्चाऽन्यथासिद्धा दण्डत्वादिकमादिमम्। घटादौ दण्डरूपादि द्वितीयमपि दर्शितम्॥ २१॥ तृतीयं तु भवेद् व्योम कुलालजनकोऽपरः। पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ॥ २२॥ समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम्। गुणकर्ममात्रवृत्ति ज्ञेयमथाऽप्यसमवायिहेतुत्वम्॥२३॥ अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते। क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता॥ २४॥ क्षितिर्जलं तथा तेजः पवनो मन एव च। पराऽपरत्वमूर्तत्वक्रियावेगाश्रया अमी॥ २५॥ कालखात्मदिशां सर्वगतत्वं परमं महत्। क्षित्यादि पञ्च भूतानि

चत्वारि स्पर्शवन्ति हि ॥ २६ ॥ द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम्। अव्याप्य वृत्तिः क्षणिको विशेषगुण इष्यते ॥ २७ ॥ रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः। गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥ आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः। यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९ ॥ स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः। स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ॥ ३० ॥ स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम्। रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१ ॥ स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश। बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥३२॥ धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश। संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥ ३३ ॥ संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे। परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥ ३४ ॥ तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता। षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५ ॥ स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः। नित्याऽनित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६ ॥ अनित्या तु तदन्या स्यात् सैवाऽवयवयोगिनी। सा च त्रिधा भवेद् देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥ योनिजादि भवेद् देहमिन्द्रियं घ्राणलक्षणम्। विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३८ ॥ वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ। स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥ नित्यतादि प्रथमवत् किन्तु देहमयोनिजम्। इन्द्रियं रसनं सिन्धुर्हिमादिर्विषयो मतः ॥ ४० ॥ उष्णः स्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्। नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥ ४१ ॥ इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो मतः। अपाकजोऽनुष्णाशीतस्पर्शस्तु पवने मतः ॥ ४२ ॥ तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः। पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥ ४३ ॥ प्राणादिस्तु महावायुपर्यन्तो विषयो मतः। आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥ ४४ ॥ इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः। जन्यानां जनकः कालो जगतामाश्रयो मतः ॥ ४५ ॥ परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः। दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥ उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक्। आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥ ४७ ॥ शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः। तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ ४८ ॥ मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्। धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥ ४९ ॥ प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः। अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥ ५० ॥ विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता। अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥५१॥ प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे। घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥ घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः। तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥ ५३ ॥ उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये। विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥ क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः। गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः ॥ ५५ ॥ उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः। रूपाऽन्यच्चक्षुषो योग्यं रूपमत्राऽपि कारणम् ॥ ५६ ॥ द्रव्याऽध्यक्षे त्वचो योगो

मनसा ज्ञानकारणम् । मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥ ५७ ॥ ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते । महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥५८॥ विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः । द्रव्यग्रहस्तु संयोगात्, संयुक्तसमवायतः ॥ ५९ ॥ द्रव्येषु समवेतानां, तथा तत्समवायतः । तत्रापि समवेतानां, शब्दस्य समवायतः ॥ ६० ॥ तद्वृत्तीनां समवेतसमवायेन तु ग्रहः । प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥६१॥ विशेषणतया तद्वदभावानां ग्रहो भवेत् । यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥ ६२ ॥ अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः । सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥ ६३ ॥ आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते । तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥ विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः । योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६५ ॥ युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः । व्यापारस्तु परामर्शः, करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥ अनुमायां, ज्ञायमानं लिङ्गं तु करणं न हि । अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥ व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते । व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः ॥ ६८ ॥ अथवा हेतुमन्निष्ठविरहाऽप्रतियोगिना । साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६९ ॥ सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते । स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥७०॥ अनैकान्तो विरुद्धश्चाऽप्यसिद्धः प्रतिपक्षितः । कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥ ७१ ॥ आद्यः साधारणस्तु स्यादसाधारणकोऽपरः । तथैवाऽनुपसंहारी त्रिधाऽनैकान्तिको भवेत् ॥ ७२ ॥ यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः । यस्तूभयस्माद् व्यावृत्तः स चाऽसाधारणो मतः ॥ ७३ ॥ तथैवाऽनुपसंहारी केवलाऽन्वयिपक्षकः । ( पर्वतो वह्निमान् सत्त्वादिति तत्रादिमो भवेत् ॥ पृथ्वी नित्या गन्धवत्त्वादिति स्यादपरस्तथा । सर्वं तुच्छं प्रमेयत्वादिति तत्राऽन्तिमो भवेत् । ) यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥ ७४ ॥ ( गोत्वादिसाध्ये हेतुर्हि यत्राऽश्वत्वादिको भवेत् । ) आश्रयासिद्धिराद्या स्यात्स्वरूपाऽसिद्धिरप्यथ । व्याप्यत्वाऽसिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥ ७५ ॥ पक्षाऽसिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः । ह्रदो द्रव्यं धूमवत्त्वादत्राऽसिद्धिरथाऽपरा ॥७६॥ व्याप्यत्वाऽसिद्धिरपरा नीलधूमादिके भवेत् । विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥ ७७ ॥ ( श्रावणत्वादितो नित्योऽनित्यस्तु कार्यत्वादितः ) साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः । उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥ ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् । सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम् ॥ ७९ ॥ वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते । गवयादिपदानां तु शक्तिधीरुपमा फलम् ॥ ८० ॥ पदज्ञानं तु करणं, द्वारं तत्र पदार्थधीः । शाब्दबोधः फलं, तत्र शक्तिधीः सहकारिणी ॥ ८१ ॥ लक्षणा शक्यसम्बन्धस्तात्पर्याऽनुपपत्तितः । आसत्तियोग्यताऽऽकाङ्क्षातात्पर्यज्ञानमिष्यते ॥ ८२ ॥ कारणं सन्निधानं तु पदस्याऽऽसत्तिरुच्यते । पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ॥ ८३ ॥ यत्पदेन विना यस्याऽननुभावकता भवेत् । आकाङ्क्षा, वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥ ८४ ॥ साक्षात्कारे सुखादीनां करणं मन उच्यते । अयौगपद्याज्ज्ञानानां

तस्याऽणुत्वमिहोच्यते ॥८५॥ अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः,। रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥ ८६ ॥ द्रवत्वंस्नेहवेगाश्च मता मूर्तगुणा अमी। धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च ॥ ८७ ॥ एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः। संख्यादयो विभागान्ता उभयेषां गुणा मताः ॥ ८८ ॥ संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा। द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥८९॥ अतः शेषगुणाः सर्वे मता एकैकवृत्तयः। बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥ ९० ॥ अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः। संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा॥९१॥गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः। संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥ ९२ ॥ एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः। बाह्यैकैकेन्द्रियग्राह्या गुरुत्वाऽदृष्टभावनाः ॥ ९३ ॥ अतीन्द्रिया विभूनां तु ये स्युर्वैशेषिका गुणाः। अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥ ९४ ॥ अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम्। स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ९५ ॥ स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः। संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥ ९६ ॥ स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके। भवेदसमवायित्वमथ वैशेषिके गुणे ॥ ९७ ॥ आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः। वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥ ९८ ॥ द्विधैव कारणत्वं स्यादथ प्रादेशिको भवेत्। वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥ ९९ ॥ चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम्। चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥ १०० ॥ जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम्। रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥ १०१ ॥ सहकारि रसज्ञाया नित्यतादि च पूर्ववत्। घ्राणग्राह्यो भवेद् गन्धो घ्राणस्यैवोपकारकः ॥ १०२ ॥ सौरभश्चाऽसौरभश्च स द्वेधा परिकीर्तितः। स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥ १०३ ॥ अनुष्णाशीतशीतोष्णभेदात् स त्रिविधो मतः। काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत् ॥ १०४ ॥ एतेषां पाकजत्वं तु क्षितौ नाऽन्यत्र कुत्रचित्। तत्राऽपि परमाणौ स्याद् पाको वैशेषिके नये ॥ १०५ ॥ नैयायिकानां तु नये द्व्यणुकादावपीष्यते। गणनाव्यवहारे तु हेतुः संख्याऽभिधीयते ॥ १०६ ॥ नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते। द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥ १०७ ॥ अनेकाश्रयपर्याप्ता एते तु परिकीर्तिताः। अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥ १०८ ॥ अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरिष्यते। परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥ १०९ ॥ अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः। अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ ११० ॥ संख्यातः परिमाणाच्च प्रचयादपि जायते। अनित्यं द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥ १११ ॥ परिमाणं घटादौ तु परिमाणजमुच्यते। प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥ ११२ ॥ परिमाणं तूलकादौ, नाशस्त्वाश्रयनाशतः। संख्यावत्तु पृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् ॥ ११३ ॥ अन्योन्याभावतो नाऽस्य चरितार्थत्वमिष्यते। अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥११४॥ अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः। कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥ ११५ ॥ तथोभयक्रियाजन्यो भवेत्संयोगजोऽपरः। आदिमः श्येनशैलादिसंयोगः परिकीर्तितः ॥११६॥

श्लेषयोः सन्निपातो यः स द्वितीय उदाहृतः। कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः ॥ ११७ ॥ तृतीयः स्यात् कर्मजोऽपि द्विधैव परिकीर्तितः। अभिघातो नोदनं च शब्दहेतुरिहादिमः ॥ ११८ ॥ शब्दाऽहेतुर्द्वितीयः स्याद् विभागोऽपि त्रिधा भवेत्। एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः ॥ ११९ ॥ विभागजस्तृतीयः स्यात् तृतीयोऽपि द्विधा भवेत्। हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥ १२० ॥ परत्वं चाऽपरत्वं च द्विविधं परकीर्तितम्। दैशिकं कालिकं चाऽपि मूर्त एव तु दैशिकम् ॥ १२१ ॥ परत्वं मूर्तसंयोगभूयस्त्वज्ञानतो भवेत्। अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥१२२॥ तयोरसमवायी तु दिक्संयोगस्तदाश्रये। दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत् ॥ १२३ ॥ परत्वमपरत्वं तु तदीयाल्पत्वबुद्धितः। अत्र त्वसमवायी स्यात्संयोगः कालपिण्डयोः ॥ १२४ ॥ अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः। बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः। १२५ ॥ अथाऽवशिष्टोऽप्यपरः प्रकारः परिदर्श्यते। अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते ॥ १२६ ॥ तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता। तत्प्रपञ्चो विपर्यासः संशयोऽपि प्रकीर्तितः ॥ १२७ ॥ आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः। भवेन्निश्चयरूपा या संशयोऽथ प्रदर्श्यते ॥१२८॥ किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः। तदभावाऽप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥ १२९ ॥ स संशयो मतिर्या स्यादेकत्राऽभावभावयोः। साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥ १३० ॥ दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत्। पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥ १३१ ॥ प्रत्यक्षे तु विशेष्येण विशेषणवता समम्। सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः ॥१३२॥ पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत्। शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥ १३३ ॥ शाब्दबोधे योग्यतायास्तात्पर्यस्याऽथ वा प्रमा। गुणः स्यात्, भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ॥ १३४ ॥ अथवा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम्। तत्प्रमा न प्रमा नाऽपि भ्रमः स्यान्निर्विकल्पकम् ॥ १३५ ॥ प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत्। प्रमात्वं न स्वतोग्राह्यं संशयाऽनुपपत्तितः ॥१३६॥ व्यभिचारस्याऽग्रहोऽपि सहचारग्रहस्तथा। हेतुर्व्याप्तिग्रहे, तर्कः क्वचिच्छङ्कानिवर्तकः ॥ १३७ ॥ साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा। स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥ १३८ ॥ सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः। हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥ १३९ ॥ व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम्। शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते ॥ १४० ॥ अनुमानगतार्थत्वादिति वैशेषिकं मतम्। तन्न सम्यग्विना व्याप्तिबोधं शब्दादिबोधतः ॥ १४१ ॥ त्रैविध्यमनुमानस्य केवलान्वयिभेदतः। द्वैविध्यं तु भवेद् व्याप्तेरन्वयव्यतिरेकतः ॥ १४२ ॥ अन्वयव्याप्तिरुक्तैव व्यतिरेकादिहोच्यते। साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥ १४३ ॥ अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते। व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥ १४४ ॥ सुखं तु जगतामेव काम्यं धर्मेण जायते। अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ १४५ ॥ निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते। इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥१४६॥ चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा तु या भवेत्। तद्धेतुः कृतिसाध्येष्टसाधनत्वमति-

भवेत् ॥ १४७ ॥ बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका । तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥१४८॥ द्विष्टसाधनताबुद्धिर्भवेद् द्वेषस्य कारणम् । प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥ एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम् । चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ॥१५०॥ उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् । निवृत्तिस्तु भवेद् द्वेषाद् द्विष्टसाधनताधियः ॥ १५१ ॥ यत्नो जीवनयोनिस्तु सर्वदाऽतीन्द्रियो भवेत् । शरीरे प्राणसञ्चारे कारणं परिकीर्तितः ॥१५२॥ अतीन्द्रियं गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत् । अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ १५३ ॥ तदेवाऽसमवायि स्यात् पतनाख्ये तु कर्मणि । सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथाऽपरम् ॥ १५४ ॥ सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः । परमाणौ जले नित्यमन्यत्राऽनित्यमिष्यते ॥ १५५ ॥ नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु । द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ॥१५६॥ स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ । तैलान्तरे तत्प्रकर्षाद् दहनस्यानुकूलता ॥१५७॥ संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने । मूर्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् ॥ १५८ ॥ स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि । अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् ॥ १५९ ॥ भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः । उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥ १६० ॥ स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते । धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिकारणम् ॥ १६१ ॥ गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः । कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥ १६२ ॥ अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः । प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ ॥ १६३ ॥ इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः । शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥ १६४॥ कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः । सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥ १६५ ॥ वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता । कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥ १६६ ॥ उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता । सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥ १६७ ॥ तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् । तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥१६८॥

❀ इति कारिकापाठः ❀

# ❀ मुक्तावल्यां प्रश्नाः ❀

'चूडामणीकृतविधु'रिति श्लोकस्य शाब्दबोधं प्रदर्श्य समाप्तपुनरात्तत्वमाक्षिप्य समाधीयताम् ? उत्तरं किरणावलीपृष्ठे २, ३ ॥ मङ्गलस्य समाप्तिकारणत्वमन्वयव्यतिरेकव्यभिचाराभ्यामाक्षिप्य प्राचीननवीनमतभेदेन व्यवस्थाप्यताम् ?, उत्तरं मुक्तावल्यां पृष्ठे, ८,...१४ ॥ ईश्वरसाधकानुमानं सत्प्रतिपक्षदोषनिरासपुरस्सरं निरूप्यताम्, मु० पृ० १६...२३ ॥ शक्तिसादृश्ययोः पदार्थान्तरत्वमुपपाद्य न्यायमतेन निरस्यताम् ?, मु० पृ० २६...३२ ॥ द्रव्यत्वजातिसिद्धिरनुमानत्रयेण पूर्वत्र पूर्वत्राऽस्वरसप्रदर्शनपुरस्सरं कर्तव्या ?, कि० ३४ ॥ अन्धकारस्य दशमद्रव्यत्वं कया रीत्या खण्डितम् ? मु० ३६...३८ ॥ सामान्यस्य लक्षणं प्रतिपदव्यावृत्तिपुरस्सरमुपपाद्यताम् ?, मु० ४४...

४६ ॥ जातिबाधकानि विवेचनीयानि ?, मु० ४७–४८ ॥ विशेषपदार्थस्य सिद्धिः कर्तव्या ?, मु०–५१॥ समवायसिद्धिः कर्तव्या ?, मु० ५४॥ वैशिष्ट्यस्य सम्बन्धान्तरत्वं खण्डनीयम् ?, मु० ५७॥ अभावलक्षणम् अन्योन्याश्रयदोषनिरासपुरस्सरमुपपाद्यताम् ?, कि० ५९॥ अभावानामधिकरणात्मकत्वं निरस्यताम् ?, मु० ६६॥ पारिमाण्डल्यस्य कारणत्वं कथं न संभवति ?, मु० ७५॥ असमवायिकारणलक्षणे सोदाहरणं प्रदर्शनीये ?, मु० ८०॥ पश्चाऽन्यथासिद्धिलक्षणानि सोदाहरणं विवेचनीयानि ?, ८५...९०॥ भूतत्वं कीदृशमुक्तम् ? मु० ९६–९७॥ आकाशात्मनोः किं साधर्म्यम् ?, मु० ९८॥ क्षणिकत्वम् अव्याप्यवृत्तित्वं च स्फुटं प्रदर्शनीये ?, मु० ९९॥ पृथिवीत्वजातिः साधनीया ? मु० १०८॥ पाषाणे गन्धसिद्धिः कर्तव्या ?, मु० १०९॥ 'यद्द्रव्यं यद्द्रव्यध्वंसजन्यमि'त्यत्र द्रव्यद्वयोपादानं कथं कृतम् ?, कि० १०९॥ परमाणुपुञ्जवादिमतं निरस्याऽवयवी स्थापनीयः ?, मु० ११५॥ परमाणुः साधनीयः ?, मु ११८॥ किं नाम शरीरत्वं ?, नृसिंहशरीरे कथं समन्वयः ? मु० १२१,...१२४ ॥ घ्राणेन्द्रियस्य पार्थिवत्वं साधनीयम् ? मु० १२४॥ नित्याऽनित्यसाधारणजलत्वजातिसिद्धिर्निरूपणीया ? मु० १२६–१२७॥ अभास्वरशुक्लेतरेत्यादिलक्षणं प्रतिपदव्यावृत्तिपुरस्सरं व्याख्येयम् ?, मु० १२८॥ सुवर्णस्य तैजसत्वसिद्धिः कर्तव्या ? मु० १४०॥ वायुसाधकान्यनुमानानि प्रदर्शनीयानि ?, मु० १४५॥ आकाशसिद्धिः कर्तव्या ?, मु० १४७॥ सूर्यपरिस्पन्दादिना सह घटादेः कीदृशः सम्बन्धः ? कि० १५१॥ उपाधयः प्रदर्शनीयाः ?, मु० १५२॥ शरीरेन्द्रियमनसामात्मत्वे कानि दूषणानि ?, मु० १५९...१६१,१६२॥ क्षणिकविज्ञानात्मवादिमतं प्रदर्श्य निराक्रियताम् ? मु० १६४॥ नित्यविज्ञानात्मवादिमतं कथं न समीचीनम् ? मु० १६९॥ सांख्यमतेन यदात्मनोऽकर्तृत्वादिकं तन्निरसनीयम् ?, मु० १७७॥ 'असिद्धेः'–इत्यनेन किमुक्तम् ?, मु० १७८॥ प्रत्यक्षप्रमायाः किं लक्षणम् ? अनुमित्यादावतिव्याप्तिरीश्वरज्ञाने चाऽव्याप्तिः कथं वारणीया ?, मु० १८३॥ प्राचीननवीनमतभेदेन बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे किं कारणम् ?, १८९॥ ज्ञानसामान्यहेतुत्वं कस्य भवतीति मतभेदेननिरूप्यताम् ?, १९१,...१९४॥ निर्विकल्पकज्ञाने किं प्रमाणम् ?, मु० १९५॥ इन्द्रियत्वं परिष्कृत्य व्यावृत्तिपुरस्सरं व्याख्यायताम् ? मु० १९७॥ 'उद्भूतरूपसम्बन्धरतूभयमादाये'तिग्रन्थः संगमनीयः ?, कि० २०१॥ षड्विधसन्निकर्षाणां कुत्र पदार्थेऽन्तर्भावः ?॥ 'योग्यताऽप्यपेक्षिता'इत्यत्र योग्यता कीदृशी ? स्फुटं व्याख्यायताम्, मु० २०६॥ सामान्यलक्षणज्ञानलक्षणयोः को भेदः ?, मु० २१४॥ युक्तयुञ्जानयोः को भेदः ?, कि० २१६॥ अलौकिकसन्निकर्षाणां कुत्र पदार्थेऽन्तर्भावः ? ॥ अनुमितिं प्रति विशिष्टवैशिष्ट्यावगाहिज्ञानस्य ( परामर्शस्य ) कारणत्वं मीमांसकमतखण्डनपुरस्सरमुपपाद्यताम् ? मु० २२३॥ पूर्वपक्षव्याप्तेः कचिल्लक्ष्ये समन्वयं कृत्वा सिद्धान्तव्याप्त्यनुधावने बीजं प्रदर्श्यताम् ?, मु० २२७॥...२३१॥ गुणवान् द्रव्यत्वादित्यत्राऽव्याप्त्यनुधावने किं बीजम् ?, कि० २३३॥ प्रतियोगिवैयधिकरण्यस्य को निष्कर्षः ?, मु० २३८। कालो घटवान् कालपरिमाणादित्यत्राऽव्याप्तिः कथं वारणीया ?, मु० २४३॥ पक्षतालक्षणे सिषाधयिषाविरहवैशिष्ट्य कुत्र कथं निवेशितम् ?, मु० २४९ ॥ अनुमितिसिद्ध्योः प्रतिबध्यप्रतिबन्धकभावः कीदृशः कथं च स्वीकृतः ?, मु० २५२॥ हेत्वाभाससामान्यलक्षणस्य कस्मिँश्चिल्लक्ष्ये समन्वयः प्रदर्शनीयः ?, मु० २५४ ॥ रत्नकोषकारमतं कथं न समीचीनम् ?, मु० २६७॥ किं नाम व्यर्थविशेषणत्वम् ?, मु० २८४॥ उपमानप्रमाणं स्फुटं निरूपणीयम् ?, मु० २८८॥ शक्तिः कीदृशी कुत्रोपयुज्यते ?, मु० २९३ ॥ शक्तिग्रहकारणानि प्रदर्शनीयानि ?, मु० २९६ ॥ कर्तरि शक्तिः कथं नोपेयते ? मु० २९७॥ जातिशक्तिवादिमतं निरस्य स्वमतं व्यवस्थाप्यताम् ? मु० ३१०॥ चतुर्विधपदानि

प्रदर्शनीयानि ? मु० ३१५॥ लक्षणायाः किं लक्षणम् ? मु० ३२०॥ अन्वयानुपपत्तिः कथं लक्षणाबीजम् नभवति ? मु० ३२०॥ लक्षितलक्षणा निरूपणीया ? मु० ३२५॥ बहुव्रीहौ तत्पुरुषे च कुत्र पदे लक्षणा ? मु० ३२८॥ शाब्दबोधकारणानि प्रदर्श्यन्ताम् ? मु० ३३९ ॥ स्फोटं निरस्य स्वमतेन शाब्दबोधमुपपाद्यताम् मु० ३४३॥ योग्यताज्ञानस्याकांक्षाज्ञानस्य च शाब्दबोधकारणत्वाऽस्वीकारे का हानिः ?, मु० ३४७,३४८॥ शुकवाक्ये वेदादौ च कस्य तात्पर्यम् ? मु० ३५२ ॥ स्मृतिं प्रत्यनुभवत्वेन ज्ञानत्वेन वा कारणत्वे किं दूषणम् ? मु० ३५६॥ मनसि किं प्रमाणं ? तस्य कथमणुत्वं नित्यत्वं च ? मु० ३६०,३६१॥ गुणत्वजातिः साधनीया ? मु० ३६४ ॥ गुणानां किं साधर्म्यम् ? मु० ३६६॥ के मूर्तगुणाः, के चाऽमूर्तगुणाः ?, मु० ३६७ ॥ अनेकाश्रितगुणाः के ? मु० ३६९ ॥ के विशेषगुणाः ?, विशेषगुणत्वं कीदृशं वक्तव्यम् ? मु० ३७० ॥ के सामान्यगुणाः ? मु० ३७१॥ के अकारणगुणोत्पन्नगुणाः ? मु० ३७३ ॥ अव्याप्यवृत्तिगुणाः के ? मु० ३७८॥ कर्बुररूपमतिरिक्तं कथमङ्गीक्रियते ? मु० ३८४ ॥ चित्ररसः कथं न स्वीक्रियते ? मु० ३८६ ॥ वैशेषिकमते नैयायिकमते च पाकः प्रदर्शनीयः ? मु० ३९०, ३९९ ॥ नवक्षणा दशक्षणा एकादशक्षणा च प्रक्रिया सबीजं निरूपणीया ? मु० ३९३, ३९५, ३९६ ॥ पर्याप्तिः कथं स्वीक्रियते ? मु० ४०१ ॥ अपेक्षाबुद्धिः कीदृशी कथं स्वीक्रियते ? मु० ४०३, ४०४ ॥ त्रसरेणुपरिमाणस्य किं कारणम् ? मु० ४०७ ॥ अन्योन्याभावेनैव निर्वाहे पृथक्त्वमतिरिक्तं कथं स्वीक्रियते ? मु० ४११ ॥ एकेनैव परमाणुकर्मणा परमाण्वाकाशविभागजनने का हानिः ? ॥ मु० ४१६ ॥ भ्रमसंशयनिश्चयानां लक्षणानि प्रदर्शनीयानि ? मु० ४२३ । संशयकारणानि निरूपणीयानि ? मु० ४२५ ॥ प्रमां प्रति जनकत्वं कस्य केन प्रमाणेन सिद्ध्यति ? मु० ४२७ ॥ निर्विकल्पकलक्षणं कीदृशम् ? मु० ४३१ ॥ प्रमात्वस्य स्वतोग्राह्यत्वमतं प्रदर्श्य तत्खण्डनपूर्वकं न्यायमतं प्रदर्शनीयम् ? मु० ४३५, अन्यथाख्यातिस्वीकारे का युक्तिः ? मीमांसकास्तत्र किं मन्यन्ते ? मु०, ४४२, ४४३ । तर्कस्य क उपयोगः ?, व्याघातः किंस्वरूपः ? मु० ४४९, ४५० ॥ उपाधेः किं लक्षणं ? कतिविधश्च सः ? किं च तस्य फलम् इति निरूपणीयम् ? मु० ४५३, ४५८ ॥ शब्दोपमानयोः प्रमाणान्तरत्वं पूर्वपक्षप्रदर्शनपुरस्सरं व्यवस्थापनीयम् ? मु० ४६१ ॥ व्यतिरेकव्याप्तिः सकारणप्रयोजना निरूपणीया ? मु०४६७ अर्थापत्तेः प्रमाणान्तरता कथं नाङ्गीक्रियते ? मु० ४७० ॥ चिकीर्षा कीदृशी ? किं च तत्कारणम् ? मु० ४७३ ॥ कार्यताज्ञानं प्रवर्तकमिति मीमांसकमतं व्याख्याय न्यायमतेन तन्निरस्यताम् ? मु० ४७६ "स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानस्य प्रवर्तकत्वादि" तिग्रन्थः पूर्वापरानुसन्धानपुरस्सरं व्याख्येयः ? मु० ४७७ ॥ नव्यास्तु ममेदं कृतिसाध्यमित्यादि निरस्य स्वसिद्धान्तेन विध्यर्थः प्रदर्शनीयः ? मु० ४८० ॥ विश्वजिता यजेतेत्यादौ को विध्यर्थः ? मु० ४८२ ॥ "कामनाभावे त्वार्थवादिकं फलमेव रात्रिसत्रन्यायात् कल्प्यते" अत्र कीदृशेन न्यायेन कस्य किं फलं कल्पनीयमिति प्रकृतोपयोगी अर्थो विविच्यताम् ? मु० ४८४ ॥ न कलञ्जं भक्षयेदित्यत्र कीदृशो विध्यर्थः कीदृशश्च बोधः ? मु० ४८६ ॥ श्येनेनाभिचरन् यजेतेत्यत्र कीदृशो विध्यर्थः ?, किं नाम हिंसात्वम् ? मु० ४८७ ॥ आचार्यमतेन विध्यर्थः प्रदर्श्यताम् ? मु० ४८९ ॥ वेदस्य कीदृशं पौरुषेयत्वम् ? मु० ४८९ ॥ धर्मः कथं मन्तव्यः ? सच कस्मान्नश्यति ? यागध्वंसस्य कथं न व्यापारत्वम् ? मु० ४९५ ॥ शब्दस्य अनित्यत्वे का युक्तिः ? मु० ४९८ ॥ मुक्तावलीप्रतिपाद्यप्रमाणप्रमेयभागयोः कीदृशः कुत्रोपयोगः ? ॥ न्यायवैशेषिकयोर्मध्यतः कस्य मुक्तावल्यां प्राधान्यं गौणता वेति सहेतुकं प्रदर्श्यताम् ? ॥ * इति प्रश्ना *

| अशुद्धम्, | शुद्धम्, | पृष्ठं, | पंक्तिः, |
|---|---|---|---|
| वासकिः | वासुकिः | २ | १२ |
| सम्बाहुर्म्यां | स बाहुर्म्यां | २३ | १९ |
| विशेषयता | विशेष्यता | २८ | ३४ |
| भवन्ति | भवति | ३० | १५ |
| पथकर्मा | पृथक् कर्मा | ४२ | १ |
| चा या | च या | ४३ | २ |
| सतीति | सतीति । | ४४ | १ |
| अव्याप्या | अव्याप्या | ५२ | ३५ |
| भानाभावात् | मानाभावात् | ६५ | २ |
| पपद्यते | पपद्येते | ६६ | २३ |
| प्राभ— | प्रमा— | ७२ | ३६ |
| यत्काय | यत्कार्यं | ८९ | १ |
| तत्कार्य | तत्कार्यं | ८९ | १ |
| र्म्यं | र्म्यं | ९२ | २ |
| कदाचित्ततीय | कदाचित्तृतीय | १०० | ४ |
| घटत्वादिष्वपि | घटत्वगुणत्वादिष्वपि | १०७ | ८ |
| नातिव्याप्तिः, | नातिव्याप्तिः, गुणत्वादीनां तु 'रूपद्वयवद्वृत्ती'त्यनेनैव वारणात्, अग्रेऽपि यथायोग्यमनुसन्धेयम् | १११ | ७ |
| प्रत्यक्षत्वेऽपि | प्रत्यक्षत्वेऽपि | ११५ | ३ |
| स्दूल | स्थूल | ११७ | २ |
| जादपदं | जातपदं | १२५ | २५ |
| वच्छदक | वच्छेदक | १३४ | १ |
| अच्छिनुद्य | अनुच्छिद्य | १४१ | ३२ |
| भेदाभिन्नं | भेदाद् भिन्नं | १५० | १३ |
| श्रते | श्रुते | १६९ | १ |
| तत्पू | तत्पूर्व— | १७८ | १ |
| पृथग्विवधम् | पृथग्विधम् | १७९ | १८ |
| प्रत्यक्षखण्डे | प्रत्यक्षखण्डेऽष्ट— | १८१ | २० |
| चाक्षष | चाक्षुष | १८९ | ५ |
| काणा | कारणा | १९२ | १६ |
| श्चक्षरा | श्चक्षुरा | १९७ | ७ |
| प्रत्यक्षधमे | प्रत्यक्षधूमे | २१५ | १ |
| सकवद्धो | सकलवद्धो | „ | ७ |
| धली | धूली | २१६ | ३,४ |
| श्वरानु | श्वरानु | २१७ | १८ |

| अशुद्धम्, | शुद्धम्, | पृष्ठं, | पंक्तिः, |
|---|---|---|---|
| निरूपितया | निरूपिता या | २२३ | ६ |
| कायकारण | कार्यकारण | २२५ | १ |
| पवत | पर्वत | ,, | ४ |
| करणम् | कारणम् | २४६ | ३३ |
| प्रतिबन्धकाऽभावात् | प्रतिबन्धकसद्भावात् | २४९ | २९ |
| ब्तादृश | स्तादृश | २५० | ३ |
| वहिन | वह्नि | २६१ | १७ |
| पादापरा | पादात् परा | २७१ | ३० |
| अत्रवेति | अत्रैवेति | २९३ | ४ |
| आख्यतस्य | आख्यातस्य | ३०२ | १२ |
| चत्र | चैत्र | ३०५ | ३६ |
| पघत्वजातेः | पद्मत्वजातेः | ३१८ | १५ |
| स्थक्षे | स्थले | ३२० | १४ |
| ऽऽभीग | ऽऽभीर | ३२१ | २४ |
| अजहत्स्यार्था | अजहत्स्वार्था | ३२५ | २० |
| सवमाय | समवाय | ३२९ | ३४ |
| यद्यर्थं | यद्यदर्थं | ३३१ | २३ |
| तत्रव | तत्रैव | ३३६ | १ |
| अन्यत्रक | अन्यत्रैक | ३३६ | १ |
| मित्यदा | मित्यादा | ३३६ | २ |
| सरूप | स्वरूप | ३३९ | १९ |
| बुद्धेद्ध | बुद्धेर्द्धं | ३५५ | १ |
| व्यभिचारज्ञाने | व्यभिचाराज्ञाने | ३५८ | १ |
| कावल | कविल | ३६२ | १ |
| ठक | ठक् | ३७० | ४ |
| घटाद | घटादि | ३७६ | १ |
| निरूपित्वा | निरूपिता | ,, | २६ |
| व्यावृत्ति | व्याप्यवृत्ति | ३८४ | २९ |
| रक्ताद्यत्पत्तिः | रक्ताद्युत्पत्तिः | ३९४ | ४ |
| कश्वन | कश्चन | ४०१ | ५ |
| परमाणुत्वेव | परमाणुष्वेव | ४०६ | २४ |
| निश्चयरूप | निश्चयरूपं | ४२७ | ४ |
| व्यतानिरू | व्यता तन्निरू | ४३२ | ८ |
| ग्रति | प्रति | ४४२ | १८ |
| हि | नहि | ४६४ | २ |

| अशुद्धम्, | शुद्धम्, | पृष्ठं, | पंक्तिः, |
|---|---|---|---|
| धमण | धर्मेण | ४७१ | ५ |
| काय | कार्यं | ४७२ | १ |
| सध्यता | साध्यता | ४७४ | १ |
| विरोध, | विरोधः, | ४८० | २ |
| ज्ञान | ज्ञानं | ४८१ | ९ |
| पितृणां | पितृणां | ४८५ | ५ |
| हस्यादि | हिंस्यादि | ४८७ | १६ |
| पयन्तं | पर्यन्तं | ४८९ | ६ |
| त्वपि | त्वमपि | ४९० | २६ |
| दुग | दुर्गं | ५०० | २२ |
| समासवाक्यात्तद्विषय कबोधोजायते | | | |
| समासवाक्यात्, | समासवाक्यात् | ५०४ | २४ |
| नमिष्यति | गमिष्यति | ५०८ | २८ |
| वोधः चन्द्र | वोधः । चन्द्र | ५०९ | ४ |
| व्यापापारा | व्यापारा | ५०९ | ८ |





## पण्डितवर्य-'श्रीकृष्णवल्लभाचार्य्य' स्वामिनारायण-विरचित-संस्कृत-पुस्तकानि

| | | | |
|---|---|---|---|
| १ सांख्यकारिकाभाष्यम् | ( मुद्रितम् ) | लेखनकालः संवत् | १९८६ |
| २ योगसूत्रभाष्यम् | ( मुद्रितम् ) | ,, ,, | १९८७ |
| ३ श्रीस्वामिनारायणवेदान्तसारः | ( मुद्रितः ) | ,, ,, | १९८८ |
| ४ हितोपदेशे मित्रलाभस्य किरणावली | ( मुद्रिता ) | ,, ,, | १९८९ |
| ५ चित्सुखी टिप्पणी | ( अमुद्रिता ) | ,, ,, | १९८९ |
| ६ तर्कसंग्रहदीपिकाकिरणावली | ( मुद्रिता ) | ,, ,, | १९९० |
| ७ तर्कसंग्रहन्यायबोधिनीपदकृत्यटिप्पणी | ( मुद्रिता ) | ,, ,, | १९९० |
| ८ सांख्यतत्त्वकौमुद्याः किरणावली | ( मुद्रिता ) | ,, ,, | १९९२ |
| ९ न्यायसिद्धान्तमुक्तावल्याः किरणावली | ( मुद्रिता ) | ,, ,, | १९९३ |
| १० योगसूत्राणां भोजवृत्तेः किरणम् | ( मुद्रितम् ) | ,, ,, | १९९४ |
| ११ सांख्यकारिकागौडपादभाष्यकिरणम् | ( मुद्यते ) | ,, ,, | १९९५ |
| १२ शिक्षापत्री संस्कृतगुजराती-किरणाली | ( अमुद्रिता ) | ,, ,, | १९९५ |
| १३ अखिलभूमण्डलीयसाम्प्रदायिकमुक्तिव्यवस्था गुजराती | (मुद्रिता) | | १९९१ |
| १४ श्रीस्वामिनारायणवचनामृतम् हिन्दी | ( मुद्रितम् ) | ,, ,, | १९९१ |
| १५ शिक्षापत्री हिन्दी | ( मुद्रिता ) | ,, ,, | १९९१ |

पता—मास्टर खेलाड़ीलाल एण्ड सन्स,
कचौड़ी गली, बनारस सीटी।